न्दरमौम्यभानां तदपभानाञ्च यदन्तरालं अभुक्त-मूलं प्रहरप्रमाणं त्यजेत् सुतं तत्र भवां सुताञ्चेति"। अतएव पूर्वमुक्ते वशिष्ठवाक्ये केचिदित्यन्यमताभिप्रायेण यमसहायवाक्ये केचिदिति अपरे इति चेत्तु क्तिरस्ति यद्येवं घटीन्यूनाधिकभावाभिधायिनां प्रागुक्तवाक्यानां का गतिरिति चेत्। उच्यते दोषस्याधिक्याल्पत्वसूचनमेव गतिः। अथाभुक्तमूलसंज्ञाकथनस्य प्रयोजनमाह जात-मिति। तत्राभुक्तमूलाख्ये काले जातं शिशुं बालकम् उपलक्षणत्वात्तत्र जातां कन्यां वा पिता परित्यजेद्वि-वासयेत् "त्यजेत् सुतं तत्रभवां सुताञ्चेति" वशिष्ठोक्तेः। यद्यशक्यं निर्वासनं स्यात्तदा किं कार्यमित्यत आह-वेति वा अथ वा पूर्वपक्षकर्त्तृत्वताशक्तौ पिताऽस्य शिशोः कन्याया वा शुभमष्ट समाः अष्टौ वर्षाणि "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा" इत्यमरः तावत् कालं न पश्येत् यदाह नारदः "अभुक्तमूलजं पुत्रं पुत्री-मपि परित्यजेत्। अथवाब्दाष्टकं तातस्तन्मुखं न विलोकयेदिति"। अन्योऽपि "अभुक्तमूलभेभवं परि-त्यजेच्च बालकम्। समाष्टकं पिताऽथ वा न तन्मुखं विलोकयेत्" इति गण्डान्तदोषस्तु विवाहप्रकरणे वक्ष्यत इति कल्याणमोक्तः (तद्वोपयमशब्दे १२५८ पृ० दर्शितम्)। अथ प्रसङ्गात् मूलाश्लेषाजातस्य बालस्य चरणवशेन शुभा-शुभफलमुपजात्याह आद्ये इति मूलनक्षत्रस्याद्ये पादे प्रथमे चरणे चतुर्थांशे इति यावत् तत्र जातस्य शिशोः कन्याया वा पिता नाशं मरणमुपैति प्राप्नोति तथा मूल-द्वितीयपादे जननी माता नाशमुपैति। तथा तृतीयमूल-पादे धनं द्रव्यं नाशमुपैति चतुर्थो मूलपादोऽस्य शिशोः शुभः शुभफलदः। तदुक्तं ब्रह्मपुराणे "मूलाद्येऽंशे पितु-र्नाशो द्वितीये मातुरेव च। तृतीये धनधान्यादिनाश-स्तुर्ये धनागमः" इति। तुर्ये चतुर्थे रत्नमालायाम् "तदाद्यपादके पिता विपद्यते जनन्यथ। तृतीयके धनक्षयश्चतुर्थकः शुभावहः" इति। अत्र पितृवंश स्त्रीकत्वेऽपि समातुरेव नाशो वाच्यो न सापत्नमातुः यदाह कश्यपः "मूलाद्यपादजो हन्ति पितरन्तु द्वितीयजः। मातरं स्वां तृतीयोऽर्थान् सुहृदश्च तुरीयजः" इति। ततो मातृशब्दः सापत्नमातुरपि वाचकः। यदाह गौतमः "पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तदपत्यानि मातुलेयानीति। अतः स्पष्टार्थमेव कश्यपवाक्ये स्वामिति पदोपादानम्। अत्र विशेषो

वशिष्ठसंहितायां "मूलाद्यपादो दिवसे यदि स्यात्तज्जः पितुर्नाशनकारणं स्यात्। द्वितीयपादो यदि रात्रि-भागे तदुद्भवो मातृविनाशकः स्यात्। मूलाद्यपादो यदि रात्रिभागे तदात्मजो नास्ति पितुर्विनाशः। द्वितीयपादो दिनजो यदि स्यान्न मातुरल्पोऽपि तदास्ति दोषः" इति। नारदसंहितायाञ्च "दिवाजातस्तु पितरं रात्रौ तु जननीं तथा। आत्मानं सन्ध्ययोर्हन्ति तस्माद्गण्डं विवर्जयेदिति"। एतदेव मातापितृगण्डमिति जोषा व्यवहरन्ति। अथ दोषसत्त्वे किं कार्यमत आह अथेति। अथानन्तरं शान्त्या मूलाश्लेषाशान्त्या-नुष्ठितया सर्वत्र चरणचतुष्टयेऽपि शुभमनिष्टफल-नाशकं कल्याणं स्यात् उक्तञ्च वशिष्ठेन "नैर्ऋत्यभौज-ङ्गमगण्डदोषनिवारणायाभ्युदयाय नूनम्। पितामहोक्तां रुचिरां च शान्तिं प्रवच्मि लोकस्य हिताय सम्यक्। शा-स्त्रोक्तरीत्या खलु सूतकान्ते मासे तृतीयेऽप्यथ वत्सरान्ते" इति। नैर्ऋत्यं मूलं तद्दोषः। भौजङ्गमश्लेषा तद्दोषः गण्डो वक्ष्यमाणस्तद्दोषश्च द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येक-मभिसम्बध्यत इति न्यायात् अतस्तद्दोषाणां निवारणं तदर्थम् अतएव कश्यपेन "तद्दोषशमनार्थं हि शान्तिं कुर्यात् प्रयत्नतः" इति सामान्यत उक्तम्। अत्र वशिष्ठवाक्ये कालत्रयकथनं सामर्थ्यासामर्थ्यकृतं ध्येयं तथा हि यदि मातुः शीतोदकस्नाने सामर्थ्यं स्यात् तदा सूतकान्त एव शान्तिस्तदसामर्थ्ये तृतीये मासि शान्तिः दीर्घरोगा-दिना तदाप्यशक्तिश्चेत्तर्हि वर्षसमाप्तिदिवसे शान्तिः। मा-तृगण्डे तु विशेषस्तेनैवोक्तः "मातृगण्डे सुते जाते सू-तकान्ते विचक्षणः। कुर्याच्छान्तिं तदर्थे वा तद्दोषस्या-पनुत्तये इति" शिष्टास्तु सर्वत्र यन्नक्षत्रे जन्म तन्नक्षत्र एव शान्तिरिति व्यवहरन्ति। ननु मूलपादचतुष्टयेऽपि शान्तिः कर्त्तव्येत्युक्तं तत्र चतुर्थचरणस्य शुभफलत्वात् शान्तिरयुक्तेति प्रतिभाति "अनिमित्तकृता शान्तिर्निमि-त्तायोपजायते" स्मरणात्। उच्यते यद्यपि चतुर्थचरणे धनागमरूपं शुभफलमभिहितं तथापि कश्यपेन "सु-हृदश्च तुरीयजः" इति सुहृन्नाशरूपस्य फलस्यानिष्टस्योक्तेः तदपाकरणार्थमवश्यं कर्त्तव्या शान्तिः। न हि कस्य-चिद्वैरिणामवश्यमातुलाद्यनेकसुहृन्नाश इष्टः मूलतृतीय-पादे पुत्रकन्ययोरशुभफलकथनाच्च। मूलदृष्टस्तु समन-न्तरमेव यथा पश्यते यदि मूलाश्लेषादिदोषसम्भवे शान्ति-र्न क्रियते तदानिष्टं भवति सर्वेत्याह नारदः "नक्ष-

रात् पितरं हन्ति मातरं तु त्रिवर्षतः। इत्युक्तं वर्षद्वयेनैव श्वशुरं नववर्षतः। ज्ञातं षाण्मासत्सरेण वर्षैः पञ्चभिरग्रजम्। मातुलं चाष्टभिर्वर्षैरनुजातान् हन्ति सप्तभिः। तस्माच्छान्तिं प्रकुर्वीत प्रयत्नाद्विधिपूर्वकमिति" इत्युक्तत्वं तस्मादवश्यं चरणचतुष्टयेऽपि शान्तिर्विधेयेति। अहिभे विलोममिति। अहिभे अश्लेषायामुक्तं फलं विलोमं विपरीतं ज्ञेयं तद्यथा मूलस्य प्रथमे पादे पितृनाश इति फलमुक्तं तत्फलमश्लेषाचतुर्थपादोत्पन्नस्य स्यात् मूलस्य द्वितीयपादे मातृनाश इत्युक्तं फलं तदश्लेषातृतीयचरणोत्पन्नस्य स्यात् अर्थनाशस्तृतीयचरणे इत्युक्तं तदश्लेषाद्वितीयपादजातस्य स्यात् मूलस्य चतुर्थपादः शुभ इत्युक्तं तदश्लेषाप्रथमचरणोत्पन्नस्य स्यादित्यर्थः। तदाह कश्यपः "फलं तदेव सार्पर्क्षे प्रतीपं त्वन्त्यपादतः" इति। वशिष्ठोऽपि "मूलाद्यपादजनितः पितरं निहन्ति द्वैतीयकः स्वजननीं त्रिपदेऽर्थहन्त्रम्। तौरीयजः शुभकरः फलमेतदेव वैलोमतो भुजगधिष्ण्यभवस्य सर्वमिति"। द्वितीय एव द्वैतीयः प्रज्ञादेराकृतिगणत्वात् स्वार्थेऽण् एवं तौरीयवैलोमशब्दौ साध्यौ। अयमर्थः एतदुक्तो भास्करव्यवहारे "सार्पांशे प्रथमे राज्यं द्वितीये तु धनक्षयः। तृतीये जननीनाशश्चतुर्थे मरणं पितुरिति"। अंशचरणः अत्र लग्नादिदौष्ट्ये सति दुष्टफलमधिकं भवतीत्याह बादरायणः "मूलसार्पेन्द्रजं दोषं स्यात् सम्यक् पन्तु लग्नपे। क्रूरेऽब्जे च विबले शुभदृष्टिविवर्जिते" इति। अतः यथा अश्लेषादौष्ट्येऽपि शान्तिकं विधेयं तथाश्लेषान्त्यपादस्थान्तराकप्रहरात्मका भुक्तमूलाख्यकालयोऽभिविहितस्तत्रोत्पन्नस्यापि शान्तिकं विधेयम्। अत्र वसिष्ठवाक्यं प्रागभिहितं तत्र मूलशान्तिरश्लेषाशान्तिश्च गण्डान्तेन्द्रभेति पद्यव्याख्यानानन्तरं लिखिष्यते"। "अथात्र प्रसङ्गान्मूलवृक्षविचारोऽभिधीयते जयार्णवे मूलस्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा। मुनयोऽष्टौ दिशो रुद्राः सूर्याः पञ्चाङ्गयोऽग्नयः। मूले तु मूलनाशः स्यात् स्तम्भे वंशविनाशनम्। त्वचि१० मातुर्भवेत् क्लेशः शाखायां११ मातुलस्य च। पत्रे१२ राज्यं विजानीयात् पुष्पे५ मन्त्रिपदं स्मृतम्। फले ४च श्री-युता सम्यक् शिखायां३ अल्पजीवितमिति" अस्य मूलाख्यस्य पुरुषस्याङ्गेषु घटीविन्यासस्तत्रैव। "मूलस्य घटिकान्यासो मूर्ध्नि पञ्च५ नृपो भवेत्। मुखे सप्त७ मृतिः पित्रोः स्कन्धे वेदा४ महाबलः। बाह्वोरष्टौ बली पाण्योस्त्रिंशो२ हन्तान्वितो भवेत्। हृदि खेटाः९ भूपमन्त्री नाभौ द्वौ२ ब्रह्मविद्भवेत्। गुह्ये दश१० ऽतिकामी स्याज्जान्वोः षट्६ महामतिः। पादयोः षट्६ मतिस्तस्येत्युक्तवान् कमलासनः" इति। अथ मूलोत्पन्नायाः कन्यायाः फलार्थं मूलाङ्गविभागस्तत्रैव। "चतस्रो४ नाडिकाः शीर्षे कुर्वन्ति पशुनाशनम्। मुखे षट्६ धनहानिश्च कण्ठे पञ्च धनागमः। कौटिल्यं हृदये पञ्च बाह्वोर्वित्तागमं च तत्। वेदाः४ पाण्योर्दयाधर्म्मं वेदा ४ गुह्येऽतिकामिनी। ज्येष्ठमातुलनाशश्च जङ्घयोर्युग४ नाडिकाः। ज्येष्ठभ्रातृविनाशश्च चतस्रो जानुयुग्मके। पादयोर्दश१० नाशश्च तत्र वैधव्यमादिशेत्। इति मूलप्रसूतायाः फलमीरितमीदृशमिति" अस्यार्थः शीर्षे चतस्रो ४ घटिकाः मुखे षट्६ कण्ठे पञ्च५ हृदये पञ्च५ बाह्वोर्बाहुद्वये पञ्चपञ्चेति५ वीप्सा। पाण्योर्मणिबन्धादधो भागयोश्चतस्र इत्यत्रापि वीप्सा। गुह्ये चतस्रः ४ जङ्घयोर्जङ्घाद्वये द्वे द्वे २।२ एवञ्चतस्रः जानुद्वये द्वे द्वे एवं चतस्रः पादयोः पादद्वये पञ्चपञ्चेत्येवं दश१० एवं मिलित्वा षष्टि६०घटिका भवन्ति। अथाश्लेषाजातयोः पुत्रकन्ययोरङ्गविभागेन फलं तत्रैवोक्तम् "मूर्ध्नि पञ्च५ मुखाग्निर्मुखे सप्त७ पितृक्षयः। नेत्रे द्वे२ जननीनाशो ग्रीवायां स्त्रीषु लम्पटः। स्कन्धे वेदा ४ गुरौ भक्तिर्हस्तेऽष्टौ८ च बली भवेत्। हृदयेकादशभिः११ आत्मघाती संजायते नरः। द्वाभ्यां नाभौ भ्रमः, षड्भिर्गुह्ये नन्दैः९ तपोधनः। पादे पञ्च५ धनं हन्ति सार्पोद्भवफलं क्रमादिति"। अथाश्लेषाद्भवोऽपि तत्रैवोक्तः "फलं पुष्पं दलं शाखा त्वग्लता कन्द एव च। सार्पवल्ल्या दश१० चा५ ङ्क९ स्वर७ विश्वा१२ र्क१२ सागराः ४। नाडिकास्तद्भवे बाले फलं ज्ञेयं यथाक्रमम्। श्रीः श्रीराजभयं हानिर्मातृपित्रात्मसंक्षयः" इति। अयञ्च विभागो नक्षत्रस्य षष्टि६०घटिकात्मकत्वे ज्ञेयः न्यूनाधिकत्वे तु त्रैराशिकस्तत्त्वम्"।

वसिष्ठेनान्येष्वपि कियत्सु नक्षत्रेषु जातस्यारिष्टमुक्तं "चित्राद्यर्द्धे पुष्यमध्ये द्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये। जातः पुत्रश्चोत्तराद्ये विधत्ते मातापित्रोर्भ्रातरं चात्मनाशम्। द्विमासस्तूत्तरादोषः पुष्ये चैव त्रिमासकः। पूर्वाषाढाष्टमे मासि चित्रा षाण्मासिकं फलमिति" अत्रोत्तराशब्देनोत्तराषाढा गृह्यते पूर्वाषाढासाहचर्यात्। अत एष्वपि नक्षत्रेषु यथाशक्तिमूलक-

शान्तिकं दोषपरिहारार्थं विधेयम् परन्त्वत्र देवताभेद एव केवलं श्रेयः। स च तत्तत्स्वामिकृतः तत्तन्मन्त्राश्च वेदादेवावगन्तव्यास्तच्छान्तिकस्य तिथिगण्डान्तशान्तावद्धा-भिर्वक्ष्यत इत्यलमतिप्रसङ्गेन” पी०धा०। अथ मूलनिवासं शकलमिन्द्रवज्राख्यान्द्रसाह स्वर्गे इति शुचिराषाढ़ः प्रौष्ठपदो भाद्रपदः इष आश्विनः माघः प्रसिद्धः एषु मासेषु मूलं मूलनक्षत्रं स्वर्गेऽस्ति स्वर्गे निवासस्तस्य। नभाः श्रावणः अन्ये प्रसिद्धाः श्रावणकार्त्तिकचैत्रपौषेषु भूमौ मूलं तिष्ठति। तपस्यः फाल्गुनः शुक्रो ज्येष्ठः अन्यौ प्रसिद्धौ फाल्गुनमार्गशीर्षवैशाखज्येष्ठेष्वधस्तात्पाताले मूलं तिष्ठति एष मूलनिवास उक्तः एतत्फलस्तु मूलनक्षत्रं यदा यस्मिन्मासे यत्र वसति तत्रैव स्वर्गभूमिपातालेष्वेवोक्त-शुभाशुभफलं ददाति अयमत्र तात्पर्य्यार्थः द्रव्याद्य-भावेन शान्तिकं कर्त्तुमशक्नुवतः पुंसः स्वर्गपातालनि-वासित्वेन मूलस्यारिष्टदोषस्तथा न प्रभवेत् यदा तु भूमावेव निवासस्तदा दोषनिवारणं नैव स्यादित्यश-क्तेनापि शान्तिकं विधेयं नैतावता प्रागुक्ते विषये शा-न्त्यभाव एव किन्तु अशक्तावपि तत्रापि शान्तिकं विधेयं शक्तेन तु सर्व्वत्रैव विधेयम् तदुक्तं ज्योतिषार्णवे “मार्गफाल्गुनवैशाखज्यैष्ठे मूलं रसातले। माघाश्विन-नभस्येषु शुचौ मूलं सुरालये। पौषश्रावणचैत्रेषु कार्त्तिके भुविसंस्थितम्। भूमिष्ठं दोषबहुलं स्वल्पमन्यत्र कीर्त्तितम्” क्वचित् सौरमासपरत्वेन मूलनिवासोऽभि-हितः “वृषालिसिंहेषु घटे च मूलं दिविस्थितं युग्म-तुलाङ्गनान्त्ये। पातालगं मेषधनुःकुलीरनक्रेषु भूमा-विति संचरन्ति। स्वर्गे मूले भवेद्राज्यं पाताले च धनागमः। मर्त्त्यलोके यदा मूलं तदा शून्यं समादिशेदिति” ज्यो-तिषरत्नेऽभिहितत्वात्” पी०धा०। अथ मूलप्रसङ्गाद्दु-ष्टेषु गण्डान्तादिनिमित्तेषु जातस्यारिष्टं सपरि-हारं शार्दूलविक्रीडितेनाह गण्डान्तेति एतेषु पदार्थेषु सत्सु जनिः शिशोरुत्पत्तिर्न शस्ता दुष्टफलदा गण्डान्तः सन्धिविशेषः स त्रिविधो नक्षत्रतिथिलग्नभेदेन तल्लक्षणं ज्येष्ठा पौष्णभेत्यादिना वक्ष्यति इन्द्रभं ज्येष्ठानक्षत्रं मूलः मूलाख्यो दुष्टयोगः पातो महापातो गणित-साध्यो, व्यतीपाताख्यो वैधृताख्यश्च परिघव्याघातगण्डा अपि दुष्टयोगाः अवमस्तिथिक्षयः संक्रान्तिः सूर्य्यस्य राश्यन्तरसंक्रमणप्रकारः व्यतीपातवैधृतौ सम्प्रदायप्रसि-द्धतिथौ दुष्टयोगौ सिनीवाली दृष्टेन्दुरमावास्या। कुहू-र्नष्टेन्दुरमावस्या “सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुक-ला कुहूः” इत्यभिधानात् दर्शश्चन्द्रदर्शनरहितामावास्या ए-तद्व्याप्ये सम्यक् प्रतिपादयिष्यते वज्रे दुष्टयोगे लग्ने कृष्णपक्षे चतुर्दशी बहुवचनमाद्यत्रयभिप्रायं यमघण्टे मघाविशाखे-त्युक्ते दुष्टयोगे दग्धयोगे सूर्य्यग्रहणाग्निरसाष्टनन्दा इत्युक्ते दुष्टयोगे केचित्तु चापान्त्यगे गोघटगे पतङ्गे” इति वक्ष्यमाणो दुष्टयोग इति व्याचख्युः नतौ दीषा-तोयादित्यादिनोक्ते मृत्युयोगे विष्टौ भद्रायां सोदरस्य भ्रातुर्भगिन्या वा भे नक्षत्रे पितृभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च एषु निमित्तेषु सतस्सुताया जन्म चेत् स्यात्तदनिष्टकृत् स्यादित्यर्थः। दुष्ट-निमित्तस्योपलक्षणत्वात् सूर्य्यचन्द्रग्रहणजन्मत्रीतरजन्मा-प्यनिष्टं सजातीयापत्यत्रयप्रसवानन्तरं विजातीयाप-त्यप्रसवस्त्रीतरः तथा पुत्रत्रयप्रसवानन्तरं कन्याया जननं कन्यात्रयप्रसवानन्तरं पुत्रस्य जननम् अतएव त्रिभ्यः सजातीयेभ्यः इतरो विजातीयस्त्रीतरः स्त्री च त्रीत-रेति व्युत्पत्तिश्च त्रीतरश्च त्रीतरा च त्रीतरौ पुमान् स्त्रियेत्येकशेषः अथ परिहारोऽप्युच्यते सा जनिः शान्तितो वसिष्ठाद्यृषिप्रोक्तायाः शान्त्याः शुभा परिणा-मे सुखदायिनी शारीरक्लेशानुभवपूर्वकनीरोगदीर्घायुष्टं शिशोः स्यादित्यर्थः। अत्र मूलवाक्यानि लिख्यन्ते। तत्र प्राक्पद्यप्रतिपादितसकलशान्तिसामान्यकर्मोपयिकी च मूलशान्तिस्तावदुच्यते। शौनक उवाच। अथातः सम्प्रवक्ष्यामि मूलजातहिताय च। मातापित्रोर्धन-स्यापि कुले शान्तिहिताय च। त्यागो वा मूलजातस्य स्यादष्टाब्दात् प्रदर्शनम्। अभुक्तमूलजातानां परित्यागो विधीयते। अदर्शने वापि पिता स तु तिष्ठेत् समा-ष्टकम्। एवं च दुहितुश्चैव मूलजातफलं बुधैः। सुखकार्यं प्रवक्ष्यामि शान्तिहोमस्य यत्नतः। जातस्य जननाहे तु जन्मर्क्षे वा शुभे दिने। द्वादशाहे वा मति-मान् कुर्य्यात् शान्तिमादरात्। यदेव शान्तिकं कुर्य्यात् कर्म तत् प्रवच्महे” अधिकं तत्र द्रष्टव्यम्।

“गण्डेषु स्फुटरचनाजपत्रवल्ली” “गण्डोज्ज्वलामु-ज्ज्वलनाभिचक्रया” इति च माघः।

**गण्डक** पुंस्त्री गण्ड+स्वार्थे क। (गाण्डार) १पशुभेदे स्त्रियां जातित्वात् ङीष्। २गण्डशब्दार्थे तस्य कर्णभूषणपरत्वेऽपि क्वचित् भूषणमात्रपरत्वाभिप्रायेण “आम्रनखपङ्क्ति-सङ्गता गण्डकाभरणा (वारस्त्रीया) च” काद०। ३[illegible]

"गोरोचनाविलिखितभूर्ज्जपत्तगर्भान् मन्त्रगण्डकान्" काद०
स्फोटकरोगे "अनेकवेल्लावातनिर्मितबहुगात्रगण्डकम्" काद०। गण्डकी नदी सन्निकृष्टतयाऽस्त्यस्य अण्। गण्डकप्राचीस्थदेशभेदे तन्निवासिषु तन्नृपेषु च बहुव० "ततः स गण्डकान् शूरो विदेहान् भरतर्षभः। विजित्याल्पेन कालेन" भा०स०२८अ० भीमप्राचीजयोक्तौ।

**गण्डकी** स्त्री गण्ड+जातौ ङीष्। १गण्डकी गण्डकजातिस्त्रियाम्। २नदीभेदे ३तदधिष्ठातृदेवीभेदे च सा च विष्णुसेवया शालग्रामशिलाधारत्वं लेभे तत्कथा। वराहपु०

"गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विधे!। शीर्णपर्णाशनं कृत्वा वायुभक्षाप्यनन्तरम्। दिव्यं वर्षशतं तेपे विष्णुं चिन्तयती सदा। ततः साक्षात्समायातो हरिर्भक्तजनप्रियः। उवाच मधुरं वाक्यं प्रीतः प्रणतवत्सलः। गण्डकि! त्वं प्रसन्नोऽस्मि तपसा विधिनोऽनघे!। अनवच्छिन्नया भक्त्या वरं वरय सुव्रते!। किं देयं तद्वदस्वाशु प्रीतोऽस्मि वरवर्णिनि!। गण्डक्यपि पुरो दृष्ट्वा शङ्खचक्रगदाधरम्। दण्डवत् प्रणता भूत्वा ततः स्तोतुं प्रचक्रमे।" "ततो हिमांशो! सा देवी गण्डकी लोकतारिणी। प्राञ्जलिः प्रणता भूत्वा मधुरं वाक्यमब्रवीत्। यदि देव! प्रसन्नोऽसि देयो मे वाञ्छितो वरः। मम गर्भगतो भूत्वा विष्णो! मत्पुत्रतां व्रज। ततः प्रसन्नो भगवान् चिन्तयामास गोपते!। किं याचितं निम्नगया नित्यं मत्सङ्गलुब्धया। दास्यामि याचितं येन लोकानां भवमोचनम्। इत्येवं तपसा देवो निश्चित्य मनसा स्वयम्। गण्डकीमवदत् प्रीतः शृणु देवि! वचो मम। शालग्रामशिलारूपी तव गर्भगतः सदा। तिष्ठामि तव पुत्रत्वे भक्तानुग्रहकारणात्। मत्सान्निध्यात् नदीनां त्वमतिश्रेष्ठा भविष्यसि। दर्शनात् स्पर्शनात् स्नानात् पानाच्चैवावगाहनात्। हरिष्यसि महापापं वाङ्मनःकायसम्भवम्। यः स्नास्यति विधानेन देवर्षिपितृतर्पकः। तर्पयेत् स्वपितॄंश्चापि तारयित्वा दिवं नयेत्। स्वयम् मम प्रियो भूत्वा ब्रह्मलोकं गमिष्यति। यदि त्वय्युत्सृजेत् प्राणान् मम कर्मपरायणः। सोऽपि याति परं स्थानं यत्र गत्वा न शोचति। एवं दत्त्वा वरान् देव्यै तत्रैवान्तरधीयत। ततः प्रभृति तिष्ठामि [illegible]!"। "गण्डक्यास्त्वेकदेशे च शालग्रामस्थलं स्मृतम्। पाषाणं तद्भवं यत्तत् शालग्राममिति स्मृतम्" स्मृतिः। सा च शोणनदसन्निकृष्टस्थाने गङ्गायां सङ्गता हरिहरक्षेत्रतया च तत्सङ्गमस्थानं प्रसिद्धम्। "गण्डकीञ्च महाशोणं सदानीरां(करतोयाम्)तथैव च। एकपर्वतके नद्यः क्रमेणैत्याव्रजन्त ते" भा०स०१९अ० "गण्डकीन्तु समासाद्य सर्वतीर्थजलोद्भवाम्। वाजपेयमवाप्नोति सूर्य्यलोकञ्च गच्छति" भा०व० ८४। "गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे। सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्ज्जयेत्" मलमा० त०।

**गण्डकारी** स्त्री गण्डं ग्रन्थिं भग्नसंयोजनरूपं करोति कृ—अण् गौ० ङीष्। (हाडजोड़ा) १वराहक्रान्तायामोषधौ रत्नमा०। २खदिरवृक्षे शब्दच०।

**गण्डकाली** स्त्री गण्डेषु ग्रन्थिषु काली। १खदिरीवृक्षे २समङ्गायाम् अमरः। [शब्दे तस्य तत्पुत्रत्वकथा दृश्या

**गण्डकीपुत्र** पु० ६त०। १शालग्रामे शिलाभेदे। गण्डकी-

**गण्डकीशिला** स्त्री गण्डक्यामुत्पन्ना शिला। शालग्रामशिलायाम्। [मदे हारा०।

**गण्डकुसुम** न० गण्डस्य हस्तिकपोलस्य कुसुममिव। १हस्ति-

**गण्डकूप** पु० गण्डे गण्डवदुच्चपर्वतभागे कूपः। पर्वतोच्चदेशस्थे कूपे हारा०। [फलप्रधाने वृक्षे शब्दचि०।

**गण्डगात्र** न० गण्ड इव उच्चावचं गात्रमस्य। (आता)

**गण्डदूर्वा** स्त्री गण्डयुक्ता ग्रन्थिमती दूर्वा। (गाँटदूर्वा) दूर्वाभेदे राजनि०। "गण्डदूर्वा स्मृता लौहद्राविणी ग्राहिणी लघुः। तिक्ता कषाया मधुरा वातकृत् कटुपाकिनी। दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा" भावप्र०। [लोपः। गण्डतुल्यचरणे।

**गण्डपाद** त्रि० गण्डस्य पाद इव पादोऽस्य हस्त्या० नान्त्य-

**गण्डफलक** न० गण्डः फलकमिव प्रशस्तत्वात् उपमितस०। १विस्तीर्णगण्डे। बहु०स०। २तद्युक्ते त्रि०। "धृतमुग्धगण्डफलकैर्विबभुर्विकसद्भिरास्यकमलैः प्रमदाः" माघः। गण्ड भित्तिरिव। गण्डभित्त्यादयोऽपि तत्रार्थे "निधौतदानामलगण्डभित्तिः" "अनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय" रघुः।

**गण्डमाला** स्त्री ६त०। १रोगभेदे। तल्लक्षणभेदाद्युक्तं भावप्र० यथा

"कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु। मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिस्तु गण्डैः।" "गण्डमालाया एकावस्थाविशेषमपचीमाह 'ते ग्रन्थयः केचिदवाप्तपाकाः

स्रवन्ति नश्यन्ति भवन्ति चान्ये । कालानुबन्धं चिर-
मादधाति सैवापचीति प्रवदन्ति केचित् । ते ग्रन्थयः
गण्डमालाया एव गण्डाः केचिदपक्वपाकाः सन्तः
स्रवन्ति, केचित् नश्यन्ति पुनः प्ररोहन्ति । अन्ये भवन्ति
च । कालानुबन्धाच्चिरमादधाति या गण्डमाला चिरं
तिष्ठति सैवापची इति केचिद्वदन्ति । अपच्याः साध्यत्वा-
दिकमाह । साध्याः स्मृताः पीनसपार्श्वशूलकास-
ज्वरच्छर्दियुता त्वसाध्या । अन्येऽर्बुदलक्षणमाह । वा-
तादयो मांसमसृक् च दुष्टाः संदूष्य मेदश्च तथा सि-
राश्च । वृत्तोन्नतं विग्रथितं तु शोथं कुर्वन्त्यतो
ग्रन्थिरिति प्रदिष्टः । विग्रथितं ग्रन्थिरूपम्" ।
गण्डमालाऽस्त्यस्य इनि । गण्डमालिन् तद्रोगवति त्रि० ।
तस्य श्राद्धे वर्ज्यतामाह मनुः "भ्रामरी गण्ड-
माली च श्वित्र्यथो पिशुनस्तथा" ।

**गण्डमालिका** स्त्री गण्डानां ग्रन्थीनां माला यत्र कप्
कापि अत इत्त्वम् । १लज्जालुलतायाम् रत्नमा० ।

**गण्डयन्त** पु० गडि-झच् । १मेघे उज्ज्वलदत्तः ।

**गण्डली** पु० गण्ड इव भूमेरुच्चनप्रदेशः क्षुद्रशैलस्तत्र शी-
यते वा-क्विप् । १महादेवे "गण्डली मेरुधामा च
देवाधिपतिरेव च" भा० आनु० १७अ० । "शिवसहस्र-
नामोक्तौ "सुलोपः पार्श्वः" नीलकण्ठः ।

**गण्डलेखा** स्त्री लिख्यतेऽत्र लेखा स्थली गण्डः स्थलीव ।
१प्रशस्तगण्डस्थल्याम् ।

**गण्डशिला** स्त्री गण्डः भूमेरुच्चनप्रदेश इव शिला ।
भूमेरुच्चप्रदेशवत् १स्थूलपाषाणे । "दृष्टोऽङ्गुष्ठशिरो
मात्रः क्षणाद्गण्डशिलासमः" भाग०३।१३।२१ ।

**गण्डशैल** पु० गण्ड इव भूमेरुच्चनप्रदेशः शैलः स्थूलो-
पलः, शैलस्य गण्ड इव वा राजद० पूर्वनि० । भू-
कम्पादिना पर्वतात् पतिते स्थूलपाषाणे अमरः ।
"कीलां दधौ राजतगण्डशैलः" "यस्मिन् भवन्ति कन-
कोपलगण्डशैलाः" । "चोपाचालदभिहरोजगण्डशैलैः"
इति च माघः ।

**गण्डसाह्वया** स्त्री गण्डेन सहित आह्वयो यस्याः ।
१गण्डक्यां नद्याम् "गङ्गा च शतकुम्भा च सरयूर्गण्डका-
ह्वया" भा०व०२१२अ० । [ शब्दच० स्त्रियां ङीप् ।

**गण्डाङ्ग** पुंस्त्री गण्ड इव उच्चनमङ्गं यस्य । १गण्डके

**गण्डान्त** न० "नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् ।
नवपञ्चचतुर्थीनां हरे चार्द्धघटिकामितम्" ज्योति-
षोक्ते तिथिनक्षत्रादीनां सन्धिसमयभेदे उपचयमत्र
१२५८ पृ० विवृतिः । [वृक्षे भावप्र० ।

**गण्डारि** पु० गण्डरोगस्याऽरिः नाशकत्वात् । १कोविदार-

**गण्डाली** स्त्री गण्डेन ग्रन्थिनाऽल्यते भूष्यते अल-अच्
गौरा० ङीष् । १श्वेतदूर्वायां अमरः । गण्डमलति-अल-
अच् गौरा० ङीष् । २सर्पाक्षीवृक्षे भावप्र० । [ हेम० ।

**गण्डि** पु० गडि-इन् । वृक्षस्य मूलात्शाखावधिभागे (गुँडि)

**गण्डिक** त्रि०गण्डः बुद्बुद इवाकारेणास्त्यस्य ठन् । बुद्बुदो-
पमे १क्षुद्रपाषाणादौ "गन्धमादनपार्श्वे तु परे त्वपर-
गण्डिकाः" भा०भी०६अ० । "अपरे अस्य गन्धमादनस्यै-
वावयवभूताः बुद्बुदोपमाः क्षुद्रशैलाः" नील० । अल्पार्थे
ङीप् स्वार्थे क ह्रस्वः । २गण्डिका क्षुद्रगण्डपाषाणे स्त्री
"तथा माल्यवतः शृङ्गे पूर्वपूर्वानुगण्डिका" भा०भी०७अ० ।
अत्र "नगं डिकाकारयोगं करेऽणुमिति" भा० आनु०
८श्लोकं कश्चिदुदाजहार तच्चिन्त्यं तस्य श्लोकस्य नग-
मितिच्छेदः तदर्थस्तु नीलकण्ठेनोक्तः यथा नगं पर्वतं,
डीयते विहायसा गच्छति डीः पक्षी ततः अल्पार्थे कन्
डिका मशकादि तस्याकारेण योगोऽस्य तथाभूतं करे
कुर्वे तथा च पर्वतमपि मशकीकर्त्तुं शक्नोमीति" ।

**गण्डीर** पु० गडि-बा० ईरन् । १समष्ठिलायां (शशा) ख्याते
वृक्षे जटा० (गुमिया) ख्याते २शाकभेदे भरतः । ३सेहुण्ड-
वृक्षे (सिजु) स्त्री राजनि० गौरा० ङीष् ।

**गण्डु (ण्डू)** पुंस्त्री गण्ड्यते गडि-आघाते उन् स्त्रीत्वे
अप्राणिजातिवाचकत्वात् ऊङ् । १उपधाने (बालिश)
जटा० तत्र कपोलरूपवदनैकदेशव्यापारसत्त्वात्तथा-
त्वम् । २ग्रन्थौ पु० शब्दार्थचि० गण्डूपदः । गण्डुः
ग्रन्थिरस्त्यस्य पिच्छा०वा इलच् । ३गण्डुल ग्रन्थियुते त्रि० ।
पक्षे मतुप् । गण्डुमत् तत्रार्थे त्रि० स्त्रियां ङीप् ।

**गण्डूपद** पुंस्त्री०गण्डुः ग्रन्थयः तद्युतानि पदानि यस्य ।
(केँचो) १किञ्चुलुके अमरः । स्त्रियां ङीष् । अल्पार्थे
ङीष् । गण्डूपदी २क्षुद्रकिञ्चुलके अमरः । [ हेमच० ।

**गण्डूपदभव** न० गण्डूपद इव भवति भू-अच् । १सीसके

**गण्डूष** पु० गडि-ऊषन् । १मुखपूरणे २मुखान्तर्गतजलादौ
च "गण्डूषमुज्झितवता पयसः सरोषम्" माघः । "सु-
खोष्णः स्नेहगण्डूषो नस्यं स्नैहिकमेव च" सुश्रु० ।
"अपां द्वादशगण्डूषैर्मलशुद्धिर्विधीयते" आ० त० ।
"तस्य जह्नुः सुतो, गङ्गां गण्डूषीकृत्य योऽपिबत्" भाग०
८।१५।१ "गजाय गण्डूषजलं करेणुः" कुमा० । ४हस्ति

गुण्डाख्ये ४प्रसृतिपरिमाणे च मेदि० "गण्डूषजलमात्रेण शफरी फर्फरायते" उद्भटः। ५उन्नतनाभौ च स्त्री टाप् अमरोक्तं स्त्रीत्वमेतदर्थपरमिति शब्दार्थचि० ।

गण्डूषकवलधारणादौ विधिश्च भावप्र० दर्शितो यथा "स्नेहक्षीरकषायादिद्रवैः संपूर्णमाननम् । आपूर्य स्थीयते तावद्भिर्गण्डूषधारणे । कफपूर्णास्यता यावच्छ्रेदो दोषस्य वा भवेत् । नेत्रघ्राणस्रुतिर्यावत्तावद्गण्डूषधारणम् । गण्डूषान् सुस्थितः कुर्यात् खिन्नभालगलादिकः । मनुष्यस्तीक्ष्णया पञ्च सप्त वा दोषनाशनात् । गलादिक इत्यादि शब्देन गण्डकपोलौ गृह्येते सुश्रुतोक्तत्वात् । चतुर्विधः स्याद्गण्डूषः स्नेहनः शमनस्तथा । शोधनो रोपणश्चैव कवलश्चापि तादृशः । स्निग्धोष्णैः स्नैहिको वाते, स्वादुशीतैः प्रसादनः। पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे । कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे । दद्यादेषु चैतस्य गण्डूषे कोलमात्रकम् । कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः । धार्यन्ते पञ्चशाद्दर्शाद्गण्डूषाः कवलादयः । व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् । इन्द्रियाणां प्रसादश्च गण्डूषे विहिते भवेत् । हरेदास्यस्य वैरस्यं शोषपाकं व्रणं तृषाम् । दन्तचालं च गण्डूषो वैशद्यं तु करोति हि । अथ कवलः वातपित्तकफघ्नस्य द्रव्यस्य कवलं सुखे । अर्द्धं निःक्षिप्य संचर्व्य निष्ठीवेत्कवले विधिः । कवलः कुरुते काङ्क्षामास्येषु हरते कफम् । तृष्णां शोफस्य वैरस्यं दन्तचालस्य नाशयेत् ।"

**गण्डोपधान** न० गण्ड उपधीयतेऽत्र उप+धा–आधारे ल्युट् ६त० । (गालबालिश) गण्डस्थापनार्हे १उपधाने ।"मृदुगण्डोपधानानि शयनानि सुखानि च"सुश्रु०।

**गण्डोल** पु०गडि–ओलच् ।१गुड़के २ग्रासे च हेमच० । गुड़कस्य वर्त्तुलाकारः(गोला)पदार्थभेदः। गुड़कशब्दे दृश्यम् ।

**गण्डोलपाद** पु० गण्डोल इव पादोऽस्य उपमानपूर्वत्वेऽपि हस्त्या० नान्त्यलोपः । १गण्डोलतुल्यवर्त्तुलपादे त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीप् ।

**गण्य** त्रि०गणं लब्धा गण+यत्,गण–कर्मणि यत् वा । गणं लब्ध्वा १लब्धरि,२गणनीये च । अपगण्यः । गणेभवः दिगा०यत् । गण्य ३गणभवे त्रि०। अस्य केनचित् समासे उत्तरपदस्थत्वे धर्म्यादि०अकर्म धारये उत्तरपदस्याद्युदात्तता धार्मिकगण्य इति ।

**गत** त्रि० गम–कर्त्तरि क्त । १अतीते "जगाद तस्य स्वयमग्रिमीगतम्" किरा०। "गता बहुतरा कान्ते ! स्वल्पा तिष्ठति यामिनी" "गताः समाः पादयुताः"नी०ता० "आयुषोऽर्द्धं गतं तस्य"सू०सि० धातूनामनेकार्थत्वात् २इत्यं भावं प्राप्ते च । "तथागतायां परिहासपूर्व्वम्" रघुः "तथागतायां तथाभूतायाम्" मल्लिना० । तथारूपमाप्तायामिति तु न्याय्यम् ।३समाप्ते ४पतिते । कर्म्मणि क्त ।५ज्ञाते ६प्राप्ते ७ज्ञातगतिके च। भावे क्त ।८गमने न० "गतं तिरश्चीनमनूरुसारथेः"माघः। "गतेषु लीलाञ्चितविक्रमेषु"कुमा०। "गतं गतं पक्षिसमागतं गतम्"भट्टिः ।

**गतत्रप** त्रि० गता त्रपा लज्जा यस्य ।१निर्लज्जे । [अमरः।

**गतनासिक** त्रि० गता नासिकाऽस्य । (खाँदा)नासिकाशून्ये

**गतप्रत्यागत** त्रि० पूर्वं विरागात् स्वस्थानात् गतः पश्चादागतः स्वसेवायां विरक्ततया पूर्वं गते पश्चादागते १भृत्यादौ "शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् । गत प्रत्यागते चैव स हि कष्टतरो रिपुः"मनुः । "सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा" मनुः । भावे क्त । २गमनप्रत्यागमनयोश्च न० द्वित्व० । गदाशब्दे दृश्यम् ।

**गतबुद्धि** त्रि० गता बुद्धिरस्य । १ज्ञानशून्ये ।

**गतरस** त्रि०गतो रसोऽस्य । १नष्टरसे "यातयामं गतरसम् । अभक्ष्यकथने" स्मृतिः ।

**गतभर्त्तृका** स्त्री गतो नष्टः प्रोषितो वा भर्त्ता यस्याः कप् । १विधवायां २प्रोषितभर्त्तृकायाञ्च । "किमु युक्तमुद्धतगतभर्त्तृकाः" माघः ।

**गतव्यथ** त्रि० गता नष्टा व्यथा यस्य । १व्यथाशून्ये ।

**गतसङ्ग** त्रि०गतः सङ्गोऽस्य ।१फलकामनाशून्ये २फलासक्ते ।

**गतसत्त्वक** पु० गतं सत्त्वमवसादहेतुर्भेदोऽस्य कप् । निर्मदे १हस्तिनि शब्दच०। [स्पृहोऽभ्यागमनप्रयोजनम्"माघः ।

**गतस्पृह** त्रि० गता स्पृहा यस्य । १निष्पृहे । "गत-

**गतस्मय** त्रि० गतः स्मयो गर्व्वो, विस्मयो वा यस्य । १अहङ्कारशून्ये २विस्मयशून्ये च । [ङित्वात् ङीप् ।

**गताक्ष** त्रि०गतमक्षि यस्य षच् समा०। १अन्धे हेमच०स्त्रियां

**गतागत** न०गतं गमनमागतमागमनं द्वयोः,समाहारः।१गमागमनयोः। "एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते"गीता । जीवस्य गतागतं च संसारे मरणोत्तरं पुनर्जन्माप्रत्यक्षरूपम् निष्क्रियस्य तस्य अन्यथा तदसम्भवात् । "गतागतकुतूहलं नयनयोरपाङ्गावधि" रसमञ्जरी । "मध्येन भानां गतागतं लोहितः करोति ततः" वृह०सं० ६अ० । गतागतेन निर्वृत्तम् अस्य-

द्यूताᳲठक् । गातागतिक यातायातनिष्पादिते त्रि० । पूर्वं गतं पश्चादागतम् । २पक्षिगतिभेदे जटाधरः । गम— कर्त्तरि क्त । कर्म्म० । पूर्वं गते पश्चादागते त्रि० । आग-गतशब्दे विवृतिः । आ+गम—क्तिन् गतोत्तरमागतिः । गतागतिरप्यत्र स्त्री । "जाबालिरपि जानीते लोकस्यास्य गतागतिम्" रामा० अयो० ११० ।

**गताध्वन्** त्रि० गतः अध्वा येन । १गतमार्गे २ज्ञाततत्त्वे च "गताध्वा छिन्नसंशयः" भा० शा० २२२ अ० । स्त्रियां "डाबुभाभ्यामन्यतरस्याम्" पा० वा डाप् । सा च २चतुर्दशीयुक्तामावास्यायां अर्वितादशब्दे २४६८ पृ० कर्म्मप्रदीपवाक्यं दृश्यम् । "अमावास्यां कुर्व्वीत चन्द्रे दृश्यमानेऽप्येकदा गताध्वा भवतीति" गोपथब्रा० १।५।१० ।

**गतानुगत** त्रि० गतस्य गमनस्यानुगतम् अनुगमनम् । १गमनानुरूपगमने । तेन निर्वृत्तं अक्षद्यूतादि०ठक् । गातानुगतिक गमनानुगमननिष्पन्ने त्रि० । गतानुगतमस्त्यस्य ठन् । गतानुगतिक तद्युक्ते त्रि० "गतानुगतिको लोको न लोकः पारमार्थिकः" पञ्चत० ।

**गतान्त** त्रि० गत उपस्थितः अन्तः अन्तकालोऽस्य । १उपस्थितान्तकाले, मुमूर्षौ "मम दृष्टस्य कैकेयि ! गतान्तस्य तपस्विनः" रामा० अ० १२।२० । गतः प्राप्तः अन्तो येन । २प्राप्तचरमसीमनि च ।

**गतायुस्** त्रि० गतं गतप्रायमायुर्जीवनकालोऽस्य । १प्रासन्नमरणकाले, गतायुर्लक्षणं सुश्रुतेनोक्तं यथा "शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् । तत्त्वारिष्टं समासेन व्यासतस्तु निबोध मे । शृणोति विविधान् शब्दान् यो दिव्यानामभावतः । समुद्रपुरमेघानामसम्पत्तौ च निःस्वनान् । तान् स्वनानावगृह्णाति मन्यते चान्यशब्दवत् । ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोति यः । द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति । न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् । यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत् । सञ्जातशीतपिड़को यश्च दाहेन पीड्यते । उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते । प्रहाराद्भाभिजानाति योऽङ्गच्छेदमथापि वा । पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते । वर्णान्यभावराज्यो वा यस्य गात्रे भवन्ति हि । स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः । सुगन्धिर्वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम् । विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् । उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये । यस्य दोषाग्निसाम्यस्य कुर्य्युर्मिथ्योपयोजिताः । यो वा रसान्न संवेत्ति गतासुं तं प्रचक्षते । सुगन्धिं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम् । गृह्णीते योऽन्यथा गन्धं शान्ते दीपे च नीरुजः । यो वा गन्धान्न जानाति गतासुं तं विनिर्दिशेत् । द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा । विपरीतेन गृह्णाति भावानन्यांश्च यो नरः । दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति । रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् । अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान् । तडित्वतोऽसितान् यो वा निर्मले गगने घनान् । विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम् । यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति । धूमनीहारवासोभिरावृतामिव मेदिनीम् । प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा । भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति । न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम् । ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम् । ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति । पश्यत्येकाङ्गहीनां वा विकृतां वाऽन्यसत्त्वजाम् । श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् । पिशाचोरगनागानां भूतानां विकृतामपि । यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते । आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ।" अधिकं कालचिह्नशब्दे १९९६ पृ० उक्तम् ।

**गतार्त्तवा** स्त्री गतमार्त्तवं यस्याः । गतपञ्चाशद्वर्षवयस्कायां स्त्रियाम् । "द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत्समं स्त्रियः । मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत्" भावप्र० तद्गतिकाल उक्तः । रोगादिना तन्मध्ये गतरजस्कायामपि जातवन्ध्यायां २स्त्रियाञ्च राजनि० ।

**गतार्थ** त्रि० गतो ज्ञातोऽर्थो यस्य । ज्ञातार्थके पदार्थे "तदपि लक्षणकथनेनैव गतार्थम्" सा० द० ।

**गतासु** त्रि० गताः असवोऽस्य । १मृते २शवे "गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" गीता । ३गतप्रायप्राणे च सुश्रुतः गतायुःशब्दे दृश्यम् ।

**गति** स्त्री गम—भावे क्तिन् । १गमने । "स्तम्भितेवाभवत्ते गतिः" रघुः । "प्रथयातिभूमिमगमयत् गतिभिः" माघः । "उपागमे दुश्चरिता इवापदां गतिं न निश्चेतुमलं शिलोच्चयाः" किरा० । २परिणामे च "दुरधिगमा हि गतिः प्रयोजनानाम्" किरा० । "गतिः परिणामः" मल्लि० । ३ज्ञाने । करणे क्तिन् । ४प्रमाणे च । "अनेन

मूर्खं न भवेति का गतिः" किरा० "का गतिः किं प्रमाणम्" भट्टि०। आधारे क्तिन्। ५सरणौ पथि "भिन्नगतिर्हि लोकः" रघुः। ६स्थाने च। "कां गतिं कृष्ण! गच्छति" गीता "गतिं प्रतापस्य जगत्प्रमाथिनः" किरा० "गतिं स्थानम्" मल्लि०। गम्यते कर्मणि क्तिन्। ७स्वरूपे "न तथ्यं निरूपयितुमस्य गतिम्" किरा० "गतिं स्वरूपम्" मल्लि०। ८विषये च "मनोरथानामगतिर्न विद्यते" कुमा० "अगतिरविषयः" मल्लि०। भावे क्तिन्। ९यात्रायाम्। करणे क्तिन् १०अभ्युपाये "कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" पुरा०। ११नाडीव्रणे मेदि०। पशुपक्ष्यादिगतिभेदाश्च खगगतिशब्दे २४१५पृ० उक्ताः। वृह० सं० ७अ० नक्षत्रभेदेन बुधस्य गतिभेदास्तत्फलभेदाश्चोक्ता यथा

"प्राकृतविमिश्रसंक्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः। सप्त पराशरतन्त्रे नक्षत्रैः कीर्तिता गतयः। प्राकृतसञ्ज्ञा१ वायव्या१५याम्य२पैतामहानि४ बहुलाश्च३। मिश्रा गतिः२ प्रदिष्टा शशि५शिव६पितृ१०भुजग८दैवानि। संक्षिप्तायां३ पुष्यः पुनर्वसुः फल्गुनीद्वयं चेति। तीक्ष्णायां४भाद्रपदाद्वयं सभाक्रान्ताश्वयुक्१८।१। पौष्णम्२७। योगान्तिकेति५ मूलं द्वे चाषाढे गतिः सुतस्येन्दोः। घोरा६ श्रवणस्त्वाष्ट्रं१४ वासवं२३ वारुणं२४ चैव, पापाख्या७। सावित्रं१३ मैत्रं१७ शक्राग्निदैवतं१६ चेति। उदयप्रवासदिवसैः स एव गतिलक्षणं प्राह। चत्वारिंशत्त्रिंशद्द्विसमेता विंशतिः२२ द्विनवकं च१८। नव मासार्धं दश चैकसंयुताः११ प्राकृताद्यानाम्। प्राकृतगत्यामारोग्यवृष्टिसस्यप्रवृद्धयः क्षेमम्। संक्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम्। ऋज्वीतिवक्रा वक्रा विकला च मतेन देवलस्यैताः। पञ्चचतुर्द्व्येकाहा ऋज्व्यादीनां षडभ्यस्ताः। ऋज्वी हिता प्रजानामतिवक्रार्थं गतिर्विनाशयति। शस्त्रभयदा च वक्रा विकला भयरोगसञ्जननी।"

शाब्दिकोक्तेषु प्रादिषु१२शब्दविशेषेषु पु० ते च "प्रादयः" "उपसर्गाः क्रियायोगे" "गतिश्च" "ऊर्यादिच्विडाचश्च" "अनुकरणं चानितिपरम्" "आदरानादरयोः सदसती" "भूषणेऽलम्" "अन्तरपरिग्रहे" "कणेमनसी श्रद्धाप्रतीघाते" "पुरोऽव्ययम्" "अस्तं च" "अच्छ गत्यर्थवदेषु" "अदोऽनुपदेशे" "तिरोऽन्तर्धौ" "विभाषा कृञि" "उपाजेऽन्वाजे" "साक्षात्प्रभृतीनि च" "अनत्याधाने उरसिमनसी" "मध्ये पदे निवचने च" "नित्यं हस्ते पाणावुपयमने" "प्राध्वं बन्धने" "जीविकोपनिषदावौपम्ये।" पा० उक्ताः धातुविशेषयोग एव तत्संज्ञां भजन्ते धातुविशेषाश्च सि०कौ० त०म०प्र० द्रष्टव्याः। तेषाञ्च गतिसंज्ञकानां "गतिर्गतौ" पा० अनुदात्तता। "सगतिरपि तिङ्" पा०। क्वचित् प्रपचतीत्यादौ अनुदात्तता। "गतिरनन्तरः" पा० "कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या"। पुरोहितम्। "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः" वार्त्ति०। "गतिबुद्ध्यादि" पा० णिचि प्रयोज्यकर्त्तुः कर्मत्वम् ग्रामं गमयति देवदत्तम् चैत्रः। "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" पा०। ग्रामं ग्रामाय वा गच्छति अध्वनि तु मार्गं गच्छति। अचेष्टायां मनसा गच्छति "गत्यर्थाकर्मकेत्यादि" पा० कर्त्तरि च क्तः। ग्रामं गतः चैत्रः चकारात् भावे कर्मणि च गतं चैत्रेण, गतो ग्रामश्चैत्रेण। "क्तोऽधिकरणे च" "ध्रौव्यगतिप्रत्यवसानेत्यादि" पा० आधारे क्तः। "इदं यातं रमापतेः" सि० कौ०। सर्वे गत्यर्था ज्ञानार्थाः प्राप्त्यर्थाश्चेत्युक्तेः "मतिबुद्धिपूजार्थेभ्यश्च" पा० वर्त्तमानेऽपि क्तः। शास्त्रमधिगतम् विप्रेण वर्त्तते, तेन ज्ञायमानमित्यर्थः। गत्यर्थकधातवश्च गणपाठे पठिता एव ज्ञेयाः। वैदिकप्रयोगे तु केचित्ततोऽन्येऽपि धातवः समष्ट्या निघण्टौ पठिता यथा

"वर्त्तते। अयते। लोटते। लोठते। स्यन्दते। कसति। सर्पति। स्यमति। स्रवति। स्रंसते। अवति। श्चोतति। ध्वंसति। वेनति। मार्ष्टि। भुरण्यति। शवति। कालयति। पेलयति। कण्टति। पिस्यति। विस्यति। मिस्यति। प्रवते। प्लवते। च्यवते। कवते। गवते। नवते। चोदति। नक्षति। सश्चति। स्पश्चति। साचति। आच्छति। तुरीयति। यतति। अतति। गाति। इयर्ति। सस्रति। त्सरति। रंहति। यतते। भ्रमति। ध्रजति। रजति। लजति। क्षियति। धमति। मिनाति। ऋण्वति। ऋणोति। स्वरति। सिसर्ति। वेविष्टि। योषिष्टि। रिणाति। रीयते। रेजति। दध्यति। दभ्नोति। ऋध्यति। धन्वति। अरुषति। आर्यति। डीयते। तकति। दीयति। ईषति। फणति। हर्नति। अर्दति। मर्दति। सस्वर्त्ते। नसते। हर्यति। इयर्ति। ईर्ते। ईङ्खते। ज्रयति। आलति। गन्ति। आ गनीगन्ति। जङ्घन्ति।

जिन्वति । जषति । गमति । म्रति । म्राति । म्रयति । पश्यते । अथर्यति । अेहते । पःक्षति । सुस्यति । पस्त्याति । वाति । याति । द्रवति । द्राति । दूडति । एजति । जमति । जयति । मज्जति । अनिति । पवते । हन्ति । सेधति । अगन् । अजगन् । जिगाति । पतति । इन्वति । हर्मति । द्रवति । वेति । इयक्षात् । एति । अगायात् । अवुधुरिति । द्वाविंशशतं गतिकर्माणः ।" एतेषां भ्वाद्यादिगणीयत्वं विकरणादेवावसेयम् ।

**गतितालिन्** पु॰ स्कन्दसैन्यभेदे "शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य सैनिकाः" इत्युपक्रमे "वैताली गतिताली च तथा कथकवाचिकौ" भा॰ शल्य॰ ४६अ॰ ।

**गतिला** स्त्री गम–इलच् मित्त्वात्॰ नि तान्तादेशः । १वेलवतायाम् उज्ज्वल॰ । २नद्यां ३परम्परायाञ्च उणादिको॰ ।

**गतिसत्तम** पु॰ गतिर्बोधः, प्राप्यं स्थानं वा सैषो सत्तमश्च । १परमेश्वरे । "आदित्यो ज्योतिरात्मा च सहिष्णुर्गतिसत्तमः" विष्णुस॰ ।

**गत्वन्** त्रि॰ गम–क्वनिप् मलोपे तुक् । गन्तरि । स्त्रियां ङीप् रश्चान्तादेशः । गत्वरी ।

**गत्वर** त्रि॰ गम–क्वरप् मलोपे, तुक् । गमनशीले स्त्रियां ङीप् । "अभिमानधनस्य गत्वरैः" किरा॰ ।

**गत्वा** अव्य॰ गम–क्त्वा । गतिं कृत्वेत्यर्थे "सद्यः पुरीपरिसरे च शिरीषमृद्वी गत्वा जवात् त्रिचतुराणि पदानि सीता" उत्तरच॰ । वेदे तु "क्त्वापि च" पा॰ यक् । गत्वाय तदर्थे अव्य॰ "दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत्" ऋ॰ ८,१००,८ । "गत्वाय गत्वा" भा॰ । स्नात्व्यादि॰ नि॰ आतःस्थाने ईत् । गत्वी तदर्थे अव्य॰ । "सा मोदुषी वदावसेव गत्वी" ऋ॰ ४।४१।५।

**गद** मेघध्वनौ अद॰ चुरा॰ उभ॰ अक॰ सेट् । गदयति ते अजगदत् त । गदयां बभूव आस चकार चक्रे ।

**गद** व्यक्तभाषणे भ्वा॰ पर॰ सक॰ सेट् । गदति अगादीत्-अगदीत् जगाद । गदितं गदः । गद्यं निगाद्यम् । प्रणिगदति+प्रत्यगदत् । "जगादाग्रे गदाग्रजम्" माघः । "वय माद्यं वदा चैवं शोकमेक जगाद ह" भा॰ व॰ ६७अ॰ । "अथ जगदुरनीचैराशिषस्तस्य विप्राः" भट्टिः । "मुद्रान्तरज्ञा जगदे कुमारी" रघु । "अलवीष्वभरोऽग्नोषि गदितम्" मनु॰ । "विस्तरात् गदतः मम" देवीमा॰ ।

नि+नितरां कथने । "निगदामि यथा युक्तं पुराणाश्रयसंयुतम्" भा॰ आ॰ ५अ॰ । "पौरा निवर्तध्वमिति न्यगादीत्" भट्टिः । "मद्वाक्यभावां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! यदा निगद्यसे" रघुः । "न नैषध कार्यमिदं निगाद्यम्" नैष॰ । भावे वा यप् । निगादः निगदः । चतुर्थ्यन्तस्योच्चारणे च । "प्रतिनिगद्य होमः" कात्या॰श्रौ॰ ६,१०२६ । "देवतां प्रति निगद्य देवतापदं चतुर्थ्यन्तमुच्चार्य स्वाहाकारेण होमः" कर्कः ।

प्रति+प्रत्युत्तरकथने । "आभिगोष्ठाभिरव्यग्रः प्रश्नं प्रतिजगाद ह" भा॰ आनु॰ १२४अ॰ ।

वि+विरुद्धोक्तौ । "न हि मिथ्यात् स्रवेत् क्रोधं लोके विगदितं वचः" रामा॰ अयो॰ २५अ॰ ।

**गद** पु॰ गद–अच् । १रोगे अमरः । "प्रयोगानाञ्च विधानं तद्गदप्रतिषेधनम् । प्रतिश्यायनिषेधस्य शिरोगदविवेचनम् । चिकित्सा तद्गदानाञ्च" सुश्रुतः । "येषां गदानां ते योगाः प्रवक्ष्यन्तेऽगदङ्कराः ।" सुश्रु॰ । "असाध्यं कुरुते कोपं प्राप्ते काले गदो यथा" माघः । गद–अव्यक्तध्वनौ भावे अच् । २मेघध्वनौ । मुग्ध॰ भाषणार्थकतोक्तिचिन्त्या चुरान्तत्वात् ततो भावे अच् एवानुशासनात् नावेवोपगदेऽपोविधानात् । ३रोहिणीगर्भजाते वसुदेवपुत्रभेदे पु॰ । "बलं गदं सारणञ्च दुर्मदं विपुलम् ध्रुवम् । वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्" भाग॰ ८,१४अ॰ । "हृदीकः सहितोऽक्रूरो जयन्तगदसारणाः । आसते कृपकं कश्चित्" भा॰ १।१२४,२८ । "वनिताककुन्द्भिः पुरः सबलं सह सारणेन तम् । ऽमितो र॰वाङुपागतः गदः सव्यतिपन्नुपर्हसि" माघः "जगादाग्रे गदाग्रजम्" माघः । कु(कु) ४कुष्ठे विषभेदे न॰ राजनि॰ । गदाख्यगदाग्रजादयोऽप्यत्र ।५असुरभेदे पु॰ । गदायुद्धे दृश्यम् ।

**गदगद** न॰ गद्गद+पृषो॰ । गद्गदभाषणे "बल्लवेषु कस्याऽठताङ्गनामन्यतमे गदगदवाक्यता" सुश्रु॰ । गद्गदेत्येव पाठः सम्यक् ।

**गदयित्नु** पु॰ गदि–इत्नुच् णेरयादेशः । १कामे, २कामुके ३वावदूके च त्रि॰मेदि॰ ४शब्दे उज्ज्वलदत्तः ।

**गदा** स्त्री गद–अच् टाप् । १स्वनामख्याते लौहादिकीलिते, २लौहमये शस्त्रभेदे, तद्युद्धक्रियाभेदो वह्नि पु॰ धनुर्वेदे दर्शितो यथा "आहतं विहृतं चैव गोमूत्रकमनावनम् ! तयोर्द्गावेनोक्तं वामदाक्षमेव

प्रायवृत्तगन्धिप्रभेदतः । अकठोराक्षरं स्वल्पसमासं चूर्णकं मतम् । तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् । भवेदुत्कलिकाप्रायं २ समासाढ्यं दृढाक्षरम् । वृत्तैकदेशसम्बन्धात् वृत्तगन्धि३ पुनः स्मृतम् ।"

"कथायां सरसं वस्तु गद्यैरेव विनिर्म्मितम् । क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके । आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्" यथा कादम्बर्य्यादि" ।

"गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते" । यथा देशराजचरितम् ।"गद्यपद्यमयी राजस्तुतिर्व्विरुदमुच्यते । यथा विरुदमणिमाला" सा॰द॰ ।

"यजुषामृचां च साम्नाञ्च गद्यानाञ्चैव सर्व्वशः । आसीदुच्चार्य्यमाणानां निस्वनो हृदयङ्गमः" भा॰ व॰२६अ॰। भाग॰ ५स्क॰, विष्णु पु॰ च तत्प्रपञ्चो दृश्यः ।

**गद्याण** पु॰ भावप्र॰ कालिङ्गमानोक्तौ "यवद्वयेन गुञ्जा स्यात् त्रिगुञ्जो वल्ल उच्यते । माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित् । चतुर्भिर्म्माषकैः शाणः स निष्कष्टङ्क एव च । गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषिकः" इत्युक्ते अष्टचत्वारिंशद्गुञ्जामिते मानभेदे । स्वार्थे क । तत्रार्थे । "तस्या यवाभ्यां कथिताऽत्र गुञ्जा वल्लस्त्रिगुञ्जो धरणञ्च तेऽष्टौ । गद्याणकस्तद्द्वयमिन्द्र१४तुल्यैर्वल्लैस्तथैको घटकः प्रदिष्टः" लीला॰उक्ते परिमाणभेदे । तेन अष्टगुञ्जात्मकमाषषड्गुणतया तस्याष्टाचत्वारिंशद्गुञ्जामानम् । क्वचिदस्य दन्त्यनमध्यतापि नमध्यता च । शब्दकल्पद्रुमे क्लीवोक्तिश्चिन्त्या भावप्र॰ गद्याणशब्दस्य पुंस्त्वोक्तेः स्वार्थिकप्रत्ययस्योत्सर्गतः प्रकृतिलिङ्गत्वौचित्यात् ।

**गध्य** त्रि॰ गध–यत् मुग्धो॰ नि॰ । १ग्राह्ये । "कदा वाजं न गध्यम्" ऋ॰४।१६।११ । "गध्यं ग्राह्यम्" "गध्य" स्तुत्यातेः निगमः" भा॰ "गद्यो वाजस्य गध्यस्य सातौ" ऋ॰६।२६।२ 'गध्यस्य ग्राह्यस्य' भा॰ ।

**गध** मिश्रीभावे निघण्टुः दिवा॰ पर॰ सेट् । गध्यति अगधीत् अगाधीत् । जगाध गधिता "वाजस्य गध्यस्य सातौ" ऋ॰ ६।१०।६ गध्यस्य गध्यतिर्म्मिश्रीभावकर्म्मा मिश्रणीयस्य ग्राह्यस्य वाजस्य सातौ संभजने" भा॰ ।

**गन्तव्य** त्रि॰गम–तव्य ।१गम्ये "गन्तव्यमस्ति कियदित्यसकृत् ब्रुवाणा रामाम्बुजः कतवती प्रथमावतारम्" उत्तर॰ । "राजा कर्णेन गन्तव्यो मुक्तकेशेन धावता" मनुः ।

**गन्तु** त्रि॰ गम–तुन् । १पथिके आगन्तुरभ्यागतः उज्ज्वलदत्तः २गन्तरि च । क्वचिन्नान्तेऽपि तुन् । "मध्वा-वीरिषतायुर्गन्तोः" ऋ॰ १,८९।९ , "आयुर्गन्तोः कृत्स्नस्यायोर्गमनात् पूर्व्वम्" भा॰ । अत्र गन्तोः भावलक्षणे "स्थेणकृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" पा॰ ३।४।१६ । विहिततोसुनन्ततया माधवोक्तिश्चिन्त्या तत्र सूत्रे गमेरपाठात् । सितनिगमीत्यादिसूत्रेण तुनप्रत्ययान्तस्यैव तद्रूपस्यौचित्यात् । "युयोत नो अनपत्यानि गन्तोः" ऋ॰ ३।५४।१८ इत्यस्याः व्याख्यायां च तेन तुनन्ततयैव साधितत्वात् तथैवौचित्यात् । वस्तुतः तोसुन्नन्तस्याव्ययतया तत्स्वरार्थमेव तथासाधनं तेन वा॰ तोसुन् इत्येव न्यायः।

**गन्तृ** त्रि॰ गम–शीलार्थे तृन् । १गमनशीले २प्राप्तिशीले "तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" गीता शीलार्थतृन्नन्तत्वात् न कर्म्मणि षष्ठी । कर्त्तरि तृच् । ३गमनकर्त्तरि त्रि॰। अत्र कर्म्मणि षष्ठीति भेदः । उभयत्र स्त्रियां ङीप् ।"गन्त्री वसुमती नाशम्" या॰ ।

**गन्त्री** स्त्री गम्यतेऽनया ष्ट्रन् ङीप् । १वृषवहनीये, शकटे अमरः। २गमनकारिकायां ३गमनशीलायां स्त्रियाञ्च ।

**गन्त्रीरथ** पु॰ गन्त्री रथ इव अभीष्टस्थानप्रापकत्वात् । शकटे अमरः । [न्त्रिक-पित्रादिक्रमेण तत्रवासिनि ।

**गन्त्रिका** स्त्री पुरीभेदे साऽभिजनोऽस्य सिन्ध्वा॰ अण् । गा-

**गन्ध** अर्द्दने (हिंसायाम्)गत्यां भूषणे च चुरा॰आ॰सक॰सेट् । गन्धयते अजिगन्धत । गन्धनम् "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" पा॰ "गन्धनं हिंसनम्, गन्धनाङ्गं उपयमे तु" इति च सि॰कौ॰ । "गन्धनाङ्गं सूचनार्थे इत्यर्थः । तेन सूचनार्थेऽपि ।

**गन्ध** पु॰ गन्ध–पचाद्यच् । घ्राणेन्द्रियग्राह्ये पृथिवीवृत्तौ विशेषगुणभेदे अमरः । २प्रतिवेशिनि त्रि॰३लेशे ४सम्बन्धे ५गन्धके च मेदि॰६गर्वे हेमच॰।७शोभाञ्जने शब्दरत्ना॰ । "इष्टो मलयजो गन्धः"इति स्मृत्युक्ते ८घृष्टचन्दने च । गन्धश्च पृथिवीमात्रस्य गुणः । "रूपगन्धरसस्पर्शवती पृथिवी" कणा॰ सू॰ । न च पाषाणादौ गन्धरसयोरनुपलम्भात् तत्राव्यापकमिति वाच्यम् । तत्रापाततो गन्धरसयोरनुपलम्भेऽपि तदीयभस्मनि तदुपलम्भस्य सत्त्वात् ये एवावयवाः पाषाणारम्भकास्त एव तद्भस्मारम्भका अपि "यत् द्रव्यं तद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति" व्याप्तेरतो नाव्याप्तिः । गन्धवत्त्वञ्च तदुत्पत्तिकाले घटादावव्याप्तमतो गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिवीत्वलक्षणम् । इत्यादयश्चान्य

"तत्र क्षितिर्गन्धहेतुरिति"का०व्याख्यायाम् तथैवोक्तं यथा "गन्धहेतुरिति गन्धसमवायिकारणमित्यर्थः। यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्। तथाहि पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः। न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं तत्रापि गन्धसत्त्वात् अनुपलब्धिस्तु अनुद्भूतत्वेनाप्युपपद्यते कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते? भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिध्यति, "यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः दृष्टञ्चैतत् खण्डपटे महापटध्वंसजन्ये। इत्यञ्च पाषाणपरमाणोः पृथिवीत्वात् तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं तथा च तत्रापि गन्धवत्त्वे बाधकाभावः"। गुणपदार्थे च तस्य घ्राणग्राह्यत्वं द्वैविध्यञ्चोक्तं यथा "घ्राणग्राह्यो भवेद्गन्धो घ्राणस्योपकारकः। सौरभश्चासौरभश्च स द्विधा परिकीर्त्तितः" गन्धस्य पृथिव्यां स्वाभाविकत्वमौपाधिकत्वं वेति सन्दिह्य स्वाभाविकस्यैव तल्लक्षणत्वं कणा०सू०तद्वृत्त्योः समर्थितं यथा "पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम्। व्यवस्थितः पृथिव्यां गन्धः।" सू० "इदानीं भूतानां लक्षणानि गन्धादीनि परीक्षिषुर्गन्धादीनां स्वाभाविकत्वमौपाधिकत्वञ्च व्यवस्थापयन्नाह। रूपरसगन्धस्पर्शा यत्र कारणगुणप्रक्रमेणोत्पद्यन्ते तत्र स्वाभाविकाः सन्तो लक्षणतामुपयन्ति नान्यथा नहि समीरणे उपलभ्यमानं सौरभं निदाघे उपलभ्यमानं शैत्यं जले उपलभ्यमानमौष्ण्यं वा लक्षणं भवति तदेतदाह पुष्पवस्त्रयोरिति नहि चम्पककेतकीकुसुमसन्निकृष्टे वाससि चम्पककेतकीसौरभमुपलभ्यमानं वाससः। नहि वाससः कारणगुणप्रक्रमेण तदुत्पन्नम्, किन्तर्हि चम्पककेतकीसन्निधानादौपाधिकं नहि वस्त्रे गन्धाभावे केतकीगन्धाभावो लिङ्गम्। किं लिङ्गमत उक्तं गुणान्तराप्रादुर्भाव इति गुणान्तरात् कारणगुणात् अप्रादुर्भावोऽनुत्पत्तिः यदि हि वस्त्रे यो गन्ध उपलभ्यते स तस्य स्वाभाविकः स्यात्तदा तदवयवेषु तन्तुषु केतकीसन्निकर्षात् पूर्वं तत्र वस्त्रे चोपलभ्येत न चैवमित्यर्थः। तथा च विवादाध्यासितो गन्धो न वस्त्रसमवेतः तदवयवगुणाजन्यविशेषगुणत्वात् शीतोष्णस्पर्शवत्। स्वाभाविकं गन्धं पृथिव्या लक्षणमाह पृथिव्यां व्यवस्थितोऽयोगान्ययोगाभ्यां परिच्छिन्नः समानासमानजातीयव्यावर्त्तकतया गन्धो लक्षणमित्यर्थः भवति हि पृथिवी गन्धवत्येव, पृथिव्येव गन्धवतीति, तदेवं समानजातीयेभ्यो जलादिभ्योऽसमानजातीयेभ्यो गुणादिभ्यश्च व्यावर्त्तकः स्वाभाविकः पृथिव्यां गन्ध इति व्यवस्थितम्" वृत्तिः। तत्र पृथिव्या उक्तार्थकगन्धवत्त्वलक्षणं यदुक्तं तस्य कथङ्कारं लक्षणता स्यादित्याशङ्कापूर्वकं कणादसू० उप० वृत्तौ समर्थितं यथा

"ननु लक्षणमिदं व्यतिरेकिलिङ्गमितरभेदसाधकं व्यवहारसाधकं वा तत्र पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् यन्नेतरभिन्नं तन्न गन्धवत् यथा जलादि इतरभेदाभावव्यापकाभावप्रतियोगिगन्धवती चेयं तस्मादितरभिन्ना। तत्रेतरभेदस्य साध्यस्य प्रसिद्धौ ततो हेतोर्व्यतिरेके सपक्षविपक्षव्यावृत्ततयाऽसाधारण्यम्। अव्यतिरेके चान्वयित्वम्। अप्रसिद्धौ चाप्रसिद्धविशेषणः पक्षः। तथाच तत्र न पक्षो न वा विपक्षविधा न वा तद्विशिष्टज्ञानरूपाऽनुमितिः। किञ्च हेतुसाध्यव्यतिरेकयोर्व्याप्तिग्रहाय च व्याप्तस्य पक्षधर्मत्वं पक्षधर्मस्य न व्याप्तत्वमिति वैयधिकरण्यम्, अत एवोपनयवैयर्थ्यमपि व्याख्यायते तत्सम्बन्धितव्याप्तिकमिति तदुक्तम्, "साध्याप्रसिद्धिर्वैयर्थ्यं व्यर्थतोपनयस्य च। अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम्" इति। एवं व्यवहारसाध्यकेऽपि, तत्र यद्यपि व्यवहारः पृथिवीपदवाच्यत्वं तच्च पृथिवीत्वजातावप्यस्ति तत्र च पृथिवीत्वं हेतुर्नास्तीत्यसाधारण्यं तथापि पृथिवीत्वप्रवृत्तिनिमित्तकपृथिवीपदवाच्यत्वं साध्यमिति नासाधारण्यं यद्वा पृथिवीत्वं कार्य्यत्वपदप्रवृत्तिनिमित्तं जातित्वात् घटत्ववदिति सामान्यतः सिद्धौ पृथिवीपदं पृथिवीत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति साध्यम्। तथा चात्रापि साध्याप्रसिद्धिरेवेति चेन्नैवम्, इतरेषां जलादीनाम् भेदस्य घट एव प्रसिद्धेः। गन्धादेरतीन्द्रियस्यापि भेदस्य अन्योन्याभावस्य घटादौ प्रत्यक्ष एव सिद्धत्वात् अन्योन्याभावग्रहे अधिकरणयोग्यतामात्रस्य तन्त्रत्वात् स्तम्भः पिशाचो न भवतीत्यादौ तथादर्शनात्, नचैवं घट एव तर्हि दृष्टान्तोऽस्तु किं व्यतिरेकिणा "ऋजुमार्गेण सिद्ध्यन्तं कोहि वक्रेण साधयेत्" इति वाच्यम् अव्यतिरेकिलिङ्ग भेदमात्रे, तदाऽयमपि मार्गो वक्रइति प्रत्यवतिष्ठत एव साध्याप्रसिद्धेर्निरासे तत्कृ-

स्त्रियाम् अमरः । गर्भिणीलिङ्गं गर्भवतीशब्दे उक्तम् । गर्भिणीतत्पतिकर्त्तव्याकर्त्तव्यादि नि॰सि॰उक्तं यथा "गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् । शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् । व्यवायं च दिवास्वप्नं रात्रौ जागरणं त्यजेत्" कश्य॰ । मदनरत्ने स्कान्दे "हारिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् । केशसंस्कारकबरीकरकर्णविभूषणम् । भर्त्तुरायुष्यमिच्छन्ती वर्जयेद्गर्भिणी न हि" बृहस्पतिः "चतुर्थे मासि षष्ठे वाप्यष्टमे गर्भिणी यदा । यात्रा तदा विवर्ज्या स्यादाषाढे तु विशेषतः" याज्ञवल्क्यः "दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं वापि तस्मात् कार्य्यं प्रियं स्त्रियाः" दौहृदं गर्भिणीप्रियम् । तत्रैवाश्वलायनः "वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः । श्राद्धञ्च सप्तमान्मासादूर्द्ध्वं चान्यत्र वेदवित् । श्राद्धं तद्भोजनमिति प्रयोगपारिजातः । कालविधाने मुहूर्त्तदीपिकायाञ्च "क्षौरं शवानुगमनं नखकृन्तनं च युद्धादि वास्तुकरणं त्वतिदूरयानम् । उद्वाहमौपनयनं जलधेश्च गाहमायुःक्षयार्थमिति गर्भिणिकापतीनाम्" रत्नसंग्रहे गालवः "दहनं वपनञ्चैव चौलं वै गिरिरोहणम् । नाव आरोहणं चैव वर्जयेद्गर्भिणीपतिः" अन्यत्रापि "प्रव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्मसङ्गम् । तस्यानुयत्नेन गयादितीर्थयागादिकं वास्तुविधिं न कुर्यात्" । प्रव्यक्तगर्भा वनिता भवेन्मासत्रयात् परम् ।(मासत्रयादूर्द्धम्)षण्मासात् परतः स्वर्त्तनवमे रिष्टशालिनी" अथ सूतिकागृहप्रवेशः "रोहिण्यैन्द्वपौष्णेषु स्वातीहस्तयोरपि । पुनर्वसौ पुष्यहस्तधनिष्ठास्तूत्तरासु च । मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम्" एतच्च सम्भवे "प्रसूतिसमये काले सद्य एव प्रवेशयेदिति" वसिष्ठोक्तेः तद्गृहस्य नैर्ऋत्यां कार्य्यम् "वारुण्यां भोजनगृहं नैर्ऋत्यामथ रिष्टकमिति" वसिष्ठोक्तेः विष्णुधर्मे "दद्यात् सूतिकागारजायुधैश्च विशेषतः । वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः । सुयत्नेन तथा वारिवर्णकैर्विलितेन चेति" ।

"गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः । ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं (तरम्) तरे:" अतुना द्विमासोर्द्धं तस्या नौशुल्कापहरणमुक्तम् ।

अतिथिभ्य एव तस्या भोजनं मनुनोक्तं यथा "सुवासिनीः कुमारीश्च रोगिणीगर्भिणीस्तथा । अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्" । "बालं सुवासिनीवृद्धगर्भिण्यातुरकांस्तथा । संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्" याज्ञ॰ । आत्वा गृह कर्म॰ अस्य परनिपातः । गोगर्भिणी ।

**गर्भिणीदोहद** न॰ ६त॰ । गर्भिण्याकाङ्क्षिते द्रव्यभेदे तस्य दानावश्यकता सुश्रुते उक्ता तत्र चतुर्थे गर्भिप्रायमिन्द्रियार्थेषु करोतीत्यादि वाक्यं २११६ पृ॰ उक्तं "इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी" सुश्रुतः । [त्रिका॰ ।

**गर्भिण्यवेक्षण** न॰६त॰। कुमारभृत्यायां गर्भिणीपरिचर्य्यायाम्

**गर्भित** त्रि॰ गर्भो जातोऽस्य तार॰ इतच् । १जातगर्भे २काव्यदोषभेदे न॰ । दोषशब्दे विवृतिः ।

**ग(र्भे)र्भाङ्क** पु॰ गर्भे अङ्कमध्येऽङ्कः वा अलुक्स॰ । "अङ्कोदरप्रविष्टो यो रङ्गद्वारा मुखादिमान् । अङ्कोऽपरः स गर्भे(र्भा)ङ्कः सबीजः फलवानपि" सा॰द॰ उक्ते नाटकाङ्काङ्कमध्यप्रविष्टाङ्के । यथा बालरामायणे सीतास्वयंवरनामा ग(र्भे)र्भाङ्कः ।

**गर्भेतृप्त** त्रि॰ गर्भे शिशौ अन्ने वा तृप्तः अलुक् स॰ । १शिशौ २अन्ने च तृप्ते । युक्तारोह्या॰ आद्युदात्तताऽस्य ।

**गर्भोपघात** पु॰ गर्भस्य उपघातः । १जातगर्भस्य नाशे मेघस्य २जलोत्पादनशक्तिनाशे च तल्लिङ्गानि "गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः" इत्यादि वृ॰सं॰ २१अ॰ उक्तं तच्च गर्भशब्दे दर्शितम् ।

**गर्भोपघातिनी** स्त्री गर्भमुपहन्ति उप+हन+णिनि । गर्भघातिन्यां स्त्रीगव्यादौ अमरः ।

**गर्भोपनिषद्** स्त्री गर्भस्वरूपावेदिका उपनिषद् । उपनिषदन्तर्गते गर्भस्वरूपाद्यावेदके उपनिषद्भेदे उपनिषच्छब्दे विवृतिः । तत्स्वरूपादि ऐतरेयोपनिषद्यपि संक्षेपेणोक्तं तच्च कायशब्दे १९२५ पृ॰ "पुरुषे ह वा आदितो गर्भः इत्याद्युक्तम् । [धान्यभेदे रत्नमाला ।

**गर्मुच्छद** पु॰गर्मुतो नडस्य छद इव छदोऽस्य । (मेडुया)

**गर्मुटिका** स्त्री गर्मुत इव उटं पर्णमस्य शक॰ टेः पररूपैकादेशः टापि अत इत्त्वम् । (मेडुया) इति ख्याते धान्यभेदे रत्नमाला ।

**गर्मुत्** स्त्री गॄ—बा॰उति ७८ च ।(मेडुया)१धान्यभेदे अमरः। २नडे तृणभेदे ३स्वर्णे च मेदि॰।

**गर्व** मदे भ्वा० पर० सक० सेट्। गर्वति अगर्वीत्। जगर्व। गर्वितः। गर्वः। "खर्व! गर्वसमूहपूरिततनो!" ताराख्तवः।

**गर्व** पु० गर्व–घञ्। अभिमाने, "ऐश्वर्य्यरूपतारुण्यकुलविद्याबलैरपि। इष्टलाभादिनान्येषामवज्ञा गर्वः ईरितः" इत्युक्ते २ऽवज्ञाभेदे "गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः। "अवज्ञासविलासाङ्गदर्शनाऽविनयादिकृत्" सा० द० उक्ते ३व्यभिचारिभावभेदे। अमरे अहङ्कारपर्य्यायतोक्तिः ईषद्भेदमनादृत्यैव।

**गर्वाट** पु० गर्वेणाटति अट–अच् ३त०। द्वारपाले त्रिका०।

**गर्वित** त्रि० गर्व–कर्त्तरि क्त गर्वो जातोऽस्य तार० इतच् वा। १मत्ते २जातगर्वे "यूयं तत्प्रसरगर्वि(र्वि)तलक्षणसारम्" "प्रेमगर्वितविपक्षमत्सरात्" रघुः।

**गर्ह** निन्दायां वा चुरा० पक्षे भ्वा० आत्म०सक०सेट्। गर्हयते गर्हते अजगर्हत अगर्हिष्ट। गर्हयाञ्चक्रे जगर्हे। गर्हणा "न गर्हयेयुरस्मान् वै पाण्डुरार्याय कर्हिचित्" भा० आ० ५७२० श्लो०। "गर्हयन्तोऽस्य साहसम्" भा० व० १८१ अ० परस्मैपदम् आर्षम्। उपसर्गपूर्वकस्तु तद्द्योत्यार्थयुक्ते निन्दने। "विगर्हितं धर्म्मधनैर्निबर्हणम्" नैष०।

**गर्ह** कुत्सायां भ्वा० आ० सक० सेट्। गर्हते अगर्हिष्ट जगर्हे गर्हणम् गर्हितः गर्हा। "स एव धर्म्मो राज्ञां तु तदितं किन्तु गर्हणम्" भा० आ० ११८ अ०। "केचिन्नीचं जगर्हिरे" भा० स० ४१ अ०। "न कुत्सयाम्यहं किञ्चिन्न गर्हे बलवत्तरम्" २० २०६ अ०। "विषमां च दशां प्राप्तो देवान् गर्हति वै भृशम्" २०८ अ०। आर्षः पदव्यत्ययः। "गर्हितान्नस्य जग्धिः" मनुः।

**गर्हा** स्त्री गर्ह–अ। १निन्दायाम् "येन येनाचरेद्धर्मं तस्मिन् गर्हा न विद्यते" भा० अ० ९०५६ श्लो०। चुरा० गर्ह–भावे युच्। गर्हणाऽप्यत्र स्त्री।

**गर्ह्य** त्रि० गर्ह–ण्यत्। १निन्द्ये २अधमे अमरः।

**गर्ह्यवादिन्** त्रि० गर्ह्यं वदति वद–णिनि। कुत्सितवादिनि कद्वदे अमरः स्त्रियां ङीप्।

**गल** अदने सक० स्राव (गला) अक० भ्वा० पर० सेट्। गलति अगालीत्। "निर्गलिताम्बुगर्भम्" रघुः। "गलितं स्वराविरहिताशनयाः" माघः "प्राक्शोकनिर्गलितनेत्रपयःप्रवाहान्" नैष०। "विपक्षे गलितादरौ" "पर्य्यागलद्रक्तबिन्दुः" "मघवाद्यगलत्ततः" भट्टिः। "प्रच्छदान्तगलिताश्रुबिन्दुभिः"। "शिलाशयानो गलिताङ्गरागैः" रघुः।

**गल** स्रावणे (गालान) चुरा० आत्म० सक० सेट्। गालयते अजीगलत गालयाञ्चक्रे। गालः। गालितः। "पक्वं गोमूत्रगालितम्" चक्रदत्तः।

**गल** पु० गल–भक्षे वा० करणे अच्। १कण्ठे (गला) अस्य कर्त्तरि अच्। २सर्ज्जरसे (धुना) ३वाद्यभेदे, ४गडक मत्स्ये च शब्दरत्ना०। "गले गृहीत्वा क्षिप्तोऽस्मि" भा० आनु० १५४ अ०। अस्य स्वाङ्गत्वेऽपि क्रोडा० न ङीष्। छिन्नगला। बहु० स्त्रियां ङीष्। गली इत्यपि तत्रैव स्त्री।

**गलक** पु० गल–वा० वुन्। (गड़ुइ) १मत्स्ये शब्दार्थचि०।

**गलकम्बल** पु० गले कम्बल इव। भाषायां गवां गलस्थिते रोमशे मांसपिण्डे अमरः।

**गलगण्ड** पु० ७त०। (गरगण्ड)। रोगभेदे। तल्लक्षणादि यथा "निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले। महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत्। निबद्धो दृढः अचलो वा। मुष्कवत् अण्डवत्। गले इति हनुमन्ययोरुपलक्षणम्। तथा च भोजः "महान्तं शोथमल्पं वा हनुमन्यागलाश्रयम्। मुष्कवल्लम्बमानं तु गलगण्डं विनिर्दिशेत्" संप्राप्तिमाह वातः कफश्चापि गले प्रदुष्टो मन्ये तु संसृत्य तथैव मेदः। कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः। क्रमशः शनैः शनैः स्वलिङ्गैः वातकफमेदोलक्षणैः। तत्र वातिकमाह। तोदान्वितः कृष्णशिरावनद्धः श्यावारुणो वा पवनात्मकस्तु। पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात् कदाचित्। वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः। चिरवृद्ध्यपाकः चिरेण वृद्धिरपाकश्च यस्य सः। श्लैष्मिकमाह स्थिरः सवर्णो गुरुरुग्रकण्डुः शीतो महांश्चापि कफात्मकस्तु। चिराच्च वृद्धिं भजतेऽचिराद्वा प्रपच्यते मन्दरुजः कदाचित्। माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगले प्रलेपः। कदाचित् प्रपच्यते वा पाकोऽपि चिराद्भवति। प्रलेपः श्लेष्मणा। मेदोजमाह स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोऽन्वितः कण्डुयुतोऽरुजश्च प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः। स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्। देहक्षये क्षीणं क्षयं, देहवृद्धौ वृद्धिं यातीत्यर्थः। असाध्यमाह "कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्त्तम्।

क्षीणस्य वैद्यो गलगण्डयुक्तं भिषग्वरं नैव नरं चिकित्सेत्" भावप्र०। "यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम्। छर्द्दिं संरक्तमोक्षं च गलगण्डे प्रयोजयेत्" चक्रद०।

**गलग्रह** पु० "आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते। गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम्" १नारदोक्ते आरम्भदिनात् परं स्मृत्युक्तानध्यायदिनपातेन प्रत्यारम्भाभाववति, पदार्थे, "कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम्। त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहाः" राजमार्त्तण्डोक्ते २तिथ्यष्टके च। ३व्यञ्जनभेदे ४मत्स्यकण्टके शब्दार्थचि०।

**गलत्कुष्ठ** न० कर्म्म०। स्रवद्रुधिरादौ कुष्ठभेदे। "भ्रातृभार्य्याभिगमनात् गलत्कुष्ठं प्रजायते," शातातपेन तस्य भ्रातृभार्य्यागमनकर्मविपाकतोक्ता।

**गलन** न० गल+भावे ल्युट्। १क्षरणे (गला) "गलदा धमनयो भवन्ति गलनमासु धीयते" निरु० ६।२८। २स्वयं पतने च कर्त्तरि ल्यु। ३स्राविणि त्रि० "गलनच्यानफलानि च दन्तस्य समानि भङ्गेन" बृह० ८४अ०।

**गलन्तिका** स्त्री गल–शतृ ङीप् स्वार्थे कन्। अल्पवारिधारायुतायां (झारा) कर्कर्य्याम् "प्रपा कार्य्या च वैशाखे देवे देया गलन्तिका" क०खी०५अ०।

**गलमेखला** स्त्री गलस्य मेखलेव। कण्ठाभरणभेदे हारा०।

**गलवार्त्त** त्रि० गले गलव्यापारे यथेष्टभोजनादौ वार्त्तः निरामयः। यथेष्टभोजनयोग्ये निरामये। "इत्यन्येचैव तीर्थेषु गलवार्त्तोरूपासतः" पञ्चतन्त्रम्।

**गलविद्रधि** पु० "सर्वं गलं व्याप्य समुत्थितोयः शोफोरुजो यत्र भवन्ति सर्वाः। स सर्वदोषो गलविद्रधिस्तु" सुश्रुतोक्ते कण्ठगते रोगभेदे "अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम्" सुश्रु०।

**गलव्रत** स्त्री गरो गरणं सर्पभक्षणं व्रतमस्य रस्य लः। मयूरे त्रिका० स्त्रियां जातित्वात् ङीष्।

**गलशुण्डिका** स्त्री गले शुण्डा इव शुण्डिका गले शुण्डिकेव। (आलजिव) उपजिह्वायाम् हेमच०। "तालूदरं वस्तिशीर्षं चिवुके गलशुण्डिके" याज्ञ०। तालुगते कण्ठशुण्डीख्याते २रोगभेदे कण्ठशुण्डीशब्दे १६६५ पृ० लक्षणादुक्तम्। "तालुगतास्तु गलशुण्डिकेत्यादि" सुश्रु०। "शल्यं कतमोमांससंघातो गलशुण्डिका सुश्रु० अधिमांसार्बुदाष्ठीलाधिजिह्वोपजिह्वोपकुशगलशुण्डिका" इत्युपक्रमे गण्डमाला प्रभृतयोमांसदोषजाः" सुश्रुतेन तस्याः मांसदोषजत्वमुक्तम्।

**गलस्तन** पु० गले स्तन इव। छागगलस्थे स्तनाकारे मांसपिण्डभेदे। स च दुग्धक्षरणहीनत्वात् निष्फलः यथोक्तं दृष्टान्तविधया वसिष्ठसिद्धान्ते "चलसंक्रमयुङ्मासे संक्रमोयः स संक्रमः। अजागलस्तन इव राशिसंक्रान्तिरुच्यते"। [छाग्याम्। हेमच०।

**गल(ले)स्तनी** स्त्री गले स्तनौ यस्याः वा अलुक्स०।

**गलहस्त** पु० गले न्यस्तो हस्तः। १अपसारणार्थं गलेऽर्पिते हस्ते (गलाटिपि)। "देवलवदन गलहस्तः" दायभाग "अनिच्छन् गलहस्तेन ताभिर्निर्वासितस्तदा" कथास०। स जातोऽस्य तार० इतच्। गलहस्तित जातगलहस्ते। "अर्द्धेन्दुमौलेर्गलहस्तितेव" नैष०। तदाकृतित्वात् २अर्द्धचन्द्राख्ये बाणभेदे पु०। ३कण्ठनिर्हृति स्त्री मेदि०।

**गला** स्त्री गलति गल–अच्। कव्यालुलताभेदे, शब्दार्थचि

**गलाङ्कुर** पु० "गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसं च तथैव शोणितम्। गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून् व्याधिरयं तु रोहिणी" माधवकरोक्ते रोहिणीरूपकण्ठजातरोगाङ्के अङ्कुराकारे पदार्थे। "गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम्। प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् साऽसुहरा तु रोहिणी' इति सुश्रुते रोहिणीरोगस्य गलजाताङ्कुरसर्जनकारित्वमुक्तम्।

**गलानिल** पु० गलेऽनिलः प्राणवायुरस्य। (गल्ता चिङ्गिट) मत्स्यभेदे। त्रिका०। गलाविल इति पाठः।

**गलि** पु० गडि–डस्य लः। (गडियागरु) सामर्थ्येऽपि भारावाहके १वृषे हेमच०। गल इन्। २लतायां स्त्री उज्ज्वल०।

**गलित** त्रि० गल–क्त। १पतिते च्युते, च्युते, स्थानादितो भ्रष्टे अमरः। गलधातौ उदा०२परिणते च। "गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्" रघुः।

**गलितक** पु० गलित इव कायति कै–क। पतितवन्नाट्यभेदे नाट्यशब्दे विवृतिः। "गलितकः" विक्रमो०५अ०।

**गलितकुष्ठ** न० कर्म्म०। गलत्कुष्ठे। [त्रिका०।

**गलेगण्ड** पु० गलेगण्ड इव यस्य। पक्षिभेदे (छाड़गिला)

**गलेचोपक** त्रि० गले चुप्यतेऽसौ चुप–णि० कर्म्मणि ण्वुल् अलुक्स०। कण्ठे कर्त्तनीये। "गलेचोपकपादहारकौ" दश०।

**गलोड्य** न० गलेन ओड्यः पृषो० अलोपः। धान्यभेदे "शालि-षष्टिकमसूरमुद्गशतालीमसूरशृङ्गाटकगलोड्यगौरीगिरिकार्यव-यवक्षारपत्रप्रभृतिभिर्धान्याक्षपिष्टैः प्रदेहो व्रतसिद्धः" सुश्रु०। [ अवे निगाले अमरः।

**गलोद्देश** पु० गलस्य उद्देशः समीपम्। गलसमीपस्थेऽव-

**गलोद्भव** पु० गले अश्वगलदेशे उद्भवति उद्+भू—अच्। अश्वगलजाते रोमवालाख्ये रोमावर्त्तभेदे त्रिका०।

**गलौघ** पु० गले ओघ इव। "गलेव (गलविद्रधेः) तथ्यः खलु सर्वजस्य। शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता। कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्यतेऽसौ" सुश्रुतोक्ते कण्ठगतरोगभेदे।

**गल्द्** स्त्री गल—क्विप् गल+पृषो० वा तेन गला गलेन वा दीयते दा—कर्मणि घञर्थे क। १वाचि निघ०। गद्गद इति पाठान्तरम्। गलितं गल् धीयते अत्र धा—घञर्थे क पृषो० धस्य दः। धमनीभेदे "या त्वा विषग्विमुञ्च त्वा ग-ल्दा धमनीनाम्"। इत्याद्यमधिकृत्य गल्दा धमनयो भवन्ति गलनमासु धीयते" निरु० ६।२४।

**गल्भ** धार्ष्ट्ये (प्रागल्भ्ये) भ्वा० आ० अक० सेट्। गल्भते अगल्भिष्ट जगल्भे। "या कथञ्चन सखीवचनेन प्राग-भि प्रियतमं प्रजगल्भे" माघः। गल्भ+धार्ष्ट्ये क्यङ् गल्भायते अगल्भायिष्ट।

**गल्या** स्त्री गलानां कण्ठानां समूहः पाशा० यत्। १कण्ठ-समुदाये। गलो इव तत्कार्यकारिणां २समूहे शब्दार्थचि०।

**गल्ल** पु० गल—ल तस्य नेत्त्वम्। (गाल) गण्डे। हेमच०।

**गल्लक** पु० गलति क्विप् गल् तं लाति लल्लाति ला—क ततः स्वार्थे क। १चषके मद्यपानपात्रे हेमच०। २इन्द्रनीलमणौ त्रिका०। पृषो० अल्पता इत्येके।

**गल्लचातुरी** स्त्री गल्ले चातुरी यस्य संज्ञात्वात् न कप् न वा ह्रस्वः। (गालबालिश) ख्याते उपधानभेदे जटा०।

**गल्वर्क** पु० गलति गल—उन् गलुरर्कः दीप्तिरस्य। स्फटिके १मणिभेदे त्रिका०। तत्र "गल्वर्कस्तु स्फटिकवत्। पद्मरागस्त्विन्द्रनीलः" इत्युक्तौ क्रमसारमल्पोत्तरं स्फटिकस्य गल्वर्कशब्दस्य न इन्द्रनीलार्थता मन्यमानजले तदर्थ तोक्तः प्रामादिकी। २पद्मरागे मणौ च। "स्फटिकरगल्वर्क सुवर्णकर्य्यैः" भा० द्रो० १६अ०। "स्फार इन्द्रनीलः(असारत्वात्) गल्वर्कः पद्मरागः" (अर्कदीप्तिकत्वात्) नील०। ३चषकपात्रे हेमच०। रक्तवर्णसुरापेय सर्वपात्र-ह्रस्वर्णत्वात्तस्य तथात्वम्।

**गल्ह** कुत्सने भ्वा० आ० सक० सेट्। गल्हते अगल्हिष्ट जगल्हे।

**गवची** स्त्री गां भूमिमञ्चति अन्च—क्विप् अवङादेशः ङीप् अचोऽल्लोपः पृषो० न दीर्घः। इन्द्रवारुण्याम् (राखालशशा) रत्नमाला।

**गवय** पुंस्त्री गुङ् शब्दे भावे अप् गवं शब्दभेदं याति या—क, गां तदवयवं सादृश्येनायते अय—अच् वा। गलकम्बल-शून्ये गोसदृशे मृगभेदे अमरः "ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्। सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम्। गवयादिपदानां तु शक्तिधीरुपमाफ-लम्" भाषा०। "इतः कथञ्चिद् गवयैर्विविक्तैः" कुमा०। स्त्रियां योपधत्वेऽपि योपधप्रतिषेधे गवयहयाहीनाम-प्रतिषेधात् ङीष्। अस्य मांसपाकविधिर्यथा। "तैले संपा-चिते तप्ते हिङ्गुसैन्धवसंयुतम्। मांसं गवयसम्भूतं सुसिद्धं भूरिवारिणा"। भावप्र० तद्गुणा उक्ता यथा "गवयो मधुरो हृद्यः स्निग्धोष्णः कफपित्तलः। विदा-ही गुरुविष्टम्भी विपाके विरसः सदा"। २वैवस्वतपुत्रे वानरभेदे। "पुत्रा वैवस्वतस्यासन् पञ्च कालान्तकोपमाः। गदो गवाक्षो गवयः शरभो गन्धमादनः" रामा० उत्त०।

**गवराज** पु० गवेन शब्देन राजते राज—अच्। वृषे शब्दच०।

**गवल** पुंस्त्री गुङ् शब्दे भावे अप् गवं शब्दभेदं लाति ला—क। महिषे हेमच०। "गवलाजवलस्तथा" ति०त०। "गवलासितकुल्याञ्छिनिभाविवञ्जन्ति पयः पयोवाहाः" ह० सं० २१अ०। "असौ तरङ्गैर्गवलासितद्युतिः" माघः। स्त्रियां ङीष्।

**गवल्गण** पु० सञ्जयपितरि सूतभेदे। "सञ्जयो मुनि-कल्पस्तु जज्ञे सूतो गवल्गणात्" भा० आ० ६३अ०।

**गवाक्ष** पु० गवामक्षीव अक्षि—अच् समा० नित्यमवङ्, गाव रश्मयः किरणा अक्षाणि वा अश्नुवन्ति व्याप्नुवन्ति एतमनेन वा अश—व्याप्तौ अकर्त्तरि घञ्। वातायने (जानेला) अमरः। "गवाक्षजालैरभिनिष्पतन्त्यः" भट्टिः "उद्भट-लीलाञ्चितया गवाक्षात्" "विलोलनेत्रभ्रमरैर्गवाक्षाः" कुमा०। "कुवलयितगवाक्षां लोचनैरङ्गनानाम्" रघुः। २वैवस्वतपुत्रे वानरभेदे रामा० गवयशब्दे दृश्यम्। गां भूमिमश्नुते व्याप्नोति अच् गौरा० ङीष्। स्त्रि० कौ० सुख० ... १गोडुम्बायां (गोमुक)। अमरः। २जीवन्त्याः ३इन्द्रवारुण्याम् (राखालशशा) ४शाखोटे (सेओड़ा) राजनि०। ५अपराजितायाम् रत्नमा०।

दशद्वादशौ मासौ इमौ आसामस्ति एवं अवगत्यैव अनुष्ठाय प्रारब्धं सत्रसंवत्सरं समापयामेति व्यवस्थिता इति सत्रियस्य व्यवस्थितेन सम्बन्धः। तासां गवां जातानि शृङ्गाणि द्वादशसु मासेषु पूर्णेषु प्रावर्त्तन्त प्रापयन् इत्यभिप्रायः शृङ्गप्राप्तिलक्षणफले सिद्धेऽपि पुनरन्यद्वर्षा यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनःपतनमित्यभिप्रायः तथा चैतरेयकम् "अथ समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्त्तन्तेति" एतास्तूपरा इति ताः पतितशृङ्गाः गावः सर्वेषु भवनशाद्यमदर्शीयमथ प्राप्नुवन् ता गावस्तूपराः शृङ्गहीनाः दृश्यन्ते तस्मात्ताः सर्वान् द्वादश मासो मासान् प्रेरते गमयन्ति ईर गतौ शीतवातातपेषु सर्वदा पुष्टाङ्गा एव यथावयं गच्छन्ति शृङ्गिणो महिष्यादयस्तु तथा भवन्ति तस्मादित्युक्तं कस्मादित्याह चि यस्मात्ता गावः सर्वमन्नाद्यमाप्नुवन् तस्मात्सर्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकम् "ऊर्जं त्वसस्वन्त तस्मादु ताः सर्वानृतून्प्रतितिष्ठन्तीति"। उक्तार्थं जानतः फलमाह" भा०।

"सर्वमन्नाद्यमाप्नोति य एवं वेद" ता०ब्रा०२। स्पष्टोऽर्थः। तदेवं दशमासनिर्वर्त्यं द्वादशमासनिर्वर्त्यं चेति द्विविधं गवामयनं प्रतिपादितं तयोर्ज्योतिष्टोमदर्शपूर्णमासादिवदेतत्काम तत्कुर्य्यादिति कामफलसम्बन्धफलविशेषाश्रवणाद्विश्वजिन्न्यायेनाम्नानात्स्वर्गस्य कल्पनाया अन्याय्यत्वाद्रात्रिसत्रन्यायेनार्थवादिकस्य सम्वृद्धिफलस्य वाक्यशेषे श्रुतत्वाद्रुतावृह्णीय इति सम्वृद्धिकामा एतत्सत्रमासीरन्निति विधिरुन्नेतव्यः। तैत्तिरीयके सम्वृद्धिफलत्वं समाम्नातम् "य एवं विद्वान् संवत्सरमुपयन्त्यृध्नुवन्त्येवेति" भा०तत्त० ४।१। ४कण्डिकामारभ्य।५अ०८क० ८अ०पर्यन्ते तद्विधानमुक्तं तत्र च दीक्षाकालविधानार्थमेकाष्टकारम्भपक्षं निरस्य चैत्रशुक्लैकादश्यां दीक्षामाह तत्रैव ५।८।१० कण्डिकादिषु

"चित्रापूर्णमासे दीक्षेरन्" ता०ब्रा०५।८।१०।"चित्रायुक्तः पौर्णमासः चित्रापूर्णमासः तस्मिन् दीक्षेरन्" तदेतत् स्तौति" भा०।"चक्षुर्वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो मुखतो वै चक्षुर्मुखत एव तत् संवत्सरस्य दीक्षन्ते तस्य न निर्यास्ति" ता०ब्रा०११।"चित्रापूर्णमास इति यत् एतत संवत्सरस्य चक्षुर्वै जायमानस्य हि प्रथमं चक्षुर्जायते तस्मादपि चक्षुरेव प्रथममाविर्भवति अतश्चक्षुरादित्वादस्य चक्षुः उक्तमनेन मुखतो मुखप्रदेश-
एव इत्युः, अतो मुख एव तत् संवत्सरमारभ्य एतद्दीक्षा दीक्षन्ते। यः फाल्गुन उक्तः सोऽयमत्र विद्यत इत्युक्तं भवति तस्य न निर्यास्ति क्वचिदपि दोषो न विद्यते" इत्थं चित्रापौर्णमास्यां दीक्षितव्यमित्युक्तम् अथ तस्मिन्नेव मासे शुक्लैकादश्यां दीक्षितव्यमित्याह" भा०"चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्" ता० ब्रा०१२।"चैत्र्याः पौर्णमास्याः पुरस्ताच्चतुरहे चतुर्थीसङ्ख्या यमाकारचतुरहस्तस्मिन्विद्यमाने गवामयनस्य दीक्षा कार्या एवं दीक्षणस्य गुणमाह" भा०"तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकां न छंवट् कुर्वन्ति" ता० ब्रा०१३। "सर्वेषां सत्राणां द्वादश दीक्षा भवन्ति तत्र एकादशीप्रभृति द्वादशसु गतासु रात्रिषु त्रयोदशी रात्रिरष्टमी स्यात् एकाष्टका च बहुकाष्टमीति अस्यामेकाष्टकेत्युपचारः तस्याः क्रयः सम्पद्यते प्रथमे ह्युपसर्जने राजक्रयवत्सुरिन् दिने प्रातःकाले प्रायणीयाद्या यथाश्रयशाः प्रक्रम्यन्ते तेन प्रक्रमेण एकाष्टकां न छंवट् कुर्वन्ति क्रियानुपयोगेन व्यर्थं न कुर्वन्ति अतएव एकाष्टकाप्रारब्धसत्रतो मुख्याभिन् पक्षेऽन्तर्भवति इत्यर्थः। अन्योऽपि गुणा अस्मिन् पक्ष सन्तीत्याह" भा० "तेषां पूर्वपक्षे सुत्या सम्पद्यते पूर्वपक्षे मासाः सन्तिष्ठमाना यन्ति पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठतः पशव ओषधयोऽनूत्तिष्ठन्ति तान्कल्याणी वागभिवदत्यरात्सुरिमे सत्रिण इति ते राध्नुवन्ति" ता०ब्रा० १४। "तेषामेकादश्यां दीक्षमाणानां सुत्या सोमयागः पूर्वपक्ष सम्पद्यते सत्राणां सर्वेषां द्वादशोपसदः तस्मादेकादशीप्रभृति द्वादशसु गतासु त्रयोदशी शुक्लपक्षपञ्चमी तस्यां प्रथमोऽतिरात्र इति पूर्वपक्षे सुत्या प्रारभ्यत इत्यर्थः। त्रिंशता त्रिंशताऽहोभिर्मासेषु पूर्वपक्षे एव सर्वे मासाः सन्तिष्ठमाना यन्ति वर्त्तन्ते एवं द्वादशसु मासेषु गतेषु पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति तानुत्तिष्ठतः सत्रादुत्थानं कुर्वतो यजमानाननु पश्चात् पशव ओषधयश्चोत्तिष्ठन्ति ऊर्ध्वं रोहन्ति तान् यजमानान् कल्याणी शोभना वाक् यशस्करी वाक् वदति किमिति इमे सत्रिणो यजमानाः अरात्सुः समृद्धा अभवन्निति तदनन्तरं सत्रिणो राध्नुवन्ति समृद्धा भवन्ति"।५अध्यायसमाप्तिपर्यन्ते तस्यैव विधानभेदा उक्ताः।
"गवामयनेनेयुः" कात्या०श्रौ०२४।५।२।"गवामयनं वाऽभिगरम्भुतेः" २४।४।४८। इदस्य एकपदं तेन गावामयनिकमित्यादौ ठक् पूर्वाचोद्दिः। "गावामयनिके प्रथमकाण्डे प्रबन्धं द्वयम्" जैमिनीयन्यायमाला।

**गवामृत** न० गोरमृतमिव क्षीरम् अवङादेशः। गोक्षीरे "अतिथिः सर्वभूतानामग्निः सोमो गवामृतम्" भा० व० ३१२ अ०। गोक्षीरस्य सोमवत् हूयमानत्वात् चन्द्रहेतुकत्वाद्वा सोमत्वेति "अमायां च यदा सोम ओषधीः प्रतिपद्यते। तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत्। तत् क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः। हुतमग्निषु यज्ञेषु पुनराप्यायते शशी" कालमा० सोमोत्पत्तिवाक्यात् सोमस्यैव गोक्षीरहेतुत्वम्। एवञ्च गोक्षीरस्य सोमप्रकृतत्वेन पुनर्यज्ञे मन्त्रैश्च होमात् चन्द्राप्यायनात् तद्धोमस्य सनातनत्वम्। तेन "किं स्वित् धर्म्मः सनातन" इति यक्षप्रश्नस्योत्तरमिदं सङ्गच्छते।

**गवाम्पति** पु० ६त० अलुक् स०। १वृषभे "सिंहेनेव गवाम्पतिम्" भा० व० १६० अ०। २गोपालके "तथा दृष्ट्वा यवीयांसं सहदेवं गवाम्पतिम्" भा० वि० वि० १९ अ०। ३गोस्वामिनि ४वह्नौ ५किरणपतौ सूर्य्यचन्द्रादौ। "प्रयान्तोऽग्निर्महाभाग! परिश्रान्तो गवाम्पतिः" भा० वि० २२० अ०। "अहस्करश्चिरादित्यस्तपनश्च गवाम्पतिः स्मृतः" भा० व० ३अ० सूर्य्यस्तवः। खगोलशब्ददर्शितदिशा सूर्य्यस्य चन्द्रादिग्रहदीप्तिकारित्वात् तथात्वम् चन्द्रस्य तथात्वं गोपतिशब्दे वक्ष्यते। पदद्वयमित्येके। [ जलभेदे गवये त्रिका०।

**गवालूक** पु० गवाय यज्ञाय अलति अल–बा ऊकञ्।

**गवाविक** न० गौश्च अविश्च द्वयोः समाहारः गवाश्वा० नि० नित्यकृतकादेशः अच। गोमेषयोः समाहारे।

**गवाश्व** न० समाहारद्व० अवङ्। गोऽश्वयोः समुच्चये।

**गवाश्वप्रभृति** न० पा० कथनबोध्ये समाहारद्वन्द्वनिमित्ते शब्दसमूहे स च गणः "गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रपुरीषम् यकृन्मेदः, मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोलपम् दासीदासम् कुटीकुटम् भागवतीभागवतम्" "गवाश्वादीनि यथोच्चारितानि साधूनि" सि० कौ०।

**गवाह्निक** न० अह्नि भवं दिनभक्ष्याय पर्य्याप्तम् अहन्+ठञ् आह्निकम् ६त०। गोर्दिनभक्षणपर्य्याप्तग्रासादौ "निरुद्धे गस्तु यो दद्यात् मासमेकं गवाह्निकम्। एकभक्तं तथाश्नीयात् च्यवतां तस्य यत् पापम्। इमा यास्ते महाभागाः पवित्रं परमं स्मृताः। त्रीन् लोकान् धारयन्ति स्म सदेवासुरमानुषान्। तासु चैव महापुण्यं शुश्रूषा च महाफला। अहन्यहनि धर्म्मेण युज्यते वै गवाह्निके" भा० आनु० १२२ अ०। "गवाह्निकं देवपूजा वेदाभ्यासः सरित्प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि" ब्रा० त० यमः। "गवाह्निकं गोर्दिनभक्ष्यम्" ब्रा० त० रघुनन्दनः।

**गविजात** पु० गवि, गोसंज्ञायाम् पुलस्त्यकार्य्यायां वा जातः अलुक् स०। १ऋषिभेदे स च नहुषाय च्यवनमूल्यतया गां कल्पितवान् तत्कथा भा० आनु० ५१ अ० "तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः। नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः" इत्युपक्रमे "नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान्। उवाच हर्षयन् सर्वानमात्यान् पार्थिवञ्च तम्। अनर्घा वै महाराज! द्विजा वर्णेषु चोत्तमाः। गावश्च, पुरुषव्याघ्र! गौर्मूल्यं परिकल्प्यताम्" पुलस्त्यस्य गोसंज्ञायां भार्य्यायां जाते २वैश्रवणे च "पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः। तस्य वैश्रवणो नाम गवि पुत्रोऽभवत् प्रभुः" भा० व० २७ अ०। "गवि गोसंज्ञायां भार्य्यायाम् नील०। गवीत्यस्याभवदित्यनेन सम्बन्धात् तस्यैतस्य पुत्रं चान्वयाच्च तथात्वम् एतन्मूलकं गविपुत्रशब्दकल्पनं प्रामादिकमेव।

**गविनी** स्त्री गवां समूहः खला० इनि। गोसमूहे।

**गविष्** त्रि० "गां स्तुतिवाचमिच्छति इष–क्विप्। सोमादिकाम्ये च्छायति। "निरस्य रसं गविषः" ऋ० १०।७६।७। "अगोरुधाय गविषे" ८।२४।२०।

**गविष** त्रि० गामिच्छति इष–क। स्तोत्रेच्छावति "अश्वेदुरुपं दविध्वद्गविषो सत्वा" ऋ० ४।१२।२। "सत्वा भरिषो गविषः" ४।४०।२। "गविषो गवां प्रेप्सुः" भा०।

**गविष्टि** पु० इष–अन्वेषे क्तिन् ६त०। गवामन्वेष्टरि। "आप्रयस्व गविष्टये" ८।६१।१५। "गविष्टये गवामन्वेष्ट्रे" भा०।

**गविष्ठ** पु० दैत्यभेदे "गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः" भा० आ० ६५ अ०। स च द्वापरे द्रुमसेनतयाऽऽविर्भूतः यथाह भा० आ० ६७ अ० "गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः। द्रुमसेन इति ख्यातो पृथिव्यां समजायत"।

**गविष्ठिर** पु० गवि वाचि स्थिरः षत्वम् अलुक् स०। गोत्रप्रवर्त्तके १ऋषिभेदे। तस्यापत्यम् अण्। गाविष्ठिर तद्गोत्रापत्ये पुं स्त्री० बहुषु तस्य लुक्। "गविष्ठिराश्चामात्रेयगाविष्ठिरपौतिमाष्येति" आश्व० श्रौ० १२।१४।१। "गविष्ठिरो नमसा

सोमसन्नौ" ऋ०५।१।१२। २कवौ सुनौ च "अग्निरतिं भरद्वाजं गविष्ठिरम्" ऋ०१०।१५०।५। "गविष्ठिरं कवयम्" भा०।

**गवीधुका** स्त्री गवेधुका+पृषो०। धान्यभेदे। "यथाकृति वै अर्त्तिं वाय गवीधुकाय" तैत्ति० ५।४।३।२।

**गवी(वे)श्वर** ६त० वा अलुक्। गोस्वामिनि अमरः।

**गवेङ्गित** न०गवामिङ्गितम् अलुक्। शुभाशुभसूचके गवां चेष्टाभेदे तच्च वृ० स० ९२ अ० उक्तं यथा।

'गावो दीनाः पार्थिवस्याशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगान्। मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः पत्युर्भीतास्तस्करानारुवन्त्यः। अकारणे क्रोशति चेदनर्थं भयाय रात्रौ वृषभः शिवाय। भृशं निरुद्धो यदि मक्षिकाभिस्तदाशु वृष्टिं सरमात्मजैर्वा। आगच्छन्त्यो गोष्ठमुद्वेलसम्भारवेण संसेवन्त्यो गोष्ठवृद्ध्यै गवां गाः। आर्द्राङ्ग्यो वा हृष्टरोमाण्यः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपि चैवम्'। [पु०। (गड्गडे) धान्यभेदे अमरः।

**गवेडु** स्त्री गवे दीयते दीङ् रक्षणे कु पृषो० दस्य डः अलुक्

**गवेधु** पु०गवे धीयते धाञ्-धारणे कु अलुक्स०। (गड्गडे) १धान्यभेदे तस्य गवे धारणात्तथात्वं यथोक्तम्

"अथ रुद्राय पशुपतये। रौद्रं गावेधुकं चरुं निर्वपति तदेनं रुद्र एव पशुपतिः पशुभ्यः सुवत्यथ यद् गावेधुको भवति वास्तव्यो वा एष देवो वास्तव्या गवेधुका तस्माद्गावेधुको भवति" शत० ब्रा० ५।३।३।७।

"गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम्। गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी" भावप्र०। तेन शब्दक०गवेधुशब्दस्य पुंस्त्वोक्तिः प्रामादिकी। गवेधुश्च सुश्रुते कुधान्यवर्गे उक्ता यथा

"कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकावरुकतोदपर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः"

**गवेन्द्र** पु० गौरिन्द्र इव नित्यमलुक्। श्रेष्ठे गवि।

**गवेरुक** न० गां गोरोभामीरयति ईर-वा० उकञ् अलुक्। गैरिके त्रिका०। गैरिकेण गोर्भूत्वात्तस्य तथात्वम्।

**गवेश** पु० ६त० अलुक्। १गोस्वामिनि गोरक्षके तेन निर्वृत्तादि० संकाशा० पाठान्तरे ततोऽण्। गावेश तन्निर्वृत्तादौ त्रि०। २रुद्रे च गोपतिशब्दे दृश्यम्। पक्षेऽत्र। गवीश उक्तार्थेषु।

**गवेशकी** स्त्री। गवामीशः गौरक्षः तथाभूत इव कायति कै-क गौरा० ङीष्। (गोरक्षचाकुलिया) लताभेदे शब्दच०। गवेशकेति केचित्तिदं टाबन्तमाहुः।

**गवेष** अन्वेषणे, अद० चुरा० आत्म० सेट्। गवेषयते अजगवेषत। गवेषयाञ्चक्रे। गवेषितः गवेषणं गवेषणा। "तीर्थेष्वितस्ततस्तस्याभिचचार गवेषयन्" भा०व०२६१अ०। आर्षः परस्मैपदम्। तस्य ण्यादित्वं तङ्भवत्वं च क्वचित् प्रयोगे दृश्यते "गवेषमाणं महिषीकुलं जलम्" रता०।

**गवेष** त्रि० गवेष+अच्। १अन्वेष्टरि भावे अच्। २अन्वेषणे पु०। तेन निर्वृत्तादि संकाशा० अण्। गावेष तन्निर्वृत्तादौ त्रि०।

**गवेषणा** स्त्री गवेष-भावे युच्। १अन्वेषणे अमरः। गोरुदकस्य वा एषणा। गोरुदकस्य वा २अन्वेषणे। इष-ल्यु ६त०। ३गोरन्वेषके त्रि०। गवेष-ल्यु। ४अन्वेष्टरि त्रि० "अग्निन्द्रो गवेषणो मन्युश्चिन्द्रो गवेषणः" ऋ० १। १२१।२। "असीनः सत्वा गवेषणः" ऋ० ७।२०।५। "गवेषणः गवामन्वेष्टा उदकान्वेष्टा। यजमानफलस्य मार्गयिता वा" भा०। भाष्ये गवेष मार्गणे पूर्ववत् ल्यु इत्येव पाठः मुद्रितपुस्तके ल्युट् इति पाठः प्रामादिकस्तस्याकर्त्तर्येव विधानात् क्लीवत्वाच्च।

**गवेषित** त्रि० गवेष-क्त। १अन्वेषिते मार्गिते अमरः।

**गवेष्ठिन्** न० दैत्यभेदे "शङ्कुकर्णो विरोधश्च गवेष्ठी दुन्दुभिस्तथा" हरिवं० २४अ०। [क्वोः समाहारे।

**गवैडक** न०गौश्च एडकश्च गवाश्वा० नि० क्लीवता च। गोमे-

**गवोद्र** पु०प्रशस्तः प्रशस्ता वा गौः "प्रशंसावचनैश्च" पा०जातेः कर्म०परनि०अलुक्। १प्रशस्ते गवि।२प्रशस्तायां गोजातिस्त्रियाञ्च अस्य नियतलिङ्गत्वात् स्त्रियामपि तथात्वम्।

**गव्य** (आत्मनो गामिच्छति क्यच् "वान्तो यि प्रत्यये" पा० अव्) आत्मसम्बन्धित्वेन गोरिच्छायाम् अक०भ्वा० पर० सेट्। गव्यति अगव्यीत्-अगवीत् गव्या (वा)ञ्चकार" "गौरसि वीर! गव्यते" ऋ० ६।४५।८।२६।

**गव्य** त्रि०गोर्विकारः गवि भवं,गोर्हितं,गोरिदं, वा यथा यत् यादौ यत्।१गोसम्बन्धिनि, 'गव्यसक्ते' लौ० चाधिकार० भा०। २शरत्प्रमर्घ्यं मधुमच्च गव्यम्" कुमा० "संवत्सरं तु गव्येन पयसा पायसेन वा।"धेनुं गव्यस्य मेधूमं प्रयत्नेन विधर्जयेत्"मनुः।२गोर्हितादौ च। गवि दत्ते मेते वा साधु यत्। ३ज्यायां ४रागद्रव्ये च न० मेदि०। ज्यायाः शरक्षेपणसाधनत्वात् रागद्रव्यस्य च नेत्ररागजनकत्वात्तथात्वम्। गोर्विकारे ५गोरोचनाद्रव्ये स्त्री राजनि०। तस्य गोर्विकारत्वात्तथात्वम् तत्र ज्यायाम्

"अरण्योपान्तिकनीयमानगव्यम्" माघः। समूहे पाशा॰ यत्। ६गोसमूहे, ७गव्यूतौ क्रोशयुगे च स्त्री हेमच॰।

गव्ययी स्त्री गोरिदम् वा॰ मयट् गुडागमश्च यादौ वष् ङीप्। गोरचर्मे त्वगादौ। "गव्ययी त्वगभवत्" ऋ॰ ८।७०।७। "गव्ययी गोमयी त्वक्" भा॰।

गव्ययु त्रि॰ गामिच्छति गो+क्यच्—उन् यादौ वेदे दीर्घयलोपाभावौ। गोरिच्छावति "या दिशस्तू ...गव्ययुः" ऋ॰८।२६।६। "गव्ययुर्गामिच्छन्" भा॰।

गव्यु त्रि॰गामिच्छति क्यच् उन् यादौ अत्र दीर्घयलोपाभावौ। गामिच्छति।"अश्वयुर्गव्यू रथयुर्वसूयुः" ऋ॰ १।५१।१४।

गव्यूत न॰ गव्यूति+पृषो॰ अदन्तादेशः। १क्रोशे २क्रोशयुगे च हेमच॰।

गव्यूति स्त्री गोर्यूतिः "गोर्यूतौ" पा॰ अव्। द्विसहस्रधनुर्मिते १क्रोशे हेमच॰। २क्रोशद्वये अमरः। "गव्या गव्यूतगव्यूती इति दीर्घपाठदर्शनात् शब्दकल्प॰ दीर्घान्तगव्यूतिशब्दकल्पनं प्रामादिकम् तत्र गव्यूतगव्यूती इत्यस्य द्विवचनान्ततया दीर्घान्तशब्दत्वाभावात् किन्तु यूतिरित्यस्य क्तिन्नन्तया निपातनात् "कृदिकारादक्तिनः" पा॰अक्तिन्नन्तस्यैव ङीषो विधानेन ततो ङीषोऽप्रसक्तिः।

गह गहने अद॰ चुरा॰ उभ॰ सक॰ सेट्। गहयति ते अजगहत् त। गहनं दुर्बोधः दुष्प्रवेशो दुर्गमश्च।

गहन न॰ गाह—ल्युट्—"ग्रहणगहनयोरिति" पा॰ निर्देशात्, पृषो॰वा ह्रस्वः गह—गहने ल्युट् वा।१वने अमरः। तस्य दुर्गमत्वात् तथात्वम्।२निविडे त्रि॰"अगाम गहनं वनम्" देवीमा॰ ३गह्वरे ४दुःखे च न॰मेदि॰। ५दुर्गमे ६दुर्बोधे ७दुष्प्रवेशे त्रि॰। ८परमेश्वरे पु॰। "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस॰। "स्वरूपं सामर्थ्यं चेष्टितं वा तस्य ज्ञातुं न शक्यते इति गहनः" भा॰ "गभीरो गहनो गुप्तः" विष्णुस॰ "दुष्प्रवेशत्वात् गहनः अवस्थात्रयसाक्षित्वाद्वा गहनः" भा॰। "गहना कर्मणो गतिः" गीता। ९उदके निघ॰ गाहनात्तस्य तथात्वम्। १०अलङ्कारे स्त्री शब्दार्थचि॰।

गहादि न॰ चतुरर्थ्यां छप्रत्ययनिमित्ते पा॰ ग॰ उक्ते शब्दगणे स च गणः

"गह अन्तस्थ सम विषम (मध्य मध्यं दिनं चरणे) उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ खाडायन काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् दैवशर्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशंसि शौङ्गि आग्निशर्मि भौजि वाराटकि वाल्मीकि क्षैमवृद्धि आश्वत्थि औद्गाहमानि ऐकबिन्दवि दन्ताग्र हंस तन्त्वग्र उत्तर अनन्तर (मुखपार्श्वतसोर्लोपः) (जनपरयोः कुक् च) (सस्य च) (देवस्य) (वेण्वादिभ्यश्छण्। गहादिराकृतिगणः"। "गहादिभ्यश्छः" पा॰। गहीयः।

गह्व न॰ गह—कर्मणि भावे वा वा॰व।१गाम्भीर्ये २दुष्प्रवेशे च ततः अश्मादि॰ चतुरर्थ्यां र। गह्वर तद्युक्तादौ त्रि॰।

गह्वर न॰ गुह—वरच् पृषो॰ नि॰। १दम्भे अमरः। २वने, ३निकुञ्जे पु॰ मेदि॰। ४रोदने, हेमच॰। ५विषमस्थाने, ६अनेकार्थसङ्कुले च न॰ शब्दार्थचि॰। "अथान्धकारं गिरिगह्वरस्थम्" रघुः। ७गुहायां न॰स्त्री स्त्रीत्वपक्षे ङीप्। "गौरीगुरोर्गह्वरमाविवेश" रघु। "गुहाहितं गह्वरेष्ठं पुराणम्" कठो॰ अत्र ठा॰॰ मतम्। "काट्याय च गह्वरेष्ठाय च" यजु॰१६।४।

गा गतौ सक॰ भ्वा॰ आ॰ अनिट्। गाते अगास्त जगे।

गा स्तुतौ सक॰जन्मनि अक॰जुहो॰वैदिकोऽयं धातुः सार्वधातुके अभ्यासस्येत्वञ्च। जिगाति अगासीत्। जगौ। "सोमो जिगाति गातुवित्" ऋ॰ ३।६२।१३। "जरितः सचा यज्ञो जिगाति चेतनः" ३।१२।२। "खेषु क्षेत्रेषु प्रथमो जिगाति" १०।८।२। इङादेशस्य इणादेशस्य च गाते रूपं तत्तद्धातौ उक्तम्।

गाङ्ग पु॰ गङ्गाया अपत्यम् शिवा॰ अण्। गङ्गापुत्रे १भीष्मे २कार्त्तिकेये च गङ्गापुत्रशब्दे दृश्यम्। गङ्गाया इदम् अण्।३गङ्गासम्बन्धिनि जलादौ "गाङ्गमम्बु सितमम्बु यामुनम्" काव्यप्र॰ "गाङ्गं जलं निर्मलम्" गङ्गास्तोत्रम्।"गाङ्गं वर्षेण कीर्त्यते"प्रा॰त॰। ४मेघनिःसृते दृष्टतोय जलभेदे तल्लक्षणादि अम्बुशब्दे ३२५पृ॰ उक्तम्। ५स्वर्णे "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" भा॰ व॰ उक्तेस्तस्य तज्जातत्वात् तथात्वम्। आग्नेरेतःशब्दे विस्तृतिः। ६[illegible] भूसुरे अमरः ७कसेरुणि शब्दार्थचि॰। ८नदीसम्बन्धिनि तटादौ त्रि॰।

गाङ्गट पु॰ गाङ्गं नदीतटमटति अट—अच् शक॰। (चिङ्गिड़ि) १मत्स्यभेदे शब्दरत्ना॰। स्वार्थे क। तत्रैवार्थे शब्दर॰। [illegible]। (चिङ्गिड़ि) मत्स्यभेदे शब्दर॰।

**गाङ्गटेय** पु॰ गाङ्गे नदीतटे अटति अट–अच् पृषो॰

**गाङ्गायनि** पु॰ गङ्गाया अपत्यम् तिका॰ फिञ्। १भीष्मे २कार्त्तिकेये च। प्रवरप्रवर्त्तके ३ऋषिभेदे च प्रव-राध्यायः।

**गाङ्गेय** पु॰ गङ्गा+अपत्ये ढक्। १भीष्मे, २कार्त्तिकेये च। "यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम्। तदुल्वं पर्वते न्यस्तं हिरण्यं समपद्यत" इत्युक्तेः ३स्वर्णे, ४तद्वाच-नामके मुस्तके, ५कशेरुणि च शब्दार्थचि॰। ६दर्भ-भवतृणे पु॰ त्रिका॰। ७भद्रमुस्तके राजनि॰।

**गाङ्गेरुका** स्त्री गाङ्गं जलमीरयति क्षिपति ईर–उ स्वार्थे क गौरा॰ ङीष्। नागबलायाम् अमर॰ गोरक्ष-तण्डुलायाम् शब्दार्थचि॰

**गाङ्गेष्ठी** स्त्री गाङ्गे नदीतटे तिष्ठति स्था–क अम्ब॰ ष-त्वम् अलुक् स॰ गौरा॰ ङीष्। (गठा) काकशर्करा-लतायाम् हारा॰।

**गाङ्ग्य** त्रि॰ गाङ्गे गङ्गाकूले भवः यत्। गाङ्गसम्ब-न्धिनि। "उदः कच्छो न गाङ्ग्यः" ऋ॰६।४५।३१। "गा-ङ्ग्यः गाङ्गे कूले भवः" भा॰।

**गाजर** न॰ गज–मदे घञ् "न क्वादेः" पा॰ न कुत्वम् गाजं मदं राति रा–क। १मूलके २गर्ज्जरे (गाजोर)। मूलभेदे गर्ज्जरमित्यत्र भावप्र॰ पाठान्तरम् गर्जं शब्दे गुणाद्युक्तम्।

**गाडव** पु॰ गडुराकारेणास्त्यस्य प्रज्ञा॰ अण् गडोर्भावो वा अण्। १गवेडुधान्ये त्रिका॰ २गडुभावे न॰।

**गाडिक** त्रि॰ गडिक+चतुरर्थ्यां सुतङ्ग॰ इञ्। गडिक-निर्वृत्तादौ।

**गाडुल्य** न॰ गडुलस्य भावः ब्राह्म॰ष्यञ्। गडुलभावे।

**गाढ** न॰ गाह–क्त। १अतिशये दृढे। २तद्युते, ३अवगाढे, ४वीविते च त्रि॰। "तमसि गाढां तमसां प्रापेति" रघुः। "गाढकान्तदशनक्षतव्यथाम्" माघः। "सद्यःकण्ठ-च्युतभुजलताग्रन्थिगाढोपगूढे" मेघ॰।

**गाढमुष्टि** पु॰ गाढो मुष्टिरस्य। खड्गे मेदि॰।

**गाढ़ावटी** स्त्री चतुरङ्गक्रीडाङ्गे क्रीड़ाभेदे "नौकैका घटिका-यत्र स्थाने खेलने यदि। गाढ़ावटीति विख्याता पदं यस्य न दुष्यति" ति॰त॰। [कारिभवादौ।

**गाणकार्य** त्रि॰ गाणकारौ भवः कुर्वादि॰ ण्य। गण-

**गाणगारि** पु॰ गणगारस्यापत्यम् इञ्। ऋषिभेदे। "सर्वे समानगोत्राः स्युः गाणगारिः" पिङ्गाल॰धृतवाक्यम्। "पुनर्होतस्तु गाणगारिः" आश्व॰श्रौ॰ १।१७।१८। स्मृ

**गाणपत** त्रि॰ गणपतेरिदम् अश्वपत्या॰ अण् मतोऽश्वादः। १गणपतिसम्बन्धिनि। "सारस्वतो गाणपतः सौरश्च वैष्णवः क्रमात्" ति॰ त॰।

**गाणपत्य** त्रि॰ गणपतेर्भावः पत्यन्तात् यक् गणपतिभावे "महादेवप्रसादेन गाणपत्यञ्च विन्दति" भा॰ अ॰ ८२ अ॰। "उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात्" तत्राध्याये।

**गाणिक** त्रि॰ गणं वेत्त्यधीते वा उक्था॰ठक्। १गणसूत्रादि पाठके २तद्वेत्तरि च। गणे गणपाठे साधुः कथा॰ठक्। ३गणपाठकुशले त्रि॰। [यञ्। वेश्यासमूहे हेम॰।

**गाणिक्य** न॰ गणिकानां समूहः गणिकाया यञ् वार्त्ति॰

**गाणिन** पुंस्त्री गणिनोऽपत्यादि "इन्यऽनपत्ये" पा॰ अपत्यार्थकेऽनो निषेधेऽपि गाथिविदथीत्यादिना इनो-लोपः। १गणिनोऽपत्ये २तच्छात्रे च स्त्रियां ङीप्।

**गाण्डव्य** पु॰ गण्डोरपत्यादि गर्गा॰ यञ्। गण्डोरपत्ये। यूनि यञन्तत्वात् फक्। गाण्डव्यायन यूनि तदपत्ये लोहिता॰ स्त्रियां युवत्यामयुवत्याञ्च ष्फ षित्वात् ङीष्। गाण्डव्यायनी तदपत्यस्त्रीमात्रे।

**गाण्डि(ण्डी)** स्त्री गडि–इन् "गाण्डग्रजगात् संज्ञायाम्" पा॰ दीर्घनिर्द्देशात् नि॰ वृद्धिः। ग्रन्थौ, कृदिकारान्त-त्वात् वा ङीप्। तत्रार्थे। "एष गाण्डीमयःपाशः" भा॰ उ॰ ९७अ॰।

**गाण्डि(ण्डी)व** पुंन॰ गाण्डिरस्त्यस्य संज्ञायाम् व। १अर्जु-नस्य धनुषि। तच्च धनुर्ब्रह्मणा निर्माय सोमाय दत्तं सोमेन च वरुणाय, अग्निप्रार्थितेन च वरुणेनार्जुनाय दत्तम् तत्कथा भा॰आ॰२२५अ॰।

"तमब्रवीद्धूमकेतुः प्रतिपूज्य जलेश्वरम्। चतुर्थं लोक-पालानां देवदेवं सनातनम्। सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते। तत् प्रयच्छोभयं शीघ्रं रथञ्च कपि-लक्षणम्। कार्य्यं हि सुमहत् पार्थो गाण्डीवेन करिष्यति। चक्रेण वासुदेवश्च तन्ममाद्य प्रदीयताम्। ददानीत्येव व-रुणः पावकं प्रत्यभाषत। तदद्भुतं महावीर्य्यं यशःकीर्त्ति-विवर्द्धनम्। सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च। सर्वायुधमहामात्रं परसैन्यप्रधर्षणम्। एकं शतसहस्रेण संमितं राष्ट्रवर्द्धनम्। चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्ण-मव्रणम्। देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः। प्रादा-च्चैव धनूरत्नमक्षय्यौ च महेषुधी"। "एतद्धि धनु

यज्ञगाथादयः । "इतिहासश्च पुराणञ्च गाथाश्च नाराशंसीश्च" अथ० १५।६।४ । ६वाक्यमाले निघ०।

गाथक त्रि० गै–थकन् । गायके "कथकैरतिगायकैः" भट्टिः।

गाथपति पु० ६त० ङ्यापोरिति ह्रस्व० । वाक्पतौ रुद्रे । "गाथपतिं मेधपतिं रुद्रम्" ऋ० १।४३।४ ।

गाथिन् त्रि० गाथा स्तोत्रादि अस्त्यस्य इनि । गाथायुक्ते गीयमानसामयुक्ते "इन्द्रमिद्गाथिनः" १।७।१ । तस्यापत्यमण् गाथिविदथीत्यादिना अपत्येऽपि न टिलोपः गाथिन तदपत्ये तच्छात्रे च । स्त्रियां ङीप् ।

गादि पुंस्त्री गदस्यापत्यं बाह्वा० इञ् । गदरूपयादवस्यापत्ये । [ निर्वृत्ते ।

गादित्य त्रि० गदितेन निर्वृत्तादि सङ्काशा० ण्य । गदितेन

गाध प्रतिष्ठायां अक०ग्रन्थने लिप्सायाञ्च सक० भ्वा० आत्म० सेट् । गाधते अगाधिष्ट । जगाधे । ऋदित् चङि अजगाधत्-त । गाधः । "अगाधत ततो व्योम" "गाधितासे नभो भूयः" भट्टिः ।

गाध पु० गाध–भावादौ घञ् । १स्थाने, २लिप्सायां, च कर्मणि घञ् । ३तलस्पर्शे हेमच०।४तद्वति त्रि०। "सरितः कुर्वती गाधाः" रघुः । "अगाधमिह गाधस्तल प्रतिष्ठाम्" ऋ०५।४७।७ । "अनासादितगाधं च पातालतलमव्ययम्" भा०आ०२१अ०।

गाधि पु० गाध–इन् । चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि नृपभेदे । "कस्य चित्त्वथ कालस्य कुशनाभस्य धीमतः । जज्ञे परमधर्म्मिष्ठो गाधिरित्येव नामतः स पिता मम काकुत्स्थ ! गाधिः परमधार्मिकः" रामा० बा०१।३४अ०। रामं प्रति विश्वामित्रोक्तौ । "ऐलपुत्रानहं वक्ष्ये" इत्युपक्रमे "कुशपुत्रा बभूवुर्हि चत्वारो देववर्चसः"। कुशिकः कुशनाभश्च कुशाम्बो मूर्त्तिमांस्तथा" "कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं विभुः । लभेयमिति "तं शक्रस्त्रासादभ्येत्य जज्ञिवान्" "पूर्णे वर्षसहस्रे वै तन्तु शक्रो ह्यपश्यत । अत्युग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः । समर्थः पुत्रजनने स्वमेवांशमवासयत् । पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः । स गाधिरभवद्राजा मघवान् कौशिकः स्वयम् । पौरकुत्स्यऽभवद्भार्य्या गाधिस्तस्यामजायत" हरिवं० २७अ० ।

गाधिज पु०गाधेर्जायते जन–ड। विश्वामित्रे ब्रह्मर्षौ तत्कथा हरिवं० २७ अ० । "विश्वामित्रस्तु दायादं गाधिः कुशिकनन्दनः । जनयामास पुत्रन्तु तपोविद्याशमात्मकम् । प्राप्य ब्रह्मर्षिसमतां योऽयं सप्तर्षितां गतः । ऋचीकशब्दे १४१४पृ० तदुत्पत्तिकथा । गाधिसुतादयोऽप्यत्र "ततोऽभ्यगात् गाधिसुतः क्षितीन्द्रम्" भट्टिः । "प्रजापतिसुतादासीत् कुशो नाम महीपतिः । कुशस्य पुत्रो बलवान् कुशनाभः सुधार्म्मिकः । कुशनाभसुतोह्यासीत् गाधिरित्येव विश्रुतः" "गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः"रामा०बा०११अ०।२विश्वरथादौ च ।

गाधिन् पु०गाधिनामके नृपे।"सौम्यमाख्याति मां प्राप्तं कौशिकं गाधिनः सुतम्"रामा०बा०१८अ० ।

गाधिपुर न० ६त० । कान्यकुब्जे महोदयाख्ये पुरे हेमच० । कान्यकुब्जशब्दे १८८६ पृ० कुशनाभशब्दे च दृश्यम्। गाधिनगरादयोऽप्यत्र ।

गाधेय पु० गाधेरपत्यम् द्व्यचः इत्यनुवृत्तौ "इतोऽनिञः" पा० ढक् । गाधिपुत्रे विश्वामित्रादौ । "विश्वामित्रस्तु गाधेयो राजा विश्वरथस्तथा । विश्वकृत् विश्वजिच्चैव तथा सत्यवती नृप !" हरिवं० ३२ अ० । "गाधेयदिष्टं विरसं रटन्तम्" भट्टिः । तस्य कन्यायां २सत्यवत्यामृचीकपत्न्याम् स्त्री ङीप् । "उवाच भार्य्या गाधेयी भर्त्तारं भार्गवर्षभम्" भा० आनु० ४अ०।

गान न०गै–भावे–ल्युट् । १गीतौ । गानं हि द्विविधं लौकिकं वैदिकञ्च । तत्र लौकिकगानस्य लक्षणादि गीतशब्दे वक्ष्यते वैदिकस्य लक्षणादि जै०९।२।२९ सूत्रभाष्यादौ उक्तं यथा

"अर्थैकत्वात् विकल्पः स्यात्" २९सू० । "सामवेदे सहस्रं गीत्युपायाः । आह, के इमे गीत्युपायाः नाम ?" । उच्यते,—गीतिर्नाम क्रिया, सा आभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका, सा सामशब्दाभिलप्या, सा च नियतपरिमाणायामृचि गीयते, तत्सम्पादनार्थः ऋक्षु अक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे समधिगताः समाम्नायन्ते । तेषु संशयः,—किं समुच्चीयन्ते उत विकल्प्यन्ते ?—इति । किं तावन्नः प्रतिभाति, सर्वेषां समाम्नानात् सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य समुच्चीयेरन्निति एवं प्राप्ते ब्रूमः, "अर्थैकत्वाद्विकल्पः स्यात्" इति । एकार्था हि गीत्युपायाः,—गीतिः कथं निर्वर्त्त्येतेति प्रयुज्यन्ते, तत्रान्यतरेण गीतौ निर्वृत्तायां नेतरे प्रयोगमर्हन्ति । तस्माद्विकल्प इति" । तत्र स्वराः उत्क्रुष्टादयः षडन्ताः सप्त सामविधानब्रा०१।१। उक्ताः

यथा "तद्योऽसौ क्रुष्टतमइव साम्नः स्वरस्तं देवा उपजीवन्ति गेऽपरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसो, यस्तृतीयस्तं पशवो, यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते, यः पञ्चमस्तमसुररक्षांसि, योऽन्त्यस्तमोषधयोऽन्यच्च-जगद्यशान्यज्जगत्, तस्मादाहुः सामैवार्क्यमिति साम ह्येषामुपजीवनं प्रायच्छत् । उपजीवनीयो भवति यएवं वेद तस्य ह वा एतस्य साम्नः स्वमेवास्तीति स्वरोत्र्याणि स्तोभा स्तोभानि । योह वै साम्नः स्वं यः सुवर्णं वेद स्वं च ह वै साम्नः सुवर्णं च भवति स्वरो वाव साम्नः स्वं तदेव सुवर्णम्" ।

छान्दोग्ये च "का साम्नो गतिरिति स्वर इति होवाच" "स्वर इति स्वरात्मकत्वात् साम्नः, यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति मृदाश्रय इव घटादिः" भा० । सामसंहिताभाष्येऽपि तथैवोक्तं यथा

"साम-शब्द-वाच्यस्य गानस्य स्वरूपमृगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरैः,अक्षरविकारादिभिश्च निष्पाद्यते । क्रुष्टः प्रथमः द्वितीयस्तृतीयश्चतुर्थः पञ्चमः षष्ठ इत्येते सप्त स्वराः ते चावान्तरभेदैर्बहुधा भिन्नाः । स्वरस्य साम-निष्पादकत्वं छान्दोग्योपनिषदः प्रथमे प्रपाठके प्रश्नोत्तराभ्यामामनन्ति" ।

तत्राक्षरविकारविषये पूर्वोत्तरपक्षौ जै० ८।२।१२। सूत्रादिभाष्ययोर्दर्शितौ यथा

"सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्" सू०१२। "इदमाम्नायते,—'रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति कवतीषु रथन्तरं गायति, विराट्सु वामदेव्यम्" इति । तत्र सन्देहः,—किमुत्तरावर्णवशेन गातव्यं, किं योनिवर्णवशेन ? । कथमुत्तरावर्णवशेन गीतं भवति ? कथं वा योनिवर्णवशेन ? इति । उच्यते, किञ्चिदुदाहरणं गृहीत्वा व्याख्यास्यामः,—यदा तावत् इडन्ताइव्यमाई भवति इति योनौ यस्मिन् भागे आईभावः क्रियते, ततो योनिवर्णवशेन गीतं भवति, अथ भागान्तरे इडन्ताइव्यं इडा आईभावः क्रियते, तत उत्तरावर्णवशेन गीतं भवति । किं पुनरत्र कर्त्तव्यम् ?—योनिवर्णवशेनेति । कथम् ? । यावति भागे एकारस्य योनौ ईभावः कृतस्तं विचारयामः,—किं तत्र कृतमिति ?—एकारो नोच्चारितः, ईकाराकारौ आगमिताविति, एवञ्चेदुत्तरास्वपि तावत्येव भागे यो वर्णः, स न उच्चारयितव्यः, ईकाराकारौ आगमयितव्यौ इति । एवं, यद्योन्यां तदुत्तरयोर्गीतं भवति । तस्माद्योनिवर्णवशेन गातव्यमिति । अपि चैवं गीतिर्न नङ्क्ष्यति, इतरथा क्वचित् प्रणश्येत् यत्र प्रकृतौ गीतिः अन्येषु अक्षरेषु गीयते, तत्र व्यक्तं प्रणश्यति यद्युत्तराक्षरवशेन क्रियते, तस्माद्योन्यक्षरवशेन कर्त्तव्यमिति । अपिच क्वचित् क्रम उपरुध्यते यत्रक्रमे आईभावभागवर्णः, आर्षेच कश्चिदुपरुध्यते, यत्र प्रकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकाले गानमविरुद्धं कर्त्तव्यं, तस्मात् योन्यक्षरवशेन कर्त्तव्यमिति "सामप्रदेशे विकारः" आईभावादिः, "तदपेक्षः" योन्यपेक्षः, एतत् शास्त्रेण कृतः,—'यद्योन्यां तदुत्तरयोः' इति, यावति सामभागे योनौ आईभावः कृतः, तावत्येवोत्तरासु कर्त्तव्यः" भा० । "वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्"१३सू० । "उत्तरावर्णवशेन कर्त्तव्यं बादरिर्मन्यते स्म, न योनिभागवशेन । कुतः ? । योऽसौ प्रकृतौ आईभावः कृतः, नासौ आगमः, न च तत्र एकारलोपः, किन्तर्हि ? एकारो नाम अवर्णम् ईवर्णञ्च आवर्णं संहतम्, ईवर्णं विहतम्, उभे अपि च दीर्घे, ताभ्यामणाणुभ्यां सन्ध्यक्षरं वायु जन्यते । तत्र प्रकृतौ आकारेकारौ विश्लेषितौ, नापूर्वावागमितौ, गुणस्तु तयोः कश्चिदपूर्वः कृतः । सर्वत्रात्र प्रकृतं गातव्यं नद्यत्, तावति भागेऽन्यो वर्णो भवति, न सन्ध्यक्षरं, तत् संश्लेषाभावे विश्लेषो न शक्यः कर्त्तुम्, यस्मिन् भागे यत् सन्ध्यक्षरं भवति, तत् तद्यथाविश्लेषः क्रियते एवं, यद्योन्यास्तदुत्तरयोः कृतं भवति, योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः, इहापि संश्लिष्टयोर्विश्लेषः, इतरथा अतिरिक्तं कल्पितं स्यात् अथ यदुक्तं,—गीतिः प्रनङ्क्ष्यतीति, न प्रणङ्क्ष्यतीति, विनाशं कृत्वा अनक्षरं गायिष्यते । संश्लेषभावाभावयोर्विश्लेषः, आर्षक्रमौ नोपरोत्स्येते" भा० ।

स्तोभविषये च तथैव तौ पक्षौ तत्रैव८।२।२४।२८सूत्रादौ दर्शितौ यथा

"स्तोभस्यैवे द्रव्यान्तरे निवृत्तिरुक्तवत्"२४सू० । "कवतीषु रथन्तरं गायति, रथन्तरमुत्तरयोर्गायति यद्योन्यां तदुत्तरयोर्गायति' इति । तत्रोत्तरावर्णवशेन गातव्यमित्येतत् समधिगतम् । अथेदानीम् इह सन्दिह्यते,—किं स्तोभाः प्रदिश्यन्ते न वा ? इति । किं प्राप्तम् ?—न प्रदिश्यन्ते इति । कुतः । गीतिर्हि

वैश्यराजन्ययोर्गृहपतित्वेऽपि नाधिकारः” कर्कः। “अपेतप्रजननाः स्थविरास्तदाम्नातेषां यो व्यर्णंसतमः स्यादृष्ट्यवत्तमो वाऽनूचानतमो वा तस्य मार्हपते दीक्षेरन्” कात्या॰ श्रौ॰ २२।४।७। “स गृहपतिः कर्त्तव्यः” कर्कः। चतुर्थमाह्ये स्तोमे इति शेष.

गार्हपत्य पु॰ गृहपतिना नित्यं संयुक्तः संज्ञायां ञ्य। यजमानरूपगृहपतिसंयुक्तेऽग्निभेदे स च कृतविवाहाग्निपरिग्रहस्याग्निहोत्रादिसाधनाधानाङ्गतया प्राक् आधेयः यथाह कात्या॰ श्रौ॰ २।२।१।

“उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैश्यस्य गृहाद्वा भ्रियमाणं वा प्रज्वाल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्” १सू॰ “अस्तापराह्णशब्देन अह्नश्चतुर्थभागो गृह्यते। विहरणकाले गार्हपत्यं प्राङ्मुखः प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत्। चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहात्, गार्हपत्याद्वा चाप्यदेत् प्रज्वालयेत्। काले काले यदि निर्मन्थ्यः तदा मन्थेत् एवं प्रकाराणामुत्पत्तिवैयेत्याद्व्यवस्था। तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत्। पात्रान्तरेण पृथक् कुर्यादित्यर्थः” नारा॰ “गार्हपत्ये संस्काराः” कात्या॰ श्रौ॰१।८।२४ ‘अधिश्रयणपर्य्यग्निकरणपात्रप्रतपनादयः संस्काराः यथाभावे गार्हपत्याग्नौ भवन्ति तद्यथा शूर्पाग्निहोत्रहवण्योः प्रतपनम् स्रुक्स्रुवादीनाम् वरुणप्रघासे करम्भपात्रयवानां दक्षिणाग्नौ श्रपणेऽपि पर्य्यग्निकरणं गार्हपत्यादेव, विहयते च धानानाम् पर्णकषायोदकस्य तु दक्षिणाग्नावेव पाकः दृष्टकार्यार्थत्वात् तत्पाकस्य दक्षिणाग्निना विधानात्” कर्कः

“श्रपणं वाहवनीये” १५ सू॰ हविषां श्रपणमाहवनीये वा स्यात् गार्हपत्ये वा उभयथा श्रुतत्वात् “तदाहुराहवनीये हवींषि श्रपयेयुरिति अतो गार्हपत्य एव श्रपयन्तीति च”। वाविकल्पोऽयम् नेच्छाविकल्पः तच्छ्रपिच इति तच्छ्रपितस्य नियतत्वेनानुवादात्। तदुक्तम्। “रूपं कालेऽनुनिर्वाप्यः श्रपणं देवतास्तथा। आदौ ये विहिताः पश्चात्त इमे सर्व्वदा कृताः” इति रूपं कर्मस्वरूपम् दार्शपौर्णमासादिकम् कालः उदितानुदितादिः अनुनिर्वाप्यो वैश्वधादित्यो, श्रपणं हविःश्रपणम् गार्हपत्ये वाहवनीये वेति। देवता ऐन्द्रं भवति माहेन्द्रं वेति एतेषां विकल्पानां मध्ये यः प्रथमं स्वीकृतः स एव यावज्जीवं कर्त्तव्यः न पश्चादन्यत्। एवमेवैते पश्वादिविकल्पा अन्ये सर्वेऽपीच्छाविकल्पाः” कर्कः।

तस्य प्रतिपत्तिविधानञ्च शत॰ब्रा॰२।६।१।२८।यथा “तस्मादेनानुत्सवने सवने एव प्रतिसमिन्धते” “इमान् गार्हपत्यादीन्”। त्रेताग्नेश्च च षोडशसंस्कारान्तर्गतत्वं आश्वलायने यथा “गर्भाधानं पुंसवनं सीमन्तोन्नयनं च। नामक्रिया निष्क्रमो ऽन्नप्राशनं वपनक्रिया। कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः। केशान्तस्नानमुद्वाहो विवाहाग्निपरिग्रहः। त्रेताग्निसंग्रहश्चैव संस्काराः षोडश स्मृताः” “गार्हपत्यागारे वा देवान् वा एष उपावर्त्तते” शत॰ब्रा॰१।१।१।१। तत्करणप्रकारः कात्या॰श्रौ॰४।७।८। सूत्रादौ उक्तो यथा “अग्न्यगारे कुर्वन्ति” “पूर्वं गार्हपत्यगृहं पश्चादाहवनीयगृहम् कुर्वन्ति” कर्कः। “उदग्वंशं वाऽपरम्” ६सू॰ “अपरं गार्हपत्यागारं उदग्वंशं वा प्राग्वंशम् आहवनीयागारं तु प्राग्वंशमेव” कर्कः। “दक्षिणपूर्वे द्वारे” १०सू॰ “उत्पत्तिक्रमेण गार्हपत्यागारस्य दक्षिणद्वारमाहवनीयागारस्य प्राच्याम्। अर्थात् गार्हपत्यागारे पूर्वद्वारम् आहवनीयागारे अपरद्वारम्” कर्कः “गार्हपत्यागारे निर्मथ्याभ्यादधाति” तत्रैव १५ सूत्रम्।

गार्हमेध पु॰ गृहमेधं अण् कर्म॰। गृहस्थाश्रमयज्ञे गृहस्थकर्त्तव्ये पञ्चयज्ञरूपे कर्मणि। “तथैव राजसुर गार्हमेधवितानविद्योरुविजृम्भितेषु” भाग॰५।११।२।

गार्हस्थ्य न॰ गृहस्थस्य भावः कर्म वा। गृहस्थकर्त्तव्ये पञ्चयज्ञादौ कर्मणि। “गार्हस्थ्यश्चैव याज्याय सर्वा गृह्याश्च देवताः” भा॰आनु॰७अ॰। “गार्हस्थ्यं धर्मं माश्रित्य स्थितो देवलः पुरा” भा॰शल्य॰५१अ॰।

गालन न॰ चु॰ गल—क्षारणे भावे ल्युट्। निःस्रावणे (गालान) “मा पुत्रं त्वां सोमस्य गालनेन” निरु॰ ६।२४। “तथा पचेत् यथा द्रवकाठिन्याभ्यां विशिष्टमधुगालनरहितोऽलक्तकप्रकाशश्चभवति” भावदेवः।

गालव पु॰ गल—सञ्ज् तं वाति वा—क। १लोध्रवृक्षे मेदि॰ २तिन्दुकवृक्षे शब्दच॰ ३मुनिभेदे, स च विश्वामित्रपुत्रभेदः। यथाह हरिवं २७अ॰। “विश्वामित्रस्य च सुता देवरातादयः स्मृताः” इत्युपक्रमे

"गाङ्गतिर्गौतमश्चेति मुद्गलश्चेति विश्रुताः"। तस्य चित्र-भेदश्च यथाह भा० उ० १०५ अ०। "विश्वामित्रस्तु विव्यस्य गालवस्य तपस्विनः। शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह" इत्युपक्रमे तस्यातिनिर्बन्धेन दक्षिणार्थं विश्वामित्राद्दिष्टगुरुदक्षिणात्वेन एकतः श्यामकर्णाश्व-शताष्टकस्य दानकथा भा० उ० १०६अ० ११८ अ०पर्यन्ते उक्ता। तत्रेयमाख्यायिका गुरुणा तथाऽनुशिष्टस्य तस्य उपासनादितः प्रसन्नेन गरुड़ेन सह तथाभूताश्वा-प्रार्थं ययातिनृपसमीपे गतिः। तत्प्रार्थनया तेन च तथाभूताश्वलाभाहारभूतां माधवीनामकन्यां ददे। तस्यां कन्यायाञ्चैकैकपुत्रजनने तथाभूताश्वशतद्वयं शुल्कत्वेन च कल्पितं, तत्रादौ हर्य्यश्वनृपेण हि तथाविधाश्वशते शुल्कत्वेन दत्त्वा एकपुत्रस्तस्यामुत्पादितः। ततो दिवो-दासेनैव तथैव द्विशते शुल्कं दत्त्वा एकः पुत्र उदपादि। तत उशीनरेण तथैव द्वे शते शुल्कं दत्त्वा एकः पुत्र उदपादि। एवं षट् तथाभूताश्वशतानि द्विशताश्वशुल्क-दानेनैकपुत्रोत्पादनयोग्यां तां च कन्यां गुरवे विश्वामित्राय गुरुदक्षिणात्वेन ददौ तेन च तस्यामेकः पुत्रः उदपादीति।

**गालवि** पु० गालवस्यापत्यम् इञ्। गालवर्षेः पुत्रे प्राक्शृङ्ग-वदाख्ये मुनिभेदे। स हि कुणिगर्गस्यातिवृद्धां कन्यामुपयेमे तत्कथा च वृद्धकन्योपयमने "गार्ग्येण च राजेन्द्र! तपसा चैव कर्षिता। सा नायकस्तदा गन्तुं पदात् पदमपि स्वयम्। चकार गमने बुद्धिं परलोकाय वै तदा। मोक्तुकामान्तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत्। असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे!। एवन्तु श्रुतमस्माभिर्देवलोके महाव्रते!। तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः। तन्नारदवचः श्रुत्वा साऽब्रवीदृषिसंसदि। तपसोऽर्द्धं प्रयच्छामि पाणिग्राहस्य सत्तम!। इत्युक्तेऽस्याश्च जग्राह पाणिं गालवसम्भवः। ऋषिः प्राक्शृङ्गवान्नाम समयञ्चेदमब्रवीत्। समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने!। यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह। तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा। यथादृष्टेन विधिना हुत्वा चाग्निं विधानतः। चक्रे च पाणिग्रहणं तस्योद्वाहञ्च गालविः" भा० शल्य० ५२ अ०।

**गालि** पु० गल-णिच् भावे इन्। आक्रोशे शापे सिद्धा०। "ददतु ददतु गालिं गालिमन्तो भवन्तो वयमिह तदभावाद्गालिदानेऽप्यसक्ताः" उद्भटः।

**गालित** त्रि० गु० गल-णिच् (गालन) कर्मणि क्त। स्तनद्रवे "गालितस्य सुवर्णस्य षोडशांशेन सीसकम्" वैद्य। "तथा पचेत् यथाऽगालितमपूर्वाद्भवति" कालेसी पद्धतिः।

**गालिनी** स्त्री "कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम्। तर्जनीमध्यमानामाः संहताः भुग्नवर्ज्जिताः। मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता" तन्त्रसा० उक्ते मुद्राभेदे।

**गालोडि** गालोडितशब्दे किम् इतलोपः सञ्ज्ञा० उत्कासादाख्याने वक्र० उभ० सेट्। गालोड्यति ते।

**गालोडित** त्रि० "उन्मादमोहौ रोगार्त्तौ मूर्खौ गालोडितः स्मृतः" कलापवृत्त्यावुक्ते १उन्मत्ते २रोगार्त्ते ३मूर्खे च गोलोडित इति वा पाठस्तत्रार्थेषु। [बीजे राजनि०।

**गालोद्य** न० गलोद्य+स्वार्थे प्रज्ञा० अण्। १धान्यभेदे २पद्म-

**गावलगणि** पु० गवल्गणस्यापत्यम् इञ्। गवल्गणेरपत्ये सञ्जये गवल्गणपुत्रे इस्यम्। "गावल्गणिरिदं धीमान्" भा० आ० १० अ०। "सञ्जयश्च महाप्राज्ञो विद्वान् गावल्गणिर्वशी" २अ०।

**गाविष्ठिर** पुंस्त्री गविष्ठिरस्यापत्यम् विदा० अञ्। गविष्ठिरर्षेरपत्ये। ततः हरिता०युवापत्ये फक्। गाविष्ठिरायण तदीययुवापत्ये पुंस्त्री।

**गावेधुक** त्रि० गवेधुकाया विकारः बिल्वा० अण्। गवेधुकावयवे चर्वादौ। गवेधुमयं उदा०।

**गाह** विलोड़ने भ्वा० आत्म० सक० अनिट् वेट्। गाहते अगाहिष्ट-अगाढ जगाहे। "मनस्तु मे संशयमेव गाहते" कुमा०। "अगाहतारादथतो जिगीषया" नैष०। "जगाहिरेऽम्बुधिं नागाः"। "मन्मनगाहिष्ट चाम्बुधिम्" "जगाहे द्यां निशाचरः" "जगाहे च दिशो दश" भट्टिः। "ब्रह्मावर्त्तं जनपदमथच्छायया गाहमानः" मेघ०। "पूर्वापरौ तोयनिधी वगाह्य" कुमा० अवाऽल्लोपः। पक्षे अवगाह्य। "तपस्विगाढां तमसाम्" (प्राप) रघुः। अव+विलोडने च। "पक्षे साध्यावगाहि ज्ञानम्" गदा०

**गाह** पु० गाह-गहने भावे कर्मणि वा घञ्। १गहने। "गाहादिव वा निरधुलत" ऋ० ८।११०।८। "गाहात् गहनात्" भा०। गाह-कर्त्तरि अच्। २गाहकर्त्तरि त्रि०

**गिद** पु० रथपालके देवभेदे "गिदैव ते रथ एव वामचिना" ता० ब्रा० ११७।७। "गिदा नाम रथपालकः कश्चि-

रात्रौ च दीप्यते। तत्रोत्तर्षं दंष्ट्रा च तथैव गिरिकच्छपः। आखुधूम्रोबिडालश्च ताम्रः कृष्णोऽथ पिङ्गलः। वेश्मा-न्तेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम्। ताम्रधूम्रा-रुणाराणि पिशिताशैः सुदारुणैः" पिशाचोक्तौ।

गिरिकण्टक पु॰ गिरेः कण्टक इव भेदकत्वात्। वज्रे त्रिका॰

गिरिकदम्ब पु॰ गिरौ भवः कदम्बः। धाराकदम्बे राजनि॰ स्वार्थे क। तत्रार्थे "देवदारुश्चाक्षिकुक्कुट' गिरिकद-म्बकः" सुश्रुतः।

गिरिकदली स्त्री ७त॰। बहुबीजायाम् वनरम्भायाम् राजनि॰ "गिरिरम्भा तु मधुरा हिमा बल्या च दुर्जरा। तृष्णापित्तदाहशोषशमनी बीजबहुगुरुः" राजनि॰।

गिरिकर्णिका स्त्री गिरेः कर्ण इव अस्याः कप् कापि अत इत्वम्। १पृथिव्यां त्रिका॰। गिरेर्बालमूषिकायाः कर्णः अस्त्यस्याः तदाकारपत्रत्वात् ठन्। २अपराजिता लतायां ३श्वेतकिणिहीवृक्षे च राजनि॰।

गिरिकर्णी स्त्री गिरेर्बालमूषिकायाः कर्ण इव कर्णः पत्रमस्याः ङीप्। १अपराजितालतायाम् अमरः। "त्रिफला गिरिकर्णी च हंसपादी च चित्रकम्" भावप्र॰। २यवासे शब्दच॰। [गिरिशब्दे गिरिकशब्दे च दृश्यम्।

गिरिका स्त्री गिरिरिव स्वार्थे क। बालमूषिकायाम् अमरः।

गिरिकाण त्रि॰ गिरिणा नेत्ररोगभेदेन काणः। नेत्ररोगभेदेन एकनेत्रहीने। अस्य ३त॰ प्रकृतिस्वरता।

गिरिक्षित् पु॰ गिरि वाचि क्षियति क्षि–वासे क्विप् अलुक्स॰। स्तुतिरूपवाक्यस्थे परमेश्वरे "प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे" ऋ॰१।१५४।३। "गिरिक्षिते गिरि वाचि, गिरिवदुन्नतप्रदेशे वा तिष्ठते" भा॰।

गिरिक्षिप त्रि॰ गिरिं क्षिपति क्षिप–क। १गिरेरुत्क्षेपस्य सामर्थ्यवति २अक्रूरभ्रातरि पु॰ गान्दिनीजशब्दे दृश्यम्

गिरिगुड पु॰ गिरौ गुड इव। गेन्दके (गेन्द) हेमच॰।

गिरिचर त्रि॰ गिरौ चरति चर–ट॰।१पर्वतचारिणि। "गिरि-चर इव नागः प्राणसारं बिभर्त्ति" शकु॰ स्त्रियां ङीप्। २चौरे तदीशे ३रुद्रभेदे पु॰ "नम उष्णीषिणे गिरि-चराय" यजु॰ १६।२१। गिरिचरचौरः अरण्यानां वस्त्राद्यपहर्त्तुं पर्वतादिविषमस्थानचरत्वात् तदधिपत्वाद् रुद्रोपि गिरिचरः इत्युपचारः।

गिरिज न॰ गिरौ जायते जन–ड। १शैलजे शिलाजतुनि २लोहे ३अभ्रके च मेदि॰। ४गैरिके राजनि॰ ५मधुक वृक्षे ६गौरशाके पु॰ रत्नमा॰।७हिमाद्रिजातायां पार्वत्यां स्त्री "आगतं शिवपक्षेभ्यो गतञ्च गिरिजाननं" यामलम्। "यदा यदा च गिरिजाम्बुदनामाचरागतम्" काशी॰६६अ॰ ८मातुलाङ्ग्यां स्त्री मेदि॰ ९श्वेतबुह्नायां रत्नमा॰। १०क्षुद्रपाषाणभेदलतायां ११त्रायमाणलतायां १२कारवे वृक्षे १३मल्लिकायां १४गिरिकदल्यां च स्त्री राजनि॰। १५पर्वतजातमात्रे त्रि॰। गिरि वाचि जायते जन–ड अलुक्स॰। १६स्तुतिरूपवाक्यनिष्पन्ने च "महत्वते गिरिजा एवया मरुत्" ऋ॰५।८७।२। गिरिजा वाचिनिष्पन्नाः" भा॰। पार्वत्याः हिमालयरूपगिरेर्जन्मकथा शिवपुराणे १२अ॰ हिमालयस्य मेनकानाम्नी पत्नी बभूवेत्युक्त्वा "प्रकृतिरभव-त्तस्याः मेनायाः कन्यका शुभा" इत्युपक्रमे "तां पार्वती-त्याभिजनाश्च नामतो जुहाव बन्धुजनः स्वभावतः। मात्रा निषिद्धा तपसे यदा तु सा उमाख्यां भवभक्ति भाविनी"। कालिकापुराणे तु तस्याः कालीतिनाम तत्-कथा ४१।४२अ॰दृश्या। १७गङ्गायाञ्च स्त्री तस्या अपि तत्र उत्पत्तिकथा कालिकापु॰ ४७ अ॰ दृश्या।

गिरिजातनय पु॰ ६त॰। कार्त्तिकेये तस्य च यथोत्पत्ति-स्तथा कार्त्तिकेयप्रशब्दे १९५६पृ॰ उक्तप्राया कालिकापु॰ ४७अ॰ विस्तरेण दृश्या। गिरिजानन्दनादयोऽप्यत्र।

गिरिजापति पु॰ ६त॰। १शिवे. गिरिजेशादयोऽप्यत्र।

गिरिजामल न॰ गिरौ पर्वते तेषे चमरवे या जायते जन–ड, तेषु अमलम्, सर्वोभूतस्य तदमलस्य, गिरिजायाः पार्वत्या बीजरूपं मलं वा। १अभ्रके तस्य कथा च पार्वतीबीजजातत्वं तथा चाभ्रकशब्दे ३१५ पृ॰ उक्तम् भावप्र॰ तस्याभ्रकोत्पत्तिभेदादिकमुक्तं यथा

"पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम्। विस्फु-लिङ्गास्ततस्तस्य गगने परिसर्पिताः। ते निपेतुर्घन-ध्वानाच्छिखरेषु महीभृताम्। तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम्। तद्वज्रं वज्रजातत्वादभ्रम-भ्ररवोद्भवात्। गगनात् स्खलितं यस्माद् गगनञ्च ततो मतम्। विप्रक्षत्रियविट्शूद्रभेदात्तत् स्याच्चतु-र्विधम्। क्रमेणैव सितं रक्तं पीतं कृष्णञ्च वर्णतः। प्रशस्यते सितन्तारे रक्तं तत्तु रसायने। पीतं हेमनि. कृष्णन्तु गदेषु द्रुतयेऽपि च। पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम्। मुञ्चत्यग्नौ विनिक्षिप्तं पिना-कन्दलसञ्चयम्। अज्ञानाद्भक्षणं तस्य महाकुष्ठ प्रदायकम्। दर्दुरं त्वग्निनिःक्षिप्तं कुरुते दर्दुर-ध्वनिम्। गोलकान् बहुशः कृत्वा स स्यान्मृत्यु

प्रदायकः। नागन्तु नागवद् बल्ली कुष्ठार्त्तं परिमुञ्चति। सर्ज्जरसमयश्चान्तु विदधाति भगन्दरम्। वङ्गन्तु वङ्ग-वल्लिवत्तस्माक्‌ो विनाशं व्रजेत्। सर्वाभ्रेषु परं वज्रं व्याधिवार्द्धक्यमृत्युहृत्। अभ्रमुत्तरशैलोत्थं बहुसत्वं गुणाधिकम्। दक्षिणाद्रिभवं स्वल्पसत्वमल्पगुणप्रदम्। अभ्रं कषायं मधुरं सुशीतमायुष्करं धातु-विवर्द्धनञ्च। हन्यात् त्रिदोषं व्रणमेहकुष्ठप्लीहो-दरग्रन्थिविषक्रमींश्च। रोगान् हन्ति द्रढयति वपु-र्वीर्य्यवृद्धिं विधत्ते तारुण्याद्यं रमयति शतं योषितां नित्यमेव। दीर्घायुष्कान् जनयति सुतान् विक्रमैः सिंहतुल्यान् मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रम्”। अभ्रशब्दे चतुष्प्रकारत्वगुणादिभेदा दर्शिताः।

**गिरिज्वर** पु० गिरिं ज्वरयति ज्वर-णिच्-अच्। वज्रे शब्दर०।

**गिरि(लि)त** त्रि० गिल-क्त वा रः। भक्षिते रायमुकु०।

**गिरित्र** पु० गिरौ कैलासे स्थितस्त्रायते त्रै-क। रुद्रे। “शिवां गिरित्र तां कुरु” यजु० १६।३।

**गिरिदुर्ग** न० गिरिरेव दुर्गम् राज्ञां शत्रुभ्यो निःशङ्क-तया वासस्थानम्। पर्वतरूपे तादृशे स्थाने (गड़)। “धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरि-दुर्गं वा समाश्रित्य वसेत् पुरम्। सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्। एषां हि बहुगुण्येन गिरि-दुर्गं विशिष्यते”। त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्त्ता-श्रयाप्चराः”। त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरा-मराः”मनुः। एषां मध्ये गिरिदुर्गं बहुगुणत्वात् विशिष्टं तस्य गुणाश्च सुदुरारोहत्वं महाप्रदेशादल्पप्राणप्रे-रितशिलादिना बहुबलसैन्यविनाशनमित्यादयः” कुल्लू० “वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः” भा०वि० ५ अ०।

**गिरिधातु** पु० ६त०। गैरिके उपधातुभेदे राजनि०।

**गिरिनगर** न० ह०सं० कूर्मविभागे १४अ० दक्षिणस्यामुक्ते स्थाने दक्षिणेन लङ्केत्युपक्रमे “कालाजिनसौरिकीर्णताल-िकटाः गिरिनगरमलयदर्दुरमहेन्द्रमालिन्द्यभरुकच्छाः” इत्युक्ते देशभेदे। अस्य च संज्ञात्वेऽपि पूर्वपदस्थनिमि-त्तात् क्षुभ्नादित्वात् न णत्वम्।

**गिरिनद्यादि** पु० वार्त्ति०उ० उक्ते पूर्वपदस्थनिमित्तात् णत्वनिमित्ते शब्दगणे स च गणः “गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमाण माषोण आर्गयण” आकृतिगणः। “गिरिनद्यादीनां वा” वार्त्ति०।

**गिरिनन्दिनी** स्त्री ६त०। हिमालयसुतायां १पार्वत्यां २गङ्गायाञ्च, गिरेर्नन्दिनीव। ३नदीमात्रे तासां गिरि-प्रभवत्वात्तथात्वम् “अन्याश्च सरितो बह्व्यः” इत्युपक्रमे “शुभाश्च गिरिनन्दिन्यः” हरिवं० १२६अ०। “कलिन्द-गिरिनन्दिनीतटसुरद्रुमालम्बिनी” रसगङ्गाधरः।

**गिरिनिम्ब** पु० ७त०। महानिम्बवृक्षे राजनि०।

**गिरिपीलु** पु० ६त०। (फालसा) इति वृक्षभेदे राजनि०।

**गिरिपुर** न० आनर्त्तदेशान्तर्गते पुरभेदे आनर्त्तशब्दे ७२७ पृ० उदा०। [जतुनि राजनि०।

**गिरिपुष्पक** न० गिरेः पुष्पमिव कायति कै-क। शिला-

**गिरिप्रिया** स्त्री गिरिः प्रियोऽस्याः। चमर्यां मृगभेदे राजनि०। [उमाचापः” शत०ब्रा० ७।४।२।१८।

**गिरिबुध्न** स्त्री गिरिर्बुध्न इव यस्याः। आप्सु। गिरिबुध्ना

**गिरिभिद्** पु० गिरिं भिनत्ति भिद-क्विप्। १पाषाणभेदके वृक्षे भावप्र०। २इन्द्रे च। ३नद्यन्तरे। ४नदीभेदके “नद्य-न्तरेऽसंभवो गिरिभिच्चेत्”कात्या० श्रौ०२५।१४।२३। “गिरिं भित्त्वा या नद्यागता तदनन्तरे संभवो न भवति”कर्कः।

**गिरिभू** त्रि० गिरौ भवति भू-क्विप्। १पर्वतप्रभवे क्षुद्र-पाषाणभेदे २पार्वत्यां ३गङ्गायां च स्त्री ६त०। ४पर्वत-भूमौ स्त्री।

**गिरिमल्लिका** स्त्री गिरौ मल्लीव इवार्थे कन्। कुटजवृक्षे। अमरः। [उच्चत्वात्तथात्वम्।

**गिरिमान** पु० गिरिरिव मानमस्य। गजे शब्दरत्ना०। तस्य

**गिरिमाल** पु० गिरौ मालः हलन्तोऽस्य। बाधके स्नानस्थाने बर्हिर्यज्ञयूपकाष्ठसाधने वृक्षभेदे “तैल्वको बाधको वा” कात्या० श्रौ० २१।३।८। “यूपो भवति तैल्वकस्तिषिणाः बाधको गिरिमालः” कर्कः।

**गिरिमृद्** स्त्री ६त०। १गैरिके (गेरिमाटि) त्रिका०। २पर्व-तमृत्तिकायाञ्च।

**गिरिमृद्भव** न०गिरेर्मृदो भवति भू-अच्। गैरिके राजनि०

**गिरिमेद** पु० गिरिर्मेद इव सारोऽस्य विट्खदिरे रत्नमा०

**गिरियक** पु० गिरिं याति या-क संज्ञायां कन्। गेन्दुके (केन्द) वृक्षे हेमच०। [केन्दुके शब्दरत्ना०।

**गिरियाक** पु०गिरिं याति-या क्विप् संज्ञायां कन् न ह्रस्वः।

**गिरिराज्** पु० गिरिषु राजते राज-क्विप् ७त०।१पर्वतश्रेष्ठे “स तयाभिहतो राजन् नावलत् गिरिराडिव”भा०भी०

७८अ० । "गिरिराट्पाददारीव" भाग० ३।१२।२५ । २हिमाचले च ।

**गिरिराज** पु० ६त० । हिमालये । यथा च तस्य नगराजत्वं तथा अचलराजशब्दे ८२ पृ० उक्तम् । "सोऽपि कार्पटिकस्तस्य गिरिराजस्य भाषितम्" । "गिरिराजाङ्गजासखः" काशी० । "गिरिराजराजसुतान्वितवामतनुम्" शिवस्तवः ।

**गिरिवासिन्** त्रि० गिरिं वासयति सुरभीकरोति वासि-णिनि, गिरौ वसति वस-णिनि वा । हस्तिकन्दे वृक्षे राजनि० ।

**गिरिव्रज** न० गिरीणां पञ्चानां व्रजो यत्र । मगधदेशान्तर्गते जरासन्धपुरे "सोऽभिजनोऽस्य" अण् । गैरिव्रज तद्देशवासिनि त्रि० बहुषु तस्य लुक् । "गिरिव्रजाः मगधसुयज्ञ मिथिलाश्च" बृ०स०१०अ० ।
गिरिव्रजवर्णनं भा०स०२१अ० । यथा,
"एष पार्थ ! महान् भाति पशुमान्नित्यमम्बुमान् । निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः । वैहारो १ विपुलः शैलो वराहः २ वृषभ ३ स्तथा । तथा ऋषिगिरिस्तात ! शुभाश्चैत्यकपञ्चमाः । एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः । रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम्" इत्युपक्रमे ।
"अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः । गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ! । वनराजीस्तु पश्येमाः पिप्पलानां मनोरमाः । लोध्राणाञ्च शुभाः पार्थ ! गौतमौकःसमीपजाः । अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ । स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः । अपरिहार्या मेघाना मागधा मनुना कृताः । कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम् । एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः । अर्थसिद्धिं त्वनुपमां जरासन्धोऽभिमन्यते" ।

**गिरिश** पु० गिरौ शेते शी-वा० डोकेऽपि ड, गिरिरस्त्यस्य लोमा० श वा । शिवे अमरः । "गिरिशमुपचचार प्रत्यहं सा सुकेशी" कुमा० । "गिरिशरमणी कालि ! सततम्" कालीस्तवः । "शिवेन वचसा त्वा गिरिशाच्छा वदामसि" यजु० १६।४ ।

**गिरिशन्त** पु० महादेवे । "गिरिशन्ताभिचाकशीहि" यजु० १६।२ । "गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति, गिरि वाचि स्थितः शं तनोतीति वा गिरौ-मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा वेददी० । पर्वत तन-बा० ड । गिरि वाचीति पक्षे अलुक्स० ।

**गिरिशय** पु० गिरौ कैलासे शेते शी-अच् । महादेवे । "नमो गिरिशयाय च गिरिशाय च" यजु० १६।८ ।

**गिरिशाल** पु० गिरिं शलति आश्रयत्वेन गच्छति शल-गतौ अण् उप० स० । सुश्रुतोक्ते प्रतुदे पक्षिभेदे । कपोतपारावतेत्युपक्रमे "गिरिशालकाकनूपकेत्यादयः प्रतुदाः" सुश्रुतः ।

**गिरिशालिनी** स्त्री गिरिं वालमूषिकाकर्णं शलते छादयते स्वपत्रेण शल-छादायां णिनि ङीप् । गिरिकर्णिकायामपराजितायाम् "पारिभद्रं पाटला च बकुलं गिरिशालिनी" वामनपु० । तत्तुल्यपत्रत्वेन गिरेः छादनात् तस्यास्तथात्वम् ।

**गिरिशृङ्ग** पु० गिरेः शृङ्गमाकारेणास्त्यस्य अच् । १गणेशे मन्त्रमहो० शुण्डादण्डस्योन्नतत्वे गिरिशृङ्गाकारत्वात् तस्य तथात्वम् । ६त० । २पर्वतशिखरे न० ।

**गिरिषद्** पु० गिरौ सीदति सद-क्विप् षत्वम् । महादेवे ।

**गिरिष्ठा** स्त्री गिरौ तिष्ठति स्था क्विप् अम्ब० षत्वम् । १महादेवे २पर्वतस्थायिमात्रे त्रि० । "मृगो न भीमः कुचरो गिरिष्ठाः" ऋ०१।१५४।२ । "गिरिष्ठा गिरिस्थायी" निरु० ।

**गिरिसर्प** पु० नित्य० ७त० । दर्वीकरसर्पभेदे सुश्रुतः । अहिशब्दे ५८१ पृ० विवृतिः ।

**गिरिसार** पु० ६त० । १लौहे २रङ्गे धातुभेदे च "द्रोणाय प्रेषयामास गिरिसारमयीं गदाम्" भा० भी० ५३अ० गिरिषु सारः चन्दनादिसुरभिद्रव्यवत्त्वात् अस्य । ३मलयपर्वते मेदिनिः ।

**गिरिसुत** पु० ६त० । १मैनाकपर्वते २पार्वत्यां स्त्री । "अवतु वो गिरिसुता शशिभृतः प्रियतमा" उद्भटः । "शम्भोः शिरसीन्दुकला हव्यभुजोऽपि च तृतीयमप्यूर्ध्वम् । नूनं धनुः पिनाकं वामार्धे वा गिरिसुतार्धम्" बृ०सं० ५८अ० ।

**गिरिस्रवा** स्त्री गिरेः स्रवति स्रु-अच् ५त० । पर्वतनद्याम् "गिरिस्रवाभिः सर्वाभिः पृष्ठतोऽनुगता शुभा" भा० आनु०१४अ० ।

**गिरिह्वा** स्त्री गिरिं वालमूषिकाकर्णं ह्वयति स्पर्धते तदाकारेण ह्वे-क । गिरिकर्णिकायाम् अपराजितायाम् तत्कर्णतुल्यपत्रत्वात्तस्यास्तथात्वम् । "श्वेता गिरिह्वा किणिही सिता च" सुश्रु० । आ+ह्वे-क । गिर्याह्वा·

केऽपि न दृश्यते। गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्। रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते। गीतेन हरिणा रक्ष प्राप्नुवन्त्यपि पक्षिणः। वनादाय्यान्ति फणिनः शिशवो न रुदन्ति च। हृदि चमत्कृतये नियतः परं कश्चिदपरोऽस्ति वत पञ्चमः। अपि च सता यदुनाथ मदावहा मधुरगीतवधीकृतचक्षुषः। परमानन्दविवर्द्धनमभिमतफल वशीकरणम्। सकल-जनचित्तहरणं विलासिनीनां परं गीतम्"। "शुद्धशाल-गसङ्कीर्णभेदाद्गीतं त्रिधा मतम्। एका चाद्यभवा यथा-क्षरं तत् पञ्चतानेश्वरः कैराते स्वरचक्रपालविकया मतं निरूपितं मया। ठेङ्कारवर्णवरःस्फुटौ द्विपदिका छन्दा-गवीषाखवाचस्मोदयतककवर्त्तनीति कथिताः शुद्धास्तु ते विंशतिः" सङ्गीतदा०। एकादीनामेतेषां विंशति संख्य-कानां प्रबन्धगीतानामङ्गानि षट् भवन्ति यथा "पदं तानो विरुदश्च तालः पाठः स्वरस्तथा। एकादीनां षडङ्गानि कथितानि विरिञ्चिना। पौनरुक्त्यं न देयीवे गीते दोषोऽभिजायते। शीघ्रोच्चारेण वर्णानां तथः चैव प्रका-रणे। विज्ञान्यत्वे विसन्धौ च संयुक्ताक्षरमोक्षणे। परिवर्त्तेऽक्षराणाञ्च ह्रस्वदीर्घव्यतिक्रमे"। शालगत्वं यथा "ध्रुवकोमण्ठकश्चैव प्रतिमण्ठोनिसारुकः। वासकः प्रतिवाभश्च तथान्या चैकतालिका। यतिश्च झुम्परि चेति शालगं सप्तमीरितम्"। सङ्कीर्णत्वं यथा "चैत्रोगङ्गकस्तथा न गणिका चर्चरीतिनाटोक्ती दोहा स्याद्धवलाधरागुणवत्ती गोता च गोविन्तथा। छेन्नो-कोष्यथ चारिका त्रिपदिकेत्येतानि कामद्विषा संक्षे-पेण चतुर्दश प्रकटितान्यत्नाक्रमाणि क्रमात्" सङ्गीतदा०। अधिकम् उद्बोधगब्दे १२७१ पृ० दृश्यम्। स्वार्थे क तत्रार्थे "काव्यालापाश्च ये केचित् गीतकान्यखिलानि च। शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः" अग्निपु०। कर्मणि क्त। २शब्दिते मेदि०। ३स्तुते ४गान-कर्मणि कृतगाने त्रि०। "गीता सुगीता कर्त्तव्या" गानशब्दे उदा०।

गीतगोविन्द पु० गीतोगोविन्दोऽत्र। जयदेवकृते श्रीकृष्ण-चरितख्यापके द्वादशसर्गात्मके ग्रन्थभेदे। "यच्छृङ्गार विवेकतत्त्वमपि यत्काव्येषु लीलायितम् तत्सर्वं जय-देवपण्डितकवेः कृष्णैकतानात्मनः। सानन्दाः परि-शोधयन्तु सुधियः श्रीगीतगोविन्दितः" गीतगो०।

गीतप्रिय त्रि० गीतं प्रियमस्य। १गानरते २महादेवे पु० ३कुमारानुचरमातृकाभेदे स्त्री। "गीतप्रिया च कल्याणी कद्रुरोमाऽमिताशना" भा० शल्य० ४६ अ० मातृगणोक्तौ।

गीतमोदिन् त्रि० गीतेन मोदते मुद–णिनि। १गीतेना-मोदकर्त्तरि स्त्रियां ङीप्। २किन्नरे पु० शब्दर०।

गीता स्त्री गै–कर्मणि क्त। १गुरुशिष्यकल्पनया आत्मविद्योप-देशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुधा किन्तु भगवद्गीतायामेव प्रसिद्धिः। "गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृतेति" श्रीधरस्वामिधृतवचनम्। प्रसिद्ध गीतायास्तात्पर्य्यादि नीलकण्ठेन समर्थादि यथा "भारते सर्ववेदार्थो, भारतार्थश्च कृत्स्नशः। गीतायामस्ति, तेनेयं सर्वशास्त्रमयी मता। कर्मोपास्तिज्ञानभेदैः शास्त्रं काण्डत्रयात्मकम् भक्तिस्तूपासनाकाण्डात् तीयान्नातिरि-च्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। इति श्रुत्यैव वेद्यस्य ह्युपास्यादन्यतेरिता। इयमष्टादशाध्यायी क्रमात् षट्कत्रिकेण हि। कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निग-द्यते"। मधुसूदनसरस्वतीभिस्तु गीतागूढार्थदीपिकायां तत्प्रयोजनादिकं विस्तरेण दर्शितं यथा

सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम्। परं निः-श्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम्। सच्चिदानन्दरूप-त्वात् पूर्णं विष्णोः परं पदम्। यत्प्राप्तये समारब्धाः वेदाः काण्डत्रयात्मकाः। कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात्। तद्रूपाष्टादशाध्यायी गीता काण्ड-त्रयात्मिका। एकत्रैकेन षट्केन काण्डमत्रोपलक्षयेत्। कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः। यतः सम-च्चये नास्ति तयोरतिविरोधतः। भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्त्तिता। उभयानुगता सा हि सर्वविघ्ना-पनोदिनी। कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा। तत्र तु प्रथमे काण्डे कर्म तत्त्यागवर्त्मना। त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते। द्वितीये भगवद्भक्तिनिष्ठावर्णनया ततः। भगवान् परमानन्दस्तत्-पदार्थोऽवधार्य्यते। तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम्। एवमप्यत्र काण्डानां संबन्धोऽस्ति परस्परम्। प्रत्यध्यायं विशेषन्तु तत्रतत्रैव वक्ष्यते। मुक्तिसाधनपर्वेदं शास्त्रार्थत्वेन कथ्यते। निष्कामकर्मानुष्ठानं त्यागात् काम्यनिषिद्धयोः। तत्रापि परमोधर्मो जपस्तुत्यादिकं हरेः। क्षीणपापस्य चित्तस्य विवेके योग्यता यदा। नित्यानित्यविवेकस्तु जायते सुदृढस्तदा। इहामुत्रार्थ

स्यात् समा०। नवि"गावो गुग्गुलुगन्धयः" प्रा०त०धृतः गुग्गुलोर्गोमूत्रभवत्वात् गोसम्बन्धत्वम् गुग्गुलुशब्दे तत्कथा। गुग्गुलोर्गन्ध इव गन्धोऽस्य वा इत् समा०। २गुग्गुलुगन्धयुक्ते लि०।

**गुङ्गू** स्त्री कुङ्+पृषो०। कुहूतिथौ। "या गुङ्गूर्या सिनीवाली या राका या सरस्वती" ऋ० २।३२।८। "अत्र गुङ्गूशब्देन राकासिनीवाल्योः साहचर्य्यात् कुहूरुच्यते" भा०।

**गुच्छ(त्स)** पु०गु—सम्प०क्विप् गुतं छ्यति स्यति वा छो —सो—पा क। कलिकाकुसुमादिसमूहयति १स्तबके, काण्डशून्ये मूलत एव शाखाप्रधानसंघातके धान्यमल्लिकादेः २स्तम्बे, द्वात्रिंशद्यष्टिके ३हारभेदे, ४मयूरपुच्छे च मेदि०। ५मल्लिकादौ च "गुच्छगुल्मं तु विविधं तथैव तृणजातयः। बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च। तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" मनुना तेषां कर्म्महेतुतोक्ता। "मूलतएव यत्र लतासमूहो भवति न प्रकाण्डानि ते गुच्छा मल्लिकादयः, गुल्मा एकमूलाः संघातजाताः शरेक्षुप्रभृतयः" कुल्लू०। ६गुच्छकरञ्जे मेदि०। स्तबके पु० स्त्री राजनि० स्त्रियां ङीप्। "मधुरगुच्छदगुच्छगन्धयः" माघः। स्वार्थे क। गुच्छक उक्तार्थेषु। संज्ञायां कन्। रीठाकरञ्जे पत्निपर्णे न० भाव०।

**गुच्छ(त्स)कणिश** पु०गुच्छः कणिशोऽस्य। धान्यभेदे राजनि०

**गुच्छ(त्स)करञ्ज** पु० गुच्छाकारः करञ्जः। करञ्जभेदे राजनि०। "कटुर्गुच्छकरञ्जस्तु तिक्तोष्णो विषवातहृत्। कण्डूविचर्चिकाकुष्ठत्वग्दोषनाशनः" राजनि०।

**गुच्छ(त्स)दन्तिका** स्त्री गुच्छीभूता दन्ताः पुष्परूपाः सन्त्यस्याः ठन्। कदल्याम् राजनि०। तस्या हि मोचकरूपे पुष्पे गुच्छाकृतदन्तरूपत्वात्तथात्वम्।

**गुच्छ(त्स)पत्र** पु० गुच्छाकृतीनि पत्राण्यस्य। तालवृक्षे राजनि०। तस्य हि प्रत्येकपत्रस्य गुच्छात्मकत्वात्तथात्वम्।

**गुच्छ(त्स)पुष्प** पु०गु(त्सा)च्छाकृतीनि पुष्पाण्यस्य। सप्तच्छदवृक्षे २रीठाकरञ्जे ३धातक्यां स्त्री राजनि० ङीप्।

**गुच्छ(त्स)फल** पु० गु(त्सा)च्छाकृतीनि फलान्यस्य। १रीठाकरञ्जे, २राजादन्यां, ३कतके च। ४अग्निदमन्यां, ५काकमाच्यां, ६द्राक्षायां ७कदल्याञ्च स्त्री राजनि० टाप्।

**गुच्छ(त्स)बध्ना** स्त्री गुच्छेन बध्यते बन्ध—बा० रक्। गुण्डालाहृते राजनि०। [गुण्डालमोहृते राजनि०।

**गुच्छ(त्स)मूलिका** गुच्छाकृति मूलमस्या कप् अतइत्वम्।

**गुच्छा(त्सा)र्द्ध** पु० गु(त्सा)च्छ इव ऋध्नोति ऋध—अच्। चतुर्विंशतियष्टिके हारभेदे। ६त०। गुच्छ(त्स)स्यार्द्धे पु०न०। अमर०। [ आ+ला—क वा०। मूलके राजनि०।

**गुच्छा(त्सा)ल** पु०गुच्छाय अलति अल—अच् गुच्छमालाति

**गुच्छा(त्सा)हृकन्द** पु० गुच्छमाह्वयति आ+ह्वे—क गुच्छाह्वः कन्दोऽस्य। गुलञ्चकन्दे राजनि०।

**गुज** ध्वनौ तुदा० कुटा० पर० अक० सेट्। गुजति अगुजीत् जुगोज। प्रनिगुजति। [जुगोज।

**गुज** कूजने भ्वा० पर० अक० सेट्। गोजति अगोजीत्।

**गुञ्ज** कूजने भ्वा०पर०सक०सेट् इदित्। गुञ्जति अगुञ्जीत् जुगुञ्ज गुञ्जितम् गुञ्जः गुञ्जन्। (गुनगुन) इति ध्वनितमिह कूजनम्। "न जुगुञ्ज यः कलमिति"। "न गुञ्जितं तच्च जहार यन्मनः"। "रेणून् प्रपूरिरे गुञ्जा जुगुञ्जुः भ्रमरपङ्क्तयः" भट्टिः। "लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्" "गुञ्जन् मत्तमधुव्रतः" सा० द०।

**गुञ्ज(ञ्जं)री** स्त्री १रागिणीभेदे। तत्स्वरूपं सङ्गीतदा० उक्तं यथा "श्यामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लव-तल्पयाता। श्रुतेः स्वराणां दधती विभागं तन्त्रीमुखात् दक्षिणगुञ्ज(ञ्जं)रीयम्" कालभेदे तस्या गानं निषिद्धं तत्रैव "नाटी गौडी वराटी च गुञ्ज(ञ्जं)री दैशिरेव च। पूर्वाह्णे गानमेतेषां निषिद्धमिति तद्विदः" २रागभेदे च "गुञ्ज(ञ्जं)रीरागेकतालीतालेन गीयते" गीतगो०।

**गुञ्ज** पु० गुञ्ज—अच्। १पुष्पस्तबके शब्दर०। भावे घञ्। गुञ्जने (गुनगुन) इति २ध्वनौ च। भावे ल्युट्। गुञ्जनमप्यत्र ध्वनौ। [शब्दच०।

**गुञ्जकृत्** पु० गुञ्जं ध्वनिभेदं करोति कृ—क्विप्। १भ्रमरे

**गुञ्जा** स्त्री गुञ्ज—अच्। १लताभेदे (कुँच) तत्फलेऽपि हरीतक्यादिरित्यादणो लुक्। "तुल्या यवाभ्यां कथितात्र गुञ्जेति" लीलावती। २गोधूमद्वयमाने, राजनि० ३चतुर्धान्यमाने, वैद्यकम् "श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता। रक्ता सा काकचिञ्ची स्यात् काकणन्ती च रक्तिका। काकादनी काकपीलुः सा स्मृता काकवल्लरी" "श्वेतरक्तप्रभेदेन ज्ञेयं गुञ्जाद्वयं बुधैः। गुञ्जाद्वयं तु केश्यं स्यात् वातपित्त-

ज्वरापहम् । श्लेष्मपित्तश्वासास्यामदविनाशनम् । नेत्रामयहरं हृद्यं बल्यं कण्डूव्रणं हरेत् । कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलाऽपि च" भावप्र० तद्गुणा उक्ताः । सितगुञ्जा चाभिचारकर्मभेदे विहिता । "अर्पिता सितगुञ्जानां कुड़वं कुलिकोदये" शा० ति० नवदुर्गामन्त्राभिचारे । तत्र चार्त्तवैदिकपौराणिककर्म्मेषु नियमिता गुञ्जा वैद्यके तु रक्तवर्णमितेति भेदः । कर्षशब्दे १७७४पृ०दृश्यम् । "सहसि प्रवणैरुपाचितं न हि गुञ्जाफलमेति सोष्मताम्" माघः । "अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः गुञ्जाफलसमाकाराः स्वभावादेव योषितः" पञ्चत० । "तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते" भ्रमरा० । कर्त्तरि अच् । ४पटहे । भावे घञ् । ५कलध्वनौ मेदि० ६चञ्चार्यां त्रिका० । आधारे घञ् । ७मदिरागृहे शब्दरत्ना० । तत्र सुरासवगन्धेन भ्रमरगुञ्जावाकुलत्वात् तथात्वम् ।

**गुञ्जिका** स्त्री गुञ्जा+संज्ञायां कन् । नियमपरिमाणे शब्दच० ।

**गुटिका** स्त्री गुडिव स्वार्थे क पृषो० । वटिकायाम् वर्त्तुलाकारे पदार्थे । "समन्ने गुटिकापातः" ज्यो० । "गुटिकापातादिना व्यञ्जनं वा विभागः" दायभागः । "निर्धौतहारगुटिकाविशदं हिमाम्भः" रघुः । कवभावे ङीप् गुटीत्यपि तत्रार्थे ।

**गुटिकाञ्जन** न० "गैरिकं सैन्धवं कृष्णा नागरञ्च यथोत्तरम् । द्विगुणं पिष्टमद्भिस्तु गुटिकाञ्जनमिष्यते" सुश्रुतोक्ते १अञ्जनभेदे । गुटिका वटिका तथाभूतमञ्जनमित्यर्थः । "अञ्जनं क्रियते येन तद्द्रव्यमञ्जनं मतम् । रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम्" भावप्र० । सुश्रुतेऽपि "वटिकारसचूर्णानि त्रिविधान्यञ्जनानि च" ।

**गुठ** वेष्टने चुरा० उभ० इदित् सक० सेट् । गुण्ठयति-ते अजुगुण्ठत्-त । गुण्ठितः गुण्ठनम् । "प्रतिपद्य यदा स्ततुर्धरणीरेणुगुण्ठितः" भा०आ० ७४ अ० । "अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः" सर्वद० । अव+समन्तात्-वेष्टने । "रजनीतिमिरावगुण्ठिते पुरमार्गे" कुमा० ।

**गुड़** वेष्टने रक्षणे चूर्णने च चुरा० उभ० इदित् सक० सेट् । गुण्डयति-ते अजुगुण्डत्-त । गुण्डः गुण्डिता । गुण्डनं गुण्डा । [अगुडीत् जुगोड ।

**गुड़** रक्षणे आघाते च तुदा० कुटा० पर०सक०सेट् । गुडति ।

**गुड़** पु० गु-ड कित् । १इक्षुविकारे इक्षुशब्दे ८०६ पृ० विवृतिः । "ऐक्षवं गुडवर्जितम्" ति०त० । गुडेन निर्वृत्तादि गुड+अण्०र । गुडर गुडनिर्वृत्ते त्रि० । गुडाय साधु गुडा० ठञ् । गौडिक गुडसाधने इक्षौ । भक्ष्येण मिश्रणे अ० गुडधाना गुडौदन गुडमिश्रितधानादौ । "सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः" वैद्यकम् । २गोले वर्त्तुलाकारपदार्थे "माहुरायसन् महीपाल ! कार्ष्णायसमया गुडाः" भा० द्रो० २०० अ० ३हस्तिसन्नाहे मेदि० । ४ग्रासे हेमच० । ५कार्पासी स्त्री राजनि० । ६स्नुहीवृक्षे स्त्री गुडाप्रायाः केशा यस्य । गुडाकेशः अर्जुनः । उज्ज्वलद० ।

**गुडक** त्रि० गुडेन पक्वः या० कन् । १गुडपक्वे औषधादौ गुड+स्वार्थे क । २गोलाकारे पदार्थे । "सभुशुण्डिप्रासगुडकाः" भा०व० १५अ० । "प्रासगुडकाः सर्वलौहाः प्रासाभाः" नील० । "नीतौ च तद्युक्तात्" पा० परम्परया अनुकम्पायाम् कन् । अनुकम्प्यपुत्रादौ दीयमाने ३गुडद्रव्ये च । इन्त ते धानकाः गुडका एकम्" सि०कौ० ।

**गुडकरी** स्त्री रागिणीभेदे हलायु० ।

**गुडकुष्माण्डक** न० चक्रदत्तोक्ते औषधभेदे यथा ।

"कुष्माण्डकं पलशतं सुस्विन्नं निष्कुलीकृतम् । प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत् । त्वक्पत्रधन्याकव्योषजीरकैलाद्वयानलम् । ग्रन्थिकं चव्यमातङ्गपिप्पलीविश्वभेषजम् । शृङ्गाटकं कसेरुञ्च प्रलम्बं तालमस्तकम् । चूर्णीकृतं पलांशञ्च गुडस्य च तुलां पचेत् । शीतीभूते प्रदाप्यन्तौ मधुनः संप्रदापयेत् । कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते । कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् । प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः । क्षयेण च गृहीतानां परमेतद् भिषग्जितम् । कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् । गुडकुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् । खण्डकुष्माण्डवत् पाकं स्निग्धकुष्माण्डकद्रवः ।"

**गुडची** स्त्री गुडेन चीयते ची-ड गौ०ङीष् । गुडूच्याम् भरतः ।

**गुडतृण** न० गुडसाधनं तृणप्रधानं या तृणम् शा०त० । १इक्षौ राजनि० पृषो० । गुडतिक्तमप्यत्र शब्दरत्ना० ।

**गुडत्वच्** स्त्री गुड इव मधुरा त्वग् यस्याः । (दारचिनि) ख्याते पदार्थे शब्दरत्ना० । "त्वक् स्वाद्वी तु गुडत्वक् स्यात् तथा दारुसिता मता । उक्ता दारुसितं स्वाद्वी तिक्ता

१शिंशपायाम् । शब्दार्थचि० । २महाकारे वस्तुमात्रे त्रि०

**गुरुस्कन्ध** पु० गुरुः स्कन्धोऽस्य ।१पर्वतभेदे । "गुरुस्कन्धो महेन्द्रश्च माल्यवान् पर्वतस्तथा । एते पर्वतराजानः" भा० आनु० ४२ अ० । २श्लेष्मातकवृक्षे शब्दार्थचि० ।

**गुरुहन्** पु० गुरुं गुरुपाकं हन्ति हन–क्विप् । १दुर्जरघ्ने गौरसर्षपे हेमच० २गुरुहन्तरि त्रि० ।

**गुरूत्तम** त्रि०गुरुषु गुरूणां वा उत्तमः ।१पूज्यतमे २परमेश्वरे पु० । "तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः" आत्म० वि० । अत्र "न निर्द्धारणे" पा० षष्ठीसमासनिषेधात् सप्तमीतत्पुरुष इति बहवः । कैयटस्तु "यस्मान्निर्द्धार्य्यते यच्च निर्द्धार्य्यते यच्च निर्द्धारणहेतुरेतत्त्रितयसन्निधाने सत्येवायं निषेधः इति "द्विवचने विभज्योपपदे" पा० सूत्रे भाष्यकार आह च । पुरुषोत्तम इत्यादौ त्रितयसन्निधानाभावात् न निर्द्धारणविभक्तिः किन्तु सम्बन्धसामान्ये षष्ठीति तया समासः । अतएव "कृत्वादिः शेषः" पा० सूत्रे "कृत्वामादिरिति षष्ठीसमास" इत्युक्तं भाष्ये इत्युवाच "न निर्द्धारणे इति"सूत्रस्थो नृणां द्विजः श्रेष्ठः इत्युदाहरता च कौमुदीकारेण त्रितयसन्निधान एव समासाभावः सूचितः । यत्तु गदाधरेण एतदनालोच्य, षष्ठीसप्तमीसमासयोः स्वरकृतवैलक्षण्यस्थानालोच्य "न निर्द्धारणे" इत्यस्य षष्ठीसमासप्रकरणस्थानत्वेऽपि निर्द्धारणषष्ठ्या समासनिषेधे तदर्थकसप्तमीसमासोऽपि निषिद्धः अन्यथा प्रयोगसामर्थ्यात् सूत्रवैयर्थ्यमतो गुरूत्तम इत्यत्र पञ्चमीतत्पुरुषोऽङ्गीकृतः, तत्तु शाब्दिकमात्रम् तथा हि "पञ्चमी विभक्ते" पा०सूत्रे निर्द्धार्य्यमाणस्य भेद एव पञ्चमीविधानात् तयोः सामान्यधर्माक्रान्तत्वाभावे एव तस्याः प्रवृत्तेः । यथा माथुराः पाटलिपुत्रेभ्य आढ्यतमाः अत्र पाटलिपुत्रस्थलोकानां माथुराणां च केनापि रूपेण सामान्यधर्मत्वाभावेन उभयोर्भेद एव इति तत्र पञ्चमीप्रवृत्तिः । गुरूत्तम इत्यादौ तु ईशस्यान्यगुरुनिष्ठगुरुत्वरूपसामान्यधर्माक्रान्तत्वात्तदप्रवृत्तेर्न पञ्चमीसमासः "अक्षरादपि चोत्तमः" (गीता) इत्यादौ तु अक्षराचेतनत्वात् तदपेक्षेति व्याख्या न्यायमते जीवेश्वरयोर्भेदेऽपि चेतनत्वसामान्यधर्माक्रान्तत्वेन तयोर्भेदाभावात् न पञ्चमीप्रसक्तिः । वेदान्तिमते अक्षरशब्दस्य मायापरत्वात् ईशमाययोर्भेदसत्त्वात् पञ्चमीप्रसक्तिसम्भावनायामपि तथा पञ्चम्या न समासप्रसक्तिः पञ्चमीतत्पुरुषस्य वक्ष्यमाणसूत्रेभ्यो विषयविशेषनियतत्वेनात्र तदप्रसक्तेः । अक्षरशब्दस्य मायापरत्वञ्च गीताव्याख्यायां मधुसूदनेन दर्शितं यथा

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" गीता । "द्वौ इमौ पृथग्राशीभूतौ पुरुषोपाधित्वेन पुरुषशब्दव्यपदेश्यौ लोके संसारे, कौ तावित्याह क्षरश्चाक्षर एव च । क्षरतीति क्षरो विनाशी कार्य्यराशिरेकः पुरुषः, न क्षरतीत्यक्षरो विनाशरहितः । क्षरस्य पुरुषस्योत्पत्तिबीजं भगवतो मायाशक्तिर्द्वितीयः पुरुषः । तौ पुरुषौ, व्याचष्टे स्वयमेव भगवान्, क्षरः सर्वाणि भूतानि समस्तं कार्य्यजातमित्यर्थः कूटस्थः कूटो यथार्थवस्त्वाच्छादनेनायथार्थवस्तुप्रकाशनं वञ्चनं मायेत्यनर्थान्तरं तेनावरणविक्षेपशक्तिद्वयरूपेण स्थितः कूटस्थः भगवन्मायाशक्तिरूपः कारणोपाधिः संसारबीजत्वेनानन्त्यादक्षर उच्यते । केचित्तु क्षरशब्देनाचेतनवर्गमुक्त्वा कूटस्थोक्षर उच्यत इत्यनेन जीवमाहुः तन्न सम्यक्, जीवस्यैवेह पुरुषोत्तमत्वेन प्रतिपाद्यत्वात् तस्मात् क्षराक्षरशब्दाभ्यां कार्य्यकारणोपाधी उभावपि जडावेवोच्येते इत्येव युक्तम् । आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः" (गीता) । उत्तम उत्कृष्टतमः पुरुषस्त्वन्यः अन्य एव अत्यन्तविलक्षणः आभ्यां जडराशिभ्याम्, उभयभासकस्तुरीयचेतनराशिरित्यर्थः । परमात्मेत्युदाहृतः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेभ्यः पञ्चभ्योऽविद्याकल्पितात्मभ्यः परमः प्रकृष्टोऽकल्पितः "ब्रह्म पुच्छं प्रतिष्ठा" इत्युक्त आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युक्तो वेदान्तेषु यः परमात्मा लोकत्रयं भूर्भुवःस्वराख्यं सर्वं जगदिति यावत् आविश्य स्वकीयया मायया शक्त्याधिष्ठाय बिभर्त्ति सत्तास्फूर्त्तिप्रदानेन धारयति पोषयति च कीदृशः अव्ययः सर्वविकारशून्यः ईश्वरः सर्वस्य नियन्ता नारायणः स उत्तमः पुरुषः परमात्मेत्युदाहृत इत्यन्वयः" । अतः "यस्मात् क्षरमतीतोऽक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" गीतावाक्ये अक्षरादित्यत्र ल्यब्लोपे पञ्चमी मध्यपदलोपः अक्षरमतीत्य उत्तम इत्यर्थः । पुरुषोत्तम इत्यत्र पुरुषपदार्थानां पुरुषोपाधिद्वयतद्विलक्षणरूपपुरुषाणां मध्ये उत्तम

इत्यर्थः द्वाविमाविति क्षराक्षरपुरुषयोः “उत्तमः पुरुष स्त्वन्य” इति त्रयाणामेव पूर्वं प्रक्रान्तत्वात्तेषां मध्ये एव परमात्मन उत्तमत्वेन निर्द्धार्य्यमाणत्वात् अतो न तत्रापि पञ्चमीसमासः । तथाहि “पञ्चमी भयेन” पा० “अपेतापोढमुक्तपतितापत्रस्तैरल्पशः” “स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन” पा० सूत्रैः पञ्चमीतत्पुरुषस्य विधानात् तन्मध्ये च एतत्पञ्चम्याः पाठाभावात् नात्र पञ्चमीतत्पुरुषः किन्तु सप्तमीसमासः षष्ठीसमासो वेत्यवेति ज्यायः ।

**गु(गू)र्जर** पु० दक्षिणदेशस्थे देशभेदे सोऽभिजनोऽस्य अण् । गौर्ज्जर तद्देशवासिनि बहुषु लुक् । महाराष्ट्राश्च तैलिङ्गाद्रविडा गु(गू)र्ज्जराश्च या” इत्यविधब्राह्मणकथने ।

**गु(गू)र्द** कूर्दने भ्वा० आत्म० अक० सेट् । गूर्दते अगूर्दिष्ट । जुगूर्दे । अद्युक्तस्य क्विपि गूः गुरौ गुरः । दीर्घान्वितस्य गूः गूरौ गूर इति भेदः ।

**गु(गू)र्द** निवासे कूर्दने च चुरा० उभ० अक० सेट् । गु-(गू)र्दयति ते अजुगु(गू)र्दत्-त ।

**गुर्व** उद्यमे भ्वा० पर० अक० सेट् । गूर्वति अगूर्वीत् । जुगूर्व ईदित् गूर्णः ।

**गुर्विणी** स्त्री गुरुर्गर्भोऽस्त्यस्याः ब्रीह्यादित्वात् इनि नि० गुणाभावः, गर्व—गतौ “सर्वेरत उन्नेति” उणा० इनन् गौरा० ङीष् वा । गर्भिण्याम् । “उत्तरां त्वमवेक्षस्व गुर्विणीं मा शुचः शुभे !” भा० आश्व० ६१अ० । “गुर्विणी नानुगच्छन्ति न स्पृशन्ति रजस्वलाम्” आनायुष्योक्तौ ।

**गुर्व्वादित्य** पु० गुरुणा सह आदित्यो यत्र । ज्योतिषोक्ते कालाशुद्धिहेतौ एकराश्येकनक्षत्रस्थयोर्जीवादित्ययोर्योगभेदे “गुर्वादित्ये दशाहिकम्” ज्यो०त० । “एकराशौ गतौ स्यातामेकर्क्षविषये यदि । गुर्वादित्यौ, तदा त्याज्या यज्ञोद्वाहादिकाक्रियाः” राजमा० । “गुर्वादित्ये दशाहे स्यात्” नक्षत्रभेदविषयम् । अत्यन्तावश्यकत्वे भुजबलभीमः “जीवोऽर्केण युतः करोति मरणं, बालांशुको भार्गवः नचात्र कवतो वदन्ति मरणं, पादस्थितो देवलः” तथा च एकराशिस्थत्वेऽकालः अत्यन्तावश्यकत्वे एकनक्षत्रपादस्थितौ दशाहं त्यक्त्वा यज्ञादि कर्त्तुं शक्यते इति व्यवस्था ।

**गुर्व्वी** स्त्री गुरु—ङीष् । १गर्भवत्याम् “न हि वन्ध्या विजानाति गुर्वीप्रसववेदनाम्” हितो० २गौरवयुक्तस्त्रीलिङ्गार्थकपदार्थे च “गुर्वीरजस्रं द्रषदः समन्तात्” माघः ।

यत्तु “अनन्यगुर्वास्तव केन केवलम् पुराणमूर्त्तेः” च पदो अन्यगुर्व्या इति पाठं कल्पयित्वा शब्दक० उदाजहार तत् प्रामादिकं “न विद्यतेऽन्या गुर्व्यस्यास्तस्या अनन्यगुर्व्या इत्यनीकारान्तः पाठः एव साधुः समासात् प्राक् ङीपि “नद्यृतश्चेति” पा० कप्प्रत्ययः स्यात् पश्चात्तु उपसर्जनाधिकारात् “गोतो गुणवचनादिति” न प्राप्नोतीति । तद्रूपसिद्धिस्तु “ङिति ह्रस्वश्चेति” पा० वा नदीसंज्ञत्वाभावयाम् “आण्नद्याः” पा० इत्याडागमात्” मल्लि० । समासान्तस्य विधेरनित्यत्वकल्पनेन कबभावकल्पनस्यागतिकविषयत्व स्वीकारात् अत्र तथाऽकल्पनेऽपि छन्दोदोषाप्रसङ्गात्” इति विभाव्यम् । ३गुरुस्त्रियाञ्च । [टाप् मेदि० ।

**गुल** पु० गुड+डस्य लः । १ऐक्षवे गुडे २गुडिकायां स्त्री

**गुलञ्चकन्द** पु० गुलं गुडरसमञ्चति अन्च—अण् शक० । गुलञ्चः कन्दोऽस्य । (कुली) भाषाप्रसिद्धे कन्दभेदे राजनि० ।

**गुलिका** स्त्री गुडः गोलाकारः अस्त्यस्य ठन् । १गुटिकायां गोलाकारायां वटिकायां (वसन्त) २रोगभेदे च मेदि० । “हतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । रञ्जितान् क्षीरमरिचैरिमांस्तु गुलिकां विदुः” इत्युक्ते ३पक्वकुष्माण्डभेदे च । [याम् (वसन्त) २रोगे च मेदि० ।

**गुली** स्त्री गुडाकारोऽस्त्यस्याः अच् गौरा० ङीष् । १गुटिका-

**गुलगुधा** अव्य० । सहार्थे । ऊर्य्यादि० पा० ग० सू० ।

**गुलुच्छ** गुच्छ+पृषो० । गुच्छे स्तवके त्रिका० । “कोषातकीपुष्पगुलुच्छ(ञ्छ)कान्तिभिः” माघः ।

**गुलुञ्छ** पु० गुड—क्विप् गुलं गोलाकारमुञ्छति बध्नाति उञ्छि—बन्धने अण् उप० समा० डस्य लः । स्तवके हेमच० स्वुन् । गुलुञ्छक तत्रार्थे शब्दरत्ना० । गुलुञ्च इति हारा० पाठः तत्रार्थे । तत्र गुलु—अञ्च—अच् पृषो० साधु

**गुल्फ** पु० गुल—फक् नि० अलोपः । पादग्रन्थौ । “अङ्गुलीनां द्वे पार्ष्ण्योर्गुल्फेषु च द्वन्दवम्” याज्ञ० । “आगुल्फकीर्णापणमार्गपुष्पम्” कुमा० । “गुल्फैरतितनुभिरतिसङ्गिभिर्वा” दृ०स० ६१अ० । गुल्फस्य मूलं कर्णा० आहच् । गुल्फजाह गुल्फमूले न० ।

**गुल्म** पु० गुड—रक्षणे वेष्टने वा मक् डलयोरैक्यात् डस्य लः । १प्रधानपुरुषाधिष्ठिते रक्षके पुरुषसंघे, (गजाः६, रथाः६, अश्वाः २७, पदातयः ४५) एतत्संख्यान्विते २सैन्यसमुदाये, स्वनामख्याते ३रोगभेदे, अमरः । चक्रदेशे रक्षणार्थं स्थापिते ४सैन्ये, ५अप्रकाण्डे लतादौ मेदि० एकमूलेषु सङ्घातजातेषु शरेक्षुप्रभृतिषु ६तृणभेदेषु, कुल्लू० ।

मनुः । "जुगूहे दक्षिणे पार्श्वे" भा०वि० २३५ श्लो० ।
"गूहन्ति मेघा इव रश्मिवन्तम्" भा० भी० ७८२ श्लो०।
"आकारो गूहितः यत्नः" भा० द्रो० ४४७ श्लो० ।
"अगूहयद्भावमितीङ्गितज्ञया" कुमा० । णिच् गूह-
यति ते अजूगुहत् त । "न देवानपि जुगुतः सुमति न
जुगुक्षतः" ऋ० ८।३१।७ । क्विप् गुह् गुहौ गुहः ।
"विश्वायुरग्ने गुहा गुहं गाः" ऋ० १।६७।२ ।
अप+अपनयने "अपागूहन्नमृतां मर्त्येभ्यः" ऋ० १०।१७।
२ । "अपागूहन् अपनीतवन्तः" भा० । संवरणे च ।
"आत्मानमप गूहथाः" अथ० ४।२०।५ ।
अव+अवगूहने । "यूपमवगूहति" शत० ब्रा० ३।
७।१।२२ । "स्रुचमीषं संगृह्य पुरस्तादवगूहति" ५।२।
५।२१। [ ५।२।१।१५।
उद्+उद्गमन संवरणे । "नौमिवोद्गूहते" शत० ब्रा०
उप+आलिङ्गने "नाहं त्वोपगूहेयम्" भट्टिः "छाया-
पटेनोपजुगूह वल्लीः" रघुः । "उपगूढानि सवेपथूनि
च" कुमा० । "तरङ्गहस्तैरुपगूहतीव" रघुः आच्छादने
च । "क्वचित् कराभ्यामुपगूढनालम्" रघुः ।
नि+अतिगूढसंवरणे । "देवालयेषु सन्निगूहताम्"
श्वेता०उप० गतादिपूर्वस्य तत्तदुपसर्गद्योत्यार्थसंयुतसंवरणे
गुह पु० गूहति देवसेनाम् गुह–क । १ कार्त्तिकेये
"सैनापत्येन देवानामभिषिक्तो गुहस्तदा" भा०व०
१८ अ० । "अथैनमब्रुवः सर्वे देवसेनाः षडाननः ।
अस्माकं त्वं पतिरिति गुहवाचाः सर्वतो दिशः" भा०व०
२२८ अ० । "गुहोऽपि येषां प्रथमाप्तजन्मनाम्" कुमा०
तस्य देवसेनारक्षकत्वेन सेनापतित्वात् तथात्वम् ।
भा०आनु० ८५ अ० गुहनामनिरुक्तिरुक्ता यथा
"आहत्वात् स्कन्दनामासं गुहावासाद्गुहोऽभवत्" । अस्मिन्
पक्षे गुहा आवासत्वेनास्त्यस्य अच् । २ अश्वे पुंस्त्री गन्ध-
रत्ना० एतदाशयेन "मतङ्गा विषयोनयः" कुमा० उक्तम् ।
देवत्वात्तद्रूपविक्रीतृपक्षत्वात्तथात्वम् । ३ शरभेदे । "शरणं
कारणं कर्त्ता निर्मिता गहनो गुहः" विष्णु०स०।
"गूहति संवृणोति स्वरूपं मायेति गुहः" भा० "नाहं
प्रकाशः सर्वस्य योगमायासमावृतः" इति गीतोक्तेरस्य
स्वमायया स्वात्मस्वरूपसंवरणात्तथात्वम् । गुहा हृदयगुहा-
हृदयाद्याश्रयत्वात् वा तथात्वम् । गुहाशयशब्दे दृश्यम् ।
रामायणप्रसिद्धे शृङ्गवेरपुराधीशे चण्डालजातीये
४रामसित्रे च पु० । "आसाद्य महावीरः शृङ्गवेरपुरं
प्रति" इत्युपक्रमे "तत्र राजा गुहो नाम रामस्यात्म-
समः सखा । निषादजात्यो बलवान् स्थपतिश्चेति
विश्रुतः" इत्यादिना "अहं सौमित्रिणा सार्धं समागमत्
गुहेन स" इत्यन्तेन रामा० अयोध्याकाण्डे तद्वृत्तान्-
तम् । ५ सिंहपुच्छीलतायाम् (चाकुलया) ६ पर्वतादिग-
ह्वरे स्त्री मेदि० । तस्य सर्वजनसंवारकत्वात् तथात्वम् ।
"गुहानिबद्धप्रतिशब्ददीर्घम्" "प्रतिस्वनेनास्य गुहागतेन"
रघुः ७ शालपर्णीवृक्षे (शालपानि) राजनि० ८ अतिवि-
द्वेषकाते,१०हृदये च स्त्री शब्दार्थचि०। हृदयस्य गुहा-
सदृशत्वात् तथात्वम् यथाह शत० ब्रा० ११।२।६।५ ।
"तस्मादिदं गुहा हृदयम्" । "गुहां प्रविष्टौ सुकृतस्य
लोके" श्रुतिः ११मायायां च । "योग वेद निहितं
गुहायां परमे व्योमन्" श्रुतिः गुहाहितं गह्वरेष्ठं
पुराणम्" "आत्मा गुहायां निहितः" श्रुतिः ।
इत्या०भाष्यादृतः । १२गुहाविशेषदेवताकायाम् स्त्री ।
"गुहाभ्यः किरातम्" यजु० ३०।१७ । १३पृश्निपर्ण्याम् ।
१४गुप्तौ । गुह–भावे भिदा० अङ् । १५संवरणे स्त्री ।
गुह+अस्त्या० अर्थे र । गुहर तद्युक्ते त्रि० । [उक्तम् ।
गुहराज पु० ह०सं० ५५।अ० कथिते प्रासादभेदे प्रासादशब्दे
गुहलु पु० गोत्रप्रवर्त्तके ऋषिभेदे ततो गर्गा० अपत्ये
यञ् । गौहलव्य तद्गोत्रापत्ये पुंस्त्री ।
गुहषष्ठी स्त्री गुहप्रिया षष्ठी तज्जन्मदिनत्वात् शाक०
त० । "नेयं मार्गशिरे मासि षष्ठी भरतसत्तम ! ।
इत्थं पापहरा धन्या शिवा शान्ता गुहप्रिया" ति०
त० भविष्योक्ते मार्गशुक्लषष्ठीतिथौ । इयं बार्हस्पत्यादि-
योगेन चम्पेति कीर्त्त्यते यथाह ति० त० ब्रह्मा० पु०
"मार्गे मासि सिते पक्षे षष्ठी वैधृतिसंयुता । रविवारेण
संयुक्ता सा चम्पेति कीर्त्तिता" "विशाखाभौम-
योगेन सा चम्पेत्यभि कीर्त्त्यते" इति मदनरत्ने पाठः ।
गुहस्य षष्ठ्यां जातत्वोक्ता भा०व०२२४अ० "तस्मिन्
कृष्णे प्रतिपदि कालिका आहृता तदा । तत्स्कन्दं तेज-
सा तत्र संवृतं जनयत् सुतम्" इत्युपक्रमे "द्वितीया-
यामिति व्यक्तस्तृतीयायां शिशुर्बभौ । अङ्गप्रत्यङ्गसम्भूत-
श्चतुर्थ्यामभवद्गुहः" इत्युक्त्वा २२८अ० "तदा तदाश्रया-
लक्ष्मीः स्वयं देवी शरीरिणाम् । श्रीजुष्टं पञ्चमीं
स्कन्दस्तस्मात् श्रीपञ्चमी स्मृता । षष्ठीं कृतार्थोऽभूद्य-
स्मात् तस्मात् षष्ठी महातिथिः" उक्तम् । इयमेव स्कन्द
षष्ठीति ति० त० उक्तम् । ति० त० तु चैत्रशुक्लपक्ष्या

एव ब्रान्दग्योक्तं व्यवस्थापितं तत्र छान्दग्योग्रब्दे वक्ष्यते । देशभेदाद्व्यवस्था

**गुहाचर** न० गुहान्ते प्राह्रुते यत्रागपदार्थो यस्नात् गुह-यत्रर्थे क गुहा बुद्धिस्तत्र चरति विषयतया चर-ट । १ब्रह्मणि ।

"मनसैवानुद्रष्टव्यम्" इति श्रुतौ तस्य मनोवृत्तिमात्रवेद्यत्वात्तथात्वम् । "आविः सन्निहितं गुहाचरं नाम महत् पदमत्रैतत् समर्पितम्" माण्डू० उ० ।

"आविः प्रकाशं सन्निहितं रागाद्युपाधिभिश्चरति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते । दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम् । यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक् स्थितं हृदि तद् गुहाचरं नाम गुहायाञ्चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम्" भा०

**गुहातदरी** स्त्री गुहा गुह्या वदरीव । (मालपाण) ख्याते वैद्यकम् ।

**गुहाशय** पु०स्त्री–गुहायां गर्त्ते शेते शी–अच् । १मूषिके शब्दार्थचि० २सिंहादिषु जन्तुषु शाब्दप्र० यथा "सिंहव्याघ्रक्का अजगरश्छीपिनस्तथा । वभ्रुजम्बुकमार्जार इत्याद्याः स्युर्गुहाशयाः" । तन्मांसगुणा भाव०प्र० उक्ता यथा "गुहाशया वातहरा गुरूष्णा मधुराश्च ते । स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणाम्" । स्त्रियामुभयत्र जातित्वेऽपि योपधत्वात् टाप् । गुहायां हृदि शेते । ३परमात्मनि । "एवं हि यो वेद गुहाशयं प्रभुम्" भा०आनु०४०अ० । "सर्वभूतगुहाशयः" श्वेता०उ० । "गुहायां बुद्धौ शेते इति सर्वभूतगुहाशयः" भा० स्वापकाले हृदयेषु शायिनि ४प्राणे "सप्त इमे लोकायेषु चरन्ति प्राणा गुहाशयानिहिताः सप्त सप्त" मुण्ड०उ०

**गुहाहित** पु० गुहायां बुद्धौ हृदये वा आहितः । हृदिस्थे बुद्धग्राह्ये परमात्मनि । "गुहाहितं गह्वरेष्ठं पुराणम्" कठ०उ०

**गुहिन** न० गुह–बा० इनन् । वने शब्दरत्ना०

**गुहिल** न० गुह–गुणा० इलच् किच्च । १धने उज्ज्व०द० । गुहा+काशा०चतुरर्थ्याम् इलः । २गुहासन्निकृष्टदेशादौ त्रि०

**गुहेर** त्रि० गुह–एरक् । १गोप्तरि २लोहकारे सि०कौ० ।

**गुह्य** त्रि० गुह–भावादौ–क्यप् काशिका । १गोपने २गोप्ये अमरः "गुह्याद्विगुह्यगोप्ता त्वम्" जपसमापनमन्त्रः । ३उपस्थे स्त्रीपुंसचिह्ने न० । गुहामर्हति दण्डादि०यत् । ४कमठे पु०स्त्री स्त्रियां योपधत्वात् टाप् । ५दम्भे पु० मेदि० । "गुह्यो गभीरो गहनः" विष्णुस० उक्ते ६विष्णौ पु० "गूहितुं योग्यं गुह्यं वेदरहस्यं तद्वेद्यत्वात् तथाऽयवा गुह्यो विष्णुः गुहायां हृदाकाशे निहित इति वा गुह्यः" भा० ।

**गुह्यक** पु०गूहन्ति रक्षन्ति निधिं गुह–ण्वुल् पृषो०यगागमः । "निधिं गूहन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञकाः इति व्याडिः । गुह्यं कुत्सितं कायति कै-शब्दे कः गुह्यं गोपनीयं कं सुखं येषामिति वा अनयोः पक्षयोः "शंसिदुहिगुहिभ्योवेति" काशिकावचनात् गुहेः क्यप् । १देवयोनिभेदे तल्लोकप्राप्तिकर्मभेदाः काशी० ख० उक्ता यथा "गुह्यकानामयं लोकस्ते वै गुह्यकाः स्मृताः" "न्यायेनोपार्ज्य वित्तानि गूहयन्ति च ये भुवि । स्वमार्गगा धनाढ्याश्च शूद्रप्रायाः कुटुम्बिनः । संविभज्य च भोक्तारः क्रोधालस्यविवर्जिताः । न तिथिं नैव वारञ्च संक्रान्त्यादि न पर्व च । नाधर्मञ्च न धर्मञ्च विदन्त्येते वदान्यकाः । एकमेव हि जानन्ति कुलपूज्योहि यो द्विजः । तस्मै गाः संप्रयच्छन्ति मन्यन्ते तद्वचः स्फुटम् । सन्नतिभाजोऽह्यपि तेन पुण्येन गुह्यकाः । भुञ्जते स्वर्गसौख्यानि देववत्सकुतोभयाः" । २पक्वान्नभेदे तत्पाकप्रकारो यथा "समितां सर्पिषा भृष्टां सिताद्राक्षादिसंयुताम् । एलालवङ्गकर्पूरमरीचपरिवासिताम् । पिष्टिकाञ्च समिताखण्डे वेष्ट्य घृते पचेत् । ततः खण्डे न्यसेत् पक्वे गुह्यकोऽयमुदाहृतः । गुह्यको वृंहणो हृद्यो रुच्यः पित्तानिलापहः मधुरोऽतिगुरुः पाके स्निग्धः सन्धानकृत् परः" पाकशा०

**गुह्यकाली** स्त्री नित्यकर्म० विश्वसारतन्त्रोक्ते देवीमूर्त्तिकाली भेदे तन्मन्त्राद्युक्तं तत्र यथा "अथ वक्ष्ये महेशानि ! विद्यां सर्वफलप्रदाम् । चतुर्वर्गप्रदां साक्षात् महापातकनाशिनीम् । सर्वसिद्धिप्रदां नित्यां भक्तिमुक्तिप्रदायिनीम् । गुह्यकालीं महाविद्यां त्रैलोक्ये चातिदुर्लभाम् । दन्त्यादि(र)सहं वामाक्षं रतिबिन्दुविभूषितम् (क्रीं) । त्रिगुणञ्च ततः कृत्वा वैयासञ्च समुद्धरेत् । चक्रधरसमायुक्तं बिन्दुनादकलान्वितम् (हूं) । द्विगुणञ्च ततः कृत्वा दैवमर्थं समुद्धरेत् । मायाक्षिपत्रिसंयुक्तं नादबिन्दुकलायुतम् (ह्रीं) । तद्गुणञ्च कालिके चाद्याः चापवा दक्षिणे वदेत् । वह्निजायां ततः पश्चात् त्रैलोक्यमोहिनी

त्मिवम्”। अथ मेति गुह्ये कार्त्तिके। इत्थिके कार्त्तिके” भा

**गुह्यकेश्वर** पु० ६त०। कुवेरे।

**गुह्यगुरु** पु० कर्म०। शिवे महादेवे त्रिका०

**गुह्यदीपक** पु० स्वयं गुह्यः सन् दीपयति दीपि–ण्वुल्। गुह्यप्रदीप इव कायति कै–क वा। खद्योते (जोनाकी-पोका) शब्दमा०। [अच्। मूले राजनि०

**गुह्यनिष्यन्द** पु० गुह्यात् उपस्थात् निष्यन्दते नि+स्यन्द

**गुह्यपुष्प** पु० गुह्यं पुष्पमस्य। अश्वत्थवृक्षे राजनि०

**गुह्यभाषित** न० गुह्यं गुप्तं भाषितम्। १मन्त्रे जटाध० २गुप्तवाक्ये च।

**गुह्यमय** पु० गुह्यप्रचुरः प्राचुर्य्ये मयट्। कार्त्तिकेये “आग्नेयः कृत्तिकापुत्रो रौद्रो माङ्गेय इत्यपि। श्रूयते भगवान् देवो सर्वगुह्यमयो गुहः” भा०आ०१२७अ०

**गुह्यबीज** पु० गुह्यं बीजमस्य। भूतृणे राजनि०

**गुह्याष्टक** न० भारभूत्यादितीर्थाष्टके। तत्र यथा “भारभूत्याषाढिडिण्डिकाकुरुजनरपुष्कराः। प्रभासनैमिषौ चेति गुह्याष्टकमिदं जपे” इति खगेन्द्र० सं०।

**गू** विष्ठात्यागे तुदा० कुटा०पर०सक०सेट्। गुवति अगुवीत् जुगाव। ओदित् गूनः। गूयम्।

**गू** स्त्री गच्छत्यपानेन देहात् गम–कू डिलोपश्च। १विष्ठायां, २मले च। गूधातोः क्विप्प्रत्ययान्तताकथनं पुंलिङ्गताकथनञ्च प्रामादिकम्।

**गूढ** त्रि० गुह–क्त। १गुप्ते २संवृते च अमरमेदिन्यौ। “कामिनीकुचकलशवत् गूढं चमत्करोति” सा०द० “गूढाकारेङ्गितस्य च” रघुः।

**गूढचारिन्** त्रि०गूढः सन् चरति चर–ड। १गुप्तीभूयचारिणि गुप्तचरणस्य चौर्य्यमहाहेतुः यथोक्तं याज्ञवल्क्येन “अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः। द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः। परद्रव्यगृहाणाञ्च प्रच्छका गूढचारिणः। निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः। गृहीतः शङ्कया चौर्य्ये नात्मानं चेद्विशोधयेत्। दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत्”।

**गूढज** पु० गूढ–गुप्तः सन् जायते जन–ड। पुत्रभेदे “गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतो मतः” याज्ञ०। गूढोत्पन्नशब्दे विवृतिः।

**गूढनीड** पुंस्त्री गूढं नीडं वासस्थानं यस्य। खञ्जनखगे तद्वृक्षतले खञ्जनस्य नीडं न केनापि दृश्यते इति ग्रन्थकारे जाति-त्वात् ङीष्। [राजनि०।

**गूढपत्र** पु० गूढं पत्रमस्य। १अङ्कोठे, २करीरे च रा-

**गूढपथ** पु० गूढः पन्थाः यस्य अच् समा०। १अन्तःकरणे शब्दार्थचि०कर्म०। २गुप्ते मार्गे च

**गूढपाद** पुंस्त्री गूढः पादोऽस्य पृषो०। १सर्पे अमरः

**गूढपाद** पुंस्त्री गूढः पादोऽस्य। १सर्पे शब्दरत्ना० “महीधरमिव चेतं गूढपादैर्विषोल्बणैः” भा० कर्ण० १२१ अ०। स्त्रियां जातित्वात् ङीषि पादः पदादेशः गूढपदी। २गुप्तपादयुक्ते त्रि०“उपानद्गूढपादश्च”हितो०।

**गूढपुरुष** पु०कर्म०। गुप्तचरे, प्रणिधौ अमरः। [राजनि०।

**गूढपुष्पक** पु० गूढानि संवृतानि पुष्पाण्यस्य। अश्वत्थवृक्षे।

**गूढफल** पु०गूढं यथा तथा फलति अच्। बदरे शब्दार्थचि०

**गूढमार्ग** पु०नि०कर्म०। भूमेरन्तर्गते सुरङ्गाख्ये पथि हेमच०

**गूढमैथुन** पुंस्त्री गूढं केनाप्यदृष्टं मैथुनं यस्य। काके। स्त्रियां जातित्वात् ङीष्।

**गूढवर्चस्** पुंस्त्री गूढवर्चोऽस्य। भेके त्रिका०।

**गूढवल्लिका** स्त्री कर्म०। अङ्कोठवृक्षे राजनि०।

**गूढव्यङ्ग्या** स्त्री गूढं काव्यार्थभावनापरिपक्वबुद्धिमात्रवेद्यम् व्यङ्ग्यं यत्र। लक्षणाभेदे “व्यङ्ग्यस्य गूढागूढत्वात् द्विधा स्यात् फललक्षणा” सा०द०। यथा “उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्। विदधदीदृशमेव सदा सखे। सुखितमास्स्व ततः शरदां शतम्”

**गूढसाक्षिन्** पु० कर्म०। ‘अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते तदा गूढं गूढसाक्षी स उच्यते” नारदोक्ते साक्षिभेदे।

**गूढाङ्ग** पुंस्त्री गूढान्यङ्गान्यस्य। कच्छपे राजनि० स्त्रियां जातित्वात् ङीष् २गुप्तदेहमात्रे त्रि० तत्र स्त्रियां स्वाङ्गत्वात् वा ङीष्। [ मिदन्तत्वात् वा ङीष्।

**गूढाङ्घ्रि** पुंस्त्री गूढः अङ्घ्रिरस्य। सर्पे राजनि० स्त्रियां

**गूढोत्पन्न** पु० गूढं यथा तथोत्पन्नः। “उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः” इति मनूक्ते पुत्रभेदे। “यस्य गृहे अवस्थितायां भार्य्यायां यः पुत्र उत्पद्यते सजातीयोऽयं भवतीति ज्ञातोऽपि कस्मात् पुरुषविशेषाज्जातोऽभाविति न ज्ञायते स गृहे अप्रकाशमुत्पन्नस्तस्य पुत्रः स्याद्यदीयायां भार्य्यायां जातः” कुल्लू०। “सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः” याज्ञ०उक्तेः

दोनाम शक्रस्य दयितः सखा" भा० आनु० १८ अ०। स च ऋग्वेदिनां तर्पणीयर्षिभेदः "अथर्चिनः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः" इति आश्व०गृ०सू०३।४।२ "वीतहव्यो महाराज! ब्रह्मवादित्वमेव च। तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः। शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत्। ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः। यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते। स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्" अनु० ३० अ०उक्ते २वीतहव्यपुत्रे ऋषिभेदे च।

गृध विप्सायां दिवा०पर०सक०सेट्। गृध्यति अगृधत्—अगर्द्धीत्। जगर्द्ध। गर्द्धित्वा-गृद्ध्वा गृध्नुः।

गृधु त्रि० गृध–कु। १अभिलाषुके २कामे पु० उणादि०।

गृधू स्त्री गृध–कू १गुदे २कुत्सिते ३अपाने च संक्षिप्तसा०

गृध्नु त्रि०गृध–क्नु। लुब्धे अमरः "अगृध्नुराददे सोऽर्थान्" रघुः "चातकस्तोयगृध्नुः" मेघदू० "मा ते गृध्नुरविशस्तातिहाय च्छिद्रा गात्राणि" अथ० १।१६।२०

गृध्य त्रि० गृध–कर्मणि क्यप्। १अभिकाङ्क्षिते "गृध्यमर्थमपापश्यसि" भट्टिः। भावे क्यप्। २लिप्सायां न०। ततो ऽस्त्यर्थे इनि। गृध्यिन् लिप्सावति त्रि०। "नेमां हिंस्युर्वने वाचां ब्रह्मदा मांसगृध्यिनः" भा० आनु० ७१ अ०। स्त्रियां ङीप्।

गृध्र पुंस्त्री गृध–क्रन्। (शकुनि) पक्षिभेदे राजनि०। "आयुष्मन्तोऽनिलं चरन्ति गृध्रादयो भूमि गृहोर्ध्वभागे" मनुव्याख्या। "कौशिकगृध्रवल्लभिरनिलश्चिह्नैः परितप्ते" ह०भा० ४८ अ०। गृध्रस्येदम् मार्गे गृध्रसम्बन्धिनि त्रि० मार्गपञ्चपद्दे २५८१पृ०उदा० "गृध्रपार्श्वे वर्त्तिनी" २पक्षिमात्रे च "तौ सीतान्वेषिणौ गृध्रं (जटायुषम्) लूनपक्षमपश्यताम्" रघुः। ३लुब्धे त्रि० "ग्रामप्रतिनिधितैः शक्रैश्च गृध्राः प्रसरिपः" भा०द्रो०७ अ०। गृध्रप्रजातिस्तु श्येनीजाता यथाह "श्येनी श्येनांश्च गृध्रांश्च ततोऽजनयत सा भासान्" रामा० गृध्रीशब्दे दृश्यम्। स्त्रियां ङीष्।

गृध्रकूट पु० गृध्रप्रधानं कूटमस्य। मगधदेशस्थपर्वतभेदे। "गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः (इन्द्रप्रस्थः)" भा०सा० ४६ अ०। "चरणाद्रिं समारभ्य गृध्रकूटान्तकं शिवे। तावत् कीकटदेशः स्यात्तदन्तर्मगधो भवेत्" शक्ति० सङ्ग० ७ पट०

गृध्रनखी स्त्री गृध्रस्य नखसदृशाकारोऽस्त्यस्याः अच् गौरा० ङीष्। (कुकियाखाडा) १कुचिकवृक्षे रत्नमा०। २कोलिवृक्षे वदर्य्याम् त्रिका० "करमर्द्दत्रिकण्टकसौवीरकशतावरी-गृध्रनख्य इति कण्टकसंज्ञः। रक्तपित्तहरो ह्येतौ वक्षी कुष्ठसंज्ञकौ। सर्वमेहहरौ चैव शुक्रदोषविनाशनौ" सुश्रुते तस्याः कण्टकसंज्ञत्वमुक्त्वा गुणा उक्ताः।

गृध्रपत्रा स्त्री गृध्र इव सूक्ष्मं पत्रं यस्याः। सूक्ष्मपत्राख्ये राजनि०। गृध्रस्य पत्रं पत्रं पक्षोऽत्र। गृध्रपक्षयुतपक्षे २वाणभेदे। गृध्रवाजादयोऽप्यत्र "शतेन गृध्रवाजानां शराणां नतपर्वणाम्" भा० द्रोण० १७ अ०। "तेऽन्ये स्कन्दस्य सैनिका" इत्युपक्रमे "उद्धारकः कोकनदो गृध्रपत्रश्च जम्बुकः" भा०श०४६ अ०। उक्ते ३क्षत्रियभेदे।

गृध्रयातु पु० गृध्ररूपेण याति या–तुन्। गृध्ररूपे राक्षसभेदे। "सुपर्णयातुमुत गृध्रयातुम्" ऋ०७।१०४।२२।

गृध्रराज पु० ६त०गृध्रो राजेवेति वा उपमितस०। गरुडात्मजे जटायुपक्षिणि। "निर्बिभेद सुतीक्ष्णाग्रैर्गृध्रराजं शिलाशितैः" रामा०आर०। गृध्रपत्यादयोऽप्यत्र।

गृध्रवट पु० गृध्रोपलक्षितो वटोऽत्र स्थाने। तीर्थभेदे "ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः। स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम्। ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम्। इतरेषां तु वर्णानां सर्वपापं प्रणश्यति" भा०व०८४ अ०

गृध्रसी स्त्री गृध्रमपि स्यति सो–क गौरा०ङीष् ६त०। वातरोगभेदे तल्लक्षणमुक्तं सुश्रुते "पार्ष्णिप्रत्यङ्गुलीनां तु कण्डरा यानिलार्दिता। सक्थ्नः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता"। माधवकरोऽप्याह। "स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्। गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता"। भावप्रकाशे विशेषोक्तम् यथाह "स्फिक्पूर्व्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्। गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः। वातजायां भवेत्तोदो देहस्यातीव वक्रता। जानुजङ्घोरुसन्धीनां स्फुरणं स्तब्धता भृशम्। वातश्लेष्मभवायान्तु गौरवं वह्निमार्दवम्। तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च। गृध्रसी वातात् केवलात् स्फिगादिपर्य्यन्तं स्तम्भरुक्तोदैर्गृह्णाति। क्रमात् इति क्रमात् तेन यथा यथा

इत्युक्तलक्षण यस्य पुंसः नामाद्यक्षरोत्थवर्गो गरुडादिः स्वात्मवर्गसंख्यां द्विगुणां विधाय कृत्वा परस्य ग्रामस्य वर्गसंख्यया आयां च कृत्वा गजैरष्टभिः शेषितमवशिष्टाः काकिण्योऽस्य याः पुंसः । एवं ग्रामस्यापि स्ववर्गसंख्यां द्विगुणां कृत्वा परस्य पुंसः वर्गसंख्यया युक्तां च कृत्वा गजभक्तावशिष्टाः ग्रामस्य काकिण्यो भवन्ति एवमनयोः पुरुषग्रामयोः काकिण्यः स्युः । तत्र तद्विवरतः पुरुषकाकिणीनां ग्रामकाकिणीनां विवरमन्तरमस्मिन् क्रियमाणे यस्य ग्रामस्य दातृत्वात् पुंसः काकिण्याविशेषे पुंसोऽर्थहानिः । ग्रामस्य प्रतिपत्तीत्वादित्यर्थः । यथा । नीलकण्ठस्य वर्गः कपः तत्संख्या ५ द्विगुणा १० चरवाट्टेर्वर्गः सिंहस्तत्संख्यया २ युक्ता १२ गजभक्तशेषं ४ नीलकण्ठस्य काकिण्यः । एवं ग्रामवर्गसङ्ख्या ३ द्विगुणा ६ नीलकण्ठवर्ग ५ सङ्ख्यया युक्ता ११ अष्टभक्तावशेषं ३ ग्रामस्य काकिण्यः द्वयोरन्तरे शेषं १ नीलकण्ठस्य दातृत्वात् स्वाद्व्ययहानिरित्यर्थः । उक्तञ्च "स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत् । अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत्" इति । इतोऽन्यथाहुः पद्मप्रभसूरिनारदद्याः "अकारादिषु वर्गेषु दिक्षु प्रागादिषु क्रमात् । गृध्रमार्जारसिंहाश्वसर्पाखुगजमेषकाः । दिक्पतीनां स्वयं योनिः स्ववर्गात्पञ्चमो रिपुः । रिपुवर्गं परित्यज्य शेषवर्गाः शुभप्रदाः । साध्यवर्गं पुरः स्थाप्य पृष्ठतः साधकं न्यसेत् । विभजेदष्टभिः शेषं साधकस्य धनं स्मृतम् । व्यत्ययेनागतं शेषं साधकस्य ऋणं स्मृतम् । धनाधिकं सुलक्षणं सर्वसम्पत्प्रदं स्मृतम्" इति । गृध्रोऽत्र गरुडः गरुडसर्पयोर्महावैरत्वात् वाच्य इत्यर्थः । साध्यो वासयोग्यो ग्रामादिस्तस्य वर्गे वर्गसंख्यां पुरः संस्थाप्य साधकस्य नीलकण्ठादेः वर्गसंख्यां पृष्ठतो न्यसेत् । एवं विशिष्टोऽङ्कोऽष्टभिर्भक्तः शेषं साधकस्य धनं स्यात् । यथा साध्यवर्गसंख्या १पुरःस्थापिता साधकस्य ५वर्गसंख्या च पृष्ठतः स्थापिता ५१ एतामेकपञ्चाशत् अष्टभक्तावशिष्टं साध्यस्य ३धनं साधकस्य साध्यस्य च संख्या विपरीतस्थापित१५ अष्टभक्तं शेषं साधकस्य ७ऋणं स्यात् । अथ द्वारनिवेशनमाह । सर्वेति । द्विजादिराशिमतां पुंसां क्रमेण पूर्वतः प्राच्यादिदिक्चतुष्टये द्वारं हितं यथा द्विजराशयः कर्कवृश्चिकमीनास्तेषां पूर्वदिशि । वैश्यराशयो वृषकन्यामकरास्तेषां दक्षिणदिशि । शूद्रराशयो मिथुनतुलाकुम्भास्तेषां पश्चिमदिशि नृपराशयो मेषसिंहधनूंषि राशयस्तेषामुत्तरदिशि द्वारनिवेश इत्यर्थः" पी० धा०

अत्रेदं बोध्यम् "शेषाङ्केन फलं बोध्यं शेषाभावे तु द्वारकात् । अद्वारेण फलं बोध्यमिति तत्त्वविदां मतम्" ज्यो० त० वचनादङ्काभावे द्वारकाङ्कात् फलनिर्णयः । राशिविशेषस्य ग्रामादिस्थानविशेषे निवासनिषेधमाह । "गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोऽलिझषाङ्गनाश्च । कर्कौ धनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपञ्चमपरा बलिनः सुरेन्द्राः" ज्यो० पि० "वस्तुमिष्टस्य ग्रामस्य वस्त्रविभागवन्नवधा विभागं कृत्वा मध्ये मध्यमविभागे गोसिंहनक्रमिथुनं यथाक्रमेणः न निवसेत् वृषसिंहमकरमिथुनराशिमन्तः पुरुषा न वसेयुः । अथ पूर्वककुभः पूर्वदिग्भागोऽष्टदिक्षु अलिझषाङ्गनाः तदादिराशिमन्तः पुरुषाः न वसेयुः । यथा । पूर्वस्यां वृश्चिकः आग्नेय्यां झषो मीनः, दक्षिणस्यां कन्या, नैरृत्यां कर्कः पश्चिमायां धनुः । वायव्यां तुला उत्तरस्यां मेषः ऐशान्यां कुम्भः न वसेदित्यर्थः । अथ वर्गाः । अकचटतपयशवर्गाः अष्टौ ऐन्द्राद्याः पूर्वदिगमारभ्य अष्टदिक्षु बलिनः । यथा अवर्गः पूर्वस्याम् । कवर्ग आग्नेय्याम् । चवर्गो दक्षिणस्याम् टवर्गो नैरृत्याम् । तवर्गः पश्चिमायाम् पवर्गो वायव्याम् । यवर्गः उत्तरस्याम् । शवर्ग ऐशान्यां बलीत्यर्थः । कीदृशाः वर्गाः स्वपञ्चमपराः स्वस्मात् पञ्चमः परः शत्रुर्येषां ते । तस्य अवर्गः पूर्वस्यां बली तेन स्वपञ्चमपश्चिमायां द्वारं निवासो वा न विधेयः एवं कवर्गादीनामाग्नेय्यादिस्वप्रदिक्षु बलित्वं तत् पञ्चमस्य रिपुत्वञ्च ज्ञेयम्" । पी० धा०

तत्र गृहयोग्यभूमिपरीक्षा विश्वकर्मणोक्ता यथा "अथातः संप्रवक्ष्यामि लोकानां हितकाम्यया । श्वेता रक्ता तथा पीता कृष्णा वर्णानुपूर्वशः । सुगन्धा ब्राह्मणी भूमी रक्तगन्धा तु क्षत्रिणी । मधुगन्धा भवेद्वैश्या मद्यगन्धा च शूद्रिणी । मधुरा ब्राह्मणी भूमिः कषाया क्षत्रियान्विता । अम्ला वैश्या भवेद्भूमिस्तिक्ता शूद्रा प्रकीर्त्तिता । चतुरस्रा द्विपाकारा सिंहा हयभद्ररूपिणी । वृत्तं च भद्रपीठं च त्रिशूलं लिङ्गसन्निभम् । प्रासादध्वजकुम्भार्द्धदेवानामपि दुर्लभम् । त्रिकोणां शकटाकारां शूर्पव्यजनसन्निभाम् । सरजाकारसदृशीं सर्पमण्डूकरूपिणीम् । खराजगरसंकाशां वक्रां चिपिटरूपिणीम् । मुद्गराभां तथा उलूककाकपर्णनिभां तथा ।

शूकरोष्ट्राजसदृशीं धनुःशरशूर्परूपभाम् । कङ्कालशवसाकारां दुर्गन्धां च विवर्जयेत् । मनोरमाऽत्र या भूमिः परीक्ष्येत्तां प्रयत्नतः । द्वितीया दृढभूमिश्च निम्ना चोत्तरपूर्वके । गम्भीरा ब्राह्मणी भूमिर्नृपाणां तत्समान्विता । वैश्यानां समभूमिश्च शूद्राणां विकटा स्मृता । सर्वेषां चैव वर्णानां समभूमिः शुभावहा । शुक्लवर्णा च सर्वेषां शुभा भूमिरुदाहृता । कुशकाशयुता ब्राह्मी दूर्वा क्षत्रियवल्लभा । फलपुष्पयुता वैश्या शूद्राणां तृणसंयुता । नदीपाताश्रितां तद्वत् महापाषाणसंयुताम् । शूलकाभां महाघोरां वायुना चापि पीडिताम् । गहभल्लूकसंयुक्तां मध्ये विकटरूपिणीम् । मत्स्यगात्रनिभां रूक्षां दन्तिकैः परिवारिताम् । चैत्यश्मशानवल्मीकधूर्त्तालिकेषु वर्त्तिनीम् । चतुष्पथमहावृक्षदेवमन्त्रिनिवासतः । अदूरस्थां श्वभ्रगर्त्तयुक्तां चैव विवर्जयेत्” भूमिभेदे फलानि तत्रैव “सुवर्णगन्धा ध्रुवा धनधान्य शुभावहा । अन्त्यजे अन्त्यजफला ततः कार्यं परीक्षणम् । चतुरस्रा महाधन्या द्विपाभा धनदायिनी । सिंहाभा सद्गुणान्पुत्रान् वृषाभा पशुवृद्धिदा । वृत्ता बहुसुता भूमिर्भद्रपीठनिभा तथा । त्रिशूलरूपा वीराणां सद्वृत्तिमं यशोऽस्पदा । लिङ्गाभा लिङ्गिता चैव प्रासादध्वजसन्निभा । पदोन्नतिं प्रकुरुते कुम्भाभा धनवर्द्धिनी । त्रिकोणशकटाकारा शूर्पव्यजनसन्निभा । क्रमेण सुतपौत्रार्थधर्महानिकरी स्मृता । मुरजा वंशहा सर्पमण्डूकाभा भयावहा । नैःस्व्यं खरानुकारा च मृत्युदाऽजगरान्विता । चिपिटा पौरुषैर्हीना धनुराकारा तथैव च । काकोलूकनिभा नित्यं दुःखशोकभयप्रदा । सर्पाभा पुत्रपौत्रघ्नी वंशाभा वंशहानिदा । शूकरोष्ट्राजसदृशी धनुःपरशुरूपिणी । कुचेलाकिनान् मूर्खान् महापापान् जनयेत् सुतान् । कङ्कालशवसाकारा मृतपुत्रा धनार्त्तिदा । दुर्गन्धां पापिनीं दुष्टप्रजां भूमिं परित्यजेत् । मनोरमा सुतप्रदा दृढा धनप्रदा मता । सुतार्थदा तथाप्युदकवरेण्यादिकप्रदा मही । गम्भीरशब्दा जनयेत् पुत्रान् गम्भीरनिःस्वनान् । तद्वत् पदान्वितान् कुर्यात् सदा सौभाग्यदायिनी । विकटा शूद्रजातीनां तथा दुर्गमवासिनाम् । शुभदा न परेषां च तस्कराणां शुभावहा । सुवर्णवर्णा चाशु वर्णान् वर्णानामाधिपं सदा । शुक्लवर्णा च सर्वेषां पुत्रपौत्रप्रवर्द्धिनी । कुशकाशान्विता ब्रह्मवर्चसान् कुरुते सुतान् । दूर्वान्विता वीरसुतान् कारयेत् धनपुत्रदा । नदीपाताश्रिता शूरान् सुतवन्तांस्तथैव च । दरिद्रान्ध्रमध्यस्था गर्त्ताभस्था सुधासुतान् । विवरा पशुपुत्रार्त्तिदायिनी सौख्यहारिणी । वल्मीकवती जनयेत् पुत्रान् विद्याविहीनकान् । शूर्पमार्जारलगुडनिभा भीतिसुतार्त्तिदा । शूलका शूलकान् पुत्रान् जनयेद्दंशपातकान् । घोराघोरप्रदा वायुपीडिता वायुभीतिदा । भल्लूकसंयुक्ता पशुहानिप्रदा सदा । विकटा विकटान् पुत्रान् मत्स्यगात्रनिभा तथा । ददाति रूक्षा परुषा दुर्भगान् जनयेत् सुतान् । गृहस्वामिभयं चैव वल्मीके विपदः स्मृताः । धूर्त्तालयसमीपे तु पुत्रस्य मरणं ध्रुवम् । चतुःपथे त्वकीर्त्तिः स्यादुद्वेगो देवसद्मनि । सचिवे सचिवे सर्व्वे विपद उत्कटाः । गर्तायां तु पिपासा स्यात् कूर्माभं धननाशदम् । दृढस्थानादिपर्यन्तं पीड्यन्ते पुरवासिनः । चैत्यश्मशानदेवानां गृहाणि परिवर्जयेत् । निखनेद्धस्तमात्रं च पुनस्तेनैव पूरयेत् । पांशुनाधिकमध्योनाः श्रेष्ठमध्याधमाः क्रमात् । जलेनापूरयेत् श्वभ्रं शीघ्रं गत्वा शतं पदम् । तत्रैवागत्य वीक्षेत न हीनं सलिलं शुभा । चरतिप्राप्ते शुभे वा शत्रुविषे च सर्वतः । हस्तमात्रशरावस्थं कृत्वा वर्त्तिचतुष्टयम् । ज्वालवेदुभूपरीक्षार्थं सम्पूर्णं सर्वदिङ्मुखम् । दीप्ता पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः । फालकृष्टे तथोद्देशे सर्व्वबीजानि वापयेत् । त्रिपक्षसप्तरात्रेण संप्ररोहन्ति तान्यपि । उत्तमा त्रिरात्रेण शाङ्कुरा शोभना मही । मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता । तिलान्वा वापयेत्तत्र सर्षपाणि च सर्षपान् । अथ वा सर्वधान्यानि वापयेत् समन्ततः । यत्र नैव प्ररोहन्ति तां प्रयत्नेन वर्जयेत् । व्रीहयः शालयो मुद्गाः गोधूमाः सर्षपास्तिलाः । यवाश्चौषधयः सप्त सर्वबीजानि चैव हि । सुवर्णताम्रपुष्पाणि शुभ्रमध्यं गतानि च । यस्य नाशं समायान्ति स भूमिस्तस्य शोभना । पांशवो रेणुतां नीता निरीक्ष्याश्चान्तरिक्षगाः । अधोमध्योर्द्ध्वगा यस्यां गतिस्तुल्यफलप्रदाः” ।

भूमेः पूर्वादिदिक्प्लवफलं तत्रैवोक्तम् ‘चतुरस्रां समां शुद्धां भूमिं कृत्वा प्रयत्नतः । तस्मिन् दिक्साधनं कार्यं हस्तमध्ये गते दिवि । पूर्वप्लवे भवेल्लक्ष्मीराग्नेय्यां शोकमादिशेत् । याम्यां याति यमद्वारं नैर्ऋते च महाभयम् । पश्चिमे कलहं कुर्याद्वायव्यां मृत्युमादिशेत् । उत्तरे वंशवृद्धिः स्यादीशाने रत्नसञ्चयम् । दिङ्मूढे कुलनाशः स्यात्कर्मे दारिद्र्यमादिशेत्’ ।

गृहे आयामविस्तारभेदेन ध्वजाद्यायास्तत्फलं वर्णदिग्भेदेन ध्वजादीनां विधिनिषेधौ चाह तत्रैव "विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्ततः। यच्छेषं स भवेदायो ध्वजाद्यास्ते सुरेश्वर। ध्वजो धूमो हरिः श्वा गौः खरेभौ वायसोऽष्टमः। पूर्वादिदिक्षु चाष्टानां ध्वजादीनामवस्थितिः। स्वस्थानात् पञ्चमे स्थाने वैरत्वं च प्रकुर्वेत्। विषमायः शुभः प्रोक्तः समायः शोकदुःखदः। स्वस्थानगा बलिष्ठाः स्युर्नचान्यस्थानगाः शुभाः। ध्वजः सिंहे तौ च गजे ह्येते गवि शुभप्रदाः। वृषो न पूजितोऽन्यत्र ध्वजः सर्वत्र पूजितः। वृषसिंहगजाश्चैव कुण्डे कर्कटकोटयोः। द्विपः पुनः प्रयोक्तव्यो वापीकूपसरःसु च। मृगेन्द्रमासने दद्याच्छयनेषु गजं पुनः। वृषं भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम्। अग्निवेश्मसु सर्वेषु गृहे वह्न्युपजीविनाम्। धूमं नियोजयेत् केचित् श्वानं म्लेच्छादिजातिषु। खरो वैश्यगृहे शस्तो ध्वाङ्क्षः शेषकुटीषु च। वृषसिंहगजाश्चापि प्रासादपुरवेश्मसु। गजाये वा ध्वजाये वा गजानां सदनं शुभम्। वाजिनां ध्वजाये च खराये वृषभेऽपि वा। उष्ट्राणां मन्दिरं कार्यं गजाये वा वृषध्वजे। पशूनां वृषाये च ध्वजाये वा शुभप्रदम्। शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः। अमत्रच्छत्रवस्त्राणां वृषाये वा ध्वजेऽपि वा। पादुकोपानहौ कार्यौ सिंहायेऽथवा ध्वजे। स्वर्णरौप्यादिपात्र भाजनेषां तु ध्वजः स्मृतः। ब्राह्मणे तु ध्वजः श्रेष्ठः प्रतीच्यां कारयेन्मुखम्। सिंहस्य भूभुजां शस्त उदीच्यां च मुखं शुभम्। विशां वृषः प्राग्वदनः शूद्राणां दक्षिणे गजः। सर्वेषामेव चायानां ध्वजः श्रेष्ठतमो मतः। ध्वजायः क्षत्रियविशोः प्रशस्तो गुरुरब्रवीत्। सिंहायः सर्वथा त्याज्यो ब्राह्मणेन वृषस्तथा। सिंहाये मुनि चाले च अल्पायासं प्रजायते। ध्वजाये पूर्णसिद्धिः स्याद्वृषायः पशुवृद्धिदः। गजाये सम्पदां वृद्धिः शेषायाः शोकदुःखदाः"। तथा च ध्वजाद्या आया यत्र युक्तदिङ्मुखद्वाराणि स्युरिति कथितास्ते. "प्रत्यग्ध्वज द्वारमथाग्नि पूर्वे करावुदक् स्यात् द्विरदे च याम्यम्" इति श्रीपत्युक्तेः "सर्वद्वार इह ध्वजो वरुणदिग्द्वारं च हित्वा हरिः प्राग्द्वारो वृषभो गजो यमसुरेशाशामुखे स्याच्छुभः" महेश्वरोक्तेश्च। "पश्चादुदक्पूर्वयमे द्विजादितः" मु० चि० ब्राह्मणादिवर्णभेदेन द्वारनिवेशनमुक्तम् द्विजादितः ब्राह्मणादिवर्णभेदेन पश्चादादि दिक्षु गृहद्वारं स्यात्। यथा ब्राह्मणस्य पश्चान्मुखं गृहद्वारं क्षत्रियस्योदग्दिशि वैश्यस्य पूर्वस्यां, शूद्रस्य यमे दक्षिणस्याम् इत्यर्थः। उक्तञ्च श्रीपतिना "ध्वजे प्रतीच्यां मुखमग्रजानामुदङ्मुखं भूमिभृतां च सिंहे। विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्याननमामनन्तीति"। टोडरानन्दे च्यवनः "ध्वजे पराख्यं विप्राणां राज्ञां सिंहेऽप्युदङ्मुखम्। गजे शूद्रस्य याम्यास्यं विशः पूर्वमुखं वृषे इति॥" पी० धा० गृहाणामायवारांशादिकं तत्फलञ्च विश्व० उक्तं यथा "पिण्डे नवाङ्कगजैरग्निनागाष्टसागरैः। नागैश्च गुणिते भक्ते क्रमादेते पदार्थकाः। नागाग्निनक्षत्रर्या दर्शतिथ्यृक्षभानुभिः। आयो वारोऽंशको द्रव्यमृणनक्षत्रतिथिर्युतिः। आयुश्चाथ गृहेशर्क्षगृहभैक्यं मृतिप्रदम्। संपूर्णाः शुभदा ह्येते चासंपूर्णास्त्वनिष्टदाः"। अस्यार्थः। इष्टगृहदैर्घ्यः २९हस्ताः विस्तारः ७हस्ताः। "तथायते तद्भुजकोटिघातः" लीला० उक्तदिशा क्षेत्रफलम् २०३ इदं पिण्डं नवधा स्थापितम् यथाक्रमम् नवाद्यैर्गुणिते नागाद्यैर्हृते आयादयः स्युः। यथा २०३ पिण्डे ९ गुणिते १८२७। ८भक्ते शेषाङ्कात् ३ आयः सिंहाख्यः। ९हतः १८२७। ७भक्तः शेषः७ तेन वारः शनिः। ६गुणः १२१८। ९भक्तः ३शेषः अंशकः (नवांशकः)। ८गुणः १६२४। १२भक्तः ४धनम्। ३गुणः ६०९। ८भक्तः शेषः १ऋणम्। ८गुणः १६२४। २७भक्तः शेषः ४नक्षत्रं रोहिणी। ८गुणः १६२४। १५भक्तः। शेषः ४चतुर्थी तिथिः। ४गुणः ८१२। २७भक्तः शेषः २प्रीतिर्योगः। ८गुणः १६२४। १२०भक्तः शेषः६४ वर्षाण्यायुः। आयादीनां प्रयोजनं पी० धा० दर्शितं यथा अथैषामायादीनां प्रयोजनमुच्यते। आयस्य तावत् "विषमायः शुभायैव समायः शोकदुःखदः" इति वशिष्ठोक्तम्। "वाराणां च सूर्यारवारराश्यंशाः सदा वह्निभयप्रदाः। शेषग्रहाणां वारांशाः कर्तुरिष्टार्थसिद्धिदाः" इति यथा गणितेनागतो भौमवारः सोऽपि निन्द्यः तद्राशी मेषवृश्चिकौ निन्द्यौ एवमन्येष्वपि राशिषु तत्स्वांशा निन्द्याः "गृहस्यागतभं यत्तु तद्द्विराश्यात्मकं यदि। तत्स्वांशवशात्तत्र ज्ञातव्यं सर्वदा न हमिति" तथा च कृत्तिका द्विराश्यात्मिका तत्रैकांशवशे मेषः। अन्येऽपि त्र्यादिके शेषे मिथुनमन्यथा वृषः। पुनर्वस्वन्त्यांशकस्य चावशिष्टमन्यथा कर्कः। एवमुत्तराफाल्गुन्यादिषु द्विराश्यात्मकेषूहनीय वि

वृद्धिः। न तु निःसन्दिग्धे ष्वेकराश्यात्मकेषु चाश्विन्यादिषु। धनर्णयोश्च फलम् "धनाधिकं गृहं हन्ति निर्द्धनाय ऋणाधिकमिति"। नक्षत्रस्य फलम् "विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदः। निधनाख्या तारका तु सर्वथा निधनप्रदा। विवर्ज्यं तारकास्वेतत्त्रिमीषणमशुभप्रदम्। कुर्वन्न जानतो मोहाद्दुःखभाग्व्याधिभाग्भवेत्। अत्र गृहनक्षत्राद्दिनभं यत्सख्यं तन्नवभक्तमवशिष्टतारका विपत्तारादिकाः स्युश्चेत्तदानिष्टास्तद्दिने गृहारम्भं न कुर्यादन्यस्मिन दिने शुभताराख गृहारम्भं कुर्यादित्यर्थः इति केचित्। अपरे तु गृहकर्त्तुर्नामनक्षत्राद्गृहभं गणयं नवभक्तमवशिष्टं विपत्तारादिकं स्यात्तद्गृहमनिष्टमन्यथा शुभमिति यदाह कश्यपः "दत्ते दुःखं तृतीयर्क्षं पञ्चमर्क्षं यशःक्षयम्। आयुःक्षयं सप्तमर्क्षं कर्त्तुर्भाद्यदि सप्तमिति" वास्तुशास्त्रेऽपि "गृहभात् स्वामिभं गण्यं भक्तं च नवभिः पुनः। शेषे या भवेत्तारा सम्पत्प्रत्यरिकाऽधमेति" प्राहुः। यदा तु गृहकर्त्तुर्गृहस्य चैकं नक्षत्रं स्यात्तदा तच्छुभमशुभं वेति निर्णयमाह। वशिष्ठः "गृहस्य तत्पतेस्त्वेकं धिष्ण्यं चेन्निधनप्रदमिति" निधनं मरणम्। राश्यैक्येऽयं दोषः न तु भिन्नराशित्वे तदाक्यस्य विवाहप्रकरणोक्तत्वात्। केचिदत्रापि प्रयोजनमुक्तं तदुक्तं व्यवहारसमुच्चये "त्रिभिस्त्रिभिर्वैश्वानि कृत्तिकाद्यैरुक्षलेदपुत्राग्निधनानि शोकम्। शत्रोर्भयं राजभयं च मृत्युः सुखं प्रवासश्च नव प्रभेदाः" इति। गृहभवशाद्राशिज्ञानेऽपि प्रयोजनमाह स एव। (विश्वकर्मा) राशिकूटादिकमित्यादि (तद्वाक्यमनुपदं दृश्यम्) वास्तुशास्त्रे कृत्तिकादिषु द्विराशिषु भेषु राशिनिर्णयो यथा "अश्विन्यादित्रयं मेषे सिंहे मोक्तं मघात्रयम्। मूलादित्रितयं चापे शेषेषु नव राशय" इति। शेषेषु भेषु रोहिण्यादिषु नव राशयो ज्ञेयाः। यथा रोहिणीमृगयोर्वृषः। आर्द्रापुनर्वस्वोर्मिथुनम्। पुष्याश्लेषयोः कर्कः। एवं हस्तादिके चित्रादिद्विके च कन्यामकरादारादाशयः स्युरित्यर्थः अयं च पन्थो वास्तुशास्त्रे नवांशानुक्ते हस्तः। अत्र राशिकूटे नाडीवेधो न दोषाय। उक्तं च ज्योतिर्विग्रामणी "दम्पत्योरिव गृहतत्स्वामिनोरपि। परस्परं मित्रयोश्चैकनाड्यो प्रशस्यते" इति। तिथिप्रयोजनं तिथ्यानयनप्रकारान्तरं च वास्तुशास्त्रे "गृहाहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम्। तिथ्यः प्रतिपदाद्याःस्युर्दर्शं रिक्तां च वर्जयेदिति"। तत्रान्यासम्यग्शुभाशुभप्रकरणोक्तं नेष्टयोगवर्जनं च योगानां, प्रयोजनं स्पष्टमेव आयुषः प्रयोजनं तावत्कालं गृहस्थितिरिति" पी०धा० आयादिफलं विश्व०वास्तुशास्त्रे "धिष्ण्ये च वसुभिर्भक्ते व्ययः स्यात्क्षेपकाहृते। धनाधिकं गृहं हन्ति निर्द्धनाय ऋणाधिकम्। व्ययान्विते क्षेत्रफले ध्रुवाद्यक्षरसंयुते। त्रिभिः शेषे क्रमादिन्द्रयमभूमिपांशकाः। इन्द्रांशे पद्मोदर्शिर्भकृतौ एवं प्रजायते। यमांशे मरणं नूनं रोगशोकमनेकधा। राजांशे धनधान्यानि पुत्रवृद्धिश्च जायते। राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेत्। मैःस्वं द्विद्वादशे नूनं त्रिकोणे त्वनपत्यता। षट्काष्टके नैधनं स्याद्रात्यर्वे मध्यमं स्मृतम्। (अत्रवे द्वादशद्विती यादौ) शून्यस्थिते पुत्रलाभः स्त्रीलाभश्च तथैव च। जन्मतृतीये च तथा धनधान्यागमो भवेत्। दशमैकादशे चन्द्रे धनायुर्वृद्धिप्रदः। चतुर्थाष्टमरिष्फस्थो मातृपुत्रविनाशदः। त्रिकोणेऽत्वनपत्यं स्यात् केचिद्गृहे शुभम्। वदन्ति चन्द्रे गृहयोर्नैतन्मम मतं स्मृतम्। अश्विन्यादित्रयम् इत्यादिकम् (अनुपदउक्तम्)। सूर्यारवारराशंशाः सदा वह्निभयप्रदाः। शेष ग्रहाणां वारांशाः कर्त्तुरिष्टार्थसिद्धिदाः। गृहस्यागतभं यत्तु तद्धि राश्यात्मकं यदि। तच्चांशवशात्स्यात् तद्गृहं सर्वदा गृहम्। विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदः। निधनाख्या तु या तारा सर्वथा निधनप्रदा। विवर्ज्यं तारकास्वेतद्विशीर्षणमशुभप्रदम्। प्रत्यरितारा भयदा निरंशत्वे तु मृत्युभीः। निधनाख्या तु या तारा स्त्रीसुतार्त्तिप्रदायिनी। कुर्वन्नज्ञानतो मोहाद्दुःखभाग्व्याधिभाग्भवेत्। तिथौ रिक्ते दरिद्रत्वं दर्शे गर्भनिपातनम्। कुयोगे धनधान्यादिनाशः पातश्च मृत्युदः। वैधृतौ सर्वनाशाय नक्षत्रैक्ये तथैव च। आयुर्विहीने गेहे तु दुर्भगत्वं प्रजायते। नाडीवेधो न शुभदस्तारा रोगभयप्रदा। गणवैरे पुत्रहानिर्धनहानिस्तथैव च। योनौ कलिर्महादुःखं यमांशे मरणं ध्रुवम्। नक्षत्रैक्ये स्वामिमृत्युर्वर्गे वंशविनाशनम्। पापवारे दरिद्रत्वं शिशूनां मरणं तथा। केचिच्चाग्निं प्रशंसन्ति चौरभीतिस्तु जायते"। आयादिकचिन्तायां मर्यादां दिग्भेदेन गृहभेदनिर्णयमाह विश्वकर्मा "एकादशकराद्दूर्द्ध्वं यावद्द्वात्रिंशहस्तकम्। तावदायादिकं चिन्त्यं तदूर्द्ध्वं नैव चिन्तयेत्। आय-

बुधे दैत्यपुरोहिते । गजवाजिधरित्रीणां क्रमाल्लाभं विनिर्दिशेत् । भास्करे कीर्त्तिभङ्गः स्यात् कुजे विपद्मादिशेत् । हिमगौ क्लेश आयासः सौरौ सर्व्व धनक्षयः । पतङ्गे पङ्कजातस्थे भौमे सौरौ च तन्-भयम् । चन्द्रे रोगविवृद्धिः स्यात् कुजे शोकागमो भवेत् । बुधे मानधनप्राप्तिर्जीवे च विजयो भवेत् । शुक्रे स्वजनभेदः स्याच्छ्रन्मत्तस्यापि देहिनः । पाताले नवमस्थाने विद्यालोभाभिनन्दनम् । बुधे विविध-भोगाप्तिर्जीवे विजयो भवेत् । चन्द्रे मातृभयः प्रोक्तो धर्म्महानिश्च भास्करे । कुजे चार्थभयं विद्या-द्रविजे धर्म्मदूषणम् । दशमस्थानगे शुक्रे शयनासन विक्षयः । सुराचार्य्ये मङ्गलौख्यं विजयः स्त्रीधनं बुधे । मार्त्तण्डे च सुहृद्वृद्धिस्तथा शोकविवर्द्धनम् । भौमे रत्नागमः प्रोक्तः शनौ कीर्त्तिविलोपनम् । लाभस्थानेषु सर्व्वेषु लाभस्थानं विनिर्दिशेत् । व्यय-स्थानेषु सर्व्वेषु विनिर्दिष्टो व्ययः सदा । लोके पूर्व्वफलः प्रोक्तः पादोनः सर्व्वगो ग्रहः । त्रिकोणेऽर्द्धफलदः पादं मित्रपदाश्रितः । समर्क्षे रिपुराशौ च समकष्टफलो ग्रहः । नीचस्थो विफलो ह्यस्तगोऽसत्फलदः शुभः" ।

गृहारम्भे रव्यादिगोचरादिशुद्धिफलादि बा॰ता॰

"गोचराष्टकवर्गाभ्यां लग्नेशं विचिन्तयेत् । दशा चा-न्तर्दशादिश्च विचार्य्य सत्ता कर्म्मणि । गुरुशुक्रबले विप्रात् सूर्य्यभूमिजयोस्तथा । शशिसौम्यबले सौरि-बले वर्णानुपूर्व्वशः । गृहारम्भं प्रकुर्व्वीत वर्णनाथबले सति । सर्व्वेषामपि वर्णानां सूर्य्यचन्द्रबलं स्मृतम् । निधनस्थे रवौ स्वामी पीड्यते गृहिणी विधौ । शुक्रेण पीड्यते लक्ष्मीर्जीवेन सुखसम्पदः । बुधेन पुत्रपौत्राश्च भौमेन भ्रातृबान्धवाः । सौरिणा दासवर्गाश्च पीड्यन्ते नात्र संशयः । विशेषेण तु सूर्य्यस्य बलं प्रोक्तं गृहे बुधैः । सर्व्वेषामेव वर्णानां रविशुद्धिर्वि-धीयते । दशापतौ हीनबले वर्णनाथे तथैव च । पी-डितर्क्षगते सूर्य्ये न विदध्यात् कदाचन । प्रथमकोष्ठगे रोगं द्वितीये चार्थनाशनम् । तृतीये धनलाभं च च-तुर्थे भयदो रविः । पञ्चमे पुत्रलाभं च षष्ठे नाशाय शत्रुते । कलिकष्टं सप्तमे सूर्य्ये मृत्युमष्टमगेहगे । नवमे धर्म्मनाशाय दशमे कर्म्मसंयुतिः । एकादशे भवे-ल्लाभो द्वादशे च धनक्षयः । पुत्रे५ द्वितीये द्यूने७ च ऽर्के मध्यफलो रविः । द्वितीयपुत्राद्यूनदशमतविदशाद्दात् परः शुभः । वक्रगा नीचराशिस्थाः वैरराशौ पराजिताः । हृस्वा बालाभावस्था वक्रगाश्चातिचारिणः । रिपुदृष्टि वशंगता उल्कापातेन दूषिताः । न फलन्ति ग्रहा गेहप्रारम्भे तान् प्रपूजयेत्" ।

गृहारम्भे खातारम्भोपयोगिनक्षत्राण्याह मायूखः ।

"अधोमुखैर्भैर्विदधीत खातं शिलास्तथा चोर्द्ध्वमुखैश्च पट्टम् । तिर्य्यङ्मुखैर्द्वारकपाटदानं गृहप्रवेशो मृदुभिर्ध्रुवैश्च"

अधोमुखादिनक्षत्राण्याह पी॰धा॰ गरुड़पु॰

"भरणी कृत्तिकाऽश्लेषा मघामूलविशाखिकाः । तिस्रः पूर्व्वास्तथा चैव अधोवक्त्राः प्रकीर्त्तिताः । वापीकूप-तडागादिखननं च तृणादिकम् । देवतागारखननं निधानखननं तथा । गणितं ज्योतिषारम्भं खनी विलप्रवेशनम् । कुर्य्यादधोगतान्येव कार्य्याणि वृषभध्वज ! । रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयम् । वारुणं श्रवणं चैव नव चोर्द्धमुखाः स्मृताः । एषु रा-ज्याभिषेकं च पट्टबन्धं च कारयेत् । ऊर्द्धमुखासु चिह्न-तानि सर्व्वाण्येषु च कारयेत् । रेवती चाश्विनी चित्रा स्वाती हस्तः पुनर्व्वसुः । अनुराधा मृगः ज्येष्ठा एताः पार्श्वमुखाः स्मृताः । गजोष्ट्राश्वबलीवर्द्ददमनं महिषस्य च । बीजानां वपनं कुर्य्याद्गमनागमनादिकम् । चक्र-यन्त्र रथादीनां नावादीनां प्रवाहनम् । पार्श्वेषु यानि कर्म्माणि कुर्य्यादेतेषु तानि च"

गृहभेदे द्वारनिर्माणाय सफलं द्वारचक्रमाह मु॰चि॰

"सूर्य्यर्क्षाद्युगभैः शिरस्थ फलं लक्ष्मीस्ततः कोणभैर्नो-गेहहसनं ततो गजमितैः शाखासु सौख्यं भवेत् । देह-ल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः सौख्यं चक्र-मिदं विलोक्य सुधिया द्वारं विधेयं शुभम्" मू॰

"द्वारस्य चत्वारः पाषाणा आवश्यकाः । द्वौ जङ्घाभो-भावेनावस्थितौ समावल्पपरिमाणौ । तत्र उत्तरङ्ग इत्यूर्द्ध्वस्थितस्य संज्ञा । अधोवस्थितस्य तु देहलीति सर्व्वसाधारणं नाम । द्वौ पार्श्वयोः स्थितौ महापरिमाणौ शाखासंज्ञौ (बाजू) इति भाषया द्वयोरपि संज्ञा एवं दीर्घचतुरस्रद्वारं भवति । पाषाणाभावे तु काष्ठादेरपि नियमः । तत्र द्वारे विलोकिते सूर्य्याधिष्ठितनक्षत्राद्युग-भैश्चतुर्भिर्नक्षत्रैः शिरस्थस्थितैः सद्भिः लक्ष्मीप्राप्तिरूपं फलं स्यात् । ततस्तदग्रिमैर्नागैः कोणभैर्द्वयोरव-स्थिता चतुःकोणेष्वस्थितैरष्टसंख्यकैर्नक्षत्रैरुद्वसनं तत् द्वारगृहं सर्व्वदा जनवासरहितं स्यात् । ततस्तदग्रिमे

मे चमितेरष्टाभिर्भैः शाखाह्व तत्रावस्थितैर्गृहस्वामिनः सौख्यरूपं फलं स्यात्। ततस्तदग्रिमैर्नक्षत्रैस्त्रिभिर्नक्षत्रैर्द्वारस्थैरवस्थितैर्गृहपतेर्मृतिः स्यात्। ततस्तदग्रिमैर्वेदभैश्चतुर्भिर्नक्षत्रैर्मध्यस्तम्भेऽवकाशे स्थितैः सौख्यं स्यात्। फलितार्थमाह। चक्रमिति। इदं द्वारचक्रं विलोक्य सुधिया शुभं शुभफलदं द्वारं विधेयं कर्त्तव्यम्। तदुक्तं ज्योतिर्निबन्धे "द्वारचक्रं प्रवक्ष्यामि भाषितं विश्वकर्म्मणा। सूर्य्यभाद्भचतुष्कं तु द्वारस्योपरि विन्यसेत्। द्वे द्वे कोणे च दातव्ये शाखायुग्मे द्वयं द्वयम्। अधश्च त्रीणि देयानि वेदा मध्ये प्रतिष्ठिताः। राज्यं स्यादूर्द्ध्वनक्षत्रे कोणेषूद्वसनं भवेत्। शाखायां लभते लक्ष्मीमधस्थैव मृतिं लभेत्। मध्यमेषु प्रभेष्वेषु सौख्यं चिन्तनीयं सदा बुधैरिति" अथ द्वारस्थापनम् "द्वारस्थापननक्षत्राण्युच्यन्तेऽश्विनी चोत्तरा। हस्तापुष्यश्रुतिमृगाः सुरैरेताः प्रकीर्त्तिताः। स्वाती पूर्णा च रोहिण्यां द्वारशाखावरोपणमिति" ज्योतिर्निबन्धेऽभिहितत्वात्तेऽपि ग्राह्याः। तिथयोऽपि तत्रैवाभिहिताः "पञ्चमी धनदा चैव मुनिनन्दवसौ शुभम्। प्रतिपत्सु न कर्त्तव्यं कृते दुःखमवाप्नुयात्। द्वितीयायां द्रव्यहानिः पशुपुत्रविनाशनम्। तृतीया रोगदा ज्ञेया चतुर्थी भङ्गकारिणी। कुलक्षयं तथा षष्ठी दशमी धननाशिनी। विरोधकृदमा पूर्णा न शाखाद्वारावरोपणमिति" एवं सति विहिततिथिं विहाय विहिततिथिषु विहितभेषु च तत्रापि चक्रशुद्धेषु भेषु द्वारं विहितं शुभफलदात् स्यादिति निष्कृष्टोऽर्थः" मी०धा०

तत्प्रवेशकालमाह मु०चि० "सौम्यायने ज्येष्ठतपोऽन्त्यमाधवे यात्रानिवृत्तौ नृपतेर्नवे गृहे। स्याद्वेशनं द्वाःस्थमृदुध्रुवोडुभिर्जन्मर्क्षलग्नोपचयोदये स्थिरे" (१) मू० "जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्जयोः श्रावणिकेऽपि सत् स्यात्। वेशोऽम्बुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणात्र। (२) मृदुध्रुवक्षिप्रचरेषु मूलभे वास्त्वर्च्चनं भूतबलिञ्च कारयेत्। त्रिकोणकेन्द्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः। (३) शुद्धाम्बुरन्ध्रे विजनुर्भमृत्यौ व्यर्कारिक्ताचरदर्शचैत्रे। अग्रेऽम्बुपूर्णं कलशं द्विजांश्च कृत्वा विशेद्वेश्म भकूटशुद्धम्। (४) वामो रविर्मृत्युसुतार्थलाभतोऽर्के पञ्चमे प्राग्वदनादिमन्दिरे। पूर्णातिथौ प्राग्वदने गृहे शुभो नन्दादिके याम्यजलोत्तरानने। (५) वह्न्यो भूरविभात् प्रवेशसमये कुम्भेऽग्निदाहः कृताः४ प्राच्यामुद्वसनं कृता४ याम्यगता लाभः कृताः४ पश्चिमे। श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे रामाः३ स्थैर्यमतः स्थिरत्वमनलाः३ कण्ठे भवेत्सर्व्वदा" (६) मू०

"तत्रापूर्वप्रवेशसपूर्वप्रवेशयोः कालशुद्ध्यादिकमिन्द्रवंशाच्छन्दसाह सौम्यायने इति। एतेषु सौम्यायन इत्यादिकेषु पदार्थेषु सत्सु नृपतेर्यात्रानिवृत्तौ अथवा नवे नूतनोत्थापिते गृहे प्रवेशनं स्यात्। सौम्यायने उत्तरायणे। अत्र गुरुशुक्रास्तादिको दोषो याम्यारामतडागेत्यादिनोक्त इति न पुनरुक्तः। एवं नीचोपगास्वप्रतिष्ठेत्यादिना दक्षिणायननिषेधोऽपि। अतःपरिशेषात्सौम्यायनग्रहणे सिद्धे तदुक्तिर्मन्दबुद्धीनां शीघ्रप्रतिपत्त्यर्था। उक्तं च वशिष्ठेन "अथ प्रवेशो नवसद्मनस्तु सौम्यायने जीवसिते बलाढ्ये" इति बलाढ्येऽत्र उदिते। नारदेनापि "अथ सौम्यायने कार्य्यं नववेश्मप्रवेशनम्। राज्ञां यात्रानिवृत्तौ वेति" केवलायां भूमौ क्रीतायां प्राप्तायां वा स्वतःसिद्धायां चोत्थापितं गृहं नूतनमित्युच्यते। ज्येष्ठेति ज्येष्ठमाघफाल्गुनवैशाखमासेष्वेव सत्यप्युत्तरायणे प्रवेशनं शुभम्। यदाह नारदः "माघफाल्गुनवैशाखज्यैष्ठमासेषु शोभनः। प्रवेशो मध्यमो ज्ञेयः सौम्यकार्त्तिकमासयोरिति" सौम्यो मार्गशीर्षः। मध्यमोक्तिरापत्कालविषया। चान्द्रमासफलमाह वशिष्ठः "माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च। चैत्रेऽर्थहानिः धनधान्यलाभो वैशाखमासे, पशुपुत्रलाभः। ज्यैष्ठे, च मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च"। "शुक्ले च पक्षे सुतरां विवृद्ध्यै कृष्णे तु यावद्दशमी च तावत्" इत्याद्युक्तेरेव पक्षफला पक्षविशुद्धिर्नोक्ता तिथिवारशुद्धिवाम्ये वक्ष्यते। वशिष्ठेन तु गृहप्रवेशे मीनमासमप्युक्तं दूषितं यथा "मृगादिषड्राशिषु संस्थितेऽर्के नवप्रवेशः शुभदः सदैव। कुम्भं विनाशाय्यपि केचिदूचुर्न मीनमिष्टं खलु सन्निवेशे। इति तत्त्वार्थः। नूतनगृहप्रवेशो मकरादिषट्काभिसंस्थिते सूर्य्ये शुभफलदो भवति तत्रापि माघादिषु कुम्भरहितेषु चतुर्षु मासेषु शुभतरः ननु "अथ प्रवेशो नवसद्मनश्च सौम्यायने" इति स्वयं प्राक् सौम्यायन इत्युक्तत्वात् किमिति चेत् तत् पुनरुक्तमित्यत आह। कुम्भं विनेति। सत्यप्युत्तरायणे कुम्भसंक्रान्तौ नूतनगृहप्रवेशो न भवतीत्येतदर्थं पुनरुक्तमित्यर्थः। नन्विदं

पूर्वापरविरुद्धम् । तथाहि "माघेऽर्थलाभः प्रथमः प्रवेशः" इत्यादिना माघफाल्गुनयोश्चान्द्रमासयोः शुभफलाभिधानात्तत्रैव च कुम्भसंक्रान्तिसद्भावाद्वयोरन्यतरस्याशुभत्वं प्रतिपाद्यते । उभयमासनिर्मुक्तः कुम्भस्तु नास्त्येवेति चेत् । उच्यते । सन्ति हि द्विविधाश्चान्द्रामासाः शुक्लादयः कृष्णादयश्चेति । तत्र फाल्गुनपूर्णिमोत्तरमासस्य कृष्णादिमासगणनया चैत्रत्वात्तस्य च विरुद्धफलत्वात्तद्विषयकोऽयं कुम्भसंक्रान्तिनिषेधः । चान्द्रमासस्य शुक्लादित्वाद्यभिधायकानि वाक्यानि गृहारम्भप्रकरणेऽप्यभिहितानि अयमपि निषेधो मासस्य कृष्णादित्वे ज्ञापकः । अथ कर्कादिसंक्रान्तिषु मतान्तरमाहान्येष्वपीति केचिदाचार्या अन्येष्वपि कर्कादिषड्राशिस्थिते सूर्येऽपि नवगृहप्रवेशः कार्य इत्यूचुः । तदेतद्द्वन्द्वसौपूर्विकगृहप्रवेशविषयम् । तदुक्तं तत्रैव "नवप्रवेशे त्वथ कालशुद्धिर्न द्वन्द्वसौपूर्विकयोः कदाचिदिति" । नूतनस्यागारप्रवेशविषयं वा । तदुक्तं ज्योतिःप्रकाशे "गृहारम्भोदितैर्मासैर्धिष्ण्यैर्वारैर्विशेद्गृहम् । विशेत्सौम्यायने हर्म्यं तृणागारं तु सर्वदेति" अतएव "कुलीरकन्यकाकुम्भे दिनेशे न विशेद्गृहम् । ग्रामं वा नगरं वापि पत्तनं वा सुराधिपेति" गुरुवाक्यमप्येतेन व्याख्येयम् । ननु पौषचैत्रादिषु विरुद्धफलेषु चान्द्रमासेषु विहितसंक्रान्तिचेत्तदा नूतनगृहप्रवेशः कार्यो वा नवेत्यत आह न सौरमिति यत्तु निश्चये न सौरं मानं तत् प्रवेशे नेष्टं न शुभफलदम् । विरुद्धशुभफलयोश्चान्द्रसौरमासयोः साहित्ये विहितचान्द्रमासैरेव गृहप्रवेशः कार्य इत्यलमतिप्रसङ्गेन । द्वाःस्थेति । द्वाःस्थनक्षत्राणि स्वद्वारस्थे उक्तानि । मृदूनि ध्रुवाणि चोडूनि प्रसिद्धानि । द्वाःस्थानि च तानि मृदुध्रुवोडूनि चेति कर्मधारयः । तादृशैर्भैः प्रवेशनं हितं स्यात् । अयमर्थः यस्मिन् गृहे प्रवेशः कर्तुमिष्यते तस्य द्वारं यद्दिगभिमुखं तद्दिक्नक्षत्रैर्विहितैः प्रवेशः कार्यः । यदाह वशिष्ठः "यद्दिग्द्वारं मन्दिरं तद्दिगृक्षैः स्यात् संप्रवेशो न सर्वैरिति" तन्नक्षत्राण्याह स एव "चित्रोत्तराधातृशशाङ्कमित्रवस्वम्बुपाशीश्वरभेषु १४।१२।२१।१६।४ ५।११।७।२२।२३।२४ नूनम् । आयुर्धनारोग्यसुतप्रपौत्रसत्कीर्तिदः स्यात्त्रिविधः प्रवेशः" इति । नारदोऽपि "धनिष्ठार्क्षेषु २३।८।२७ वरुणत्वाष्ट्रमित्रस्थिरोडुषु २४।१४।१७।४।१२।२१।२६ । शुभः प्रवेशो देवेज्यशुक्रयोर्दृश्यमानयोरिति" । अत्र पुष्यधनिष्ठाशततारकाग्रहणं जीर्णगृहप्रवेशविषयम् । उक्तञ्च ज्योतिःप्रकाशे "प्रवेशो नूतने हर्म्ये ध्रुवैर्मैत्रैः सुखाप्तये । पुष्यस्वातीयुतैस्तैश्च जीर्णे स्याद्वासवद्वये" इति । एतदुपलक्षणमग्रिमपद्ये वक्ष्यति । कलशमेवाशयं मनसि निधायाह श्रीपतिः "शुभः प्रवेशो मृदुभिर्ध्रुवाख्यैः क्षिप्रैश्चरैः स्यात् पुनरेव यात्रा । उग्रैश्च मिश्रैर्दारुणभैः कुमारो राज्ञां विनाशाय विनाशमेति" "कृत्तिकासु भवनं कृशानुना दह्यते प्रविशतां न संशयः । तन्मुखं च सदनं हि तत्क्रमद्वारभेषु शुभकृत् प्रवेशनमिति" वशिष्ठोऽपि "अर्कादितोयानिलदस्रविष्णु १३।७।१५।२।२२ भगे प्रविष्टं नवमन्दिरं यत् । अब्दत्रयात्तत्परहस्तयातं शेषेषु (विहितभिन्नेषु) धिष्ण्येषु च वत्सरं स्यादिति" प्रवेशलग्नान्याह जन्मर्क्षेति । जन्मर्क्षं जन्मराशिः जन्मलग्नं च प्रसिद्धम् । ताभ्यामुपचये तृतीयषष्ठैकादशदशमस्थेष्वेषु तथा स्थिरराश्युभयराशिषु लग्नगतेषु सत्सु नवगृहप्रवेशनं शुभम् । यदाह वशिष्ठः "कर्तुर्विलग्नादथ जन्मराशेर्लग्नस्थितो राशिरिति प्रदिष्टः । निस्वोऽभिदारिद्र्ययशस्कराश्च सुहृत् सुखघ्नो रिपुनाशदश्च । कलत्रहन्ता निधनप्रदश्च रोगप्रदः सिद्धिकरोऽर्थदश्च । क्रमाच्च वैराग्यदः क्रमेण सदैव नूनं त्रिविधः प्रवेशः" इति । अतो निष्कृष्टमर्थमाह गृहप्रवेशे राजमार्तण्डः "कर्तुर्भोपचयगाश्च विलग्ने राशयः शुभफलाय भवन्तीति" नारदोऽपि "कर्तुर्जन्मभलग्ने वा ताभ्यामुपचयेऽपि वा । प्रवेशलग्ने स्याद्वृद्धिरन्यथे शोकनिःस्वनः" इति । पुनर्वशिष्ठः "सौम्ये स्थिरे भे शुभदृष्टयुक्ते लग्नेऽथ वा द्व्यङ्गगृहे विलग्ने" इति । सौम्ये सौम्यग्रहयुक्ते । द्व्यङ्गगृहे द्विस्वभावराशौ । अत्र विवाहप्रकरणोक्ता एकविंशतिविधा दोषा वर्ज्या इत्यपि ध्येयम् । एकविंशतिदोषानुपक्रम्य वशिष्ठेनोक्तम् "कर्तुर्नाशो गृहारम्भे प्रवेशे पतिनाशनम्" इति (१)। अथ जीर्णगृहादिविषयके प्रवेशे विशेषमिन्द्रवज्रयाह जीर्णे पुरातनेऽन्यनिर्मिते गृहेऽथवा सिद्धएव नवेऽग्न्यादिभयात् अग्निकृतं भयं दाहः । आदिशब्देन वज्रवृष्टिपातभयं राजकोपोऽपि । इत्याद्युपद्रवैः पतिते गृहे पुनरपि समाकृते उत्थापिते गृहेऽपि प्रागुक्ताः सर्वेऽपि मासकालादयो गृहप्रवेशे ज्ञेयाः । किन्तु । मार्गो

र्थयोः मार्गशीर्षकार्त्तिकयोश्च श्रावणेऽपि श्रावणे नास्ति दोषः प्रवेशः सन् शुभफलदः स्यात्। यदाह सनत्कुमारः "गृहारम्भोदितैर्मासैर्विशेद्धीरो विशेद्गृहमिति" अत्र सामान्यतो गृहारम्भोदिता मासा गृहप्रवेशेऽभिहिताः" ते चेमे। "सौम्यफाल्गुनवैशाखमाघश्रावणकार्त्तिकाः। मासाः स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः" इति नारदोक्तेः मार्गशीर्षफाल्गुनवैशाखमाघश्रावणकार्त्तिका विहिताः। तत्र उत्तरायणे एव गृहप्रवेशस्य वाक्यान्तरेण विहितत्वात् श्रावणकार्त्तिकमार्गशीर्षाणामुत्तरायणत्वाभावाद्विरोधेन नूतनजीर्णगृहप्रवेशाभ्यां व्यवस्था कथं? प्रागभिहितनारदवाक्येनोत्तरायणसाहचर्येण नूतनगृहप्रवेशस्तुपूर्वगृहप्रवेशयोर्विधानात् "गृहारम्भोदितैर्मासैः" इत्यनेन तु सामान्यतस्त्रिविधस्यापि गृहप्रवेशस्याभिधानादुत्तरायणीयामासास्त्रिविधगृहप्रवेशे शुभाः दक्षिणायनीया मासाः श्रावणादयस्तु जीर्णगृहप्रवेशविषयाः। अतएव नारदो मार्गशीर्षकार्त्तिकयोर्नूतनगृहप्रवेशे मध्यमत्वमाह अर्थादेव जीर्णगृहप्रवेशे उत्कृष्टत्वमध्यवसीयते। अम्बुपेति अम्बुपः शततारका ऐन्द्रः पुष्यः। अनिलः स्वाती वासवं धनिष्ठा एष्वपि भेषु जीर्णगृहेऽग्न्यादिभयान्नवेऽपि गृहे प्रवेशः शुभः प्राक्पद्योक्तेषु तु भेषु शुभ एवेति कैमुतिकन्यायादवगम्यते। यदुक्तं ज्योतिःप्रकाशे "प्रवेशो नूतने हर्म्ये ध्रुवमैत्रैः सुखाप्तये। पुष्ये स्वाति धनिष्ठैश्च जीर्णे स्याद्वासवद्वये" इति। नावश्यमिति अत्रैवंविधे जीर्णे गृहे अग्न्यादिभयान्नवेऽपि गृहेऽवश्यमस्तादिविचारणा शुक्रास्तगुर्वस्तबाल्यवार्द्धक्यसिंहस्थगुरुमकरस्थगुरुलुप्तसंवत्सरादीनां दोषाणां विचारणा विचारो नास्ति। अस्तादयः कालदोषाःसन्तु वा मा वा तथापि गृहप्रवेशः कार्यः। परन्तु सोऽपि यथाकथञ्चित्पञ्चाङ्गशुद्धिमात्रमङ्गीकृत्य विहितनक्षत्रेष्वेव कार्यः। वास्तुपूजा त्वेवंविधेऽपि गृहप्रवेशे भवतीत्यपि ध्येयम् यदुक्तं ज्योतिःप्रकाशे "नित्ययाने गृहे जीर्णे प्राशने परिधानके। वधूप्रवेशे माङ्गल्ये न मौढ्यं गुरुशुक्रयोरिति" वशिष्ठेनाप्युक्तम् "नवप्रवेशे त्वथ कालशुद्धिर्न द्वन्द्वसौपूर्विकयोः कदाचिदिति" अस्यार्थः। नूतनगृहप्रवेशे कालशुद्धिर्विचार्या। द्वन्द्वं द्वन्द्वाभयाख्यो गृहप्रवेशः सौपूर्विको राज्ञो यात्रासमाप्तौ गृहप्रवेशः। तादृशयोर्गृहप्रवेशयोः कालशुद्धिः कदाचिदपि नापेक्षिता।

सति यथात्वे सुखेनास्तु। किन्तु प्रवेशदिनीयपञ्चाङ्गशुद्धिसहिते शुभलग्ने गृहप्रवेशः कार्यः। पूर्वस्मिन्नाद्ये नूतने प्रवेशे यथा वास्तुपूजा तथा द्वन्द्वसौपूर्विकयोरपि कार्येत्यर्थः। नारदस्तु यात्रानिवृत्तिप्रवेशे कालशुद्धिरपेक्षितैवेत्याह तद्वाक्यं प्रागभिहितम्। तदेतयोर्वाक्ययोरावश्यकाऽनावश्यकविषयत्वेन व्यवस्था। त्रयाणां गृहप्रवेशानां लक्षणमुक्तं वशिष्ठेन "अपूर्वसंज्ञः प्रथमः प्रवेशो यात्रावसाने तु सपूर्वसंज्ञः। द्वन्द्वाभयस्त्वग्निभयादिजातः प्रवेश एवं त्रिविधः प्रदिष्टः" इति। एतद्व्याख्यानं यात्रानिवृत्ताविति पद्यव्याख्यातावसरे तत्रत्य एवावधार्यम्। अत्रेदं ध्येयम् त्रिविधेऽपि प्रवेशे प्रवेशदिनीयनक्षत्रं क्रूराक्रान्तं क्रूरविद्धं वा नक्षत्रं सर्वथा वर्ज्यमिति। उक्तञ्च वशिष्ठेन "क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे" इति। (२) "अथ गृहप्रवेशदिनात् प्राक्तन्यां वास्तुपूजां विदध्यादित्युपजातिकापूर्वार्द्धेनाह मृदुध्रुवेति। मृदूनि ध्रुवाणि क्षिप्राणि चराणि नक्षत्राणि प्रसिद्धानि मूलभं च एषु षोडशसु भेषु नक्षत्रेषु वास्तोः वास्तुपुरुषस्यार्चनं भूतबलिं च कारयेत्। गृहपतिर्वास्तुपूजां कुर्यात्। पुरोहितो गृहपतिं वास्तुपूजादिकं कारयेत्। हृक्रोरन्यतरस्यामिति णौ कर्त्तुः कर्मत्वम्। यदाह काश्यपः "चित्राशतभिषास्वाती हस्तः पुष्यः पुनर्वसुः। रोहिणी रेवती मूलं श्रवणोत्तरफाल्गुनी। धनिष्ठा चोत्तराषाढा तथा भाद्रोत्तरान्विता। अश्विनी मृगशीर्षं च अनुराधा तथैव च। वास्तुपूजनमेतेषु नक्षत्रेषु करोति यः। स प्राप्नोति नरो लक्ष्मीमिति प्राह पराशरः" इति। वास्तुपूजाप्रकारमाह। वशिष्ठः "निर्माणे मन्दिराणां च प्रवेशे त्रिविधेऽपि वा। वास्तुपूजा तु कर्त्तव्या यथासौ कथयाम्यतः। गृहमध्ये हस्तमात्रं समन्तात्तण्डुलोपरि। एकाशीतिपदं कार्यं लिखेत्तुल्यं सुशोभनम्। एकद्वित्रिपदाः पञ्चचत्वारिंशत् सुरार्चिताः। द्वात्रिंशद्बाह्यतो वक्ष्यमाणाश्चान्तस्त्रयोदश। तेषां स्थानानि नामानि वक्ष्यामीश्वरकोणतः। तत्राग्निः प्रथमः कोणस्थस्त्वसौ चैकपदेश्वरः। तथा द्वितीयः पर्जन्यश्चासावेकपदेश्वरः। जयन्तेन्द्रार्कसत्याख्या भृशश्च द्विपदेश्वराः। आकाशवायू परतः क्रमादेकपदेश्वरौ। एवं प्राच्यां नव ख्याता स्त्वेवमेवान्यदिक्षु च। आद्यश्चान्त्यावेकपदौ द्विपदाः पञ्च मध्यमाः। पूषाद्याश्च यमान्ताः (पितृगणा-

पञ्चेष्टकेऽप्यष्टमशुद्धियुक्ते । कार्यः प्रवेशो न चरांशलग्ने शुभेक्षिते वाप्यथ संयुते वा । रिक्ताममां दग्धतिथिं दिनेशभूसुतवर्जं चिनेन्दुदृष्टिम् । क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं भवनप्रवेशे" इति । सारफलमथाह च तत्र "इष्टाते प्रविशतां च मन्दिरं वह्निना नियतमेव वह्निभे । ब्रह्मभूमिसुतवासरे तथा भीतरक्षादिवसे हि शुद्धिदम् । चन्द्रशार्केसितवासरेषु च श्रीकरं सुखमहार्थलाभदम् । सूर्यसुतदिवसे स्थिरप्रदं किन्तु चौरभयमत्र विद्यते" इति । एषां विवर्जनमर्हमाह श्रीपतिः "रिक्ता तिथिर्भूसुतभानुवारौ मिश्राश्च योगाः परिवर्जनीयाः । मेषः कुलीरोमकरस्तुला च त्याज्याः प्रवेशे हि तथा तदंशाः" इति । निषिद्धलग्नफलान्यभिहितानि राजमार्तण्डे "भूयो यात्रा मेषलग्ने प्रवेशे नाशं कुर्य्यात् कर्कटस्योदये वा । व्याधिं तौलिन्याश्रिते लग्नवर्त्तिन्यालेखेरे चाशु वासान्यनाशम्" । आलेखेरे मकरे । "लग्नेऽन्यराशिकेऽप्यंशे तद्गुणफलप्रदाः । शुभान्यन्यानि लग्नानि प्रवेशे मुनयो विदुरिति" अन्यानि स्थिराणि द्विस्वभावानि च । उक्तं च वशिष्ठेन "पञ्चाङ्गसंशुद्धदिने निषेकतारादिके चाष्टकवर्गयुक्ते । सौम्ये स्थिरे भे शुभदृष्टियुक्ते लग्नेऽथ वा द्व्यङ्गगृहे विलग्ने" इति । विशेषो राजमार्त्तण्डे "निन्दिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः । कर्तृभोपचयगाश्च विलग्ने राशयः शुभफलाय भवन्तीति" । एतल्लग्नान्तराणुक्तौ मङ्गलाचारकृत्यं वा द्रष्टव्यम् । शुभांशाः वृषमिथुनकन्याधनुर्मीनानामंशा इत्यर्थः कर्कटकांशयोः स्वरूपतो निषिद्धत्वात् । विशेषान्तरमाह वशिष्ठः "यः क्षीणचन्द्रोऽन्त्यषष्टसंस्थः पापेक्षितः पापयुतोऽथ वा स्यात् । कर्त्तुः स्त्रियं हन्ति स वत्सरेण त्रिवर्षतः सौम्यनिरीक्षितश्चेदिति" अथ राज्ञां यात्रानिवृत्तिप्रवेशेऽत्र विशेषो ध्येयः यत्र मासि यात्रा कृता तस्मान्नवमे मासि यात्रा दिनान्नवमे दिने वा प्रवेशोनिषिद्धः यदाह गुरुः । "निर्गमान्नवमे मासि प्रवेशो नैव शोभनः । नवमे दिवसे चैव प्रवेशं नैव कारयेदिति" । वामं रविमिति । गृहप्रवेशसमये रविं सूर्यं वामं तद्दिगभिमुखात् प्रवेश्यगृहद्वारमभागस्थं कृत्वा वेश्म गृहं विशेत् । तथा पुरोऽग्रे स्वस्थानं पूर्णघटं जलपूर्णं कलशमुपलक्षणत्वात् पूगीफलादिपूर्णं घटं वा कृत्वा । चकारस्याऽनुक्तसमुच्चयार्थत्वाद्ब्राह्मणाञ्च मङ्गलकलशानपि ब्राह्मणांश्चाग्रे कृत्वा वेश्म विशेत् । अत्र शुक्रः पृष्ठगः कार्य्य इत्युक्तोऽपि विशेषो ध्येयः यदाह वशिष्ठः "कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं विप्रान् पूज्यानग्रतः पूर्णकुम्भम् । हर्म्यं रम्यं तोरणस्रग्वितानैः स्त्रीभिः साध्वी गीतमाल्यैर्विशेत्तदिति" शुक्रस्तु वामगोऽप्यग्रगो वा शुक्रो निषिद्धः, किन्तु पृष्ठगतो दक्षिणगतो वा शुभ इत्याह "पृष्ठगं दक्षिणं वापि भृगुं कृत्वा विशेत्सदा । पुरोगं वामगं वापि शुक्रं कृत्वा विशेन्नेति" अत्र शुक्रस्य दिक्चतुष्टयस्यत्वज्ञानं चन्द्रवदेव ज्ञेयं विशेषानुक्तेः । तत्र गृहारम्भप्रकरणेऽत्राभिहितम् अयं च सर्ववर्णानां निविशेऽपि प्रवेशे विधिः राज्ञां तु यात्रानिवृत्तौ विशेषमप्याह श्रीपतिः "कृत्वा विप्रान् मङ्गलकलशांश्चाग्रतो वामतोऽर्कं ख्यातः प्राज्ञो विस्मयवतो मङ्गलैर्वेदघोषैः । व्यस्तैर्यात्राकथितशकुनैर्द्वारमार्गे च राजा हर्म्यं पुष्पप्रकरचिरतोरणाढ्यं विशेदिति" ईदृशं वेश्म मकुटयुतं मकुटं पताकाद्यादि तेन युतम् । उपलक्षणत्वाद्विवाहप्रकरणोक्तं "वर्णो वश्यं तथा तारा" इत्येवमादिकं च । तेनापि शुद्धं ध्येयम् यदाह वशिष्ठः "राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेदिति" ॥ ४ । अथ वामगतार्कज्ञानं तिथिभेदेन पूर्वाद्यभिमुखगृहप्रवेशं चेन्द्रवंशाच्छन्देनाह वाम इति । अष्टमपञ्चमद्वितीयैकादशस्थानेभ्यः पञ्चसु स्थानेषु स्थिते रवौ सति प्राग्वदनादिमन्दिरे प्रवेष्टव्ये गृहप्रवेशकर्त्तुर्वामो रविर्ज्ञेयः तद्यथा । यस्मिन् लग्ने प्रवेशः कर्त्तुमिष्यते तस्मादष्टमं यत् स्थानं तस्मात् पञ्चसु स्थानेषु अर्के स्थिते पूर्वाभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्यः स्यात् । तथा लग्नाद्यत् पञ्चमस्थानं ततः पञ्चसु स्थानेषु अर्के स्थिते दक्षिणाभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्यः । एवं लग्नाद्यद्द्वितीयं स्थानं ततः पञ्चसु स्थानेषु सूर्ये पश्चिमाभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्यः । तथैव लग्नाद्यदेकादशस्थानं ततः पञ्चसु स्थानेषु सूर्ये स्थिते उत्तराभिमुखगृहप्रवेशकर्त्तुर्वामः सूर्य इत्यर्थः । उक्तञ्च "रन्ध्रात् सुतात्तनतः आयात् पञ्चस्वर्के स्थिते क्रमात् । पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यतः" इति । विश्वकर्म्मापि "लग्नात् प्राच्यादितो दिक्षु द्वौ द्वौ राशी नियोजयेत् । एकमेकं न्यसेत्कोणे सूर्यं वामं विचिन्तयेत् । प्राच्यां लग्नात् द्वौ राशी स्थाप्यौ कोणे चैकः । तथा

पूर्णातिथावपीति। प्राग्वदने पूर्वाभिमुखे गृहे पूर्णातिथौ पञ्चम्यां दशम्यां पूर्णिमायां वा प्रवेशः शुभः। नन्दादिके तिथिगणे याम्यजलोत्तरानने गृहप्रवेशः शुभः। यथा दक्षिणाभिमुखे गृहे नन्दायां प्रतिपदि षष्ठ्यामेकादश्यां वा प्रवेशः शुभः। जलं पश्चिमादिक् तद्दिगभिमुखे भद्रायां द्वितीयायां सप्तम्यां द्वादश्यां वा प्रवेशः शुभः। उत्तराभिमुखे गृहे जयायां तृतीयायामष्टम्यां त्रयोदश्यां वा प्रवेशः शुभ इत्यर्थः। यदाह गुरुः “नन्दायां दक्षिणद्वारं भद्रायां पश्चिमामुखम्। जयायामुत्तरद्वारं पूर्णायां पूर्वतोविशेदिति” मूले नन्दादिके इति पदोपादानात् क्रमापहृत्यं यद्यप्यायाति तथापि विदिशु द्वारनिषेधाद्दिशां चतुष्टयेन चतुर्णां नारादीनां सम्भवात्तथाः च रूपतो निषेधाद रिक्तापहृत्यासम्भवोऽध्येयः। सोऽपि प्रकृतिवाक्ये स्पष्ट एव। ५। तत्र गृहप्रवेशे वास्तुकलशचक्रं प्रादुर्भविष्णोऽर्हतिनाह। वक्ते इति। कलशस्याऽष्टधा विभागाः परिकल्प्याः मुखं कण्ठो गर्भो मूलं चेति चत्वारो विभागाः पूर्वादिदिक्परत्वेन चत्वारो विभागा एवमष्टौ स्युः। तथाविभागपरत्वेन सूर्यभाच्चतुरन्यासे फलमुच्यते। वक्त्रे इति। गृहप्रवेशसमये इति सर्वत्रापि सम्बध्यते कुम्भे कलशाकृतौ वास्तुनि रविभात् सूर्याक्रान्तनक्षत्रादिति ल्यब्लोपे पञ्चमी। रव्युषमारभ्य नक्षत्रन्यास इत्यर्थः। तत्र कलशस्य वक्त्रे मुखे भूरेकं सूर्याक्रान्तनक्षत्रमेव स्थाप्यं तत्फलं गृहस्याऽग्निदाहः। ततः पूर्वभात् तस्मात्तदग्रिमाणि चत्वारि भानि प्राच्यां स्थाप्यानि, फलमुद्वसनं जनशून्यत्वं गृहं स्यात्। ततः कृता यमगतास्तदग्रिमाणि चत्वारि भानि दक्षिणस्यां यमदिशि स्थाप्यानि, फलं गृहपतेर्लाभो द्रव्यप्राप्तिः। ततः कृताः तदग्रिमाणि चत्वारि भानि पश्चिमे पश्चिमायां स्थाप्यानि, फलं गृहपतेः श्रीप्राप्तिः। ततो वेदाः तदग्रिमाणि चत्वारि भानि उत्तरे उत्तरस्यां स्थाप्यानि। फलं कलिर्लोकैः सह गृहस्वामिनो निरर्थकः कलहः स्यात्। ततोगुणमिताः तदग्रिमाणि चत्वारि भानि गर्भे कलशमध्ये स्थाप्यानि, फलं विनाशः। कलशे लाकाङ्क्षायां गर्भोपादानाद्वाविना गर्भाणां विनाश इत्यर्थः। ततोरामास्तदग्रिमाणि त्रीणि भानि गुदे बुध्ने स्थाप्यानि। फलं स्थैर्यं गृहपतेर्बहुकालं तत्र गृहे निवासः। ततोऽनलास्तदग्रिमाणि त्रीणि भानि कण्ठे स्थाप्यानि, फलं स्थिरत्वं सर्वदा गृहपतेर्भवेत्। एवमभिजिद्रहितानि स्युः। तदुक्तं विश्वकर्मणा “घटाकारं लिखेच्चक्रं रविधिष्ण्यात् क्रमेण च। मुखैकं दिक्षु चत्वारि त्रीणि त्रीणि गुदकण्ठयोः। एवं चक्रं समालेख्यं प्रवेशार्थं सदा बुधैः” अत्र चत्वारि इति वीप्सा द्रष्टव्या। दिक्षु इत्यनेन गर्भोऽप्युपलक्ष्यते। तथा तत्फलनिर्देशस्तत्रैव “वक्त्रेऽग्नि मुखे प्रोक्त, उद्वासः पूर्वतो भवेत्। दक्षिणे चार्थलाभाय, पश्चिमे श्रीप्रदो भवेत्। उत्तरे कलहश्चैव, गर्भे गर्भविनाशनम्। स्थिरता च गुदे, कण्ठे कलशस्य प्रकीर्तितेति” ज्योतिःप्रकाशेऽपि “भूर्वेदपञ्चकं त्रि त्रिः। १।४।४।४।४।४।२।२ प्रवेशे कलशेऽर्कभात्। दहतिर्गतिधनं श्रीः स्याद्वैरं शून्यं स्थिरता शुभमिति” वेदपञ्चकं वेदाश्चत्वारस्तेषां पञ्चवारं चत्वारि भानि-वेश्यानीत्यर्थः। दहतिरित्यादीन्यष्टौ यथासङ्ख्यं फलानि। अत्र कलशचक्रे शुभफलदस्थाने याते सत्येव विहितनक्षत्राणां परिग्रहो मुख्यत्वादपि यद्दिङ्मुखगृहप्रवेशो विधित्सितः तद्दिङ्मुखविहितनक्षत्रपरिग्रहः। यथा पूर्वदिङ्मुखगृहप्रवेशे विधित्सिते रोहिणीमृगे ग्राह्ये। दक्षिणाभिमुखगृहप्रवेशे। उत्तरफाल्गुनीचित्रे। एवं पश्चिमाभिमुखे अनुराधोत्तराषाढे। एवमुत्तराभिमुखे उत्तरभाद्रपदारेवत्यौ ग्राह्ये इति निष्कृष्टोऽर्थः। अतएवोक्तं वसिष्ठेन “यद्दिग्मुखद्वारं मन्दिरं तद्दिग्भैरक्षैः स्यात्प्रवेशो न सर्वैरिति”। तद्दिग्भैरिति उक्तर्क्षैरिति चानयोः सामानाधिकरण्येनान्वयः। भिन्नवाक्यत्वे तु विवक्षिते चकारः कर्त्तव्यः। “सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणमिति” न्यायात्। अतएव “अर्कादितेयानिलदस्रविष्णुवस्वर्क्षे प्रविष्टं नव मन्दिरं यत्। अब्दत्रयात्तत् परहस्तयातं शेषेषु धिष्ण्येषु च वत्सरं स्यादिति” “निषेधोऽप्युपपन्नो भवति” पी॰धा॰

**गृहकच्छप** पु॰ गृहे कच्छप इव। पेषणशिलायाम् शब्दर॰।

**गृहकन्या** स्त्री गृहे कन्येव। घृतकुमार्याम् राजनि॰

**गृहकपोत** पुंस्त्री गृहे स्थितः कपोतः। कपोतभेदे स्त्रियां जातित्वात् ङीष “निष्यायित गृहकपोतशतैर्यथा स्यात्” मा॰ द॰ “आशर्त्तिभिर्गृहकपोतशिरोधराभैः” माघः। कपोतशब्दे दृश्यम।

**गृहकर्त्तृ** त्रि॰ गृहं करोति कृ–तृच् ६त॰। १गृहकारके (घरामि) २धूसरेऽतिसूक्ष्मे चटकभेदे पुंस्त्री राजनि॰। स्त्रियामुभयत्र ङीप्।

गृहकारक पु॰ गृहं करोति कृ–ण्वुल् ६त॰। गृहनिर्माणकारके वर्णसङ्करभेदे। "प्रतिमाघटकादेव कन्यायां नापितस्य च। सूत्रकारस्य सम्भूतिः सोपान गृहकारकः" पराशरः २गृहकर्त्तरि (घरामि) त्रि॰। "मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम्। करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः" याज्ञ॰।

गृहकारिन् त्रि॰ गृहं करोति कृ–णिनि। (घरामि) १गृहकारके स्त्रियां ङीप् (कुमिरक्या) २कीटभेदे। सा च जातिः उपस्कराहरणपापजाता। यथाह "वकोभवति हृत्वाग्निं गृहकारी ह्युपस्करम्" मनुः।

गृहकुक्कुट पुंस्त्री गृहे स्थः कुक्कुटः। कुक्कुटभेदे "श्वेताय दद्याद्गृहकुक्कुटाय चतुर्थभक्ताय बुभुक्षिताय" सुश्रु॰।

गृहकूलक पु॰ गृहस्य कूले समीपे भवः कन्। चिचिण्डाख्ये शाके शब्दार्थचि॰।

गृहगोधा स्त्री गृहस्य गोधेव। (टिक्टिकी) ख्यातायाम् राजनि॰। स्वार्थे क। तत्रार्थे अमरः "श्वेता गृहगोधिकार्द्द नरे" बृ॰स॰५४अ॰। शुष्कार्द्द प्रमाणतोयप्रापिका श्वेता गृहगोधिकेत्यर्थः। पिङ्गलवर्णायास्तस्याः वामे स्थिताया गमने शुभत्वं यथाह बृ॰सं॰ ८६अ॰ "शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका। सूकरी परपुष्टा च पुन्नामानश्च वामतः" "गृहगोधिकेति संज्ञा विज्ञेया कुड्यमत्स्यस्य। दिङ्मण्डलेऽभ्यन्तरबाह्यभागे फलानि विद्याद् गृहगोधिकायाः" ८८अ॰ [(टिकटिकी) हेम॰।

गृहगोलिका स्त्री गृहे गोधिका शुभो॰। ख्यातायाम्

गृहचूल्ली स्त्री "पूर्वापरे तु शाले गृहचूल्ली दक्षिणोत्तरे कायम्" बृ॰स॰ ५२ अ॰ उक्ते द्विशाले गृहभेदे

गृहज पु॰गृहे दास्यां जायते जन–ड। दासभेदे "ध्वजाहृतोभक्तदासो गृहजः क्रीतदत्त्रिमौ। पैतृकोदण्डदासश्च सप्तैते दासयोनयः" मनुः। "दासास्तु गृहजादयः" नारदः १७२६ पु॰ इत्युक्तम्। [काशिके त्रिका॰।

गृहणी स्त्री गृहे नीयते नी–कर्म्मणि क्विप् संज्ञायां णत्वम्।

गृहतटी स्त्री गृहस्य तटीव। वीथिकायाम्(पिँडा दावोया) इति ख्याते पदार्थे हारा॰।

गृहदेवता स्त्री गृहे गृहे स्थिता देवता। वास्तुपुरुषदेहस्थेषु अन्यादिषु ब्रह्मान्तेषु ४५ संख्यकदेवताभेदेषु गृहशब्दे दृश्यम्। "गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः" आश्व॰गृ॰१।२।४ सू॰

गृहदेवी स्त्री गृहे तद्रक्षायै स्थितस्य पूज्या देवी। जरानाम राक्षसाम् तत्कथा भा॰ स॰ १७ अ॰ "जरा नामाऽस्मि भद्रं ते राक्षसी कामरूपिणी। तव वेश्मनि राजेन्द्र! पूजिता न्यवसं सुखम्। गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी। गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा। दानवानां विनाशाय स्थापिता दिव्यरूपिणी। यो मां भक्त्या लिखेत् कुड्ये सपुत्रां यौवनान्विताम्। गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात्। त्वद्गृहे तिष्ठमाना तु पूजिताऽहं सदा विभो!। लिखिता चैव कुड्येऽहं पुत्रैर्बहुभिरावृता। गन्धपुष्पैस्तथा धूपैर्भक्ष्यैर्भोज्यैः सुपूजिता। साऽहं प्रत्युपकारार्थं चिन्तयाम्यनिशं तव। तवेमे पुत्रशकले दृष्टवत्यस्मि धार्म्मिक!। संश्लेषिते मया दैवात् कुमारः समपद्यत। तव भाग्यान्महाराज! हेतुमात्रमहं त्विह। मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम्। गृहसंपूजनात्तुष्ट्या मया प्रत्यर्पितस्तव" [रत्नमा॰।

गृहद्रुम पु॰गृहमिव द्रुमः। मेषशृङ्गीवृक्षे (गाडरशिङा)

गृहधूप पु॰ गृहस्य धूप इव। धूपभेदे "मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम्। मरिचं हिङ्गु मांसी च बीजं कार्पाससम्भवम्। छागरोमाहिनिर्मोकौ विष्ठा वैडालिकी तथा। गजदन्तश्च तच्चूर्णं किञ्चिद्धूतविमिश्रितम्। गृहेषु धूपनं दत्तं सर्वान् बालग्रहान् जयेत्। पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेत्" शब्दार्थचि॰। गेहधूपोऽप्यत्र।

गृहधूम पु॰गृहजातो धूमः। (झुल) ख्याते पदार्थे। "सैन्धवं करवीरञ्च गृहधूमं विषं तथा" "ततो हरिद्रा गृहधूमरोध्रपतङ्गचूर्णैः समनःशिलालैः" सुश्रु॰।

गृहनमन न॰ गृहं नमयति नम–णिच्–ल्यु पूर्वपदात् संज्ञायां णत्वप्राप्तौ क्षुभ्ना॰ न णत्वम्। वायौ।

गृहनाशन पुंस्त्री गृहं नाशयति प्रवेशेन नश–णिच्–ल्यु। वनकपोते (घुघु) राजनि॰ कपोतशब्दे तस्य गृहनाशकता दृश्या स्त्रियां जातित्वात् ङीष्। [ङीष्।

गृहनीड पुंस्त्री गृहे नीडमस्य। चटके हारा॰ स्त्रियां

गृहप पु॰ गृहं पाति पा–क। गृहपतौ

गृहपति पु॰ ६त॰। गृहस्वामिनि; १गृहस्थे, द्वितीयाश्रमिणि २मन्त्रिणि, ३धर्मे च मेदि॰ ४सत्रयागकर्त्तरि यजमाने "ब्रह्मणे गृहपतये" कात्या॰ श्रौ॰८।२।१ "गृहपतिर्यजमानप्रयुक्तत्वात्" १२।१।८। "याजमानं यत् कर्म्म तत् गृहपतिः करोति सत्रान्तरे तस्यायुक्तत्वात्

इतरेषां चाध्वर्य्यवादिषु योगात्" कर्कः "कस्मिंश्चित् सदस्येषु स वै गृहपतिस्तदा। उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम्" भा० आ० ४अ०। "वनौकसां गृहपतिनामनुत्तमम्" भा० शा० २४१ अ०। आर्षत्वात् न दीर्घः। ५यजमानमात्रे "गृहपतिना संयुक्ते ञ्यः" पा० "गृहपतिर्यजमानस्तेन संयुक्तः गार्हपत्योऽग्निः" सि० कौ०। गृहपतेरपत्यादि अश्वप० अण्। गार्हपत गृहपतिसम्बन्धिनि त्रि० स्त्रियां ङीप्। ६अग्निभेदे "अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते" भा० २२१ अ०। गृहस्य पतिः। ७गृहस्वामिमात्रे स्त्रियां सपूर्वत्वात् वा नान्तादेशे गृहपत्नी गृहपतिरिति रूपद्वयमितिभेदः। "गृहान् गच्छ गृहपत्नी" ऋ० १०।८५। गृहपत्नी समगृहस्वामिनी" भा०

गृहपाल त्रि० गृहं पालयति पालि–अण्। गृहरक्षके "तमन्वं सुप्रमासीनं गृहपालमथाब्रवीत्" भा० व० २१७ अ०। २कुक्कुटे शब्दार्थचि०

गृहपोतक गृहं पोत इव यस्य कप्। वास्तुस्थाने शब्दरत्ना०

गृहप्रवेश पु० ७त०। गृहे विधानेन प्रवेशे गृहस्थे तद्विहितयात्रा [शब्दार्थचि०।

गृहबभ्रु पुंस्त्री गृहस्थितो बभ्रुः। गृहस्थिते नकुले।

गृहबलि पु० गृहे देयो बलिः। वैश्वदेवकर्म्मणि "ततो गृहबलिं कुर्य्यात्" मनुः।

गृहबलिप्रिय ६त०। बकपक्षिणि शब्दार्थचि०।

गृहबलिभुज् पुंस्त्री गृहे दत्तं बलिं भुङ्क्ते भुज–क्विप्। १काके २चटके च हेम०।

गृहभर्त्तृ त्रि० ६त०। गृहस्वामिनि "गृहभर्त्ता सत्सु त्वेऽध्वरे पीडामस्मै प्रयच्छन्ति" इ० स० ५२अ०। स्त्रियां ङीप्।

गृहभूमि स्त्री गृहयोग्या भूमिः। वास्तुभूमौ हलायु०

गृहमणि पु० गृहे मणिरिव। प्रदीपे हारा०।

गृहमाचिका स्त्री मच–ण्वुल् ६त० (चामचिका) अजिनपत्रायाम् त्रिका०। [जातित्वात् ङीष्।

गृहमृग पुंस्त्री गृहे मृग इव। कुक्कुरे हेम० स्त्रियां

गृहमेध पु० गृहैर्दारैः मेधते संगच्छते मेध–अच् ६त०। ततदारपरिग्रहे १गृहस्थे। मेध–हिंसायां भावे घञ् ७त०। ५पञ्चसूनात्मकहिंसायाम् मेधो हिंसाहेतुको यज्ञः पञ्चसूनात्मको यस्य। २पञ्चयज्ञकर्त्तरि गृहस्थे। गृहे कर्त्तव्य यज्ञो यज्ञ। ३मरुद्भेदे "गृहमेधास आगत मरुतो माप भूतन" ऋ० ७।५९।१०

गृहमेधिन् पु० गृहैर्दारैर्मेधते संगच्छते मेध–सङ्गमे णिनि। १गृहस्थे "पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्। अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः" मनुः। "प्रजायै गृहमेधिनाम्" रघुः। गृहे कर्त्तव्यो मेधो यज्ञोऽस्यास्ति इनि। २मरुद्भेदे "मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि" कात्या० श्रौ० ५।६।६। गृहमेधः पञ्चसूनानिमित्तहिंसा अस्त्यस्य इनि। ३गृहस्थे "गृहमेधी व्रीहियवाभ्यां शरदवसन्तयोर्यजेत। यज्ञाशाकैर्वन्यैर्वर्षासु आपत्काले अन्येन, पुरातनैर्वेति" आ० श्रौ० स्मृतिः। "मेधृ मेधाहिंसयोः। यो मेधृ सङ्गमे चेत्यत्र चकारेण पूर्वगणस्थमेधाहिंसयोरनुवृत्तिः तेन मेधृ हिंसार्थः तथा च गृहनिमित्तेन जातायाः "पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्" इति मनूक्तायाः पञ्चसूनारूपहिंसायाः कारी गृहमेधी गृहस्थ" इत्यर्थः रघु०। ४तत्पत्न्यां स्त्री ङीप्। पतिकृतयज्ञसम्बन्धात्तथात्वम्।

गृहमेधीय त्रि० गृहमेधस्येदं छ। १गृहस्थकर्त्तव्ये कर्मभेदे "सान्तपनीयवेद्यां गृहमेधीयं विदधत्" कात्या० श्रौ० ५।६।६ व्या० हरिस्वामी। गृहमेधी मरुद्भेदे देवताऽस्य छ। २गृहमेधिनामकमरुद्देवताके हविरादौ त्रि०। "सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम्" ऋ० ७।५६।१४

गृहमेध्य त्रि० गृहमेधो देवताऽस्य वा यत्। गृहमेधदेवताके हविरादौ। कर्म्म० अच् तत्कर्मयुक्तेऽपि त्रि० "गृहमेध्या भवेन्नित्यं भूतानि च पूजयेत्" शुन० [illegible]। "गृहमेध्या गृहकृत्यपरा" रघु०।

गृहयन्त्र क्ली० गृहे यन्त्रं वस्त्रधारणदारुविशेषः। गृहस्थितवस्त्राद्याधारे (आलना) प्रसिद्धे काष्ठनिर्मिते पदार्थे "गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता" कुमा०

गृहयाय्य त्रि० चु० गृह— "श्रुदक्षिस्पृहिगृहिभ्य आय्यः" उ० सू० आय्य। गृहस्वामिनि इति सिद्धान्तकौमुदी। शब्दकल्पद्रुमे गृहयाय्यशब्दकल्पनमतीव प्रामादिकम् आय्यप्रत्ययस्य णयन्तत्वाभावात्

गृहयालु त्रि० चु० गृह–आलु। ग्रहीतरि।

गृहवाटिका स्त्री गृहसमीपे वाटिकेव आरामः ] गृहसमीपस्थोपवने हारा०।

गृहवित्त त्रि० गृहं वित्तं यस्य। गृहस्वामिनि स्त्रियां टाप्।

गृहसंवेशक पु० गृहं गृहनिर्माणं संविशति उपजीवति सम्+विश–ण्वुल्। वास्तुविद्योपजीविनि। "गृहसंवेशको दूतो वृक्षारोपक एव च" मनुः।

गृहस्थ पु० गृहे दारेषु तिष्ठति अभिरमते स्था–क। गृहिणि गृहस्थाश्रमिणि द्वितीयाश्रमस्थे "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः" मनुः।

गृहस्थधर्म पु० ६त०। गृहस्थकर्त्तव्ये धर्मभेदे स च धर्मः मन्वादिभिर्दर्शितः। तत्रादौ मनुनोक्तो यथा "गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने। महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः। स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत्। हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्। क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च। नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम्। नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्। अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्। यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्म्मशङ्कया। सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः। शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः। न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः। कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते। हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः। कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्। शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः। शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्। जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते। दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितृदेवास्तन्न च स्वर्गं स गच्छति। वृषलीफेनपीतस्य निःश्वासोपहतस्य च। तस्याञ्चैव प्रसूतस्य निष्कृतिर्न विधीयते। चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्। अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत। ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः। यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ। तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान्। षडानुपूर्व्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्। विट्शूद्रयोस्तु तानेव विद्याद्धर्म्म्यानराक्षसान्। चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः। पञ्चानान्तु त्रयो धर्म्म्या द्वावधर्म्म्यौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन। पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्व्वचोदितौ। गान्धर्व्वो राक्षसश्चैव धर्म्म्यौ क्षत्रस्य तौ स्मृतौ। आच्छाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयम्। आहूय दानं कन्याया ब्राह्मो १धर्म्मः प्रकीर्त्तितः। यज्ञे तु वितते सम्यगृत्विजे कर्म्म कुर्व्वते। अलङ्कृत्य सुतादानं दैवं २धर्म्मं प्रचक्षते। एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः। कन्याप्रदानं विधिवदार्षो ३धर्म्मः स उच्यते। सहोभौ चरतां धर्म्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्यो ४ विधिः स्मृतः। ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरो ५धर्म उच्यते। इच्छयाऽन्योऽन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्व्वः ६ स तु विज्ञेयो मैथुन्यः कामसम्भवः। हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्। प्रसह्य कन्याहरणं राक्षसो७ विधिरुच्यते। सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति। स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः। अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते। इतरेषान्तु वर्णानामितरेतरकाम्यया। यो यस्यैषां विवाहानां मनुना कीर्त्तितो गुणः। सर्वं शृणुत तं विप्राः सम्यक् कीर्त्तयतो मम। दश पूर्व्वान् परान् वंश्यानात्मानञ्चैकविंशकम्। ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन्। दैवोढाजः सुतार्षींस्त्रीन् षट् षट् कायोढजः सुतः। ब्राह्म्यादिषु विवाहेषु चतुर्ष्वेवानुपूर्व्वशः। ब्रह्मवर्च्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः। रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्य्याप्तभोगा धर्म्मिष्ठा जीवन्ति च शतं समाः। इतरेषु तु शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः। अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते । असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्म्मणि । शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया । वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने । ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा । पर्व्ववर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया । ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः । चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः । तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम् । पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः । निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्ज्जयन् । ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन् । न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि । गृह्णन् शुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी । स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः । नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् । आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् । अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः । यासां नाददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत् कुमारीणामानृशंस्यञ्च केवलम् । पितृभिर्भ्रातृभिश्चैताः पतिभिर्द्देवरैस्तथा । पूज्याः भूषयितव्याश्च बहुकल्याणमीप्सुभिः । यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः । शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम् । न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा । जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः । तानि कृत्याहतानीव विनश्यन्ति समन्ततः । तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च । सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च । यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् । यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् । अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्त्तते । स्त्रियान्तु रोचमानायां सर्व्वं तद्रोचते कुलम् । तस्यान्त्वरोचमानायां सर्व्वमेव न रोचते । कुविवाहैः क्रियालोपैर्व्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च । शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया । अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणा । कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः । मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि । कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः । वैवाहिकेऽग्नौ कुर्व्वीत गृह्यं कर्म्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही । पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् । तासां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः । पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् । अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते । देवतातिथिभृत्यानां पितॄणामात्मनश्च यः । न निर्व्वपति पञ्चानामुच्छ्वसन्न स जीवति । अहुतञ्च हुतञ्चैव तथा प्रहुतमेव च । ब्राह्म्यंहुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते । जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः । ब्राह्म्यं हुतं द्विजाग्र्यार्च्चा प्राशितं पितृतर्पणम् । स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्म्मणि । दैवकर्म्मणि युक्तो हि बिभर्त्तीदं चराचरम् । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । यथा वायुं समाश्रित्य वर्त्तन्ते सर्व्वजन्तवः । तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व्व आश्रमाः । यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमो गृही । स सन्धार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता । सुखञ्चेहेच्छता नित्यं योऽधार्य्यो दुर्ब्बलेन्द्रियैः । ऋषयः पितरो देवा भूतान्यतिथयस्तथा । आशासते कुटुम्बिभ्यस्तेभ्यः कार्य्यं विजानता । स्वाध्यायेनार्च्चयेतर्षीन् होमैर्द्देवान् यथाविधि । पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्म्मणा । कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्व्वापि पितृभ्यः प्रीतिमावहन् । एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके । न चैवात्राशयेत् कञ्चिद्वैश्वदेवं प्रति द्विजम् । वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम् । आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम् । अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः । विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च । कुह्वै चैवानुमत्यै च प्रजापतय एव च । सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः । एवं सम्यग् हविर्हुत्वा सर्व्वदिक्षु प्रदक्षिणम् । इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो

बलिं हरेत् । धन्वन्तर इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि । वनस्पतिभ्य इत्येवं मुषलोलूखले हरेत् । उच्छीर्षके श्रियै कुर्य्याद्भद्रकाल्यै च पादतः । ब्रह्मवास्तोष्पतिभ्यान्तु वास्तुमध्ये बलिं हरेत् । विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत् । दिवाचरेभ्यो भूतेभ्यो नक्तञ्चारिभ्य एव च । पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये । पितृभ्यो बलिशेषन्तु सर्व्वं दक्षिणतो हरेत् । शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् । वायसानां कृमीणाञ्च शनकैर्निर्वपेद्भुवि । एवं यः सर्व्वभूतानि ब्राह्मणो नित्यमर्च्चति । स गच्छति परं स्थानं तेजोमूर्त्तिः पथर्जुना । कृत्वैतद्बलिकर्म्मैवमतिथिं पूर्व्वमाशयेत् । भिक्षाञ्च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे । यत् पुण्यफलमाप्नोति गां दत्त्वा विधिवद्गुरोः । तत् पुण्यफलमाप्नोति भिक्षां दत्त्वा द्विजो गृही । भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्व्वकम् । वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् । नश्यन्ति हव्यकव्यानि नराणामविजानताम् । भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः । विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु । निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात् । संप्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्व्वकम् । शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः । सर्व्वं सुकृतमादत्ते ब्राह्मणोऽनर्च्चितो वसन् । तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन । एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते । नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा । उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपि वा । उपासते ये गृहस्थाः परपाकमबुद्धयः । तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् । अप्रणोद्योऽतिथिः सायं सूर्य्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् । न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यञ्चातिथिपूजनम् । आसनावसथौ शय्यामनुव्रज्यामुपासनम् । उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे समम् । वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् । न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् । भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः । न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते । वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च । यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमाव्रजेत् । भुक्तवत्सु च विप्रेषु कामन्तमपि भोजयेत् । वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ । भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन् । इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान् । सत्कृत्यान्नं यथाशक्ति भोजयेत् सह भार्य्यया । सुवासिनीः कुमारीश्च रोगिणो गर्भिणीस्तथा । अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् । अदत्त्वा तु य एतेभ्यः पूर्व्वं भुङ्क्तेऽविचक्षणः । स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः । भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि । भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती । देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः । पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् । अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते । राजर्त्विक्स्नातकगुरून् प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्क्केण परिसंवत्सरात् पुनः । राजा च श्रोत्रियश्चैव यज्ञकर्म्मण्युपस्थितौ । मधुपर्क्केण संपूज्यौ न त्वयज्ञ इति स्थितिः । सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । वैश्वदेवं हि नामैतत् सायं प्रातर्व्विधीयते । पितृयज्ञन्तु निर्व्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् । पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधाः । तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः । तत्र ये भोजनीयाः स्युर्ये च वर्ज्ज्या द्विजोत्तमाः । यावन्तश्चैव यैश्चान्नैस्तान् प्रवक्ष्याम्यशेषतः । द्वौ दैवे पितृकार्य्ये त्रीनेकैकमुभयत्र वा । भोजयेत् सुसमृद्धोऽपि न प्रसज्जेत विस्तरे । सत्क्रिया देशकालौ च शौचं ब्राह्मणसम्पदः । पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् । प्रथिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये । तस्मिन् युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी । श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः । अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् । एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् । पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि । दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः । सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते । एकस्तान् मन्त्रवित् प्रीतः सर्व्वानर्हति धर्म्मतः । ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च । न हि हस्ता-

र्वेदेश पदं न यच्च पतिसम्मियम्। न केनचिच्च विव-
देदप्रलापविवादिनी। न चार्थव्ययशीला स्यात् धर्मार्थं
विरोधिनी। प्रमादोन्मादरोषेर्ष्यावञ्चनात्यतिमानि-
ताम्। पैशुन्यहिंसाविद्वेषमोहाहङ्कारधूर्त्तताम्।
नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत्। एवं
परिचरन्ती सा पतिं परमदैवतम्। यशः शिवमिहाप्नोति
स्वर्गञ्च सलोकताम्। योषितो नित्यकर्मोक्तं नैमि-
त्तिकमथोच्यते। रजसो दर्शनादेषा सर्वमेव परित्य-
जेत्। सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत्।
एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता। स्वपेद्भू-
मावप्रमत्ता क्षपेदेवमहस्त्रयम्। स्नायीत सा त्रिरा-
त्रान्ते सचेलाऽभ्युदिते रवौ। विलोक्य भर्तृवदनं
शुद्धा भवति धर्मतः। कृतशौचा पुनःकर्म पूर्ववच्च समा-
चरेत्। द्विजस्त्रीणामयं धर्मः प्रायोऽन्यासामपीष्यते।
कृषिपण्यादि पुंसां ये भवेयुस्ताः प्रचोदिताः। पञ्चभिर्न-
र्मधुराद्यैः स्थापयन्तु पतिर्यथा। भवेत्तथा चरेयुर्वै मायाभिः
कामवेदिभिः। मृते भर्त्तरि सहगच्छेत् भजेद्वा
पालयेद्व्रतम्।" भा०व०"द्रौपदीसत्यभामासंवादे"२२२अ०
रविहस्तपरकेन तस्याः पतिवशीकरणकर्मोक्तं यथा
"केन द्रौपदि! वृत्तेन पाण्डवानधितिष्ठसि?। लोक-
पालोपमान् वीरान् यूनः परमसंमतान्। कथञ्च
वशगास्तुभ्यं न कुप्यन्ति च ते शुभे!। तव वश्या हि
सततं पाण्डवाः प्रियदर्शने!। मुखप्रेक्षाश्च ते सर्वे तत्त्व-
मेतद्ब्रवीहि मे। व्रतचर्य्या तपो वापि स्नानमन्त्रौष-
धानि वा। विद्यावीर्य्यं मूलवीर्य्यं जपहोमागदास्तथा।
ममाद्याचक्ष्व पाञ्चालि! यशस्यं भगदैवतम्। येन कृष्णे!
भवेन्नित्यं मम कृष्णो वशानुगः?। एवमुक्त्वा सत्यभामा
विरराम यशस्विनी। पतिव्रता महाभागा द्रौपदी
प्रत्युवाच ताम्। असत्स्त्रीणां समाचारं सत्ये! माम-
नुपृच्छसि। असदाचरिते मार्गे कथं स्यादनुकीर्त्तनम्।
अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते। तथा ह्युपेता
बुद्ध्या त्वं कृष्णस्य महिषी प्रिया। यदैव भर्त्ता जानी-
यान्मन्त्रमूलपरां स्त्रियम्। उद्विजेत तदैवास्याः सर्पा-
द्वेश्मगतादिव। उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः
सुखम्। न जातु वशगो भर्त्ता स्त्रियाः स्यान्मन्त्रकर्मणा।
अमित्रप्रहितांश्चापि गदान् परमदारुणान्। मूलप्रवादै-
र्हि विषं प्रयच्छन्ति जिघांसवः। जिह्वया यानि
पुरुषस्त्वचा वाप्युपसेवते। तत्र चूर्णानि दत्तानि हन्युः

क्षिप्रमसंशयम्। जलोदरसमायुक्ताः श्वित्रिणः पलिता-
स्तथा। अपुमांसः कृताः स्त्रीभिर्जडान्धबधिरास्तथा।
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत। न जातु
विप्रियं भर्त्तुः स्त्रिया कार्यं कथञ्चन। वर्त्ताम्यहन्तु
यां वृत्तिं पाण्डवेषु महात्मसु। तां सर्वां शृणु मे सत्यां
सत्यभामे! यशस्विनि!। अहङ्कारं विहायाहं कामक्रोधौ
च सर्वदा। सदारान् पाण्डवान्नित्यं प्रयतोपचराम्य-
हम्। प्रणयं प्रतिसंहृत्य निधायात्मानमात्मनि।
शुश्रूषुर्निरभीमाना पतीनां चित्तरक्षिणी। दुर्व्याहृता-
च्छङ्कमाना दुःस्थितादुरवेक्षितात्। दुरासिताद्दुर्व्रजि-
तादिङ्गिताध्यासितादपि। सूर्य्यवैश्वानरसमान् सोम-
कल्पान्महारथान्। सेवे चक्षुर्हणः पार्थानुग्रवीर्य्यप्रता-
पिनः। देवो मनुष्यो गन्धर्वो युवा चापि स्वलङ्कृतः।
द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः। नाभुक्त-
वति नास्नाते नासंविष्टे च भर्त्तरि। न संविशामि
नाश्नामि सदा कर्मकरेष्वपि। क्षेत्राद्वनाद्वा ग्रामाद्वा
भर्त्तारं गृहमागतम्। प्रत्युत्थायाभिनन्दामि आसने-
नोदकेन च। प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदा-
यिनी। संयता गुप्तधान्या च सुसंमृष्टनिवेशना। अति-
रस्कृतसम्भाषा दुःस्त्रियो नानुसेवती। अनुकूलवती
नित्यं भवाम्यनलसा सदा। अनर्मे चापि हसितं द्वारि
स्थानमभीक्ष्णशः। अवस्करे चिरं स्थानं निष्कुटेषु च
वर्जये। अतिहासातिरोषौ च क्रोधस्थानञ्च वर्जये।
निरताहं सदा सत्ये! भर्तॄणामुपसेवने। सर्वथा भर्त्तृ-
रहितं न ममेष्टं कथञ्चन। यदा प्रवसते भर्त्ता कुटु-
म्बार्थेन केनचित्। सुमनोवर्णकापेता भवामि व्रतचा-
रिणी। यच्च भर्त्ता न पिबति यच्च भर्त्ता न सेवते।
यच्च नाश्नाति मे भर्त्ता सर्वं तद्वर्जयाम्यहम्। यथोपदेशं
नियता वर्त्तमाना वराङ्गने!। स्वलङ्कृता सुप्रयता भर्त्तुः
प्रियहिते रता। ये च धर्माः कुटुम्बेषु श्वश्र्वा मे क-
थिताः पुरा। भिक्षा बलिः श्राद्धमिति स्थालीपाकाश्च
पर्वसु। मान्यानां मानसत्कारा ये चान्ये विदिता
मम। तान् सर्वाननुवर्त्तामि दिवारात्रमतन्द्रिता।
विनयान्नियमांश्चापि सदा सर्वात्मना श्रिता। मृदून् सतः
सत्यशीलान् सत्यधर्मानुपालिनः। आशीविषानिव क्रु-
द्धान् पतीन् परिचराम्यहम्। पत्याश्रयो हि मे धर्मो
मतः स्त्रीणां सनातनः। स देवः सा गतिर्नान्या तस्य
का विप्रियं चरेत्। अहं पतीन्नातिशये नात्यश्ने

नातिभूषये । नापि परिवदे श्वश्रूं सर्वदा परियन्त्रिता । अवधानेन सुभगे ! नित्योत्थिततयैव च । भर्त्तारो वशगा मह्यं गुरुशुश्रूषयैव च । नित्यमार्य्यामहं कुन्तीं वीरसूं सत्यवादिनीम् । स्वयं परिचराम्येतां पानाच्छादनभोजनैः । नैतामतिशये जातु वस्त्रभूषणभोजनैः । नाहं परिवदे चापि तां पृथां पृथिवीसमाम् । अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा । भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने । अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः । त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः । दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् । ह्रियते रुक्मपात्रीभिर्यतीनामूर्द्ध्वरेतसाम् । तान् सर्वानग्रहारेण ब्राह्मणान् ब्रह्मवादिनः । यथार्हं पूजयामि स्म पानाच्छादनभोजनैः । शतं दासीसहस्राणि कौन्तेयस्य महात्मनः । कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः । महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः । मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः । तासां नाम च रूपञ्च भोजनाच्छादनानि च । सर्व्वासामेव वेदाहं कर्म्म चैव कृताकृतम् । शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः । पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत । शतमश्वसहस्राणि दश नागायुतानि च । युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः । एतदासीत्तदा राज्ञो यन्महीं पर्य्यपालयत् । येषां संख्यां विधिञ्चैव प्रदिशामि शृणोमि च । अन्तःपुराणां स र्वेषां भृत्यानाञ्चैव सर्वशः । आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् । सर्वं राज्ञः समुदयमायञ्च व्ययमेव च । एकाहं वेद्मि कल्याणि ! पाण्डवानां यशस्विनि ! । मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः । उपासनरताः सर्वे घटन्ति स्म वरानने ! । तमहं भारमासक्तमनाधृष्यं दुरात्मभिः । सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै । अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् । एकाहं वेद्मि कोषं वै पतीनां धर्म्मचारिणाम् । अनिशायां निशायाञ्च सहायाः क्षुत्पिपासयोः । आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे । प्रथमं प्रतिबुध्यामि चरमं संविशामि च । नित्यकालमहं सत्ये ! एतत् संवननं मम । एतज्जानाम्यहं कर्त्तुं भर्त्तुः संवननं महत् । असत्स्त्रीणां समाचारं नाहं कुर्य्यां न कामये । तच्छ्रुत्वा धर्म्मसहितं व्याहृतं कृष्णया तदा । उवाच सत्या सत्कृत्य पाञ्चालीं धर्म्मचारिणीम् । अभिपद्यामि पाञ्चालि ! याज्ञसेनि ! क्षमस्व मे । कामकारः सखीनां हि सोपहासं प्रभाषितम्” २३२अ० ।

“द्रौपद्युवाच । इमन्तु ते मार्गमपेतदोषं वक्ष्यामि चित्तग्रहणाय भर्त्तुः । अस्मिन् यथावत् सखि ! वर्त्तमाना भर्त्तारमाच्छेत्स्यसि कामिनीभ्यः । नैतादृशं दैवतमस्ति सत्ये ! सर्वेषु लोकेषु सदेवकेषु । यथा पतिस्तस्य हि सर्वकामा लभ्याः प्रसादात् कुपितश्च हन्यात् । तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्यद्भुतदर्शनानि । वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विपुला च कीर्त्तिः । सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि । सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्म्मणा च । तथाऽऽसनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः । अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति तद्विधत्स्व । श्रुत्वा स्वरं द्वारगतस्य भर्त्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैवं प्रतिपूजयस्व । संप्रेषितायामपि चैव दास्यामुत्थाय सर्वं स्वयमेव कार्य्यम् । जानातु कृष्णस्तव भावमेतं सर्वात्मना मां भजतीति सत्ये ! । त्वत्सन्निधौ यत् कथयेत् पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम् । काचित् सपत्नी तव वासुदेवं प्रत्यादिशेत्तेन भवेद्विरागः । प्रियाश्च रक्ताश्च हिताश्च भर्त्तुस्तान् भोजयेथा विविधैरुपायैः । द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्धतैश्च । मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनम् । प्रद्युम्नसाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् । महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः । एतद्यशस्यं भगदैवतञ्च स्वर्ग्यं तथा शत्रुनिवर्हणञ्च । महार्हमाल्याभरणाङ्गरागा भर्त्तारमाराधय पुण्यगन्धा” २३३अ० ।

“गृहिणी सचिवो रहः सखी प्रियशिष्या ललिते कलाविधौ” रघुः “न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते” उ०त० स्मृतिः “प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः” कुमा० “शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः” शकु० “व्यायामताम्यो ऽधिगृहं गृहिण्यः” माघः ।

**गृहीत** त्रि० ग्रह–कर्मणि क्त । १स्वीकृते, २ज्ञाते, ३प्राप्ते ४धृते च । "गृहीतपत्युद्गमनीयवेषा" कुमा०। "गृहीत इव केशेषु मृत्युना धर्ममाचरेत्" नीतिशा०"पत्नी गृहीतव्रता" वेणी० भावे क्त । ५ग्रहणादौ न० ततः तत्त्वतमनेन इष्टादि० इनि । गृहीतिन् कृतग्रहणे त्रि० स्त्रियां ङीप् ।

**गृहीतगर्भा** स्त्री गृहीतो गर्भो यया । गर्भवत्यां तल्लक्षणादि गर्भवतीशब्दे २५५५पृ० उक्तम् । [च हेमच०।

**गृहीतदिक्** त्रि० गृहीता दिक् येन । १पलायिते २तिरोहिते

**गृहु** त्रि० ग्रह–कु । ग्रहीतरि "इदु गोओ यो गृहवे ददाशमकामाय चरते कृशाय" ऋ० १०।११७।२

**गृहेरुह** पु० गृहे रोहति रुह–क-अलुक् ७त० । गृहजातवृक्षे स च पापप्रदः यथाह भा० आनु० १२७अ० "भिन्नभाण्डञ्च खट्वाञ्च कुक्कुटं शुनकं तथा । अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः"

**गृहेनर्दिन्** पु० गृहे एव नर्दति न युद्धे नर्द–इनि पात्रेसमितादित्व०। कापुरुषे रणभीरौ गृहे आस्फालयितरि।

**गृहेश** पु० ६त०। १गृहस्वामिनि गृहेश्वरादयोऽप्यत्र "अर्थस्थिन् स्थाने गृहेश्वराधिष्ठितेऽङ्के वा" बृहत्सं० ५३अ०। २राशीश्वरे च ।

**गृहोषिका** स्त्री गृहे वसति वस–वासने क्वुन् वा०सम्प्र०। गेहण्यां गृहगोधिकायाम् हेमच०।

**गृह्य** पु० ग्रह–पदास्वैरीत्यादिना क्यप् । गृहायत्ते १मृगे २खगे च पञ्जरादिबन्धनेन परतन्त्रीकृतत्वात् तेषां तथात्वम् । ३पुरो नगद्वारे, न०४अस्वैरिणि ५आयत्ते, ६आपणीने पक्षे च त्रि०मेदि०। "गृहमृह्यावचने विपचितः" किरा० "अगृह्यां वीतकामत्वाद्वेवगृह्यामनिन्दिताम्" भट्टिः । गृहे भवः यत् ७गृहभवे, वस्तुनि त्रि०। ८गृहनिमित्तेऽग्नौ ९तत्साध्यकर्मणि च "उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः" आश्व० गृ०१।१।१गृहनिमित्तोऽग्निः गृह्यः । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायाञ्च वर्त्तते । यथा "सगृहो गृहमागतः" इत्यत्र हि पूर्वो गृहशब्दो भार्यावचनः उत्तरस्तु शालावचनः येषाञ्च भार्यासंयोगादुत्पद्यमानौ इमानि कर्माणि प्रवर्त्तन्ते तेषामयं गृह्यशब्दो भार्यावचनः । येषान्तु दायविभागकालेऽग्निरुत् पद्यते तेषां शालावचनः । "भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि" इति गौतमस्मृतेः" नारा० "तेऽस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ।" वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ! अग्निहोत्रं पञ्चाद्यं गृह्याग्निपरिच्छदम्" इति च मनुः । तद्वक्ष्य वाच्यतया अच् । १०वेदोदितकर्मप्रयोगज्ञापके गोभिलसूत्रादौ ग्रन्थभेदे च । गृह्यमग्निमधिकृत्य च शाखिभेदेन गृह्यकाराश्च गोभिलाश्वलायनकात्यायनादयोऽतिविख्याताः । ११नगरबाह्यस्थे ग्रामे स्त्री टाप् मेदिनिः स्वार्थे क । गृह्यक तत्रैवार्थे । संज्ञायां कन् । गृहायत्ते पक्षिमृगादौ अमरः ।

**गॄ** विज्ञापने चुरा० आत्म०सक० सेट् । गारयते अजीगरत ।

**गॄ** शब्दे क्र्यादि०पर०प्वादि० सक० सेट् । गृणाति अगारीत अगार अगरतुः । गीर्यते गीर्णः । गीः ।

अनु+शंसनविषयकपौनुष्ठयव्यापारकृत्प्रोत्साहने तद्योगे पूर्वव्यापारस्य कर्त्ता संप्रदानसंज्ञो भवति यथा अध्वर्यु होत्रे अनुगृणाति होता प्रथमं शंसति तमध्वर्यु प्रोत्साहयतीत्यर्थः सि०कौ०

प्रति+अनुगृणातिवत् अर्थादि प्रत्यावपूर्वप्रयोगो नास्ति इति "अधादुषः" पा० सूत्रे भाष्यकार आह च

**गॄ** निगरणे तु० पर० सक० सेट् । अस्य वा रस्य लत्वम् गिरति-गिलति अगारीत् अगालीत् जगार (ल) । जगरतुः । गीर्यते गीर्णः गीर्णिः गिरः गिरिः

अव+नीचैःकथने आत्म० अवगिरते नीचैः कथयतीत्यर्थः ।

उद्+वमने । "रोमन्थः उद्गीर्य चर्वणम्" सि०कौ०"अनुद्गीर्णसुरायुधम्" कुमा०।

सम्+प्रतिज्ञायाम् आत्म० । संगिरते प्रतिजानीते इत्यर्थः । "बहूनि देवांच निवर्त्तयिष्यन् रामं नृपः संगिरमाण एव" भट्टिः ।

**गेद्** गतौ भ्वा० आत्म०सक० सेट् । गेदते अगेदिष्ट अदित् । अजिगेदत । जिगेदे । उदित् । गेदित्वा गेत्त्वा ।

**गेन्दु(ण्डु)क** पु० गच्छतीति गम–डु गः इन्दुरिव इवार्थे कन् । कन्दुके वस्त्रनिर्मिते गोलाकारे क्रीडनके । पृषो० वा ङत्वे गेण्डुकश्च तत्रार्थे । पृषो० गेन्दू (ण्डू) कोऽपि दीर्घमध्यः । तत्रार्थे जटाधरः ।

**गेय** त्रि०गै–कर्त्तरि नि० यत् । १गायके "गेयो माणवकः साम्नाम्"सि०कौ० कर्मणि यत् । २गातव्ये त्रि० 'अत्र एव गेयं साम" भावे यत् । ३गीतौ न०"गेयं केन [illegible] वाम्" रघुः । "वर्षैः कतिपयैरेव ग्रथितस्य स्वरैरिव । अनन्ता वाङ्मयस्येह गेयस्येव विचित्रता" म भ.

गैर त्रि॰ गिरौ भवः अण्। १पर्वतभवे स्त्रियां ङीप्। सा च (विषकाकुरा) २खाकुलीडचे रत्नमा॰ (गेरिमाटि) ३उपधातुभेदे न॰ शब्दार्थचि॰।

गैरकम्बूल न॰ नीलकण्ठताजकोक्ते वर्षलग्नकालिक षड्योगभेदे तल्लक्षणादि तत्रोक्तं यथा
"यस्याधिकारः स्वर्क्षादि शुभोऽवाऽप्यशुभोऽपि वा। केनापि दृग्युतिर्नास्य च शून्याध्वग इष्यते। चन्द्रका- र्य्येशयोरित्थशाले शून्याध्वगः शशी। स्वोच्चादिपदशून्यत्वा नेत्थशालोऽस्ति केनचित्। यद्यन्यर्क्षं प्रविश्यैषः स्वभो- च्चस्थेत्थशालकृत्। गैरकम्बूलमेतत्तु यदोगेनाशुभं स्मृतम्। उदा॰। त्रिपुरी सुखमिति प्रश्ने सिंहलग्नं रविः स्थिते। कर्काद्यैः, वृषभः कुम्भे भौमोंऽशैः रवि- मित्रयोः। इत्थशालोऽस्ति तन्नेन्दुः कन्यायां चरमेऽ- शके। स्वोच्चादिपदहीनस्य नेत्थशालोऽस्ति केनचित्। सर्वोक्षेण शशिनाऽन्यर्क्षस्थेनेत्थशालकृत्। गैरकम्बूल- मन्येन सर्वकार्यार्थलाभदायकम्"। शुभो॰ गैरकम्बूलमप्यल

गैरायण पुंस्त्री गिरेर्गोत्रापत्यम् अश्वा॰ फक्। गिरिगो- त्रापत्ये।

गैरिक न॰ गिरौ भवम् ठक्। (गेरिमाटि) उपधातुभेदे तद्गुणा- द्यादि भावप्र॰ उक्तं यथा। "गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा। सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत्। गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम्। चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम्" [राजनि॰।

गैरिकाक्ष पु॰ गैरिकमिवाक्षि यस्य। जलमधूके शब्दच॰।

गैरेय न॰ गिरौ भवम् ढक्। शिलाजतुनि अमरः। (गेरि- माटी) ख्याते उपधातुभेदे भावप्र॰।

गो पुंस्त्री गच्छत्यनेन गम–करणे डो। १स्वनामख्याते पशुभेदे तस्य यानसाधनत्वात् स्त्रीगव्याश्च दानद्वारा स्वर्गगति- साधनत्वाच्च तथात्वम्। गतिसाधनतया तस्य तथार्थत्व- योगेन यौगिकत्वेऽपि योगरूढत्वम्। एतेन दर्पणकृता "व्युत्पत्तिलभ्यस्य कृत्यार्थत्वे गौः शेते इत्यत्रापि बाधा स्यात् "गमेर्डोः" इति व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात्" इति यदुक्तं तत् ग्राम्यादिकमेव गमेर्डोः इत्यादिप्रत्ययस्य कर्तृवाचकत्वानियमात् "ताभ्यामन्यत्रोणादयः पा॰सूत्रे अपादानसंप्रदानभिन्नार्थत्वनियमात् अत्र करणार्थकडोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि गतिसाधनस्व- रूपयोग्यतावाचकत्वात् फलोपधायकत्वनियमे याना- दिनशयनादीनामपि गतिशयनादिविगमकाले तच्छब्द- वाच्यतानुपपत्तेः। गम्यते ज्ञायते अनेन करणे, शीघ्रं गच्छति कर्त्तरि वा डो। २रश्मौ किरणे तस्य शीघ्र गामित्वात् चाक्षुषज्ञानहेतुत्वाच्च तथात्वम् सूर्य्यादिकिरण संपर्कं विना चाक्षुषज्ञानासम्भवात् रश्मेर्ज्ञानसाधनत्वात् तथात्वम्। ३वज्रे ४हीरके तस्यापि कठिनद्रव्येऽपि गतिमत्त्वात् तथात्वम्। कर्मणि डो। ५स्वर्गे कर्मिभि र्गम्यमानत्वात् तस्य तथात्वम् मेदि॰। ६चन्द्रे विप्रः कर्मिभिस्तल्लोकगमनात्तस्य तथात्वम् ७सूर्य्ये ८गोमेधयज्ञे भानुदीक्षितः। सूर्यस्य शीघ्रगतिकत्वात् अर्चिरादि- अधिष्ठातृतया आतिवाहिकत्वात् तथात्वम्। "संवत्स- रादादित्यमादित्याच्चन्द्रमसम्" छा॰उ॰। आतिवाहिकशब्दे ६५१पृ॰दृश्यम् ९ऋषभनामौषधे राजनि॰। तस्य गोना- मकत्वात् तथात्वम्। करणे डो। १०नेत्रे स्त्री तस्य चाक्षुषज्ञानसाधनत्वात् तथात्वम्। कर्त्तरि डो। ११बाणे स्त्री तस्य शीघ्रगतिकत्वात् तथात्वम्। कर्मणि डो। १२दिशि स्त्री दिशां पदार्थगमनकाले गम्यमान- त्वात्तथात्वम्। १३वाचि स्त्री तस्याः ज्ञानहेतुत्वात् तथात्वम्। आधारे डो। १४भुवि स्त्री तस्याः गमना- धारत्वात् तथात्वम् १५जले च स्त्रीन॰व॰ केचित् तस्य निम्नगतित्वात् १६पशुमात्रे अमरः १७मातरि १८लो- मनि भानुदीक्षितः। १९वृषराशौ २०नवसंख्यायाम् गोर्भूमेर्नवखण्डात्मकत्वात् आकाशे ग्रहाणां गतिमत्पदार्थानां नवत्वाद्वा तत्संख्यावाच्यात् तथात्वम्। २१पुरुषभा- र्य्यायां गविजातशब्दे २५६६ पृ॰दृश्यम्। ज्ञानहेतुत्वात् २२इन्द्रिये गोचरः। पदान्तस्थितस्योपसर्जनस्य समा॰ह्रस्वः शीतगुः चण्डगुः। अस्य उत्तरपदस्थत्वे तत्पुरुषे टच् समा॰। पुंसि परवत्त्वः स्त्रियां षित्त्वात् ङीप् दुग्धगवी गोः पुरीषं मयट्। गोमय (गोवर) ख्याते पदार्थे न॰ गौर्यद्यतेऽस्य इनि गोमिन्। मतुप्। गोमत् गोविशिष्टे गोस्वामिनि च त्रि॰ स्त्रियां ङीप्। गोःस्थाने गोष्ठच् गोगोष्ठ गोस्थाने न॰ गोमांसगुणा भावप्र॰उक्ता यथा "गोमांसं तु गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम्। बृंहणं वातहृत् बल्यमपथ्यं पीनसप्रणुत्। गोरिदं यत् "वान्तो यि प्रत्यये" पा॰ अवादेशः। गव्यं गोदुग्धादौ भावप्र॰ तद्गुणाद्युक्तं यथा
"गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः। शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम्। दोषधातुमल-

दिक्रमेण महाविजनेषु आर्षे प्रयोगे क्वचित् एकार्थेऽपि वुन्। "बोधं विक्रष्टमुपनेष्यति गोकुलं च" भा० १।८।२१ "गोकुलं गोकुलवासिजनम्" श्रीधरः

**गोकुलिक** त्रि०गोर्गोकस्य कुलः संस्थानमत्र। १केकरे। गवि पङ्कमग्नायां कुलिकः उपेक्षक इव। २पङ्कमग्नगवुपेक्षके च मेदि०।

**गोक्षत** न०३त०। १गोक्षते २गवा क्षते त्रि०।

**गोक्षोडक** पुंस्त्री गवि क्षोड इव कायति कै—क। सुश्रुतोक्ते प्रतुदपक्षिभेदे कपोतादिगणे "कुलिङ्गगोक्षोडकोत्क्रोशाद्याः "प्रतुदाः" इत्युक्तं सुश्रुतेन।

**गोक्षा** स्त्री गां भूमिं क्षमतया क्षम—ड। शब्दे पाठान्तरे क्रोडादिषु पाठात् स्वाङ्गत्वेऽप्युपसर्जने न ङीष्

**गोखु(क्षु)र** पु०गोः पृथिव्याः खु(क्षु)र इव। स्वनामख्याते क्षुपभेदे। तत्पर्यायगुणाद्युक्तं भावप्र०

"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादुकण्टकः। गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि। पलङ्कषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका। गोक्षुरः शीतलः स्वादुर्बलकृद्वस्तिशोधनः। मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः। प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातहृत्"।

स च लघुपञ्चमूलान्तर्गतो दशमूलान्तर्गतश्च यथाह तत्रैव "शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका। गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम्। पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम्। नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत्" "उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्। दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः। तन्द्राशोथज्वरानाहपार्श्वपीडाऽरुचीर्हरेत्।"

गोक्षुरिः इकारान्तोऽपि तत्रार्थे शब्दर०पृषो०साधु।

**गोगोयुग** न०गवोर्द्वित्वम् गो+द्वित्वे गोयुगच्। गवोर्द्वित्वे।

**गोगोष्ठ** न० गोः स्थानम् गो+स्थाने गोष्ठच्। गवां स्थाने।

**गोगृष्टि** स्त्री गौर्गृष्टिः जात्या समासे परनिपातः। सकृत्प्रसूतायां गवि सि०कौ०।

**गोग्रन्थि** पु० गोजातो ग्रन्थिः। १करीषे। गोर्ग्रन्थिर्यत्र। २गोष्ठस्थाने। ३गोर्ग्रन्थिरिव। गोजिह्विकौषधौ मेदि०।

**गोघ्न** त्रि० गां हन्ति हन—क ६त०। गोहन्तरि। तद्व्रतं मनुना दर्शितं यथा

"उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्। कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः। चतुर्थकालमश्नीयादक्षारलवणं मितम्। गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः। दिवानुगच्छेत्तागास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत्। शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत्। तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्। आसीनासु तथासीनो नियतो वीतमत्सरः। आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः। पतितां पङ्कमग्नां वा सर्वप्राणैर्विमोचयेत्। उष्णे वर्षति शीते वा मारुते वाति वा भृशम्। न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः। आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले। भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्। अनेन विधिना यस्तु गोघ्नो गामनुगच्छति। स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति। वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः। अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्।" "गोघ्नवत् विहितः कल्पश्चान्द्रायणमथापि वा" प्रा०त० स्मृतिः। गौर्हन्यतेऽस्मै सम्प्रदाने क। २अतिथिभेदे तस्यागमने हि मधुपर्कार्थं गोहननं विहितम् "महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्" इति स्मृतेः कलौ तु तन्निषेधः "मधुपर्के पशोर्वधः" इत्यादिब्रह्मपुराणे कलिवर्ज्येषु तस्योक्तेः।

**गोघृत** न०गोः पृथिव्या घृतमिव यस्य पोषकत्वात्। १वृष्टिजले त्रिका०। ६त०। २गव्ये घृते च

**गोचन्दन** न०गोशीर्षाख्यं चन्दनम् शा०त०। गोशीर्षाख्ये चन्दने "गोचन्दनागोहनिकामधुकमाक्षिकं मधु। सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता" सुश्रुतः

**गोचर** पु० गावः इन्द्रियाणि चरन्त्यस्मिन् नि०घ। १इन्द्रियवेद्ये रूपरसादौ विषये। एकैकेन्द्रियविषयाश्च शब्दादयस्तत्र श्रोत्रस्य शब्दो विषयः, एवं त्वचः स्पर्शः, नेत्रस्य रूपम्, जिह्वाया रसः, घ्राणस्य गन्धः। २ज्ञानमात्रविषयेऽपि "सदसत्संशयगोचरोदरी" नैष० "अवाङ्मनसगोचरम्" वेदा०सा० गोचरत्वं ज्ञाननिरूपिता विषयता सा च स्वरूपसम्बन्धविशेषः। कर्त्तरि अच्। ३भूमिचरे त्रि०। गावश्चरन्त्यस्मिन् घ। ४गवां प्रचारस्थानादौ, "उपारताः पश्चिमरात्रगोचरात्" किरा० ५गन्तव्यदेशे "इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" कठोप० ६देशमात्रे, "ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे" देवीमा०। ७गतौ व्योमगतिमतां ग्रहाणां चरः भावे अप्। गतिभेदे च "गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः" ज्यो० सन्निभिन्नतया

रिति जन्मराशितः शराब्धौ पञ्चमचतुर्थयोः, (२) द्व्यन्त्ये द्वितीयद्वादशस्थानयोः, नवाशे नवमदशमयोः स्थानयोः द्विगुणे द्वितीयतृतीययोः शिवाग्नौ एकादशतृतीययोः । देवगुरुर्बृहस्पतिः क्रमाच्छुभो विद्ध ग्रहः उक्तञ्च नारदेन "जन्मतः स्वादगोऽव्य्द्रिद्व्यन्त्याष्टवजत्वर्नगैः जन्मराशेर्गुरुः शुभो यहैर्यदि न विध्यते" इति । अथ शुक्र इति जन्मराशेः कुनागे प्रथमाष्टमयोः, द्विनगे द्विसप्तमयोः, वह्निरूपे तृतीयप्रथमयोः, वेदाम्बरे चतुर्थदशमयोः, पञ्चनिधौ पञ्चमनवमयोः, गजेषौ अष्टमपञ्चमयोः, नन्देशयोर्नवमदशमयोः, भानुरसे द्वादशषष्ठयोः, शिवाग्नौ एकादशतृतीययोः स्थानयोः, (२) शुक्रः क्रमाच्छुभो विद्धश्च ग्रहः यदाह नारदः "जन्मभाद्भूताष्टाङ्कान्त्यायेष्विष्टो न विध्यते । भार्गवो मत्युस-प्राद्यस्थाङ्केशायारिगत्नगैरिति" आहुतेत्यभिविभायाङ्कः सङ्केतेनाक्त्राभिविधिरिति तेन प्रथमद्वितीयतृतीयचतुर्थपञ्चमानां ग्रहाणामित्यर्थः । इदमत्राकूतं यो यो ग्रहः रवान्द्रद्व्यादौ प्राक्पठितेषु स्थानेषु विद्यमानः स स ग्रहः शुभदः शुभस्थानव्यतिरिक्तस्थानेषु विद्यमानः स स ग्रहोऽशुभफलदाता अतएवाह श्रीपतिः "सर्वे लाभेऽष्टहस्थिताश्च अरिषुष्टकः कुजार्की त्रिगह । भानौ चाद्यसप्तस्थारिषु शशी चाद्यारिवर्जं भृगुः । धीधर्मास्वधनेषु वाक्पतिरिति स्वाष्टाम्बुगस्थो बुधः श्रेष्ठो जन्मदृक्यादि गोचरविधौ विद्धो न चेत् स्याद्ग्रहैरिति"। यथोक्तेषु स्थानेष्वशुभः स स ग्रहः । अत ग्रहाणां विद्धनिमित्त स्थानफलानि विधिरन्ते । तत्र

रवेः । "स्थानं जन्मनि नाशयेद्दिनकरः कुर्यात्, द्वितीये भयं, दुश्चिक्ये ३ श्रियमातनोति हिबुके ४ मानक्षयं यच्छति । दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽथवा सप्तमे पीडामष्टमगः करोति परुषां कान्तिक्षयं धर्मे ९ गः । कर्मसिद्धिजनकस्तु कर्म १० गोवित्तलाभकदायाय ११ संस्थितः । द्रव्यनाशजनितां महापदं यच्छति व्यय १२ गतो दिवाकरः"

चन्द्रस्य—जन्मग्यश्चन्द्रियति हिमगुर्वित्तनाशं द्वितीये दद्यात् द्रव्यं सहज ३ भवने कुक्षिरोगं चतुर्थे । कार्ये नाशं तनय ५ गृहगोवित्तलाभं च षष्ठे द्यूने ७ द्रव्यं युवतिसहितं मृत्यु ८ संस्थोऽपमृत्युम् । नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत् सुखम् । विविधमाय ११ गतः कुरुते धनं व्यय १२ गतस्तु रुजं धनसंक्षयम्"

कुजस्य—"प्रथमलग्नगः क्षोणीसूनुः करोत्यरिजं भयं जनयति धनं वित्त २ स्थाने तृतीयगतोऽर्थदः । अरिभयमतः पाताले ४ ऽर्थान् क्षिणोति हि पञ्चमो रिपु ६ गृहगतः कुर्याद्वृत्तं रुजं मदन ७ स्थितः । जननितो निधनदस्थः शस्त्रबाधां धराजो दिशति नवमसंस्थः कायपीडामतीव । शुभमपि दशमस्थो लाभ ११ गो भूरिलाभं १२ व्ययभवनगतोऽसौ व्याधनर्थादिनाशान्"

बुधस्य—"बुधः प्रथमगोऽमयं दिशति सम्पदर्थं धने २ धनं रिपुभयान्वितं सहज ३ चतुर्थेऽर्थदः । धनिर्वृतिकरो भवेत्तनय ५ गोऽरि ६ गः स्थानदः करोति मदन ७ स्थितो बहुविधां शरीरव्यथाम् । अष्टमे शशिसुते धनवृद्धिर्धर्म ९ गस्तु महतीं तनुपीडाम् । कर्म १० गः सुखमथाय ११ गतोऽर्थं द्वादशे भवति वित्तविनाशः ।

गुरोः—"भयं जन्मन्यायो जनयति धन २ स्थोऽर्थमतुलं तृतीयेऽङ्गक्लेशं दिशति च चतुर्थेऽर्थविलयम् । सुखं पुत्र ५ स्थाने रुजमपि च कुर्यादरि ६ गृहे गुरुर्द्यूने ७ पूजां धननिचयनाशं च निधने ८ । धर्म ९ गतो धनवृद्धिकरः स्नातृप्रीतिहरो दशमेऽमरपूज्यः । स्थानधनानि ददाति स लाभे ११ द्वादशमस्तनुमानसपीडाम्"

भृगोः । "जन्मन्यतिक्षयकरो भृगुजोऽर्थदोऽर्थे २ दुश्चिक्य ३ गः सुखकरो धनदश्चतुर्थे । स्यात् सुतदस्तनय ५ गोऽरि ६ गतोऽरिवृद्धिं शोकप्रदो मदन ७ गो निधनेऽर्थदायी । जनयति विविधाम्बराणि धर्मे ९ न सुखकरो दशमस्थितस्तु शुक्रः । धननिचयकरः स लाभ ११ संस्थो व्यय १२ भवनेऽपि धनागमं करोति"

शनेः । "वित्तभ्रंशं रुगाप्तिं दिनकरतनयो जन्मराशिं प्रपन्नो वित्तक्लेशं द्वितीये धनहरणकृतं वित्तलाभं तृतीये । पाताले ४ शत्रुवृद्धिं सुतभवन ५ गतः पुत्रभृत्यार्थनाशं षष्ठे स्थानेऽर्थलाभं जनयति मदने ७ दोषसंघातमार्गैः । शरीरपीडां निधने ८ च धर्मे ९ धनक्षयं कर्मणि १० दौर्मनस्यम् । उपान्त्य ११ गो वित्तमनर्थमन्त्ये १२ शनिर्ददातीत्यपदहस्तिः"

राहोः केतोश्च—"राहुर्जन्मगतो भयं च कलहं सौभाग्यमानक्षयं विरुद्धं शमहाहवं नृपभयं कार्यक्षयं यच्छति । सन्तापं कलहं च वित्तमधिकं शौर्यं विनाशं क्रमात् केतुस्तत्फलमेव राशिषु वदेच्छंसन्ति गर्गादयः" ।

एतच्छुभाशुभफलाध्यक्षा लग्नसन्धिगतास्तथा राशिसन्धिगता ग्रहराशेः फलं ददति वक्रितस्तु प्राग्राशेरित्याह कमलाकरः "लग्नसन्धिगताः

यदाचित्राङ्गभुज्यमाननक्षत्रमुपरागनक्षत्रं चैकमेव तदा-यं वक्ष्यमाणफलनिर्देशः यदा तु नक्षत्रभेदस्तदोपर-ज्यमाननक्षत्रेऽप्येव फलनिर्देशः एवं राशिभेदेऽप्युपरज्य-मानराशिभेदेऽप्येवम् । यतोऽवगम्यते राहोर्दिग्देश-कालावरणादिभेदात् ग्रहणत्वमेव नास्ति । तदुक्तं सिद्धान्तशिरोमणौ "दिग्देशकालावरणादिभेदान्न च्छा-दको राहुरिति ब्रुवन्ति"। एतदुपपत्तिर्भास्करेण स्वप-द्योरेव निरूपिता चिरन्तनैस्तु लोकरञ्जनार्थं राहुचार-विचारे प्रपञ्चितः परन्तु राहुसाहित्यं विना ग्रह-णानयनस्य शरसंक्रान्तिमाश्रित्य छन्नानयनविशिष्टत्वान्नु-करत्वादिति साहित्यविवक्षयैव राहोरुपरक्तत्वमुच्यते । अतएवोक्तं वराहेण "तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः । याम्योत्तरा शशिगतिर्गणितेऽप्यु-पचर्यते तेनेति"। । अथ जन्मादिराशिफलमुच्यते जन्मि-न इति । यस्मिन्नास्य तु जन्मराशेरारभ्य द्वादशसु राशिषु ग्रहणे सति क्रमादनुक्रमेण घातादिफलं भवति यथा जन्मराशौ ग्रहणे सति घातः शरीरपीडा, द्वितीय-राशौ क्षतिः द्रव्यनाशः, तृतीयराशौ श्रीर्लक्ष्मीः, चतु-र्थराशौ शरीरपीडा, पञ्चमराशौ चिन्ता पुत्रादीनां, षष्ठे राशौ सौख्यं, सप्तमराशौ कलत्रदोषत्वं स्त्रीमरणं, अष्टम-राशौ मृत्युर्मरणं, नवमराशौ मानहानिः, दशमराशौ सुखम्, एकादशराशौ लाभः, द्वादशराशौ मृत्युः अपा-यम इति केचित् द्रव्यक्षयमपरे, इदं च फलं पक्षमासप-र्यन्तमनुक्रमपि ध्येयं तदुत्तरं हि ग्रहणान्तरसम्भवनात् यथोक्तं दैवज्ञमनोहरे "घातं हानिमथ श्रियं जननिमा-द्रुक्षं च चिन्तां क्रमात् सौख्यं दारवियोजनं च कुरुते व्याधिं च मानक्षयम् । सिद्धिं लाभमपायमर्कश-शिनोः संस्थानमध्ये ग्रहः इति" क्वचित्तु "स्थानान्न एवं शुभफलप्रदाः" इत्युक्तम् । दैवज्ञमनोहरे "त्र्या तृतीयोऽष्टमषष्ठदशमायसंस्थः शुभदः स्व-राशिः, सप्तमस्य विद्धिः पूज्यो द्विषट्को दशमाद्यसंस्थः" इति अत्र वाक्ये पापराशितोगणनोक्ता "त्रिषडायोपगतं नराणां शुभदं स्याद्ग्रहणं रवीन्द्वोः । द्विसप्तनवेषु च मध्यमं स्याच्छेषमनिष्टं सुनयो वदन्तीति" अनावश्यपेक्षायां स्वजन्मराशे-रित्याव्याहार्यमेव । अथाशुभफलग्रहणप्रतीकार-माह तदशुभेति तत्र सूर्यचन्द्रयोर्ग्रहणस्य सम्बन्धि यदशुभं दुष्फलं तस्य शान्त्यै नाशाय जपः स्वर्णगो-

दानं जपो गायत्र्यादीनां मन्त्राणां स्वर्णं प्रसिद्धं गौः-प्रसिद्धा भूमिर्वा उपलक्षणत्वादन्येषां कृष्णादीनां यथा शक्त्या दानं कार्यमिति शेषः उक्तं च दैवज्ञमनोहरे "सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम् । सदक्षिणं सवस्त्रं च श्रोत्रियाय निवेदयेत् । सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः । भवेदपगतक्लेशः छिद्रे विप्राय कल्पयेत् । दानमन्त्रः । तमोमय ! महाभीम ! सोमसूर्यविमर्दन ! । हेमनाग ! प्रदानेन मम शान्तिप्रदो भव" । स्कन्दपुराणे गोदानं भूमिदानं च स्वर्णदानं विशेषतः । ग्रहणे क्लेशनाशाय दैवज्ञाय निवेदयेत्" । किंचात्र देशविशेषः कालविशेषो द्रव्यविशेषश्च नापेक्ष्य इत्याह व्यासः "सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वभूमिः कुरुक्षेत्रं ग्रहणे चन्द्रसूर्ययोरिति" । तत्र स्नानदानादिकं कस्मिन् काले कर्त्तव्यमित्याह "ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते" इति तस्मिन् काले जपादिकमपि विधेयम् "सूर्येन्दुग्रहणं या-वत्तावत् कुर्याज्जपादिकमिति" शिवरहस्योक्तेः आदिशब्दात् सुरार्चनमपि अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणशान्ति-माह वशिष्ठः "यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः । द्रव्यमन्त्रवि-धानेन तस्य दोषापनुत्तये । उपरागस्नानविधिं सम्यक् वक्ष्ये समासतः । मण्डलं चतुरस्रं तु गोमयेन विलेपयेत् । ऐशान्ये मानदिग्भागे वर्णकैः समलङ्कृते । स्थापयेच्चतुरः कुम्भांस्तत्र तान् सागरात्मकान् । सर्ववेदात्मकान् कृत्वा सर्वतीर्थात्मकान् शुभान् । पञ्चवौषीरसायुक्तसर्वौषधि-समन्वितान् । मृत्तिकाहेमरत्नेन दध्यगुग्गुलुचन्दनैः । पञ्चगव्याक्षताब्जास्फटिकैः सर्वपावनैः" । इत्युपक्रमे "तिलहोमं व्याहृतिभिः सहस्रमष्टसंयुतम् । एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् । आमन्त्र्य नवभिर्मन्त्रैः कुम्भान् संकल्पपूर्वकान् । एतानेव ततो मन्त्रान् वर्णयेच्चैव संलिखेत् । कण्ठे शिरसि तं बद्ध्वा शान्तिकैर्वेदमन्त्रकैः । समन्वितैः कुम्भजलैः स्नाप्यं नीराजयेत्ततः । दध्याज्यमथ विप्रेभ्यः शुक्लमाल्याम्बरः शुचिः । ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः । योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनश्चन्द्रग्रहपीडां व्यपोहतु । यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः । यमश्चन्द्रो-परागस्य ग्रहपीडां व्यपोहतु । रक्षोगणाधिपः

"भानोर्भार्द्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा । शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके" इत्युपक्रम्य "छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत् । भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसाविति" । अतो भूच्छायाऽस्य चन्द्रस्य छादको भवेदित्यर्थः इति सूर्यसिद्धान्ते स्पष्ट एव छाद्यच्छादकभावोऽभिहितः पुराणेन सह विरोधपरिहारस्तु "दिग्देशकालावरणादिभेदान्न छादको राहुरिति ब्रुवन्ति । यन्मानिनः केवलगोलविद्यां तत्संहितावेदपुराणवाक्यमिति" पूर्वपक्षं विधाय "राहुः कुभामण्डलगः शशाङ्कं शशाङ्कगश्छादयतीनबिम्बम् । तमोमयः शम्भुवरप्रदानात् सर्वागमानामविरुद्धमेतदिति" भास्कराचार्यैरेवोक्तः "तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुरिति" वराहेण चोक्तम् तस्माद्राहुदर्शनं तु नास्त्येव भवन्मते दर्शनं चाक्षुषमेवोच्यते नान्यत् एवं सति राहोर्दर्शनं राहुदर्शनमिति तत्पुरुषोऽनुपपन्नः । यदि तु समीपवाचकदर्शनशब्दमङ्गीकृत्य तदर्थः क्रियते । तदापि तस्य स्वरूपमेवानुपपन्नं तस्य समीपे तु सुतरामिति वाचैरर्थो लक्ष्यते । तस्माद्दर्शनशब्देनोपरागो लक्ष्यते राहुदर्शनं राहूपरागस्तस्मिन् राहुदर्शने इति । अयमर्थः । राहुर्नाम पातः तस्य सम्बन्धेन दर्शनमुपराग इति । न च राहुरेव चन्द्रसूर्ययोरुपरागपरतया दर्शनमिति पूर्वपक्षाभिमतार्थसिद्धिरिति वाच्यं तथा त्वर्थान्तरान्तरासम्भवे सति वक्तव्या । "अत्यन्तादर्शनं राहोस्तथा चात्यन्तदर्शने । प्रजापीड़ा विनिर्दिष्टा व्याधिदुर्भिक्षतस्करैरिति" विष्णुधर्मोत्तरादिवाक्येषु पदान्तरासन्निधानाद्राहुदर्शनेनोपरागो लक्ष्यते । इदं च राहोः पातनामकग्रहणं प्रति हेत्वर्थान्तरमस्तीत्यतो राहुदर्शनग्रहणयोः समानार्थकता नास्तीत्येवं सिद्धमिति । प्रागुक्तानां सर्ववचसां ग्रहणे स्नायादित्येव वाक्यार्थः फलितो भवति । किन्तु ग्रहणे चाक्षुषमेव दर्शनं निषिद्धं विवक्षितं चेत्तदा "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्" इत्युक्तोपसृष्टसूर्यदर्शननिषेधो नोपपद्येत नन्वयं निषेधः सूर्योपरागदर्शन एव न चन्द्रोपराग इति चेन्न "नाश्नुवी राहुतारकाम्" इत्यत्र राहुमात्रग्रहणात्सूर्यचन्द्रोपरागद्वयविषयकोपसंहारस्य युक्तत्वात् अग्रुचे रक्षक्कापतितादेर्ग्रहणं तु दोषाधिक्यसूचनार्थं यथा श्राद्धे कुलीनानां ब्राह्मणानामभावे उक्ते चण्डेर्षां निषिद्धत्वादेव कुण्डगोलकब्राह्मणा नामनामन्त्रणे सिद्धे पुनर्निषेधो दोषाधिक्यार्थमेव । "भास्करालोकनाश्लीलपरिवादादि वर्जयेदिति" स्मृतिवाक्यस्य तद्वदस्तगाम्यादित्यदर्शनपरतया व्याख्यानस्य युक्तत्वात् । केचित्तु दर्शनादर्शनविषयकयोर्विध्योस्तुल्यबलत्वात्षड्गा स्नायादिति व्याचख्युः तच्चिन्त्यं "नक्षत्रग्रहाद्युदित्यादिना सामान्यतो निषिद्धस्योपरक्तदर्शनस्य पुनर्निषेधात् प्रागुक्तदिशा राहुदर्शनपदस्य राहूपरागलक्षकत्वेन तुल्यबलत्वाभावाच्च तस्मादुपरक्तयोः सूर्यचन्द्रमसोर्यस्य कस्यापि दर्शननिषेधसत्त्वात् ग्रहणे स्नानदानाद्युक्तसकलस्नानं च ज्योतिःशास्त्रैकदेशगणितग्रन्थेभ्यो बुद्धा तस्मिन् काले स्नानदानादि विधेयमिति सिद्धान्तः । अतएव मेघाद्यावृतेऽप्युपरागे स्नानादिकं विधेयमेव नतु गणितग्रन्थाधीनमुपरागस्नानमेव चेत् स्नानादिप्रयोजकं तदा रात्रौ सूर्यग्रहणस्य जायमानत्वात्तदापि स्नानादिकं स्यात् । सत्यमेवैतत् वचनात्तथा न क्रियते । तदुक्तं निगमे "सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहो यदि । तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति" । अतएव तादृशे ग्रहणे दृष्टेऽपि दौष्ट्यं नास्तीत्यपि स्मर्यते । न चैतद्भागे प्रतिषेधादित्यभिकरणेन पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्युदाहृतवाक्यवन्नित्यानुवाद इति वाच्यं विधिशेषत्वाभावात् यथा पृथिव्यामग्निश्चेतव्य इति न निषेधविधिरस्ति तत्र नान्तरिक्षे न दिवीति दृष्टान्तो निषेधविधेः शेषस्तथात्र सूर्यग्रहो यदा रात्राविति तद्वाक्यस्य विधेः शेष इति । किन्त्वेवं ब्रुवतस्तव मतेऽनर्थकमेव वाक्यं स्यात् चैतद्युक्तम् अतएवाह जाबालिः "संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः" इति । चक्षुषा ग्रहणपर्यन्तं दर्शनगोचरत्वात्तावान् कालः पुण्यकालो भवतीति माधवो व्याचख्यौ तदुक्तं निर्णयामृते "दिवा चन्द्रग्रहो रात्रौ सूर्यपर्व न पुण्यदम् । सन्धिस्थं पुण्यवत्प्रोक्तं यावद्दर्शनगोचरः" इति । अन्ये तु मेघावृते तदनावृते चोपरागे गणितागतस्थितिघटिकाः पुण्यकाल इत्याहुः । दर्शने त्वेवंविधे निर्णये भुजहस्तादुपरिस्थितत्वमेव विवक्षितं तदाह वशिष्ठः स्वसिद्धान्ते "सूर्यस्यादर्शनं रात्रिर्दिनं तद्दर्शनात्मकम् । भुजहस्तादुपरि च स्थितोऽर्को दर्शनं स्मृतमिति" अर्के इत्युपलक्षणं चन्द्रादिग्रहनक्षत्राणाम् । आकाशप्रदेशःसकलाद्भूखण्डन्न इव यत्र भाति स प्रदेशो भुजग्रह-

पाद्यः अतएव विष्णुधर्मोत्तरे "अहोरात्रं न भोक्तव्यं सूर्यचन्द्रग्रहो यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति।" ग्रस्तास्ते मनुः"ग्रस्तगौ यावमसं तु रवीन्दू प्राप्नुतो यदि। तयोः परेद्युरुदये स्नात्वाभ्यव-हरेन्नरः" इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दौ भुक्तस्तोपरि-स्थितत्वोपलक्षकौ अन्यथा मेघाद्यावरणेन परदिवसेऽपि दर्शनाभावे उपवासः प्रसज्येत तथा यत्र स्पर्शकाले ग्रहणं दृष्टा स्नानं विहितं तत्रान्तरा मेघावरणात् सूर्यचन्द्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्नानताप्युप-वासप्रसङ्गः।न च सर्वे शिष्टास्तथाऽऽचरन्ति। तस्मादर्शना-र्थकम्पेत शास्त्रीयज्ञानपरतैव व्याख्या कर्त्तव्या। तस्मां च सत्यां पूर्वोक्तरीत्या च मेघाद्यावृतेष्युपरागे तत्र-हरैव प्रत्यक्षचक्षुषा अन्येन च मनुष्यमात्रदृष्टिर्व्यावृत्त-रैव स्नानदानादिकं विधेयमिति फलितोऽर्थः। अतएव भागवते रविग्रहे कुरुक्षेत्रे स्नानाद्यर्थं मिलितानां पाण्डवीयलोकानां मध्ये धृतराष्ट्रोऽपि परिगणित इति शिष्टाचारोऽप्यस्ति। एवं च सत्यरिष्टजनकत्वाभावेऽपि ग्रहणदर्शननिषेधः किं पुनररिष्टजनकत्वे। तथाप्यत्र मयाहेत्यादिपद्यं निर्मूलत्वाद्युक्तायत्वाद्येतत्प्रत्यक्षोपलभ्यमानवसिष्ठमत्स्यपुराणादिवाक्येषु दर्शनपदा भावाच्च। अतएव सूते परे इति पदं प्रयुक्तम्। शान्तिस्तु दर्शनाभावेऽपि विधातुमुचिता यतोऽरिष्टयोगानां स्वरूप-भूतामेवारिष्टजनकत्वमस्ति अन्यथा ग्रहणेधस्तोत्पा-तादिसूचितारिष्टनिवृत्तिहेतुः शान्तिर्दर्शनाभावे न विधीयेत इत्यलमतिप्रसङ्गानुप्रसङ्गेन (६)। पी॰ धा॰। अधिकन्तुपरागशब्दे १२८५ पृ॰ द्रष्टव्यम्। "अथ चन्द्रबले विशेषमनुदुभाह पापान्तः इति शुभोऽपि शुभफल-दोऽपि चन्द्रः पापान्तःपापयुग् द्यूने पापद्वयमध्यवर्ती पापग्रहयुक्तः पापद्यूने सप्तमस्थाने वर्त्तमानश्चेत् स्यात्तदा असन् अशुभ एव यदात्वशुभोऽप्यशुभफलदातापि चन्द्रः शुभांशे सौम्यग्रहनवांशे स्यादथवाऽधिमित्रस्य नवांशे स्यात्तथा गुरुणा बृहस्पतिना दृष्टः सन् शुभफलदाता भवेत् यदाह राजमार्त्तण्डः"पापग्रहेण संयुक्तः पापजामित्रसंस्थितः। पापद्वयमध्यगतः शुभोऽप्यशुभदः शशी। अनिष्टस्थानसंस्थोऽपि भवेच्छुभकरः शशी। सौ-म्यभागाधिमित्रांशे गुरुणा वापि वीक्षित"इति (७)। अथ चन्द्रबलस्य विधानान्तरमनुदुभाह। सितेति सितादौ शुक्लपक्षप्रतिपदि शुभीभीने चन्द्रे सति सम्पूर्णः शुक्ल-पक्षः शुभः असितादौ कृष्णपक्षप्रतिपदि दुष्टे चन्द्रे सति सम्पूर्णः कृष्णपक्षः शुभः अत्रापि च पूर्वोक्तादत्र वैपरीत्ये ज्ञेयपि पक्षावनिष्टौ यदा शुक्लपक्षप्रतिपदि चन्द्रोऽदुष्टश्चेत्तदा सकलशुक्लपक्षोऽनिष्टः। यदा कृष्ण-पक्षप्रतिपदि चन्द्रः शुभश्चेत्तदा सम्पूर्णः कृष्णपक्षोऽनिष्टः इति उक्तञ्च रत्नमालायां "सकलपक्षादिगते हिमांशौ शुभे शुभं पक्षमुदाहरन्ति। सितेतराद्यावशुभे च पक्षा-विन्द्रावनिष्टौ भवतोऽन्यथा तौ" कश्यपोऽपि शुक्लादीन्दुः शुभो यस्य तत्पक्षस्तस्य शोभनः। कृष्णादीन्दौ त्वशुभे शुभस्तद्वत्त्वन्येऽप्ययेति" इदमेतावद्गणगतं चन्द्रबलं तु सङ्कटे विवाहयात्रादावसत्कर्त्तव्ये तात्कालिकचन्द्रबलाभावे ग्राह्यत्र मान्यथेत्यर्थः (८)। अथ ग्रहाणां दौष्ट्यपरिहारपूर्वकं तुष्टिसम्पादनार्थं नवरत्नसमुदायधारणं शास्त्रिन्याह वज्रं शक्रे इति। अत्रैकां सुवर्णमुद्रिकां कृत्वा तत्र दण्डाभावे वर्द्धाकारे नवधा विभक्ते प्रागादिक्रमेण नवरत्नानि इठं निवेशानि तत्र प्रागिति पश्चात्मध्यं पश्चमी चेदं स्वरलोपे अतः प्रागादिदिक्षु इत्ययमर्थो जातः तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रकं हीरकं निवेशम्। एवं चन्द्रप्रीत्यर्थं शोभनमुक्ताफलमाग्नेय्यां, भौमप्रीत्यर्थं प्रवालं दक्षिणस्याम् अथो राहुप्रीत्यर्थं गोमेदं नैर्ऋत्याम्। पश्चात् शनिप्रीतये शोभनमीलं पश्चिमायाम्। केतुप्रीतये वैदूर्यं वायव्याम्। गुरुप्रीतये पुष्पकं पुष्परागम् उत्तर-स्याम्। बुधप्रीतये पाचिः गारुत्मतम् ऐशान्यां सूर्यप्रीतये माणिक्यं मध्यमकोष्ठे इति (९)।

अथ सति द्रव्यसामर्थ्ये नवरत्नसमुदायधारणस्य सम-त्वात्तदुक्तेदानीमसति द्रव्यसामर्थ्ये यद्ग्रहकृतं दौःस्थ्यं तद्ग्रहरत्नधारणमिन्द्रवज्रयाह माणिक्येति। सूर्य-प्रीत्यर्थं माणिक्यं धार्यम्। एवं चन्द्रस्य मुक्ताफलम्। भौमस्य विद्रुमम्। बुधस्य गारुत्मतं गारुडं पाचिः। गुरोः पुष्पकं पुष्परागः। शुक्रस्य वज्रम्। शनेर्नीलं राहोर्गोमेदं (वहु निवा इति) काव्यकुशभाषयाकुः केतोर्वैदूर्यमित्येवमर्कतोऽर्कादीनां ग्रहाणां रत्नानि धार्याणि स्युः। तत्र यद्ग्रहकृतं दौःस्थ्यं तस्य ग्रहस्य तुष्ट्यै तद्रत्नं धार्यमित्यर्थः यदाह कश्यपः सूर्यादीनां च संतुष्ट्यै माणिक्यं मौक्तिकं तथा। सुविद्रुमं मरकतं पुष्परागं च वज्रकम्। नीलगोमेदवैदूर्यं धार्यं सम्यग्दरक्र-मात्"। अयोग्यस्य तदे सुवर्णमित्यग्रिमश्लोकेन सम्बन्धः(१०) अथ महामूल्यरत्नधारणे यस्य सामर्थ्याभावस्तदर्थमत्र-

मूलानि रत्नानि तारावलं च शाविन्याह धार्यमिति। अथो तत्र शुभस्य हृदे सन्तोषार्थं सुवर्णं यथाशक्ति धार्यम्। राहुकेत्वोः प्रीत्यै राजावर्त्तकं कश्चिद्विशेषोधार्यः एवं शुक्रचोस्तुष्ट्यै रौप्यं, गुरोस्तुष्ट्यै मुक्ता। मन्दस्य शनेस्तुष्ट्यै लोहम्। आरभान्वोर्मङ्गलसूर्ययोः प्रीत्यै-प्रवालं धार्यम्। उक्तं च श्रीपतिना "धार्यं तुष्ट्यै विद्रुमं भौमभान्वोरुक्तं शुक्रस्येव हेमेन्दुजस्य। मुक्ता-सूरेर्लौहमर्कात्मजस्य राजावर्त्तः कीर्त्तितः शेषयोश्चेति" सूरेः सुरगुरोः। शेषयोः राहुकेत्वोः। दीपिकाकारस्तु औषधीमूलानि धार्याण्युवाह "मूलं धार्यं त्रिमूलाः सवितरि विगुणे, चौरिकामूलमिन्दौ, जिह्वाहेर्भूमिपुत्रे, रजनिकरसुते वृद्धदारोश्च मूलम्। भार्गी जीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं, पिप्पलोत्थं चार्कपुत्रे, तमसि मलयजं, केतुदोषेऽश्वगन्धमिति" त्रिमूली विल्वः चौरिका शिरिषी जिह्वाहिर्नागजिह्वा वृद्धदारविदारी। भार्गी प्रसिद्धा। सिंहपुच्छं (बाघोट चरिवारीति) मध्यदेशभाषया प्रसिद्धम्। मलयजं चन्दनम्। अश्वगन्धं प्रसिद्धम्। एतदोषधीमूलधारणं सर्वथा रत्नधारणाशक्तौ वेदितव्यम्" पी० धा० गोचरप्रसङ्गात् तारावलादिकमाह तत्रैव

तारेति। यद्दिने तारावलमस्ति वा नवेति विचारचिकीर्षितस्तद्दिने या तारा वा जन्मर्क्षात् जन्मनक्षत्रात् निराहृत्तिः पुनरावृत्तिक्रमेण गणनीया स्यात्। त्रिरिति "द्वित्रिचतुर्भ्यः सुजिति" पा० सुजन्तमव्ययम्। तज्जन्मनक्षत्राद्दिननक्षत्रे गणिते नवभिर्भक्ते तिथ्य पादत्रयोक्तवल्लब्धविष्टतारायाः शुभमशुभं वाच्यमिति फलितोऽर्थः ११।

"जन्माख्यसम्पद्विपदः क्षेमप्रत्यरिसाधकाः। वधमैत्रातिमैत्राःस्युस्तारा नामसदृक्फलाः १२॥ त्वत्यौ सर्पतिलान् विपद्यपि गुडं, शाकं त्रिजन्मस्वथो दद्यात्प्रत्यरितारकासु लवणं, सर्वो विपत्प्रत्यरिः। तत्त्वादिमपर्यये न शुभदोऽथैषां द्वितीये पका नादिमान्त्रतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः १३॥ चटि ६० घ्नं गतभस्तु ताघटीयुक्तं युगा४हृतम्। शराब्धि ४५ हृलब्धतोऽर्क१२शेषेऽवस्थाः क्रियाद्विषोः १४॥ प्रवासनाशौ मरणञ्जयञ्च हास्यारतिक्रीडितसुप्तभुक्ताः। ज्वराख्यकम्पस्थिरता अवस्था मेषात् क्रमान्नामसदृक्फलाः स्युः १५। नाजाकुश्वलाप्रियकुञ्चनसिद्धार्थैर्निशादारुभिः शुद्धाम्भोप्रयुतैर्जलैर्निगदितं स्नानं घटोत्यापकृत्। प्रेतुः कल्परयो हयश्च कनकस्रोतास्वरस्फोटकः श्वेतो, गौरसिता, महासिरज इत्येता रवेर्दक्षिणाः १६। सूर्यारसौम्यास्फुजितोऽश्वनागसप्ताद्विषद्वान्विषरश्मिनाडीः। तमोयमेज्याश्विरसाद्रिमागान् गन्तव्यराशेः फलदाः पुरस्तात् १७। दुष्टे योगे हेम, चन्द्रे च शङ्खं, धान्यं तिथ्यर्धे, तिथौ तण्डुलांश्च। वारे रत्नं भे च गां, हेम नाड्यां, दद्यात्रिस्त्यस्य तारासु राजा १८। राश्यादिगौ रविकुजौ फलदौ, सितेज्यौ मध्ये, सदा शशिसुत, श्चरमेऽगमन्दौ। अञ्जान् वह्निभयसन्ततिवस्त्रसौख्यदुःखानि साधि जनिभे रविवासरादौ" १९ मु० चि०।

अथ शेषक्रमेण सकलास्ताराः संज्ञा चतुष्टभाह। जन्माख्येति। स्पष्टार्थमिदमद्यम्। यदाह नारदः "जन्मसम्पद्विपत् क्षेमं प्रत्यरिः साधको वधः। मित्रम्परममित्रन्तु जन्मभाच्च पुनः पुनरिति"। एवं तारा गणनीया इति शेषः। तत्र तृतीयापञ्चमीसप्तम्यस्तारा निषिद्धाः अनिष्टफलश्रवणात्। अर्थादन्याः समीचीनाः समीचीनफलश्रवणात्। उक्तञ्च "जन्मतारा द्वितीया च षष्ठी चैव चतुर्थिका। अष्टमी नवमी चैव षट् च ताराः शुभावहाः" इति। जन्मनक्षत्रन्तु कार्यविशेषे गृहीतं प्रतिषिद्धञ्च तत्रापि निर्णेष्यते। तदिदन्तारावलं कृष्णपक्षविषयं न तूभयपक्षसाधारणम्। तदाह नारदः "कृष्णे बलवती तारा शुक्लपक्षे बली शशीति"। युक्तञ्चैतत् यतोऽत्रार्थवादो रत्नमालायाम्"न खलु बहुलपक्षे शीतरश्मेः प्रभावः, कथितमिह हि तारावीर्यमार्यैः प्रधानम्। अतिविकलशरीरे प्रेयसि प्रोषिते वा प्रभवति खलु कर्तुं सर्वकार्याणि योषा। शुक्ले पक्षे शीतरश्मिर्बलीयान् प्राधान्यं तारकायास्तु तत्र। मत्तारा शुक्ले विद्यमानेऽपि कान्ते न स्वातन्त्र्यं योषितः क्वापि दृष्टमिति" १९

अथावश्यकृत्ये दुष्टताराणामकारद्वयेन परिहारं शार्दूलविक्रीडितेनाह "सृष्टौ सर्पतिलानिति। सृष्टौ शाल्यां वधतारायां सर्पतिलान् यथाशक्ति सुवर्णयुक्तान् तिलान् ब्राह्मणाय दद्यात्। विपद्यपि विपत्संज्ञायां तृतीयतारायाङ्गुडमिक्षुविकारन्दद्यात्। त्रिजन्मसु तिसृषु जन्मतारासु शाकमसिद्धं कन्दादि दद्यात्। अथो प्रत्यरितारकासु पञ्चम्यान्तारायां लवणन्दद्यात्। तदाह नारदः "जन्मत्रिपञ्चसप्ताख्या ताराऽनिष्टफलप्रदा। अनिष्टपरिहाराय दद्याद्द्विजातये। शाकं

राजः' वनो मुस्ता, सिद्धार्थाः सर्षपाः (सिरषा) इति मङ्गराज्ञाः (सरिषा) इति कान्यकुब्जाः । निशे हरिद्रा-द्वयं दारु देवदारुः पुङ्खा शरपुङ्खा । लोध्रं प्रसिद्ध एतैरौषधैर्युतानि गङ्गादिजलानि तैः स्नात्वा स्नानं दुष्टग्रहजनितारिष्टनाशकं स्यात् । उक्तञ्च दीपिकायाम् "सिद्धार्थलोध्ररजनीद्वयकुष्ठधान्यं वाम-लकं सफलिनी सवचा च मांसी । स्नानं कुरु ग्रह-गणप्रशमाय नित्यं सर्वे रविप्रभृतयः सुखदीभवन्ति ।" दैवज्ञमनोहरेऽपि "सप्रियङ्गुरजनीद्वयमांसी कुष्ठलाज-सितसर्षपसारुद्वैः । वारिभिः सह वचैः सहलोध्रैः स्नानमत्ति निखिलग्रहपीडामिति" वारिभिस्तीर्थोदकैः रत्नमालायां तु प्रत्येकं ग्रहाणामौषधभेदस्नानमुक्तं यथा ।

रवेः—"मनःशिलैलासुरदारुकुङ्कुमैरुशीरयष्टीमधुपद्मकान्वितैः । सताम्रपुष्पैर्विषमे स्थिते रवौ शुभावहं स्नान-मुदाहृतं बुधैः" ।

चन्द्रस्य—"पञ्चगव्यगजदानविमिश्रैः शङ्खशुक्तिकुमुदस्फटिकैश्च । शीतरश्मिजनवैकृतहन्तृ स्नानमेतदुदितं नय-तीनाम्" ।

कुजस्य—"बिल्वचन्दनबलारुणपुष्पैर्हिङ्गुकल्कफलिनीबकुलैश्च । स्नानमद्भिरिह मांसियुताभिर्भौमदोषविनिवा-रणमाहुः" ।

बुधस्य—"गोमयाक्षतफलैः सगरोचैः क्षौद्रशुक्तिनवमूल-हेमभिः । स्नानमुक्तमिदमत्र भूभृतां बोधनाशुभविना-शनं बुधैः" ।

गुरोः—"मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः । चिप्रमम्बु मधुकेन च स्फुटं वैकृतं गुरुकृतं विनिहन्ति" ।

शुक्रस्य—"एलया च शिलया समन्वितैर्वारिभिः सफलमूलकुङ्कुमैः । स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः" ।

शनेः—"असिततिलाञ्जनलोध्रबलाभिः शतकुसुमाघनलाजयुताभिः । रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिसङ्घैः" ।

राहुकेत्वोः—"लोध्रगर्भतिलपत्रकमुस्ताहस्तिदानमृगनाभिपयोभिः । स्नानमार्ग्गमिह सन्तति राहोः शान्तमूलमिदमेव च केतोः" । राहुकथितद्रव्यमजमूत्रसहितं केत्वर्थं स्यात् । अतएवोक्तं दीपिकायाम् "प्रयोज्यमौषधस्नानं ग्रहविप्रगुरार्चनम् । ग्रहानुद्दिश्य होमो वा ग्रहाणां प्रीतिमिच्छता" तत्र ग्रहपूजाहोमौ वशिष्ठसंहितायां

महता प्रबन्धेनोक्तौ तौ तत एवावगन्तव्यौ इत्यलमति-विस्तरेण । अथ रवेरिति । रविमारभ्य दक्षिणा उ-च्यन्ते । तत्र सूर्य्यप्रीत्यर्थं धेनुर्गौः । चन्द्रप्रीत्यर्थं कम्बु शङ्खः । कम्बु इति नपुंसकलिङ्गम् पृथक्पदम् "शङ्खः स्यात्कम्बुरस्त्रियाम्" इत्यमरोक्तेः । मङ्गलप्रीत्यर्थमरुण भारक्तो वृषः । बुधप्रीत्यर्थं कनकं सुवर्णम् । गुरुप्रीत्यर्थं पीताम्बरं तच्च यथाविभवं कार्पासं कोषजं च । शुक्र-प्रीत्यर्थं श्वेतो घोटकः । शनिप्रीत्यर्थमसिता श्यामवर्णा गौः । राहुप्रीत्यर्थं महाऽसिकृष्णलौहखड्गः । केतु-प्रीत्यर्थमजः छागो दक्षिणेत्यर्थः । यदाह वशिष्ठः "धेनुं शङ्खं रक्तवृषं हेम पीताम्बरद्वयम् । श्वेताश्वं कृष्णधेनुञ्च कृष्णलौहमजं क्रमात् । स्वर्णेन वा समी-कृत्य दातव्या दक्षिणा ततः । आचार्य्याय जापकेभ्यो-ब्राह्मणेभ्योऽथ शक्तितः" इति । अत्र प्रत्येकं दान-मन्त्राणामेवोक्ताः ग्रन्थभूयस्त्वभयान्न लिख्यन्ते । "एवं यः कुरुते सम्यक् ग्रहयज्ञं नृपोत्तमः । सर्वान् कामा-नवाप्नोति शुभस्थानफलं लभेत्" नृपोत्तम इत्युप-लक्षणम् । तेन यः कश्चिदुपद्रुतोपि कुर्य्यात् तत्र च विभवानुरूपाणि ग्रहदानानि प्रोक्तानि कैश्चित् यथा ।

रवेः—"कौसुम्भवस्त्रं गुडहेमताम्रमाणिक्यगोधूमसुवर्ण-वत्सम् । सवत्सगोदानमतिप्रशस्तं दुष्टाय सूर्य्याय मसूरिकाञ्च" ।

चन्द्रस्य—"घृतकलसं सितवस्त्रं दधिशङ्खं चैव मौक्तिकसु-वर्णे । रजतञ्च सम्प्रदद्याच्चन्द्रारिष्टोपशमनाय" ।

कुजस्य—"प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीर-पुष्पम् । आरक्तवस्त्रं गुडहेमताम्रं दुष्टाय भौमाय च चन्दनं हि" ।

बुधस्य—"नीलं वस्त्रं मुद्गदानं बुधाय रत्नं माषी दासिका हेमसर्पिः । कांस्यं दन्तः कुञ्जराय नेयो रौप्यं सर्वं पुष्पजात्यादिकञ्च ।

गुरोः—"अश्वः सुवर्णं शुकपीतवस्त्रं सपीतधान्यं लवणं सपुष्पम् । सशर्करं तद्रजनीप्रयुक्तं दुष्टाय शान्त्यै गुरवे प्रदेयम्" रजनी हरिद्रा ।

शुक्रस्य—"चित्रवस्त्रमपि दानवार्च्चिते दुष्टगे हनिवरैः परि-गीतम् । तण्डुलं घृतसुवर्णरूप्यकं वज्रकं परिमलो धवलोऽश्वः" ।

शनेः—"नीलकं महिषं कृष्णं वस्त्रं लौहं सदक्षिणम् । दद्याच्च दक्षिणायुक्तं शनिदौष्ट्यप्रशान्तये" ।

राहोः—"राहोर्दानं बुधैर्गोमेदं लौहकम्बलौ ।
सुवर्णं नागरूपञ्च सतिलं ताम्रभाजनम्"
केतोः—"केतौ वैदूर्यमकलं तैलं मृगमदस्तथा । कर्णातिकाच संयुक्ता दद्यात् क्रोधापनुत्तये" ।

अन्यच संहिताप्रदीपे "भानुस्ताम्रप्रदानादपहरति नृणां वैकृतं वासरोत्थं सोमः श्रीखण्डदानादवनिसुततरो भोजनात् पुष्पदानात् । सौम्यः शक्रस्य मन्त्री हरिहर नमनात् भार्गवः शुभ्रवस्त्रैस्तैलस्नानात् प्रभाते दिनकरतनयो ब्रह्मनत्या परौ चेति" । मन्त्रा ब्राह्मणः । परौ राहुकेतू १६। अथ सूर्यादयो ग्रहा गलव्यराशेः प्राक् कियद्भिर्दिनैः फलं दद्युरित्येतदुपजात्याह सूर्यारत्नावेति । सूर्यादयो ग्रहा गन्तव्यराशेर्निगमिष्यितराशेः पुरस्तात् पूर्वमेवैतत्संख्यकदिवसघटीमासान् यत "कालाध्वनोरत्यन्तसंयोगे" इति पा०द्वितीया ततो वैरन्तर्येण तावन्तं कालं फलदाः स्युः तद्यथा । सूर्यो गन्तव्यराशेः प्राक् अन्तरस्तान् पञ्च दिवसान् फलदः । एवमारो भौमोऽष्ट दिवसान् पूर्वं फलदः, बुधः सप्त दिवसान्, शुक्रोऽपि सप्त दिवसान्, विधुश्चन्द्रः त्रिंशन्नाडीर्घटिकात्रयमेव प्राक् फलदः, राहुर्गन्तव्यराशेः प्राक् त्रिमासं फलदः एवं शनिः षण्मासान् । गुरुर्द्विमासान् पूर्वं फलद इत्यर्थः । उक्तञ्च "सूर्यः पञ्चदिनं शशी त्रिघटिकं भौमोऽष्ट वै वासरान् सप्ताहानि भृगुः शशोभतनयो, मासद्वयं वै गुरुः । षण्मासान् पुरतोऽपि सूर्यतनयो राहुश्च मासत्रयं, केतुश्चैव ददाति भावि सकलं गन्तव्यराशेः फलमिति" । जगन्मोहने त्वेव मुक्तम् "आदित्यादिग्रहा दद्युर्लग्ने वा गोचरेऽपि वा । सप्तविंशति २७,भागेषु परराशिफलं खल्विति १७ । अथ प्रसङ्गादावश्यकमङ्गलयात्राकर्त्तव्येषु सत्सु तिथ्यादिविषयकदुष्टयोगसद्भावे तद्दोषनिवारणार्थं दानं शालिन्याह । दुष्टे इति । दुष्टे व्यतीपातादिरूपे योगे सति हेम सुवर्णं यथाशक्ति राजा दद्यात् । च पुनश्चन्द्रे दुष्टे विहितान्यस्थानस्थिते शङ्खं दद्यात् । तिथ्यर्द्धे करणे भद्राख्ये दुष्टे धान्यं दद्यात् । तिथौ दुष्टे चतुर्थ्यादिरूपे तण्डुलान् दद्यात् । वारे दुष्टेऽशुभफलरूपे रत्नं प्रवालमुक्तादि दद्यात् । भे राशौ दुष्टे क्रूरग्रहाधिष्ठितत्वादिदोषसहिते सति गां दद्यात् । नाड्यां घटिकायां दुर्मुहूर्त्तादिना दुष्टायां सत्यां हेम सुवर्णं दद्यात् च पुनस्ताराश्च दुष्टाश्च विपत्प्रत्यरिवधरूपाश्च तिस्रस्तु लवणं दद्यात् । पूर्वं दुष्टताराश्च प्रत्येकं विशिष्य दानमुक्तमिदानीं तदशक्तौ लवणमेव देयमिति पुनरुक्तिपरिहारः । उक्तञ्च दीपिकायाम् "योगस्य हेम, करणस्य च धान्यमिन्दोः शङ्खञ्च, तण्डुलमथो तिथिवारयोश्च । ताराबलाय लवणान्यथ गां च राशेर्दद्याद्धिनाय कनकं शुचि नाडिकायामिति" १८ अथात गोचरप्रसङ्गात् सूर्यादयो ग्रहाः राश्यन्तरगताः सन्तः यदा शुभाशुभफलदातारो भवन्ति तथा चान्द्रमासाधिकरणकरविवासरादौ स्वजन्मनक्षत्रप्रवेशे सति फलविशेषं च वसन्ततिलकाद्वयेनाह राश्यादिगाविति । रविकुजौ सूर्यमङ्गलौ राश्यादिगौ राशि प्रथमदशांशमध्यस्थितौ सन्तौ फलदौ निखिलफलदातारौ । अवशिष्टांशेष्वीषदीषत् फलदौ । एवं सितेज्यौ शुक्रबृहस्पती मध्ये मध्यगतांशदशके निखिलफलदातारावन्यत्रेषदीषत् । शशिसुतो बुधः सदा त्रिंशदंशेषु निखिलफलदाता । अब्जमन्दौ चन्द्रशनैश्चरौ चरमदशके निखिलफलदातारावन्यत्रेषदीषत् । उक्तञ्च वशिष्ठेन "भवनादिगतौ फलदौ रविभौमौ मध्यगौ च गुरुशुक्रौ । अन्त्यगतौ शशिरविजौ सदैव फलदः शशाङ्कसुतः" । वराहेणापि "दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ । रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालमिति" रुधिरो भौमः । अथ्वेति । यस्मिन् मासे स्वीयजन्मनक्षत्रप्रवेशे सूर्यादिवाराश्चेत् स्युः तदा तस्मिन् मासेऽध्वादीनि फलानि वाच्यानि तद्यथा । रविवारे जन्मनक्षत्रप्रवेशे सति तस्मिन् मासे अध्वा मार्गोऽटनमिति यावत्, फलं तस्य पुंसो भवेत् । एवं चन्द्रवारे जन्मनक्षत्रप्रवेशे भक्ष्यं भक्ष्यं तत्प्राप्तिः स्यादित्यर्थः । एवं भौमवारे वह्निभयं भवेत् । बुधवारे सम्प्रीतिः । यतो समीचीना धर्मयुक्ता बुद्धिर्भवेत् । गुरुवारे वस्त्रप्राप्तिर्भवेत् । भृगुवारे सौख्यं भवेत् । शनिवारे दुःखप्राप्तिः स्यादित्यर्थः । उक्तञ्च ज्योतिषरत्नसंग्रहे वामनेन "अध्वा भोजनमग्निभीः सुमतिता वस्त्रं सुखं चासुखं मासे मासि फलं भवेज्जननभे सूर्यादिवारे स्थिते" इति अत्र "मासास्तथा च तिथयस्तुहिनांशुमानादिति" भास्कराचार्यवाक्याच्चान्द्रः शुक्लप्रतिपदादि दर्शान्तो मासो ग्राह्यत इति शिवम्" १६ पी०धा० । अष्टवर्गशुभाशुभ एव गोचरशुद्धेर्मौख्यता तद्यानम् अष्टवर्गशब्दे ५२२ पृ०उक्तम्

**गोचर्म्मन्** न० ६त०। १गवां चर्म्मणि, गोचर्म च स्तम्भने आसनतया विहितम् यथाह समयाचारतन्त्रे २पटले "जैवासनं तु वश्यार्थमाकृष्टौ व्याघ्रचर्म च। शान्तौ मृगाजिनं शस्तं मोक्षार्थे व्याघ्रचर्म च। गोचर्म स्तम्भने देवि! मोहने वाजिचर्म च"। "सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम्। दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति यः" इति २वृहस्पत्युक्ते "दशहस्तेन वंशेन दशवंशान् समन्ततः। पञ्च चाभ्यधिकान् दद्यादेतद्गोचर्म चोच्यते" इति ३वशिष्ठोक्ते च भूमानभेदे "अपि गोचर्ममात्रेण भूमिदानेन पूयते" भा० आनु० ६२अ०।

**गोचर्मवसन** पु० गोचर्म वसनमस्य। महादेवे "गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरः" भा० आनु० १७अ० शिवसहस्रनामोक्तौ

**गोचारक** त्रि० गां चारयति घासादौ चर–णिच्–ण्वुल्। गोरक्षके (राखाल)

**गोचारिन्** त्रि० गौरिव चरति चर–णिनि। तपस्विभेदे "गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिकास्तथा। मरीचिपाः फेनपाश्च तथैव मृगचारिणः" भा० आनु० १४अ०

**गोची** स्त्री गामञ्चति अन्च–क्विप् ङीप् नलोपे अल्लोपः। गवाचीशब्दार्थे १मत्स्यभेदे। गाः प्रियस्तुतिरूपाः वाचः अञ्चति अन्च+क्विप् ङीप्। २हिंसायवपत्न्यां शब्दार्थचि०

**गोच्छाल** पु० गां भूमिमाच्छादयति छद–णिच्–अच् पृषो०। भूकदम्बे (चाकुलिया)। रत्नमाला

**गोज** पु० "नृपायां नृपसंसर्गात् प्रमादाद्गूढजातकः। सोऽपि क्षत्रिय एव स्यादभिषेके च वर्जितः। अभिषेकं विना चायं गोज इत्यभिधीयते। सर्वं च राजवत्तस्य शस्यते पदवन्दनम्" इत्युशनसोक्ते सङ्कीर्णजातिभेदे अस्य राजशब्देन समासे राजदन्तादित्वात् पूर्वनिपातः द्वन्द्वे एकवद्भावश्च। "गोदुग्धप्रभवं किं वा छागदुग्धसमुद्भवम्। भवेत् गोजं त्रिदोषघ्नं रोचनं बलवर्द्धनम्। वह्निदीप्तिकरं हृद्यं सद्यस्तृप्तिकरं लघु। अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते"। भावप्र० उक्ते नवनीते २गोछागदुग्धविकारभेदे न०। ३गोजातमात्रे त्रि०। ४गोलोमिकादले स्त्री राजनि०।

**गोजर** पु० गोषु मध्ये जरः जीर्णः। वृद्धवलीवर्द्दे "नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम्" भाग० ३।३०।१४। "गोजरं वृद्धवलीवर्द्दम्" श्रीधरः।

**गोजल** न० गवि जातं जलम्। गोमूत्रे राजनि०।

**गोजा** त्रि० गवि पृथिव्यां व्रीह्यादिरूपेण जायते विट् आत्त्वम्। व्रीह्यादिषु। ऋ० ४।४०।५।उद्दा०। २गोलोमिकादले राजनि०। ३सुरभ्यां जाते च

**गोजागरिक** न० गवि स्वर्गे जागरः अप्रमत्तताऽस्यास्य ठन्। १मङ्गले मङ्गलस्य स्वर्गसाधनाय सदोद्यततया तथात्वम्। गवि भूमौ जागरिकः प्रहरीव अस्वरूपकण्टकधारित्वात्। २कण्टकारक्षे। गोषु व्रीह्यादिषु जागरोऽस्यास्य ठन्। ३भक्ष्यकारके त्रि० शब्दार्थचि०

**गोजात** पु० गवि जातः। १गोनामकपुत्रस्यपत्नीजाते २सुरभीजाते वृषादौ ३स्वर्गजाते त्रि० "शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः"। ऋ० ७।३५।१५

**गोजापर्णी** स्त्री गोजाः दुग्धफेन इव शुभ्रत्वात् पर्णमस्य गौरा० ङीष्। दुग्धफेनावृक्षे राजनि०।

**गोजित्** पु० गां भूमिं जयति जि–क्विप्। इन्द्रे तस्य पृथिवीजयित्वात्तस्य तथात्वम्। ऋ० १।१०६।१। ८।५८।१०

**गोजिह्वा** स्त्री गोर्जिह्वेव। (गोजिया) लताभेदे। स्वार्थे क। तत्रैवार्थे अमरः। "गोजिह्वा गोजिका गोजी दार्विका खरपर्णिनी। गोजिह्वा वातला शीता ग्राहिणी कफपित्तहृत्। हृद्या प्रमेहकासास्रव्रणज्वरहरी लघुः। कोमला तुवरी तिक्ता स्वादुपाकरसा स्मृता" भावप्र० तद्गुणा उक्ताः।

**गोजि(जी)** स्त्री गोजिह्वा पृषो०। गोजिह्वाख्ये लताभेदे भावप्र० वा ङीप्। "गोजी च पिटा यक्ष तालपत्री" "सक्तुकफेनशाकगोजीकाकौडुम्बरिकाः" इति च सुश्रुतः

**गोजिरा** स्त्री गौर्भूमिः तत्त्वायसादि जीर्यतेऽनया जॄ–क ६त०। शस्यादिजारिकायाम् "गोजिरया रंहमाणः पुरन्ध्या" ऋ० ८।११०।२

**गोड** पु० गोल+पृषो०। (गोँड) इति ख्याते नाभौ प्रह- [ज्जर्नीवगुडके भरतः

**गोडिम्ब** पु० गोर्भूमेर्डिम्ब इव। शृगालजम्ब्वां शब्दार्थचि०।

**गोडुम्बा** स्त्री गां भूमिं तुम्बति अर्द्दयति तुवि–क पृ०। (गोमुक) १गवादन्यां (तरमुज) २गोर्यहले पु० मेदि०। स्वार्थे क। गोडुम्बिका गवादन्याम् रत्नमाला

**गोणी** स्त्री गुण–घञ् नि० गुणः गोण+आवपनेऽर्थे ङीष्। धान्याधारे (गुण) ख्याते १आवपनपात्रे २छिन्नवस्त्रे, ३शाणवां, ४हिन्दूपोतके शाकभेदे, ५द्रोणीपरिमाणे च। "गोणी स्वावपनं चेत्" जानपदा० पा० सू० सि० कौ०। तत्र हिन्दूपोतकता भावप्र० उक्ता यथा

"शूर्पोऽध्याद् भवेद्द्रोणी वाहो गोणी च सा स्मृता। द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः। चतुःसहस्रपलिका षण्णवत्यधिका च सा। पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः। तुला पलशतं ज्ञेयं सर्वत्रैवैष निश्चयः। माषटङ्कार्धबिल्वानि कुडवः प्रस्थमाढकम्। राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम्"। पञ्चभिः सप्तभिर्वा गोणीभिः क्रीतः तद्धितार्थे द्विगौ परिमाणात् ठञ्। "द्विगोर्लुगनपत्ये" पा० तस्य लुकि उपसर्जनस्त्रीप्रत्ययस्य लुक्। ततः "इद्गोण्याः" पा० इत् पञ्चगोणि सप्तगोणि पञ्चगोण्यादिक्रीते पटादौ त्रि०। स्वल्पा गोणी टच् षित्वात् ङीष्। गोणीतरी ह्रस्वगोण्याम्। [च २तद्धति त्रि० मेदिनिः।

गोण्ड पु० गोरण्डं इव। १नीचजातिभेदे (गोंड) २वर्द्धनाभौ

गोण्डाकरी स्त्री रागभेदे "गोण्डाकरीरागेण रूपकतालेन गीयते" गीतगो०।

गोतम पु० गोभिस्तमो ध्वस्तं यस्य पृषो०। १मुनिभेदे तन्नामनिरुक्तिः भा० आनु० ९३ अ०यथा "गोतमोऽयं यतोऽधूमो-दमस्ते मम दर्शनात्। गोभिस्तमो मम ध्वस्तं जातमात्रस्य देहतः। विद्धि मां गोतमं तस्मात् यातुधानि! निबोध मे" इति। स च श्वेतवराहकल्पे ब्रह्मणो मानसः पुत्रः यथाह वायु०पु०२अ० "ब्रह्मा संभृतसंभारो मानसानृत्विजोऽसृजत्" इत्युपक्रमे "हुतपालं गोतमञ्च तथा वेदशिरोत्तमम्" इति। स च गोत्रप्रवर्त्तकः गोत्रशब्दे दृश्यम्। गोतमस्यापत्यम् ऋष्यण्। गौतम तद्वंश्ये प्रवरप्रवर्त्तके ऋषिभेदे बह्वर्थे तस्य लुक् गोतमाः। गौतमशब्देऽधिकं वक्ष्यते आर्षशब्दे ८२७पृ०उदा० दृश्यम्। गोतमवंशप्रवराङ्गिरसगोत्रोत्पन्ना इव तद्गोत्रा एव ऋषयः। अतिशयेन गौः जडत्वात् तमप्। २अतिजडे पुंस्त्री। "मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्। गोतमं तमवेतैव यथा वेत्थ तथैव सः" नैष० चार्वाकोक्तिः। तस्य आन्वीक्षिकीविद्याप्रकाशकत्वमक्षपादशब्दे ४२पृ० दृश्यम् तच्छब्दे एव तच्छास्त्रप्रतिपाद्याद्युक्तम्। तस्य जायाः गौतम गोतमच्छात्रे गौरा० ङीष्। गोतमी तद्भार्यायां शतानन्दमातरि २अहल्यायाम् स्त्री

गोतमान्वय पु० गोतमोऽन्वयो वंशप्रवर्त्तको यस्य। शाक्य मुनौ मायादेवीसुते हेम०।

गोतमस्तोम पु० गोतमेन दृष्टः स्तोमः। १यज्ञभेदे अथ प्रातःसवनस्य चतुरुत्तरस्तोमो भवति तस्य चतस्रु बहिष्पवमानमष्टाखष्टासाम्ब्यानि, द्वादश माध्यन्दिनः पवमानः, षोडश पृष्ठानि, विंशत्यार्भवः पवमानः, चतुर्विंशत्यामग्निष्टोम साम" शत०ब्रा०१३।५।१।१ दानशीलप्रजाकामनया कर्त्तव्ये एकाहसाध्ये २यज्ञभेदे च "गोतमेन च यजेत् दानकामा मे प्रजा स्यादितिः" आश्व० श्रौ० ९।५।१४ तद्विधानं तत्रैवोक्तम् दृश्यम्।

गोतमीपुत्र पु० ६त०। गोतम्या अहल्यायाः पुत्रे शतानन्दे

गोतल्लज पु० प्रशस्तः गौः "प्रशंसावचनैश्च" पा०पूर्वनि०। प्रशस्ते गवि स्त्रियामपि पुंस्त्वमेव नियतलिङ्गत्वात् अमरः। गोषु मध्ये तल्लज इति शब्दक०व्युत्पत्तिकल्पनं प्रामादिकमेव पाणिनीयसूत्रे कर्मधारये तद्विधानात्

गोतीर्थ न० गवां कृतं तीर्थम्। १गोष्ठे "वर्त्तिर्निवेद्यो गोतीर्थे देवत्वै प्रयतात्मना" हरि०२तीर्थभेदे च। "तस्मिं स्तस्मो मनसोमनोश्च पृथोरथाम्नेरसितस्य वायोः। तीर्थं सुदासस्य गवां गुहस्य यच्छाद्धदेवस्य च आवसेत" भाग० ३।१।२२। सितादीनामेकादश तीर्थानि तत्तन्नाम्ना प्रसिद्धानि" श्रीधरः

गोतीर्थक पु० "पार्श्वोन्नतेन शस्त्रेण छेदो गोतीर्थको भवेत्" सुश्रुतोक्ते छेदभेदे "आधौ तत्र बद्धच्छिद्रे भिषजा वैविजानता। अर्द्धचन्द्रलिकम्भेदः कार्यो चान्द्रकिकोऽपि वा। सर्वतोभद्रको वापि कार्यो गोतीर्थकोऽपि च" सुश्रुते तत्प्रयोगे निमित्तमुक्तम्।

गोत्र पु० गां भूमिं त्रायते त्रैङ् पालने क। १पर्व्वते तस्य विष्कम्भरूपेण पृथिव्या धारकत्वात् तथात्वम् गोत्रभित्। गूयते शब्द्यतेऽनेन गुङ् शब्दे करणे ष्ट्रन् गूढपत्वादिना लो वा। २आख्यायां नामनि तया शब्द्यमानत्वात्तस्यास्तथात्वम् गोत्रस्खलनम्। ३सम्भावनीयबोधे ४कानने ५क्षेत्रे ६मार्गे च मेदि०। ७छत्रे हेमच०। ८संघे ९वृद्धौ शब्दच०। १०वित्ते धने विश्वः ११मुनिभेदस्यापत्यादिवंशे न०। गोत्रकाराश्चाष्टौ सुप्रसिद्धाः यथाह नि० सि० बौधायनः

"विश्वामित्रोजमदग्निर्भरद्वाजोऽथ गोतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति" मनुस्तु सप्ताह यथा "जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः। वसिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः। एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" एतदुपलक्षणमन्येषामपि दर्शनात्। तथा च धर्म्मप्रदीपे गोत्राणि तु चतुर्विंशतिरित्याह तथा च

इत्यमतः "शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा । भरद्वाजो गौतमश्च सौकालीनस्तथापरः । कल्मषश्चात्रिवेश्यश्च कृष्णात्रेयवशिष्ठकौ । विश्वामित्रः कुशिकश्च कौशिकश्च तथापरः । घृतकौशिकमौद्गल्यौ आलम्ब्यायनः पराशरः । सौपायनस्तथाऽत्रिश्च वासुकी रोहितस्तथा वैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः । चतुर्विंशति गोत्राणां कथिता पूर्व्वपण्डितैः" । "सौकालीनकमौद्गल्यौ पराशरवृहस्पती । काश्यपो विष्णुकौशिक्यौ कात्यायनात्रेयकाण्वकाः । कृष्णात्रेयः साङ्कृतिश्च कौण्डिल्यो गर्गसंज्ञकः । आङ्गिरस इति ख्यातः धनञ्जयश्च संज्ञितः । नव्यजैमिनिवत्साख्याः शाण्डिल्यो वत्सएव च । सावर्ण्यालम्ब्यायनवैयाघ्रपद्या घृतकौशिकः । शक्तिः कात्यायनश्चैव वासुकिर्गौतमस्तथा । शुनकः सौपायनश्च मुनयो गोत्रकारिणः । एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" । सर्व्वे द्विचत्वारिंशद्गोत्रकाराः । "अपत्यं पौत्रप्रभृति गोत्रम्" पा० १२उक्ते पौत्रप्रभृतौ अपत्यत्वेन विवक्षिते वंशेऽत्र न०तस्यायमाशयः— प्रवराध्यायप्रसिद्धं लोके गोत्रमिह तु तदप्रसिद्धस्यापि संज्ञार्थमिदम् पौत्रादेरप्यपत्यत्वाव्यभिचारादपत्यपदस्याप्रत्यत्वेन विवक्षितमित्यर्थः तेन पौत्रादेस्तत्त्वेन विवक्षायामेव गोत्रत्वम् । पौत्रापत्यशब्दयोः सम्बन्धिशब्दतया यदीयपौत्रादि तं प्रत्येव तस्य गोत्रत्वम् इति । अस्य प्रयोजनं तु "एकोगोत्रे" पा० नियमार्थं तथाहि गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यम् औपगवः । गार्ग्यः । नाडायनः । "गोत्रे स्वैकोन संख्यानां प्रत्ययानामपरम्परा । यद्वा सद्यूनर्थस्यो ऽनिष्टोत्पत्तिः प्रसज्यते । अपत्यम्पितुरेव स्यात्ततः प्राचामपीति च । मतभेदेन तद्द्वयं सूत्रमेतत्तथोत्तरम्" सि०कौ० अयमर्थः पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादि स्यात् । चतुर्थे त्वनीवच्छेदे कृतवंशेऽत्र औपगवेः फक् । इत्यमिञ्फकोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतप्रत्ययाः स्युः । पितामहादीनामपीति तृतीयपक्षे तु तृतीये वाच्ये उपगोरपत्ये इष्टे सिद्धेऽपि अपत्यादिजपि स्यात् चतुर्थे फगिति ततः फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्ययाः स्युः। अतो नियमार्थमिदं सूत्रम्"। इति गोत्रापत्ये अनेकप्रत्ययाः पा० विहिता विस्तरभयान्नोक्ताः । गोत्रान्तरे जातस्यापि दानादितो गोत्रान्तरत्वं स्मृतिविहितं यथा "गोत्ररिक्थे जनयितुर्न भजेत् दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डोव्यपैति ददतः स्वधा" मनुः । अयमाशयः दानात् जनयितुः स्वत्वे निवृत्ते द्वादशविधपुत्रान्तर्गतत्वेन दत्तादीनां पुत्रनिमित्वेन विधानात् विधानेन संस्कारादिना च ग्रहीतुः पुत्रत्वे तद्गोत्रत्वम् । दत्तकन्यायान्तु वचनादेव पितृगोत्रापहारेण पतिगोत्रप्राप्तिः तथा च उ०त०व्यवस्थापितं यथा

"तदानीं गोत्रापहारमाह लघुहारीतः । "स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे । पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया" । पाणिग्रहणादपि पितृगोत्रापहारमाह श्राद्धविवेके वृहस्पतिः । "पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः । भर्त्तुर्गोत्रेण नारीणां देयं पिण्डोदकं ततः" । यत्तु सपिण्डनस्य गोत्रापहारित्वप्रतिपादकवचनम् । "संस्थितायान्तु भार्य्यायां सपिण्डीकरणान्तिकम् । पैतृकं भजते गोत्रमूर्द्ध्वन्तु पतिपैतृकम्" इति कात्यायनीयं तत् शाखान्तरीयं शिष्टव्यवहाराभावात् । अतएव "अनुमन्त्रिता गुरुं गोत्रेणाभिवादयेत" इति गोभिलोक्तं सप्तपदीगमनानन्तरं पत्युरभिवादनं तत् पतिगोत्रेण कर्त्तव्यमिति भट्टनारायणैरुक्तम् एतेन पितृगोत्रेणेति सरलाभवदेवभट्टाभ्यामुक्तं हेयम् । श्राद्धे गोत्रोल्लेखे विशेषः श्रा०त०प्रचेताः "गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्" । सामगानां श्राद्धादिकर्मभेदे तस्य विभक्तिविशेषान्तरमाह तत्रैव गोभिलः "गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि । गोत्रस्तु तर्पणे प्रोक्तः एवं कर्त्ता न मुह्यति"—शाखिभेदेन प्रेततर्पणे तु विशेषः ब्रह्मपु० उक्तः । "अमुकामुकगोत्रस्तु प्रेतस्तृप्यत्विदं जलम्" । "स्नात्वा सचेलमाचम्य सिञ्चेदुदकं जले । गोत्रनामानुवादादि तर्पयामीति चोत्तरम्" छन्दोगविषयं गोभिलवाक्यम् "विपक्षगोत्रं दयितेन लम्भिता" किरा० "स्फुटमिन्द्रताद्य मयि गोत्रभिदा" माघ० । "गोत्रविस्खलितमूचुरङ्गनाः" रघुः । "स्मरसि स्मर ! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम्" कुमा० । "गोत्रभिदोऽप्यमर्षणः" रघुः । गोत्रं करोति कृ—णिनि । गोत्रकारिन् गोत्रप्रवर्त्तक ऋषिभेदे । "सप्तैते गोत्रकारिणः" बौधा० । तृच् गोत्रकर्त्तृ तत्रार्थे "तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च" भा०आनु०४अ० । गां भूमिं त्रायते त्रै—क । १२मेघे निघ० । गोत्रभिच्छब्दे दृश्यम् ।

**गोत्रकीला** स्त्री गोत्रः पर्वतः कील इव विष्टम्भकत्वात् यस्याः। पृथिव्यां हेमच०

**गोत्रज** पुंस्त्री गोत्रे समाने वंशे जायते जन–ड। एकगोत्रोत्पन्ने "तत्सुतो गोत्रजो बन्धुः" याज्ञ०। यद्यपि गोत्रोत्पन्नमात्रेऽस्य प्रवृत्तिस्तथापि अशौचप्रकरणे "दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः" व्यासवाक्ये गोत्रजपदं पारिभाषिकं यथाह बृहस्पतिः "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्। जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रजा मताः" इति "गोत्रजा निवृत्तसमानोदकभावाः" शु०त०रघु०। वस्तुतः गोत्रजपदस्य गोत्रोत्पन्नमात्रार्थकत्वेऽपि सामान्यविशेषन्यायेन सपिण्डादेर्विशेषाशौचोक्तेस्तद्भिन्नपरत्वम् अत एव "तत्सुतो गोत्रजोबन्धु"रित्यत्र याज्ञ०वचने गोत्रजपदेन पितामह्यादेर्ग्रहणमिति तद्व्याख्याने च मिता० "गोत्रजाः सपिण्डाः पितामह्यादयः समानगोत्राः" इत्युक्तम्।

**गोत्रभाग** पु० गोत्राणामेकगोत्रजातानां भागः। गोत्रजातानां परस्परविभागे "गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः। तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः। तृतीयः पञ्चमश्चैव सप्तमोवापि यो भवेत्। जन्मनामपरिज्ञाने लभेतांशं क्रमागतम्। यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः। तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही। भुक्तिस्त्रैपुरुषी सिध्येदपरेषां न संशयः। अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति। अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम्। सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते। विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च। सुदीर्घेणापि कालेन तेषां सिध्यति तत्तु न" बृहस्पतिः गोत्रसाधारणं द्रव्यमिति शेषः विवाह्यो जामाता

**गोत्रभिद्** पु० गोत्रं पर्वतं मेघं वा भिनत्ति भिद–क्विप्। इन्द्रे इन्द्रस्य वज्रेण मेघभेदनात् पर्वतपक्षपातनाच्च तथात्वम्। "पुरन्दरो गोत्रभिद् वाजबाहुः" यजु० १७।३८ "गोभूमिस्ताः दृष्ट्या मायन्तो गोत्रा मेघाः तान् हर्षन् भिनत्ति गोत्रान् गिरीन् वा भिनत्ति" वेददी०। तत्र गिरिपक्षभेदनकथा पौराणिकी अनुसन्धेया। यथा "ततोऽद्रयो जातपक्षा विष्णोरेव तु मायया। अखिलां मेदिनीं त्यक्त्वा यथापूर्वं निवेशिताः। तत्स्थानमसुराणान्तु भावादिष्टं जनार्द्दने। प्रतीच्यां पर्वताः सर्वे निमज्जुर्वेगगा गताः। ततासुरेभ्यः शंकन्ते आश्रिपत्यं सुराश्रयम्। तत्कृत्यैवासुराः सर्वं चक्रुरुद्योगमुत्तमम्" इत्युपक्रमे "धरवान्तु गिरीन् स्थाप्य स्वेषु स्थानेषु गोः पतिः। चिच्छेद पविना पक्षान् सर्वेषां भुवि चारिणाम्। एकः सपक्षो मैनाकः सुरैस्तत्र कृतः" वह्नि पु०। "पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः" इति तदन्तरेण रघौ वर्णितम्। गोत्रं नाम भिनत्ति। २नामभेदके एकनामोच्चारणकाले अन्यनामोच्चारके च। "तदयुक्तमस्य तव विश्वसृजा न कृतं यदीक्षणचतुष्टयम्। प्रकटीकृता जगति येन खलु स्फुटमिन्द्रताद्य मयि गोत्रभिदा" माघः। "गोत्रभिदा पर्वतभिदा नामभेदिना च" मल्लि०।

**गोत्रवृक्ष** पु० गोत्रभवो नगजातो वृक्षः। धन्वनवृक्षे भावप्र०।

**गोत्रस्खलन** न० गोत्रे नामनि स्खलनम्। अन्यस्य नामग्रहणावसरे अन्यस्य नामग्रहणरूपे रागहेतुके स्खलने। "अगाद् गोत्रस्खलने च का न तम्"(नवाम्) नैष०। "गोत्रस्खलने भ्रान्तिं मानिनि। जानीहि केवलां मेऽत्र। आख्यानतोऽविशेषप्रतिपत्तिः पार्थिवीव इव" उद्भटः। भावे क्त "गोत्रस्खलितमप्यत्र न०" "उत गोत्रस्खलितेषु बन्धनम्" कुमा० [स्वार्थिकेऽप्यनेन वै–क। २भूमौ अमरः।

**गोत्रा** स्त्री गवां समूहः त्र। १गोसमूहे गां त्रायते त्र-

**गोत्रादि** पु० "तिङोगोत्रादीनि कुत्सनाभीक्ष्ण्ययोः" पा० तिङन्तात् परस्य अनुदात्ततानिमित्ते शब्दगणे तद्गणश्च पा०ग०सूत्रे उक्तो यथा "गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्यायन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ वानाम"।

**गोत्व** न० गोर्भावः त्व। गोशब्दप्रवृत्तिनिमित्ते गवेतरावृत्तौ सकलगोव्यक्तिस्थे जातिभेदे। तल्लक्षणन्तु गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तित्वम्। सत्ताद्रव्यत्वादिजातेः सकलगोव्यक्तिवृत्तित्वात् तद्वारणाय सत्यन्तम् विशेषणं गगनादेर्गवेतरावृत्तित्वात् विशेष्यदलम्। वृत्तिताश्च समवायेन ग्राह्यं तेन गवेतरघटादौ कालिकसम्बन्धेन गोत्वस्य सत्त्वेऽपि नासम्भवः न वा गवेतरासमवेतस्य गगनादेः कालिकेन सकलगोव्यक्तिवृत्तित्वादतिव्याप्तिः। तस्याश्च जातेः गोपदप्रवृत्तिनिमित्तत्वमुक्तं काव्य० प्र० वाक्यपदीये "गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः" यतो गोत्वसम्बन्धादेव गोर्गोपद-

शक्यता अतो गोत्वञ्च गोपदप्रवृत्तिनिमित्तत्वम् । तद्व्यञ्जकञ्च गलकम्बलादिमत्त्वरूपश्चाकारभेदः संस्थानविशेषश्चैव जातिव्यञ्जकत्वात् । तत्र गोपदं गोत्वे शक्तं व्यक्तेर्भानमनुमानात् तद्व्यक्तिवेद्यत्वाद्वेति मीमांसकामन्यन्ते अनुमानञ्च गामानयेत्यादौ गोत्वानयनमिति शाब्दबोधात् परम् गोत्वधर्मिकानयनं गोधर्मिकानयनं विनाऽनुपपन्नमिति व्यतिरेकव्याप्तिपक्षाधीनम् । गोत्वविशिष्टे शक्तमिति तु नैयायिकाः व्यक्तिमात्रस्य शक्यत्वे व्यक्तीनामानन्त्यात् व्यभिचारः । अतद्व्यावृत्तिरूपोऽपोहो वा गोपदशक्य इति तु बौद्धाः

**गोद** पु° गां नेत्रं दायति शोधयति दै—क । १मस्तकस्थे मस्तिष्के हेम° मस्तिष्कस्य नेत्रप्रकाशहेतुत्वात् तथात्वम् । गां ददाति दा—क । २गोदातरि त्रि° "अश्वदस्तु त्रियं पुष्टां गोदोब्रध्नस्य पिष्टपम्" मनुः । गोदावर्य्याः समीपस्थे देशभेदे पु° ततः चातुरर्थ्याम् अण् । गोदः तद्देशादूरभवादौ त्रि° जनपदे तु तस्या°तस्य लुप् । गोदो जनपदः "विशेषणानाञ्चाजातेः" पा° । लुबर्थस्य विशेषणानामपि तल्लिङ्गवचने न तु जातेः । गोदौ रमणीयौ" सि°कौ°

**गोदत्र** न° गोदं त्रायते त्रै—क । मस्तिष्कारक्षके छकुटादौ

**गोदन्त** न° गोर्दन्त इवावयवोऽस्य ६त° । हरिताले राजनि°

**गोदा** स्त्री गां स्वर्गं ददाति स्नानेन दा—क । गोदावरीनद्याम् हेम° । "नेदोऽस्य गोदोत्तरतश्च यावत्" ह°चि°

**गोदान** न° गावो केशा लोमानि वा दीयन्ते खण्ड्यन्तेऽत्र । आधारे ल्युट् । १केशान्ताख्ये द्विजातिसंस्कारभेदे केशान्त शब्दे २२५०पृ° दृश्यम् । "अथास्य गोदानविधेरनन्तरम्" रघुः । तत्र "एतेन गोदानम्" आश्व°गृ°१।१८।१ इत्यादिसूत्रजातेन निरूपितम् । "चूडोपनयनगोदानविवाहाः" आश्व°गृ° । गवि पृथिव्यां दीयते निधीयते वापकाले दा—कर्म्मणि ल्युट् । २दक्षिणकर्णसमीपस्थे शिरःप्रदेशे । "अपरेण दक्षिणाग्निम् दक्षिणं गोदानमुन्दति" कात्या° श्रौ° ५।२।१४। "दक्षिणं गोदानं वितार्य्योनत्सीमामापः" कात्या° श्रौ° ७।२।८। "अपद्भिर्गवि पृथिव्यां दीयते इति गोदानं शिरसोदक्षिणं प्रदेशं वितार्य्य कङ्कतादिना तत्स्थाने केशान् विजटान् कृत्वा उन्दति क्लेदयति अद्भिरार्द्रं करोति इमामापः इत्यादि मन्त्रेण" कर्कः । ६त° । गोः सुरभ्या वृषस्य वा ३दाने । गोप्रशंसापूर्व्वकं तद्दानप्रकारो हेमाद्रि°दा° उक्तो यथा

भविष्यत् पुराणे । ब्रह्मोवाच "आदित्यदुहिता गौर्हि पृथिव्यां परिकीर्त्तिता । श्रेयोऽर्थं सर्वलोकानामुत्पन्ना क्रतुसिद्धये । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति । गोभ्यो यज्ञाः प्रवर्त्तन्ते गोभ्योदेवाः समुत्थिताः । गोभ्यो वेदाः समुत्कीर्णाः सषडङ्गपदक्रमाः । शृङ्गमूले गवां नित्यं ब्रह्मविष्णू समाश्रितौ । शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च । शिरोमध्ये महादेवः सर्वभूतमयः स्थितः । ललाटाग्रे स्थिता देवी नासावंशे च षण्मुखः । कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ । कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ । दन्तेषु वायवः सर्वे जिह्वायां वरुणः स्थितः । सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः । सन्ध्याद्वयं तथोष्ठाभ्यां ग्रीवायामिन्द्रः समाश्रितः । रक्षांसि ककुद्देशे तु साध्याश्चोरसि संस्थिताः । चतुष्पात् सकलो धर्मः स्वयं जङ्घासु संस्थितः । खुरमध्ये तु गन्धर्वाः खुराग्रेषु च पन्नगाः । खुराणां पश्चिमाग्रेषु गणाश्चाप्सरसां स्थिताः । रुद्रा एकादश पृष्ठे वसवः सर्वसन्धिषु । श्रोणीतटस्थाः पितरः सोमो लाङ्गूलमाश्रितः । आदित्यरश्मयो बाले पिण्डीभूता व्यवस्थिताः । साक्षाद्गङ्गा च गोमूत्रे गोमये यमुना स्थिता । क्षीरे सरस्वती देवी नर्मदा दध्निसंस्थिता । हुताशनः स्वयं सर्पिर्ब्राह्मणानां गुरुः परः । अष्टाविंशतिदेवानां कोट्यो रोमसु संस्थिताः । उदरे पृथिवी ज्ञेया सशैलवनकानना । चत्वारः सागराः पूर्णा गवाङ्गे तु पयोधराः । एतद्धि कथितं सर्वं यथा गोषु प्रतिष्ठितम् । जगद्धै देवशार्दूल ! स देवासुरमानवम्" । स्कन्दपुराणे "तृणानि खादन्ति वसन्त्यरण्ये पिबन्ति तोयान्यपरिग्रहाणि । दुह्यन्ति वाह्यन्ति पुनन्ति पापं गव्यैर्जीवति जीवलोकः । तुष्टास्तु गावः शमयन्ति पापं दत्तास्तु गावस्त्रिदिवं नयन्ति । संरक्षिताश्चोपनयन्ति वित्तं गोभिर्न तुल्यं धनमस्ति किञ्चित् । अन्नं समस्तानि ददाति नित्यं पापहर्त्तिं मित्रविवर्द्धनं च । ते एव चाज्यैः परिभुज्यते च गोभिर्न तुल्यं धनमस्ति किञ्चित् । तृणानि शुष्काणि वने चरित्वा पीत्वापि तोयान्यमृतं स्रवन्ति । बहुगोमयाद्याश्च पुनन्ति लोकान् गोभिर्न तुल्यं धनमस्ति किञ्चित्" । हारीतः "बहुक्षीरां च यो गां वै ब्राह्मणायोपपादयेत् । उत्तारयेत्स आत्मानं सप्त तान् जन्मानि च" ।

धेनुं । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपः परो देवः प्रीयतामनया गवा । अनुमन्त्र्य तु तां धेनुं ब्राह्मणेन समन्विताम् । गोमतीन्तु ततो विद्यां जपेत प्रयतः शुचिः । उद्दिश्याथ वासुदेवं प्रीयतामिति चानघ ! । प्रार्थं मनसि संचिन्त्य तोयमप्सु विनिक्षिपेत् । अक्षयायी ब्रह्मपिता पद्मनाभः सनातनः । अनन्तभोगशयनः प्रीयतां परमः पिता" । गोमतीमाह यमः "गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वभूतानां रक्षन्ति च वहन्ति च । हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि । ऋषीणामग्निहोत्रेषु गावो होमप्रतिष्ठिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः स्वर्गस्य लोकस्य गावोधन्याः शुभावहाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति" । अन्यापि गोमती, महाभारतोक्ता तिलधेनुदाने दर्शिता । "ततस्तानयोर्विकल्पात्तुष्ठानमिति । सर्वगोदानसाधारणं मन्त्रमाह वशिष्ठः । "घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् । घृतं मे सर्वतश्चैव घृतं मे मनसि स्थितम् । गावो ममाग्रतो नित्यं गावः पृष्ठत एव च । गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम्" । "इत्याचम्य जपन् सायं प्रातश्च पुरुषः सदा । यदह्ना कुरुते पापं तस्मात् स परिमुच्यते"। दक्षिणा चात्र सुवर्णम् यदाह वशिष्ठः "सुवर्णं दक्षिणामाहुर्गोप्रदाने महाफले । सुवर्णं परमं ह्यायुर्दक्षिणार्थं न संशयः । गोप्रदानन्तारयते सप्त पूर्वान् नरांस्तथा । सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते । सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सुवर्णं पावनं प्राहुः परिमाणं परन्तथा" अत्र सुवर्णशब्दस्य हिरण्यपर्य्यायत्वे यथाशक्त्यनुष्ठानम् । अपरे त्वाहुः असङ्कुचितसुवर्णशब्दावगतपरिमाणार्थपरित्यागानुपपत्तेः सुवर्णशब्दस्य प्राहुरित्यादिक्रियाकर्मभूततया द्वितीयान्तत्वेन विभक्तिविपरिणामस्वीकारात् परिमाणार्थतैव न्याय्येति । एवं च वल्यनियतानुष्ठानप्रसङ्गभङ्गः तथा परिमाणपरत्वेऽप्येतदपि समञ्जसं स्यात्" । वर्णभेदेन गोदानफलादि तत्रोक्तं यथा

"कृष्णाङ्गान्ददते यस्तु पट्टवस्त्रां स्वलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् । विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति । आयुरारोग्यमैश्वर्यं दाता चाप्नोति मानवान् । श्वेताङ्गान्ददते यस्तु दिव्यरत्नैरलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् । तस्यै धूपः प्रदातव्यो घृतेनाक्तश्च पूरयेत् । सुवर्णशृङ्गाभरणा तथा रौप्यखुरा शुभा । पट्टवस्त्रा शुभा चैव दातव्या ध्यानयोगिने । यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु । जन्मप्रभृति यत् पापं मातृकं पैतृकं च यत् । कुलोद्भवस्य सूतस्य तत्पापं देव नश्यति । गान्ददानीह दत्त्वैव वाचा पूयेत सर्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते सोमलोकं व्रजन्ति ते । गौरीं चैव प्रयच्छेत्तु यस्तु गां वै नरः शुचिः । अहोरात्रोषितश्चैव कृतशौचो नरः सदा । स्वर्णशृङ्गीं रौप्यखुरां रत्नालङ्कारभूषिताम् । घण्टामालाकुलां चैव गन्धपुष्पैरलङ्कृताम् । कृतपश्चात्तरेत् प्राप्तो तस्यै धूपं प्रदापयेत् । भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेत् प्रभुम् । गान्ददानीह दत्त्वैव वाचा पूयेत सर्व्वशः । मातृकं पैतृकं चैव यच्चान्यद्दुष्कृतं भवेत् । पापञ्च तस्य तत् सर्वं दहत्यग्निरिवेन्धनम् । वर्षकोटिसहस्रन्तु पुमान् स दिवि मोदते । दासीदासैरलङ्कारैः सेव्यते सर्व्वजन्तुभिः । अरोगश्चैव जायेत तेजस्वी च भवेन्नरः । नीलवर्णाञ्च गान्दद्याद्दोग्ध्रीं क्षीरगुणान्विताम् । स्वर्णशृङ्गीं रौप्यखुरां रत्नालङ्कारभूषिताम् । पट्टवस्त्रां शुभां सौम्यां घण्टादामैरलङ्कृताम् । मधुरस्य च दत्ते च गलवेष्टनशोभिताम् । रुद्रस्य प्रस्थये देवा विष्णोश्च ब्रह्मणस्य ह । गां ददानीह दत्त्वैव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते नीलां गां ददते तु यः । वर्षकोटिसहस्राणि लोके तिष्ठति वारुणे । दधिक्षीरवहा नद्यो वर्त्तन्ते सर्व्वतः सदा । घृतमेघाः प्रपद्यन्ते नवनीतस्य पर्व्वताः । ऋद्धिभागी भवधनो दुर्भिक्षञ्च न पश्यति" ।

सवर्णवत्ससहितायाः कपिलादिकायागोदानविधिस्तत्रैव महाभारते ।

"समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।

सुव्रतां वस्त्रसञ्छन्नां ब्रह्मलोके महीयते"। समानवत्सां समानवर्णवत्साम्। "रोहिणीं तुल्यवत्साञ्च धेनुं दद्यात्पयस्विनीम्। सुव्रतां वस्त्रसंवीतां इन्द्रलोके महीयते। समानवत्सां शवलां धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां सोमलोके महीयते"। शवलां कर्व्वुराम्। "समानवत्सां कृष्णान्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतामग्निलोके महीयते। वातरेणुसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां वायुलोके महीयते। समानवत्सां धूम्रान्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंयुक्तां यमलोके महीयते। अघ्न्यां हेमसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते। अघ्न्या, गौः। कामदोहनां अनायासदोहाम्। "हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां कौवेरं लोकमाप्नुयात्"। पलालधूमवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां पितृलोके महीयते। सवत्सां पीवरीन्दत्त्वा शितकण्ठीमलङ्कृताम्। वैश्वदेवमसम्बाधं स्थानं श्रेष्ठं प्रपद्यते। शितकण्ठीं कृष्णगलाम्। "समानवत्सां गौरीन्तु धेनुन्दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते। सुव्रता सुखदोह्या। "पाण्डुकम्बलवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते। वत्सोपपन्नां नीलाङ्गीं सर्व्वरत्नसमन्विताम्। गन्धर्व्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः। गोप्रदानरतो याति भित्त्वा जलदसञ्चयान्। विमानेनार्कवर्णेन दिवि राजन्! विराजते। तञ्चारुवेशाः सुश्रोण्यः सहस्रं वरयोषितः। रमयन्ति नरश्रेष्ठं गोप्रदानरतं नरम्"।

देवतोद्देशेन गोदानविधिस्तत्रैव विष्णुपुराणे

"ऐशद्दक्षिणदिग्भागे धेनुः कार्य्या उदङ्मुखी। प्राङ्मुखं वत्सकं कृत्वा ब्राह्मणं च उदङ्मुखम्। प्राङ्मुखो यजमानस्तु पूजयेद्ब्राह्मणं ततः। कोऽदादिति च मन्त्रेण गृह्णीयाद्ब्राह्मणः स्वयम्"। देवोऽत्र महेश्वरः। "एवंविधानतो दत्त्वा याति दाता शिवालयम्। तत्र भुक्त्वाखिलान् भोगानन्ते ब्रह्मैति शाश्वतम्"। देवीपुराणे "नीलां वा यदि वा श्वेतां पाटलां कपिलामपि। बहुक्षीरां सवत्साञ्च सुखदोह्यां शुभां नृप"। "आदाय विधिवद्देवीं पूजयेच्छुभपङ्कजैः। धूपन्तु पञ्चनिर्य्यासन्तुरक्तञ्च चन्दनम्। दत्त्वा तु मन्त्रपूर्व्वन्तु नैवेद्यमुपकल्पयेत्। पायसं घृतसंयुक्तं भोजयेच्च तथा तु ताम्। द्विजाय शिवभक्ताय सवत्साञ्चां निवेदयेत्। सहेमवस्त्रकांस्याञ्च महापुण्यमवाप्नुयात्। यावत्तद्रोमसंख्यानं तावद्देव्याः पुरं वसेत्। इहैव गतपापोऽसौ जायते नृपसत्तम!॥" विष्णुधर्म्मे "मान्धाता उवाच। ब्राह्मण! प्रीणनार्थाय केशवस्य शिवस्य च। यानि दानानि देयानि तान्याचक्ष्व द्विजोत्तम!॥ येन चैव विधानेन दानं पुंसः सुखावहम्। ऐहिकामुष्मिकाभिख्य करोति न विहन्यते। वसिष्ठ उवाच। गोदानमादौ वक्ष्यामि मन्त्रकल्पप्रयोगतः। "येन चैव विधानेन धेनुं गाधिकविस्तरम्। पुण्यर्क्षन्तिथिमासाद्य स्नात्वाऽऽतर्प्य पितॄंस्तथा। कृतोपवासः संप्राश्य पञ्चगव्यं नरेश्वर!॥ घृतक्षीराभिषेकञ्च कृत्वा विष्णोः शिवस्य च। तमभ्यर्च्य यथान्यायं पुष्पादिभिरनुक्रमात्। उदङ्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पयस्विनीम्"। गृष्टिः सकृत्प्रसूतेत्यर्थः। "सपुत्रां वस्त्रसंवीतां सितयज्ञोपवीतिनीम्। स्वर्णशृङ्गीं रौप्यखुरीं सुवर्णोपरिसंस्थिताम्। शक्तितो दक्षिणायुक्तां ब्राह्मणाय निवेदयेत्। गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्। प्रदक्षिणं ततः कृत्वा धेनुं द्विजवरस्य तम्। इमां नः प्रतिगृह्णीष्व धेनुर्दत्ता मया तव। स मे पापापनोदाय गोविन्दः प्रीयतामिति"। वह्निपुराणे तु अयमधिको मन्त्रः। "या धेनुः काश्यपस्यासीदत्रेर्वा गोतमस्य च। साभिकामफला देवी इह लोके परत्र चेति"। एवमुच्चार्य्य तं विप्रं गोविन्दं नृप! कल्पयेत्। अनुव्रजेत्तु गच्छन्तं पदान्यष्टौ नराधिप!॥ अनेन विधिना धेनुं यो विप्राय प्रयच्छति। सर्व्वकामसमृद्धात्मा विष्णुलोकं स गच्छति। सप्तावरान् सप्तपरानात्मानञ्चैव मानवः। सप्तजन्मकृतात् पापान्मोचयत्यवनीपते!॥ पदे पदेऽश्वमेधस्य गोप्रदस्य च मानवः। फलमाप्नोति राजेन्द्र दत्तायैवं जगौ हरिः। सर्व्वकामदुघा सम्यक् सर्व्वकालेषु पार्थिव!॥ भवत्यघो पापहरा यावदिन्द्राश्चतुर्दश। सर्व्वेषामेव पापानां कृतानामविजानता। प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम्। सर्व्वेषामेव देवानामेकजन्मानुगं फलम्। हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम्। ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः। लोकाः कामदुघाः प्राप्ता दत्त्वैतद्विधिना नृप!॥ गोप्योऽ-

शिवं जगति नापरमस्ति किञ्चिद्दानम् पवित्रमिति शास्त्रविदो वदन्ति। ताः सम्पदः सरसदश्च मनोऽभिमानैर्देया सदैव विधिना द्विजपुङ्गवेभ्यः॥"

"अतः परन्तु गोदानं कीर्त्तयिष्यामि तेऽनघ!। गावोऽधिकास्तपस्विभ्यो यस्मात् सर्वेभ्य एव च। तस्मान्महेश्वरो देवस्तपस्ताभिः सहास्थितः। ब्रह्मलोके वसन्त्येताः सोमेन सह भारत!। यान्तीं ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम्। पयसा हविषा दध्ना शकृता चाथ चर्मणा। अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्बालैश्च भारत!। नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते। न वर्षविषयं वापि दुःखमासां भवत्युत। ब्राह्मणैः सहिता यान्ति तस्मात् पारमकं पदम्। एकं गोब्राह्मणं तस्मात् प्रवदन्ति मनीषिणः। रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्मण्वती राजन्!। गोचर्मभ्यः प्रवर्त्तिता। पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः। ता इमा विप्रमुख्येभ्यो यो ददाति महीपते!। निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव!। गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते। सर्वत्र विजयञ्चापि लभते मनुजाधिप!। अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः। तस्माद्ददाति यो धेनुममृतं स प्रयच्छति। अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः। तस्माद्ददाति यो धेनुं स हौम्यं सम्प्रयच्छति। स्वर्गो वा मूर्त्तिमानेष, वृषभं यो गवां पतिम्। विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते। प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ!। तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति। गावः शरण्या भूतानामिति वेदविदो विदुः। तस्माद्ददाति यो धेनुं शरणं स प्रयच्छति। न बधार्थं प्रदातव्या न कीनाशे न नास्तिके। गोजीविने न दातव्या तथा गौर्भरतर्षभ!। ददत् स तादृशानां वै नरो गां पापकर्मणाम्। अक्षयं नरकं यातीत्येवमाहुर्मनीषिणः। न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा। न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय च। दशगोसहस्रदो हि शक्रेण सह मोदते। अक्षयान् लभते लोकान्नरः शतसहस्रदः॥" भा॰आनु॰ ६६ अ॰

गोदारण न॰ गां भूमिं दारयति दृ-णिच्-ल्यु। १कुद्दाले अमरः। २हले हेमच॰।

गोदावरी स्त्री गां स्वर्गं ददाति स्नानात् दा-वनिप् ङीप् रश्चान्तादेशः। स्वनामख्याते नदीभेदे सा च नदी दक्षिणस्यां दण्डकारण्यसमीपस्था यथाह "ततस्त्वं शरभङ्गं च दण्डकारण्यमाश्रितः। नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा" भा॰व॰२७६अ॰। "ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम्। गवामयमवाप्नोति वासुकेर्लोकमुत्तमम्" भा॰व॰८५अ॰। "गङ्गे! च यमुने! चैव गोदावरि! सरस्वति!। नर्म्मदे! सिन्धु! कावेरि! जलेऽस्मिन् सन्निधिं कुरु"। इति तीर्थावाहनमन्त्रः।

गोदुग्ध न॰ ६त॰। गोः क्षीरे। भावप्र॰ तद्गुणा उक्तास्ते वाक्यं गोरसशब्दे दर्शितम्। वर्णभेदेन गोदुग्धस्य गुणास्तत्रैव "कृष्णाया गोर्भवं दुग्धं वातहारि गुणाधिकम्। पीताया हरते पित्तं तथा वातहरं भवेत्। श्लेष्मलं गुरु शुक्लाया रक्तायाश्चापि वातहृत्। बालवत्सविवत्सानां गवां दुग्धं त्रिदोषकृत्। वष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत् पयः। जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम्। पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते। अल्पतृणभक्षणाज्जातं क्षीरं गुरु कफप्रदम्। तत्तु बल्यं परं हृद्यं स्वस्थानां गुणदायकम्। पलालतृणकार्पासबीजजं रोगिणो हितम्" राजनि॰तु "गवां सद्यूति क्षीरं गुरु विष्टम्भि दुर्जरम्। तस्मादभ्युदिते सूर्ये यामं यामार्द्धमेव वा। समुत्तार्य पयोऽपाद्यं तत्पथ्यं दीपनं लघु। विवत्सावालवत्सानां पयो दोषसमीरितम्। यत्तु वत्सैकवर्णाया धवलीकृष्णयोरपि दृष्टादा माषपर्णादा जरच्छृङ्गी च या भवेत्। तासां गवां हितं क्षीरं शृतं वाऽशृतमेव वा। गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम्। श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति कपिलापयः" राजनि॰।

गोदुग्धदा स्त्री गोदुग्धं ददाति सम्पादयति दा-क। चणिकाह्वये राजनि॰। तद्भोजनाद्गोदुग्धवृद्धेस्तस्यास्तथात्वम्।

गोदुह् त्रि॰ गां दोग्धि दुह-क्विप् ६त॰। १गोदोहके(दोयाल) "चिरं निदध्यौ दुहतः स गोदुहः" माघः। २गोपे च "चेतोऽन्यकं गुणवदगुणं गोदुहां देहमेतत्" उद्भट॰। दुह-क। गोदुहोऽप्यत्र पु॰।

गोदोह पु॰ भावे घञ्। ६त॰। "१गोदोहने।" "रुद्रायतने भूमौ गोदोहात् कोटिहोमात्" इ॰स्मृ॰ १६अ॰। कर्मणि घञ्। "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञ इति वाच्यम्" वार्त्ति॰ अस्यार्थः

मासमास्ते गोदोहमास्ते इत्यादौ सर्वस्याकर्मकधातूनां व्याप्तिगर्भितसार्थपरतायां तात्पर्यग्राहकमिदं वार्त्तिकं यथाह हरिः

"कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते। अतस्तैः कर्मभिर्युक्तो धातुर्व्यैरकर्मकः। यस्य कर्मणि भावे च निमित्तत्वाय कल्पते" इति। अस्यायं भावः मासमास्ते गोदोहमास्ते इत्यादौ धातोरेव सम्बन्धपूर्वकासनादौ आसनादिकरणक सम्बन्धे वा निरूढलक्षणायां ज्ञापकमेतद्वार्त्तिकम्। तत्र धातोराद्यार्थलक्षणायां प्रधानक्रियाया अकर्मकत्वात् दुहादिषु पाठाभावाच्च गौणकर्मणि लकारासम्भवेन भाव एव लकारस्तेन मासमास्यत इत्येव प्रयोगः। द्वितीयार्थलक्षणायान्तु प्रधानक्रियायाः सकर्मकतया मासादेस्तत्कर्मत्वेन मुख्यकर्मण्येव लकारस्तेन मास आस्यते गोदोह आस्यते इति प्रयोग इति विवेकः। अत्र सर्वेत्यभिधानात् तद्योगे न तेभ्यः प्रतीति द्योतितमिति मनोरमायां स्पष्टम्। २गोदुग्धे च "द्वौ गोदोहोद्भवं दतम्" अमरः। आधारे घञ्। ३गोदोहनकाले च तत्कालश्च मुहूर्त्ताष्टमभागात्मकः यथाह आ॰त॰ विष्णु पु॰ "ततो गोदोहमात्रं वै कालं तिष्ठेत् गृहाङ्गणे। अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया" गोदोहनकालश्च मुहूर्त्ताष्टमभागात्मकः "आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम्। मुहूर्त्तस्याष्टमं भागमुद्वीक्ष्यो ह्यतिथिर्भवेत्" मार्क॰ पु॰ एकवाक्यत्वात्" आ॰ त॰ रघु॰।

गोदोहन न॰ भावे ल्युट् ६त॰। १गोदोहने। आधारे ल्युट्। २गोदोहनकाले। "न ह्यस्यतेऽद्यावस्थानमपि गोदोहनं क्वचित्" भाग॰१।१९।३९। आधारे ल्युट् ङीप्। गोदोहनी गोदोहनाधारपात्रे गर्ग्याम् स्त्री जटाधरः।

गोद्रव पु॰ द्रवति द्रु—अच् ६त॰। गोमूत्रे राजनि॰।

गोधन न॰ गवां धनं समूहः। १गोसमूहे गौरेव धनमस्य। २गोरूपधनवति त्रि॰। गौरेव धनम्। ३गोरूपे धने न॰। "अद्यैव किं चिरेण वा व्रजामः सह गोधनैः" हरिवं॰ ६६अ॰ "गोधनेषु प्रतोलीषु वरद्वारमुखेषु च। अलंस्कारदोषेषु ध्वजलताक्त शोभनाः" भा॰वि॰४७अ॰ धन—रवे भावे अप् गोर्धनम् रव इव रवोऽस्य। ४स्थूलाग्रवाणे पु॰ शब्दक॰ हरिव॰ मूलं हग्यम्।

गोधर पु॰ गां पृथिवीं विष्टम्भकतया धरति धर—अच्। महीधरे पर्वते शब्दार्थचि॰

गोधर्म्म पु॰ गोरिव धर्मः। मैथुनेऽविचाररूपे गोसदृशे धर्मे "गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः (दीर्घतमाः) भा॰आ॰१०४अ॰ उतथ्यशब्दे १०७५पृ॰ दृश्यम्।

गोधा कौटिल्ये कण्ड्वादेराकृतिगणः नामधातुः पर॰ सक॰ सेट्। गोधायति अगोधायीत्।

गोधा स्त्री गुध्यते वेष्ट्यते ज्याघातनया करणे घञ्। धनुर्ज्यावातवारणाय प्रकोष्ठे १बध्यमाने चर्मणि। "बद्धगोधाङ्गुलित्रवान्" भा॰ द॰ १७अ॰ "गोधाङ्गितभुजा यादैरभूद्भौमा रणाटवी" माघः। "ततघटघटाशब्दो गोधाघातादभूत्तयोः" भा॰ द्रो॰ १२९अ॰। कर्त्तरि अच्। (गोसाप) इति ख्याते २सर्पभेदे स्त्री अमरः "श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वेतानमुष्ट्रांश्चैकतोदतः" मनुना तन्मांसं पञ्चनखेषु भक्ष्यतयाऽभिहितम्। तन्मांसपाकगुणादि भावप्र॰उक्तं यथा "गोधास्त्रोष्याजलैर्भूयः क्षालितां कज्जलाञ्चलात्। स्विन्नां च तक्रतोयाभ्यां क्षालितां खण्डखण्डिताम्। तत्र वेद् वेशवाराद्यैः भर्जितो वा विधानतः। विपाके मधुरा गोधा वातपित्तप्रणाशिनी। कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धिनी।" सा तु स्थलजलभेदाद्द्विधा। स्वार्थे क। अत्रैवार्थे। गोधायाः अपत्यम् वा ढ्रक्। गौधेर पक्षे शुभ्रा॰ ढक्। गौधेय उदीचा॰ मते आरक्। गौधार तदपत्ये पुंस्त्री ढकि स्त्रीत्वे ङीप् इति भेदः।

गोधापदी स्त्री गोधाया इव पादो मूलमस्याः आकृतत्वात् जातित्वाद्वा कुम्भपद्या॰ ङीपि पद्भावः। (गोयालिया) लताभेदे। स्वार्थे क। अत्रैवार्थे रत्नमाला।

गोधायस् त्रि॰ गां दधाति धा—बा॰ असुन् ६त॰। गोधारके "गोधायसं वि धनसैरदर्दः" ऋ॰१०।६८।७।

गोधावीणाका स्त्री गोधायाश्चर्मणा नद्धा वीणा स्वार्थे वा कन्। गोधाचर्मनद्धवीणायाम्। "गोधावीणाका काण्डवीणाश्च पत्न्यो वादयन्त्युपगायन्ति" कात्या॰श्रौ॰ १३।३।१९

गोधास्कन्ध पु॰ गोधेव स्कन्धोऽस्य। विट्खदिरे। राजनि॰

गोधि पु॰ गौर्नेत्रं धीयते यस्मिन् आधारे इन्। १ललाटे अमरः गुध—इन्। २गोधायां सर्पभेदे शब्दचि॰ गोधिस्वार्थे क, गोधेव क अत इत्त्वं वा। गोधिका (गोसाप) गोधायाम् अमरः।

गोधिकापुत्र पु॰६त॰। १गोधायावके सर्पात् गोधायामुत्पन्ने (सोना गोसाप) इति ख्याते २सर्पभेदे पुंस्त्री शब्दार्थचि॰।

**गोधिनी** स्त्री गुध–णिनि । वृहतीभेदे राजनि०।

**गोधुम** पु० गुध–बा० उम । गोधूमे शब्दच० ।

**गोधूम** त्रि० गुध–ऊम। १नागरङ्गे २व्रीहिभेदे च (गोधुम) च मेदिनिः तद्भेदादि भावप्र०उक्तं यथा "गोधूमः सुमनोऽपि स्यात् त्रिविधः स च कीर्त्तितः। महागोधूम इत्याख्यः पश्चाद्देशात् समागतः। मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा। निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः। गोधूमो मधुरः शीतो वातपित्तहरो गुरुः। कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः। जीवनो बृंहणो वर्ण्यो व्रण्यो रुच्यः स्थिरत्वकृत्। कफप्रदः नवीनो न च पुराणः पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति" वाग्भटेन पथ्ये उक्तोत्वात् । मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः। शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखी स्मृता" तस्य कृताद्यशब्दे २१८१पृ० पाकविशेषो दृश्यः।

**गोधूमक** पुंस्त्री गोधूम इव कं शिरोऽस्य। राजिमत् सर्पभेदे अहिशब्दे ५८१ पृ० सुश्रुतवाक्यं दृश्यम् ।

**गोधूमचूर्ण** ६त०। (मयदा) इति ख्याते पदार्थे "शुष्कगोधूमचूर्णेन किञ्चित् पुष्टां तु रोटिकाम्" भावप्र०। तत्रान्नशब्दे दृश्यम् ।

**गोधूमसम्भव** न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् गोधूमः सम्भवोऽस्य । सौवीरे काञ्जिकभेदे राजनि०।

**गोधूमसार** पु०६त०। (गोहमेरपालो) इति ख्याते गोधूमस्य सारांशे तत्करणप्रकारः पाकराजेश्वरे "निस्तुषान् गोधूमानुदूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मग्नं कृत्वा परदिने प्रभातसमये उपरिस्थं जलं क्रमेण दूरीकृत्याऽधःस्थं सारमातपे शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति" । [गोजोभिकायां राजनि०।

**गोधूमी** स्त्री गां धूमयति धूम+णिच्–अण् गौरा० ङीष् ।

**गोधूलि** स्त्री गवां खुरोत्थितो धूलिरत्र काले। गवां प्रचारदेशात् गृहागमनकाले गोखुरोद्धूतधूलियुक्ते समयभेदे सन्ध्याकाले यथा "सन्ध्यातपारुणितपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकरश्मिवेशे। यद्गवां खुरपुटोद्धुगलितैरजोभिर्धूलिरेव कथितो मधुलेन योगः" पी० धा० धृतवाक्योक्तः ज्योतिषशब्दे १२७५।७६पृ० अस्य विहितत्वं यथा "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः। जपां गोधूलियोगं वा स्वीकृत्य गमनं चरेत्। प्राच्यामूर्ध्वं प्रतीच्यां गोधूलिं वर्जयेत् बुधः। दक्षिणे चाभिजिन्नैऋते च निशा तथा"। ज्यो० त० पराहः गोरजस्य शब्दोऽस्यत्र ज्योतिषशब्दे २५७५।७६पृ० उदा०

**गोधेनु** स्त्री गोर्धेनुः जात्या समासे परनिपातः। दुग्धवत्यां सवत्सायां गवि

**गोधेर** त्रि० गुध–एरच्। गोधूरि कष्टादित्रोषः

**गोध्र** पु० गां भूमिं धरति धृ–मूलवि० क। महीधरे पर्वते

**गोनन्दी** स्त्री गवि जले नन्दति नन्द–अच् गौरा०ङीष् । १सारसपक्षिणि हारा० स्त्रीन्दस २गणभेदे पु० "प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान्" भा०शल्य०४६अ०

**गोनर्द** पु० गवि जले नर्दति नर्द–अच्। १सारसपक्षे मेदि० गवा जलेन नर्दति । २कैवर्तीमुस्तके न० मेदि०। गवा वाचा नर्दते अच्। ३देशभेदे पु० स च कूर्मविभागे वृ०स० १४ अ०दक्षिणस्यामुक्तः "अथ दक्षिणेन लङ्का" इत्युपक्रमे "दशपुरगोनर्दकेरलाः"। सोऽभिजनोऽस्य अण्। गौनर्द तद्देशवासिनि बहुषु अणो लुक्। तद्देशवासिषु ब० व०। गोनर्दभीष्मपुत्रान् वैदेहानयः स्पृशति" वृ०स० ८अ०।

"तद्राजेऽपि अण्। गौनर्द तद्राजे "काश्मीरराजो गोनर्दादिराधिपतिर्नृपः" काश्मीर राजो गोनर्दः कल्याधिपतिस्तथा" हरि०८१अ० बहुषु तस्य लुक्। गवि इवे नर्दते नर्द–अच्। ४महादेवे पु० "गोनर्दो गोप्रभायश्च गोवृषेश्वरवाहनः" भा०शा०२८६अ०। दक्षकृत शिवस्तुतौ। गोनर्दे देशे भवः "एङ् प्राचां देशे" पा० वृद्धसंज्ञत्वात् छः। गोनर्दीय तद्देशभवे त्रि०प्राचोऽन्यमते अण्। गौनर्द तत्रार्थे त्रि० ।

**गोनर्दीय** पु० गोनर्दे देशे भवः एङादित्वेन वृद्धसंज्ञत्वात् छ। पतञ्जलिमुनौ हेमच०। तस्य गोनर्ददेशोद्भवकथा वृहत् कथायां दृष्टा सरस्वोपोद्घातेऽपाभि दिङ्मात्रमुक्ता ।

**गोन(ना)स** पुं०स्त्री०गोरिव नासा यस्य वा नसादेशः। महाहिसर्पभेदे (गोखुराचाप) अमरः स्त्रियां जातित्वात् ङीष्। दीर्घमध्य इति हेमचन्द्रः। अहिशब्दे ५१८पृ०सुश्रुतवाक्यं दृश्यम्। गोनसस्तदाकारोऽस्त्यस्या अच् गौरा० ङीष्। २ओषधिभेदे स्त्री। सुश्रुते गण्डूपादि तत्र १५६१ पृ० उक्तम्। दीर्घमध्यञ्च ३वैक्रान्तमणौ हेमच०। [मिनि च ।

**गोनाथ** पु० ६त०। १वृषे राजनि०। २भूमिनाथे ३गोस्वा-

**गोनाय** पुं० गां नयति नी–अण्। १गोपे शब्दार्थचि०। "तद्यथा गोनायोऽश्वनायः पुरुषनायः" इति छा०उप०। "गोनायः गोपालकः" भा०।

**गोनिष्यन्द** पु० गोभिर्निस्यन्दते निस्यन्द—घञ् ५त०। गोमूत्रे राजनि०। तस्य गोतोनिष्यन्दमानत्वात्तथात्वम्।

**गोप** पु०स्त्री गां भूमिं वा पाति रक्षति पा—क। (गोयाला) १जातिभेदे स्त्रियां ङीष्। "आभीरांश्चाकुलिकांश्च गोपान्" मनुः। "क्षत्रियकन्यायां शूद्रात् गोपजातेश्च सम्भवः" पराशरः "वसुदेवो गोपनापितौ" इत्युक्तेः तस्य शूद्रत्वम् २ग्रामाधिकृते ३भूरक्षके, च पु०। ४गोष्ठाध्यक्षे च मेदि०। गोरक्षकमात्रे च। "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः" मनुः। "नन्दगोपकुले जाता यशोदा गर्भसम्भवा" देवी भा०। "गोपवधूटी दुकूलचौराय" भाषा० "तद्वनं तापसाकीर्णं गोपाश्च वनचारिणः" भा० व० १२ अ०।
गोपयति गुप—अच्। ६रक्षके। "सर्वे देवाभुवनस्यास्य गोपाः" भा०आनु० १० अ०। कर्मणि चिकर्म्म उपपदे गुप—अण्। भूगोपादि तत्तद्वस्तु पालके। "दिव्यास्त्रविज्ञाततेजाः कर्णो वैकर्त्तनो वृषः। सेनागोपश्च कथम्" भा० कर्ण० ८ अ०। "पृष्ठगोपे वृकोदरे" भा० आ० २०१अ०। स्त्रियां अजन्तत्वात् टाप्। गन्धर्वो० गौरा०ङीष् पा०। "शासि गोप्योजगुर्यशः" रघुः। ७ उपकारके त्रि० शब्दर०। गां जलं पिबति पा-क। ८ बोले शब्दार्थचि०।

**गोपक** त्रि०गोप वा स्वार्थे क गुप—ण्वुल्। १गोपे २बहुग्रामाध्यक्षे। ३रक्षके टाप् स्त्रियां ङीष्। ततः शिवा० अपत्ये अण्। गौपक गोपिकापत्ये पु०स्त्री।

**गोपकन्या** स्त्री गोपस्य कन्येव प्रियतया। १शारिवौषधौ राजनि०। ६त०। गोपजातिकन्यायां च "वल्लवीर्गोपकन्याश्च रात्रौ संकाल्य कालवित्" नाम दामोदरेत्येवं गोपकन्यास्तदाऽब्रुवन्" हरिव०७७ अ०

**गोपकर्कटिका** स्त्री गोपप्रिया कर्कटिका शाक० त०। (राखालशसा) ख्याते द्रव्ये राजनि०।

**गोपघोण्टा** स्त्री० गोपप्रिया घोण्टा शा० त०। "वदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्। घटव्यामेव वा घोण्टा गोपघोण्टेति कीर्त्तिता" शब्दर० उक्ते १वृक्षे। २हस्तिकोषी, रत्नमा०।३विकङ्कतवृक्षे (वैंची) राजनि०।

**गोपति** पु० ६त०। गवां पशूनां पत्यौ १शिवे, २वृषे, (षांड) "रक्षसां वधमापन्नं सिंहानामिव गोपतिम्" रामा०। भूमिपतौ ३नृपे ४श्रीकृष्णे, किरणपतौ ५सूर्ये, ६स्वर्गपतौ शक्रे, मेदिनिः। ७ऋषभनामौषधौ राजनि०। "गोपाधिर्गोपतिर्गोप्ता गोचर्म्मवसनो हरः" भा०आनु० १७अ०शिवसहस्रनामोक्तौ। "उत्तरो गोपतिर्गोप्ता" विष्णुस० "गवां पालनात् गोपवेशधारणात् गोभिर्हीनत्वात् पालनाद्वा गोपतिः" भा०"सिंहेन निहतं गोष्ठे गौः यथवृषभ गोपतिम्" कि०४।२२। गोस्वामिनि च हारा०। "शुचा पथिन् गोपतौ स्यात् बह्वीः" मनु०८।११ "गोपतौ गवां गव्यावधिन् यजमाने" वेददी०। सूर्यस्य किरणपतित्वात् तथात्वम् "मार्त्तण्डो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान्" आदित्यहृदयम् "तपसाराध्य वरदं देवं गोपतिमीश्वरम्" भा० आ० १७१ अ० सूर्यकन्यातपतीविवाहोक्तौ" ८असुरभेदे "गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना" हरिव० १६१ अ०।
तस्य भावः त्व—गोपतित्व पत्यन्तत्वात् यक्। गौपत्य गोपतिभावे न० "येनांशेन हृता गावः कश्यपेन महात्मना। स तेनांशेन जगतीं गत्वा गोपत्वमेष्यति" हरिव० ५६ अ०।

**गोपथ** पु० अथर्ववेदीयब्राह्मणभेदे।

**गोप(ष्प)पद** न० गोः पदं पदस्थानयोग्यस्थानम्। "गोष्पदं सेवितासेवितप्रमाणेषु" पा० उक्तार्थे सुट्त्वे। गवामसेविते वनादौ। १गोसेविते गोगतिगोचरे स्थाने २गोपदजातप्रमाणे क्षेत्रे न० तद्भिन्नार्थे न सुट्। ४गोचरणे।

**गोपदल** पु० गोपदं गोचरणन्यासयोग्यं स्थानं तदाकारं वा लाति ला—क। गुवाकवृक्षे तस्य गोचरणन्यासयोग्यस्थानस्थत्वात् तदाकार मूलकाण्डत्वाद्वा तथात्वम्।

**गोपन** न० गुप—गोपने रक्षणे भावे ल्युट्। १अपह्नवे ज्ञातस्य कर्म्मणोऽप्रकाशने २रक्षणे च "सैन्येन महता गुप्तं भरद्वाजस्य गोपने" भा० भी० ५२अ०। "शान्त्या महाधारणे गोपने च" भा० आनु० २६ अ०। चु०गुप—दीप्तौ भावे ल्युट्। ३दीप्तौ। गुप—ईर्ष्याकुत्सनयोः भावे ल्युट्। ४ईर्ष्यायाम् ५आकुलत्वे च। चु०गुप दीप्तौ भावे युच् गोपना ६दीप्तौ स्त्री।

**गोपनीय** त्रि० गुप—गोपने रक्षणे वा कर्मणि अनीयर्। १अप्रकाश्ये २रक्षणीये च। "गोपनीयमिदं दुःखमिति मे निश्चितो मतिः" भा० शान्ति० १८६ अ०। "गोपनीयं प्रयत्नेन न वाच्यं यस्य कस्यचित्" तन्त्रसा०

**गोपव(व)धू** स्त्री ६त० गोपस्य वधूरिव प्रियत्वात्।

१भारिवोषधौ भाव०प्र० २गोपजातिस्त्रियां "गोपवधूटी दुकूलचौराय" भाषा०। "प्रतिमगमन् त्रिय यस्य गोपवध्वः" भाग०१।८।१८। अत्र मुकुटः वधूशब्दस्य वध्वादित्वमाह च बध्नात्यविद्ययेति बन्धधातोरूप्रत्ययेन निष्पन्नत्वादिति। वस्तुतः अप्रत्ययस्याकित्त्वात्लोपाभावप्रसङ्गः। किन्तु "कड्डोधय" उणा० अप्रत्यये धकारान्तादेशेन निष्पत्तेन अन्तःस्थशादित्वमेव न्यायः।

**गोपभद्र** न० गोपे भद्रमिव। १शालूके शब्दर० गोपे भद्रा। २काश्मीरीवृक्षे स्त्री राजनि०। संज्ञायां कन्। २गम्भारीवृक्षे रक्तभावा शालूकादीनां गोपप्रियत्वात् तथात्वम्।

**गोपरस** पु० गां जलं पिबति पा—क गोपः रसोऽस्य। गोले शब्दरत्ना०।

**गोपराष्ट्र** पु० ब०व०गोपप्रधानाः राष्ट्राः शा०त०। भारतवर्षस्थे आभीरप्रधाने जनपदभेदे। "अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम" इत्युपक्रमे "अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः" भा० भी० ९अ०।

**गोपरिचर्य्या** स्त्री ६त०। गोसेवायां तत् प्रकारो हेमा०दा० खण्डवाक्यादौ ब्रह्मपुराणे

"वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः। तथा। "गवाङ्गोष्ठे स्थितानान्तु यः करोति प्रदक्षिणम्। प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम्।" विष्णुः "गावः पवित्रा माङ्गल्या गवि लोकाः प्रतिष्ठिताः। गावो वितन्वते यज्ञान् गावः सर्वाघसूदनाः। गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना। षडङ्गमेतत्परमं माङ्गल्यं सर्वदा गवाम्। शृङ्गोदकं गवां पुण्यं सर्वाघविनिसूदनम्। गवां कण्डूयनञ्चैव सर्वकल्मषनाशनम्। गवां ग्रासप्रदानेन स्वर्गलोके महीयते।" पद्मपुराणे "यदा गावः प्रचर्य्यास्तु मन्त्रेणानेन पार्थिव!। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च भूयो भूयो नमो नमः। मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात्"। आदित्यपुराणे "लवणं च यथाशक्त्या गवां ये वै ददन्तु तु। तेषां पुण्यकृतां लोका, गवां लोकं व्रजन्ति ते। गोऽर्घ्यं भक्त्या विशिष्टमाह्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी। शान्तो वृद्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयात्सर्वशीलः"। देवीपुराणे "गोपालको गवां गोष्ठे यस्तु धूमं न कारयेत्। मक्षिकादंशमशकैर्मक्षिकाभिः स भक्ष्यते। वत्सस्वकाले गां यस्तु दुग्ध्वा पिबते नरः। नाहि-

ताऽग्नाविरं तिष्ठेत् क्षुधार्त्तो वै नराधमः"। महाभारते "गोकुलस्य तृषार्त्तस्य जलान्ते वसुधाधिप!। उत्पाद्यति यो विघ्नं तमाहुर्ब्रह्मघातकम्। कृत्वा गवार्थे शरणं शीत-वात-सहं महत्। आसप्तमन्तारयति कुलं भरतसत्तम!"। ब्रह्मपुराणे "स्वदेशे गौर्गृहे जाता परिपाल्या सदा स्वयम्। दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः। अनाथानां गवां यत्नात्कार्यस्तु शिशिरे मठः। पुण्यार्थं यत्र दीयन्ते तृण-तोये-स्थनानि च"। हारीतः "द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत्। चतुर्थे त्रिस्तनञ्चैव यथान्यायं यथा बलम्"। ब्रह्मपुराणे "आषाढ्यामाश्वयुज्यां च पौष्यां माघ्यां च सर्वदा। न दुह्यीयाद्गवां क्षीरं सर्वं वत्साय निःक्षिपेत्। न पदाभ्यां स्पृशेच्चैव न गां भारेण पीडयेत्। युगादिषु युगान्तेषु षडशीतिमुखेषु च। दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः। संक्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः। पञ्चदश्यां चतुर्दश्यां द्वादश्यामष्टमीषु च। उपचारो गवां कार्यो मासि मासि यथाक्रमम्। लवणस्य तु चत्वारि पलान्यष्टौ घृतस्य च। परकीयस्य दुग्धस्य तथा देयानि षोडश। द्वात्रिंशत् शीतलस्यापि जलस्य च पलानि च। आदौ विचार्य पयसः परिमाणं ततं दधि। आकस्मिकन्तु दातव्यं पुण्यार्थन्तु गवाह्निकम्। प्रभाते लवणं यत्र दीयते च ततो जलम्। ततश्चापि भोक्तव्यं गोरसं मांसवर्जितम्। निशि दीपः सतन्दीयो दिवा पौराणिकी कथा। एवं कृते मही पूर्णा रत्नैर्दत्ता भवेत् फलम्। गोप्रदानात्तु यत्पुण्यं गवां संरक्षणाद्भवेत्। मनुष्यैस्तृणतोयाद्यैर्गावः पाल्याः प्रयत्नतः। देयाः पूज्याश्च पोष्याश्च प्रतिपाल्याश्च सर्वदा"। तथा "तृणोदकाढ्येषु वनेषु मत्ताः क्रीडन्तु गावः सवृषाः सवत्साः। क्षीरं प्रयच्छन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्विमुक्ताः। इमं मन्त्रं स पुण्यात्मा जपेन्नित्यं समाहितः। गच्छन् तिष्ठन् स्वपन् जिघ्रन् भुञ्जन् क्रीडन् समुत्सृजन्। महाभयेषु सर्वेषु समेषु विषमेषु च। प्रयाणकाले च तथा श्रोतव्यमभयप्रदम्"। तथा "ग्रासग्रासादिकं देयं निशि दीपः शुभास्वरः। इतिहासपुराणानां व्याख्यानं सोपवीणकम्। कर्त्तव्यं श्रद्धया भक्त्या परिचर्या यथाक्रमम्। ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदाचन। तासां मूत्रपुरीषे तु नोद्वेगः

क्रियते क्वचित् । शोधनीयश्च गोवाटः शुष्कचारादिभिः सदा । ग्रीष्मे प्रवातकं वेश्म शीते तत्र विकर्दमम् । वर्षासु चाथ शिशिरे सुखोष्णं वातवर्जितम् । उच्छिष्टं मूत्रविट्श्लेष्मकं अशौचं तत्र च । रजस्वला न प्रवेश्या नान्त्यजातिर्न पुंश्चली । न कण्डूयेत्तत्तरीं न क्रीडेद्गोष्ठसन्निधौ । न गन्तव्यं गवां मध्ये सोपानत्कः सपादुकैः । हस्त्यश्वरथयानैश्च सवितानैः कदाचन । दण्डिचोत्तरगैः प्रह्वैर्गन्तव्यञ्च पदातिभिः । गावः कृशातुराः पाल्याः श्रद्धया पितृमातृवत् । गिरिप्रपातसिंहर्क्षशीतातपभयातुराः । महाकोलाहले घोरे दुर्दिने देशविप्लवे । गवां तृणानि देयानि शीतलं च तथा जलम्" । विष्णुधर्मोत्तरे "पुष्कर उवाच गवां हि पालनं राज्ञा कर्त्तव्यं भृगुनन्दन ! । गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः । गावो वितन्वते यज्ञं गावो विश्वस्य मातरः । शकृन्मूत्रं परं तासामलक्ष्मीनाशनं परम् । तद्धि मेध्यं प्रयत्नेन तत्र लक्ष्मीः प्रतिष्ठिता । उद्वेगश्च न गन्तव्यः शकृन्मूत्रे विजानता । गवां मूत्रपुरीषे तु जीवनाद्यं न संत्यजेत् । गोरजः परमं पुण्यमलक्ष्मीविघ्ननाशनम् । गवां कण्डूयनञ्चैव सर्वकल्मषनाशनम् । गवां शृङ्गोदकं राम ! जाह्नवीजलसन्निभम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । पवित्रं परमं ज्ञेयं स्नाने पाने च भार्गव ! । रक्षोघ्नमेतन्माङ्गल्यं कलिदुःस्वप्ननाशनम् । रोचना च तथा धन्या रक्षोगदगरापहा । यस्तु कल्यं समुत्थाय घृतमाज्यं निरीक्षते । तस्याऽलक्ष्मीः क्षयं याति वर्द्धते न च किल्बिषम् । गवां ग्रासप्रदानेन पुण्यं सुमहदश्नुते । यावतीः शक्नुयाद्गास्तु सम्यग्धारयितुं गृहे । धारयेत्तावतीर्नित्यं क्षुधार्त्ता न धारयेत् । दुःखिता धेनवो यत्र वसन्ति द्विजमन्दिरे । नरकं समवाप्नोति नात्र कार्या विचारणा । दत्त्वा परगवे ग्रासं पुण्यं सुमहदश्नुते । शिशिरं सकलं कालं ग्रासं परगवे तथा । दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट् । अग्रभक्तं नरो दत्त्वा नित्यमेव तथा गवाम् । समाष्टेन वसते नाकलोकं समाश्रुतम् । सायं प्रातर्मनुष्याणामशनं वेदनिर्मितम् । तथैकमशनं दत्त्वा गवां नित्यमतन्द्रितः । द्वितीयं यः समश्नाति तेन संवत्सरान्नरः । गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विज ! । शीतत्राणं गवां कृत्वा गृहे पुण्यमवाप्नुयात् । गवां प्रपायै पानीयं कृत्वा पुण्यमवाप्नुयात् । वारुणं लोकमाप्नोति क्रीडत्यप्सरसां गणैः । गवां मानमकुर्वाणं यस्तु विघ्नं समाचरेत् । ब्रह्महत्या कृता तेन घोरा भवति भार्गव ! । परां तृप्तिं समाप्नोति यत्र तत्राभिजायते । गवां प्रचारभूमिन्तु वाहयित्वा हलादिना । नरकं महदाप्नोति यावदिन्द्राश्चतुर्दश । सिंहव्याघ्रभयत्रस्तां पङ्कमग्नां जले गताम् । गामुद्धृत्य नरः स्वर्गे कल्पमेकमुपाश्नुते । गवां लवणदानेन रूपवानभिजायते । सौभाग्यं महदाप्नोति लावण्यञ्च द्विजोत्तम ! । औषधञ्च तथा दत्त्वा विरोगस्त्वभिजायते । औषधं लवणं तोयमाहारञ्च प्रयच्छति । तासाञ्चैवकशानाहरन्तीनां निशो वने । व्याघ्रस्तु हतो कन्यान पालकस्य किल्बिषी । गोवधेन नरो याति नरकानेकविंशतिम् । तस्मात्सर्वप्रयत्नेन कार्यं तासान्तु पालनम् । विक्रयाच्च गवां राम ! नरकं प्रतिपद्यते । तासान्तु कीर्त्तनादेव नरः पापात् प्रमुच्यते । तासां संस्पर्शनं धन्यं सर्वकल्मषनाशनम् । दानेन च तथा तासां दुःस्वप्नमपि सन्तरेत् । उदक्याकृतिकादोषो नैव तत्र गृहे भवेत् । भूमिदोषश्च तत्रान्योऽपि यत्रैका वसते च गौः । गवां निःश्वासवातेन परा शान्तिर्गृहे भवेत् । नीराजनं तत्परमं सर्वस्थानेषु कीर्त्यते । गवां संसर्गनाद्राम ! कल्मषं क्षीयते नृणाम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च श्वपाकमपि शोधयेत् । पृथक् च प्रत्यहाभ्यस्तमिति सान्तपनं स्मृतम् । सर्वकामप्रदं राम ! सर्वाशुभविनाशनम् । कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् । निर्मलास्तेन चीर्णेन भवन्ति पुरुषोत्तमाः । त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् । तप्तकृच्छ्रमिदं प्रोक्तं सर्वाशुभविनाशनम् । शीतकृच्छ्रं तथैवेह ब्रह्मख्यातैः प्रकीर्त्तितः । सर्वाशुभविनाशाय निर्मितो ब्रह्मणा स्वयम् । गोमूत्रेणाचरेत् स्नानं वृत्तिं कुर्य्याच्च गोरसैः । व्रजितासु व्रजेत् गच्छेदुपविष्टासु च स्थितः । अभुक्तवत्सु नाश्नीयादपीतासु च नो पिबेत् । ताश्चैवात्मना कार्यं यथाशक्ति समाचरेत् । त्राणमपि सन्त्यज्य गोव्रतं तत् प्रकीर्त्तितम् । सर्वपापप्रशमनं मासेनैकेन भार्गव ! । व्रतमानेन पूर्वेण गोलोकं सम्प्रव्रजेत् । अभीष्टमथवा राम ! यावदिन्द्राश्चतुर्दश । यथा

चाहारनिर्ह्रानमन्वम् प्रतिदिनं जपात् । चाप्नोति तत्-चाप्नोति यत्किञ्चिन्मनसेच्छति । गोमतीञ्च तथा विद्यां सायं प्रातस्तथा जपेत् । गोलोकमाप्नोति नरो नात्र कार्या विचारणा । उपर्युपरि सर्वेषां गवां लोकः प्रकीर्त्तितः । निवसन्ति सदा यत्र गावस्ताकामगा दिवि । विमानेषु विचित्रेषु हतेष्वप्सरसाङ्गणैः । किङ्किणीजालचित्रेषु वीणासु रचनादिषु । सदा कामफला नद्यः क्षीरपायसकर्दमाः । शीतलामलपानीयाः सुवर्णसिकतास्तथा । पुष्करिण्यः शुभास्तत्र वैदूर्यकमलोत्पलाः । मानसी च तथा सिद्धिस्तत्र लोके भृगूत्तम ! । तन्तु लोकं नरा यान्ति गवां भक्त्या न संशयः । गोमतीं कीर्त्तयिष्यामि सर्वपापप्रणाशिनीम् । तान्तु मे वदतो विप्र ! शृणुष्व सुसमाहितः । गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम् । अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वदेवानां रक्षन्ति च वहन्ति च । हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि । ऋषीणामग्निहोत्रेषु गावो होमनियोजिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति । देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत् । धार्य्यते वै सदा तस्मात् सर्वे पूज्यतमा मताः । यत्र तीर्थे सदा गावः पिबन्ति तृषिता जलम् । उत्तरन्त्यथ वा येन, स्थिता तत्र सरस्वती । गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथासां रजसि प्रवृद्धा । लक्ष्मीः करीषे प्रणतौ च धर्मस्तासां प्रणामं सततञ्च कुर्य्यात्" । भविष्यत्पुराणे "ब्रह्मोवाच गामालभ्य नमस्कृत्य कुर्य्याच्चैव प्रदक्षिणम् । प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा । गवां हुङ्कारशब्देन दृष्टिपातेन सत्तम ! । पापं प्रणश्यते यस्मात्तस्मात्ताः शृणु ताः । कृतस्तस्य भवेत्पापं स्पृष्टं यस्य विभूषितम् । सततं पावनतृणाभिरङ्गुलीभिरलङ्कृतम् । यावन्तीर्षीणि मेदिन्यामासन्तरं सरांसि च । गवां शृङ्गोदकस्नानकलां नार्हन्ति षोडशीम् । गवामस्थि न लङ्घेत मतो मन्त्रं न वर्जयेत् । गावदाप्नोति तत्फलं तावत् पुण्येन युज्यते । गवां कण्डूयनं भक्त्या गोप्रदानफलप्रदम् । शस्यं गोग्रासदानस्य भयरोगादिपालनम् । तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम् । कपिलागतदानस्य फलं विद्यान्न संशयः । पञ्चभूते ! शिवे ! पुण्ये ! पवित्रे ! सर्वसम्भवे ! । प्रतीच्छेदं मया दत्तं सौरभेयि ! नमोऽस्तु ते । बहुना च किमुक्तेन गावः पाल्याः प्रयत्नतः । गावो देवास्तथा रक्ष्याः पूज्या धार्य्याश्च धर्मतः । गां वै ये ताडयन्तीह सर्वलोकस्य मातरम् । ते यान्ति रौरवं नाम नरकं नात्र संशयः । ताडयेद्यस्तु वै मोहात् यो वा क्षविक्षराधमः । स गच्छेन्नरकं घोरं यावदिन्द्राश्चतुर्दश ! । यावत्तीति कृतावनिः । घातयन्तीं कृत्तजाया यः सौरभेयीं विमोचयेत् । मम मातरिति ब्रूयात् स याति परमं पदम्" । वराहपुराणे "ब्रह्मोवाच गावः पवित्रं मङ्गल्या देवानामपि देवता । यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते । यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति । शङ्खेनोद्धृतं तोयं मूर्ध्नि गृह्णाति यो नरः । सरसश्च स पापेभ्यः प्रमुच्यते । प्रसवे यो गवां स्नायात् रोहिण्यां मानवो भुवि । सर्वपापकृतान् दोषान् दहत्याशु न संशयः । येनोत्तमाङ्गनिष्क्रान्तां धारां क्षीरस्य यो नरः । शिरसा प्रतिगृह्णीयात् स पापेभ्यः प्रमुच्यते" । आह्निकं तत्त्वे २२०१।२ पृ० दर्शिते हेमाद्रि-पराशरवाक्ये द्रष्टव्यम् ।

**गोपवन** न० गोपप्रधानं वनं शाक०त० । गोपभूयिष्ठे वने तत्र भवः विदा० अञ् । गौपवन तत्र भवे त्रि० "तक्षक्षेमक्षायेयमवालेयमकाद्रवेयमगौर्भ्येयमवामरथ्यमगौपवनम्" कात्या० १०।२।२१ योऽभिजनोऽस्य विदा० अञ् । गौपवन पित्रादिक्रमेण तत्र वासिजने तस्य गोत्रापत्यम् अनृष्यानन्तर्ये" विदा० अञ् । तद्गोत्रापत्ये बहुषु तस्य लुक् । गोपवनाः गोपवनस्यपुरुषापत्येषु ।

**गोपवनादि** बहुत्वे गोत्रप्रत्ययस्य लुग्निमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा ।

गोपवन शिग्रु बिन्दु भाजन अश्वावतान श्यामाक श्यापर्ण विदाद्यन्तर्गणोऽयम् । गोपवन शिग्रु बिन्दु भोगक भाजन शमिक अश्वावतान श्यामाक श्यामक श्यावलि श्यापर्ण हरितादिश्च ।

हरित किन्दास वह्यस्क अर्कलूष वध्योग विष्णु वृद्ध प्रतिबोध रथीतर रथन्तर । गविष्ठिर निषाद शबर

खलति मठर मृडाकु कुपाकु लड्डु पुनर्भू पुत्र दुहितृ ननान्दृ परस्त्री परशु च"।

**गोपवल्ली** स्त्री गां पाति पा—क कर्म०। १मूर्वालतायां राजनि०। २शारिवालतायां (श्यामालता)। शब्दर०।

**गोपस्** त्रि० गुप—असुन् आर्द्धधातुकत्वाद्वाऽऽयाभावः। १गोप्तरि २रक्षितरि। "स जगार भुवनस्य गोपाः अर्थेयं माभिपश्यन्ति" छा०उ० 'गोपाः रक्षिता' भाष्यम्। अस्य गोपायशब्दोदाहरणतया कस्यचिदुक्तिः प्रामादिकी। गोपूर्वकक्विबन्तपाधातुसिद्धगोपाशब्दस्य गोपालनकर्त्तृत्वेन तत्र भुवनस्येतिकर्म्मयोगान्वयापत्तेः आयपक्षे गोपायस् गोप्तरि त्रि०।

**गोपा** स्त्री गां पाति पा—क टाप्। १श्यामालतायाम् शब्दरत्ना०। गां पाति पा—क्विप्। २गोरक्षके च। "गोपा विश्वपावत्" ऋक्०

**गोपाध्यक्ष** पु० ६त०। गोरक्षकपतौ "गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः" भा० वि० ३५ अ०।

**गोपानसी** स्त्री० गवां किरणानां पानं शोषणं गोपानं तत् स्यति सो—क गौरा० ङीष्। कुड्येषु छादनार्थं बद्धे १वक्रकाष्ठे (मुदनी) २वल्वनाधारे पटलाधारे वंशपञ्जरे च अमरः। "गोपानसीषु क्षणमास्थितानाम्" माघः। [ "गोपायकानां भुवनत्रयस्य" किरा०।

**गोपायक** त्रि० गोपयति, गुप—आय+ण्वुल्। रक्षके

**गोपायन** न० गुप—आय—भावे ल्युट्। १गोपने "गोपायनं प्रकुरुते जगतः सार्वलौकिकम्" हरिवं० ४ अ०। कर्त्तरि ल्यु। २रक्षके। "गोपानां बहुसाहस्रैर्बलैर्गोपायनैर्वृतः" भा० श्री० ७अ०।

**गोपायित** त्रि० गुप—आय—कर्म्मणि क्त। १रक्षिते अमरः। भावे क्त। २अतीतगोपने न०।

**गोपाल** पु० गां भूमिं पशुभेदं वा पालयति पालि—अण् उप०स०। १नृपे २गोरक्षके च। "क्षत्रियात् शूद्रकन्यायां समुत्पन्नस्तु यः सुतः। स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः" पराशरोक्ते ३सङ्कीर्णजातिभेदे। "आर्द्धिकः कुलमित्रञ्च गोपालोदासनापितौ। एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्" मनुना तस्य भोज्यान्नतोक्ता। नन्दनन्दने ४विष्णोरवतारभेदे तद्रूपञ्च पद्मपु०पाताल ख० "त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदन!"। श्रीकृष्णं प्रति व्यासप्रार्थने भगवदुक्तिर्व्यासवाक्ये यथा "पश्याद्य दर्शयिष्यामि स्वरूपं वेदगोपितम्। ततोऽपश्यमहं भूप! बालं बालाम्बुदप्रभम्। गोपकन्यावृतं गोपं हसन्तं गोपबालकैः। कदम्बमूलमासीनं पीतवाससमद्भुतम्। वनं वृन्दावनं नाम नवपल्लवमण्डितम्। कोकिलभ्रमरारावमनोभवमनोहरम्। नदीमपश्यं कालिन्दीमिन्दीवरदलप्रभाम्। गोवर्द्धनं तथाऽपश्यं कृष्णरामकरोद्धृतम्। महेन्द्रदर्पनाशाय गोगोपालसुखावहम्। दृष्ट्वा विहृष्टो ह्यभवं सर्वभूषणभूषणम्। गोपालमबलासङ्गमुदितं वेणुनादिनम्,।

तस्य ध्यानमन्त्रयन्त्रादिकं तन्त्रसारे दृश्यम्।

**गोपालक** पुं० गां पालयति पालि—ण्वुल् ६त०। १गोरक्षके २भूमिरक्षके च ३शिवे त्रिका०। गोपाल+स्वार्थे क। उक्तार्थे ४नन्दनन्दने।

**गोपालकक्षा** स्त्री गोपालप्रधाना कक्षा। भारतवर्षस्य प्राच्ये देशभेदे "अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम" इत्युपक्रमे "कक्षा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णकाः"। भा० भी० ९अ०। तस्य राजनि अण्। गौपालकक्षः तद्बहुत्वे तस्य लुक्। गोपालकक्षास्तन्नृपेषु "ततो गोपालकक्षांश्च सोत्तरानपि कोशलान्। मल्लानामधिपञ्चैव पार्थिवांश्चाजयत् प्रभुः" (भीमः) भा० स० २९अ०। भीमप्राचीविजयोक्तौ।

**गोपालकर्कटी** स्त्री। गोपालस्य गोरक्षकस्य प्रिया कर्कटी। राजनि०। क्षुद्रकर्कट्याम् (राखालशशा)।

**गोपालतापनीय** न० गोपालस्तापनीय सेव्यो यत्र। उपनिषद्भेदे उपनिषच्छब्दे १२२१ पृ० दृश्यम्। गोपालतापनमप्यत्र न०।

**गोपालधानी** त्रि० गोपालोधीयतेऽत्र धा—आधारे ल्युट् ङीप् ६त०। गोष्ठे। तस्य पूलासेन समासे राजद० पूर्वनि० समाहारैकत्वं च गोपालधानीपूलासम्।

**गोपालव** पु० गोपालं तद्धर्म्मं वाति वा—क उप० स०। गोपतिधर्म्मयुक्ते आयुधजीविनि राजन्यभेदे। तस्य ब्राह्मणत्वे आयुधजीवित्वेऽपि स्वार्थे न ञ्यट्। "अब्राह्मणेति किं गोपालवाः" सि० कौ०।

**गोपालि** पु० गां वृषभं पालयति पालि—इन्। "शिवे "गोपालिर्गोपतिर्ग्रामः" भा० आनु० १७ अ० शिवसहस्रनामोक्तौ २प्रवरभेदे प्रवराध्यायः।

**गोपालिका** स्त्री गोपालकस्य पत्नी पालकान्तत्वात् न ङीष् टापि अत इत्वम्। १आभीरपत्न्याम् २शारिवौषधौ च शब्दार्थचि०। गवां रक्षणात्तत्पालकत्वात् ३कीटभेदे हेमच०।

**गोपाली** स्त्री गोपालशब्दादस्त्यर्थे अच् गौरा० ङीष्। १गोपालकर्कट्याम् राजनि०। गोपालस्य पत्नी ङीष्। २गोपपत्न्याम्। गां पालयति पालि-अण् ईप् उपप०। ३गोपालयित्र्यां ४कुमारानुचरे मातृभेदे च "खञ्जजाता च गोपाली बृहदम्बालिका तथा" भा०।श० ४७ अ०।

**गोपाष्टमी** स्त्री गोपप्रियाष्टमी। कार्त्तिकस्य शुक्लाष्टम्याम्। "शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः। तद्दिने वासुदेवोऽभूत् गोपः पूर्वं स वत्सपः। तत्र कुर्य्यात् गवां पूजां गोग्रासं गोप्रदक्षिणम्। गवानुगमनं कार्य्यं सर्वान् कामानभीप्सता" कूर्मपु०।

**गोपिका** स्त्री गोपायति गुप-ण्वुल्। १गोपालयित्र्याम् गोप्येव स्वार्थे क ह्रस्वः। २गोपपत्न्याम्। [ त्रिका०।

**गोपित्त** न० गोः पित्तमिव। गोरोचनाख्ये गन्धद्रव्यभेदे

**गोपिन्** स्त्री गोपायति गुप-णिनि। १रक्षितरि स्त्रियां ङीप् वा च २यत्नाभावतायाम् शब्दच०। अतिशयेन गोपी इष्ठन् टिलोपः। गोपिष्ठ गोप्तृतमे त्रि०। "कामचारस्य वा कामग्याय गोपिष्ठो गोपायादिति वा" शत० ब्रा० १।२।१।२ "गोपिष्ठः गोपायितृतमः" भाष्यम्।

**गोपिल** त्रि० गुप-इलच्। गोप्तरि तत्पुरुषर्य्यां पक्ष। गोपशेय गुपिलनिर्द्देशादौ त्रि०।

**गोपी** स्त्री गोपजातिः स्त्री जातौ ङीष्। १गोपजातिस्त्रियाम्। वृन्दावनस्थगोप्यश्च श्रुतिदेवमुनिकन्यारूपा यथा पद्मपु० पाता० "गोप्यस्तु श्रुतयो ज्ञेयाः ऋषिजा गोपकन्यकाः। देवकन्याश्च राजेन्द्र ! न मानुष्यः कथञ्चन"। तत्र श्रेष्ठा राधाचन्द्रावलीविशाखाललितादयः। मूलम् उज्ज्वलमण्यौ द्रष्टव्यम्। "इत्येवं दर्शयन्त्यस्तास्तेवं गोप्योविचेतसः" भाग० १०।३।१२। स्क० प्रभा० ख० तु चन्द्ररूपकृष्णस्य कलारूपता तासामुक्ता यथा। "ततो गोप्यो महादेवि ! आद्यायाः षोडश स्मृताः। तासां नामानि ते वक्ष्ये तानि चैकमनाः शृणु। लम्पिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया। भीषणी नन्दनी शोका सुपर्णा विमलाऽक्षया। शुभदा शोभना पुण्या हंसस्यैताः कलाः क्रमात्। हंसएव मनः कृष्णः परमात्मा जनार्द्दनः। तस्यैताः शक्तयो देवि ! षोडशैव प्रकीर्त्तिताः चन्द्ररूपी ततः कृष्णः कलारूपास्तु ताः स्मृताः संपूर्णमण्डला तासां मालिनी षोडशी कला। प्रतिपत्तिथि मारभ्य विहरत्यासु चन्द्रमाः। षोडशैव कला यास्तु गोपीरूपा वरानने ! एकैकशस्ताः संभिन्नाः सहस्रेण

पृथक् पृथक्"। गोपायति गुप-अच् गौरा० ङीष्। २रक्षिकायां स्त्रियाम् "गीतानि गोप्याः कलमं जगद्व्रजः" माघः। स्वार्थे क। गोपिका तत्रार्थे "महासमालोकयति स्म गोपिका" माघः।

**गोपीगीता** स्त्री भाग० १०स्क० उक्तायां गोपीभिः कृष्णस्तुतौ सा च "जयति तेऽधिकं जन्मना व्रजः" इत्याद्येकत्रिंशत्तमाध्यायस्था।

**गोपीजनवल्लभ** पु० गोप्येव जनस्तस्य वल्लभः। श्रीकृष्णे "गोपीजनवल्लभाय स्वाहा" तन्त्रसारे मन्त्रः। गोपीभर्त्रादयोऽप्यत्र "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पदाङ्कदूतम्।

**गोपीत** पु० स्त्री गौर्गोरोचनेव पीतः। खञ्जनभेदे। वृ० सं० ४५ अ० "पीतो गोपीत इति क्लेशकरः खञ्जनोऽदृष्टः" तस्य दर्शने क्लेशकारितोक्ता।

**गोपीथ** न० पा-भावे थक्-"गोपीथेत्यादि" पा०नि० गोः सोमस्य पीथः। सोमपाने। "प्रति त्वं चारुमध्वरं गोपीथाय प्रहूयसे" ऋ०१।१९।१। "गोपीथाय सोमपानाय" भा०। गावः पिबन्त्यस्मिन् आधारे थक्। २तीर्थे गोर्जलावतरणे सोपाने तीर्थस्य जलावतरणसोपानत्वात्तथात्वम्। "गोपीथं तीर्थमाख्यातम्" उणादि ह०। गुप-भावे थक् नि०। ३रक्षणे पु० "गोपीथाय जगत्सृष्टेः काले स्वस्याध्यु ताल्मकः" भाग० ४।२२।५०। "जगत्सृष्टेर्गोपीथाय रक्षणाय" श्रीधरः। "अजातशत्रुः पृतनां गोपीथाय मधुद्विषः" भाग० १।१०।२६। "गोपीथाय रक्षणाय" श्रीधरः। गोपीथाय हितं यत्। गोपीथ्य तत्र हिते त्रि० "अश्विना हत्था गोपीथ्याय हि दधाथ तत् पुरुहणो यशोजः" ऋ० १०।८५।११।

**गोपुच्छ** पु० गोः पुच्छ इव पुच्छो यस्य। १गोलाङ्गूलाख्ये वानरे हेमच० "सर्वधानरगोपुच्छा यमृक्षाद्या भजन्ति वै" (यं सुग्रीवम्) भा०व० २८१अ०। "गोपुच्छैर्हरिभिर्मर्कटैर्नकुलैर्नीभिमिश्रितम्" (काननम्) भाग० ३।२१।४२। "गोपुच्छशालाहकमर्कटाश्च" भाग० ८।२।१७। गोपुच्छाकारत्वात् २हारभेदे अमरः। ६त०। ३गोर्लाङ्गूले न०। "गोपुच्छस्ये वल्मीकगेऽथ वा दर्शनं भुजङ्गस्य" वृ० सं० ८५ अ०। ततः शर्करा० स्वार्थे अण्। गौपुच्छ तत्रार्थे त्रि०।

**गोपुटा** स्त्री गोरिव पुटमस्याः। स्थूलैलायाम् राजनि०।

**गोपर्पटिक** न० गोः पिपतृषस्य पुटिकं पुटयुक्तं मस्तकम्। पिवद्वषस्य मस्तके त्रिका०।

**गोपुर** न० पुर–अग्रगमने क गवां पुरम्, गवा जलेन पूर्यते पृ–बाहुले क वा। १पुरद्वारे २द्वारमात्रे अमरः। तत्र गवामग्रगमनात्तथात्वम्। ३कैवर्त्तीमुस्तके मेदि०। तस्य जलेन पूरणात्तथात्वम् "गुप्तवप्रचयप्रख्यैर्गोपुरैर्नन्दनोपमैः" भा०आ०२०६०श्लो०। "गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम्" भा०व० १७२अ०। "पुरगोपुरं प्रति ससैन्यसागरम्" माघः। "पीडा पुरस्यैव च गोपुरस्थे" (गुनि) वृ० स० ८६ अ०।

**गोपुरक** पु० पुर–क ६त० गोपुर+स्वार्थे क। १गवां पूरके त्रिका० २गोपुरशब्दार्थे च गां भूमिं पिपर्त्ति पृ–क संज्ञायां कन्। ३कुन्दुरुकवृक्षे राजनि०।

**गोपुरीष** न० ६त०। गोमये राजनि०।

**गोपेन्द्र** पु० गोप इन्द्र इव। १श्रीकृष्णे हेमच०। "गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे" भा० भी० २३अ०। ६त०। २गोपेश्वरे नन्दे च गोपेश्वरादयोऽप्यत्र।

**गोपेश** पु० ६त०। १नन्दघोषे "गोपेशं परितः परे" इत्य० २शाक्यमुनौ त्रिका०।

**गोप्तव्य** त्रि० गुप–कर्मणि तव्य वा आयाभावः। १अप्रकाश्ये २रक्षणीये च "पौरजानपदाश्चैव गोप्तव्यास्ते यथा सुखम्" भा० क० ६१ अ०। इट्पक्षे गोपितव्य आयपक्षे गोपायितव्य तत्रार्थे त्रि०।

**गोप्तृ** पु०गुप–तृच्। रक्षके। "तस्याः खन्याःसभार्थाय गोप्तृगुप्ततमेन्द्रियाः" रघुः। "तस्मात् सर्वभूतानां गोप्तारं भक्तमात्मजम्"। "मुच्यते ब्रह्महत्यायाः गोप्ता गोब्राह्मणस्य च" मनुः २संवरके च। ३विष्णौ पु०"रक्षरो गोपतिर्गोप्ता" विष्णुस० "सकलभूतपालनात् गोप्ता" भा०। "गोहितो गोपतिर्गोप्ता" विष्णुस०। "स्वात्मानं स्वमायया गोपायति संवृणोति गोप्ता" भा०। स्त्रियां ङीप्। "गुह्यातिगुह्यगोप्त्री त्वम्" देवीजपसमापनमन्त्रः। इट्पक्षे गोपितृ आयपक्षे गोपायितृ तत्रार्थे त्रि० स्त्रियां ङीप्।

**गोप्य** त्रि० गुप–कर्मणि यत्। १रक्षणीये २गोपनीये अप्रकाशनीये च। "आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम्। तपोदानापमानं च नव गोप्यानि यत्नतः" चाणक्य०। २दासीपुत्रे पु० मेदि०।

**गोप्यादित्य** पु० प्रभासतीर्थस्थे गोपीस्थापितरविमूर्त्तिभेदे तत्कथा स्का० प्रभा० ख० यथा "अतो गच्छेन्महादेवि! गोप्यादित्यमनुत्तमम्। भूतेशाद्वायवे भागे धनुर्भिस्त्रिशतान्तरे। बलातिबलदैत्यघ्नी ईशानाग्नेयसंस्थितम्। धनुषां द्वयके देवि! संस्थितं पापनाशनम्। तस्योत्पत्तिं प्रवक्ष्यामि महापापहरां शुभाम्" इत्युपक्रमे "अथ तत्र कृतान् ज्ञात्वा प्रासादान् यादवैः पृथक्। तेनो गोप्योऽपि ताः सर्वाः सहस्राणि च षोडश। कृष्णमाराध्य भावेन स्थापयाञ्चक्रिरे रविम् ऋषिभिर्नारदाद्यैस्तु तथा वेदविचक्षणैः तत् प्रतिष्ठापयामासुः प्रतिष्ठाविधिना रविम्। प्रतिष्ठिते ततः सूर्ये ददुर्दानानि भूरिशः। ततः चैल निवासिभ्यस्तीर्थे देवरतेषु वै। ततस्ता यादवः सर्वे सन्तुष्टा हृष्टमानसाः। चक्रुर्नाम रवेस्तत्र गोप्यादित्येति विश्रुतम्"।

**गोप्याधि** पु० कर्म०। आधिभेदे आधिशब्दे ७११ पृ० दृश्यम्। "गोप्याधिभोगे नो वृद्धिः" याज्ञ०।

**गोप्रकाण्ड** न० प्रशस्तो गौः (जातिः) "प्रशंसावचनैश्च" पा० नित्यस० परनि०। श्रेष्ठे गवि अमरः। नियतलिङ्गत्वात् क्लीवत्वमेव "प्रकाण्डमुद्धतल्लजौ" अमरोक्तेः। मल्लि० पुंस्त्वोक्तिश्चिन्त्या। यदपि तत्र गोषु मध्ये प्रकाण्ड इत्युक्तं तदपि प्रामादिकं "प्रशंसावचनैश्चे"ति सूत्रस्य कर्मधारयसमासमात्रविषयत्वात्।

**गोप्रचार** पु० प्रचरत्यस्मिन् प्र+चर–आधारे घञ् ६त०। १गोचारणस्थाने। "ग्रामेच्छया गोप्रचारो भूमिराजवशेन वा" याज्ञ० "गवादीनां चारणाय कियानपि भूभागोऽकृष्टः कल्पनीयः" मिता०। स्कन्दपु० प्रभा० खण्डोक्ते २तीर्थभेदे। "गोप्रचारकथा पुण्या गोपीनां द्वारकागमः" इत्यध्या० तत्प्रतिपाद्योक्तौ।

**गोप्रतार** पु० गवां प्रतारः प्रतरणतुल्यः संमर्दोऽत्र। रामस्य वैकुण्ठगमनकाले तदनुगामिनां पुरवासिनां गोप्रतरणतुल्यसम्मर्दयुते सरयूस्थे १तीर्थभेदे। "गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम्। यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः। देहं त्यक्त्वा महाराज! तस्य तीर्थस्य तेजसा। रामस्य च प्रसादेन व्यवसायाच्च भारत!। तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप!। सर्वपापविशुद्धात्मा स्वर्गलोके महीयते" भा०व०८४अ०। "ऋदोरप्" पा०अप्। गोप्रतरोऽप्यत्र "यद्गोप्रतरकल्पोऽभूत् संमर्दस्तत्र मज्जताम्। अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे" रघुः। अत्रापि दीर्घमध्यता इत्यन्ये।

गश्च वृषभेन प्रतारो गमनमस्य । २शिवे पु० । "गोनर्द्दो गोप्रतारश्च गोवृषेश्वरवाहनः" भा० आनु० २८६ अ० । शिवसहस्रनामोक्तौ । अप् ६त० । ३गोःप्रतारे पु० अनु-पदम् उक्तं रघुवाक्यम् उदा० ।

**गोप्रवेश** पु० ६त० । १गोवनादितो गृहप्रवेशे "गोप्रवेशसमयेऽ-प्यतोऽधोयाति कृष्णपशुरेव या पुरः" वृ०स० २५ अ० । आधारे ल्युट् । २तत्काले । स च कालः सूर्य्या-स्तमयात् प्राक्कालः तथा च वर्णितम् रघौ "सञ्चार-पूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् । प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः" ।

**गोफणा** स्त्री सुश्रुतोक्ते व्रणबन्धनभेदे तत्र कोषदामेत्या-द्युपक्रमे "वितानगोफणा पञ्चाङ्गी चेति चतुर्दश वन्धविशेषास्तेषां नामभिराकृतयः प्रायेण व्याख्याताः" सुश्रुतः "चिबुकनासौष्ठांसवस्तिषु गोफणाम्" । (निदध्यात्) सुश्रुत० ।

**गोबाल** पु० ६त० । १गोकेशे लोमनि च स च सीमा-ज्ञानाय भूमौ निधेयः यथाह मनुः "अश्मनोऽस्थीनि गोबालांस्तुषान् भस्म कपालिकाः । करीषमिष्टकाङ्गार शर्कराः बालुकास्तथा । यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत् । तानि सर्वाणि सीमायामप्रकाशानि कारयेत्" । गोबाल इव बालोऽस्याः "पाककर्णेत्यादि" पा० ङीप् । ओषधिभेदे स्त्री शि० कौ० ।

**गोभण्डीर** पु०स्त्री भट–भाषणे वा० ईरन् गवि जले भण्डीरः । जलकुक्कुभखगे त्रिका० । स्त्रियां जाति-त्वात् ङीप् । [स्तस्य चात्मजः" हरिवं० ३२ अ० ।

**गोभानु** पु० तुर्वसुवंशप्रपौत्रे "तुर्वसोस्तु सुतो वह्निर्गोभानु-

**गोभिल** पु० छन्दोग्रगृह्यकारके ऋषिभेदे ।

**गोभृत्** पु० गां भूमिं बिभर्त्ति भृ-क्विप् ६त० । पर्वते "नादेन गोभृद्विवरेषु मत्ताः भ्रमन्ति गोकर्णशरीर भक्ष्याः" चौरः । तेन निर्वृत्तम् सङ्कला० अञ् । गौभृत पर्वतनिर्वृत्ते त्रि० स्त्रियां ङीप् । [अनुगोमत् न ।

**गोम** लेपने अद० चुरा० उभ० सक० सेट । गोमयति-ते

**गोमक्षिका** स्त्री गोः क्षोभदायिका मक्षिका । (डाँश) ख्याते मक्षिकाभेदे शब्दर० ।

**गोमघ** त्रि०गां मंहति ददाति महि—अच् छन्दसि निःलोपः कस्य घत्व ६त० । गोदातरि । "कदा गोमघा हव-नानि गच्छाः, ऋ० ६।३५।२ "मंहतेर्दानार्थस्य रूपमुत्तर-पदम्" भा० "सं गोमघा जरिते" ६।३५।४ । "गोमघा

गोदातारौ" भा० "अश्वामघा गोमघा वा हुवेम" ऋ० ७।७१।१।

**गोमण्डल** न० ६त० । १गोसमूहे २भूमण्डले । "मग्नां च तोयापदि दुस्तरायां गोमण्डलस्योद्धरणं चकार" माघः । ३विरणसंघे च ।

**गोमत्** त्रि० गौरस्त्यस्य मतुप् । १गोस्वामिनि २गोयुक्ते च "इन्द्र ! गोमन्निहायाहि" यजु० २६।४ "गावः स्तुतिरूपा वाचः किरणा वा विद्यन्तेऽस्य गोमान्" वेददी० स्त्रियां ङीप् । सा च ३नदीभेदे स्त्री "गोमतीं भूतपापां च गण्डकीञ्च महानदीम्" भा० भी० ६अ० । स्कन्दपु० प्रभा० तन्माहात्म्यम् "गोमत्युत्पत्तिकथनं तस्यां स्नाना-दिजं फलम् । चक्रतीर्थस्य माहात्म्यं गोमत्युदधि-सङ्गमः" इत्यध्या० तत्खण्डप्रतिपाद्ये । अत्र उदधि सङ्गम इत्युक्तेः "गङ्गा सरस्वती पुण्या यमुना च महानदी । गोदावरी गोमती च नदी तापी च नर्म्मदा" इत्युपक्रमे "नद्यः समुद्रसंयोगात् सर्वाः पुण्याः शुभा-वहाः" प्रभा० खण्डोक्तेः सा समुद्रगा इत्या तु गोमती काशीतोऽनतिदूरे उत्तरस्यां गङ्गासङ्गता यथाह" भा० व० ८४ अ० यथा "गोमतीगङ्गयोश्चैव सङ्गमे लोक-विश्रुते । अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत्" गोमतीस्नान फलं तत्रैव "रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन ! । अश्वमेधमवाप्नोति पुनाति च कुलं नरः । शतसाहस्रकं तीर्थं तत्रैव भरतर्षभ ! । तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः । गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ !" गौः गोपदस्याधिक्येन विद्यतेऽस्यां विद्यायां मतुप् ङीप् । ४विद्याभेदे सा च गोदानशब्दे २६९९पृ० दर्शिता अन्या तिलधेनुशब्दे वक्ष्यते "गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य च" भा०आनु०७८अ० । "पञ्चगव्येन गोघाती मासेनैकेन शुध्यति । गोमतीं च जपेद्विद्यां गवां गोष्ठे च संवसेत्" शाता० । गोमत्यां भवः पक्ष्या० अण् । गौमत तद्भवे त्रि० स्त्रियां ङीप् । गोमत्या अदूरभवो देशः अण् । गौमत तदुपनि-कट देशादौ त्रि० स्त्रियां ङीप् । बहुत्वे तस्य वरणा० लुप् । गोमत्यः । उक्तगोमच्छब्दस्य सर्वनामस्थाने नुम् गोमान् गोमन्तावित्यादि रूपम् । गोमानिवाचरति गोमत्+क्विप् गोमतीति ततः क्विप् गोमत् । ४गोस्वामि-तुल्ये अत्र सर्व्वनामस्थाने धातुत्वात् न नुम् । गोमत् गोमतौ इत्येव । अंशोतत्पुरुषे गोमतीशब्दस्य "वेरेकि पन्थोर्दयं विदुर्" इत्यत्र य "ङ्यापोः संज्ञाछन्दसोः"

यवं कुर्य्यान्नदीं गत्वा समुद्रगाम्" विष्णुना तु द्विजातीनां तत्र पुनरुपनयनमुक्तं यथा "विड्वराहग्रामकुक्कुटनरगोमांसभक्षणे सर्वेष्वेव द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात् ।"

**गोमातृ** स्त्री ६त० । गवां मातरि सुरभौ कश्यपपत्नीभेदे । "गोमातरः सुशीलाद्यास्तत्र सन्ति शिवप्रियाः" काशीख० २अ० ।

**गोमायु** पु० स्त्री गां विकृतां वाचं मिनोति मा—उण् । १शृगाले, अमरः "अनु हुङ्कुरुते घनध्वनिं न हि गोमायुरुतानि केशरी" किरा० । "पांशुवर्षे दिशां दाहे गोमायुविरुते तथा" मनुः । तन्मूत्रादिभक्षणनिषेधमाह मनुः "विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः । प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ।"
तद्रुतादिशुभाशुभफलं वृ० स० उक्तं यथा
"श्वभिः शृगालाः सदृशाः फलेन विशेष एषां शिशिरे मदाप्तिः । हुहुरुतान्ते परतश्च टाटा पूर्णः स्वरोऽन्ये कथिताः प्रदीप्ताः । लोमाशिकायाः खलु कक्कशब्दः पूर्णः स्वभावप्रभवः स तस्याः । येऽन्ये स्वरास्ते प्रकृतेरपेताः सर्वे च दीप्ता इति सम्प्रदिष्टाः । पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता । धूमिताभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् । सर्वदिक्ष्वशुभा दीप्ता विशेषेणाह्नि गोभवा । पुरे सैन्येऽपसव्या च कष्टा सूर्य्योन्मुखी शिवा । याहीत्यग्निभयं शास्ति टाटेति मृतवेदिका । धिग्धिग् दुष्कृतमाचष्टे सज्वाला देशनाशिनी । नैव दारुणतामेके ज्वालायाः प्रचक्षते । अर्कोद्यमनवत्तस्या वक्त्रं लालास्वभावतः । अन्यप्रतिरुता याम्या बोद्धव्या मृतशंसिनी । वारुण्यनुरुता सैवं शंसते सलिले मृतम् । अक्षोभः श्रवणं चेष्टं धनप्राप्तिः प्रियागमः । क्षोभः प्रधानभेदश्च वाहनानां च सम्पदाम् । फलमासप्तमादेतदपास्य परतो रुतम् । याम्यायां तद्विपर्य्यस्तं फलं षटपञ्चमादृते । या रोमाञ्चं मनुष्याणां शकृन्मूत्रं च वाजिनाम् । रावात् त्रासं च जनयेत्सा शिवा न शिवप्रदा । मौनं गता प्रतिरुते नरद्विरदवाजिनाम् । या शिवा सा शिवं सैन्ये पुरे वा सम्प्रयच्छति । भेभे इति शिवा भयकरी भो भो व्यापदमादिशेद्वा । मृतबन्धनिवेदनी फिफी हुहु चात्महिता शिवा स्वरे । शान्ता त्ववर्णात् परमं रुवन्ती टाटामुदीर्णामिति वाश्यमाना । टे टे च पूर्वं परतश्च थे थे तस्याः स्वतुष्टिप्रभवं रुतं तत् । उच्चैर्घोरं वर्णमुच्चार्य पूर्वं पश्चात् क्रोशेत् क्रोष्टुकस्यानुरूपम् । या सा क्षेमं प्राह वित्तस्य चाप्तिं संयोगं वा प्रोषितेन प्रियेण" । रुतादिफलं शृगाले वर्णमाख्यं तत्तुल्यफलमेतस्यातिदिष्टम् । २गन्धर्वभेदे जटाधरः । "बहुभिः सह गन्धर्वैः प्रागायन्त च तुम्बुरुः" इत्युपक्रमे "गोमायुः सूर्य्यवर्चाश्च सोमवर्चाश्च सप्तमः" हरिवं० २६ अ० ।

**गोमायुभक्ष** पु० गोमायुं भक्षयति भक्ष—अण् उप० स० । कोचजातिभेदे अर्कपुत्रस्यैवोपक्रमे "गोमायुभक्षशूलिककोङ्कणाख्यवनविकलाङ्गाः" वृ०स० १६ अ० तस्य शनिविभागे उक्तिः ।

**गोमिन्** त्रि० गौरस्त्यस्य मिनि । १गोस्वामिनि अमरः स्त्रियां ङीप् । "यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् । गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्" मनुः । २उपासके ३शृगाले पु० मेदि० । ४बुद्धभिक्षुशिष्ये पु० त्रिका० । शालाशब्दे परे समासे छात्र्यादि० । "छात्र्यादयः शालायाम्" पा० अस्य उदात्तता ।

**गोमीन** पु० स्त्री गौरिव स्थूलो मीनः । गोमत्स्याख्ये मीनभेदे "न दद्यात् तिलकमठं पद्मवक्ष्मकमेव । गोमीनं चक्रपक्षं महाशराचलं तथा" मत्स्यसूक्तम् ।

**गोमुख** पु० गोर्मुखमिव मुखमस्य । १नक्रे २यक्षभेदे च हेमच० । ३मातलिपुत्रे "बहुगोमातलेः स्वस्य तत्र पुत्रश्च गोमुखः" भा०क०८६अ० । ४वाद्यभेदे ५कुटिलाकारे लेपने च न० मेदि० वाद्यभेदे पुंस्त्वमपि यथा "पाणवराण् गोमुखांश्च डिण्डिमांश्च महास्वनान्" भा०स०४७अ० । "शङ्खभेरीरवैर्घोषैः पणवानकगोमुखाः" भा० द्रो० ८२ अ० । "पणवानकगोमुखाः सहसैवाभ्यहन्यन्त" गीता । लेपनञ्च तदाकारेण भित्तौ लेपनम् "सुधाशुभ्रा गोमय-गोमुखानि" माघः । ६तदाकारे सन्धिभेदे (सुरङ्ग) तन्त्रोक्ते जपमालारक्षणाय पट्टवस्त्रादिनिर्मिते स्वनामख्याते ७पदार्थे च० । तस्य लक्षणं मुण्डमालात० उक्तं यथा ।
"चतुर्विंशाङ्गुलमितं पट्टवस्त्रादिसम्भवम् । निमीषाष्टाङ्गुलिमुखं ग्रीवायां षड्दशाङ्गुलम् । एवं गोमुखमन्त्रस्तु यत्नेन तु गोपितम् । तन्मुखे स्थापयेन्मालां ग्रीवामध्यगते करे । प्रजपेद्विधिना सुभ्रु वर्णमालाधिकं प्रिये ! निधाय गोमुखे मालां गोपयेन्मातृजारवत्" (गोखड़) ख्याते ८नदीभेदे स्त्री गोमु-

मुखाकारत्वात् ८हिमालयात् भूमौ गङ्गापतनगुहायां स्त्री ङीप् ।

गोमूत्र न० ६त० । (चोना) इति ख्याते गोर्मूत्रे गोशब्दे २६८१ पृ० तद्गुणाद्युक्तम् । "शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा ।" "गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा" "गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः" मनुः ।

गोमूत्रिका स्त्री गोर्मूत्रस्येव गतिरस्त्यत्र ठन् । चित्रालङ्कारभेदे तल्लक्षणमलङ्कारशब्दे ३९२ पृ० उक्तम् । सा च पादार्द्धश्लोकविपरीतभेदाच्चतुर्विधा । दिङ्मात्रमुदाह्रियते"

म । द । मे । वि । क । सा । हा । नं । पा । प । ने । प्य । वि । पा । दि । भिः ।
व । द । चे । वि । का । स । हा । नं । सु । ध । मा । प्य । वि । पा । णि । भिः ।

माघे १९ स० ४६ श्लोके तल्लक्षणान्तरं मल्लिनाथोक्तं यथा "वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः" ।

षोडशकोष्ठद्वये पङ्क्तिद्वये द्वयं द्वयं क्रमेण विलिख्य एकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरिति तदुद्धारः । गोमूत्रप्रकारः प्रकारे स्थूला० कन् टापि अत इत्त्वम् । गोमूत्रतुल्ये वक्रसरणप्राये १प्रचारादौ । "गोमूत्रिकाप्रचारेषु" रघु० "गोमूत्रतुल्यवक्रसरणप्रचारेषु" (ताम्बुड) ख्याते ४तृणभेदे स्त्री राजनि० ।

गोमृग पुंस्त्री गवाकृतिर्मृगः । गवये तस्य गवाकृतित्वात् तथात्वम् । "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" यजु० २४।१। स्त्रियां जातित्वात् ङीष् ।

गोमेद पुं० गौरिव मेद्यति मिद—अच् । १मणिभेदे २द्वीपभेदे तन्नामनिरुक्तिर्यथा "गोमेदे गोपतिर्नाम राजाभूद्गोसवोद्यतः । याज्योऽभूद्वह्निकल्पानामौतथ्यानां मनोः कुले । स तेषु चरिष्याय प्रदत्तेषु बहून् गुरून् । यज्ञे, तं गोतमः कोपादशपत् सोऽगमत् क्षयम् । अग्रपादेऽस्य नागाश्च दग्धाः कोपाग्निना मुनेः । तन्मेदसा महीच्छन्ना गोमेदः स ततोऽभवदिति" युक्तिकल्पतरुः । ३प्लक्षद्वीपस्थे वर्षाचलभेदे तद्वर्णोपक्रमे" मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः । सप्तैव तेषां नामानीत्यभिधाय "गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः" विष्णु पु० । स्वार्थे क । मणिभेदे तस्य परीक्षादियुक्तिकल्पतरावुक्तं यथा "हिमालये वा सिन्धौ वा गोमेदमणिसम्भवः । स्वच्छकान्तिर्गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि । अकशः पिञ्जरो धन्यो गोमेद इति कीर्त्तितः । चतुर्द्धा जातिभेदस्तु गोमेदेऽपि प्रकाश्यते । ब्राह्मणः शुक्लवर्णः स्यात् क्षत्रियो रक्त उच्यते । आपीतो वैश्यजातिस्तु शूद्रस्त्वानील उच्यते । छाया चतुर्विधा श्वेता रक्ता पीताऽसिता तथा । गुरुप्रभावः सितवर्णरूपः स्निग्धो मृदुर्वीतमहापरागः । स्वच्छस्तु गोमेदमणिः प्रतोऽयं करोति लक्ष्मीं धनधान्यवृद्धिम् । लघुर्विरूपोऽतिखरोऽश्यमानः स्वेदोपलिप्तो मलिनः खरोऽपि । करोति गोमेदमणिर्विनाशं सम्पत्तिभोगे बलवीर्य्यरागैः । ये दोषा हीरके प्रोक्तास्ते गोमेदमणावपि । परीक्षा वह्नितः कार्य्या शाणे वा रत्नकोविदैः ॥ स्फटिकैर्नैव कुर्वन्ति गोमेदप्रतिरूपकम् । शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतो द्विगुणमाहुरेके । अन्ये तथा विद्रुमतुल्यमूल्यं तथा परे चामरतुल्यमाहुः । चतुर्विधानामेषान्तु धारणं परिसम्मतम्" । अथ जलकालुष्यशोधकः यथाह सुश्रुतः "तत्र (जले) सप्त कालुष्यप्रसादनानि भवन्ति तद्यथा कतकगोमेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति" । स्वार्थे क । द्वीपभेदे । "शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च । द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि० शि० ।

गोमेदसन्निभ पु० गोमेदेन तुल्यः भिन्नस० । दुग्धपाषाणे राजनि० ।

गोमेध पु० मेध—वधे आधारे घञ् ६त० । गोसवाख्ये यज्ञभेदे गोसवशब्दे विवृतिः "गवां मेधमवाप्नोति अप्सरोभिश्च मोदते" भा० आनु० १०६ अ० ।

गोऽम्भस् न० ६त० । गोमूत्रे राजनि० ।

गोयज्ञ पु० गवा क्रतो यज्ञः । १गोसवयज्ञे तच्छब्दे विवृतिः । गा उद्दिश्य यज्ञः । श्रीकृष्णेन गोपानां हितार्थं वृन्दावने प्रवर्त्तिते गोवर्द्धनगिरियज्ञसहिते गवां महोत्सवकारके २व्यापारभेदे तत्कथा हरिवं० ७२ अ० । "शरद्येवं सुखस्पर्शो प्राप्तायां प्रायशः क्रमे । नीलचन्द्रार्कवर्णैश्च रचितं बहुभिर्द्विजैः । फलैः प्रवालेन वनमिन्द्रचापवनोपमम् । भवनाकारविटपं लतावरणभूषितम् । विशालमूलविततं घनमालोपधारितम् । अर्च्चयामो गिरिं देवं गाश्चैव सविशेषतः । चापतैर्विषाणैश्च बर्हापीडैश्च दंशितैः । घण्टाभिश्च प्रलम्बाभिः पुष्पैः शारदिकैस्तथा । शिवाय गावः पूज्यन्तां

गिरियज्ञः प्रवर्त्त्यताम्। पूज्यतां त्रिदशैः शक्रो गिरि-यज्ञाभिरिज्यताम्। गोयज्ञं कारयिष्यामि बलादेव न संशयः”। एवं श्रीकृष्णेनोक्ते गोपवाक्यं यथा “यत्त्वया ऽभिहितं वाक्यं गिरियज्ञं प्रति प्रभो। तल्लङ्घयितुं शक्तो वेलामिव महोदधेः। स्थितः शक्रमहस्तात! श्रीमान् गिरिमहस्त्वयम्। त्वत्प्रणीतोऽद्य गोपानां गवां हेतोः प्रवर्त्त्यताम्। भाजनान्युप कल्प्यन्तां पयसः पेशलानि च। कुम्भाश्च विनिवेश्यन्तां सुदपानेषु शोभनाः। पूर्य्यन्तां पयसा सद्यो द्रोण्यश्च विपुलायताः। भक्ष्यं भोज्यञ्च पेयञ्च तत्सर्व्वं सुपनीयताम्। भाजनानि च मांसस्य न्यस्यन्तामोदनस्य च। त्रिरात्रञ्चैव सन्दोहः सर्व्वघोषस्य गृह्यताम्। विशस्यन्ताञ्च पशवो भोज्या ये महिषादयः। प्रवर्त्त्यताञ्च यज्ञोऽयं सर्वगोपसुसङ्कुलः। आनन्दजननो घोषो महान् मुदितगोकुलः। तूर्य्यप्रणादघोषैश्च वृषभाणाञ्च गर्ज्जितैः। हम्भारवैश्च वत्सानां गोपानां हर्षवर्द्धनः। दधिह्रदः शरावर्त्तः [पयःकुल्यासमावृतः। मांसराशिप्रकृप्राग्रः प्रकाशौदनपर्वतः। संप्रावर्तत यज्ञः स गिरेर्गोभिः समाकुलः। तुष्टगोपगणाकीर्णो गोपनारीमनोहरः। अथाधिकृतपर्य्यन्ते पर्य्याप्ते यज्ञसंविधौ। यज्ञं गिरेस्तिथौ सौम्ये चक्रुर्गोपा द्विजैः सह। यजनान्ते तदन्नन्तु तत्पयो दधि चोत्तमम्। मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते। तर्पिताश्चापि विप्राग्र्यास्तुष्टाः सम्पूर्णभोजनाः। उत्तस्थुः प्रीतमनसः स्वस्ति वाच्य यथासुखम्। भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः। सन्तृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै। तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम्। गिरिमूर्द्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः। भगवानपि तेनैव रूपेणाच्छादितः प्रभुः। सह तैः प्रणतो गोपैर्ववन्दात्मानमात्मना। तमूचुर्विस्मिता गोपा देवं गिरिवरे स्थितम्। भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म? किङ्कराः। स उवाच ततो गोपान् गिरिप्रभवया गिरा। अद्य प्रभृति यष्टव्योऽहं गोषु यद्यस्ति वो दया। अहं वः प्रथमो देवः सर्वकामकरः शुभः। मम प्रभावाच्च गवामयुतान्युपभोक्ष्यथ। शिवश्च वो भविष्यामि मद्भक्तानां वने वने। रंस्येऽहं सह युष्माभिर्यथा दिवि गतस्तथा। ये चेमे प्रथिता गोपा नन्दगोपपुरोगमाः। एषां प्रीतः प्रयच्छामि गोपानां विपुलं धनम्। पर्य्याप्नुवन्तु क्षिप्रं मां गावो वत्ससमाकुलाः। एवं मम परा प्रीतिर्भविष्यति न संशयः” ७४ अ०।

**गोयान** न० गवा कृष्टं यानम्। गवाकृष्टे याने (शगड) “गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः” सुश्रुतः गोयाने मैथुननिषेधमाह मनुः “मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः। गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्”।

**गोयूति** स्त्री “गोर्यूतौ छन्दसि” पा० अध्वपरिमाणे वार्त्ति० छन्दोऽध्वपरिमाणभिन्ने न वान्तादेशः। गोर्गतौ।

**गोरक्ष** पु० गां रक्षति सेवनात् रक्ष–अण् उप० स० (चाकुलिया) १लताभेदे २नागरङ्गे मेदि०। ३कृषभनामौषधौ हेम०। ४गोपालके त्रि०। भावे घञ्। ५गोः रक्षणे च। “कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्” मनुः।

**गोरक्षक** त्रि० गां रक्षति रक्ष–ण्वुल् ६त०। (राखाल) गोपालके “गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्” मनुः।

**गोरक्षकर्कटी** स्त्री कर्म्म०। क्षुद्रकर्कट्याम् (राखालकाकुड) भावप्र०। [२गोधूमे च जटा०।

**गोरक्षजम्बू** स्त्री गोरक्षे गोपे जम्बूरिव। १घोण्टाफले

**गोरक्षतण्डुली** स्त्री गोरक्षः तण्डुलो बीजं यस्याः। (गोरक्षचाकुलिया) क्षुपभेदे रत्नमाला।

**गोरक्षतुम्बी** स्त्री गोरक्षी तुम्बी। कुम्भाकारतुम्ब्याम् राजनि०

**गोरक्षदुग्धा** स्त्री गोरक्षं गोपोषकं दुग्धं निर्यासोऽस्याः। मालवप्रसिद्धे क्षुपभेदे गोरक्षीक्षुपे राजनि०।

**गोरक्षी** स्त्री० गां रक्षति रक्ष–अच् ङीप् सुग्ध०। मालवप्रसिद्धे क्षुपभेदे राजनि०। [मेदि०।

**गोरङ्कु** पु०स्त्री गवा वाचा रङ्कुरिव। पक्षिभेदे नग्नके

**गोरट** पु० गवि रटति रट–अच्। दुष्खदिरे राजनि० तस्य गोः पोषणाय रटनात् तथात्वम्।

**गोरण** न० गुर–भावे ल्युट्। उत्तोलने उद्यमे अमरः।

**गोरथ** पु०मगधदेशस्थे पर्वतभेदे।“अतीत्य गङ्गां शोणञ्च त्रयस्ते प्राङ्मुखास्तदा। कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः। ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम्। गोरथं गिरिमासाद्य ददृशुर्मागधं (जरासन्धपुरम्) पुरम्”। भा० स० १९ अ०।

**गोरस** पु० ६त०। १गोदुग्धे २दध्नि ३तक्रे च हेम०। “आ-

वृषणः सिराततक्रोडः। स्थूलसिराचितगण्डस्थ-
स्थानं मेहते यश्च। मार्जाराक्षः कपिलः करटो
वा न शुभदो द्विजस्येष्टः। कृष्णोष्ठतालुजिह्वः श्वसनो
यूथस्य घातकरः। स्थूलशकृन्मणिशृङ्गः सितोदरः
कृष्णसारवर्णश्च। गृहजातोऽपि त्याज्यो यूथविना-
शावहो वृषभः। श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो
विडालाक्षः। विप्राणामपि न शुभं करोति वृषभः
परिग्रहीतः। ये चोद्धरन्ति पादान् पङ्कादिव योजिताः
कृशग्रीवाः। कातरनयना हीनाश्च पृष्ठतस्ते न भार-
सहाः। मृदुसंहतताम्रोष्ठास्तनुस्फिजस्ताम्रतालुजिह्वाश्च।
तनुहस्वोद्ग्रश्रवणाः सुकुक्षयः स्पष्टजङ्घाश्च। आताम्र
संहतखुरा व्यूढोरस्का वृहत्ककुदयुक्ताः। स्निग्ध
श्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः। तनुभूस्पृग्वालधयो
रक्तान्तविलोचना महोच्छ्वासाः। सिंहस्कन्धास्तन्वल्प
कम्बलाः पूजिताः सुगताः। वामावर्त्तैर्वामे दक्षिणपार्श्वे
च दक्षिणावर्त्तैः। शुभदा भवन्त्यनडुहो जङ्घाभिश्चै-
णकनिभाभिः। वैदूर्य्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्र-
वर्त्माणः। पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्वेऽपि भार-
सहाः। घ्राणोद्देशे शबलो मार्जारमुखः सितश्च
दक्षिणतः। कमलोत्पललाक्षाभः सुवालधिर्वाजितुल्य
जवः। लम्बैर्वृषणैर्मेषोदरश्च संक्षिप्तवङ्क्षणक्रोडः।
ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः। सित-
वर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महावक्त्रः। हंसो-
नाम शुभफलो यूथस्य विवर्द्धनः प्रोक्तः। भूस्पृग्वाल-
धिराताम्रवङ्क्षणो रक्तदृक् ककुद्मी च। कल्माषश्च
स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः। यो वा
सितैकचरणो यथेष्टवर्णश्च सोऽपि शस्तफलः। मिश्र-
फलोऽपि ग्राह्यो यदि नैकान्तप्रशस्तोऽस्ति" ६१अ०।

**गोलत्तिका** स्त्री गवि भूमौ लत्तिकेव। वनचरपशुस्त्रीभेदे
"रोहित् कण्डृणाची गोलत्तिका तेऽप्सरसाम्" यजु०
२४।३७। "रोहित् स्त्रग्रः, कुण्डृणाची, वनचरी होलास
काषि" वेददी०। [ तदपत्ये पु० स्त्री।

**गोलन्द** पु० ऋषिभेदे तस्यापत्यं गर्गा० यञ्। गौलन्द्य

**गोलयन्त्र** न० सि० शि० उक्ते यन्त्रभेदे।

"अपवृत्तगरविचिह्नं क्षितिजे धृत्वा कुजेन संसक्ते।
नाडीवृत्ते बिन्दुं कृत्वा धृत्वाथ जलसमं क्षितिजम्।
रविचिह्नस्य च्छाया पतति कुमध्ये यथा तथा विभ्रमे।
वसुगोले कुजविन्द्वोर्मध्ये नाड्यो द्युजाताः स्युः"।
"यथोक्तविधिना खगोलान्तर्भगोलं बद्धा तत्र क्रान्तिवृत्ते
मेषादेरारभ्य रविभुक्तं राशिभागाद्यं दत्त्वा तदग्रे
रविचिह्नं तदपवृत्तग-रविचिह्नमुच्यते। भगोलं चालयित्वा-
रविचिह्नं क्षितिजे धार्य्यम्। तथा धृते सति क्षितिजं
प्राच्यां विषुवन्मण्डले यत्र लग्नं तत्र खटिकया
विन्दुः कार्य्यः। ततः क्षितिजवृत्तं जलसमं यथा भवति
तथा गोलयन्त्रं स्थिरं कृत्वा भगोलस्तथा चाल्यो यथा
रविचिह्नस्य च्छाया भूगर्भे पतति। तथा कृते सति
विषुवद्वृत्ते क्षितिजविन्द्वोर्मध्ये यावत्यो घटिका
स्तावत्यस्तस्मिन् काले दिनगता ज्ञेयाः। अपवृत्ते
मेषादेरारभ्य प्राक् क्षितिजपर्य्यन्तं यद्राशिभागाद्यं
तल्लग्नं ज्ञेयम्" प्रमिताक्षरा।

**गोलवण** न० गवे देयं परिमितं लवणम्। यावद्गवे लवणं
दीयते तावन्माते लवणे। "गोधलवणयोः" पा० प्रमाणे
गम्ये एतयोः परतः पूर्वं तत्पुरुषे प्रकृतिस्वरता।

**गोला** स्त्री गां वस्तुभूमिम् आधारत्वेन लाति ला—क।
१गोदावरीनद्याम्। गां वाचं लाति।२सख्याम्,३कुनट्याम्।
गां दीप्तिं जलं वा लाति। ४पत्राञ्जने, ५जलिके,
६मण्डले, ७बालक्रीडनके ८दुर्गायाश्च मेदि०।

**गोलाक्ष** पु० ऋषिभेदे तस्य गोत्रापत्यम् अश्वा० फञ्।
गौलाक्षायण तद्गोत्रापत्ये पुंस्त्री।

**गोलाङ्गूल** पु० स्त्री गोर्लाङ्गूलमिव लाङ्गूलमस्य। १वानर-
भेदे त्रिका० स च कश्यपपत्न्याः क्रोधायाः कन्यायां हरि-
नाम्न्यां जातः यथाह भा०आ० ६६अ० "नव क्रोधवशा
नारीः प्रजज्ञे क्रोधसम्भवा। मृगी च मृगमन्दा च
हरी भद्रमना अपि" इत्युपक्रमे "हर्य्याश्च हरयोऽपत्यं
वानराश्च तरस्विनः। गोलाङ्गुलांश्च भद्रं ते हर्य्याः
पुत्रान् प्रचक्षते"। २कृष्णवानरे राजनि०। तल्लक्षणञ्च
काशी ख० ३अ०। "गोलाङ्गूला रक्तमुखा नीलाङ्गा
यूथनायकाः।"

**गोलाध्याय** पु० गोलस्वरूपादिप्रतिपादके भास्करीये ग्रन्थभेदे।

**गोलास** पु० गां भूमिं लासयति प्रकाशयति लस—णिच् अण्
उप० स०। शिलीन्ध्रे हारा०।

**गोलिह** पु० गोभिर्लिह्यते लिह-घञर्थे क।१कलिकायां २घण्टा-
पाटलौ (घण्टापारुलि) च जटा०। [पारुलि) अमरः।

**गोलीढ** पु० गोभिर्लिह्यते लिह-क्त। घण्टापाटलौ (घण्टा-

**गोलोक** पु० वैकुण्ठोर्द्ध्वस्थे स्थानभेदे तत्स्थानमानादि ब्रह्मवै०
पु० उक्तं यथा

"निराधारश्च वैकुण्ठो ब्रह्माण्डानां परोवरः। तत्परश्चापि गोलोकः पञ्चाशत्कोटियोजनात्। ऊर्द्ध्वे निराश्रयश्चापि रत्नसारविनिर्म्मितः। सप्तद्वारः सप्तसारः परिखासप्तसंयुतः। लक्षप्राकारयुक्तश्च नद्या विरजया युतः। वेष्टितो रत्नशैलेन शतशृङ्गेण चारुणा। योजनायुतमानश्च यस्यैकं शृङ्गमुज्ज्वलम्। शतकोटियोजनश्च शैलउच्छ्रित एव च। दैर्घ्यं तस्य शतगुणं प्रस्थे च लक्षयोजनम्। योजनायुतविस्तीर्णस्तत्रैव रासमण्डलः। अमूल्यरत्ननिर्म्माणो वर्त्तुलश्चन्द्रबिम्बवत्। पारिजातवनेनैव पुष्पितेन च वेष्टितः। कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च। नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा। त्रिकोटिरत्नाभरणैर्गोपीलक्षैश्च रक्षितः। रत्नप्रदीपयुक्तश्च रत्नतल्पसमन्वितः। नानाभोगसमायुक्तो मधुवापीशतैर्वृतः। पीयूषवापीयुक्तश्च कामभोगसमन्वितः। गोलोकमण्डलसंख्यानं वर्णनं वा विशारदः। न कोपि वेद विद्वान् वा वेदविद्वान् व्रजेश्वर!"।

गोलोमिका स्त्री गोः लोमेव लोमास्य ङीप् ततः स्वार्थे के अणो ह्रस्वः। (पाचुरी) (गोधूमा) इति च ख्यातायां १मञ्जरिकायाम्। २क्रोष्टुकपुच्छायाञ्च। राजनि०।

गोलोमी स्त्री गोर्लोमेव लोम लोमसदृशं दलादिकमस्या ङीप्। १श्वेतदूर्वायाम्। गोलोमेव जाता अच् ङीप्। २वचायाम्। गवा वाचा लोमयति अनुकूलयति लोमन्+नामधातु–अच् गौरा० ङीष्। ३वेश्यायां हेमच०। ४गोलोमिकाशब्दे राजनि०।

गोवत्स पु० ६त०। गवां वत्से तन्नामद्वादशीव्रतम् व्रतशब्दे दृश्यम्। [(नेकड़ेवाघ) राजनि०।

गोवत्सादिन् पु० गोवत्समत्ति अद–णिनि ६त०। वृके

गोवन्दनी स्त्री गवि भूमौ वन्द्यते वन्द–कर्म्मणि ल्युट् ङीप्। १प्रियङ्गौ,अमरः २पीतदण्डोत्पले रत्नमाला।

गोवर न० गोषु व्रियते वृ–अप्‌०अ। "गोष्ठान्तर्गोखुरक्षुण्णशुष्कचूर्णितगोमयम्। गोवरं तत्समाख्यातं वरिष्ठं रससाधने" भावप्र० उक्ते शुष्कगोमयचूर्णे (गेटा)

गोवर्द्धन न० वृध–णिच् भावे ल्युट् ६त०। १गवां वर्द्धने। करणे ल्युट्। २निरियत्नभेदे तत्प्रकारो गोयत्नशब्दे दृश्यः वृधि–णिच्–कर्त्तरि ल्यु ६त०। ३वृन्दावनस्थे पर्व्वतभेदे पु० तस्य पूजाकालो हरिभक्तिविलासे १६वि० उक्तो

यथा "प्रातर्गोवर्द्धनं पूज्य द्यूतञ्चैव समाचरेत्। भूषणीयास्तथा गावः पूज्याश्च दोहवाहनाः। श्री०कृष्णदासवर्य्योऽयं श्रीगोवर्द्धनभूधरः। शुक्लप्रतिपदि प्रातः कार्त्तिकेऽर्च्योऽत्र वैष्णवैः"। "प्रातर्गोवर्द्धनं पूज्य रात्रौ जागरणं चरेत्" इति क्वचित् पाठः। तत्रा-त्रेदं कर्म गोवर्द्धनप्राधान्येन गोप्राधान्येन च ख्यातमप्येकमेव ज्ञेयम्। तत्र दिननिर्णयमाह देवलः "प्रतिपद्दर्शसंयोगे क्रीडनन्तु गवां मतम्। परविद्धासु यः कुर्य्यात् पुत्रदारधनक्षयः"। निर्णयामृतधृतं पुराणान्तरवचनम् "या शुक्लः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप!। पूजमानेषु वर्द्धन्ते प्रजा गावो महीपते!।। ततः प्रातर्गोवर्द्धनं पूज्येति पूर्वोक्तत्वात्पर्व्वके द्वितीयासम्मर्दस्तु सर्वथा निषिद्धः तद्यथा "नन्दायां दर्शने रक्षाबलिदानदशासु च। भद्रायां गोकुलक्रीडा देशनाशाय जायते"। पुराणसमुच्चये तु सम्भावितचन्द्रोदयो द्वितीयासंयोग एव निषिध्यते "गवां क्रीडा दिने यत्र रात्रौ दृश्येत चन्द्रमाः। सोमोराजा पशून् हन्ति सुरभी पूजकांस्तथा"। तदुदयसम्भावनञ्च निर्णयामृते निर्णीतं यथा "प्रतिपद्यापराह्णकत्रिमूहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते तदुक्तमन्वाधानविषये ह्यग्नातातपेन" द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णको। अन्वाधानञ्चतुर्द्दश्यां परतः सोमदर्शनादिति"। अपराह्णश्च पञ्चधा विभक्तस्याह्नश्चतुर्थोभागः ततश्च यत्र प्रतिपदि पराह्णत्रिमुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावनमिति। अन्यदा तूत्तरैव प्रतिपत्तत्र ग्रहीता तथैवोक्तं पुराणसमुच्चये "वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका। द्वितीया वृद्धिगामित्वादुत्तरा तत्र चोच्यते"। किञ्च। यदा पूर्णप्रतिपत् परत्र निष्क्रामति तदाप्युत्तरैव कार्य्या यथोक्तं भविष्योत्तरे "यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुचः। तथैवाहोरात्रवृद्धा तिथिः प्रोक्तो मलिम्लुचः। यथा मलिम्लुचः पूर्वस्त्याज्योग्राह्य स्तथा परः। त्याज्या तिथिस्तथा पूर्वा ग्राह्या चैव तथोत्तरेति" निर्णयामृतमतम् किन्तु वङ्गतोन्यायेन पूर्वैव मन्तुं शक्यते। तद्वदत्रापि देवलादिवचनप्रामाण्यमस्तीति। अथ गोवर्द्धनपूजाविधिः। तत्रैव पाद्मे "मथुरावासाश्चान्यत्र कृत्वा गोवर्द्धनं गिरिम्। गोमयेन महास्थूलं तत्र पूज्यो गिरिर्यथा। मथुरायां तथा साक्षात् कृत्वा चैव प्रदक्षिणम्। वैष्णवं धाम संप्राप्य

मोदते हरिसन्निधौ"। पूजामन्त्रः। "गोवर्द्धन! धराधार! गोकुलत्राणकारक!। विष्णुबाहुकृतोच्छ्रायो गवां कोटिप्रदो भव" गोपूजामन्त्रः स्कान्दे तत्रैव "लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थं यमपाशं व्यपोहतु। अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः। गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम्"। अथ तत्र गोक्रीड़ा तत्रैव "क्रोधापयेद्वाचयेद्व गोमहिष्यादिकं ततः। वृषान् कर्षापयेद्गोपैरुक्तिप्रत्युक्तिवादनात्"। पाद्मे च तत्रैव "महिषादेस्तथा भूपा क्रीडनं कारयन्तथा"। तन्माहात्म्यञ्च तत्रैव "एवं गोवर्द्धनो गावः पूजनीया विधानतः। गोवर्द्धनमखोरम्यः कृष्णसन्तोषकारकः"। "गोवर्द्धनस्याकृतिरन्वकारि" माघः।

**गोवर्द्धनधर** पु० गोवर्द्धनं वृन्दावनस्थपर्वतभेदं धरति धर–अच् ६त०। श्रीकृष्णे नन्दनन्दने तस्य तद्धारणकथा हरि० ७५अ० यथा "गवां तत् कदनं दृष्ट्वा दुर्दिनागमजं महत्। गोपांश्च सन्निधनान् कृष्णः कोपं समादधे। स चिन्तयित्वा संरब्धो दृष्टोपायो मयेति च। आत्मानमात्मना वाक्यमिदमूचे प्रियंवदः। अथाहमिममुत्पाट्य सकाननवनं गिरिम्। कल्पयेयं गवां स्थानं वर्षत्राणाय दुर्द्धरम्। अयं धृतो मया शैलः पृथ्वीव्हगृहोपमः परम्। त्रास्यन्ते सव्रजा गावो मद्वश्याश्च भविष्यन्ति। एवं सञ्चिन्तयित्वा तु कृष्णः सत्यपराक्रमः। बाह्वोर्बलं दर्शयिष्यन् समीपे तं महीधरम्। दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः। स धृतः सङ्गतो मेघैर्गिरिः सव्येन पाणिना। गृहभावकृतस्तत्र गृहाकारेण वर्ष्मणा"। "धृतं गोवर्द्धनं दृष्ट्वा परित्रातञ्च गोकुलम्। कृष्णस्य दर्शनं शक्रो रोचयामास विस्मितः" हरि० ७६ अ०।

**गोवर्द्धनधारिन्** पु० गोवर्द्धनं नगं धारयति धारि–णिनि। नन्दनन्दने श्रीकृष्णे। [ वन्ध्यायां गवि।

**गोवशा** स्त्री वशा वन्ध्या गौः जात्या समासे परनि०।

**गोवाट** म० ६त०। गोशालायां गोष्ठे "सार्गलद्वारगोवाटं मध्ये गोस्थानसङ्कुलम्" हरिव० ६१। "गोवाटेषु च ये वृक्षाः परिहृत्मार्गलेषु च। सर्वे गोष्ठाग्निषु गताः पावकक्षयवर्चसः" हरिव० ६५ अ०।

**गोवास** पु० वस आधारे घञ्। ६त०। गवां वासस्थाने गोष्ठे "विवेशमथ कम्पुर्जरामग्रयञ्च धीमतः। गोवासमिव बीभत्सः सिंहा हैमवता यथा" भा० स० २० अ०।

**गोवासदासन** पु० प्राच्ये देशभेदे तत्र भवः "एङ् प्राचां देशे" पा० एङादेर्वृद्धसंज्ञत्वात् छ। गोवासदासनीय तत्र भवे त्रि० तद्राजे पु० "गोवासदासनीयानां वशातीनाञ्च भारत!। प्राच्यानां वाटधानानां भोजानाञ्चाभिमानिनाम्" भा० व० २२अ०।

**गोवासन** पु० गां वासयति वस–णिच्–ल्यु ६त०। गवां वासयितरि ब्राह्मणभेदे। "गोवासना ब्राह्मणाश्च दासनीयाश्च सर्वतः। प्रीत्यर्थं ते महाराज। धर्म्मराजो महात्मनः" भा० स० ५१अ०।

**गोविकर्त्त** पु० गां विकृन्तति वि+कृत–अण् उप० स०। १गोघातके २कर्षके हालिके च। "रौद्रीयजमानस्यावापगोविकर्त्तगृहेभ्यो गवेधुकाम्" कात्या० श्रौ० १५।३।१२। अप्रहतां गां भूमिं विकृन्तति गोविकर्त्तः कर्षुकः गोहिंसको व्याधो वा। "अक्षावापस्य गृहेभ्यो गोविकर्त्तस्य च गवेधुकां सम्भृत्य" शत० ब्रा० ५।३।१।१०। "गोविकर्त्तः कृतगवाक्षहायभूतो गोहिंसको व्याधः" भा०।

**गोविकर्त्तृ** पु० त्रि० गां विकृन्तति वि+कृत–तृच् ६त०। पाकाद्यर्थं गोघातके। "आरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः। आसं युधिष्ठिरस्याहम्" भा० वि० २अ०। "नियोधकः बाहुयुद्धकारी।

**गोवितत** पु० गावो वितता यत्र। गोभूयिष्ठे अश्वमेधयज्ञे "याजयामास तं काण्वो विधिवद्भूरिदक्षिणम्। श्रीमान् गोवितत नाम वाजिमेधमवाप सः" भा० आ० ७४अ०। गोविनतोऽप्यत्र। "गोविनतेन शतानीकः" शत० ब्रा० १३।५।४।१९। "आदाय सत्वा दशमास्यमश्वं शतानीको गोविनतेन" शत०ब्रा० १३।५।४।२। "गोविनतो नाम वक्ष्यमाणस्तोमविशेषोऽश्वमेधः" भा०। तत्स्तोमभेदाः। "चतुर्विंशाः पवमानाः, त्रिवृदग्न्यावर्त्तं सप्तचत्वारिंशाः पवमाना एकविंशान्याज्यानि त्रिणवान्युक्थान्येकविंशानि पृष्ठानि षट्त्रिंशाः पवमानास्त्रयस्त्रिंशमभ्यावर्त्तमग्निष्टोमसामादेकविंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः" ता० ब्रा० उक्ताः।

**गोविदांपति** पु० गां वेदवाणीं विदन्ति गोविदः वेदज्ञास्तेषां पतिः अलुक्स०। परमेश्वरे "अनिरुद्धः सुरानन्दो गोविन्दो गोविदांपतिः" विष्णुस०।

गोविन्द पु० गां वेदमयीं वाणीं गां भुवं धेनुं स्वर्गं वा विन्दति "गवादिषु संज्ञायाम्" पा० श, ६त०। विष्णौ वराहरूपेण भुव ऐश्वर्य्यप्राप्तेः इन्द्रेण स्वर्गस्य निवेदनात् मत्स्यरूपेण वेदस्योद्धारणात् गोभिर्वेदान्तवाक्यैः विद्यते इति वा तस्य तथात्वम् "गोभिरेव यतो वेद्यो गोविन्दः समुदाहृतः" विष्णु सह० भाष्यधृतवाक्यम्" "नष्टां तु धरणीं पूर्वमविन्दत् यत् गुहागताम्। गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः" भा०शा०३४४अ०। "गौरेषा भवतो वाणी तां च वेदयते भवान्। गोविन्दस्तु ततोदेवमुनिभिः कथ्यते भवान्।" तद्भाष्यधृतहरिवं०वाक्यम्। "अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः। गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम्" हरिवं०७६ अ०। गोभिश्च गोविन्दस्याभिषेककथा हरिवं० ७६ अ० यथा "ततः शक्रस्तु तान् दृष्ट्वा घटान् दिव्यपयोधरान्। अभिषेकेण गोविन्दं योजयामास योगवित्। दृष्ट्वाभिषेच्यमानं च गावस्तम् सह यूथपैः। स्तनैः प्रस्रवसंयुक्तैः सिषिचुः कृष्णमव्ययम्।" अभिषिक्तं तु तं गोभिः शक्रो गोविन्दमव्ययम्" इति च।

गोविन्दद्वादशी स्त्री गोविन्दप्रिया द्वादशी। फाल्गुनशुक्लद्वादश्याम् तत्स्वरूपविधानादि ब्रह्म पु० यथा "फाल्गुनामलपक्षे तु पुष्यर्क्षे द्वादशी यदि। गोविन्दद्वादशी नाम महापातकनाशिनी। तस्यामुपोष्य विधिवन्नरः संक्षीणकल्मषः। प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभामिति"। "आमर्दकी द्वादशीति लोके ख्यातेयमेव हि। यत्र आमर्दकीपूजा व्रतमस्यां विशेषतः"। तदुक्तं ब्राह्मे पापनाशिनीमाहात्म्यप्रसङ्गे "फाल्गुने तु विशेषेण विशेषः कथितो नृप! आमर्दक्यामृतं पुण्यं विष्णुलोकप्रदं स्मृताम्"। प्रभासखण्डे च देवीमहेश संवादे "फाल्गुनस्य सिते पक्षे एकादश्यामुपोषितः। स्नात्वा नद्यां तडागे वा वाप्यां कूपे ह्रदेऽपि वा। गत्वा गिरौ वने वापि यत्र वा प्राप्यते शिवा। क्षीरोदे मथ्यमाने तु यदा वृक्षः समुत्थितः। आमर्द्दीति देवानां तेन साऽऽमर्दकी स्मृता। शिवा कण्ठ्योः स्मृतो वृक्षः सेव्यते सुरसत्तमैः। देवैर्ब्रह्मादिभिः सर्वैर्यतोऽसौ वैष्णवः स्मृतः। तेन गत्वा हरिः पूज्यो दत्वर्घ्येऽस्य यां शिवा। पूजया पुष्पैः शुभैरात्रौ कार्य्यं जागरणं हरेः। करकं जलपूर्णन्तु कर्त्तव्यं पात्रसंयुतम्। छविष्याशस्तु कर्त्तव्यं दीपः कार्य्यो विधानतः। एवं जागरणं कार्य्यं कथाश्रवणतत्परैः। मुच्यन्ते देहिनः पापैः कलिजैः कायसम्भवैः। देहान्ते च नराः सर्वे पूज्यन्ते हरिमन्दिरे"।

गोविष् स्त्री ६त०। गोमये अमरः।

गोविषाण न० ६त०। गोः शृङ्गे (सिंग्) "अनर्थकमनायुष्यं गोविषाणस्य भक्षणम्। दन्ताश्च परिमृज्यन्ते रसश्च न च लभ्यते" भा० शा० १४० अ०। "मेषाजं वा गोविषाणोद्भवं वा" सुश्रुतः। गोविषाणं वादनतयाऽस्त्यस्य ठन्। गोविषाणिक गोविषाणनिर्मिते वाद्यभेदे पु०। "पटहान् झर्झरांश्चैव क्रकचान् गोविषाणिकान्" भा० शल्य० ४७ अ०।

गोविष्ठा स्त्री ६त०। गोमये राजनि०।

गोवीथि स्त्री गगनस्थे नक्षत्रभेदत्रयरूपे मार्गभेदे। "नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः। अश्विन्याद्याः कैश्चित्त्रिभाः क्रमाद्वीथयः कथिताः"। "पैतामहाद् त्रिभात्त्रितो गोवीथ्यामश्विन्यः पौष्ण्यं द्वे चापि भद्रपदे" वृ०स० ६अ०।

गोवीर्य्य न० ६त०। गवां वीर्य्ये "अनावनिश्चितायां तु दशमं भागभाग्नु तुः। लाभगोवीर्य्यशस्यानां वर्षिण् गोपकवीवलाः" नारद स०।

गोवृन्द न० ६त०। गोसमूहे हला०।

गोवृन्दारक न० गौर्वृन्दारकमिव उपमितसमासे व्याघ्रादेराकृतिगणत्वेन सिद्धेऽपि "वृन्दारकनागकुञ्जरैः पूज्यमानम्" पा० सामान्यप्रयोगेऽपि अस्य समासार्थं पुनर्वचनमिति सि० कौ०। श्रेष्ठे गवि।

गोवृष पु० गवि वर्षति रेतः वृष–क। श्रेष्ठे वृषे। "ऋषिः स्नात इव प्रोतो महोक्ष इव गोवृषः" भा० व० २०अ०। "गोवृषं पशुवत्सं वापि यथेच्छं विनिवेदयेत्" आ०त० भविष्यपु०। गोवृषं श्रेष्ठवृषम्" रत्नाकरः। "भगवान् गोवृषध्वजः" भा०अनु०८४अ०। "धाम्याणां गोवृषश्चापि गवां लोकप्रपूजितः" भा० आनु० ३४अ०। "अनाथमथ शार्द्दूलं गोवृषन्तु नवाभपि" हरिवं०४अ०। गौश्च वृषश्च तौ शाड्यैनाथस्य अच्। सामान्यविशेषद्योतके गोवलीवर्दन्यायेः, गोवलीवर्दन्यायोऽप्यत्र

गोव्याघ्र न० गौश्च व्याघ्रश्च पदाविरोधित्वात् द्वन्द्वा०। गोव्याघ्रसमाहारे।

गोव्याधिन पु० गोत्रप्रवर्त्तके ऋषिभेदे प्रवराध्याये मूलं दृश्यम्

गोव्रज पु० ६त०। १गोसमूहे। गावो व्रजन्त्यत्र व्रज–आधारे

न। १गोगतिस्थाने २गोष्ठे च पु० "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे" "नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा"। "कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा" मनुः।

**गोव्रत** न० गोहत्यानिमित्तं गोषु व्रतम्। १गोहत्यानिमित्ते गोषु व्रतभेदे तत्र व्रतं विष्णुनोक्तं यथा।

"मासमेकं कृतवापनो गवानुगमनं कुर्य्यात् आसीनास्वासीत स्थितासु स्थितः स्यात् अवसन्नाश्चोद्धरेत् भयेभ्यश्च रक्षेत् तासां शीतादित्राणमकृत्वा नात्मनः कुर्य्यात् गोमूत्रेण स्नायात् गोरसैश्च वर्त्तेत एतद् गोव्रतं गोवधे कुर्य्यात्" पराशरस्तु सापवादं तत्र विशेषमाह "गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः। तद्वधन्तु न तं विद्यात् कामाकामकृतन्तथा। अङ्गुष्ठमात्रस्थूलो यो बाहुमात्रः प्रमाणतः। आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते। दण्डादूर्द्ध्वं यदन्येन प्रहरेद्वा निपातयेत्। प्रायश्चित्तं चरेत् प्रोक्तं द्विगुणं गोव्रतञ्चरेत्। रोधबन्धनयोक्त्राणि घातश्च चतुर्व्विधम्। एकपादञ्चरेद्रोधे द्विपादं बन्धने चरेत्। योक्त्रेषु पादहीनं स्याच्चरेत् सर्व्वं निपातने। गोचारे च गृहे वापि दुर्गेष्वपि समेष्वपि। नदीष्वपि समुद्रेषु खातेऽप्यथ दरीमुखे। दग्धदेशे स्थिताः गावस्तत्रनाद्रोध उच्यते। योक्त्रदामकडोरैश्च घण्टाभरणभूषणैः। गृहे वापि वने वापि बद्धा स्याद्गौर्मृता यदि। तदेव बन्धनं विद्यात् कामाकामकृतञ्च तत्। हले वा शकटे पङ्क्तौ भारे वा पीडितोनरैः। गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तद्वधः। मत्तः प्रमत्त उन्मत्तश्चेतनोवाप्यचेतनः। कामाकामकृतक्रोधाद्दण्डैर्हन्यादथोपलैः। प्रहता वा मृता वापि तद्धि हेतुर्निपातने। मूर्च्छितः पतितोवापि दण्डेनाभिहतः स तु। उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा (पदानि)। ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद् यदि। पूर्व्वव्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते। पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्। पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे तु शिखावर्ज्जं सशिखन्तु निपातने। पादे वस्त्रयुगञ्चैव द्विपादे कांस्यभाजनम्। पादोने गोद्वयं दद्याच्चतुर्थे गोचतुष्टयम्। निष्पन्नसर्व्वगात्रन्तु दृश्यते वा सचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने द्विगुणं गोव्रतं चरेत्। पाषाणेनैव दण्डेन गावोयेनाभिघातिताः। शृङ्गभङ्गे चरेत् पादं द्वौ पादौ नेत्र घातने। लाङ्गूले कृच्छ्रपादन्तु द्वौ पादावस्थिभञ्जने। त्रिपादञ्चैव कर्णे तु चरेत् सर्व्वं निपातने। शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च। यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते। व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना। यवसञ्चापहर्त्तव्योयावद्दृढबलोभवेत्। यावत्सम्पूर्णसर्व्वाङ्गस्तावत्तं पोषयेन्नरः। गोरूपं ब्राह्मणस्याग्रे नमस्कृत्य विसर्ज्जयेत्। यद्यसम्पूर्णसर्व्वाङ्गोहीनदेहोभवेत्तदा। गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्द्दिशेत्। काष्ठलोष्ठकपाषाणैः शस्त्रेणोपहतो बलात्। व्यापादयति यो गान्तु तस्य शुद्धिं विनिर्द्दिशेत्। चरेत् सान्तपनं काष्ठे, प्राजापत्यन्तु लोष्टके। तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम्। पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः। तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश। प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः। अन्यत्राङ्कनलक्ष्मभ्यां वाहने दाहने तथा। सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः। अतिदाहेऽतिवाहे च नासिकाभेदने तथा। नदीपर्व्वतसञ्चारे प्रायश्चित्तं विनिर्द्दिशेत्। अतिदाहे चरेत् पादं द्वौ पादौ वाहने चरेत्। नासिके पादहीनन्तु चरेत् सर्व्वं निपातने। दहनात्तु विपद्येत अनड्वान् योक्त्रयन्त्रितः। उक्तं पराशरेणैव ह्येकपादं यथाविधि। रोधबन्धनयोक्त्राणि भारः प्रहरणं तथा। दुर्गप्रेरणयोक्त्रञ्च निमित्तानि वधस्य षट्। बन्धपाशसुगुप्ताङ्गोम्रियते यदि गोपशुः। भवने तस्य पापस्य पापी कृच्छ्रार्द्धमर्हति। न नारिकेलैर्न च शाणबालैर्न चापि मौञ्जैर्न च बल्कशृङ्खलैः। एतैस्तु गावोन निबन्धनीयाबद्धा तु तिष्ठेत् परशुं गृहीत्वा। कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्। पाशलग्नाग्निदग्धेषु प्रायश्चित्तं न विद्यते। यदि तत्र भवेत् मृत्युः प्रायश्चित्तं कथं भवेत्?। जपित्वा पावनीं देवीं मुच्यते तत्र किल्विषात्। प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन्। गवाशनेषु विक्रीणंस्ततः प्राप्नोति गोवधम्। आराधितस्तु यः कश्चिद्भिन्नकक्षोयदा भवेत्। श्रवणं हृदयं भिन्नं मग्नोवा कूपसङ्कटे। कूपादुत्क्रमणे चैव भग्नोवा ग्रीवापादयोः। स एवं म्रियते, तत्र त्रीन् पादांस्तु समाचरेत्। कूपखाते तटीबन्धे नदीबन्धे प्रपासु च। पानीयेषु विपन्नानां प्राय-

श्चित्तं न विद्यते। कूपखाते तटीखाते दीर्घखाते तथैव च। अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते। वेश्मद्वार निवासेषु योनरः खातमिच्छति। स्वकार्य्यं कूपखातेषु प्रायश्चित्तं विनिर्द्दिशेत्। निशि बन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च। अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते। ग्रामघाते शरौघेण वेश्मभङ्गनिपातने। अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते। संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च। दावाग्नौ ग्रामघाते वा प्रायश्चित्तं न विद्यते। यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने। यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते। व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा। भिषङ्मिथ्योपचारे च प्रायश्चित्तं विनिर्द्दिशेत्। गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः। न वारयन्ति तां तेषां सर्वेषां पातकं भवेत्। एको हतो यैर्बहुभिः समस्तैर्न ज्ञायते कस्य हतोऽभिघातात्। दिव्येन तेषामुपलभ्य हन्ता निवर्त्तनीयो नृपसन्नियुक्तैः। एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्। पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्। हतेषु रुधिरं दृश्यं व्याधिग्रस्तः कृशोभवेत्। लाला भवति दष्टेषु एवमन्वेषणं भवेत्। मनुना चैवमेकेन सर्वशास्त्राणि जानता। प्रायश्चित्तन्तु तेनोक्तं गोघ्नश्चान्द्रायणं चरेत्। केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत्। द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत्। राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्द्दिशेत्। यस्य न द्विगुणं दानं केशश्च परिरक्षितः। तत्पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत्। यत्किञ्चित् क्रियते पापं सर्वं केशेषु तिष्ठति। सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम्। एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम्। न स्त्रियाः केशवपनं न दूरे शयनासनम्। न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत्। नदीषु सङ्गमे चैव अरण्येषु विशेषतः। न स्त्रीणामजिनं वासो व्रतमेवं समाचरेत्। त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्चनं तथा। बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम्। गृहेषु निवसेत् तिष्ठन् विधिं सम्यगाचरेत्। इह योगावधं कृत्वा प्रच्छादयितुमिच्छति। स याति नरकं घोरं कालसूत्रमसंशयम्। विमुक्तो नरकात्तस्मान्मर्त्यलोके प्रजायते। क्लीवो दुःखी च कुष्ठी च सप्त जन्मानि वै नरः। तस्मात् प्रकाशयेत् पापं स्वधर्मं सततं चरेत्। स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विवर्जयेत्"। अधिकं गोवधशब्दे

इत्युक्तम्। गोहितं व्रतम्। ३गोमेधाख्ये यज्ञे गोसवे तत्परिचर्य्याप्रकारश्च उदा० तत्प्रकारश्च तत्र दृश्यः।

**गोशकृत्** न० ६त०। गोमये जटा०। "उदकुम्भं सुमनसो गोशकृन्मृत्तिकाः कुशान्। पयोदत्तं वाऽऽमरणाद्गोशकृत्समेव वा" मनुः।

**गोशर्य्य** त्रि० शॄ—कर्त्तरि वा० यत् गोः शर्य्या शीर्णा यस्य। शीर्णगो शर्य्यो" "आभिर्गोशर्य्यमावतम्" ऋ० ८।८।१०। "गोशर्य्यः शम्युः" भा०।

**गोशाल(ला)** स्त्री न०। गवां शाला "विभाषा सेनेत्यादिना" वा क्लीवता। गवां शालायाम्। तत्र जातः एकादित्वं प्राप्ते मते वृद्धसंज्ञत्वात् छ, अन्यमते अण्, तस्य स्थानान्तगोशालेत्यादि पा० लुक्। गोशाल तत्र जाते त्रि०। स्त्रीत्वपक्षे तु न लुक्। गोशालीय गौशाल वा तत्र जाते त्रि० इति भेदः।

**गोशीर्ष** पु० गोः शीर्षमिव शीर्षं यस्य। १ऋषभपर्व्वते तस्य गोशीर्षाकारशृङ्गत्वात् तथात्वम्। स आकरत्वेनास्त्यस्य अच्। २चन्दनभेदे। गोशीर्षोत्पत्तिकथा रामा० कि० का० ४१स० १९।४०श्लो०। "तत्र देशमतिक्रम्य महार्णवसंस्थितः। सर्वरत्नमयः श्रीमानृषभो नाम पर्वतः। गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम्। दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम्"। तदाकारे ३अस्त्रभेदे च "कार्य्यं गुडैर्भिन्दिपालैर्गोशीर्षैर्मुसलैरपि" भा० द्रो० १७९ अ०। ६त०। ४गोमस्तके न०।

**गोशीर्षक** पु० गोः शीर्षमिव कायति कै—क। १द्रोणपुष्पीवृक्षे रत्नमा० स्वार्थे क। २चन्दनभेदे गोशीर्षशब्दे उदा०।

**गोशृङ्ग** पु० गोः शृङ्गमिव शृङ्गमस्य। ऋषिभेदे "हिमवद्वनमध्यस्थो गोशृङ्गः ऋषिसत्तमः" "गोशृङ्गस्य ऋषेस्तत्र दृश्यते तपआश्रमः" स्क० पु० प्रभा० ख०। २दक्षिणदेशस्थे पर्व्वतभेदे च। "तथैव सहदेवोऽपि प्रययौ दक्षिणां दिशम्" इत्युपक्रमे "निषादभूमिं गोशृङ्गं पर्व्वतप्रवरं तथा। तरसैवाजयद्धीमान्" भा० स० ३०अ०। ६त०। ३गोर्विषाणे न०। तदाकारोऽस्त्यस्य अच्। ४वर्व्वरवृक्षे पु० राजनि०।

**गोश्रुति** पु० व्याघ्रपद्गोत्रापत्ये ऋषिभेदे "तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोवाच" छा० उ०।

**गोष्ट** इ० दि० च०। इतरे० ष्टु० परस्मैपदम् "संघातप्रतीतिञ्च" पा० "यथोक्तानिताने तथैव साधूनि स्युः" ।व०

कौ० । पक्षे नैकवद्भावः न क्लीवता च । अपि अश्वे च । पक्षे एकवद्भावः अवङ् च । तन्नार्थे न० ।

**गोष(स)ख** पु० गौः सखाऽस्य वेदे वा षत्वम् । १गोसहायके “स्तोता मे गोषखा स्यात्” ऋ० ८।१४।१। “यस्मिन्निन्द्रः सोमं पिबति गोसखायम्” ऋ० ५।२७।४। इत० अच् समा० न षत्वम् । २गोः सहाये

**गोषड्गव** न० गवां षट्कम् गो+षड्गवच् । गोषट्के एवं छागषड्गवादयश्छागादिषट्के न० ।

**गोषणि(सनि)** त्रि० गां सनोति ददाति सन–दाने इन् सवनादिषु पाठात् न नित्यं षत्वम् किन्तु पूर्व्वपदात् वा षत्वम् । १गोदातरि “यस्ते अश्वसनिर्भक्षोयोगोसनिस्तस्य” यजु० ८।१२। पक्षे षत्वम् । “गोषणिं धियमश्वं वाजसासुत” ऋ० ६।५३।१०।

**गोषद्** त्रि० गवि वाचि सीदन्ति सद–क्विप् पूर्व्वपदात् षत्वम् । स्वल्पवाक्ये । गोषदितिशब्दोऽस्त्यत्राध्यायेऽनुवाके वा गोषदा० वुन् । गोषदक गोषच्छब्दयुक्ते अध्याये अनुवाके च पु० । षत् । गोषद तन्नार्थे त्रि० ।

**गोषदादि** पु० अध्यायानुवाकयोः “गोषदादिभ्यो वुन्” पा० मत्वर्थे वुन्प्रत्यय निमित्ते शब्दगणे । स च गणः पा०ग० सू० उक्तो यथा गोषद् इषेत्वा मातरिश्वन् देवस्यत्वा देवीरापः कृष्णोस्याखरेष्ठो देवीधियः रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त्त कृशानु गोषद” ।

**गोषन्** त्रि० गां सनोति सन–विच् इत० “सनोतेरनः” पा० नान्तस्य नित्यषत्वनिषेधेऽपि पूर्वपदात् वा षत्वम् । गोदातरि “शंसामि गोषणो नपात्” ऋ० ४।३२।२२ ।

**गोषा** त्रि० गां सनोति सन–विट् ङा । सनोतेरनः” पा० षत्वम् । गोदातरि “गोषा इन्द्रोनृषामसि” सि० कौ० धृता श्रुतिः “इत्था गृणन्तो महिनस्य शर्म्मन् दिविष्याम पार्य्ये गोषतमाः” ऋ० ६।३३।५। अत्र “घरूपेत्यादि” पा० सू० गोषाशब्दस्य तमपि परे ह्रस्वः ।

**गोषा(सा)ति** स्त्री षो–भावे–क्तिन् ऊतियूतीत्यादिना नि०, सन–भावे क्तिन् ङा वा इत० षत्वम् । १गोलाभे २गोदाने च “गोषाता यस्य ते गिरः” ऋ० ८।८४।७। “गोषातौ गवां लाभे” भा० सप्तम्या डाच् एव सुस्वरम् । गवां सातिर्लाभोऽस्य । ३लब्धगौ लब्धपशुके त्रि० “सम गोषाता ऋषितेषु खादिषु” ऋ० १०।२८।१। गोषातौ लब्धपशुके” भा० ।

**गोषादी** स्त्री गां सादयति सद–णिच्–अच् उ० स० गौरा० ङीष् । पक्षिभेदे । “गोषादी देवानां पत्नीभ्यः” यजु० २४।२४। ।

**गोषेधा** स्त्री गौरिव सेध उत्सेधोयस्याः पूर्वपदात् षत्वम् । दुर्लभायां स्त्रियाम् । “विश्वपदीं वृषदतीं गोषेधां विधमामुत” अथ० ११।१८।४। [ जुगोष्ट ।

**गोष्ट** संघाते भ्वा० आत्म० अक० सेट् । गोष्टते अगोष्टिष्ट ।

**गोष्टोम** पु० गौसंज्ञः स्तोमोऽत्र । उक्थसंस्थे बहुमन्त्रात्मके १स्तोमभेदे । २तदुपलक्षिते एकाहसाध्ये यागभेदे च “स एतान् स्तोमानपश्यत् ज्योतिर्गौरायुरितीमे वै लोका एते स्तोमा अयमेव ज्योतिरयमाध्यमो गौरसावुत्तम आयुः” ता० ब्रा० ४।१।७।

“स पूर्व्वोक्तः प्रजापतिः एतान् स्तोमान् स्तोमशब्देन त्रिवृदादिस्तोमवन्त्यहानि कथ्यन्ते । तानि ज्योतिर्गौरायुरिति एतन्नामकान्यपश्यत् । तत्र ज्योतिरग्निष्टोमसंस्थः, गौरायुश्चैते उक्थसंस्थे० ज्योतिष इयं स्तोमकॢप्तिः । त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविंशोग्निष्टोमसामेति । अथ गोष्टोमस्य, पञ्चदशोबहिष्पवमानः त्रिवृदाज्यानि सप्तदशमाध्यन्दिनं सवनमेकविंशं तृतीयसवनम् । अथायुष्टोमस्य त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशमाध्यन्दिनं सवनमेकविंशं तृतीयसवनमिति । एते उक्ताः स्तोमा इमे लोका वै भूरादिकाः खलु, कः कतमोलोक इति बुभुत्सायामाह अयमेव लोकोज्योतिः, अयमाध्यमोऽन्तरिक्षलोको वै असावुत्तमस्तृतीयः स्वर्लोक आयुः, स्तोमत्रयस्य लोकत्रयेण सह संख्यासाम्यात् तथ्यत्वता एतैः त्रिभिः स्तोमैः साधनैस्त्रीन् लोकान् प्राजनयदिति शेषःअथैतान् विधत्ते” भा० ।

“यदेते स्तोमा भवन्तीमानेव लोकान् प्रजनयन्त्येषु लोकेषु प्रतितिष्ठन्ति” ता० ब्रा० ८ । “यदेषोऽतिरात्रो भवतीति वाक्यवदेतत्सर्वं व्याख्येयम् । अभिप्लवषडहस्योत्तरं त्र्यहं विधातुमाह” भा० “स एतन्त्र्यहं पुनः प्रायुङ्क्त तेन षडहेन षट्क्रतून् प्राजनयत्” ता०ब्रा०८ ।“स प्रजापतिरेतं पूर्व्वोक्तं त्र्यहं पुनः प्रयुक्तवान् । गौरायुर्ज्योतिरिति क्रमोऽत्रावगन्तव्यः । तथा चापस्तम्बः “ज्योतिष्टोममग्निष्टोमं रथन्तरसामानमुक्थ्यं बृहत्सामानमायुषमुक्थं रथन्तरसामानं ज्योतिष्टोमं बृहत्सामानमिति । तेन षडहेन षट् क्रतून् वसन्ता-

दीन् प्राजनवत् सृष्टवान् । यथार्थवादानुगुण्याय पूर्व्व-विहितेन त्र्यहेन संयुज्य इममुत्तरं त्र्यहं विधत्ते" भा० । "तदेष षडहो भवति ऋतूनेव प्रजनयन्ति ऋतुषु प्रतितिष्ठन्ति" ता० ब्रा० १० ।

**गोष्ठ** न० गावस्तिष्ठन्त्यत्र घञर्थे क षत्वम् । गवां स्थाने अमरः । "गोष्ठेषु गोष्ठीकृतमण्डलासनाम्" माघः । गोष्ठी बहुजनाः कर्त्तृतयाऽस्त्यस्य अच् । २गोष्ठीकर्त्तव्ये श्राद्धभेदे न० "पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु सुस्रुतम्" मनुः "गोष्ठे गोष्ठीश्राद्धे "गोष्ठ्यां शुद्ध्यर्थमष्टमम्" इति विश्वामित्रेण द्वादशविधश्राद्धगणनायां गोष्ठश्राद्धस्य विधानात्" कुल्लू० ।

**गोष्ठपति** पु० ६० । गोः स्थानाध्यक्षे अमरः ।

**गोष्ठश्व** पु० गोष्ठे श्वा अचतुरेत्यादि अच् समा० । १गोष्ठस्थे शुनि तत्तुल्ये परहिंसके स्वगृहे स्थित्वा २परद्वेष्टरि च सिद्धा० । षष्ठीसमासे तु न अच् समा० । गोष्ठश्वा इत्येव

**गोष्ठागार** न० ६त० । गोष्ठस्य सभाया बहुजनस्थानस्यागारम् । बहुजनागारे गृहे हारा० ।

**गोष्ठाध्यक्ष** पु० ६० । गोष्ठपतौ ।

**गोष्ठान** न० गोः स्थानं वेदे पूर्वपदात् षत्वम् । १गवां स्थाने गोष्ठे । "व्रजं गच्छ गोष्ठानम्" यजु० १।२५ । लोके तु गोस्थानमित्येव । "गोष्ठं गोस्थानकम्" अमरः ।

**गोष्ठा(पा)ष्टमी** स्त्री "कार्त्तिके शुक्लपक्षे तु स्मृता गोष्ठा(पा)ष्टमी बुधैः । तद्दिने वासुदेवोऽभूत् गोपः पूर्वन्तु वत्सपः" इत्युक्तायामष्टम्याम् गोपाष्टमीशब्दे दृश्यम् ।

**गोष्ठि** स्त्री गावो वाग्विशेषास्तिष्ठन्त्यत्र स्था—बा० कि ६त० षत्वम् । १गोष्ठीशब्दार्थे २परस्परसंलापे च । "आलस्यं मदमोहौ च चापलं गोष्ठिरेव च । स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च । एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः" भा० उ० १५६२ श्लो० ।

**गोष्ठी** स्त्री गावोऽनेकावाचस्तिष्ठन्ति यत्र स्था—घञर्थे क । ६त० अम्बाम्बेति षत्वम्" गौरा० ङीष् । १सभायां परिषदि । "तत्र गोष्ठीषु रथ्यासु सिद्धप्रव्रजितेषु च । भा० वि० ६ । २परस्परालापे "गोष्ठीसुखमनुभवन्तस्तिष्ठन्ति" हितो० । ३पोष्यवर्गे च" । "विषं गोष्ठी दरिद्रस्य" चाणक्यः । ४समूहे गोष्ठशब्दे उदा० । सभायाम् अस्य पुंस्त्वमपि । "ससञ्चरान् पर्वतसन्निरोधान् गोष्ठान् हरीणां गिरिसेतुमालाः । भा० व० १७७ अ० ।

**गोष्ठीपति** पु० ६त० १गङ्गापोष्यवर्गपालके २सभापतौ च ।

**गोष्ठेक्ष्वेडिन्** पु० गोष्ठे क्ष्वेडते क्ष्विड—क्ष्वेडे णिनि पात्रे समि० नि० । प्रगल्भे । युक्तारोह्या० आद्युदात्ततास्य । एवं गोष्ठेगल्भ गोष्ठेपटु गोष्ठेपण्डितः गोष्ठेशूरः गोष्ठेविजित इत्येतेऽपि पात्रेसमिता नि० । सभाप्रगल्भे सभाशूरे । पूर्व्ववत् आद्युदात्ततैषाम् ।

**गोष्ठेशय** पु० गोष्ठे गोस्थाने शेते शी—अच् अलुक् स० । गोव्रतार्थं गोष्ठशयनकारके । "पञ्चगव्यं पिबेत् गोघ्नो मासमासीत संयतः । गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति" याज्ञ० ।

**गोष्ठ्य** त्रि० गोष्ठे भवः यत् । १गोष्ठे भवे । २रुद्रभेदे पु० । "नमो व्रज्याय च गोष्ठ्याय च" यजु० १६।४४ ।

**गोष्पद** न० गोः पदम्, गावः पद्यते यस्मिन् देशे वा "गोष्पदं सेवितासेवितप्रमाणेषु" पा० सेवितादौ सुट् । गोः पदजाते १गर्त्ते, २गोपदप्रमाणे च । ३गोभिः सेवितदेशे ४तदसेविते वनादौ च । "बाहुभ्यां सागरं तीर्त्वा लङ्घितुं गोष्पदं लघु" रामा०ल०६८स० । "भीष्मद्रोणार्णवं तीर्त्वा कर्णपातालं (वडवानल) सम्भवम् । मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम्" भा० श० ७अ० । ५प्रभासक्षेत्रस्थे तीर्थभेदे । तत्स्थानादि स्क०पु० प्रभा० "इयं सरस्वती पुण्या सर्वदैव हि विद्यते । पञ्चस्रोताः प्रभासे तु दुष्प्रापा त्रिदशैरपि । तस्या यत्पञ्चमं स्रोतो न्यङ्कुमत्यास्तटानि च । तस्य मध्ये स्थितं तीर्थं गोष्पदेति च विश्रुतम्" "पापिनां शुद्धिदं तीर्थमाद्या इह गया स्मृता । तदास्मिन् गोष्पदं नाम यत्तो ख्यातं धरातले । यदा क्षीरोदमथनात् प्रसूता लोकमातरः । तदा देवि ! समन्तात्तु ता गतास्तीर्थसन्निधौ । पदं तत्र निमग्नं च नन्दिन्यास्तु शिलातले । शिलां खुराङ्कितां दृष्ट्वा जानुदेशाङ्कितां तथा" इत्युपक्रमे देवान् प्रति नन्दिनीवाक्यम् । "इदं मम पदं देवाः ! शिलासंस्थं विराजते, गगनाङ्गणभूमिस्थं चन्द्रबिम्बमिवापरम् । अद्य प्रभृति भो देवा ! त्रैलोक्ये सचराचरे । गोष्पदं नाम विख्यातं लोके ख्यातिं गमिष्यति" ।

**गोस** पु० गां जलं स्यति सो—क । १बोले २उष्णकाले ३विभाते मेदि० ।

**गोसङ्ख्य** पु० गाः संचष्टे सम्+चक्ष—अच् । गोपे । अमरः "गोसङ्ख्य आसं कुरुपुङ्गवानाम्" । "तेषां गोसङ्ख्य आसं वै तन्तिपालेति मां विदुः" इति च भा० वि० १०अ० ।

**गोसत्र** पु॰ गोभिः कृतं सत्रम्। गवामयनाख्ये सत्रभेदे "गावो वा एतत् सत्रमासत" ता॰ब्रा॰ ४,१,१, गवामयन शब्दे विवृतिः।

**गोसदृक्ष** पुंस्त्री॰ गोः सदृक्षः। गोतुल्ये गवये हेम॰। २आकृत्यादिना गोतुल्ये त्रि॰। गोसदृशादयोऽपि तत्रार्थे।

**गोसनि** पु॰ गां सनोति सन–इण् इत॰ पूर्व्वपदात् वा षत्वे प्राप्ते सनना॰ न षत्वम्। गोदातरि गोषणिशब्दे उदा॰ दृश्यम्। "गोसनिं वाचमुदेयम्" अथ॰ ३।२०।१०।

**गोसम्प्रदाय** त्रि॰ गां सम्प्रददाति सम्+प्र+दा–"आतोऽनु-पसर्गे" पा॰ अनुपसर्गेत्युक्तेः न कः किन्तु अण्। गोसंप्रदातरि।

**गोसम्भवा** स्त्री॰ गोरिव सम्भवो लोमादिरूपाकारो यस्याः। १श्वेतदूर्वायां राजनि॰। २गोजाते त्रि॰।

**गोसर्ग** पु॰ गावः सृज्यन्तेऽत्र काले सृज–आधारे घञ्। गवां वनगमनाय मोचन काले सूर्य्यस्य किरणानां त्याग-काले १प्रातःकाले "गोसर्गे चार्द्धरात्रे च तथा मध्य-न्दिनेषु च" सुश्रु॰। [ख्याते गोधाख्ये जन्तौ।

**गोसर्प** पुंस्त्री॰ गोरिव चतुश्चरणवत्त्वात् सर्पः। (गोसाप)

**गोसव** पु॰ गौः सूयते हिंस्यतेऽत्र सू–हिंसायाम् आधारे अप् पूर्व्वपदात् वा न षत्वम्। गोसत्राख्ये यज्ञभेदे "स्वर्जिता गोसवेन वा" हेमा॰ दा॰ विष्णुपु॰। तत्कर्त्त-व्यता च कात्या॰ श्रौ॰ २२,११,१ सूत्रादौ उक्ता यथा "ऋषभगोसवौ" १सू॰ "ऋषभोगोसवश्च क्रतू भवतः" कर्कः "पूर्व्वो राज्ञः" २सू॰ "पूर्व्वः ऋषभसंज्ञको राज्ञः" कर्कः "दक्षिणा ऋषभसहस्रं द्वादशं वा शतम्" ४सू॰ "विकल्पेन ऋषभसंज्ञक ऋषभाणां सहस्रं, द्वादशाधिकं शतं वा" (दक्षिणा) कर्कः। "उक्थ्यो गोसवोऽयुत दक्षिणः" ६सू॰। गोसवसंज्ञः क्रतुरुक्थसंस्थो भवति अयुतदक्षिणश्च कर्कः। "वैश्यस्य इत्येके" ७सू॰ मन्यन्ते। "सर्व्वेषामित्यपरे" ८सू॰। स्वराजानो विशो यं पुरस्कुर्व्वीरन् स एतेन यजेत" ९सू॰। "राज्ञा रहिता विशः प्रजाः सर्व्वे पुरुषा यं पुरस्कुर्व्वीरन् मुख्यत्वे-नाङ्गीकुर्व्वीरन् स गोसवेन यजेत"। "आस्य-ण्डिलेऽभिषिच्यते" १०सू॰। "प्रतिदुराहवनीयस्य दक्षि-णतः" ११सू॰। "स्थितः आगान्तुकत्वादन्ते। आहवनीयात् दक्षिणस्यां स्थण्डिले उपविष्टो यजमानः प्रतिदुग्धा-धारोष्णेन दुग्धेनाभिषिच्यते "संस्थपतिरित्येनं ब्रूयुः "गोसवयाजिनं जनाः" कर्कः। "वैश्यस्तोम दक्षिणा-लिङ्गो भवतृस्तोमोगणयज्ञो भ्रातृव्यां सवीनां वा १२सू॰। वैश्यस्तोमदक्षिणायां यानि लिङ्गानि तान्यत्रापि भवन्ति" कर्कः। गां स्वर्गं सुनोति अच् षत्वम् "दातुः स्वर्गदातरि" "तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः" तिलदानमन्त्रः।

**गोश्वस्** पु॰ गवि जले श्वसिति श्वस–बा॰ असुच् उत॰। वेले रायसकुटः।

**गोसहस्र** न॰ गवां सहस्रं दातव्यतया यत्र। तुलापुरु-षादिषोडशमहादानान्तर्गते पञ्चमे महादानभेदे "अथातः संप्रवक्ष्यामि महादानानुकीर्त्तनम्"। "यत्तत् षोडशधा प्रोक्तं वासुदेवेन भूतले" इति चोपक्रम्य "कल्पपाद पदानञ्च गोसहस्रं च पञ्चमम्" इत्युक्ता तद्दान प्रकारः हेमा॰ दा॰ मत्स्य पु॰ उक्तो यथा

"मत्स्य उवाच। अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। गोसहस्रप्रदानाख्यं सर्वपापहरं परम्। पुण्यं तिथि-मथासाद्य युगमन्वन्तरादिकम्। पयोव्रतस्त्रिरात्रं स्यादे-करात्रमथापि वा। लोकेशावाहनं कुर्य्यात् तुलापुरुष-दानवत्। पुण्याहवाचनं कुर्य्याद्धोमः कार्य्यस्तथैव च। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। वृषं लक्षण संयुक्तं वेदिमध्येऽधिवासयेत्। गोसहस्राद्विनिष्क्रम्य गवां दशकमेव"। पयोव्रतस्त्रिरात्रमिति दानदिनात् पूर्व्वं त्रिरात्रं पयोव्रतः स्यादित्यर्थः, अन्नादिशब्देन देश-काल–इन्द्रिन्यास–शिवादिपूजा–गुरुर्त्विग्वरण–मधुपर्क-दान–कुण्डवेदिवितान–चक्रलेखनपताकादीनि मत्स्य-पुराणोक्ततुलापुरुषदाने विहितानि गृह्यन्ते। वृषं लक्षण संयुक्तं, वृषलक्षणानि, "उन्नतस्कन्धककुदम् ऋज्वलायत कम्बलम्" इत्यादीनि वृषोत्सर्गप्रकरणे मत्स्यपुराणोक्तान्येव वेदितव्यानि, गोसहस्राद्विनिष्क्रम्येति दशोत्तरगोसह-स्रादिति वेदितव्यम्, अग्रे दशाधिकगोसहस्रविनियोगदर्श-नात्। यद्यपि गवां दशकमित्यत्र गोमात्रप्रतीतिः तथापि उत्तरत्र "ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेदिति" धेनुसंशब्दनात्, पुराणान्तरे "गोसहस्राद्विनिष्क्रम्य वत्सं दशकं गवामिति" वचनाच्च धेनुदशकमेवाभिधावनीयम्। इतरत्र पुनर्गोमात्रं धेनुरूपत्वादरः। "गोसहस्रं वहिः कुर्य्याद्वस्त्रमाल्यविभूषितम्। सुवर्णशृङ्गाभरण रौप्यपाद-समन्वितम्। अतः प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत्। सुवर्ण–घण्टिकायुक्तं ताम्रदोहनिकान्वितम्। सुवर्णति-लकोपेतं हेमपट्टैरलङ्कृतम्। कौशेयवस्त्रसंवीतं माल्यगन्ध-

तदवाप्नोति विप्रेभ्यो गोसहस्रप्रदो नरः। अश्वमेधं वृषोत्सर्गं गोसहस्रन्तु यः। दद्याच्छोभाय युक्ताङ्गः पितरस्तर्पयन्ति हि। तस्मादनेन विधिना गोसहस्रन्तु यो नरः। प्रदद्यात् स विशुद्धात्मा याति तत् परमं पदमिति"। मत्स्यपुराणे "अनेन विधिना यस्तु गोसहस्रप्रदो भवेत्। सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः, विमानेनार्कवर्णेन किङ्किणीजालमालिना। सर्वेषां लोकपालानां लोके संपूज्यते सुरैः। प्रतिमन्वन्तरं तिष्ठेद्राजराजो भवेत् पुनः। अश्वमेधशतं कुर्यात् शिवध्यानपरायणः। वैष्णवं लोकमास्थाय ततो मुच्येत बन्धनात्। पितरश्चाभिनन्दन्ति गोसहस्रप्रदं शुभम्। अपि स्यात् स कुलेऽस्माकं पुत्रो दौहित्र एव च। गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति। स यस्तत्कर्मकरो वा स्यादपि द्रष्टा तथैव च। संसारसागरादस्मादस्मान् सन्तारयिष्यति। इति पठति य एतद्गो-सहस्रप्रदानं सुरभुवनमुपेयात् सोऽपि पश्येत्। अनुमवति शृणुं वा वाच्यमानो निकामम् प्रहतकलुषदेहः सोऽपि यातीन्द्रलोकम्"।

अन्यपुराणोक्तस्तद्विधिस्तत्रैव दृश्यः। ६त०। २गवां सहस्रे च। गोसहस्रं तद्दानफलं विद्यतेऽस्य अच्। गौरा० ङीष्। ३शोभनारयुतायाम् ४अकृष्णचारयुतायां वा। अमावास्यायाम् स्त्री। जाह्नवीस्नाने तत्सात्त्वपुण्यजनकत्वमुक्तं ति० त० व्यासेन "अमावास्यां भवेद्वारो यदि भूमिसुतस्य च। गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी। सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्। गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्"।

**गोसाद** त्रि० गां सादयति षद—णिच् अण् उप० स०। गोनाशके गोसारथौ "गोः सदसादिसारथिषु" पा० पूर्व्वपदप्रकृतिस्वरः।

**गोसादिन्** त्रि० गां सादयति सद—णिच्—णिनि ६त०। गोसारथौ। गोसादवत् पूर्व्वपदे प्रकृतिस्वरः।

**गोसारथि** पु० ६त०। गोनाशके सारथौ गोसादवत् पूर्व्वपदे प्रकृतिस्वरः।

**गोस्तन** पु० गोः स्तन इव गुच्छो यस्य। १चतुर्यष्टिकहारे अमरः। ६त०। २गोःस्तने च "करीरपनसाश्च गोस्तनाकाराणि" "सदसं गोस्तनाकारं सर्वभूतसुखोद्भवम्" सुश्रु०।

**गोस्तना(नी)** स्त्री गोः स्तन इव फलमस्याः स्वाङ्गत्वात् वा ङीष्। १कपिलद्राक्षायाममर टाबन्तः गोः स्तनाद्रव स्तना अस्याः ङीष्। २कुमारानुचरमातृभेदे। "शृणु मातृगणान् राजन्! कुमारानुचरानिमान्" इत्युपक्रमे" प्रभावती विशालाक्षी पालिता गोस्तनी तथा" भा० श० ४७अ०।

**गोस्तोम** पु० गोनामकः स्तोमः पूर्व्वपदात् वा णत्वाभावः। एकाहसाध्ये अग्निष्टोमाङ्गे यज्ञभेदे। "गोस्तोमभूमिस्तोमवतस्त्रतिवयागाम्" आश्व० श्रौ० ८।५।२। "गोस्तोमो भूमिस्तोमोवनस्पतिसव इति त्रयः एकाहाः कर्त्तव्याः" नारा० वृ०। गोष्टोमशब्दे विवृतिः।

**गोस्थान** न० ६त०। गोष्ठे अमरः "मध्ये गोस्थानसङ्कुलम्" हरिवं० ६१अ०। स्वार्थे क। तत्रार्थे।

**गोस्वामिन्** ६त०। गवां स्वामिनि। "तावत् भूयो वा गोस्वामिने दत्त्वा" कात्या० श्रौ०। १५।६।१२। "गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः। "प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्" पराशरः। गवामिन्द्रियाणां स्वामी। २जितेन्द्रिये यतीनामुपाधिभेदे। वोपदेवगोस्वामी रूपगोस्वामी।

**गोह** पु० गुह्यतेऽत्र गुह—घञ् बा० अत्वाभावः। गेहे "अग्निर्गोपिथस्य गोहे" ऋ० ४,२१,६। 'गुहा यदीमौशिजस्य गोहे" ७ "विदद् गौरस्य गवयस्य गोहे" ८ "गोहे गृहे" भाष्यम्। तस्यादूरभवोदेशः सुवास्त्वा० अण्। गौह गेहादूरभवे त्रि० स्त्रियां ङीप्।

**गोहत्या** स्त्री ६त०। गोहनने। प्राणवियोगफलकव्यापारो हननम् यथाह वह्निपु० "स्यात् प्राणवियोगफलकव्यापारो हननं स्मृतम्। रागात् द्वेषात् प्रमादाद्वा स्वतः परत एव वा"। हत्यायाः ज्ञानाज्ञानकृतत्वं च प्रा० त० व्यक्तपि यथा

"अथ ज्ञानकृताद्विनिरूपणम्। तत्र गोवधस्य बुद्धिपूर्वकत्वं तदा भवति, यदि गां ज्ञात्वा एतां हन्मीति इच्छया हन्ति, तदा कामकाहारैव ज्ञानस्य प्रवृत्त्यङ्गत्वात्, तदभावे त्वबुद्धिपूर्वकत्वम्। अतएव प्रवृत्त्यङ्गज्ञानस्य कामनाव्यभिचाराभावादेव 'कृच्छ्रांस्तु चतुरः कुर्यात् गोवधे बुद्धिपूर्वके। अमत्या च द्वयं कार्य्यम्, इति मिताक्षरावचने ज्ञानाज्ञानाभ्यां द्वैविध्यमुक्तम् अन्यत्र कामाकामाभ्यामित्युक्तम् यथा बृहस्पतिः "कामाकामकृतं लोके महापाप द्विधा मतम्। पुनराम्नायेऽपि चैव निष्कृतिर्द्विविधा स्मृता"। इत्यत्र गवयादिभ्रमेण गोगोवधस्तत्र वधस्य न ज्ञानकृतत्व गोत्वेनाज्ञानात्। गोत्वेन गां जानन्नप्यन्योद्देशेन प्रहारादिना यदि हन्ति

एकप्रयत्नजन्यत्वेनैकमेव गुरुतरं पापमिति प्रायश्चित्तमपि तथा। बहूनामित्येकाधिकपरम्। तदविवक्षायामपि गोद्वयवधे प्रयत्नाभेदेऽपि विशेषवचनाभावात् प्रायश्चित्तद्वैगुण्यं युक्तम्। अपिशब्दात् खड्गदाहादिना। कामकृते तु प्रायश्चित्तावृत्तिः। यथोपपातकानुवृत्तौ यमः "गोघ्नश्छिन्नः कृच्छ्रचान्द्रायणमथापि वा। अभ्यासे तु ततो भूयस्ततःशुद्धिमवाप्नुयात्"। तयोर्गोवधतदन्योपपातकयोः। अंगिराश्चाह "एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्। पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक्"। हत्याया यत्र यद्विहितं व्रतं तत्र तस्यैव पादं प्रत्येकं कुर्युः। एकेन तु पञ्चवत्सम् अतो बहुभिर्द्वयोर्बहूनाञ्च हनने प्रतिपुरुषं पादद्वयं त्र्यं वा कल्पनीयमिति मिताक्षरा। वस्तुतस्तु एकाधिकानामेकैकपुरुषस्यैकप्रयत्नजन्यवधे "व्यापन्नानां बहूनामिति" पूर्वोक्तवचनात् एकैकपुरुषस्य द्विपादं प्रायश्चित्तम् प्रयत्नभेदे तु गोघ्नवदित्यनेन तन्त्रताया अभावात् प्रत्येकं प्रतिपुरुषं द्विपादाद्यावृत्तिरिति। एतच्चाकामतोवधे द्रष्टव्यम् दैवादिति विशेषोपादानात् कामकृते तु बहूनामपि प्रत्येकं कृत्स्नदोषसम्बन्धात् पूर्णप्रायश्चित्तं युक्तं ऋत्विजां फलमिव प्रतिपुरुषं कृत्स्नव्यापारसमवायात्। "एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणोदमः" इति प्रत्येकं दण्डद्वैगुण्यदर्शनाच्चेति मिताक्षरा। वस्तुतस्तु सर्वत्र पापे "स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके" इत्यङ्गिरोवचनेनाभ्यासाभावात् ज्ञाने द्वैगुण्यदर्शनादत्रापि ज्ञाने द्विपादएव युक्तः। सत्रे तु "सप्तदशावरा ऋत्विजकामाः सत्रमुपासीरन्निति" श्रवणात्तथेति। एकं घ्नतामिति परवचनन्तु गोवधातिरिक्तविषयम् गोवधे एका चेदित्युपदेशेन दण्डवत् प्रायश्चित्तानि भवन्तीत्यतिदेशानवसरात्। तदवसरत्वे प्रत्येकं पूर्णप्रायश्चित्तद्वैगुण्यं स्यात् न पूर्णप्रायश्चित्तमात्रम् अतएव प्रायश्चित्तविवेके "एकं घ्नतां बहूनामिति" मनुवचने उक्तम्। बहुभिरित्युपादानात् द्वाभ्यां हनने तु प्रत्येकं सम्पूर्णप्रायश्चित्तम्।

अथैकहायनादिगोवधप्रायश्चित्तम् हद्दुचेताः "एकवर्षे गवि हते कृच्छ्रपादो विधीयते। अबुद्धिपूर्वं पुंसः स्यात् द्विपादस्तु द्विहायने। त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतःपरम्"। इदमपि प्रायश्चित्तलाघवेन अबुद्धिपूर्वकाधमशूद्रस्वामिकवधविषयमिति प्रायश्चित्तविवेकः। तेन यत् स्वामिकवधे यत् प्रायश्चित्तं तस्यैव तत्र पादादिकम्-

कनीयस्तरएकातिवालामित्यत तत्रैवोक्तम्। अतःपरं चतुर्हायणे इत्यर्थः। बुद्धिपूर्वे एतदेव द्विगुणमित्यर्थः" प्रा॰ त॰ रघुः।

अपालननिमित्तगोवधप्रायश्चित्तम् प्रा॰ त॰ उक्तं, यथा पराशरः "शीताभिहता चैव उद्वन्धनहतापि वा। शून्यागाराद्युपेक्षायां प्राजापत्यं विनिर्दिशेत्। अपालनात् प्रणश्येत्तु गौश्चरन्ती कथञ्चन। अतीवपङ्कले मग्ना नागविद्युद्धतापि वा। श्वभ्रे वा पतिताऽकस्मात् श्वापदेनापि भक्षिता। प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्। शिखिकं वपनं कार्यं त्रिसन्ध्यमवगाहनम्। स्कन्धैर्वापि खुरैर्युक्तं वाक्यसम्भवणादिभिः। आर्द्रमेव हि तच्चर्म परिधाय स गां व्रजेत्। तासां मध्ये वसेद्रात्रौ दिवा ताभिः सह व्रजेत्। ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्। अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्"। अत्र गोस्वामीत्यभिधानात् उत्सृष्टवृषवत्सतरीषु स्वत्वाभावादपालननिमित्तकतद्वधे तदुत्सृष्टुर्दोषोनास्तीति प्रतीयते। तत्स्वत्वाभावेनान्येषां च स्वाद्यमानमौपादानिकस्वत्वं निराकरोति कल्पतरुधृतब्रह्मपुराणम् "अथ दत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः। ब्राह्मणानाह, यत् किञ्चित् मयोत्सृष्टन्तु निर्जने। तत् कश्चिदन्योन मयेद्विभाज्यञ्च यथाक्रमम्। न वाह्यं न च तत्क्षीरं पातव्यं केनचित् क्वचित्"। वक्रोक्तिभिः काकूक्तिभिः स्वाम्यभावेनोत्सृष्टपशोः पालननियमाभावाद्व्याध्यादिभक्षणे मोच्यत्वमप्याह याज्ञवल्क्यः "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालो येषाञ्च ते मोच्या दैवराजपरिप्लुताः"। महोक्षोऽनिर्वाह्यः महाबलीवर्दः। उत्सृष्टपशवः देवतोद्देशेन पित्रादिनिष्फलोद्देशेन वा चक्राद्यङ्कितात्यक्तपशवः। सूतिका अनिर्गतदशाहाः। आगन्तुका ग्रामान्तरादागताः। आदिशब्दात् उपनमोक्षाश्च यथा "अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः। अदण्ड्याः काणकुण्ठाश्च वृषभः कृतलक्षणः" कुण्ठः खञ्जः। अत्र काणकुण्ठशब्दाभ्यामत्यन्ताक्षम उच्यते। वृषभःकृतलक्षणः प्रागुक्तोत्सृष्टपशुः एते सपाला विपाला वा सर्वथैव मोच्याः तथा च मनुः "अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा। सपालान् वा विपालान् वा अदण्ड्यान् मनुरब्रवीत्"। एतद्भिन्नानां येषाञ्च पालोऽस्ति

तेऽपि मोच्याः। अर्थात्तत्र पालो दण्डनीयः। दैवराजपरिप्लुताः गजादिद्रावणात् श्येनादिदर्शनाद्वा पलायिताः पशवो यदि क्षेत्रे चरन्ति तदा न दोष इत्यर्थः। पालकान्तरसत्त्वे तु मनुः "दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्"। "दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालकस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां स्वामिनां दोषः। अन्यथा यदि रात्रावपि पालहस्तगता भवन्ति तदा दोषे उत्पन्ने पाल एव गर्हणीयतां प्राप्नोति" इति कुल्लूकभट्टः। स्मृतिसागरे बृहदङ्गिराः "अनागतस्य चानेता आगतस्य च रक्षकः। रात्रावपि यदान्योऽस्ति तदा स्वामी न दोषभाक्"। ननु दण्डप्रकरणोक्तमनुवचनं प्रायश्चित्ते कथमिति चेन्न। "दण्डवत् प्रायश्चित्तानि भवन्तीति" श्रुतेः तथा व्यवहाराच्च। एवञ्च "यत्रापवर्त्तते युग्यं वैगुण्यात् प्राजकस्य च। तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमः" इति मनुवचने "यत्र सारथेरकौशलात् यानमन्यथा गच्छति तत्र हिंसायामशिक्षितसारथिनियोगात् स्वामी द्विशतं दण्डं दाप्यः स्यादिति" कुल्लूकभट्टव्याख्यानदर्शनात् अयोग्यपालकसमर्पणे स्वामिनो दोषात्तस्यैव प्रायश्चित्तमुक्तम्। 'यावत् सस्यं विनश्येत्तु क्षेत्री तावत् फलं लभेत्। पालस्ताड्योऽथ गोस्वामी पूर्वोक्तं दण्डमर्हति" याज्ञवल्क्यवचने गवादिदोषेण यावत् सस्यं विनश्यति तावदेव पालकात् प्राप्तव्यं पालकाशक्तौ पालकस्ताड्यः स्वामी पूर्वोक्तं दण्डादिमर्हतीति दर्शनाच्च। गोवधप्रायश्चित्ते पालकद्रव्याभावे स्वामिना द्रव्यं दत्त्वा प्रायश्चित्तं कारयितव्यं कर्त्तव्यं वा। स्वेच्छापालके स्वयं कर्त्तव्यम्। सशिखवपनमित्यत्र नैमित्तिकेन सशिखवपनेन "सदा बद्धशिखेन तु" इत्यस्य "गायत्र्या तु शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः। कुटिकान्तु ततो बद्ध्वा ततः कर्म समाचरेत्" इति ब्रह्मपुराणोक्तस्य च नित्यस्य बाधेन दोषाय फलचमसेन सोमस्य बाधवत् गोदोहेन चमसस्य बाधवच्च। "उभयं वपनं कार्यमास्नानात् ब्रह्मचारिणा।" इति कात्यायनकृतच्छन्दोगपरिशिष्टेऽप्येवम्। एतदेकस्मृतिमूलकत्वात् तद्भूतपारस्करीये पर्युप्तशिरसमिति सूत्रेऽपि तथैवार्थः तद्भाष्यकृता हरिशर्मणापि परिवर्षणोभावेनोप्तशिरसं मुण्डितशिरसमिति व्याख्यातम्। न च "यते शूनशिखास्तस्य दशनैरचिरोद्गतैः। कृशाः काशा विराजन्ते बटवः श्रामणा इव" इति विष्णुपुराणीये श्रामणा इति विशेषणाद्भ्रान्त्येषां शूनशिखत्वमिति वाच्यं प्रागुक्तवचनात् सर्वेषां सशिखवपनप्राप्तेः विध्यन्तरकल्पनापत्तेश्च। तृणसागरयोरौपम्यन्तु हरिणशुक्लत्वेनाप्युक्तं तयोः शुक्लत्वञ्च भस्मत्वेन गात्रकान्त्येनेति शेषः। एवं प्राचीनावीतित्वादिना "सदोपवीतिना भाव्यम्" इत्यस्यापि बाध इति प्रसङ्गादुक्तम्। ब्राह्मणस्य विशेषेणेति ब्राह्मणस्य गवानुगमनं मुख्यम्। एतेनापालनकृतगोवधे प्राजापत्यं करणीयमिति कल्पेतिकर्त्तव्यतापि प्राजापत्यतुल्येति पण्डितसर्वस्वे हलायुधः। वृषभो गौश्च दक्षिणा। ब्राह्मणभोजनं विशेषयति अपरार्कः "गर्भाधानादिकृत्येषु ब्राह्मणान् भोजयेद्दश"। प्राजापत्यद्वयाशक्तौ धेनुद्वयं तदशक्तौ षट् कार्षापणाः। एवञ्च वृषमूल्यं सप्त कार्षापणाः गोमूल्यमेकः कार्षापणः। शूलपाणिप्रभृतिभिस्तु इतिकर्त्तव्यतायां विशेषो नादृतः। एतच्च शूद्रस्वामिकेतरवधविषयम् शूद्रस्वामिकस्याम्नानात् साक्षाद्वधे यत्किञ्चिद्विषयककृच्छ्रद्वयस्य निबन्धृभिर्व्यवस्थापितत्वेनापालनकृतवधे तदधिकस्यायुक्तत्वात् परं तत्तुल्यं कृच्छ्रद्वयं युक्तमुत्पश्यामः। अतएव एतद्विषय एव स्मृतिसागरसारे बृहदङ्गिराः 'अरक्षिते तु शृङ्गादौ हते व्याघ्रादिभक्षिते। व्रतार्द्धमाचरेत् स्वामी रक्षिते नास्ति दूषणम्"। व्रतार्द्धं यामकृतव्रतार्द्धं नास्ति दूषणमिति यदि प्रमत्ता गौर्निवारयन्तं पालमतिक्रम्य गर्त्तकान्तारादौ म्रियते तदा नेत्यर्थः। अन्यत्र सत्येव पालके सम्यक्पालनाभावेन श्वभ्रादौ पाताद्गोर्मरणे प्रायश्चित्तमाह विष्णुः 'पल्वलौघशकव्याघ्रश्वापदादिनिपातने। श्वभ्रोद्बन्धनपार्श्वादौ हते पादोनमाचरेत्। अपालने तु कृच्छ्रं स्यात् शून्यागाराद्युपप्लवे"। पादोनं प्राजापत्यमेव उत्तरवचने कृच्छ्रश्रवणात्। तथा "पादमाप्राप्तके दैवोपत्सु स्वामिन्यरक्षिते"। अप्राप्तके अप्राप्तदन्तावस्थे त्रिहायणपर्यन्ते इति यावत्। एवम्भूते पशौ अरक्षिते व्याघ्रपातादिना हते सति स्वामिना प्राजापत्यपादः करणीयः। अत्र पादमात्रप्रायश्चित्तत्वात् वालत्वादिना नानुषङ्गः। ततश्चाप्राप्तदन्तावस्थवत्सापालननिमित्तकवधजन्यपापक्षयकाम इति प्रयोक्तव्यम्"

आतिदेशिकी गोहत्या बहुविधा यथा "सावित्र्याश्च। विप्रहत्यायां गोहत्यां त्रिविधामातिदेशिकीम्। या

वा त्वणामगम्या वा यो वा सन्ध्याविहीनकः। एतेषां लक्षणं सर्वं वद वेदविदांवर!। यम उवाच, गामाहारं प्रकुर्वन्तं पिबन्तं यो निवारयेत्। याति गोविप्रयोर्मध्ये गोहत्यान्तु लभेत्तु सः। दण्डैर्गांस्ताडयन् मूढो यो विप्रो वृषवाहकः। दिने दिने गवां हत्यां लभते नात्र संशयः। ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम्। भोजयेद्वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम्। वृषलीपतिं याजयेद्योभुङ्क्तेऽन्नं तस्य यो नरः। गोहत्याशतकं सोऽपि लभते नात्र संशयः। पादं ददाति वह्नौ यो गाश्च पादेन ताड़येत्। गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमाप्नुयात्। यो भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च। सूर्योदये च द्विर्भोजी स गोहत्यां लभेत् ध्रुवम्। अवीरान्नञ्च योभुङ्क्ते योनिजीवी च ब्राह्मणः। यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेद्ध्रुवम्। पितॄंश्च पर्वकाले च तिथिकाले च देवताः। न सेवतेऽतिथिं योहि स गोहत्यां लभेद्ध्रुवम्। स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं करोति या। कटूक्त्या ताड़येत् कान्तं सा गोहत्यां लभेद्ध्रुवम्। गोमार्गखननं कृत्वा ददाति शस्यमेव च। तड़ागे च तदूर्द्ध्वे वा स गोहत्यां लभेद् ध्रुवम्। प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमः। अर्थलोभादथाज्ञानं स गोहत्यां लभेद्ध्रुवम्। राजके दैवके यत्नात् गोस्वामी गां न पालयेत्। दुःखं ददाति यो मूढो गोहत्यां लभते ध्रुवम्। प्राणिनं लङ्घयेत् यो हि देवार्च्चामनलं जलम्। नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद् ध्रुवम्। शश्वन्नास्तीति यो वादी मिथ्यावादी प्रतारकः। देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम्। देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति!। न सम्भ्रमान्नमेद् यो हि स गोहत्यां लभेद्ध्रुवम्। न ददात्याशिषं कोपात् प्रणताय च यो द्विजः। विद्यार्थिने च विद्यान्न स गोहत्यां लभेद्ध्रुवम्" ब्रह्म वै० पु० प्रकृतिख०, २७अ०। "तृष्णामोषकरो विप्रो गोवधस्य व्रतं चरेत्" प्रा० त० उक्तेः तृष्णमोषोऽपि प्रादेशिकः गोवधः।

**गोहन्** त्रि० गां हन्ति हन–क्विप् ह्रन०। १गोहन्तरि मेघस्य जलभेदके २इन्द्रे पु०। "आ रे गोहा नृहा वधोवः" ऋ० ७।५६।१७। "गोहा गवां मेघस्थजलानां भेदकः" भा०।

**गोहन** त्रि० गुहू–संवरणे ल्यु ऊत्वाभावश्छान्दसः। सं- वरणे "समाने अहन् त्रिरवद्य गोहनाः" ऋ० १।३४।३ "गुह संवरणे नन्द्यादित्वात् ल्युः "ऊदुपधायाः गोहः" पा० प्राप्तस्य ऊत्वस्याभावश्छान्दसः" भा०।

**गोहमुख** पु० भारतवर्षस्थे पर्वतभेदे। भागवतोक्तगोकामुख पर्वतस्य विष्णु पु० गोहमुखेति नाम। गोकामुखशब्दे दृश्यम्। [हरो त्रिका०।

**गोहरितकी** स्त्री गोः हरितकीव हितकारित्वात्। विल्व-

**गोहल** न० हल–विलेखे क्विप् तं लाति ला–क गोर्हलः। गोमये हारा०।

**गोहालिया** स्त्री गवां हाले विलेखे साधु बा० य। (गोयालिया) ख्याते लताभेदे "पीतं गोयालियामूलं तिलदध्याज्यसंयुतम्। निवध्नमूलं कथितं प्रवर्त्तयति शङ्कर!" इति गारुड़े १९०अ०।

**गोहित** पु० गवां हितं यस्मात् ५ब०। १विल्वे, २घोषालतायाञ्च। ३गोहितकारके त्रि०। ४विष्णौ पु० "गोहितो गोपतिर्गोप्ता" विष्णुसह०। "गोभ्यो हितो गोहितः, गोर्भूमेर्भारावतारणेच्छया शरीरग्रहणं कुर्वन् गोहितोवा" भाष्यम्। [मूले हेमच०।

**गोहिर** न० गुह–बा०इरच् पृषो० ऊत्वाभावः। पाद-

**गोह्य** त्रि० गुह–वा ण्यत् ण्यत्येव ऊत्वस्य नियमनात् नोत्वम्। १गुह्ये २अप्रकाश्ये ३संवरणीये च।

**गौकक्ष्य** पुंस्त्री गोकक्षर्षेर्गोत्रापत्यं गर्गा० यञ्। गोकक्षर्षिगोत्रापत्ये। तस्य छात्रः कण्वा० अण् यलोपः। गौकक्ष तच्छात्रे गौकक्ष्यस्यापत्यं तिका० फिञ्। गौकक्ष्यायणि तदपत्ये पुंस्त्री। स्त्रियां क्रौड्यादि० ष्यङ्। गौकक्ष्या गोकक्षगोत्रस्त्रियाम्। बहुत्वे "यञञोश्च" पा० यञो लुक्। गोकक्षास्तद्गोत्रापत्येषु।

**गौग्गुलव** त्रि० गुग्गुलौ भवः अण्। गुग्गुलुभवे धूपादौ स्त्रियां शार्ङ्गरवा० ङीन्।

**गौख्य** पु० गोख्याः हिमालयपत्न्याः अपत्यम् ढकि प्राप्ते बा० यत्। हिमालयपुत्रे मैनाके शब्दार्थचि०।

**गौञ्जिक** पु० गुञ्जा तुलामानभेदः तद्ग्रहणं शीलमस्य ठक्। स्वर्णकारे त्रिका०।

**गौड़** पु० "वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे!। गौड़देशः समाख्यातः सर्वविद्याविशारदः" स्कन्दपु० उक्ते १देशे २तद्देशस्थे जने ब०व०। "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः। पञ्च गौडा इति ख्याताविन्ध्यस्योत्तरवासिनः" स्कन्दपु०इत्युक्तेषु विन्ध्यप-

र्व्वतोत्तरभागवासिषु ३ब्राह्मणभेदेषु च । स्वार्थे अ तत्रार्थे । "अथ पूर्व्वस्याम्" इत्युपक्रमे "उदयगिरिभद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः" वृ॰स॰१४अ॰ कूर्म्मविभागे पूर्व्वस्यदेशोक्तौ । "अस्ति गौडविषये कौशाम्बी नाम नगरी" हितो॰ । "गौडोराष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरी" प्रबोधच॰ "सर्व्व सिंहगुर्व्ववंश्यैः कलिङ्गे गौडगुर्जरे" शब्द॰ चि॰ । गुडस्य विकारः अण् । ४गुडविकारे पानकासवादौ त्रि॰ "गुडस्य प्रामद्यस्य पीत्वा गौडं सुरासवम्" भा॰ व॰ ४४अ॰ । "नानास्वादरसानाञ्च खाद्यानां तथैव च । भोजनानि सुपूर्णानि गौडानि च सहस्रशः" रामा॰ बा॰ ५२ श्लो॰ । "गौडमच्छमनच्छं वा पानकं गुरु मूत्रलम्" सुश्रुतः । ५मदिराभेदे स्त्री "गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः" मनुः । "गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत् । तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात्" बृहस्पतिः । ६काव्यरीतिभेदे स्त्री "पदसंघटना रीतिरङ्गसंस्थाविशेषवत् । उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्व्विधा । वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा" विभज्य "ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः । समासबहुला गौडी" सा॰ द॰ तस्या उदाहरणं यथा "चञ्चद्भुजभ्रमितचण्डगदाभिघात-संचूर्णितोरुयुगलस्य सुयोधनस्य । स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि ! भीमः" वेणीसं॰ । यथा च गौडजनप्रियत्वात् गौडैः प्रयुज्यमानत्वाच्च गौडीसंज्ञां लभते । गौड+छ । गौडीया तत्रार्थे । "बहुतरसमासयुक्ता महाप्राणाक्षरा च गौडीया । रीतिरनुप्रासमहिमपरतन्त्रास्तोकवाक्या च" पुरुषोत्तमः । ७रागिणीभेदे स्त्री संगीतदा॰ । पुरशब्दे परे समासे अस्य "अरिष्टगौडपूर्व्वम्" पा॰ अन्तोदात्तता । गौड़पुरम् ।

गौड़पाद पु॰ माण्डूक्योपनिषदि तदर्थकश्लोककारके वेदान्तिपण्डितभेदे । ते च "बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः" इत्यादयः "दुर्दर्शमतिगम्भीरमजं साम्यं विशारदम् । बुद्धा पदमनानात्वं नमस्कुर्म्मो यथाबलम्" इत्यन्ताः शतं श्लोकाः ।

गौड़वास्तुक पुंन॰ "तदेव च हस्वपत्रं रक्तं चेत् गौड़वास्तुकम्" इत्युक्तलक्षणे वास्तुकभेदे । (चिल्लीशाक) राजनि॰ ।

गौड़िक त्रि॰ गुडे साधु गुडा॰ ठक् । १इक्षौ । गौडः गुडविकारः साधनतयाऽस्त्यस्य ठन् । २गुडविकारसाध्ये मद्यभेदे । "हङ्ग्या गौड़िका मद्या गुरवोऽनिलनाशनाः" "मधुमांसोपदंशं वा पिबेद्याथ गौड़िकम्" इति च सुश्रु॰

गौण त्रि॰ गुणमधिकृत्य प्रवृत्ता गौणी तत आगतः अण् । १साध्यवसानलक्षणसम्बन्धरूपया गौण्या लक्षणया प्रवृत्ते शब्दे "गौणश्चेन्नात्मशब्दात्" शा॰ सू॰ । २अमुख्ये च । "यद्यास्माभिक्रियासक्त्य कालस्याप्यन्तरागमत् । गौणकालस्तमिच्छन्ति केचित् प्रातःस्नानकर्म्मणि" उद्वा॰त॰ हरिहरपद्धतिः । "एवमागामियागेषु मुख्यकालादवस्तनः । स्वकालादुत्तरो गौणः कालः सर्व्वस्य कर्म्मणः" छन्दोग॰ । "तस्य गौणमनन्तस्य नामानन्तेति विश्रुतम्" भा॰ शा॰ १८२ अ॰ । "बहूनि मम नामानि कीर्त्तितानि महर्षिभिः । गौणानि तत्र नामानि कर्म्मजानि च कानि चित्" ३४२ अ॰ । स्त्रियां ङीप् । "गौण्यश्रुतेः" शा॰ सू॰ । (गौणी-उत्पत्तिः) गुणं सादृश्यमधिकृत्य प्रवृत्ता अण् ङीप् । ३सादृश्यमूलकलक्षणाभेदे स्त्री । "सादृश्यात्तु मता गौण्यस्ताश्च षोडशभेदिताः" सा॰द॰ । "सादृश्येतरसम्बन्धेऽपि शुद्धे गौणत्वमिच्छन्ति । "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" काव्य प्र॰ ।

गुणोऽप्रधानमेव स्वार्थे प्रज्ञा॰ अण् । ४अप्रधाने कर्मादौ । "गौणे कर्म्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्" आ॰ का॰ । गौणस्य भावः ष्यञ् गौण्य न॰, त्व गौणत्व न॰, तल् गौणता स्त्री, अप्रधानत्वे "गणवादेः स्तोऽन्ये गौणत्वेऽतीयसः" मुग्ध॰ । "वृत्तेरिष्टा तु गौणता" काव्यप्र॰ गौणत्वञ्च प्रसिद्धवस्तुभेदस्यैव यथाह शा॰भा॰ "प्रसिद्धवस्तुभेदस्य गौणत्वस्याप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ् मुख्योऽन्यः प्रसिद्धः । ततश्चान्यः पुरुषः प्रायिकैः क्रौर्य्यशौर्य्यादिभिः सिंहगुणैः सम्पन्नः प्रसिद्धः तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः नाप्रसिद्धवस्तुभेदस्य" ।

गौणचान्द्र पु॰ । "चान्द्रोऽपि द्विविधः प्रोक्तो गौणमुख्यप्रभेदतः । गौणः कृष्णप्रतिपदः पौर्णमास्यन्तईरितः" मल्र॰ उक्ते कृष्णपदादिपौर्णमास्यान्ते चान्द्रे मासे अस्य व्यवस्था नि॰ सि॰ उक्ता यथा

तपसा प्रीतो नियमेन दमेन च । अभवद् गौतमोनित्यं पिता धर्म्मरतः सदा” भा० अ० १७अ० । ८दुर्गायां स्त्री मेदि० “गौतमीं कंसभयदां यशोदानन्दवर्द्धिनीम्” हरिवं०१७अ० । ९राक्षसीभेदे स्त्री शब्दर० । तस्येदमित्यण् ङीप् । १०गोदावरीनद्यां स्त्री गौरा०ङीप् । “गौतमस्याघनाशिनी” इति गोदावरीस्नानमन्त्रलिङ्गात् अघनाशाय तस्यास्तत्संबन्धित्वात्तथात्वम् “ताम्रारुणा वेत्रवती पर्णाशा गौतमी तु या । गोदावरी च वेणा च” भा० आ०१६५अ० । ११गोरोचनायाञ्च स्त्री राजनि० । १२शाक्यमुनिप्रणीतविद्यायाम् १३गौतमप्रणीतायां षोडशपदार्थविद्यायाञ्च स्त्री । “अधीत्य गौतमीं विद्यां शृगालत्वमवाप्नुयात् । पुराणान्तरे तद्विद्याध्ययननिषेधः ।

**गौतमसम्भवा** स्त्री गौतमाय तदवनाशाय सम्भवतीति अच् । गौतमगङ्गायां गोदावरीनद्याम् राजनि० । ब्रह्मपु०गौतमं प्रति त्र्यम्बकवाक्यम् । “इयन्तु गौतमी पुत्र ! यत्र क्वापि ममाज्ञया । सर्वेषां सर्वदा नृणां स्नानान्मुक्तिं प्रदास्यति । कचित् काले पुण्यतरं किञ्चित्तीर्थं सुसत्तमे । सर्वेषां सर्वदा तीर्थं गौतमी नात्र संशयः । इयं माहेश्वरी गङ्गा गौतमी वैष्णवीति च । ब्राह्मी गोदावरी नन्दा सुनन्दा कामदायिनी । ब्रह्मतेजःसमानीता सर्वपापप्रणाशिनी” “एवमेषाऽपि ते प्रोक्ता गङ्गाख्याता महामते ! । माहेश्वरी वैष्णवी च सैव ब्राह्मी च पावनी । भागीरथी देवनदी हिमवच्छिखराश्रया । महेश्वरजटाभारैरेव हि विश्रमागतम् । विन्ध्यस्य दक्षिणे गङ्गा गौतमी सा निगद्यते । उत्तरे सापि विन्ध्यस्य भागीरथ्यभिधीयते”

**गौत्तम** पु० गच्छतीति गं गात्रसत्तावति उद्+तम—अच् स्वार्थे अण् । स्थावरविषभेदे हेमच० । [सम्बन्धिनि ।

**गौदन्तेय** त्रि० गोदन्तस्येदम् शुभ्रा० ढक् । गोदन्तचन्दन

**गौदानिक** त्रि० गोदानं कर्म्मास्य ब्रह्मचर्य्यस्य महानाम्न्यादिभ्यः षष्ठ्यर्थे उपसंख्यानम्” वार्त्ति० ठक् । १गोदानाख्यब्रह्मचर्य्य सम्बन्धिनि । गोदाने उक्तं ठक् । २गोदानोक्ते कर्म्मणि । “उपरि सपिधं कृत्वा गामयञ्च ब्राह्मणेभ्यः प्रदाय गौदानिकं कर्म्मः कुर्वीत” आश्व० गृ० १।८।६। “ततो गोदानोक्तं कर्म्मेहापि कुर्य्यात्” नारा० वृत्तिः । [गौधेरोऽप्यत्र गोधाशब्दे दृश्यम् ।

**गौधार** पु०गोधायाः अपत्यम् आरक् । गोधापुत्रे । गौधेरः

**गौधूम** त्रि० गोधूमस्य विकारः बिल्वा० अण् । गोधूमविकारे रोटिकादौ स्त्रियां ङीप् । “गौधूमं चषालं भवति” श त० ब्रा० ५।२।१।६। “उलूखलं चषालो गोधूमचषालः” कात्या०श्रौ०१४।१।२२। “गोधूमपिष्टमयचषालो भवतीत्यर्थः । [भवनयोग्ये क्षेत्रे ।

**गौधूमीन** न०गोधूमस्य भवनं क्षेत्रम् गोधूम—खञ् । गोधूम

**गौधेरकायणि** पुंस्त्री गौधेरस्यापत्यं वाकिना० फिञ् कुक् च । गौधेरापत्ये । पक्षे अत इञ् न कुक् । गौधेरि तदपत्ये पुंस्त्री ।

**गौनर्द** त्रि० गोनर्द देशे भवः प्राचोभिन्नमते एङादित्वेऽपि वृद्धत्वाभावात् न छः किन्तु अण् । १गोनर्द देशभवे २पतञ्जलिमुनौ पु०

**गौपत्य** न० गोपतेर्भावः पत्यन्तत्वात् यक् । गोपतिभावे गोस्वामित्वे । “विश्वरूपां मा विश गौपत्येन” यजु० ३।२२। “रायस्पोषं गौपत्यम्” । ४१।५८।

**गौपवन** पु० गोपवनशब्दे व्युत्पत्तिः । ऋषिभेदे स च मधुकाण्डस्य वंशस्योक्तमिभेदः “अथ वंशः पौतिमाष्यात् गौपवनात् गौपवनः” वृ०उ० ४।६।१ ।

**गौपिक** पु० स्त्री गोपिकाया अपत्यम् ढकोऽबाधकः शिवा० अण् । गोपिकाऽपत्ये स्त्रियां ङीप् ।

**गौपिलेय** त्रि० गोपिल+चतुरर्थ्यां सख्या० ढक् गोपिल निर्वृत्तादौ । [सदृशे ।

**गौपुच्छ** त्रि०गोपुच्छमिव शर्करा० इवार्थे अण् । गोपुच्छ-

**गौपुच्छिक** त्रि० गोपुच्छेन क्रीतम् ठञ् । १गोपुच्छक्रीते । गोपुच्छेन तरति ठञ् । २गोपुच्छेन तारके च ।

**गौप्तेय** पु० स्त्री गुप्ता वैश्यजातिस्त्री तस्या अपत्यम् शुभ्रा० ढक् तन्नामिकायोऽपवादः । गुप्ताया अपत्ये ।

**गौभृत** त्रि गोभृता निर्वृत्तं सङ्कला०अण् । गोभृता निर्वृत्ते

**गौमत** त्रि० गोमत्यां भवः पलद्या० अण् । गोमतीनदीभवे मनुष्यादौ ।

**गौमतायन** पु० स्त्री गोमत्यां भवादि वा० फञ् । गोमती भवादौ । ततः अरीहणा०चतुरर्थ्यां वुञ् । गौमतायनक० तन्निर्वृत्तादौ त्रि० । [निर्वृत्तादौ ।

**गौमयिक** त्रि० गोमयेन निर्वृत्तादि कुमुदा० ठञ् । गोमय

**गौमायन** पु०स्त्री गोमिनोगोत्रापत्यम् अश्वा०फञ् टिलोपः । गोस्वामिगोत्रापत्ये ।

**गौर** पु० गुङ्—गतौ र नि० वृद्धिः गुर—घञ् प्रज्ञाद्यण् वा । १चन्द्रे २श्वेतसर्षपे मेदि० ३धवलवृक्षे राजनि० ४पीतवर्णे ५श्वेतवर्णे ६अरुणवर्णे च पु० ७तद्विशिष्टे त्रि०

स्त्रियां गौराङ्गीष्। ६श्रीचैतन्यदेवे महाप्रभौ “अनन्तसंहिता। ७पद्मकेशरे न० मेदि० १०स्वर्णे ११कुङ्कुमे च न० राजनि०। तत्र श्वेतवर्णयुक्ते “कैलासगौरं वृषमारुरुक्षोः” रघुः पीतवर्णार्थे “गोरोचनाक्षेपनितान्तगौरै” कुमा० अरुणवर्णार्थे “कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरैः” रत्ना० “तरुणादित्यगौरैश्च शरगौरैश्च वानरैः” रामा० कि० ४० स०। “नितान्तगौर्यौ हृतकुङ्कुमेष्वलम्” किरा० १२परिमाणभेदे यथोक्तं याज्ञ० “जालसूर्य्यमरीचिस्थं त्रसरेणुरजः स्मृतम्। तेऽष्टौ लिक्षा च तास्तिस्रो राजसर्षप उच्यते। गौरस्तु ते त्रयः षट् च यवोमध्यस्तु ते त्रयः” इति। १३मृगभेदे पु० स्त्री “गौरजो महिषः कृष्णः सूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः!” भाग० ३।१०।२२। श्लो०। “महोरगाश्च भयतो विद्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः” भाग० ८।२।१६श्लो०। १४विशुद्धे त्रि० मेदि०। “कडारा०कर्मधारयेऽस्य वा पूर्वनिपातः गौरपटः पटगौरः।

**गौरक्ष्य** न० गोरक्षस्य भावः कर्म वा ष्यञ्। वैश्यकर्मभेदे गोपालने। “कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्” गीता।

**गौरग्रीव** पु० गौरी ग्रीवास्य। १देशभेदे २तद्देशवासिनि च तस्यापत्यम् तस्येदं वा रैवतका०छ गौरग्रीवय। ३तदपत्ये पुंस्त्री ४तत्सम्बन्धिनि त्रि० गौरग्रीवदेशश्च वृ०स०१४अ० कूर्मविभागे मध्यभागे उक्तः। “गौरग्रीवोद्देहिकपाण्डुगुडाश्वत्थ पाञ्चालाः”।

**गौरचन्द्र** पु० चैतन्यदेवे महाप्रभौ “कृष्णचैतन्यो गौराङ्गो गौरचन्द्रः शचीसुतः। प्रभुर्गौरो गौरहरि नामानि भक्तिदानि मे” अनन्तसंहिता एतस्य दृढतरप्रमाणत्वं संप्रदायविदो न मन्यन्ते।

**गौरजीरक** पु० कर्म०। श्वेतजीरके। राजनि०।

**गौरतित्तिरि** पुंस्त्री श्वेततित्तिरिभेदे। “तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः। हिक्काश्वासानिलहरो विशेषात् गौरतित्तिरिः” सुश्रुते तन्मांसगुणा उक्ताः [राजनि०।

**गौरत्वच्** पु० गौरी त्वक् यस्य। इङ्गुदीवृक्षे (जियापुति)

**गौरपृष्ठ** पु० अमरभावदनृपभेदे। “इन्द्रद्युम्नो भीमजानुर्गौरपृष्ठो नखोगजः” भा०स० ष्ठ० नयसभावर्णने।

**गौरमुख** पु० गौरं विशुद्धं मुखमस्य। शमीकर्षेः शिष्ये १मुनिभेदे तेन हि शिष्येण अपुत्रमहृङ्गिशापवृत्तान्तं शमीकर्षिः परिक्षिते न्यवेदयत् तत्कथा भा०आ०४२अ०। “एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः। परिक्षिते नृपतये दयापन्नो महातपाः। संदिश्य कुशलप्रश्नं कार्य्यवृत्तान्तमेव च। शिष्यं गौरमुखं नाम शीलवन्तं समाहितम्। सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्द्धनम्। विवेश भवनं राज्ञः पूर्वं द्वाःस्थैर्निवेदितः। पूजितस्तु नरेन्द्रेण द्विजो गौरमुखस्तदा। आचख्यौ च परिश्रान्तो राज्ञे सर्वमशेषतः। शमीकवचनं घोरं यथोक्तं मन्त्रिसन्निधौ। गौरमुख उवाच। शमीकोनाम राजेन्द्र! विषये वर्त्तते तव। ऋषिः परमधर्मात्मा दान्तः शान्तो महातपाः” “तस्य त्वया नरव्याघ्र! सर्पः प्राणैर्वियोजितः। अवसक्तो धनुष्कोट्या स्कन्धे मौनान्वितस्य च। क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे। तेन शप्तोऽसि राजेन्द्र! पितुरज्ञातमद्य वै। तक्षकः सप्तरात्रेण मृत्युस्तव भविष्यति। तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत्। तदन्यथा न शक्यञ्च कर्त्तुं केनचिदप्युत। न हि शक्नोति तं यन्तुं पुत्रं कोपसमन्वितम्। ततोऽहं प्रेषितस्तेन तव राजन्! हितार्थिना”। गौरं शुक्लं मुखमस्य। श्वेतमुखाकृते त्रि० स्त्रियां स्वाङ्गत्वात् वा ङीष्।

**गौरमृग** पु० स्त्री नित्यकर्म०। गौरवर्णे मृगभेदे स्त्रियां ङीष्। “क्रोष्टा मायोरिन्द्रस्य गौरमृगः” यजु० २४।३।

**गौरव** न० गुरोर्भावः कर्म वा पृथ्वा० वा अण्। १गुरुत्वे २तत्कर्म्मणि च। “तथापि वक्ष्यपि ते गुर्वरित्यस्ति गौरवम्” माघः। “तामगौरवभेदेन” “प्राप्तवत्सु गौरवमाश्रितेषु” कुमा०। “सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते” मनुः। गौरवं लाघवतयाऽत्रात्र अच्। ३गौरवहेतुके अभ्युत्थाने हेम०। गुरोरिदम् अण्। ४गुरुसम्बन्धिनि त्रि०। “मध्यमया भगोनेन गुरोर्गौरववत्सराः” वसिष्ठसिद्धान्तः।

**गौरवाहन** पु० श्वेतवाहने नृपभेदे। “कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः” भा० स० २२अ०।

**गौरवित** त्रि० गौरवं जातमस्य तार० इतच्। पूज्ये। “गौरवितक्रियाहेतुर्भक्तिः” सर्वद० मधुरामायः।

**गौरशाक** पु० गौरः शाकोऽस्य। मधुकभेदे जटा०।

**गौरशिरस्** त्रि० गौरं शिरोऽस्य जातिवृद्धत्वात्। १शुक्लवर्णकेशयुक्ते २मुनिभेदे पु०। “मङ्कश्च लिखितश्चैव तथा गौरशिरा मुनिः” भा० स० ७अ० इन्द्रसभ्योक्तौ। स च

राजनीतिशास्त्रप्रणेता यथाह” भा० शा० ५८अ० । “विशालाक्षश्च भगवान् काव्यश्चैव महातपाः । सह-स्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः । भारद्वाजश्च भगवांस्तथा गौरशिरा मुनिः । राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः”

**गौरसर्षप** पु०कर्म० । १श्वेतसर्षपे (श्वितसरिषा) रत्नमाला । तद्गुणा भावप्र० उक्ता यथा “गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते । सर्षपस्तु रसे पाके कटुःस्निग्धः सतिक्तकः । तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः । रक्षोहरो जयेत् कण्डू कुष्ठकोठकृमिग्रहान् । यथा रक्त-स्तथा गौरः किन्तु गौरोवरो मतः” । स च सौमग्रोधकः यथाह मनुः “श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः” द्रव्यशुद्धौ । “सगौरसर्षपैः क्षौमम्” “गौरसर्षप-कल्केन शाल्मलेन साधितस्य च” याज्ञ० । २राजसर्षपत्र-यमिते परिमाणे च । “त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः । ता राजसर्षपास्तिस्रस्ते त्रयो गौर-सर्षपः” मनुः ।

**गौरसुवर्ण** पु० गौरः श्वेतः सुवर्णोऽस्य । चित्रकूट-प्रसिद्धे पत्रशाकभेदे “गौरसुवर्णं शिशिरं कफपित्त-ज्वरप्रणुत् । दाहास्रविभ्रान्तिरक्तश्रमहृत् पथ्यमेव च” राजनि० तद्गुणा उक्ताः ।

**गौरा** स्त्री गौर+गौरादिगणे वर्णवाचिनएव गौरशब्दस्य पठनात् विशुद्धार्थपरत्वे टाप् । विशुद्धायाम् स्त्रियाम् हिरूपकोषः । तदर्थपरतायामेव टाबन्तता वर्णवत्त्वे तु ङीषिन्नतेत्याकारे स्थितम् ।

**गौराङ्ग** पु०गौरं श्वेतं पीतं वाऽङ्गमस्य । १विष्णौ “श्वेतोरक्त-स्तथा पीत इदानीं कृष्णतां गतः” भाग०१०स्क० तस्य युगावतारे श्वेताङ्गत्वात् पीताङ्गत्वाच्च तथात्वम् । गौरं विशुद्धमङ्गमस्य । विशुद्धकान्तियुक्ते नन्दनन्दने २श्री कृष्णे च “गौराङ्गं गौरदीप्ताङ्गं पठेत् स्तोत्रं कृता-ञ्जलिः । नन्दगोपसुतं चैव नमस्यामि गदाग्रजम्” ब्रह्म यामलम् । “गौराङ्गो नादगम्भीरः स्वनामामृतलालसः” कृष्णयामलम् । ३नवद्वीपस्थशचीपुत्रे इति वैष्णवाः । ते हि तत् परतयैव यामलवाक्यद्वयं व्याचक्षुः ४गौर-वर्णदेहके त्रि०स्त्रियां ङीप् । गौराङ्गतोहेतुरौषधभेदः गरु० पु० १६४ अ० यथा “कुष्माण्डनालक्षारस्तु ङ्गोधूमस्य तथैव च । कलपिष्टा हरिद्रा च सिद्धा मत्स्यनहेन हि । माहिषेण घृतेनैव वेष्टिता घृत-

भक्षणे ! । अस्या उद्वर्त्तनं कुर्य्यादङ्गगौरत्वसाधनम्” ।

**गौराजाजी** स्त्री कर्म० । श्वेतजीरके राजनि० ।

**गौरादि** पु० “षिद्गौरादिभ्यश्च” पा० उक्ते ङीषनिमित्ते शब्दगणभेदे स च गणः शा० ग० सू० उक्तो यथा “गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट द्रुण द्रोण हरिण काकण पटर उकण आमलक कुवल बिम्ब बदर कर्कर तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल पाण्डश आढक आनन्द आश्वत्थ सृपाट आपच्छिक शष्कुल सूर्म्म सूर्प सूच यूष यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृस अतस उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुही अनड्वाही एषण (करणे) देह देहल काकादन गवादन तेजन रजन लवण औड्गा-हमानि गौतम पारक अयस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेय आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन पोतन पातन पाठन आस्तरण अधिकरण अधिकार आग्र-हायणी प्रत्यवरोहिणी सेचन सुमङ्गल (संज्ञायाम्) अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड षण्ड ऊर्द गुर्द शम सूद आर्द्र हृद पाण्ड भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म रोहिणी ( नक्षत्रे ) रेवती ( नक्षत्रे ) विकल निष्कल पुष्कल कटी ( श्रोणिवचने ) । पिप्प-ल्यादयश्च । पिप्पली हरितकी कोशातकी शमी वरी शरी पृथिवी क्रोष्ट्री मातामही पितामही आकृतिगणः” । गौरशब्दस्य तोपधभिन्नवर्णवाचित्वेऽपि प्रातिपदिक-स्वरेणोत्सर्गतः अन्तोदात्ततया अन्यतो ङीषि-त्यस्याप्राप्तेर्गणे पाठः ।

“उपात् द्व्यजजिनमगौरादयः” पा० उपात् परस्य द्व्यज-न्तादेरन्तोदात्ततायां पर्युदस्ते शब्दगणे स च गणः पा० ग० उक्तो यथा “गौर तैष तैल लेट लोट जिह्वा कृष्ण कन्या गुध कल्पपाद ।” उपगौरः

**गौरार्द्रक** न० नित्यकर्म० । स्थावरविषभेदे हेमच० ।

**गौरावस्कन्दिन्** पु० गुरोरिदं गौरवं गुरुपत्नीरूपं कलत्रं तदास्कन्दति आ+स्कन्द–णिनि वेदे पृषो० वर्णविप-र्य्ययः । अहल्याजारे शक्रे इन्द्रागच्छेत्युपक्रमे “गौर-वास्कन्दिन्नहल्यायै जारेति” शत० ब्रा० ३।३।४।१८ ।

**गौराश्व** पु॰ गौरोऽश्वोऽस्य । १नृपभेदे । "अलर्कः काशिषेन्यश्च गयो गौराश्व एव च" भा॰स॰ ८ अ॰ । यमसख्योक्तौ २श्वेतवाहने श्वेताश्वे अर्जुने च ।

**गौरास्य** पुंस्त्री गौरमास्यं यस्य । गौरमुखे कृष्णदेहे वानरभेदे राजनि॰ । स्त्रियां जातित्वेऽपि योपधत्वात् न ङीष् किन्तु टाप् ।

**गौराहिक** पुंस्त्री गौरः शुभ्रः अहिः कर्म॰ संज्ञायां कन् । सुश्रुतोक्ते निर्विषे सर्पभेदे "गौराहिकवृक्षेशय" इति सुश्रु॰ अहिशब्दे दृश्यम् ।

**गौरि** पु॰ गौरस्यापत्यम् इञ् । आङ्गिरसे ऋषिभेदे "गौरेराङ्गिरसस्य साम" श्रुतिः ।

**गौरिक** त्रि॰ गौरवर्णोऽस्त्यस्य ठन् । १श्वेतवर्णयुक्ते २श्वेतसर्षपे पु॰ "यवाह्वगौरिकोन्मिश्रैः पादलेपः प्रशस्यते" सुश्रुतः ।

**गौरिमत्** त्रि॰ गौरीं मन्यते मन+क्विप् ६त॰ ङ्यापोरिति संज्ञायां ह्रस्वः । १गौरीनामयुक्ते गौरीतीर्थे तत्रस्थे २नदीभेदे स्त्री शार्ङ्ग॰र॰ङीन् । (भोगवत् गौरिमत्) संज्ञायाम्" तद्व्याख्यानोक्तेः संज्ञायामेव ङीन् अन्यत्र ङीप् ।

**गौरिल** पु॰ गौरवर्णोऽस्त्यस्य वा॰इलच् । १सिद्धार्थे श्वेतसर्षपे २लौहचूर्णे च मेदि॰ ।

**गौरिवीति** पु॰ गौर्य्या वेदवाचि वीतिः विधेयगतिरस्य "ङ्यापोरिति" संज्ञायां ह्रस्वः । शक्तिमुनिपुत्रे ऋषिभेदे । "गौरिवीतिः शाक्त्यः स्तम्भिमाह" शत॰ब्रा॰१२।८।३।७। "सोमसामा गौरिवीतेरवर्द्धनः" ऋ॰५।२९।११। गौरिवीते रेतन्नामकस्य मन्त्रद्रष्टुः" भा॰ । गौरिवीतिना दृष्टं साम अण् । गौरिवीत तद्दृष्टे सामभेदे "तृतीयसवनार्भिहिष्णोः विधिविदृष्टवतोषु गौरिवीतेन" कात्या॰श्रौ॰ २५।११।१६। "गौरिवीतं नाम सामभेदस्तेन स्तुवीरन्" कर्कः ।

**गौरिसक्थ** पु॰ गौर्य्या इव सक्थि यस्य षच् समा॰ ह्रस्वः सुषामा॰ षत्वम् । गौरीतुल्यसक्थियुक्ते ।

**गौरी** स्त्री गौर+गौरा॰ ङीष् । १गौरवर्णायां स्त्रियाम् "कपोलभित्तीरिव लोध्रगौरीः" माघः । २हिमालयसुतायां काली नाम्न्यां मेनकाकन्यायां तस्याः प्राक् कृष्णवर्णत्वेन जातत्वेऽपि पश्चात् पीताङ्गत्वात् तथात्वं कालिकापुराणशब्दे २०१५पृ॰ ४५पं॰ तत्कथं दृश्यम् । पुराणान्तरे "योगाग्निदग्धदेहा सा पुनर्जाता हिमालये । अर्द्धेन्दुकुन्दधवला ततो गौरीति सा स्मृता" इत्युक्तम् तत्र कल्पान्तरविषयम् । "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी" इत्युक्तायां ३अष्टवर्षायां स्त्रियाम् । ४हरिद्रायां ५दारुहरिद्रायाम् ६गोरोचनायां ७वरुणपत्न्याञ्च । ८प्रियङ्गुवृक्षे ९पृथिव्यां १०नदीभेदे च मेदि॰ "लेभे प्रसेनजिज्जायां गौरीं नाम पतिव्रताम् । अभिशप्ता तु सा भर्त्रा नदी वै बाहुदाऽभवत्" हरिवं॰ १२ अ॰ ११उक्तायां सूर्य्यवंश्यप्रसेनजिज्जायायाम् तस्या एव बाहुदानदीरूपत्वोक्तेः नदीविशेषः बाहुदानदीपर इति बोध्यम् । १२बुद्धशक्तिभेदे हेम॰ । १३मञ्जिष्ठायां १४श्वेतदूर्वायां १५मल्लिकायां १६तुलस्यां १७सुवर्णकदल्याम् १८आकाशमांस्याञ्च राजनि॰ । सर्व्वासामासां शुभ्रपीतरक्तविशुद्धपत्रपुष्पादियुक्तत्वात्तथात्वम् १९रागिणीभेदे संगीतदामो॰ । २०वाचि निघण्टुः । "गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्" ऋ॰१।१६४।४१। "गौरी गौरवर्णा शब्दब्रह्मात्मिका च वाक् मिमाय । मिमातिः प्रतिष्ठार्थे धातुः । प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती । एकपदी अव्याकृतत्वेनैकप्रतिष्ठानैकरूपावात्मना । द्विपदी सुप्तिङ् भेदेन पदद्वयवती । चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन । अष्टापदी आमन्त्रितसहितसुब्विभक्तिभिरष्टभेदेनाष्टापदी । नवपदी नवसु पदेषु भवन्ती बभूवुषी यथाप्रकृतविधाभिव्यक्तिमुपेयुषी परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्ताऽनेकध्वनिप्रकारा भवतीत्यर्थः" भा॰ । निरु॰११।४। व्याख्यानान्तरं दृश्यम् । गौरीर्मिमाय सुलोपाभावश्छान्दसः । "सोमो गौरी अधिश्रितः" ऋ॰९।१२।३। गौरी गौर्य्याम् मध्यमायां वाचि" भा॰ "सुपां सुलुक्" पा॰ सप्तम्या लुक् । "ईदूतौ च सप्तम्यर्थे" पा॰ तस्य प्रगृह्यसंज्ञत्वात् न यणादेशः, भा॰ २१दीप्तिमत्यां स्त्रियां निरु॰ । "गौरी रोचते ज्वलतिकर्म्मणः । अयं पीतोवा गौरो वर्णः एतस्मादेव प्रशस्तो भवति तस्मा यथा भवति" "गौरीर्मिमाय सलिलानि" श्रुतिमधिकृत्य उक्तनिरुक्तिः । पार्वतीरूपा गौरी च माघशुक्लचतुर्थ्यां पूज्या, यथाह ति॰ भविष्योत्त॰ पु॰ माघशुक्लमधिकृत्य "चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता । सौभाग्यमतुलं कुर्यात्"

**गौरीकान्त** पु॰ ६त॰ महादेवे गौरीनाथादयोऽप्यत्र ।

**गौरीगुरु** पु॰ ६त॰ । पार्वतीपितरि हिमालये "गौरीगुरोर्ग-

"हरमाविवेश" रघुः "अखिलमिदममुष्य गौरीगुरोः" किरा० गौरीपितादयोऽप्यत्र ।

गौरीज न० गौर्य्या रजसो जायते जन–ड । १अभ्रके राजनि० अभ्रकशब्दे ३१५ पृ० दृश्यम् । २कार्त्तिकेये पु० ।

गौरीतक्रम् न० गौर्य्या निर्म्मितं तक्रम् । "लवणं मरिचं विश्वं जीरं नारङ्गजं त्वचम् । एलाचूर्णान्वितं तक्रं धूपयेत् शतहिङ्गुना । गौर्य्येदं विहितं तक्रं सर्वदोषनिबर्हणम्" शब्दार्थचि० उक्ते तक्रभेदे

गौरीपट्ट पु० गौर्य्याः पट्टमिव स्थानम् । शिवलिङ्गस्य गौर्य्याः पूजास्थाने शिवलिङ्गशब्दे विवृतिः

गौरीपुत्र पु० ६त०। कार्त्तिके गौरीतनयादयोऽप्यत्र [राजनि०

गौरीपुष्प पु० गौरी हरिद्रेव पीतं पुष्पमस्य । प्रियङ्गुवृक्षे

गौरीमन्त्र पु० तन्त्रसारोक्ते गौर्य्या मन्त्रभेदे तस्योद्धारश्च "ह्रीं गौरि! रुद्रदयिते! योगेश्वरि! कवचं (हुँ) फट् । द्विठान्तः षोडशवर्णोऽयं मन्त्रः सद्भिरुदीरितः"

गौरीललित न० गौरी हरिद्रेव ललितम् पीतवर्णत्वात् । हरिताले राजनि० ।

गौरीशिखर न० गौर्य्यास्तपःस्थानं शिखरम् । स्वनामख्याते पर्वतभेदशृङ्गरूपे तीर्थभेदे "प्रजासु पश्चात् प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डिमत्" कुमा०

गौरीसुत पु० ६त० । १अष्टवर्षोढाजतनये शब्दार्थचि० । २कार्त्तिकेये च । [ठक् । गुरुपत्नीगामिनि ।

गौरुतल्पिक पु० गुरुतल्पं गुरुपत्नीं गच्छति परदारा०

गौलक्षणिक त्रि० गोर्लक्षणं वेत्ति तद्ग्रन्थमधीते वा "विद्यालक्षणकल्पान्ताच्च" वार्त्ति० ठक् । १गोलक्षणवेत्तरि २तद्ग्रन्थाध्येतरि च ।

गौलन्द्य पुंस्त्री गोलन्दस्य गोत्रापत्यं गर्गा० यञ् । गोलन्दर्षिगोत्रापत्ये स्त्रियां जातित्वात् ङीप् यलोपः । गोलन्दी तदपत्यस्त्रियाम् । गौलन्द्यस्य छात्राः कण्वा० अण् यलोपः । गौलन्दास्तच्छात्रेषु ।

गौलाङ्कायन पुंस्त्री गोलाङ्कस्य गोत्रापत्यम् अश्वा० फञ् । गोलाङ्कर्षेर्गोत्रापत्ये स्त्रियां जातित्वात् ङीष् ।

गौलिक पु० गुडे साधु ठञ् डस्य लः । कुम्भकवृक्षे राजनि०

गौलोमन त्रि० गोलोमेव शर्करा० अण् । गोलोमसदृशे स्त्रियां ङीप् ।

गौल्मिक पु० गुल्मे रक्षणार्थस्थानभेदे नियुक्तः ठक् । गुल्मरक्षणार्थस्थाननियुक्ते सैनिके सेनाभेदे "तथैव गुल्मे संप्रेक्ष्य प्रयातान् कच्छगौल्मिकान्" "त्यक्त्वा दारांश्च ते द्रुतास्तत्र गुल्मानि गौल्मिकाः" भा०शा० ८अ० [राजनि० ।

गौल्य न० गुडस्य भावः ष्यञ् डस्य लः । माधुर्य्ये मधुररसे

गौशतिक त्रि० गोशतमस्यास्ति "एकगोपूर्वात्" पा० शतसहस्रान्तात् पक्षे ठञ् । गोशतस्वामिनि स्त्रियां ङीप् ।

गौष्ठ त्रि० गोष्ठ्यां भवः पलद्या० अण् । गोष्ठभवे स्त्रियां ङीप् । स्वार्थे अण् ङीप् गौष्ठीत्यपि गोष्ठ्याम् । तस्य-स्यैव पलद्यादिषु पाठ इत्यन्ये ।

गौष्ठीन न० पूर्वं भूतं गोष्ठं खञ् । भूतपूर्वगोष्ठे । "तांश्च वाचं स गौष्ठीने वने स्त्रीपुंसभीषणे" भट्टिः

गौसहस्रिक त्रि० गोसहस्रमस्यास्ति गौशतिकवत् ठञ् । गोसहस्रस्वामिनि ।

गौहलव्य पुंस्त्री गुहलोरृषेर्गोत्रापत्यम् गर्गा०यञ् । गुहलुगोत्रापत्ये स्त्रियां ङीप् लोहिता० स्वार्थे ष्फः गौहलव्यायनी ।

ग्धि स्त्री अद–क्तिन् वेदे घसादेशः उपधालोपश्च तस्य झल्विधौ न स्थानिवत्त्वम् । भक्षणे । "सग्धिश्च मे" सि० कौ० धृता श्रुतिः ।

ग्ना स्त्री गम–बा० ना टिलोपः । स्त्रीमात्रे "ग्नास्त्वा कृन्तन्नपसोऽतन्वत वयित्र्यो वयन्" ता०ब्रा० १।८।९। "गच्छन्ति पुंसा सहैना इति ग्नाः स्त्रियः" भा० "मेना ग्ना इति स्त्रीणां स्त्रियस्त्यायतेरपत्रपणकर्म्मणः । मेना मानयन्त्येनाः । ग्ना गच्छन्त्येनाः" निरु० । २देवपत्न्याम् । "आ ग्ना अग्न इहावसे होत्राम्" ऋ० १।२२।१०। ग्ना देवपत्नी भा० । ग्ना अस्त्यस्य मतुप् मस्य वः । ग्नावत् सप्तलोके । "अभि यज्ञं गृणीहि नो ग्नावो नेष्टः" ऋ० १।१५।३। "मतुवसोरुः" संबुद्धौ विसर्गः भा० । ३वाचि निघ० । "तव ग्नावो मित्रमहः सजात्यम्" ऋ० २।१।५। ग्ना स्तुतिवाचस्ताः सन्तीति मतुप् । "छन्दांसि वै ग्नाः" इति श्रुतेः ४वेदे च वेदस्य वाग्विशेषत्वात्तथात्वम् । "नराशंसो ग्नास्पतिर्नो अव्याः" ऋ० २।३८।१० ग्नास्पतिर्देवपत्नीनां पतिस्त्वष्टा पतिर्वा" भा० "ग्नास्पतिरित्यत्र वा० सुट् । सान्तं वा शब्दान्तरम् अतएव निघण्टौ ग्नाः इति विसर्गान्तं पठितम् ।

ग्मा स्त्री गम्यतेऽत्र गम–बा० क्मा । पृथिव्यां निघ० ।

ग्रथ कुटिलीकरणे भ्वा० आत्म० इदित् सक० सेट् । ग्रन्थते अग्रन्थिष्ट जग्रन्थे ।

ग्रथन न० ग्रन्थ–भा० ल्युट् नलोपः । (गाँथा) । ग्रन्थने

"दोषस्थिरत्वात् ग्रथनात्" सुश्रुतः। "ग्रथनञ्च विदर्भञ्च संपुटो रोधनं तथा। योगः पल्लव इत्येते विन्यासाः षट्सु कर्मसु"। "मन्त्रेणान्तरितान् कृत्वा साध्यवर्णान् यथाविधि। ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्मणि" २तन्त्रसारोक्ते "मन्त्रेणान्तरितसाध्यवर्णविन्यासभेदे च।

**ग्रथित** त्रि॰ ग्रन्थ–संदर्भे क्त नलोपः। सूत्रादिना कृतसन्दर्भे माल्यादौ "पर्य्यायग्रथिताक्षसूत्रवलयाः" प्रबो॰। "अथास्य रत्नग्रथितोत्तरीयम्" "कुसुमैर्ग्रथितामपार्थिवैः" (स्रजम्) रघुः। "तच्छ्लोकद्वयमद्यापि ग्रथितं सुहृदं मुने" भा॰ आ॰ १अ॰। "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव" माघः। २क्रान्ते ३हिंसिते च मेदि॰।

**ग्रथिन्** त्रि॰ग्रन्थ–बा॰ इनि किच्च नलोपः। जल्पके। "व्यक्तन् ग्रथिनो सम्प्रपाशः" ऋ॰ ७।६।३। "ग्रथिनो जल्पकान्" भा॰।

**ग्रथ्न** पु॰ ग्रन्थ–बा॰ नक्। स्तवके। "ग्रथ्नात्तु गोलमित्युक्तं ग्रथ्नः स्तवक उच्यते। कपुष्टिकाभिधः केशाः मूर्द्ध्नि ग्रथात् कपुष्टिका" भट्टनारायणधृतवाक्यम् "ग्रथ्नात् पविरवस्राय युग्मलमौदुम्बरं ग्रथ्नाट्पग्रथ्नावत्यानि" गोभिलसूत्रम्।

**ग्रन्थ** संदर्भे वा चु॰उभ॰पक्षे क्र्या॰ प॰सक॰सेट्। ग्रन्थयति–ते ग्रथ्नाति अजग्रन्थत् अग्रन्थीत्। ग्रन्थयामास बभूव चकार चक्रे। जग्रन्थ जग्रथतुः–जग्रन्थतुः। जग्रन्थिथ जग्रथिथ इत्येके। अस्य कविकल्पद्रुमे भ्वा॰ गणे च परस्मैपदिष्वेव क्र्यादिकस्य पाठः। णिचि तु उभयपदिता। भारद्वाजीयास्तु पठन्ति "णिश्रन्थिग्रन्थिब्रूञ्आत्मनेपदाकर्म्मकाणामात्मनेपदेषूपसंख्यानम्" श्रन्थिग्रन्थ्योराकृतीयत्वात् णिजभावपक्षे ग्रहणम्। ग्रन्थति ग्रन्थम्। ग्रन्थति मेखलान्देवदत्तः। ग्रन्थते ग्रन्थः। अग्रन्थिष्ट। ग्रन्थते। अग्रन्थिष्ट। इति भारद्वाजीयमते आत्म॰। तेनोभयपदता। सि॰कौ॰पक्षे भ्वा॰दित्वमपि तेन ग्रन्थति इत्यादि क्र्यादिकयोस्तु ग्रथ्नीते। ग्रथ्नीते सि॰कौ॰। एतच्च कर्म्मकर्त्तरि न तु कर्त्तरि इत्यन्ये

उद्+उत्तोल्य ग्रथने। "केशपक्षान् उदग्रथ्नीतरान्" आश्व॰श्रौ॰१०।८।८ "लताप्रतानोद्ग्रथितैः स केशैः" रघुः। "माल्यानि तस्योद्ग्रथितानि षड्भिः" भा॰ व॰ ११२ अ॰ "कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः" भाग॰ ४।२२।२७।

**ग्रन्थ** पु॰ ग्रन्थ–सन्दर्भे भावे घञ्। १गुम्फने। कर्म्मणि घञ्। २शास्त्रे "ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया" नैष॰। "ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात्" भा॰ आ॰ १अ॰। ३धने ४द्वात्रिंशद्वर्णमितानुष्टुप् छन्दस्के श्लोके हेम॰।

**ग्रन्थकार** त्रि॰ ग्रन्थं करोति कृ–अण् उप॰ स॰। ग्रन्थकारके (शाकल्यम्) "तस्माच्च भगवांस्तुष्टो ग्रन्थकारो भविष्यति" भा॰ अनु॰ २८४ अ॰। कृ–क्विप् ६त॰। ग्रन्थकृदप्यत्र। "ग्रन्थकृल्लोकविख्यातो भविताश्यजरामरः" भा॰ अनु॰ १४अ॰। "ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति" काव्यप्र॰। ट्च्। ग्रन्थकर्तृ ण्वुल् ग्रन्थकारक अत्रार्थे त्रि॰। टचि स्त्रियां ङीप्।

**ग्रन्थकुटी** स्त्री ग्रन्थस्य कुटीव। लेख्यस्थाने त्रिका॰।

**ग्रन्थन** न॰ ग्रन्थ–भावे ल्युट्। (गाँथा) सन्दर्भे गुम्फने हेमच॰। युच्। ग्रन्थनाऽप्यत्र स्त्री।

**ग्रन्थसन्धि** पु॰ ६त॰। ग्रन्थस्य सन्धौ। तन्नामानि च कतिचित् त्रिका॰पठितानि। "सर्गो वर्गः परिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्व्वाह्निकञ्च ग्रन्थसन्धयः"। उपक्रमे गुत्सादीत्युक्तेः अन्यदपि ग्रन्थसन्धिनाम भवतीति सूचितम्। तेन कुसुमाञ्जलौ स्तवकः, काव्यप्र॰उल्लासः। वेदे प्रपाठकब्राह्मणानुवाकादय॰।

**ग्रन्थि** पु॰ ग्रन्थ–संदर्भे भावे करणादौ वा यथायथं सर्व्वधातुभ्य, इन् नित्स्वरः, "अनिकृष्य्यघ्रसीत्यादिना इर्वा स्वरे भेदः। १वंशादिपर्व्वणि (गाँठ) अमरः। २काण्डसन्धौ ३भद्रमुस्तायाम् ४हितावल्यां ५पिप्पल्यां राजनि॰। ६बन्धने ७रोगभेदे मेदि॰। ८मायापाशे "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः" तैत्ति॰ उप॰। ग्रथि–कौटिल्ये भावे इन्। ९कौटिल्ये। कर्त्तरि इन्। १०ग्रन्थिपर्णके मेदि॰। रोगभेद निदानादि सुश्रुते दर्शितं यथा "अथातो ग्रन्थ्यपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः। वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धम्। वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः। आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदम्। कृष्णोऽमृदुर्व्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽसृगच्छम्। दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चापि। रक्तः सपीतोऽप्यथ वापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्। शीतो

पित्ताशोऽस्य्रदजोऽतिकण्डुः पाकाश्मवत्सु जनयोपपत्तः । सिराभिरङ्गिष कफप्रकोपात् ग्रन्थिः सवेच्छुक्लघनञ्च पूयम् । शरीरवृद्धिक्षयवृद्धिहासैः स्निग्धोमिदानल्पस्रजोऽतिकण्डुः । मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पिः-प्रतिमन्तु मेदः । व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुर्हि सिराप्रतानम् । संपीड्य सङ्कोच्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् । ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात् सरुजश्चलश्च । अरुक् स एवाप्यचलोमहांश्च मर्मोत्थितश्चापि विवर्जनीयः"

**ग्रन्थिक** न० ग्रन्थिरिव+प्रकाशते-कै-क ग्रन्थ+स्वार्थे ठन् वा । १पिप्पलीमूले २ग्रन्थिपर्णे ३गुग्गुलौ ४करीरे च ५दैवज्ञे ६सहदेवाख्ये पाण्डवे च पु० मेदि० ।

**ग्रन्थित** त्रि० ग्रथि-क्त । गुम्फिते अमरः ।

**ग्रन्थिदला** स्त्री ग्रन्थिर्दलेऽस्याः । मालाकन्दे राजनि० ।

**ग्रन्थिदूर्वा** स्त्री ग्रन्थिप्रधाना दूर्वा शा० त० । (गाँटदूर्वा) दूर्वाभेदे राजनि० ।

**ग्रन्थिन्** त्रि० ग्रन्थसदर्थो वा ज्ञेयतयाऽस्त्यस्य १ग्रन्थ-ज्ञानि वा ग्रन्थार्थवेत्तरि २ग्रन्थयुक्ते तद्विशिष्टे ३ग्रन्थनकर्त्तरि च । अज्ञेभ्योग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणोवराः मनुः । "ग्रन्थी भवति पण्डितः" सर्वत्र स्त्रियां ङीप् । "शम्भ आपिर्हृदे चतुर्न ग्रन्थिनी चरण्युः" ऋ०१।०।६५।६। ग्रन्थिनी ग्रन्थवती संदर्भवती" भा० । [राजनि० ।

**ग्रन्थिपत्र** पु० ग्रन्थिप्रधानं पत्रमस्य । चोरकनाम गन्धद्रव्ये

**ग्रन्थिपर्ण** न० ग्रन्थौ पर्णान्यस्य ग्रन्थीनि ग्रन्थयुतानि वा पर्णान्यस्य । (गाठियाला) १वृक्षभेदे अमरः । "ग्रन्थिपर्णं तिक्तनीक्ष्णं कटूष्णं दीपनं लघु । कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम्" भावप्र० । २चोरनामगन्धद्रव्ये राजनि० ३जतुकालतायां स्त्री राजनि० ४मर्कटदूर्वायां स्त्री राजनि० गौरा० ङीष् ।

**ग्रन्थिफल** पु० ग्रन्थि ग्रन्थियुक्तं फलमस्य । १कपित्थवृक्षे २मदनवृक्षे ३याकवृक्षवृक्षे च राजनि० ।

**ग्रन्थिबन्धन** न० ६त० । (गाटछाँधा) पुत्रकादौ १उद्वाहार्थे बन्धनभेदे २लक्ष्मीतिषौ गोरोचनायुतसूत्रबन्धने च । "शुक्लदूर्वात्रितानहारु जन्मग्रन्थेश्च बन्धनम् । गुग्गुलुनिर्म्मालिद्धार्थदूर्वागोरोचनायुतम्" तन्त्रचि० ।

**ग्रन्थिब(व)र्हिन्** पु० ग्रन्थिं बर्हति बर्ह-णिनि ग्रन्थिं वर्हति वर्ह-वधे णिनि । ग्रन्थिपर्णवृक्षे शब्दर०

**ग्रन्थिभेद** पु० ग्रन्थिं वस्त्रादिग्रन्थिं भिनत्ति भिद-अण् उप०स० । (गाँटकाटा) चौरभेदे "अङ्गुलीं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वध मर्हति" मनुः "उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ । कार्यौ द्वितीयापराधे करपादैकहीनकौ" याज्ञ० ।

**ग्रन्थिमत्** त्रि० ग्रन्थिरस्त्यस्य मतुप् । १ग्रन्थियुक्ते (गांटयुक्ते) स्त्रियां ङीप् "अव्यालचं ग्रन्थिमतीं दधाना" कुमा० (हाडयोडा) २अस्थिसंहारिवृक्षे पुंभावप्र०

**ग्रन्थिमत्फल** पु० ग्रन्थिमत् फलमस्य । लकुचवृक्षे (मान्दार) इति ख्याते वृक्षे राजनि० ।

**ग्रन्थिमूल** न० ग्रन्थि गुम्फनवत् मूलं यस्य । १गृञ्जने राजनि० २मालादूर्वायां स्त्री टाप् राजनि० ।

**ग्रन्थिल** त्रि० ग्रन्थिर्विद्यतेऽस्य सिध्मा० लच् । ग्रन्थियुक्ते मेदि० २पिप्पलीमूले न०राजनि० ३आर्द्रके न०शब्दच० ४विकङ्कतवृक्षे (बइचि) ५करीरवृक्षे च अमरः । ६तण्डुलीयशाके ७हिङ्गावल्यां ८पिण्डालौ ९चोरनामगन्धद्रव्ये १०विकङ्कतवृक्षे च राजनि० । भद्रमुस्तायां ११मालादूर्वायां १२गण्डदूर्वायाञ्च स्त्री राजनि० । [त्रिका०

**ग्रन्थिहर** पु० ग्रन्थिं हरति हृ-अच् । अमात्ये ग्रन्थिपि

**ग्रन्थीक** न० ग्रन्थिक+पृषो० । पिप्पलीमूले हेमच०

**ग्र(ग्ल)प्स** पु० ग्रन्थ+पृषो० हिंसाद्गुणम् । स्तवके, "यथासौ दुग्धेन शाकादुग्र(ग्ल)प्सेन, मीमलं न्यू इति" काय० श्रु० ११।४।४। ग्र(ग्ल)प्सः स्तवक उच्यते" नारा० ।

**ग्रस** भक्षणे भ्वा० आत्म० सक० सेट् । ग्रसते अग्रसिष्ट अग्रसि । ऋदित् ग्रसित्वा ग्रस्त्वा । ग्रस्तः । "हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्" माघः "ग्रसमानमपि ग्रासं ग्रसे लब्धं यदृच्छया" भा० शा० १७८ अ० । "स इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः" भा०व० २६ श्लो० । "राहुग्रस्ते निशाकरे" भा० व० २६६७ श्लो० । ग्रासः । ग्रसनम् । क्विप् धातुत्वात् दीर्घः ग्रास् ग्रासौ ग्रास इति ।

**ग्रस** भक्षणे वा चुरा०उभ०पक्षे भ्वा०पर०सक० सेट् । ग्रासयति-ते ग्रसति अजिग्रसत्-त अग्रासीत् अग्रसीत् । ग्रासयाम् बभूव आस चकार चक्रे । ग्रसितः । "न च प्राग्रसितमन्येन ग्रसेदर्थं कथञ्चन" मनुः ।

**ग्रसन** न० ग्रस-भावे ल्युट् । १भक्षणे "ग्रसनादजगरः शरीरमाघ्रतो न विषात्" सुश्रु० । २राहुणा चन्द्रसूर्ययोरुपरागे च ३ पु०स० ४ अ० इन्द्रे तरंगादि

३ग्रासे च । उपरागशब्दे विवृतिः । ४असुरभेदे पु० "इदं तदस्त्रमाहात्म्यं दिमानीर्यनोऽसुरः" । "तमप्रत्यक्षं जगतामजय्यं चक्रं पपात ग्रसनस्य कण्ठे" । "द्विधा तु कृत्वा ग्रसनस्य कण्ठं तद्रक्तधारारुणघोरनाभि" इति च मत्स्यपु० ।

**ग्रसिष्ठ** त्रि० अतिशयेन ग्रसिता ग्रसितृ+इष्ठन् तृणो लोपे इटोऽसिद्धिः । ग्रसितृतमे "भोगमानशादिद ग्रसिष्ठ यो यधीरजीगः" ऋ०१।१६२।७ । "ग्रसिष्ठः ग्रसितृतमः" भा० ।

**ग्रसिष्णु** त्रि० ग्रस–इष्णुच् । १ग्रसनशीले "यस्ता चराचर ग्रहणात्" शा० सू० न्यायात् २परब्रह्मणि च । "भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च" गीता ।

**ग्रस्त** त्रि० ग्रस–कर्मणि क्त उदित्त्वात् क्त्वोवेट्कत्वेन इडभावः । १भक्षिते लुप्तवर्णपदे २अर्धपूर्णोच्चारितशब्दे न० अमरः ।

**ग्रस्तृ** त्रि० ग्रस+तृच् आर्षे इडभावः । भक्षके । "सिंहिकासुतं राहुम्" "ग्रस्तारं चैव चन्द्रस्य सूर्यस्य च महाप्रभम्" हरिवं०२२६ अ० ।

**ग्रस्तास्त** पु० ग्रस्त एवास्तः । अदृष्टमोक्षे ग्रासोत्तरमस्तगते सूर्ये चन्द्रे च । उपरागशब्दे १२१५ पृ० विवृतिः ।

**ग्रस्तोदय** पु० ग्रस्तस्य उदयः । ग्रासोत्तरं रविचन्द्रयोरुदये "ग्रस्तास्तादौ विशेषमाह गुरुः "ग्रस्तास्ते त्रिदिनं पूर्वं पश्चात् ग्रस्तोदये तथा । खण्डग्रासे च त्रिदिनं निःशेषे सप्त सप्त चेति" । काश्यपस्तु "ग्रस्तोदये परे दोषो ग्रस्तास्तेऽर्वाक् शशीनयोः । चतुर्निशावैतुभयं तत् खण्डाखण्डव्यवस्थया" इत्याह ।

**ग्रस्य** त्रि० ग्रस–कर्मणि ना० यत् । अदनीये "यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्" भा०उ०३४अ० । ण्यत् । ग्रास्य तत्रार्थे त्रि० ।

**ग्रह** हस्तव्यापारभेदे स्वीकारे ज्ञाने च क्र्या० उभ०सक०सेट् । गृह्णाति गृह्णीते । गृह्णीयात् गृह्णीत । गृह्णातु गृहाण । अगृह्णात् अगृह्णीत । अग्रहीत् अलिटि इटो दीर्घः । अग्रहीष्टाम् । अग्रहीष्ट । जग्राह जगृहतुः जग्रहिथ जगृहिव । जगृहे जगृहिवे । ग्रहीता गृह्यात् ग्रहीषीष्ट ग्रहीष्यति ते । ग्रहीतव्यः ग्रहणीयम् ग्राह्यम् पदास्वैरिबाह्यापक्ष्येषु गृह्यम् । छन्दसि प्रतिगृह्यमपिगृह्यं लोके तु प्रतिग्राह्यम् अपिग्राह्यम् । जलचरे ग्राहः । ज्योतिषि अच् ग्रहः । गृहीतः गृहीतिः । ग्रहणम् अप् ग्रहः । उद्ग्राहः मुष्टौ संग्राहः यज्ञे संग्रहः । गृहीत्वा । गृहीत्वा प्रतिगृह्य । ज्ञाने "इदं तनौ सन्निहितं परत्वं सुनेर्जनोऽहमितिरिव स्थिरायाम् । गृहीतनामादरिणाशयेन" नैष० । "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः" भाषा० । हस्तव्यापारे "गृहाण शस्त्रं यदि सर्ग एष ते" "तौ जगृहतुः पादान् राजा राज्ञी च मागधी" रघुः । "दश गृहान् गृह्णाति" श्रुतिः स्वीकारश्च स्वत्वापादनव्यापारः सेवनादिना आयत्तीकरणञ्च तत्राद्ये "तस्य किञ्चिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि" प्रा०त० मलमासा० द्वितीये "परद्रोहं न गृह्णीयात् गृह्णीयात् मार्गपोषयोः" नीतिः कर्मणि गृह्यते अग्राहि अग्राहिषाताम् अग्रहीषाताम् । अग्राहिष्यते अग्रहीष्यते । णिच् ग्राहयति ते अजीगृहत् त । सन् जिघृक्षति ते । यङ् जरीगृह्यते । यङ्लुक् जरी(रि)गृहीति जर्गृहीति जरी(रि)गर्ढि जर्गर्ढि इत्यादि" सि०कौ०जागृहीति जागर्ढि । ज्ञानसामान्यार्थत्वे णिचि प्रयोज्यस्य कर्मत्वं "शिष्यं वेदं ग्राहयतीति । गृहणमात्रार्थकत्वेऽपि कर्मत्वम् मुग्धबो० "अजीगृहत्तं जनको धनुस्तत्" भट्टिः । "यथाश्रितारं न हि देवदेयमद्रिः सुतां ग्राहयितुं शशाक" कुमा०अन्यमते भक्षणीयत्वेन विवाहत्वेन च बोधयामासेत्यर्थकत्वात् नानुपपत्तिः । मुग्धबो० द्विकर्मकमध्ये पाठात् "अग्राह वत्सनोभोज्यम्" उदा० शा०मते न द्विकर्मकतेति भेदः । वेदे हस्य भकारः । "इमामगृभ्णन् रशनामृतस्य" श्रुतिः । आर्षेऽपि क्वचित् हस्य भः गृभीतशब्दे उदा० ।

अति+अतिक्रम्य वर्त्तने "अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः" पा० "अतिक्रम्य ग्रहोऽतिग्रहः चारित्र्येणातिगृह्यते चारित्र्येणान्यानतिक्रम्य वर्त्तते इत्यर्थः" सि० कौ० "तदेतानतिगृह्यान् देवास्तानत्यगृह्णत" शत०ब्रा० ४।५।४।२

अनु+आनुकूल्यकरणे "वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम्" भा० वि० ६६श्लो० ।

सम्+अनु+अभ्यनादिना आनुकूल्ये "अवतस्य किरीटं स वैधान् समनुगृह्य च । उदतिष्ठज्जराधस्यः" भा०स०८१श्लो० ।

अप+सन्ततधारातोविच्छिद्य पृथक्कृत्य ग्रहणे "अपगृह्य पुनरिन्द्राय" कात्या० श्रौ० ८।६।२ "अपगृह्य सन्ततधारातोविच्छिद्य पृथक्कृत्वा पुनस्तया एव धारया गृह्णाति" कर्कः अपसारणे च "अपेक्ष"

त्वममपगृह्णाति" शत॰ब्रा॰ १।८।१।१६। "उभौ हस्तौ अपगृह्योपासाते" २।५।२।४२. रोधने च। "स (च्यवनः) ते विप्रः सह पत्न्या बाहुमपगृह्णात्तपसा जातमन्युः" भा॰अनु॰ ८५अ॰

अपि+पिधाने "यत्रैतत् कर्णावपिगृह्य निनदमिव"छा॰उ॰ "अपिगृह्य पिधाय" भा॰ "तस्मात् कर्णं पित्रदैवत हि तदपिगृह्यम्" शत॰ब्रा॰२।८।१।१५। आच्छादने च "तस्मात् कल्याणस्यानपि गृह्णीत"शत॰ब्रा॰४।१।१।२८

अभि+आभिमुख्येन ग्रहणे "अम्बालिका च बलवदभिगृह्य चारुसर्वाङ्गी परिणेतुमात्मनोभवनमानीता" दशकु॰

अव+प्रतिरोधे नियमे च "मन्दोऽपि नाम न महानवगृह्य साध्यः" माघः "देवनीयं संवति पदावग्रहम्" तैत्ति॰ "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" अमरः "रावणावग्रहक्लान्तमिति वागमृतेन सः"। "वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम्" रघुः।

वि+अव+अवगतौ अभ॰। "तस्यैव कपालम् व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौः" शत॰ब्रा॰७।५।१।२ "व्यवगृहीतान्तं विविधमवगृहीतोऽवगतः अन्तो यस्य" भा॰

आ+आभिमुख्येनाकर्षणे "आ त एता वचोयुजा हरी गृभ्णे सुमद्रथा" ऋ॰ ८।४५।३९ "आगृभ्णे अस्मदभिमुखं आकर्षयाम्याचार्यैरेवमर्थः" भा॰। निर्बन्धे "अनेऽपि नाकस्य पदार्पणाग्रहः" नैष॰।

आ+सम्+आभिमुख्येन संग्रहे "आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय" ऋ॰ ८।८१।१ आसंगृभाय आभिमुख्येन संगृहाण" भा॰

उत्+अर्द्ध विच्छिद्य दाने "माऽनस्य मा प्रसव उद्ग्राभेणोदग्रभीत्"यजु॰१७।६३। अर्द्धं विच्छिद्य दानम् उद्ग्राहः" वेददी॰ "उद्गृह्णते वाचो गृहीताय स्वाहा" २२।२६। उद्धृत्य उत्तोल्य ग्रहणे "शक्तिं योऽप्यग्रादुदग्रहीत्" भट्टिः।

उत्+ग्रह+णिच्। उद्ग्राहि—उपन्यासे "उद्ग्राहितम्-पन्यस्तम्" वैजयन्ती "विशेषविदुषः शास्त्रं यत्तवोद्ग्राहते मया" माघः। "सोऽभ्युद्ग्राहः सुगीतानि" भट्टिः

उप+उत्+ग्रहे। "तस्य हि शततपोद्ग्रहच् याच" छा॰उ॰ "तुष्टं हारं विद्यायादाने दीर्घसुपोद्गृह्णन् आगमिष्यन्तः" भा॰

उप+सामीप्येन ग्रहणे "दशापवित्रेणोपगृह्य हिंकरोति" शत॰ ब्रा॰ ४।२।२।११ अवष्टम्भे च "तेजो वा अद्भ्यो-भूयस्तद्वा एतद्वायुमुपगृह्याकाशमभितपति" छा॰ उ॰ "तद्वा एतत्तेजो वायुमुपगृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य वायुमाकाशमभिव्याप्नुवत्तपति" भा॰

नि+बलेन निरोधे प्रातिकूल्यकरणेन नियमने च। "स यैः प्रविशमानस्तु शैक्षेणास्येन रक्षिता। निगृहीतो बलाद्धारि सोऽस्मातिष्ठत पार्थिवः" भा॰व॰ १२६अ॰। "निगृहीतः कन्दरायां विष्णुना हलकृष्टिना" हरिव॰ २०अ॰। "तस्मात् यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" गीता "अनिग्रहादिन्द्रियाणां नरः पतनमृच्छति" याज्ञ॰

प्रति+नि+प्रतिरूपतया ग्रहणे "आदित्यपात्रेण द्रोणकलशात् प्रतिनिगृह्णीते" शत॰ब्रा॰ ४।३।५।६

वि+नि+विशेषेण निग्रहे "शिरःसु विनिगृह्यैतान् योधयाम पाण्डवः" भा॰ आ॰ १२८ अ॰

निर्+निःशेषेण ग्रहणे निग्रहे च "शक्तस्त्वमिति यो देवैर्निगृहीतः शिवाभवत्" भा॰आनु॰१८८श्लो॰

परि+परितो ग्रहणे "पाण्डुनः परिगृह्य दक्षिणेन शिरोधराम्" भा॰आ॰६२२श्लो॰। "स्थानेऽपरिगृह्य तान्" मनुः। स्वीकारे च "कस्य गृह्मः परिग्रहः" भा॰ आ॰ गन्धर्वं प्रति अर्जुनोक्तिः

प्र+प्रकर्षेण ग्रहणे। "प्रगृहीतश्च योऽस्मात्योनिगृहीतश्च कारणैः" भा॰वि॰ १२श्लो॰। सन्धिकार्यनिषेधाय विविच्य ग्रहणे "प्रग्रहं पदम्" पा॰ प्रगृह्यशब्दे दृश्यम्।

प्रति+दत्तवस्तुनोपग्रहणे "सप्त वित्तागमाः धर्म्या दायो लाभः क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रह एव च" स्मृतिः "बाह्मणाध्यापनप्रतिपच्छैर्ब्राह्मणो धनमर्जयेत्" स्मृतिः अदृष्टार्थत्यक्तद्रव्यस्वीकार एव प्रतिग्रहो मुख्यः अन्यत्र भाक्तः। "घोरे प्रतिग्रहस्याज्यस्त्याज्यो धर्मस्य विक्रयः" "तत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि" भा॰ त॰ गङ्गाभा॰। "प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्" भा॰त॰ "अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षित. भा॰ व॰ ४४१ श्लो॰। प्रतिरूपतया प्रत्यादिग्रहणे च "तथैव परावृत्तो भीष्मो दिव्यमस्त्रमुदीरयत्। प्रत्यगृह्णादमेयात्मा" भा॰ वि॰ ६० अ॰। स्वीकारमात्रे "प्रतिग्रहीतुं प्रणयिप्रियत्वात्" कुमा॰ "अनोषाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः" रघुः।

वि+विरोधे रोधने। "सन्दधीत न चानार्यं विगृह्णीयान्न बन्धुभिः" भा॰ शा॰७०अ॰ "विगृह्य मातृन् कौन्तेय!

ज्ञेयः क्षितिपतिस्तदा” भा० आश्र० ६ अ० । विशेषेण ज्ञाने “न विगृह्णाति वैषम्यम्” भाग० ३।२२।२।४ श्लो०। “अविगृह्य गतादिस्था यथा ग्रामादिकर्मभिः” हरिः विशेषग्रहः अवयवीभावः । विग्रहो देहः । “रत्न-प्रसाधितभुवः शतविग्रहाश्च” वेणी पञ्चविधवृत्तिस्फु-टीकरणवचनभेदे “वृत्त्यर्थविवरणं विग्रहः” सि०कौ० “सप्तम्या विग्रहस्तया” शब्दश०प्र० ।

सम्+सञ्चये नानास्थानपठितस्य एकत्र समावेशार्थे संदर्भ-भेदे “संग्रहेऽस्तमुपागते” वाक्यपदीयम् । स्वीकरणे “संगृह्णती कौशिकमुत्तरीयम्” भा०व० १५६०२श्लो० एकत्रीकरणे “संगृह्य तत्समैरङ्गैर्निर्ममे श्रियमुत्तमाम्” ८।५।८ श्लो० सम्यग्ग्रहणे “औषधानि च सर्वाणि मूलानि च फलानि च । चतुर्विधांश्च वैद्यान् वै संगृह्णी-याद्विशेषतः” भा०शा० २६५४ श्लो०। घञ् संग्राहः सञ्चये द्रव्यसंग्रहः” सि०कौ०

ग्रह आदाने वा चुरा० उभ० पक्षे भ्वा० पर० सक० वेट् । ग्राहयति ते ग्रहति । अजिग्रहत् त अग्रहीत् अ-ग्राहीत् ।

ग्रह पु० ग्रह–अच् । १नवसु सूर्य्यादिषु । २बालारिष्टकारेषु स्कन्दग्रहादिषु भावे अप् । ३अनुग्रहे, ४निर्बन्धे, “अ-स्मद्भ्येऽनवग्रहः” नैष० ५आदाने ग्रहणे, ६रणो-द्यमे, ७सङ्ग्रहे, ८चन्द्रसूर्ययोग्रासे च “तदा सम्भाव्यते ग्रहः इति ज्योतिषम् “एकराशं परित्यज्य कुर्यात् पार्थिवहं ग्रहे” ज्योति० सूर्यादयश्च

“सूर्यश्चन्द्रोमङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः”। एषां गतिभेदाः ग्रहगति-शब्दे २४१२पृ०दर्शिताः । राहुकेत्वोर्यथा ग्रहत्वं पौ०शा० व्यवस्थापितं तच्च केतुशब्दे २२२४ पृ०उक्तम् । शा०ति० १पटले “लोकानग्नीन् सुरान् धातून् मुनीन् द्वीपान् ग्र-हानपि । समिधः सप्तसंख्याताः सप्त जिह्वा हविर्भुजः” इत्यनेन ग्रहाणां यत् सप्तत्वमुक्तं तत् पराहमताभि-प्रायेण । तच्च १३११पृ० उपरागशब्दे असत्तास्वाद-विशेषादित्याद्युक्तम् । अन्यमताभिप्रायेण ग्रहाणां नवत्वं ६पटले शा०ति०उक्तं यथा “नव वर्गाः समुत्पन्ना नवरत्नेश्वरा ग्रहाः । अर्केन्दुरक्तशुक्रभृगुमन्दाहि-केतवः । माणिक्यं मौक्तिकं चारु विद्रुमं गारुड-त्मतः । पुष्परागं वज्रं नीलं गोमेदकं शुभम् । वैदूर्यं नव रत्नानि” ।

स्कन्दग्रहादीनां नवानां लक्षणविभागः सुश्रुते उक्तो यथा “अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम् । उत्पत्तिं का-रणञ्चैव सुश्रुतैकमनाः शृणु ॥ स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार२ एव च । शकुनी३ रेवती४ चैव पूतना५ चान्धपूतना६ ॥ पूतना शीतनामा७ च तथैव मुखमण्डि-का८ । नवमो नैगमेयश्च९ यः पितृग्रहसंज्ञितः ॥ धा-त्रीमात्रोः प्राक्प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचारहीनान् । त्रस्तान् हृष्टांस्तर्जितान् ताडितान् वा पूजाहे-तोर्हिंस्युरेते कुमारान् ॥ ऐश्वर्यस्थास्ते न शक्या विशन्तो देहं द्रष्टुं मानुषैर्विश्वरूपाः । आप्तं वाक्यं तत्प्रती-क्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति ॥ शूनाक्षः क्षतजसगन्धिकः स्तनद्विड् वक्रास्यो हतचलितैकपक्ष्मनेत्रः । उद्विग्नः सुललितचक्षुरस्त्ररोदी स्कन्दार्त्तो भवति च गा-ढमुष्टिवर्च्चाः१ ॥ निःसंज्ञो भवति पुनर्भवेत्ससंज्ञः संरब्धः करचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भ-माणः फेनञ्च प्रसृजति तत्सखाभिपन्नः२ ॥ त्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीडितः सम-न्तात् । स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या३ ॥ रक्तास्यो हरितमलोऽतिपा-ण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः । रेवत्या व्यथिततनुश्च कर्णनासं मृद्नाति ध्रुवमभिपीडितः कुमारः४॥ स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ विड्भिन्नं सृजति च काकतुल्यगन्धिः । छर्द्यार्त्तो हृषिततनूरुहः कुमार स्तृष्णालुर्भवति च पूतनागृहीतः५ ॥ यो द्वेष्टि स्तनम-तिसारकासहिक्काच्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः । दुर्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्ध-पूतनार्त्तम्६॥ उद्विग्नो भृशमतिवेपते प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः । विस्राङ्गो भृशमतिसा-र्यते च यस्तं जानीयाद्भिषगिह शीतपूतनार्त्तम्७ ॥ म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो बह्वाशी कलुषशिरा-वृतोदरो यः । सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरिह वक्त्रमण्डिकार्त्तः८ ॥ यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः । ज्वर्य्येत सततमथो वसासगन्धिर्निःसंज्ञो भवति हि नैगमेयजुष्टः९ ॥ प्रस्तब्धो यः स्तनद्वेषी मुह्यते चावि-शन्मुहुः । तं बालं नचिराद्धन्ति ग्रहः सम्पूर्णलक्षणः । विपरीतमतःसाध्यं चिकित्सेदचिरार्दितम् । गृहे पुरा-

ग्रहणाध्यानादिकं ग्रहयन्नशब्दे वक्ष्यते । ग्रहणादीनां तद्गणादिकञ्च तत्तद्ग्रहशब्दे उक्तं वक्ष्यमाणञ्च द्रष्टव्यम् । "उत्कस्य ग्रहपञ्चके" ति० त० श्रीरामजन्मदिने "ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैः" रघुः । गृह्यतेऽनेन करणे अप् । इमोना दशग्रहणपात्रे "दश ग्रहान् गृह्णाति" "ग्रहं समार्ष्टि" श्रुतिः सोमादिग्रहणसाधनपात्रनामानि च यागभेदेन भिन्नानि तानि "दश सोमग्रहान् गृह्णाति" इत्यादौ शत० ब्रा० दर्शितानि । एवं यागभेदे ग्रहभेदाः तत्रोक्ता ह्रस्याः । गृह्यतेऽनेन करणेऽप् । १-प्राणाद्यष्टके प्राणादीनां ग्रहत्वम् वृ० उ० उक्तं यथा "याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहाः ? इति अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे ते ? इति । प्राणो१ वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धं जिघ्रति । वाग्२ वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति । जिह्वा३ वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति । चक्षु४ र्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति । श्रोत्रं५ वै ग्रहः स शब्देनातिग्राहेण गृहीतः । श्रोत्रेण हि शब्दाञ्छृणोति । मनो६ वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते । हस्तौ७ वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति । त्वग्८ वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः" वृ० उ० ।

"ये तेऽष्टौ ग्रहा अभिहिताः कतमे ते नियमेन ग्रहीतव्या इति तत्राह । प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते । प्रकरणाद्वायुसहितः सोऽपानेनेति गन्धेनैवैतदपानसचिवत्वादपानो गन्ध उच्यते । अपानोपहृतं हि गन्धम् घ्राणेन सर्वोलोको जिघ्रति । तदेतदुच्यते अपानेन हि गन्धान् जिघ्रतीति । वाग्वै ग्रहो वाचा ह्यध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदया सत्याऽनृताऽसभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकोऽपहृतः तेन वाक् ग्रहः स नाम्नातिग्राहेण गृहीतः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणातिग्राहेणातिग्राहेणेति दैर्घ्यं छान्दसं, नाम वक्तव्यार्था हि वाक् । तेन वक्तव्येनार्थेन प्रयुक्ता वाक् तेन वशीकृता तेन तत्कार्यमकृत्वा नैव तस्या मोक्षः । अतो नाम्नातिग्रहेण गृहीता वागित्युच्यते वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थैर्युज्यते । समानमन्यदग्रते त्वक्पर्यन्ता अष्टौ ग्रहाः स्पर्शपर्यन्ताश्च एतेऽष्टावतिग्रहा इति" भा० ।

**ग्रहकल्लोल** पु० ग्रहेषु कल्लोल इव । राहौ त्रिका० ।

**ग्रहकुष्माण्ड** पु० गृह्णाति ग्रह—अच् कुष्माण्डमाकारोऽस्त्यस्य अच् कर्म०। नराणामुपद्रावके कुष्माण्डाकारे रूपभेदे । "डाकिनी शाकिनी भूतप्रेता वेताल राक्षसाः । ग्रहकुष्माण्डखेटाद्या कालकर्णीशिशुग्रहाः । सर्वे प्रशममायान्ति शिवतीर्थजलोक्षणात्" का० ख० २२अ० । अत्र ग्रह इति भिन्नं पदमित्यन्ये

**ग्रहगणित** न० ग्रहाणां तद्गत्यादीनां गणितं गणनं यत्र । त्रिस्कन्धज्योतिषान्तर्गते तन्त्र नके शास्त्रभेदे "ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्" इत्युपक्रमे "स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानं त्वसौ" मु० चि० १अ० । "ग्रहगणितहोरासंहिताहोराग्रन्थार्थवेत्ता । तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु" इत्यनेन तत्रैव तद्भेदा उक्ताः । तत्प्रतिपाद्यविषयाश्च गणकशब्दे दर्शिततद्ग्रन्थे उक्तप्रायाः । सौरागमप्रतिपाद्यविषयाश्च सि० शि० सम्मता यथा । मध्यमाधिकारः कालमानम् भगोलः ग्रहस्फुटीकरणम् । ग्रहकक्षा प्रत्यब्दशुद्धः अधिमासादिस्फुटीकरणम् । त्रिप्रश्नाधिकारः । पर्वसम्भवः चन्द्रग्रहणम् सूर्यग्रहणम् ग्रहणच्छाया ग्रहोदयास्तनिर्णयः । शृङ्गोन्नतिः ग्रहयुतिः भग्रहयुतिः पाताधिकारः । एतेषां च विशेषस्तत्तच्छब्दे उक्तोवक्ष्यते च ।

**ग्रहगोचर** पु० ६त० । ग्रहाणां जन्मराशितःस्थानभेदेन शुभाशुभसूचके गतिभेदे । गोचरशब्दे उक्तप्रायोऽपि विशेषोऽत्राभिधीयते यथा ज्यो०सं०१०४अ० । तत्र ये श्लोकाश्छन्दस्कास्तन्नामापि तत्र भङ्ग्योक्तं द्रष्टव्यम्

"प्रायेण गोचरो व्यवहार्योऽतस्तत्फलानि वक्ष्यामि । नानाहर्मैस्तस्मो सुखचपलत्वं जनस्यार्याः । माण्डव्य गिरं श्रुत्वा न मदीया रोचतेऽथवा नैवम् । साध्वी तथा न पुंसां प्रिया यथा स्याज्जघनचपला ।

सूर्यः षट्त्रिदशास्थितस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा जीवः सप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ । सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्त्ये शुभाः शुक्रः सप्तमषड्दशर्क्षसहितः शार्दूलवत्त्रासकृत् ।

मानवेश्वेन शुद्धः" । वामवेधश्च दूरगजम्योति एवमत्वेति वक्ष्यमाणवचनाभ्यामेकार्थत्वाद्बोद्धव्यम् । "उपचयकरयुक्तः सव्यगः शुक्लपक्षे शुभमभिलषमाणः सौम्यमध्यस्थितो वा । अपि विषमिष्टदृयुक्तः कारकत्वेऽपि चेन्द्रजयधनसुखदाता तत्प्रवृत्तोऽन्यथा तु" । सव्यग उत्तरायणचारी । उपचयकरस्य पश्चाद्वर्त्ती वा अतएवोक्तम् । "भानां यथा सम्भवमुत्तरेण पश्चाद्ग्रहाणां यदि वा शशाङ्कः । शुभप्रदानां शुभदः प्रयाणे वाम्येन यातोन शुभः शशाङ्कः । योऽयस्य दशमगृहगः स तस्य वश्यो भवति नियमेन । कर्कतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्तोऽवस्थिताः । जन्मकालत्रयगास्ते तु कारकाः कर्मगस्तु तेषां विशेषतः । सितपक्षादौ चन्द्रे शुभे शुभं पक्षमशुभमशुभे च । कृष्णे गोचरशुभदोन शुभः पक्षः शुभोऽतोऽन्यः" । भीमपराक्रमे । "शुक्ले पक्षे प्रतिपदि चन्द्रे शिवे शिवं पक्षम् । कृष्णे प्रतिपदि ताराशुद्धौ शुभं विदुः पक्षम्" । सर्वोपशादस्तत्रैव

"मार्कण्डेय पुराणम् "द्रव्ये गोष्ठेषु भृत्येषु सुहृत्सु तनयेषु च । भार्य्यायाञ्च गृहे दुष्टे भयं पुण्यवतां न्वणाम् । फाल्गुन्यचास्तपुण्यानां सर्वत्रैवातिपापिनाम् । न कुत्रापि छायापानां नराणां जायते भयम्" ।

**ग्रहगति** स्त्री ६त० । ग्रहाणां प्रत्यहं भांशगमनभेदे । तत्र अगगति शब्दे २४१४ पृ० चक्रमतिभेदात्तत् कारणादिकं च दर्शितम् । तत्र ग्रहाणां सावनदिनगतिमानं सि०शि० उक्तं तत्र खगोलशब्दे २४१२पृ० उक्तं । तथापि विशेषोऽत्रोच्यते । तत्र ग्रहाणां दिनगतिसाधनं सि०शि० उक्तं यथा

"मह्वीमिताद्युगणात् फलानि यानि तत्कलाः । भवन्ति मध्यमाः क्रमाद्भासदां द्युभुक्तयः । समा गतिस्तु योजनैर्नभःसदां सदा भवेत् । कलादिकल्पनावशान्मृदुदृता च सा स्मृता" सि०शि० ।

"अत्रोपपत्तिस्तु गोलवेन । पूर्वं गतिर्योजनात्मिका ग्रहाणां तुल्यैवोक्ता । स्पष्टानोमतुल्या । सा कलादिकल्पनावशात् । इदानीमतुल्यत्वे कारणमाह" प्रमिता० "कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्कितास्ता वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः । तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा मन्दाक्रान्ता इव शशधराद्भान्ति यान्तः क्रमेण" सि०शि० ।

"यतः सर्वा अपि कक्षाचक्र२१६००) लिप्ताभिरेवाङ्किताः अतो महति वृत्ते महत्यो लिप्ताः स्युः । लघुनि लघ्व्यः । तद्यथा चन्द्रकक्षा सर्वाधःस्था लघुः । तस्यामेका कला पञ्चदशभिर्योजनैर्भवति । शनेः कक्षा सर्वोपरिस्था सा महती । तस्यामेका कला योजनानां षड्भिः सहस्रैरेकसप्तत्योनैः ५९२९ भवति । योजनं चतुःक्रोशमेव । अतश्चन्द्रात् सकाशादूर्ध्वोर्ध्वस्था बुधशुक्रादयः क्रमेण मन्दाक्रान्ता मन्दगतय इव भान्ति । मन्दाक्रान्ताच्छन्दोऽपि सूचितम्" प्रमिता० । स्फुटगतिमाह

"दिनान्तरस्पष्टखगान्तरं स्याद् गतिः स्फुटा तत्समयान्तराले । कोटी फलघ्नी मृदुकेन्द्रभुक्तिस्त्रिज्योद्धृता कर्किमृगादिकेन्द्रे । तया युतोना ग्रहमध्यभुक्तिस्तात्कालिकी केन्द्रपरिस्फुटा स्यात् । समीपतिथ्यन्तसमीपचालनं विधोस्तु तत्कालजयैव युज्यते । सुदूरसंचालनमाद्यया यतः प्रतिक्षणं सा न समा महत्त्वतः" सि०शि०

"अद्यतनश्वस्तनस्फुटग्रहयोरौदयिकयोर्दिनार्द्धजयोर्वा तात्कालिकयोर्वा यदन्तरं कलादिकं सा स्फुटा गतिः । अद्यतनात् श्वस्तने न्यूने वक्रा गतिर्ज्ञेया । तत्समयान्तराले इति । तस्य कालस्य मध्येऽनया गत्या ग्रहश्चालयितुं युज्यत इति । इयं किल स्थूला गतिः । अथ सूक्ष्मा तात्कालिकी कथ्यते । तद्भुगत्यूना चन्द्रगतिः । अन्येषां पश्चाद्गृहगतिरेव केन्द्रगतिः । मृदुकेन्द्रकोटिफलं कृत्वा तेन केन्द्रगतिर्गुण्या त्रिज्यया भाज्या लब्धेन कर्क्यादिकेन्द्रे ग्रहगतिर्युक्ता कार्या । मृगादौ तु रहिता कार्या । एवं तात्कालिकी मन्दपरिस्फुटा स्यात् । तात्कालिक्या भुक्त्या चन्द्रस्य विशिष्टं प्रयोजनम् तदाह । समीपतिथ्यन्तसमीपचालनमिति । यत्कालिकचन्द्रस्तस्मात् कालाद्गतो वा गम्यो वा यदासन्नस्तिथ्यन्तस्तदा तात्कालिक्या गत्या तिथिसाधनं कर्तुं युज्यते । तथा समीपचालनं च । यदा तु दूरतरस्तिथ्यन्तो दूरचालनं वा चन्द्रस्य तदाद्यया स्थूलया कर्तुं युज्यते स्थूलकालत्वात् । यतश्चन्द्रगतिर्महत्त्वात् प्रतिक्षणं समा न भवति । अतस्तदर्थमयं विशेषोऽभिहितः । अथ गतिफलवासना । अद्यतनश्वस्तनग्रहयोरन्तरं गतिः । अत एव ग्रहफलयोरन्तरं गतिफलं भवितुमर्हति । अथ तत्साधनम् । अद्यतनश्वस्तनकेन्द्रयोरन्तरं केन्द्रगतिः । भुजज्याकरणे यद्भोग्यखण्डं तेन सा गुण्या शरद्विदस्रैः२२५भाज्या । तत्र तावत् तात्कालिकभोग्यखण्ड-

करणायानुपातः। यदि त्रिज्यातुल्यया कोटिज्ययाद्यं भोग्यखण्डं शरद्विदस्रतुल्यं लभ्यते तदेष्टया किमित्यत्र कोटिज्यायाः शरद्विदस्रा २२५ गुणस्त्रिज्या हरः। फलं तात्कालिकं स्फुटभोग्यखण्डं तेन केन्द्रगतिर्गुणनीया शरद्विदस्रैर्भाज्या। अत्र शरद्विदस्रमितयोर्गुणकभाजकयोस्तुल्यत्वान्नाशे कृते केन्द्रगतेः कोटिज्या गुणस्त्रिज्या हरः स्यात्। फलमद्यतनकेन्द्रदोर्ज्ययोरन्तरं भवति। तत्फलकरणार्थं स्वपरिधिना गुण्यं भांशै ३६० र्भाज्यम्। पूर्वं किल गुणकः कोटिज्या सा यावत् परिधिना गुण्यते भांशै ३६० र्ह्रियते तावत् कोटिफलं जायत इत्युपपन्नं कोटी फलघ्नी स्फुटकेन्द्रभुक्तिरित्यादि। एवमद्यतनश्वस्तनग्रहफलयोरन्तरं तद्गतेः फलं कर्क्यादिकेन्द्रे ग्रहणफलस्यापचीयमानत्वात् तुलादौ धनफलस्योपचीयमानत्वाद्धनम्। मकरादौ तु धनफलस्यापचीयमानत्वाऋणादाद्दणफलस्योपचीयमानत्वादृणमित्युपपन्नम्” प्रमिता०।

**ग्रहगर्भ** पु० ६त०। ग्रहयग्रशब्दे वक्ष्यमाणे स्वर्यादुद्देशेन देये रक्तचन्दनादौ।

**ग्रहचिन्तक** पु० ग्रहान् शुभाशुभदायकतया चिन्तयति चिन्ति–ण्वुल् ६त०। दैवज्ञे सांवत्सरिके। “वक्तव्यमिष्टं जगतोऽशुभं वा शास्त्रोपदेशाद् ग्रहचिन्तकेन” बृ० स० २४अ०।

**ग्रहण** न० ग्रह–भावे ल्युट्। १स्वीकारे २ज्ञाने। ३आदरे ४उपरागे चन्द्रसूर्ययोः राहुणा ग्रसने करणे ल्युट्। ५करे मेदि०। ६इन्द्रिये राजनि०। ७शब्दे जटा०। तत्र करस्य ग्रहणसाधनत्वात् इन्द्रियाणां शब्दस्य च ज्ञानसाधनत्वात् तथात्वम्। उपरागस्य यथा राहुकृतत्वं तथा उपरागशब्दे १२११पृ० उक्तम्।

“चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते” संवत्सर प्रदीपः। तत्रातुरस्यापि स्नानमाह “आदित्यकिरणैः पूतं पुनः पूतञ्च वह्निना। जलं, व्याध्यातुरः स्नायात् ग्रहणेऽप्युष्णवारिणा” व्यासः। तत्र सर्वजलस्य गङ्गातुल्यतामाह व्यासः “सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः। सर्वं गङ्गासमं तोयं ग्रहणे नात्र संशयः”। तत्र श्राद्धस्यावश्यकतामाह शाता०। “सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु तत् श्राद्धं पङ्के गौरिव सीदति”। तत्रामान्नेन श्राद्धमाह प्रचेताः “आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा। आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि”। आमश्राद्धेऽपि विशेषो योगिनीतन्त्रे “निरग्नेरामश्राद्धे तु अन्नं न चालयेत् क्वचित्। इन्दौ तु चालयेदन्नं संक्रमे ग्रहणेषु च”। ग्रहणश्राद्धादिकं मलमासेऽपि कार्यं यथाह कालमा० स्मृतिः “चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा”। तत्र दीक्षायां नैव कालादिशुद्ध्यपेक्षा “सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत्” सारसंग्रहः। तत्र वारभेदे गुणाधिक्यम् “चन्द्रग्रहश्चन्द्रवारे रवौ सूर्यग्रहस्तथा। चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम्। अन्यस्माद्ग्रहणात् कोटिगुणमत्र फलं लभेत्” गरु०पु०। अत्र पुरश्चरणप्रकारः “अथ वान्यप्रकारेण पुरश्चरणमिष्यते। ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः। नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः। यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः। ग्रहणादि विमोक्षान्तं जपेन्मन्त्रं समाहितः। अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत्। तदन्ते महतीं पूजां कुर्याद्ब्राह्मणतर्पणम्। ततो मन्त्रप्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत्। एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति”। ति०त० पुरश्चरणच०। तत्र स्नानस्यावश्यकतामाह वृहद्वसिष्ठः “संक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानवः। सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च सर्वदा” अत्राशौचेऽपि साङ्गस्नानमात्रं कार्यं यथाह स्मृतिः। “सूतके मृतके चैव न दोषो राहुदर्शने। स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्जितम्”। अत्र मृताशौचं नास्ति यथोक्तम् “चन्द्रसूर्यग्रहे चैव मृतानां पिण्डकर्मणि। महातीर्थे तु संप्राप्ते मृतदोषो न विद्यते” भविष्यपु०।

तत्र ज्ञाने “भार्य्यात्वसंपादकं ग्रहणं विवाहः” उद्वा०त० रघु०। “स्वतएव सतां परार्थता ग्रहणानां हि यथा यथार्थता” नैष०। आदाने “पाणिग्रहणिकाः मन्त्रा नियतं दारलक्षणम्” उ० त० स्मृतिः। “आचारधूमग्रहणात् बभूव” रघुः। “स बाहुशतमुद्यम्य सर्व्वैश्च ग्रहणं रणे” हरिवं० ४८अ०। “अर्थवद्ग्रहणेनानर्थकस्य” “अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति” व्या० परिभाषा।

**ग्रहणक** न०-गृह्यतेऽनेन ग्रह–करणे ल्युट् ततः स्वार्थे क। ग्राहके शास्त्रे। “हकरादीनामपि ग्रहणकशास्त्रत्वात्

**ग्रहयुति** पु॰ ६त॰। ग्रहाणामेकराश्यादिस्थितिभेदेन भूतभव्यानं कल्पनीययोगभेदे तद्विशेषः सूर्य्यसि॰ उक्तो यथा "ताराग्रहाणामन्योन्यं स्यातां युद्धसमागमौ। समागमः शशाङ्केन सूर्य्येणास्तमनं सह" सू॰सि॰ "ताराग्रहाणां भौमादिपञ्चग्रहाणां परस्परं योगे युद्धसमागमौ वक्ष्यमाणलक्षणभिन्नौ स्तः। चन्द्रेण सह पञ्चताराग्रहान्यतमस्य योगः समागमसंज्ञः। सूर्य्येण सह पञ्चताराणामन्यतमस्य चन्द्रस्य वा योगस्तदस्तमनं पूर्वोक्तलक्षणम् न त्वस्तमात्रम् युत्यभावे प्रागपरकाले तस्य सत्त्वात्। अथ युतेर्गतैष्यत्वं सार्द्धश्लोकेनाह" रङ्गना॰ "शीघ्रे मन्दाधिकेऽतीतः संयोगो भवितान्यथा। द्वयोः प्राग्यायिनोरेवं वक्रिणोस्तु विपर्ययात्। प्राग्यायिन्यधिकेऽतीतो वक्रिण्येष्यः समागमः" सू॰सि॰।

"ययोर्ग्रहयोर्योगोऽभिमतस्तयोर्ग्रहयोर्मध्ये यः शीघ्रगतिर्ग्रहस्तस्मिन् मन्दाधिके मन्दगतिग्रहादधिके सति तयोः संयोगो युतिसम्बन्धोऽतीतः पूर्वं जात इत्यर्थः। अन्यथा मन्दगतिग्रहे शीघ्रगतिग्रहादधिके सतीत्यर्थः। तयोर्योगो भविता एष्यः। एतदुक्तं गतैष्यत्वम् द्वयोर्ग्रहयोः प्राग्यायिनोः पूर्वगतिकयोर्भवति। वक्रिणोर्वक्रगतिग्रहयोर्विपर्ययादुक्तवैपरीत्यात्। उक्ताराद्गतैष्यो योगो भवति। शीघ्रगतिग्रहे मन्दगतिग्रहादधिके एष्यः संयोगो, मन्दगतिग्रहे शीघ्रगतिग्रहादधिके गतः संयोग इत्यर्थः। अथैकस्य वक्रत्वे चाह। प्राग्यायिनीति। द्वयोर्मध्य एकतरस्मिन् वक्रिणि सति तदा वक्रगतिग्रहात् पूर्वगतिग्रहेऽधिके सति गतो जातः। यदा तु पूर्वगतिग्रहाद्वक्रगतिग्रहेऽधिके सति समागमो योगस्तदा एष्यः स्यात्। अत्रोपपत्तिः। पूर्वगयोर्ग्रहयोर्मध्ये शीघ्रगस्याधिकत्वेऽग्रे योगासम्भवात् पूर्वं योगो जातः। मन्दगस्याधिकत्वे शीघ्रगस्य न्यूनत्वादग्रे योगो भविष्यति। वक्रिणोस्तु शीघ्रगस्याधिकत्वेऽग्रे तन्न्यूनत्वेन योगसम्भवादेष्यो योगो मन्दगस्याधिकत्वे शीघ्रगस्योत्तरोत्तरं न्यूनत्वसम्भवेनाग्रे योगासम्भवाद्गतो योगः। अथ वक्रगतिग्रहात् पूर्वगतिग्रहेऽधिके उत्तरोत्तरं योगासम्भवाद्गतो योगः। पूर्वगतिग्रहाद्वक्रगतिग्रहेऽधिके वक्रगतिग्रहस्य न्यूनत्वेनाग्रे योगसम्भवादेष्यः संयोग इति। अथ युतिकाले तत्त्वग्रहयोरानयनं युतिकालस्य गतैष्यदिनाद्यानयनं च सार्द्धश्लोकद्वयेनाह" रङ्गना॰।

"ग्रहान्तरकलाः स्वस्वभुक्तिलिप्तासमाहताः। भुक्त्यन्तरेण विभजेदनुलोमविलोमयोः। द्वयोर्वक्रिण्यथैकस्मिन् भुक्तियोगेन भाजयेत्। लब्धं लिप्तादिकं शोध्यं गते, देयं भविष्यति। विपर्ययाद्वक्रगत्योरेकस्मिंस्तु धनव्ययौ। समलिप्तौ भवेतां तौ ग्रहौ भगणसंस्थितौ। विवरं तद्वदुद्धृत्य दिनादि फलमिष्यते" सू॰सि॰।

"युतिसम्बन्धिनोर्ग्रहयोरभीष्टैककालिकयोरन्तरस्य कलाः पृथक् स्वस्वगतिकलाभिर्गुणिताः (कर्मभूताः) द्वयोर्ग्रहयोरनुलोमविलोमयोर्मार्गगयोर्वक्रगयोर्वेत्यर्थः। स्फुटगत्यन्तरेण गणको भजेत्। विशेषमाह। वक्रिणीति अथानन्तरं द्वयोर्मध्य एकतरे वक्रिणि सति तयोर्गतियोगेन भजेत्। फलं कलादि स्वं स्वं गते योगे सति ग्रहयोर्मार्गगयोः शोध्यं, भविष्यति—एष्ये योगे सति तयोर्देयं योज्यम्। द्वयोर्वक्रगत्योः स्वं स्वं फलं विपर्ययादुक्तवैपरीत्येन कार्यम्। गते योगे योज्यम्। एष्ये योगे हीनमित्यर्थः। द्वयोर्मध्य एकतरे तु काराद्वक्रिणि सति ययोर्ग्रहयोर्वक्रमार्गगयोः स्वस्वकलात्मकफलाङ्कौ धनव्ययौ युतहीनौ कार्यौ। तथाहि। गतयोगे मार्गगग्रहे स्वफलं हीनं, वक्रिणि ग्रहे योज्यम्। एष्ये योगे वक्रग्रहे शोध्यम्। मार्गगग्रहे योज्यमिति। एवं कृते तौ युतिसम्बन्धिनौ ग्रहौ भगणसंस्थौ भगणे राश्यधिष्ठितचक्रे संस्थितिर्ययोस्तौ राश्याद्यात्मकौ समलिप्तौ समकलौ स्तः। लिप्तापदस्य भगणावयवोपलक्षणत्वेन समौ स्त इत्यर्थः। अथ युतिकालज्ञानमाह विवरमिति। अभीष्टकालिकयोर्युतिसम्बन्धिनोर्ग्रहयोरन्तरं कलात्मकं तद्वत् समकलोपयुक्तफलज्ञानार्थं यथा गतियुक्तिमन्तरं गतियोगेन गत्यन्तरेण भक्तं तथेत्यर्थः। तेन हरेण भक्त्वा फलं दिनादिकं गतैष्ययुतिवशादभीष्टकालाद्गतैष्यमुच्यते। तत्समये तद्युतिकाले तौ ग्रहौ समौ स्त इत्यर्थः। अत्रोपपत्तिः। यदि गत्यन्तरेण गतिकलास्तदा ग्रहान्तरकलाभिः काः? इति फले गतयुतौ ग्रहयोः शोध्ये। एष्ययुतौ योज्ये। द्वयोर्वक्रत्वे गत्यन्तरभक्तफले गतयुतौ ग्रहयोर्योज्ये। एष्ययुतौ शोध्ये वक्रग्रहस्योत्तरोत्तरं न्यूनत्वात्। अथैको वक्री तदा तयोरन्तरं प्रत्यहं गतियोगेनोपचितम्। अतो गतियोगहरेणागतं फलं गतयोगे मार्गगग्रहे हीनं, पूर्वं तस्य न्यूनत्वात्। वक्रग्रहे योज्यम् पूर्वं तस्याधिकत्वात्। एष्ययोगे मार्गगग्रहे योज्यम् उत्तरोत्तरमधिकत्वात्। वक्रग्रहे शोध्यम् तस्याग्रे न्यूनत्वात्। यदि गतियोगेन गत्यन्तरेण वा

दिनमेकं लभ्यते तदान्तरकलाभिः किम्? इत्यनुपातेन गतैष्यद्दिनाद्यागमः" रङ्गना०

ग्रहयुद्ध न० ६त०। ग्रहाणामुपर्युपरिस्थितानां किरणसंस्पर्शादिना युद्धभेदे तद्भेदादिकं सू० सि० उक्तं यथा

"उल्लेखं तारकास्पर्शाद्भेदे भेदः प्रकीर्त्यते। युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम्। अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुः। समागमोंऽशादधिके भवतश्चेद्बलान्वितौ" सू०सि०।

"भौमादिपञ्चताराणां मध्ये द्वयोर्युतौ तारकास्पर्शाद्बिम्बनेम्योः स्पर्शमात्रादुल्लेखसंज्ञं युद्धं वदन्ति युतिभेदज्ञाः। इदं न द्वयोर्मानैक्यखण्डतुल्ययाम्योत्तरान्तरे। भेदे मण्डलभेदे भेदो भेदसंज्ञो युद्धावान्तरभेदो युद्धभेदतत्त्वज्ञैः कथ्यते। अयं भेदो मानैक्यखण्डादूने द्वयोर्याम्योत्तरान्तरे। अत्र भास्कराचार्यैस्तु "मानैक्यार्धाद्द्युचरविवरेऽल्पे भवेद्भेदयोगः कार्यं स्पर्शग्रहवदखिलं लम्बनाद्यं स्फुटार्थम्। कल्प्योऽधःस्थः सुधांशुस्तदुपरिगइनो लम्बनादिप्रसिद्ध्यै किं त्वर्कादेव लम्बं ग्रहयुतिसमये कल्पितार्कात्तु साध्यम्। प्राग्वत् तल्लम्बनेन ग्रहयुतिसमयः संस्कृतः सुस्फुटः स्यात्। खेटौ तौ दृष्टियोग्यौ ग्रहयुतिसमये कार्यमेवं तदैव। याम्योदक्स्थद्युचरविवरं भेदयोगे च वाच्यो ज्ञेयः स्पर्शाद्भवति च यतः शीतगुः सा पराशा। मन्दाक्रान्तोऽप्यृजुरपि तदा प्राक्स्थितः स्यात् तदैन्द्र्यां स्पर्शो मोक्षोऽपरदिशि तदा पारिलेख्येऽवगम्यः" इति विशेषोऽभिहितः। भगवता तु सूक्ष्मबिम्बयोराकाशे दूरतो विविक्तदर्शनासम्भवाद्भेदप्रयासानुपेक्षितमिति ध्येयम्। युतावन्योऽन्यं किरणयोगे सति अंशुमर्दाख्यं किरणसङ्कुलनसंज्ञं युद्धं स्यात्। द्वयोर्याम्योत्तरान्तरेंऽशात् षष्टिकलात्मकैकभागादूनेऽनधिके च अपसव्यसंज्ञं युद्धं भवति। अत्र विशेषमाह। एक इति। अत्रापसव्ययुद्ध एको द्वयोरन्यतरोऽणुरल्पबिम्बश्चेत् तदापसव्यं युद्धं व्यक्तं स्यादन्यथा त्वव्यक्तं युद्धं स्यात्। एषां चतुर्णां फलम्। "अपसव्ये भयं ब्रूयात् संग्रामं रश्मिसङ्कुले। लेखनेऽमात्यपीडा स्याद्भेदने तु धनक्षयः" इति भार्गवीयोक्तं ज्ञेयम्। युद्धभेदानुक्त्वा समागममाह समागम इति। द्वयोर्याम्योत्तरान्तरे षष्टिकलात्मकैकभागादभ्यधिके सति समागमो योगो भवति। अत्रापि विशेषमाह भवत इति। युतिविषयकौ ग्रहौ बलान्वितौ बलेन—"स्थानादिबलविपलात् स्पर्शो केनापि न स्मृता। प्रथमपक्षेऽपराप्यस्मिन् स्थौल्यदीप्त्यादिबलं स्मृतम्" इति ब्रह्मसिद्धान्तवचनात् स्थूलमण्डलतयान्वितौ युक्तौ स्थूलबिम्बौ समावित्यर्थः। चेत् तदा समागमस्तयोर्व्यक्तः स्यात्। अन्यथा त्वव्यक्तः समागमः। "द्वावपि मयूखयुक्तौ विपुलौ स्निग्धौ समागमे भवतः। अत्रान्योऽन्यं प्रीतिर्विपरीतावात्मपक्षघ्नौ। युद्धं समागमो वा यद्यव्यक्तं तु लक्षणैर्भवतः। भुवि भूभृतामपि तथा फलमव्यक्तं विनिर्दिष्टम्" इत्युक्तेः। "भेदोल्लेखांशुसम्मर्दा अपसव्यस्तथापरः। ततो योगो भवेदेषामेकांशकसमापनात्" इति काश्यपोक्तेश्च सर्वं निरवद्यम्। अथ युद्धे पराजितस्य ग्रहस्य लक्षणमाह" रङ्गना०

"अपसव्ये जितो युद्धे पिहितोऽणुरदीप्तिमान्। रूक्षो विवर्णो विध्वस्तो विजितो दक्षिणाश्रितः" सू०सि०।

"द्वयोर्मध्ये यस्तदितरेण विध्वस्तो हतः स विजितः पराजितो ज्ञेयः। हतस्य लक्षणमाह अपसव्य इति। अपसव्ये युद्धे यो जितो जयलक्षणैर्विवर्जितः। एतेनोल्लेखादिभवे शङ्काफलं न पराजितस्य फलमिति सूचितम्। पिहित आच्छादितोऽव्यक्त इति यावत्। अणुरितरग्रहबिम्बादल्पबिम्बः। अदीप्तिमान् प्रभारहितः रूक्षोऽस्निग्धः विवर्णः वर्णेन स्वकीयेन स्वाभाविकेन रहित इत्यर्थः। दक्षिणाश्रित इतरग्रहापेक्षया दक्षिणदिशि स्थितः। "श्यामो वा व्यपगतरश्मिवान् रश्मिभग्नो वा रूक्षो वा व्यपगतरश्मिवान् कृशो वा। आक्रान्तो विनिपतितः कृतापसव्यो विज्ञेयो हत इति सग्रहो ग्रहेण" इति भार्गवीयोक्तेः। अथ श्लोकोत्तरार्धेन जयिनो ग्रहस्य लक्षणमाह" रङ्गना०

"उदक्स्थो दीप्तिमान् स्थूलो जयी याम्येऽपि यो बली" सू० सि० "इतरग्रहापेक्षयोत्तरदिक्स्थः दीप्तिमान् प्रभायुक्तः स्थूल इतरग्रहबिम्बापेक्षया पृथुबिम्बः। जयी जययुक्तः स्यात्। अथोत्तरदक्षिणदिक्स्थत्वक्रमेण जयपराजयौ न स्त इत्याह याम्य इति। दक्षिणदिशि यो ग्रहो बली दीप्तिमान् पृथुबिम्बो भवति स जयी। अपिशब्द उत्तरदिशासमुच्चायकः। तथा च जयपराजययोर्दिक्स्थानमनुपयुक्तमिति भावः। अथ युद्धे विशेषमाह रङ्ग०। "आसन्नावप्युभौ दीप्तौ भवतश्चेत् समागमः। स्वल्पौ द्वावपि विध्वस्तौ भवेतां कूटविग्रहौ" सू०सि०। "उभौ द्वौ आसन्नावेकभागान्तरगतान्तरितौ। अपिशब्दाद्युतस्थाक्रान्तौ। दीप्तौ प्रभायुक्तौ चेत् स्यातां तदा बलान्विता-

“इति समागमलक्षणैकदेशसद्भावात् समागमाख्यं युद्धम्। द्वावपि ग्रहौ स्थूलौ स्निग्धरश्मी विध्वस्तौ द्वावपि पराजयलक्षणाक्रान्तौ स्यातां तदा क्रमेण कूटविग्रहसञ्ज्ञकौ युद्धभेदौ स्याताम्। अथोत्सर्गतः शुक्रस्य जयलक्षणाक्रान्तत्वमस्तीति वदन् समागमः शशाङ्केनेति प्राक् प्रतिज्ञातसमागमे उक्तप्रकारमतिदिशति” रङ्ग०।

“उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी। शशाङ्केनैवमेतेषां कुर्यात् संयोगसाधनम्” सू०सि०

“इतरग्रहापेक्षयोदक्स्थो दक्षिणदिक्स्थो वोभयदिशीत्यर्थः। शुक्रः प्रायश उत्सर्गतो जयलक्षणाक्रान्तत्वेन जयी। कदाचित् पराजयलक्षणाक्रान्तो भवतीति तात्पर्यार्थः। एतेषां भौमादिपञ्चताराणां चन्द्रेण सह संयोगसाधनं युतिसाधनमेवमुक्तरीत्या गणकः कुर्यात्। अत्र विशेषार्थकम्। ‘अवनत्या स्फुटो ग्राह्यो विक्षेपः शीतगोर्युतौ’ इत्यर्थं कश्चित् पुस्तके इत्यग्रेनेन पठन्तीति क्षिप्तत्वात्तदुपेक्षितम् अधिकारस्थापत्यं लोकस्यापत्तेश्च। एतदुक्तग्रहयोगे नतिसंस्कारनिषेधस्य सिद्धत्वादयुक्तत्वाच्च तदुक्तौ स्वयं ग्रहयोक्तरीत्या साधारण्येन सर्वत्र तद्विशेषोक्तेरर्थसिद्धेरिति ध्येयम्। नन्वेषां ग्रहाणां दूरान्तरेण कक्षोर्ध्वाधरान्तरसद्भावात् परस्परं योगासम्भवेन कथं युतिः सङ्गतेत्यत आह” रङ्ग०।

“भावाभावाय लोकानां कल्पनेयं प्रदर्शिता। स्वमार्गगाः प्रयान्त्येते दूरमन्योन्यमाश्रिताः” सू०सि०।

“एते ग्रहाः स्वमार्गगाः स्वस्वकक्षास्था अन्योन्यमाश्रिता युतकालजद्रूर्ध्वाधरान्तराभावेन संयुक्ताः सन्तः प्रयान्ति गच्छन्ति इति दूरं दूरान्तरेण दर्शनादियं ग्रहयुतिकल्पना कल्पनात्मिकाऽवास्तवी प्रदर्शिता पूर्वोक्तग्रन्थेन कथिता। नन्ववस्तुभूता किमर्थमुक्तेत्यतः प्रयोजनमाह भावाभावायेति। लोकानां भूस्थप्राणिनां भावः शुभफलमभावोऽशुभफलं तस्मै शुभाशुभफलादेशायावस्तुभूतापि युतिरुक्तेति भावः” रङ्ग०।

युद्धभेदात्तत्फलविशेषाः समागमजयादिफलभेदाश्च वृ० सं० १७अ० उक्ता यथा

“युद्धं यथा यदा वा भविष्यदादिश्यते त्रिकालज्ञैः। तद्विज्ञाने करणं मया कृतं सूर्यसिद्धान्तात्। वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम्। अतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम्। आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनापसव्यैः। युद्धं चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम्। भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानां च। उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्नत्वम्। अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्दाः। युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम्। रविराक्रन्दो मध्ये पौरः पूर्वेऽपरे स्थितो यायी। पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रन्दः। केतुकुजराहुशुक्रा यायिन एते हता ग्रहा हन्युः। आक्रन्दयायिपौरान् जयिनो जयदाः स्ववर्गस्य। पौरे पौरेण हते पौराः पौरान् नृपान् विनिघ्नन्ति। एवं याय्याक्रन्दौ नागरयायिग्रहाश्चैव। दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः। अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः। उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः। विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः। द्वावपि मयूखयुक्तौ विपुलौ स्निग्धौ समागमे भवतः। तत्रान्योऽन्यं प्रीतिर्विपरीतावात्मपक्षघ्नौ। युद्धं समागमो वा यद्यव्यक्तौ तु लक्षणैर्भवतः। भुवि भूभृतामपि तथा फलमव्यक्तं विनिर्देश्यम्”।

कुजजयस्य “गुरुणा जितेऽवनिसुते वाह्लीका यायिनोऽग्निवार्त्ताश्च। शशिजेन शूरसेनाः कलिङ्गशाल्वाश्च पीड्यन्ते। सौरेणारे विजिते जयन्ति पौराः प्रजाश्च सीदन्ति। कोष्ठागारम्लेच्छक्षत्रियतापाश्च शुक्रजिते”।

बुधजयस्य “भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः। उत्तरदिक्स्थाः क्रतुदीक्षिताश्च सन्तापमायान्ति। गुरुणा बुधे तु विजिते म्लेच्छाशूद्रचौरार्थयुक्तपौरजनाः। त्रैगर्तपार्वतीयाः पीड्यन्ते कम्पते च मही। रविजेन बुधे ध्वस्ते नाविकयोधाब्जसधनगर्भिण्यः। भृगुणा जितेऽग्निकोपः सस्याम्बुदयायिविध्वंसः”।

जीवजयस्य “जीवे शुक्राभिहते कुलूतगान्धारकैकया मद्राः। शाल्वा वत्सा वङ्गा गावः सस्यानि नश्यन्ति। भौमेन हते जीवे मध्यो देशो नरेश्वरा गावः। सौरेण चार्जुनायनवसातियौधेयशिबिविप्राः। शशितनयेनापि जिते बृहस्पतौ म्लेच्छसत्यशस्त्रभृतः। उपयान्ति मध्यदेशश्च संक्षयं यच्च भक्तिफलम्”।

शुक्रजयस्य “शुक्रे बृहस्पतिहते यायी श्रेष्ठो विनाशमुपयाति। ब्रह्मक्षत्रविरोधः सलिलं च न वासवस्त्यजति। कोशलकलिङ्गवङ्गा वत्सा मत्स्याश्च मध्यदेशयुताः। महतीं प्राप्नुवन्ति पीडां षण्ढकाः शूरसे-

नाश्च। कुजविजिते भृगुतनये बलमुख्यवधो नरेन्द्रसंग्रामाः। सौम्येन पार्वतीयाः क्षीरविनाशोऽल्पवृष्टिश्च। रविजेन सिते विजिते गणमुख्याः शस्त्रजीविनः क्षत्रम्। जलजाश्च निपीड्यन्ते सामान्यं भक्तिफलमन्यत्"।

शनिजयस्य "असिते सितेन निहतेऽर्घवृद्धिरहिविहगमानिनां पीडा। क्षितिजेन टङ्कणान्ध्रोड्रकाशिबाह्लीकदेशानाम्। सौम्येन पराभूते मन्देऽङ्गवणिग्विहङ्गपशुनागाः। सन्तप्यन्ते गुरुणा स्त्रीबहुला महिषकशकाश्च"।

अयं विशेषोऽभिहितो हतानां कुजज्ञवागीशसितासितानाम्। फलं तु वाच्यं ग्रहभक्तितोऽन्यद् यथा तथा घ्नन्ति हताः स्वभक्तीः"।

"नीचास्तगतेऽरिष्टगृहेऽथ पराजिते वा जीवे भृगौ व्रतविधौ क्षतिकर्महीनः" ज्यो॰ त॰। उपयमप्रसङ्गे तत्कालस्य वर्ज्यतोक्तिर्यथा। पञ्चविधपञ्चविमर्दोदयोऽष्टम, तत्र च चन्द्रस्यान्यखेटैः समागमे वि[illegible]ः न शुभम् इत्युक्तं बृ॰ सं॰ १८ अ॰ यथा

"भानां यथासम्भवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः। प्रदक्षिणं तच्छुभकृन्नराणां याम्येन यातो न शिवः शशाङ्कः। चन्द्रमा यदि कुजात् प्रयात्युदक् पार्वतीयबलशालिनां जयः। क्षत्रियाः प्रमुदिताः सयायिनो भूरिधान्यमुदिता वसुन्धरा। उत्तरतः सङ्गतस्य शशाङ्कः पौरजयाय सुभिक्षकरश्च। सस्यचयं कुरुते जयदार्ढ्यं कोशचयं च नराधिपतीनाम्। बृहस्पतेरुत्तरगे शशाङ्के पौरद्विजक्षत्रियपण्डितानाम्। धर्मस्य देशस्य च मध्यमस्य वृद्धिः सुभिक्षं मुदिताः प्रजाश्च। भार्गवस्य यदि यात्युदक् शशी कोशयुक्तगजवाजिवृद्धिदः। यायिनां च विजयो धनुष्मतां सस्यसम्पदपि चोत्तमा तदा। रविजस्य शशी प्रदक्षिणं कुर्याच्चेत्पुरभूभृतां जयः। शककाम्बोजकसिन्धुपह्लवा मुदमाप्ताः सयवैः समन्विताः। येषामुदग्गच्छति भग्रहाणां प्रालेयरश्मिर्निरुपद्रवश्च। तद्भक्तिदेशान् पुष्णाति याम्येन निहन्ति तानि। शशिनि फलमुदक्स्थे यद्ग्रहस्योपदिष्टं भवति तदपसव्ये सर्वमेव प्रतीपम्। इति शशिसमवायाः कीर्तिता भग्रहाणां न खलु भवति युद्धं साकमिन्दोर्ग्रहैः"।

ग्रहयुतभ न॰ ग्रहद्वयेन युतं यत्र तादृशं भम्। ग्रहयुद्धाधिकरणे नक्षत्रे ऋक्षमयशब्दे उदा॰।

ग्रहवर्षादिफल न॰ ६त॰। १सूर्यादिग्रहस्वामिकवर्षमासफलभेदे। ७त॰। २तद्बोधकशास्त्रे च तच्च बृ॰ सं॰ २० अध्यायात्मकं यथा

रवेः—"सर्वत्र भूर्विरलशस्ययुता वनानि दैत्याधिपाध्युषितदंष्ट्रिसमाकुलानि। स्यन्दन्ति नैव च पयः प्रचुरं स्रवन्त्यो रुग्भेषजानि न तथातिबलान्वितानि। तीक्ष्णं तपत्यदितिजः शिशिरेऽपि काले नात्यम्बुदा जलमुचोऽचलसन्निकाशाः। नष्टप्रभर्क्षगणशीतकरं नभश्च सीदन्ति तापसकुलानि सगोकुलानि। हस्त्यश्वपत्तिमदसह्यबलैरुपेता धन्वायुधासिनिचिताश्चरन्ति। घ्नन्तो नृपा भुवि नृपाननुचरैश्च देशान् संवत्सरे दिनकरस्य दिनेऽथ मासे"।

विधोः—"व्याप्तं नभः प्रचलिताचलसन्निकाशैर्व्यालाञ्जनालिगवलच्छविभिः पयोदैः। गां पूरयद्भिरखिलामखिलाभिरद्भिः स्तोककेन गुरुणा ध्वनितेन चाशाः। तोयानि पद्मकुमुदोत्पलवन्त्यतीव फुल्लद्रुमाण्युपवनान्यलिनादितानि। गावः प्रभूतपयसो नयनाभिरामा रामा रतैरविरतं रमयन्ति रामान्। गोधूमशालियवधान्यवरेक्षुवाटा भूः पाल्यते नृपतिभिर्नगराकराढ्या। चित्यङ्किता क्रतुवरेष्टिविघुष्टनादा संवत्सरे शिशिरगोरभिसम्प्रवृत्ते"।

कुजस्य—"वातोद्धतश्चरति वह्निरतिप्रचण्डो ग्रामान् वनानि नगराणि च सन्दिधक्षुः। हाहेति दस्युगणपातहता रटन्ति निःस्वीकृता विपशवो भुवि मर्त्यसङ्घाः। अभ्युन्नता वियति संहतमूर्तयोऽपि मुञ्चन्ति न क्वचिदपः प्रचुरं पयोदाः। सीमान्तः प्रजातमपि शोषमुपैति सस्यं निष्पन्नमप्यविनयादपरे हरन्ति। भूपा न सम्यगभिपालनसक्तचित्ताः पित्तोत्थरुक्प्रचुरता भुजगप्रकोपः। एवंविधैरुपहता भवति प्रजेयं संवत्सरेऽवनिसुतस्य विपन्नसस्या"।

बुधस्य—"मायेन्द्रजालकुहकाकरनागराणां गान्धर्वलेख्यगणितास्त्रविदां च वृद्धिः। पिप्रीषया नृपतयोऽद्भुतदर्शनानि दित्सन्ति तुष्टिजननानि परस्परेभ्यः। वार्त्ता जगत्यवितथाऽविकला त्रयी च सम्यक् चरत्यपि मनोरिव दण्डनीतिः। अध्यात्मचिन्तनपराभिनिविष्टधियोऽत्र केचिदान्वीक्षिकीषु च परं पदमीहमानाः। हास्यज्ञदूतकविबालनपुंसकानां युक्तिज्ञसेतुजलपर्वतवासिनां च। हार्दिं करोति मृगलाञ्छनजः स्वकेऽब्दे मासेऽथ वा प्रचुरतां भुवि चौषधीनाम्"।

गुरोः—"ध्वनिरुच्चरितोऽध्वरे द्विजानां विपुलो यज्ञमुषां मनांसि भिन्दन्। विचरत्यनिशं द्विजोत्तमानां

हृदयानन्दकरो ऽध्वरांशभाजाम्। क्षितिसूनसमस्तवत्स-नेकद्विपपक्ष्यश्वगोमृगोकुलाथा। क्षितिपैरभिपाल्यमान-राष्ट्रा मुदिता वसुधा सदा विभाति। विविधैर्वियदुन्नतैः पयोदैर्हतभूमिं पयसाभितर्पयद्भिः। सुरराजगुरोः शुभे ऽब्द वर्षे बहुसस्या क्षितिरुत्तमर्द्धियुक्ता"।

भृगोः—"शालीक्षुमत्यपि धरा धरणीधराभधाराधरोज्झित-पयःपरिपूर्णवप्रा। श्रीमत्सरोरुहतताम्बुतडागकीर्णा योषेव भात्यभिनवाभरणोज्ज्वलाङ्गी। क्षत्रं क्षितौ क्षपितभूरिविपक्षम् उग्रम् एनैकजयघोषविराविताशम्। संहृष्टशिष्टजनदुष्टविनष्टवर्गां गां पालयन्त्यवनिपा नग-राकराढ्याम्। पेपीयते मधु मधौ सह कामिनीभिर्जे-गीयते श्रवणहारि सवेणुवीणम्। बोभुज्यतेऽतिथि-सुहृत्स्वजनैः सहान्नम् अब्दे सितस्य मदनस्य जयाव-घोषः"।

शनेः—"उन्मृदस्युगणभूरिरणाकुलानि राष्ट्राण्यनेकपशु-वित्तविनाशितानि। रोरूयमाणहतबन्धुजनैर्जनैश्च रो-गोत्तमाकुलकुलानि बुभुक्षया च। वातोद्धतान्बुधरव-र्जितमन्तरिक्षम् आरुग्णनैकविटपं च धरातलं, द्यौः। नष्टार्कचन्द्रकिरणातिरजोऽवनद्धा, तोयाशयाश्च विजलाः सरितोऽपि तन्व्यः। जातानि कुत्रचिदतोयतया विनाशम् ऋच्छन्ति वृष्टिमपराणि जलोक्षितानि। सस्यानि मन्द-मभिवर्षति वृत्रशत्रौ वर्षे दिवाकरसुतस्य सदा प्रवृत्ते"।

अधुरपटुमयूखो नीचगोऽर्यैर्जितो वा न सकलफल-दाता पुष्टिदोऽतोऽन्यथा यः। यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः शुभफलमपि चैवं चाप्यमन्योऽन्यतायाम्"।

**ग्रहयज्ञ** पु॰ ६त॰। ग्रहयज्ञे ग्रहोद्देशेन होमाऽधिकरणे वह्निभेदे स च ग्रहयज्ञशब्दे २७६२पृ॰ दर्शितः।

**ग्रहविप्र** पु॰ ६त॰। ग्रहोद्देश्यकदानग्रहणेन पतिते विप्रभेदे (देवल) "तस्य ग्रहदानोद्देश्यता च ग्रहयामले ६पटले उक्ता यथा "तुलादानन्तु यो दद्याद् ग्रहविप्राय सुन्दरि। आपन्मुक्तो भवेत् सोऽपि भुवि संमोदते सुखम्। सुवर्णस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये!। तस्य तुष्टः सुरगुरुरा-युर्वृद्धिं करोति सः। यस्तु रौप्यतुलादानं दद्यात् ग्रह-द्विजाय च। सन्तुष्टस्तस्य शुक्रः सन् स लभेद्दीर्घजीवितम्। ग्रहद्विजाय यो दद्यात्तुलां ताम्रस्य पार्वति!। सन्तुष्टो मङ्गलस्तस्य दीर्घायुष्यं करोति हि। यो दद्याद् ग्रहविप्राय पित्तलस्य तुलां प्रिये!। तस्य तुष्टो बुधः कुर्यादायुः-पुष्टिं सुगौरवम्। ग्रहविप्राय लौहस्य तुलां यस्तु प्रयच्छति। प्रीतः शनैश्चरस्तस्य विपुलायुः प्रयच्छति। सीसकस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये!। तस्या-यु राहुः सुप्रीतः सौभाग्यायुः प्रयच्छति। यः खर्पर-तुलां दद्याद् ग्रहविप्राय सुन्दरि!। सन्तुष्टो भगवान् केतु-स्तस्यायुर्वर्द्धयेत् सुखम्। तुलां ताम्रस्य यो दद्याद् ग्रहविप्राय सुन्दरि!। आदित्यस्तस्य सुप्रीतो दीर्घायुः परियच्छति। ग्रहविप्राय यो दद्यात् तुलां कांस्यस्य सुन्दरि!। सन्तुष्टस्तस्य रात्रीशो विभूत्यायुः प्रयच्छति"।

**ग्रहशृङ्गाटक** न॰ ६त॰ सं॰ २०अ॰ उक्ते ग्रहयोगभेदे यथा "यस्यां दिशि दृश्यन्ते विशन्ति ताराग्रहा रविं सर्वे। भवति भयं दिशि तस्यामायुधकोपप्रसूतं हि। चक्र-धनुःशृङ्गाटकदण्डपुरप्रासवज्रसंस्थानाः। क्षुदवृष्टिकरा लोके समराय च मानवेन्द्राणाम्। यस्मिन् खांशे दृश्या ग्रहमाला दिनकरे दिनान्तगते। तत्रान्यो भवति नृपः परचक्रोपद्रवश्च महान्। यस्मिन्नृक्षे कुर्युः समागमं तज्जनान् ग्रहा हन्युः। अविभेदनाः परस्परममयू-खाः शिवास्तेषाम्। ग्रहसंवर्त्तसमागमसम्मोहसमाज-सन्निपाताख्याः। कोशश्चेत्येतेषामभिधास्ये लक्षणं सफलम्। एकर्क्षे चत्वारः सह पौरैर्यायिनो ऽथ वा पञ्च। संवर्त्तो नाम भवेच्छिखिराहुयुतः स सम्मोहः। पौरः पौरसमेतो यायी सह यायिना समाजाख्यः। यमजीवसङ्गमे ऽन्यो यद्यागच्छेत्तदा कोशः। उदितः पश्चादेकः प्राक् चान्यो यदि स सन्निपाताख्यः। अवि-कृततनवः स्निग्धा विपुलाश्च समागमे धन्याः। संव-र्त्तसमागमाख्यौ सम्मोहकोशौ भयदौ प्रजानाम्। समाजसञ्ज्ञः सुसमः प्रदिष्टो वैरप्रकोपः खलु सन्निपाते"

**ग्रहसमागम** पु॰ ६त॰। चन्द्रेण सह भौमादिपञ्चग्रह-योगभेदे। ग्रहयुतिशब्दे ग्रहशृङ्गाटकशब्दे च विवृतिः

**ग्रहादि** पु॰ पा॰ उक्ते कर्त्तरि णिनिप्रत्ययनिमित्ते धातु-गणभेदे स च गणः णिन्यन्ततया पा॰ ग॰ सू॰ उक्तो यथा "ग्राही उत्साही उद्भासी उद्भासी स्थायी मन्त्री संमर्द्दी (रक्षश्रुवपशां नौ) निरक्षी निश्रावी निवापी निशायी (याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम्) अयाची अव्या-हारी असंव्याहारी अव्राजी अवादी अवासी (अचः अचित्तकर्त्तृकानाम्) अकारी अहारी अविनायी विशायी विषायी (अभिभावी भूते) अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिराकृतिगणः"

**ग्रहाधार** पु॰ ६त॰। ध्रुवनक्षत्रे। तस्य तथात्वञ्च खगोलशब्दे पृ॰ २४१८।२॰ दर्शितम् ग्रहाश्रयादयोऽप्यत्र।

**ग्रहाधिकरण** न॰ ग्रहस्य पात्रविशेषस्यैकत्वाविवक्षाज्ञापकमधिकरणम्। न्यायरूपे यज्ञाङ्गे अधिकरणभेदे तच्च जै॰ ३अ॰ १पादे दर्शितं संक्षेपतस्तत उद्धृत्य तत्त्वबोधिन्यामुक्तं यथा

"सोमयागे श्रूयते "दशापवित्रेण ग्रहं संमार्ष्टीति" दशापवित्रं वासःखण्डं ग्रहः सोमरसादिहविःपात्रविशेषः तत्र एकस्यैव मार्ज्जनमुत एकत्वाविवक्षया सर्व्वेषामिति संशये "पशुना रुद्रं यजेत" इत्यत्रेव एकवचनादेकत्वविवक्षया एकस्यैव मार्ज्जनं न सर्व्वेषां तथा च सू॰ "एकत्वं युक्तमेकस्य श्रुतिसंयोगादिति, प्राप्ते ब्रूमः। ग्रहाणां यागोपकरणतया प्राप्तानामनेन मार्जनसंस्कारो विधीयते तत्र ग्रहमिति द्वितीयया एकस्योद्देश्यत्वं कर्मत्वञ्च बोध्यते प्रधानं ग्रहं प्रति मार्ज्जनं गुणः "प्रतिप्रधानं गुण आवर्त्तनीयः" इति न्यायेन सर्वेषां मार्जनं प्राप्तम् उद्देश्यगतमेकत्वमविवक्षितं न च ग्रहत्वजातिमार्ज्जनेन संस्कार्या इति तदाश्रयैकमार्जनेन सर्वे संस्कृता भवन्ति, जातेः सर्वइत्तित्वादित्येकत्वविवक्षायामपि सर्वमार्ज्जनसिद्धिरिति वाच्यं जातेरमूर्त्तत्वात् अपूर्वासाधनत्वाच्च तदाश्रितानां द्रव्याणामपूर्व्वसाधनतया संमार्गात् तदुक्तम् "उद्देश्यलक्षणं जातिर्यद्द्रव्यं लक्ष्यते तया। तस्यानुक्रमेण संमार्गः सर्वस्येति विनिश्चयः"। नचैकत्वं नोद्देश्यगतम् अपि तु एकत्वं संमार्ज्जनञ्चोभयं विधेयमिति वाच्यं "ग्रहं संमृज्यात् स चैकः कार्य्य इति वाक्यभेदापत्तेः एकत्वस्य सर्वग्रहेषु विद्यमानत्वेन विधानासम्भवात् स्वसमानाधिकरणकर्म्मतानिरूपकमार्ज्जनसजातीयकर्म्मतासमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वरूपविशिष्टमेकत्वं विधेयं तथा सति सर्वमार्जनासिद्धिः अतएव एकत्वविशिष्टग्रहस्य मार्जनं विधीयते एकत्वं ग्रहत्वञ्च सर्वेषु वर्त्तत इति एकत्वविवक्षायामपि सर्वमार्जनसिद्धिरित्यपि परास्तं तादृशैकत्वस्याव्यावर्त्तकत्वात् विशिष्टैकत्वविवक्षायाञ्च उक्तदोषादिति साम्प्रदायिकाः। अन्येत्वेवम् एकत्वविवक्षायामपि सर्वमार्जनसिद्धिः तथाहि एकत्वविवक्षायां प्रत्येकमेव मार्जनं न तु मिलितानामेकं मार्जनं तथात्वे साहित्यवचनं निर्द्दिश्येत। तस्मादेकवचननिर्द्देशात् प्रतिप्रधानं गुणावृत्तिन्यायात् प्रत्येकं सर्वेषां मार्जनमिति। इत्थञ्च स्वसमानाधिकरणकर्मतानिरूपकमार्जननिरूपितकर्मतासमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वरूपविशिष्टैकत्वमेव विवक्षितं स्यात्। अविवक्षितत्वसिद्धान्तस्तु एकस्यैव मार्जनं न सर्वेषामिति प्रापकस्य स्वसमानाधिकरणेत्यादिपूर्व्वपक्षोक्तस्य सामान्यतो मार्जनघटितैकत्वस्य विवक्षामादाय। न चैवं ग्रहं संमार्ष्टीति वाक्यात् कथं सर्वेषां मार्जनबोधः ग्रहत्वेनोपस्थितस्यैव ग्रहस्य मार्जनबोधनादिति वाच्यम् उद्देश्यविधेयभेदेन भिन्नानामेव वाक्यानां तन्त्रेणोच्चारणात् प्रतिप्रधानं गुणावृत्तिन्यायात् सर्वमार्जनसिद्धौ वाक्यभेदकल्पनागौरवस्याप्रामाणिकत्वात् अतएव भावार्थदीपिकायां कपिलपोस्यंदरीयगृहाधारव्याख्याने "न चैवं वाक्यभेदः अनूद्यविधेयभेदेन विभिन्नानामेव वाक्यानां सहप्रयोगात् ग्रहं संमार्ष्टीतिवदिति" इत्यन्तोक्तं श्रीधरस्वामिचरणैः"।

**ग्रहाधीश** पु॰ ६त॰। सूर्य्ये ग्रहाध्यक्षादयोऽप्यत्र।

**ग्रहामय** पु॰ ग्रहकृत आमयः। ग्रहावेशे अन्दपस्मारे राजनि॰।

**ग्रहावमर्द्दन** पु॰ ग्रहौ चन्द्रसूर्य्यौ अवमृद्नाति अव+मृद—ल्यु। १राहौ। चन्द्रसूर्य्यावमर्द्दनमिति तद्व्याख्यानिकप्रसिद्धं तथात्वम्। भावे ल्युट् ६त॰। २ग्रहयोः परस्परयुद्धे च। "ग्रहावमर्द्दने चैव पुण्यस्नानं समाचरेत्" वृ॰ सं॰ ४८अ॰।

**ग्रहाशिन्** पु॰ ग्रहं स्कन्दग्रहदोषमश्नाति नाशयति अश+णिनि। ग्रहनाशकवृक्षे भल्लूर॰।

**ग्रहाह्वय** पु॰ ग्रहं ग्रहदोषमाह्वयति नाशाय आकारयति आ+ह्वे—श। भूताङ्कुशवृक्षे राजनि॰। तस्य ग्रहदोषनाशनेऽङ्कुशतुल्यत्वात्तथात्वम्।

**ग्रहिल** त्रि॰ ग्रहोऽस्त्यस्य काशा॰ इलच्। निर्बन्धयुक्ते। निर्बन्धश्च कोपादनुरागातिशयाच्च भवति तत्र "कोपमूलनिर्बन्धयुक्ते। "न निशाऽखिलयाऽपि वापिका प्रससाद ग्रहिलेव मानिनी" नैष॰। अनुरागाधीननिर्बन्धयुक्ते "प्रसाधनग्रहिलैरवाभिः रसादीनां व्यक्तुत्वमुक्तम्" सा॰द॰।

**गृहीतृ** त्रि॰ ग्रह—तृच् इटो दीर्घः। १ग्रहणकर्त्तरि २ज्ञापग्राहिणि च। "विषयाणां ग्रहीतृणि शनैः पञ्चेन्द्रियाणि च" मनुः। "ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतोव्ययः" मनुः।

ग्रह्य पु० ग्रहः हविःपात्रभेदएव स्वार्थे यत्। हविःपात्ररूपे यज्ञिये पात्रभेदे। "आक्राकोऽसि शुक्रस्ते ग्रहो विचितस्त्वा" यजु० ४।२४। "ग्रहएव ग्रह्यः शुक्रपदमैन्द्रवायवाद्यग्रहाणामुपलक्षणम्" वेददी०।

ग्राभ पु० ग्रह–घ वेदे हस्य भः। ग्राहके। "आ तू न इन्द्र! क्षुमन्तं चित्रं ग्राभं संगृभाय" ऋ० ८।८१।१। "ग्राभं ग्राहकम्" भा०।

ग्राम पु० ग्रस–मन् आदन्तादेशः। "विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा इति" "तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः। क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका" इति-चोक्तलक्षणे विप्रादीनां १वासस्थाने, "धनुः शतं परिणाहो ग्रामात् क्षेत्रान्तरं भवेत्" याज्ञ०। "ग्रामेष्वात्मविसृष्टेषु" रघुः। "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" हितोप०। "यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते" इत्युक्ते २स्वरसंघभेदे, "षड्जग्रामो भवेदादौ मध्यमग्रामएव च। गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम्" "मन्द्रावर्त्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः। षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः" मल्लिनाथधृतवाक्यम् तेषाञ्च सप्तस्वरविशेषयोगात् एकविंशतिमूर्च्छनाहेतुत्वं यथोक्तं तत्रैव "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छनोच्यते ग्रामस्था एताः सप्त सप्त च"। "ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त सम्भूय एकविंशतिमूर्च्छना भवन्तीति" मल्लि०। अधिकं संगीतदामोदरे दृश्यम्। "स्फुटीभवद्ग्रामविशेषमूर्च्छनाम्" माघः। किञ्चिच्छब्दपूर्वकः ३तदर्थसंघाते च यथा शब्दग्रामः अर्थग्राम इत्यादि। "शब्दाकरकरग्रामः" कविकल्पद्रुमः। ४जनपदे च "यस्याश्वाः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः" ऋ० २।१२।७। "ग्रसन्तेऽत्र ग्रामाजनपदाः" भा०। स्वार्थे क तेषार्थे "दीयन्तां ग्रामकाः केचित्" भा० उद्यो० १४६६ श्लो०। स्वल्पार्थे टी ततः स्वार्थे क ग्रामटिका स्वल्पग्रामे स्त्री "स्वर्गग्रामटिकाविलुण्ठनपरैर्विष्णुनैः किमेभिर्गुणैः" सा० द०। ५ग्रामवासि समूहादिजने ६ग्रामस्थाने संहते ग्रामसे-टमय। ७तत्सम्बन्धिनि ग्राम्यधर्मे च।

ग्रामकाम त्रि० ग्रामं स्वाधीनत्वेन कामयते कम–णिङ् अण् उप० स०। ग्रामसम्बन्धितया ग्रामस्य कामुके। "एवाग्न्या ग्रामकामः" कात्या०श्रौ०४।१५।२२। "उपहव्यो ग्रामकामस्य" २२।८।७। "दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा" २२।६।१७।

ग्रामकुक्कुट पुंस्त्री ७त०। ग्राम्ये कुक्कुटभेदे "कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्" "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्। पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेत् द्विजः" इति मनुना तन्मांसभक्षणं निषिद्धम् स्त्रियां जातित्वात् ङीष्।

ग्रामकुमार त्रि० ग्रामेषु मध्ये कुमारः सुन्दरः। ग्रामसुन्दरे। तस्य भावः मनोज्ञा० वुञ्। ग्रामकुमारक तद्भावे न०।

ग्रामकुलाल पु० ग्रामे कुलालः। ग्राम्ये कुलाले कुम्भकारे "ग्रामः शिल्पिनि" पा० अस्य वा प्रकृतिस्वरता ग्राम शब्दस्य आद्युदात्तः। एवं ग्रामनापितादिषु वा आद्युदात्तता। ततः मनोज्ञा० भावे वुञ्। ग्रामकुलालक तद्भावे न० [शारा० स्त्रियां जातित्वात् ङीष्।

ग्रामकूट पुंस्त्री ग्रामस्य कूट इव प्रधानत्वात्। शूद्रे

ग्रामक्रोड पुंस्त्री ग्रामे क्रोडः। ग्राम्यशूकरे स्त्रियां जातित्वात् ङीष्। "न दोग्ध्रीं धेनुमत्सृज्य ग्रामक्रोडीं दुधुक्षति" काशीख०२६अ०। ग्रामशूकरादयोऽप्यत्र पुंस्त्री०।

ग्रामगृह्य त्रि० ग्रह–बाह्यार्थे क्यप् ५त०। १ग्रामबाह्ये स्त्रियां टाप् सा च २ग्रामबाह्यसेनायाम्। [तथात्वम्।

ग्रामगेय न० ग्रामे गेयम्। सामभेदे तस्य ग्रामे गेयत्वात्

ग्रामगोदुह् पु० ७त०। ग्राम्ये गोपे "ग्रामः शिल्पिनि" पा० वा अस्य प्रकृतिस्वरत्वे प्राप्ते कुक्कुटारोहणा० आद्युदात्तता।

ग्रामघात पु० ६त०। ग्रामस्य द्रव्यहरणेन हननप्राये व्यापारे। "ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्तितोनाभिधावन्तो निर्वास्याः सपरिच्छदाः" मनुः। "ग्रामघाते ग्रामलुण्ठने" कुल्लू०। २ग्रामस्थितजनहनने च। "स्मृगोऽभवद्ग्रामघातमाचरे" ह० सं० २०का०। "एकस्थाने स्वन्दीप्तः सप्ताहाद्ग्रामघातकृत" ८६ अ०।

ग्रामघातिन् पुंस्त्री ग्रामान् तत्रस्थलोकभक्षणार्थं हन्ति पशून् हन–णिनि। ग्रामस्थबहुलोकपोषणार्थं पशुघातके। "ग्रामघाती च कौन्तेय! मांसस्य परिविक्रयी" भा० शा० ३४ अ० प्रायश्चित्तीयोपाख्याने।

ग्रामघोषिन् पु० ग्रामे स्थिते घोषोऽस्यास्य इनि। संक्रन्दने

ग्रामान्त न० ६त० । ग्रामसमीपे उपशल्ये "नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा" "कृतवापनो निवसेत् ग्रामान्ते गोव्रजेऽपि वा" मनुः । ग्रामान्ते भवः छ । ग्रामान्तीय ग्रामसमीपभवे त्रि० "पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः" मनुः ।

ग्रामिक पु० ग्रामे तद्रक्षणे नियुक्तः ठञ् । ग्रामरक्षणाय नियुक्ते ग्रामाध्यक्षे "ग्रामे दोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम् । शंसेत् ग्रामदशेशाय दशेशो विंशतीशिने" मनुः । "यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः । अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात्" मनुना तद्वृत्तिरुक्ता । "ग्रामेयान् गुणदोषांश्च ग्रामिकः प्रतिभावयेत्" "यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नीयात्" भा०शा० ८७अ० । तस्य भावः पुरोहि० यक् । ग्रामिक्य तद्भावे न० ।

ग्रामिन् त्रि० ग्रामः स्वामित्वेन आधारत्वेन वाऽस्त्यस्य इनि । १ग्रामस्वामिनि २ग्रामवासिनि च । ३ग्राम्यधर्मयुक्ते मैथुनयुक्ते च । "आसुरी मेढ्रमर्वाग्व्यवाये ग्रामिणां रतिः" भाग० ४।२९।१४। स्त्रियां ङीप् । सा च ४नीलीवृक्षे स्त्री जटा० ।

ग्रामीण पुंस्त्री ग्रामे भवः खञ् । १कुक्कुरे, २काके, मेदि० ३ग्राम्यशूकरे च राजनि० । ४ग्रामोद्भवे त्रि० । "ग्रामीणस्य प्रथमतः पश्यतोगपचादिकम्" माघ० । "ग्रामीणवध्वस्तमलक्षिता जनः" माघः । ५नीलिकौषधौ, मेदि० ६पालङ्क्यशाके च स्त्री राजनि० ।

ग्रामेय त्रि० ग्रामे भवः वा०ढक् । १ग्रामभवे "ग्रामेयान् गुणदोषांश्च" मनुः । २वेश्यायां स्त्री

ग्रामेयक त्रि० ग्रामे भवः कत्र्या० ढकञ् । ग्रामभवे । "ग्रामेयककुलानाञ्च समयं सीदति सार्थिनः" मनुः । अत्र नामयिकेति पाठः लिपिकरप्रमादात् ।

ग्रामेश पु० ६त० । ग्रामपतौ ग्रामाध्यक्षे ग्रामेश्वरादयोऽप्यत्र ।

ग्राम्य त्रि० ग्राम-भवार्थे-य यत् । १ग्रामभवे कृषकादौ "अनयैव सुन्दरि! ग्राम्यजनो मिष्टमश्नाति" उ०र० । २मूढे ३प्राकृते । ४मैथुने च "व्यवायो ग्राम्यधर्मश्च" अमरः । प्राकृते "ग्राम्यानशस्त्र कपिशं पिपासतः" माघः । मूढे "ग्राम्यभावमपहातुमिच्छवः" माघः । ५स्त्रीकारे ६रतबन्धे ७अपशब्दादिवचने अश्लीले हालिकादिप्रसिद्धार्थे च न० शब्दार्थचि० । दृश्यकाव्यदोषभेदे पु० । स च शब्दगतोऽर्थगतश्च तत्र शब्दगतः सा० द० । शब्ददोषविभागे "दुःश्रव्यत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः । ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः" इत्यादिना शब्ददोषान् विभज्य "कटिस्ते हरते मनः" इत्युदाहृतम् "अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः" इत्यादिनाऽर्थदोषान् विभज्य च "स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय !" इत्यर्थस्य ग्राम्यत्वमुदाहृतम् । "ग्राम्या मिथुनतुलाख्यौ चापादिघटा निशासु मेषवृषौ च" ज्यो०उक्तेषु ८तदामिथुनादिराशिषु ९०राशौ मेषङ्गराश्रयोश्च पु० । ११पशुभेदे पुंस्त्री० । यथाह पैठीनसिः "ग्राम्यारण्याश्चतुर्दश गौरविरजोऽश्वोऽश्वतरो गर्द्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः, महिषवानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति चारण्याः" । "अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छक प्रभृतयो ग्राम्याः इति सुश्रुतोक्ते १२पशुभेदे पुंस्त्री० "ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः । मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः" सुश्रु० । १३ओषधिभेदे स्त्री । "तिलमाषव्रीहियवाः प्रियङ्गवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः" तैत्ति० । ओषधि शब्दे १५६४ पृ० दृश्यम् ।

ग्राम्यकन्द पु० कर्म० । कन्दभेदे (गाछेर ओल) रत्नमा० ।

ग्राम्यकर्कटी स्त्री कर्म० । कुष्माण्डे त्रिका० ।

ग्राम्यकर्म्मन् न० ग्राम्यस्य प्राकृतस्य हालिकादेः कर्म । मैथुने व्यवाये । "ग्राम्यकर्म्मणैव विस्तृतशास्त्रावधिः" भाग० ५।१४।२।

ग्राम्यकुङ्कुम न० कर्म० । कुसुम्भे त्रिका० ।

ग्राम्यधर्म्म पु० ग्राम्यस्य प्राकृतस्य हालिकादेः धर्मः । व्यवाये मैथुने अमरः । "प्रमत्तो ग्राम्यधर्मेषु" भा०व० ३८ अ० । "प्रमत्तं ग्राम्यधर्मेषु" २८० अ० । स अस्त्यस्य इनि ग्राम्यधर्म्मिन् मैथुनरते त्रि० । "शूद्राद्यायोगवश्चापि वैश्यायां ग्राम्यधर्मिणः" भा०आनु०४८अ० । [दर्शिताः ।

ग्राम्यपशु पु० कर्म० । पशुभेदेषु ते च पशवः ग्राम्यशब्दे

ग्राम्यमद्गुरिका स्त्री कर्म० । मत्स्यभेदे हारा० ।

ग्राम्यमृग पुंस्त्री कुक्कुरे जटा० स्त्रियां ङीष् ।

ग्राम्यवल्लभा स्त्री ६त० । १पालङ्क्यशाके (पालङ्) राजनि० हालिकादिग्राम्यप्रियत्वात्तस्य तथात्वम् । २वेश्यायाञ्च

ग्राम्यवादिन् त्रि० ग्राम्यं वदति णिनि । ग्राम्यशब्दवादके हालिकादौ । "कः परस्तात् ग्राम्यवादी तस्य अश्नात् भोहीनाहरेत्" तैत्ति० २।३।१।३।

मतः पूर्वाभिमुखावयोर्ग्न पश्चातोऽस्य भध्यम्रृध्य-
कालः” रघुना० ।

ग्रासशल्य न० ग्रासे शल्यम् । ग्रासस्थिते मत्स्याद्विकण्टक-
रूपे शल्यं तदुद्धारोपायः सुश्रुते दर्शितो यथा
“ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबद्धस्कन्धे मुष्टि-
नाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्” ।

ग्राह पु० ग्रह—जलचरे च । (हाँगोर) ख्याते जलचरभेदे
अमरः “सलिलमज्जज्जगदिदं गम्भीरे कालसागरे । जरा-
मृत्युमहाग्राहे न कश्चिदवबुध्यते” भा० शा० २८ अ० ।
“अग्राहाजगरो ग्राहोभुजगोरभयोर्बलात्” भा० व०
१७८अ० “तस्माद् ग्राहाद्विमुच्यते” मनुः । भावे घञ् ।
२ज्ञाने ३आग्रहे निर्बन्धे च । “मूढग्राहेणात्मनो यत्
पीडया क्रियते तपः” गीता । “मूढग्राहेण अविवेककृतेन
दुराग्रहेण” श्रीधरः । ४आदाने हस्तव्यापारे ५स्वीकारे
जलचरभिन्नेऽपि कर्त्तरि वेदे च । ६गृहीतरि त्रि०
“अध्वर्युः यजमानं वा ग्राहो विन्दति” शत०ब्रा०
१।५।१।२५। क्वचित् कर्मणि उपपदे अण् । तत्तत्कर्म-
ग्राहके “पार्ष्णिग्राहस्तु पृष्ठतः” अमरः । “कटकच
ग्राह कटच दासः” वाच० ।

ग्राहक पु० ग्रह—ण्वुल् । १श्येनपक्षिणि २विषवैद्ये च ।
३ग्रहीतरि त्रि० । ग्रह—णिच्—ण्वुल् । ४ज्ञापके
चक्षुरिन्द्रियादौ “ग्राहकेभ्यो हृते चौरो लोभ्रेणाय पदेन
वा” याज्ञ० “यथास्य ग्राहकाण्येषां शब्दादीनामिन्द्रि-
याणि तु । इन्द्रियाणि सदा देही धारयन्निव तप्यते”
भा० वन० २१०अ० । ५शितावरशाके राजनि० ।

ग्राहिन् पु० ग्रह—णिनि । १कपित्थे शब्दच० । २मलबन्ध-
कारके, (धारक) त्रि० वैद्यकम् । “कषायामुरसं ग्राहि
स्निग्धं मेधाबलावहम्” भावप्र० दाडिमफलगुणोक्तौ ।
३ग्राहके, “व्याघ्रग्राही यथा व्याघ्रान् बलादुद्धरते बिलात्”
काशीख० । “पञ्चगग्राहि पाण्डित्यम्” उद्भटः । स्त्रियां
ङीप् । सा च ४प्रतिकूलायाम् । “मा च भूग्राहिणी
भीरु ! “भक्तिः ग्राहिणी प्रतिकूला” जयम० । ५गुड-
दुरालभायां स्त्री राजनि० । ६ताम्रमूलायां (चोरक)
रक्तमाता तयोर्मलबन्धकारित्वात्तथात्वम् । [राजनि० ।

ग्राहिफल पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।

ग्राहुक त्रि० ग्रह—बा० उकञ् । ग्रहणशीले “दृढ़ावर्त्तः
सदा ग्राहुकः स्यात्” तैत्ति० ६।३।१।१।

ग्राह्य त्रि० ग्रह-ण्यत् । १गृहीतुमुचिते, २ग्रहणयोग्ये,
३उपादेये, ४स्वीकार्ये, ५ज्ञेये च । “शस्त्रं द्विजातिभि-
र्ग्राह्यं धर्मो यत्रोपरुध्यते” मनुः । “अस्मिंस्तु किम
संभ्रं ग्राह्यम् विविधमायुधम्” भा०द्रो०११२ अ० ।
“अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः” स्मृतिः
“विप्राद्यप्रत्तं ग्राह्यम्” मनुः । “चक्षुर्ग्राह्यं भवे-
द्रूपम्” भाषा० । ६प्रतियोग्यवज्ञाने प्रकारीभूतधर्मे
यथा ह्रदोवह्न्यभाववानिति ज्ञानस्य प्रतिबध्यं ह्रदो
वह्निमानिति ज्ञानं तत्र प्रकारीभूतो वह्निः ।

ग्रीवा स्त्री गिरत्यनया गॄ—वनिप् नि० । कन्धरायाम्
“ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः”
शकु० । तन्मानादिकमुक्तं सुश्रुते यथा
“चतुरङ्गुलानि मेढ्रवदनान्तरनासाकर्णललाटग्रीवो-
च्छ्रायदृष्ट्यन्तराणि । द्वादशाङ्गुलानि भगविस्तारमेढ्र-
नाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौ-
ल्यानि । चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्”
सुश्रु० । “ग्रीवाग्रसंसक्तचतुर्गि खुराग्रैः” माघः । “पार्श्व-
योर्ह्रीडिकायाञ्च ग्रीवायां दक्षेषु च” मनुः । “प्राग्-
ग्रीवमुत्तरलोम” आश्व०गृ० १।१४।२। “इदमहं रक्षसां
ग्रीवा अपि कृन्तामि” यजु० ५।२२। दशग्रीवः कम्बु-
ग्रीवः इत्यादि । [गर्गादित्वात् पुंस्त्री स्त्रियां ङीप् ।

ग्रैवाक्ष पु० ऋषिभेदे तस्य गोत्रापत्यं शिवा०अण् । ग्रैवाक्ष

ग्रीवाघण्टा स्त्री ७त० । ग्रीवास्थितघण्टायां त्रिका० ।

ग्रीवाबिल न० ६त० । ग्रीवान्तर्गते गर्त्तभेदे त्रिका० ।

ग्रीविन् पुंस्त्री० दीर्घा ग्रीवाऽस्त्यस्य वा० इनि टिलोपः ।
१उष्ट्रे जटाधरः स्त्रियां ङीप् । २दीर्घग्रीवायुक्ते त्रि० ।

ग्रीष्म पु० ग्रसते रसान् ग्रस—मनिन् । ज्यैष्ठाषाढ़मास-
द्वयात्मके १ऋतुभेदे । “ग्रीष्मे तीव्रकरोभानुर्हेमन्ते
तथाविधः” सूर्य्यसि० । “विहर्त्तुमिच्छोर्वनिताखस्य
तस्याथ ग्रीष्मऋतुर्बभूव” रघुः । “अनेन विधिना
श्राद्धं त्रिरब्दस्येह निर्वपेत् । हेमन्तग्रीष्मवर्षासु
पाञ्चयज्ञिकमन्वहम्” “ग्रीष्मे पञ्चतपास्तु स्यात् वर्षास्व-
भ्रावकाशिकः” मनुः । स्वार्थे अण् । ग्रैष्म तत्रार्थे तस्ये-
दमण् । तत्सम्बन्धिनि त्रि० “शुक्रश्च शुचिश्च ग्रैष्मावृतू”
यजु०१।६। “ग्रैष्मौ ग्रैष्मसम्बन्धिनौ ऋतू ऋत्ववयवौ”
वेददी० । ऋतोश्च यथा चान्द्रमासात्मकता तदृतु-
शब्दे १४२७ पृ० दर्शिता । सौरत्वं तु ज्योतिषशा-
स्त्रमात्रोपयोगित्वेन ज्योतिषे आवश्यकते तदपि तत्रैव
शब्दे दर्शितम् । सुश्रुतोक्तग्रीष्मगुणादिकं ऋतुशब्दे दर्शितम् ।

ग्रैष्मिक त्रि० ग्रीष्मधर्म्मं वेद तत्प्रतिपादकग्रन्थमधीते वा वसन्ता० ठञ्। १ग्रीष्मधर्म्मवेत्तरि २तद्ग्रन्थाध्यायिनि च

ग्लपन न० ग्लै–णिच् पुक् ह्रस्वः भावे ल्युट्। १ग्लानिकरणे "तद्यद्यनायासग्लपनलक्षणविचारणकरम्" सुश्रुतः। कर्त्तरि ल्यु। २ग्लानिकारके त्रि०।

ग्लस भक्षणे भ्वा० आत्म० सक० सेट्। ग्लसते अग्लसिष्ट। जग्लसे। उदित् ग्लसित्वा-ग्लस्त्वा। ग्लस्तः।

ग्लस्त त्रि० ग्लस–क्त क्तोवेट्कत्वात् नेट्। भक्षिते अमरः

ग्लह आदाने वा चुरा० उभ० पक्षे भ्वा० सक० सेट्। ग्लहयति ते ग्लहति अजिग्लहत् त अग्लहीत् अग्लाहीत्। णिचोऽभावे ग्लाढा। ग्लाढः इत्यादि आदानं च द्यूतक्रीडार्थं पणादानम्। "तदेषां ग्लहमानानां ध्रुवौ जयपराजयौ" भा० क० ८७ अ०। "दुर्य्योधनो ग्लहते पाण्डवेन" भा० व० ६१अ० "शकुने! हन्त दीव्यामो ग्लहमानाः परस्परम्" भा० स० ५६ अ०। सर्व्वत्र आर्षम् आत्मनेपदम्। "इमान्वै पूर्व्वं कितवोऽग्लहीष्यत्" भा० स० ६८ अ०;

ग्लह पु० ग्रह–ग्लह–वा "अक्षेषु ग्लहः" पा० कर्म्मणि नि०। देवनविषये पणरूपे ग्राह्ये वस्तुनि (झुड़)(बाजि) ख्याते पदार्थे "व्याग्लुचीर्मभिसरणग्लहामदीव्यन्" माघः। "अयं ग्लहः सोऽभिभवेत् परं नः" भा० स० ५८अ०। "संज्ञाधनं ग्लहं त्वेकं शृणु मे भरतर्षभ!" ७४ अ०। सभिकस्य द्यूतविषये ग्लहविभागभेदः याज्ञ० दर्शितो यथा "ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकम् शतम्। गृह्णीयात् धूर्त्तकितवादितराद्दशकं शतम्"।

ग्लान त्रि० ग्लै–कर्त्तरि क्त। १रोगादिना क्षीणदेहादौ दीने अमरः। भावे क्त। २दैन्ये न०

ग्लानि स्त्री ग्लै–भावे नि। १दौर्बल्ये २स्वकार्य्याक्षमतायाम् हेम०। "सकर्म्मभ्योनिवर्त्तन्ते मनश्च ग्लानिमृच्छति" मनुः "रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा। ग्लानिर्निष्प्राणता कम्पकार्श्यानुत्साहतादिकृत्" सा० द० उक्ते ३व्यभिचारिगुणभेदे यथा "किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः। ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्म्मः केतकीपत्रगर्भम्" सा० द०।

ग्लाव पु० दल्भमित्रयोरपत्ये द्व्यामुष्यायणे ऋषिभेदे। "अथातः शौव उद्गीथ स्तत्र वकोदाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज" छा० उप०।

ग्लाविन् त्रि० ग्लै ग्ला०विनि। अहृष्टे "पचादोषाय ग्लाविनम्" यजु० ३०।१७। "ग्लाविनमहृष्टम्" वेददी०।

ग्लास्नु त्रि० ग्लै–स्नु। ग्लानियुक्ते अमरः। "वसन् माल्यवति ग्लास्नू रामोजिष्णुरधृष्णुवत्" भट्टिः।

ग्लुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट्। ग्लोचति इरित् अग्लुचत्-अग्लोचीत्। जुग्लोच उदित् क्त्वा वेट्। ग्लुचित्वा ग्लुक्त्वा क्तो वेट्कत्वात् ग्लुक्तः। "बहूनामग्लुचत् प्राणानग्लोचीच्च रणे यशः" भट्टिः।

ग्लुचुक पु० ऋषिभेदे तस्य गोत्रापत्यम् "प्राचामवृद्धात् फिन् बहुलम्" पा० फिन्। ग्लुचुकायनि तद्गोत्रापत्ये पुंस्त्री० स्त्रियां वा ङीप्। ग्लुचुकायनिर्भक्तिः सैन्योऽस्य "गोत्रक्षत्रियाख्यो बहुलम्" पा० वुञ्। ग्लौचुकायनक तत्सेवके त्रि०।

ग्लुञ्च चौर्य्ये गतौ च भ्वा० पर० सक० सेट्। ग्लुञ्चति इरित् अग्लुचत् अग्लुञ्चीत् जुग्लुञ्च। जुग्लुञ्च(च)तुः। उदित् ग्लुञ्चित्वा ग्लुक्त्वा। क्तो वेट्कत्वात् ग्लुक्तः।

ग्लेप दैन्ये अक० गतौ चाले च सक० भ्वा० आ० सेट्। ग्लेपते अग्लेपिष्ट जिग्लेपे ऋदित् अजिग्लेपत् त।

ग्लेव सेवने भ्वा० आ० सक० सेट्। ग्लेवते अग्लेविष्ट। जिग्लेवे ऋदित् अजिग्लेवत् त।

ग्लेष अन्वेषणे भ्वा० आ० सक० सेट्। ग्लेषते अग्लेषिष्ट जिग्लेषे। ऋदित्। अजिग्लेषत्।

ग्लै हर्षे क्षये च भ्वा० पर० अक० अनिट्। ग्लायति अग्लासीत्। जग्लौ जग्लिथ–जग्लाथ। ग्लानिः ग्लास्नुः। ग्लानः। ग्लेयम्। णिचि ग्लपयति ते अजिग्लपत् त। ग्लानिशब्दे उदा०। "मनो ग्लपयते तीक्ष्णं विषं गन्धेन सर्व्वशः" भा० आनु० ४६९४ श्लो०। "ग्लपयति यथा शशाङ्कम् न तथा हि कुमुद्वतीं दिवसः" शकु०। "पतङ्गैर्ग्लपितावयम्" भट्टिः। "बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः" कुमा०। "तस्य वैराणि कोपश्च सहृदण्डमजिग्लपः" भट्टिः।

ग्लौ पु० "ग्लानुद्भ्यां डौः" उणा० ग्लै–डौ। १चन्द्रे तस्य प्रतिमासं कृष्णपक्षे क्षीयमाणत्वात्तथात्वम् तन्नामनामके २कर्पूरे च अमरः। "कम्लेट् कविग्लौश्च रिपौ स्मृतौ ग्लौकम्लेट् सुराराव मदे च सर्व्वे" मुक्त० चि०। ३हृदयनाड्याञ्च "ग्लौभिर्गुल्मान् हिराभि स्रवन्तीः" यजु० २५।८। "ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः" वेददी०।

इति वाचस्पत्ये गकारादि शब्दार्थनिरूपणम्।

एकैकं पञ्चधा कुरु । (अवर्णाद्यास्त्रयोज्ञेयाः सन्ध्यक्षर युतस्तथा । सजातीयैक्यमास्थाय पञ्चस्वरविनिर्णयः । ऋदॄलृतोरप्यकारेण शेन सस्य परिग्रहः) अधिक पा० । “कुर्य्यात् कुपुभुदुस्थाने त्रीणि त्रीण्यक्षराणि च । कुचङञो भवेत् स्तम्भे रौद्रे त्वीशानगोचरे । पुचठो भवेत् स्तम्भे हस्ते चाग्नेयसंज्ञके । भुधफढोभवेत् स्तम्भे पूर्व्वाषाढ़े च नैरृते । दुथझञो भवेत् स्तम्भे वायव्ये भाद्रउत्तरे । एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः । धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः । साभिजित्यंशका-स्तत्र शतैकं द्वादशाधिकम् । यद्धर्म्यांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः। ततस्तं वेधयेत् तिर्य्यक् पुंसोनामा-दिमाक्षरम् । सौम्यैर्व्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः । मिश्रैर्म्मिश्रफलं तत्र निर्व्वेधे न शुभाशुभम् । यदुक्तं सर्व्वतोभद्रे ग्रहोपग्रहवेधतः । शुभाशुभफलं सर्व्वं तदि-हापि विचिन्तयेत्”। (पञ्च स्वराः अ इ उ ए ओकारास्तै-र्योगे धिष्ण्यानि नक्षत्राणि । अ त्र चतुर्भिर्व्वर्णैरेकं नक्षत्रं यथा । अ इ उए १अश्वो विवि । ४ । वेवोकवि । ५ । कुघङछ । ६ । कैकोहहि । ७ । हुहेहोड । ८ । डिडुडेडो । ९ । ममिमुमे । १० । मोटटिटु । ११ टेटो-पपि । १२ । पुषणठ १३ । पेपोररि । १४ । रुरे-रोत । १५ । तितुतेतो । १६ । ननिनुने । १७ । नोय-यियु । १८ । येयोभभि । १९ । भुधफढ । २० । भेभो-जजि । २१ । जुजेजोख । (अभिजित्)० । खिखुखे-खो । २२ । गगिगुगे । २३ । गोससिसु । २४ । सेसोददि । २५ । दुथझञ । २६ । देदोचचि । २७ । चुचेचोल । १ । लिलुलेलो । २ । ऋटलृयुक्तः अकार-युक्तो न ज्ञेयः । ह्रस्वेन दीर्घोज्ञेयः । तालव्यशकारेण दन्त्यसकारोज्ञेयः) ।

३ अंशचक्रम् — “अष्टाविंशोर्द्ध्वगा रेखा अष्टाविंशतितिर्य्यग्-गाः। अंशचक्रं भवत्येवं यदुक्तं चादियामले । कृत्तिकादीनि भान्यत्र पादाक्षरक्रमेण च । साभिजिन्ति न्यसेत् सर्व्वा-ण्यष्टाविंशतिसंख्यया । यो ग्रहो यत्र धर्म्यांशे तं तत्रैव न्यसेद्बुधः। वेधयेत् संमुखं वर्णं शुभो वाप्यशुभोऽपि वा । आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् । द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् । यस्य नामाक्षरं विद्धमंशचक्रे ग्रहेण तु । क्रूरैः रिष्टं, शुभैर्व्विद्धाः सौख्यं स्युर्न संशयः । क्रूरोभयस्थिते वेधे मृत्युर्व्विघ्नं शुभाशुभैः । शुभोभयगते वेधे व्याधिपीड़ा च बन्ध-नम् । वैधव्यञ्च विवाहे तु यात्राकाले महाभयम् । रोगे मृत्यू रणे भङ्गः क्रूरवेधे न संशयः । अद्रयः सागरानद्यो देशग्रामपुराणि च । क्रूरवेधे विनश्यन्ति नात्र कार्य्या विचारणा । चन्द्रसूर्य्यांशको विद्धो भवेद्यत्ना-परग्रहैः । तत्स्थानं तद्दिनं वर्ज्ज्यं सर्व्वदा शुभकर्म्मणि”

४ छत्रत्रयचक्रम्—आदौ चक्रं समालिख्य छत्रत्रयसुशोभि-तम् । अश्विन्यादीनि लेख्यानि सप्तविंशतिभानि च । अश्वि-न्याद्यं मघाद्यञ्च मूलाद्यञ्च क्रमेण च । उत्तरे पूर्व्वतो याम्ये चैतच्छत्रत्रयं मतम् । प्रतीचीमध्यरेखायामीशानान्तं हयाधिपः । आग्नेयान्तं नराधीशस्तन्मध्ये च गजा-धिपः । अश्वाध्यक्षा गजाध्यक्षोनराध्यक्षः क्रमेण च । एषां छत्रविभागेन ज्ञातव्यं हि शुभाशुभम् । अन्येषां भूभृताञ्चैव यत्र छत्रे व्यवस्थितम् । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम् । यत्र छत्रे स्थितः सौरिर्भङ्गं तस्य विनिर्द्दिशेत् । फलञ्च चामरादीनां प्रत्येकं च वदाम्य-हम् । चामरं कलसं वीणा छत्रं दण्डं पतद्ग्रहम् । आसनं कीलकं रज्जुश्चैव भेदा प्रकीर्त्तिताः । चामरे १चञ्चलता वायोरनावृष्टिश्च जायते । दुर्भिक्षं च भवेद्घोरं प्रजापीड़ा न संशयः । कलसस्थे २भवेद्युद्धं रणे भङ्गो महद्भयम् । धातपातादिकं सर्व्वं जायते नात्र संशयः । वीणासंस्थे ३चार्कपुत्रे पट्टराज्ञी विनश्यति । चलचित्तो भवेद्राजा भयभीता च मेदिनी । यदातपत्रके सौरिश्छत्रे४ दण्डे५ पत-द्ग्रहे७। तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः। आसनस्थ भवेन्नाश आसनस्थे ७ शनैश्चरे । युवराजक्षयः कीलेद बन्धनं रज्जु संस्थिते९ । सौम्ययुक्तोऽतिचारस्थः शनिरुक्त-फलो न हि । वक्रगः क्रूरयुक्तश्च सर्व्वं क्रूरं करोति सः । शनिराहुकुजादित्यायदाजीवेन्दुसंयुताः । उत्त-राधीशराज्यस्य निश्चितं छत्रभङ्गदाः । क्रूरचतुष्टयं चैव बुधचन्द्रेण संयुतम् । पूर्व्वछत्रविनाशाय कथितं पूर्व्वसूरिभिः । एवं पापचतुष्कं च यदा शुक्रेन्द्र संयुतम् । दक्षिणाधिपतेश्छत्रविनाशो भाषितो बुधैः । एवमन्येषु राज्येषु यत्र यस्य च सम्भवः । उपग्रह समायोगाच्छत्रभङ्गं विनिर्द्दिशेत् । यथा दुष्टफलः सौरि-स्तथा सौम्यफलोगुरुः । भौमशौ शुक्रराहू च रविचन्द्रौ बले समौ । यथा हानिकराः क्रूरास्तथा सौम्याः शुभप्रदाः। क्रूरयुक्तो भवेत् क्रूरश्चन्द्रः सौम्ययुतः शुभः । सौम्य-क्रूरा यदा छत्रे चाष्टावेकत्र संस्थिताः । छत्रभङ्गो भवे-

ऽस्य परचक्रागमेण च। नृपनामर्क्षगो राहुः केतुर्वा यस्य संस्थितः। छत्रभङ्गो भवेत्तस्य विषदानेन भूपतेः। नगर्यां साहसं यातुं दुष्टाश्वगजवाहनम्। विषहस्तं त्यजेद्राजा वलस्थैः क्रूरखेचरैः। एवं ज्ञात्वा सदा राजा करोति ग्रहशान्तिकम्। यदुक्तं यामले तन्त्रे तेन शान्तिर्भविष्यति” इति

५ सिंहासनचक्रम्(२)—“अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयम्। येन विज्ञानमात्रेण क्रियते राज्यनिर्णयः। सप्तविंशतिनक्षत्रेष्वेकैकन्तु नवात्मकम्। अश्विनीमघमूलाद्यं पञ्चनाड़ीविभेदितम्। अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितम्। मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्। इतरेषु च राज्येषु नृपनामर्क्षतो वदेत्। शुभाशुभमिदं सर्वं यस्य यत्र शनिः स्थितः। नाड़िकापञ्चभेदेन एकैकस्याऽऽसनं भवेत्। आधारमासनं पट्टं सिंहं सिंहासनं तथा। आधारादिफलं सर्वमेकैकस्य वदाम्यहम्। ग्रहवेधवशाज्ज्ञेयं सौम्यैः क्रूरैः शुभाशुभम्। नृपस्याऽऽधारनामर्क्षे यदा पट्टाभिषेचनम्। पराधीनगतं राज्यं कुरुते नात्र संशयः। आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः। प्रधानपुरुषादेशी प्रजाशान्तिकरो भवेत्। पट्टऋक्षे यदा राजा चोपविष्टो यदासने। पूर्वराजस्थितेस्तुल्यं चिरं पालयते महीम्। सिंहरूपी भवेद्राजा सिंहऋक्षासने स्थितः। संग्रामस्य प्रियो नित्यमसाध्यो मन्त्रिणः सदा। सिंहासनगते ऋक्षे तेजस्वी भीषणाकृतिः। चलचित्तो महाक्रोधी प्रजापीड़ाकरो नृपः। तत्कालेन्दुगते ऋक्षे क्रूरनिर्वेधनाडिके। शुभावस्थे शुभलग्ने संस्थाप्यो नृप आसने। ईदृशे च समायोगे उपविष्टो यदासने। उच्छिद्य शत्रुसंघातमेकच्छत्रं करोति सः। क्रूरग्रहगतनाड्यामुपविष्टो यदासने। बन्धनं भूमिनाशश्च तथा मृत्युः प्रजायते। आधारादिफलं तत्र क्रूरैरेव शुभैः शुभम्। आधारऋक्षगः सौरिरनावृष्टिं करोति सः। दुर्भिक्षं रौरवं घोरं प्रजामृत्युः प्रजायते। आसनस्थो यदा सौरिर्युद्धे भङ्गप्रदो भवेत्। क्षय वा व्याधिपीड़ा च धातुःखञ्च जायते। पट्ट ऋक्षे यदा सौरिः पट्टराज्ञी विनश्यति। प्रियो वाथ कुमारो वा मन्त्रिवर्गक्षयोऽपि वा। सिंहे सिंहासने वाथ यदि तिष्ठति सूर्यजः। तदा मृत्युर्न सन्देहो यदि शक्रसमो नृपः। सूर्यार्किराहुमाहेया यदा चन्द्रर्क्षसंयुताः। यस्यासनगता एते तदा तस्य क्षयङ्कराः। क्रूरयुक्तोऽतिवक्रश्च क्रूरनाडीगतोऽपि वा। आसने चन्द्रयोगेन कालरूपी शनैश्वरः। एवं शुभफलं दद्याद्वेकमन्त्री न संशयः। करोति विपुलं राज्यं यस्यासनगतो गुरुः”

६ कूर्मचक्रम्(५)—“कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कौशलागमे। येन विज्ञातमात्रेण ज्ञायते देशनिर्णयः। यस्य पृष्ठे च देशस्था देवाश्चैव त्रिकोटयः। स मेरुः पृथिवीमध्ये श्रूयते दृश्यते न तु। तादृशाः पर्वताश्चाष्टौ सागरा द्वीपदिग्गजाः। सर्वे तु विधृता भूम्या सा धृता येन तं शृणु। दंष्ट्रायां सा वराहेण विधृता सधराधरा। सुखासनगतोयस्य शोभते तत्तिका यथा। ईदृशोऽपि महाकायो वराहः शेषमस्तके। तस्य चूड़ामणेरूर्द्ध्वं शोभते मशकोपमः। एवंविधः स शेषोऽपि कुण्डलीभूय संस्थितः। कूर्मपृष्ठैकभागेन विसतन्तुरिवाबभौ। वपुःस्कन्धः शिरः पुच्छनखाङ्घ्रि प्रभृतीनि च। मानेन तस्य कूर्मस्य कथयामि प्रयत्नतः। शङ्कोः शतसहस्राणि योजनानि वपुः स्थितम्। तदर्द्धेन भवेत् पुच्छं पुच्छार्द्धेन तु कुक्षिकम्। ग्रीवाऽस्याऽयुतकोटीभिर्मस्तकं सप्तकोटिभिः। नेत्रयोरन्तरं तस्य कोटिरेका प्रजायते। मुखं कोटिद्वयं तस्य द्विगुणेन च पादयोः। अङ्गुलीनां नखाग्रे तु योजनायुतसंख्यया। एवं कूर्मप्रमाणन्तु कथितं चादियामले। तस्योपरिस्थिता चेयं सप्तद्वीपवती मही। कूर्माकारं लिखेच्चक्रं सर्वावयवसंयुतम्। पूर्वभागे मुखं तस्य पुच्छं पश्चिममण्डले। पूर्वापरं लिखेद्देशं वेधयोत्तरदक्षिणे। ईशानराक्षसे वेध वेधमाग्नेय मारुते। नाभिशीर्षचतुःपादकुक्षिपुच्छेषु संस्थिते। तारात्रयाङ्किते ज्ञाभिन् सौरिं यत्नेन चिन्तयेत्। अश्विनी भरिणी तत्र पादार्द्धेषु भमण्डलम्। अष्टाविंशति संख्याः स्युस्तांश्च हन्ति शनिः क्रमात्। अश्विन्याद्युत्तरेभागे मघाद्यं पूर्वतः स्थितम्। मूलं च दक्षिणे भागे ज्ञातव्यं नृपतित्रयम्। व्यापकग्रहराशिस्थे चन्द्रे मन्दोविशेषदा। यद्यष्टुभिष्णत्रपदार्द्धे च तत्र दोषा भवन्त्यमी। अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। स्वचक्रं परचक्रञ्च सप्तैताः ईतयः स्मृताः। कृत्तिका रोहिणी सौम्यं (५) कूर्मनाभीगतं त्रयम्। साकेता मिथिला चम्पा कौशाम्बी कौशिकी तथा। अहिच्छत्रं गया विन्ध्यमन्तर्वेदी च मेखला। कान्यकुब्जं प्रयागञ्च मध्यदेशो विनश्यति। रौद्रम्पुनर्वसू पुष्यः कूर्मस्य च शिरःस्थितम्। सगौड़ो हस्तिबन्धश्च पञ्चराटश्च कामरूः। वरेन्द्री च तथा ज्ञेया मगधश्च तथैव च। शूरसेनो वने-

माघः पूर्वदेशो विनश्यति । अश्लेषा च मघा पूर्वफाल्गुन्याग्नेयगोचरे । अङ्गवङ्गौ कलिङ्गश्च पूर्वजाश्चैव कोशलाः । काम्बोजयवना च तथैव सुरभिञ्जिका । उड्डीयानं वराटश्च अग्निदेशो विनश्यति । उत्तरा हस्तचित्रा च दक्षिणां कुक्षिमाश्रिताः । दर्दुरश्च महेन्द्रश्च मलयश्च सिंहलः । तापी भीमरथी लङ्का त्रिकूटं मलयस्तथा । श्रीपर्वतः किष्किन्धा इति नश्यति दक्षिणः । स्वाती विशाखा मैत्रं च कूर्मनैरृत्यगोचरे । लाविकं च सुराष्ट्रं चोत्तरमालवकं तथा । बाह्लीकं च प्रकाशं च भृगुकच्छं तु कोङ्कणम् । अट्टापुरं च मौटेरं देशा नश्यन्ति चेदृशाः । ज्येष्ठा मूलं तथाषाढा पुच्छे कूर्मस्य संस्थिताः । पारावतं मरुकच्छमवन्ती पूर्वमालवः । पारातवर्वरद्वीपं सौराष्ट्रं सैन्धवं तथा । अजस्थानं विनश्यन्ति स्त्रीराज्यं पुच्छपीडने । उत्तरादित्रिऋक्षाणि पादे वायव्यगोचरे । गुर्ज्जरं तक्षकश्चैव मरुदेशं सरस्वतीम् । जालन्धरं वराहं च वायुकोदधिसंयुतम् । मेरुशृङ्गं विनश्यन्ति ते चान्ये कोणसंस्थिताः । शतभिषादित्रयश्चैव उत्तरं कुक्षिमाश्रितम् । नेपालं कीरकाश्मीरगजनं खुरसानकम् । माथुरं म्लेच्छदेशश्च खसकेदारमण्डले । हिमाश्रया विनश्यन्ति ये देशाश्चोत्तराश्रयाः । रेवती चाश्विनी याम्य२ पादे त्वीशानगोचरे । गङ्गाद्वारं कुरुक्षेत्रं श्रीकण्ठं हस्तिनापुरम् । अश्वपक्षैकपादाश्च गजकर्णास्तथैव च । विनश्यन्ति च ते सर्वे देशा ऐशानगोचरे । सौरिःस्वदेशगो यत्र तत्र यत्नेन चिन्तयेत् । परदेशस्थितः कुर्याद्विपरीतं यथोदितैः । यत्रस्थः पीडयेत्तत्र वेधस्थाने तथैव च । देशनामर्क्षगः सौरिर्भङ्गदो नात्र संशयः । १पृथ्वीकूर्मं समालेख्य कृत्तिकादि यथाक्रमम् । देशादिसर्वर्क्षाणि मध्ये कूर्मचतुष्टयम् । पूर्ववच्चक्रमालिख्य देशनामर्क्षपूर्वकम् । २देशकूर्मो भवेत्तत्र यत्र सौरिस्तु यत्नतः । नगरे ३नागरकूर्मं कृत्वा वेक्ष्यं तु पूर्ववत् । सौरिस्थाने भवेद्दुष्टं वेधस्थाने तथैव च । ४क्षेत्रजे क्षेत्रभावेन कृत्वा कूर्मं यथास्थितम् । सौरिस्थाने तथा वेधे जायतेऽत्र महद्भयम् । ५गृहकूर्मं समालिख्य गृहद्वारगतास्थितम् । स्वनामर्क्षपूर्वकं कृत्वा ततो वीक्ष्यं शुभाशुभम् । गृहमध्यस्थितः सौरिः शोकसन्तापदायकः । द्वारे विघ्नप्रदो ज्ञेयः पावके वह्निदायकः । ज्ञेयो मृत्युप्रदो याम्ये राक्षसे राक्षसाद्भयम् । वारुणे शुभदो ज्ञेयो वायव्ये शून्यदायकः । सर्वकामप्रदः सौम्ये शाङ्करे सर्वसिद्धिदः । सौरिर्वेधाधिकोदुष्टः स्वल्पवीर्यः शुभावहः । समकालं पीडयेद्यत् भानुजः कूर्मपञ्चकम् । तत्र स्थाने महायुद्धं जायते नात्र संशयः । दुष्टस्थाने गते चन्द्रे कर्त्तव्यन्तत्र शान्तिकम् । यदुक्तं यामले तन्त्रे सर्वविघ्नविनाशकम् । अन्ये चैवं वदन्ति राहुभौमशनैश्चराः । परचक्रभयं चाग्निदुर्भिक्षन्तत्र दारुणम् । कूर्मचक्रं महाचक्रं कथितञ्चादियामले । त्रिकालविषयज्ञानं पाणिस्थं येन जायते” ।

तन्त्रोक्ते मन्त्रग्रहणतत्साधनोपयोगिकूर्म्मचक्रे तु कूर्म्मचक्रशब्दे दृष्टे उक्तं तत्र द्रष्टव्यम् ।”

७ पद्मचक्रम्—“पद्माकारं लिखेच्चक्रमष्टपत्रं सुशोभनम् । कोष्ठकं नवमं मध्ये पद्मचक्रं प्रजायते । कृत्तिकादीनि भान्यत्र त्रीणि त्रीणि यथाक्रमम् । मध्यकोष्ठादि संप्राप्तं सप्तविंशतिसंख्यया । नव खण्डा धरा या च नवभागेषु संस्थिता । यत्र खण्डे स्थितः सौरिः खण्डं तच्च विनश्यति”

८ फणीश्वरचक्रम्—“कृत्तिकाद्यं लिखेच्चक्रं सर्पाकारं फणीश्वरम् । सप्तनाडीसमायुक्तं सौरिवेधं विलोकयेत् । नाड्येकैकसमायोगे जम्बूद्वीपादि गण्यते । सप्त द्वीपाः क्रमेणैव पीड्यन्ते सौरिपीडया । जम्बूः प्लक्षस्तथा शाल्मः कुशः क्रौञ्चश्च शाकमथिः । सप्तमः पुष्करद्वीपः पीड्यन्ते सौरिपीडया” । कालानलचक्रादि तत्र

९ राहुकालानलचक्रम्—(१)“अथातः संप्रवक्ष्यामि प्रोक्ता या ब्रह्मयामले । राहुकालानली यात्रा सद्यःप्रत्ययकारकम् । ग्रहयोगवशाद्यात्रा ज्योतिःशास्त्रे प्रभाषिता । सा सा शुभेषु कार्येषु फलदा न तु सङ्गरे । यस्य छायाप्रभावेण छाद्येते शशिभास्करौ । तस्य राहोः प्रभावश्च वक्ष्येऽहं रणकर्माणि । केचित् मूर्खा वदन्त्येवं ग्रहोराहुरकारणम् । यतो सर्वे दिने तस्याधिपत्यं न लभ्यते । चाधिपत्ये स्थिता ये च वर्षे मासि दिवानिशोः । ते चाधिकारिणो ज्ञेया राहुः राज्ञोऽभिधीयते । वेदागमपुराणेषु विख्यातो राहुखेचरः । तस्य माहात्म्यमज्ञात्वा मिथ्या जल्पति स्वल्पवित् । दुष्टारिष्टेषु सर्वेषु जातकादिषु मन्यते । सद्यः प्रत्ययदो राहुः स कथं स्यादकारणम् । अमर्षः कालरूपेण संहारेण गृहीतके । स्ववक्त्रादंष्ट्रया रौद्रो ज्ञेयो राहुश्च संशयः । चण्डा चापभयाद्यस्य दृष्टिमार्गे भ्रमन्ति च । तस्य आमावर्त्तं वक्ष्ये रूपं युक्तं फलेन च । राहुरुत्तमः

पातः स्वर्भानुः सिंहिकासुतः । दैत्यच्छाया शिरोवक्त्रं चण्डारिश्च विधुन्तुदः । पुच्छं केतुः शिखी सर्पो गुदं गुह्यं घटोमतम् । उत्पातो विषगर्भश्च धूम्रकायः चण्डालकः । कच्छाधारगतोराहुः सर्परूपेण संस्थितः । तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम् । शलाकाष्टकं चक्रं कौर्म्यादौ कृत्तिकादिकम् । साभिजित् सर्वभाविस्य अष्टाविंशतितारकाः । यत्र ऋक्षस्थितोराहुर्वदनं तद्विनिर्दिशेत् । मुखात् पञ्चदशे ऋक्षे पुच्छं तस्य व्यवस्थितम् । एकोत्तरशतं ख्याताः जायन्ते तत्र केतवः । व्याप्नुवन्तो जगत्सर्वं चण्डमार्कसमत्विषः । राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश । त्रयोदशाऽपि भोग्यानि मृतपक्षः प्रकीर्त्तितः । मृतपक्षे कुरुक्षस्य गुदं जीवाङ्गमध्यगम् । एवमङ्गद्वयं राहोर्ज्ञातव्यं स्वरवेदिभिः । जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते । तस्मिन् काले शुभा यात्रा विपरीता तु हानिदा । चन्द्रादित्यौ यदा युक्तौ जीवपक्षव्यवस्थितौ । तत्र क्षेमं जयो लाभो यात्राकाले न संशयः । मृतपक्षे यदा काले संस्थितौ चन्द्रभास्करौ । तदा हानिर्भयं भङ्गोमृत्युर्यात्राफलं मतम् । जीवपक्षस्थिते चन्द्रे कार्य्यं स्यादमृतोपमम् । मृतपक्षे मृतं ज्ञेयं मतचन्द्रबलात् बलम्” तताङ्गभेदेन फलभेद उक्तस्तत्

राहुषडङ्गविभागचक्रम्—“अतः षडङ्गभेदेन राहुचक्रं वदाम्यहम् । मुखं हृदुदरं गुह्यं पुच्छं मस्तकमेव च । मुखैकं हृदये सप्त षडृक्षाणि तथोदरे । ऋक्षैकं गुह्यगं तस्य षट् पुच्छे

“मुखाद्यङ्गनामभेदः सप्तमस्तके मुखाद्यङ्गस्य नामानि फलं चास्य वदाम्यहम् । यथोक्तं क्रमेणैव चन्द्रार्कभ्रमणेन च । यत्र ऋक्षे स्थितो राहुस्तस्याभिधानमीरितम् । शिखितं कर्त्तरी जिह्वा चन्द्राङ्गं वदनं तथा । राहुधिष्ण्यात्ततः सप्त भुक्तधिष्ण्यानि यानि च । तानि सम्पुटसंज्ञानि कामाङ्गं हृदयन्तथा । हृदयाच्च स्थिताश्च तारका रससंख्यया । कामाङ्गं जठरं जीवं सम्पुटोदरसंज्ञकम् । तत्पुरोयत्तु नक्षत्रमेकं पञ्चदशं तु यात् । गुदस्तद्गशिखितं गुह्यं केतुचन्द्राङ्गकर्त्तरी । गुदधिष्ण्यात्ततोयानि धिष्ण्यानि रससंख्यया । पुच्छं सूर्य्याङ्गवज्राङ्गमुष्टिमत्युस्तथैव च । शेषाणि सप्त भान्यत्र मध्यत्वान्यस्य पुच्छयोः । कपालं मस्तकं शीर्षं रुद्राङ्गं भोगिमस्तकम् । स्थिरक्रूपी स्थितोभानुश्चरक्षपश्च चन्द्रमाः । क्रमेणैकैकयोऽङ्गानां योगषट्कं वदाम्यहम् ।

मुखादियोगषट्कम्—“राहुवक्त्रे स्थिते सूर्य्ये चन्द्रे हृदयसंस्थिते । यायिनो विजयस्तत्र स्थायिनो भङ्ग आहवे । मुखाग्रसंस्थिते सूर्य्ये चन्द्रे चोदरगे तथा । अत्र यायी जयेद्युद्धे हेलया नात्र संशयः । भास्करे शिखिताङ्गस्थे चन्द्रे वज्राङ्गसंस्थिते । स्थायी भङ्गमवाप्नोति यायी जयति सर्वतः । राहुऋक्षस्थितो भानुश्चन्द्रे पुच्छाङ्गसंस्थिते । स्थायिनोविजयोयुद्धे यायिनो मृत्युमादिशेत् । राहुजिह्वां गते सूर्य्ये चन्द्रे रुद्राङ्गसंस्थिते । बलावर्त्तो भवेत्तत्र सैन्ययोरुभयोरपि । राहुऋक्षस्थितोभानुश्चन्द्रस्तत्रैव संस्थितः । न कश्चिज्जयमाप्नोति सैन्ययोरुभयोःक्षयः” ।

हृदयादियोगषट्कम् । “हृदयस्थे दिवानाथे जठरस्थे निशाकरे । निर्द्दिष्टः स्थायिनोमृत्युर्यायी जयति निर्भयः । हृदयस्थो यदा भानुः शशाङ्कोगुदमाश्रितः । हेलया जयते यायी स्थायी च म्रियते रणे । कामाङ्गके दिवानाथे पुच्छषट्के निशाकरे । स्थायिनो विजयस्तत्र यायिनश्च पराजयः । सम्पुटस्थो यदादित्यो रुद्राङ्गे चन्द्रमा स्थितः । यायी च भङ्गमायाति किञ्चित्स्थायी जयी रणे । कामाङ्गं याति चेत् भानुश्चन्द्रे राहुमुखस्थिते । संग्रामे विजयी यायी, स्थायिनो भङ्गमादिशेत् । हृदयाङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ । देवानपि जयेत् यायी किंपुनर्मानवं बलम्” ।

उदरादियोगषट्कम्—“उदरस्थे दिवानाथे निशानाथे गुदस्थिते । समयुद्धं भवेत्तत्र किञ्चित् यायी जयी रणे । सम्पुटस्थो यदा भानुः पुच्छे भवति चन्द्रमाः । यायिभङ्गो, जयः स्थायिनस्तत्र काले न संशयः । कामाङ्गगः सहस्रांशुर्मस्तकस्थो निशाकरः । यात्रिकोभङ्गमायाति स्थाने यायी जयी रणे । भानुरुदरगोयत्र निशेशोराहुवक्त्रगः । विवादी हीयते तत्र स्थायी जयति नान्यथा । स्वर्भानोरुदरे भानुर्हृदये तारकाधिपः । अनायासेन संग्रामे यायिनो जयमादिशेत् । उदराङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ । तदा कश्चिन्न सन्देहः सैन्ययोरुभयोरपि” ।

गुदादियोगषट्कम्—“केतुधिष्ण्ये स्थिते सूर्य्ये चन्द्रे वज्राङ्गसंस्थिते । यायिभङ्गो, जयी स्थायी भाषितं ब्रह्मयामले । गुदे तीक्ष्णांशुसंयुक्ते. कपालस्थे निशाकरे । यायी च भज्यते तत्र स्थायी जयति नान्यथा । गुदऋक्षस्थितः सूर्य्योराहुऋक्षस्थितः शशी । महाहवं भवेद्घोरं किञ्चित् स्थायी जयी रणे । भानुरुद्गशिखिते ऋक्षे शशभृत्

संपुटे यदि । यायिनो विजयस्तत्र स्थायिनो भङ्गमादिशेत् । गुदभे वर्त्तते भानुर्ज्जठरे रोहिणीपतिः । दण्डयित्वा रिपोः सैन्यं याताभ्येति निजालयम् । गुदे दिनकरो यत्र तत्रैव यामिनीकरः । समयुद्धं भवेत्तत्र किञ्चिदागन्तुको जयी" ।

वज्राङ्कयोगषट्कम्—"सूर्य्याङ्गस्थः सहस्रांशुर्ज्जङ्घायां शीतगुः स्थितः । यायिनोविजयं विद्यात् स्थायिनश्च पराजयम् । पुच्छलेलस्थितो भानुः श्रद्रलेले तु चन्द्रमाः । यायिनो मृत्युरायाति जयलाभो च स्थायिनः । पुच्छषट्के यदादित्यः कामाङ्गे चन्द्रमाः स्थितः । यायी विजीयते तत्र शक्रतुल्योऽपि वैरिभिः । अंशुमाली स्थितोवज्रे जठरस्थे सुधाकरे । आदत्तेऽरिश्रियं सर्वां जित्वा यायी रणाङ्गणे । भास्करे राहुपुच्छस्थे मृगाङ्के गुदमाश्रिते । समयुद्धं भवेत् तत्र किञ्चित् यायी जयी रणे । सूर्य्याचन्द्रमसौ यत्र वज्राङ्गे यदि संस्थितौ । सैन्ययोरुभयोस्तत्र वधो भवति निश्चितम्" ।

कपालादियोगषट्कम्—"रुद्राङ्कस्थे दिवानाथे राहुजिह्वाङ्गगः शशी । स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः । राहुशीर्षस्थिते मित्रे शशाङ्के हृदि संस्थिते । विना युद्धेन स्वह्नीयाद्यायी शत्रोर्नरश्रियम् । कपाल संस्थितः सूर्य्यः सम्पुटस्थो यदा शशी । यायिना जीयते तत्र स्थायिनो भङ्गमादिशेत् । मस्तकस्थे दिवानाथे धिष्ण्यनाथे गुदाश्रिते । यायिनो विजयो युद्धे स्थायिनस्तु पराजयः । राहुशीर्षगतोभानुः पुच्छर्क्षे तु निशाकरे । अन्योऽन्यं विग्रहं घोरं युद्धं भवति दारुणम् । दिनेशो राहुरुद्राङ्के चन्द्रस्तत्रैव सङ्गतः । विनाशं कोषराज्यस्य यायिनो मृत्युमादिशेत् ।"

राहुदशाङ्गविभागचक्रम्—"हृदयादीनि चाङ्गानि जिह्वान्तानि क्रमेण च । दशसंख्यान्यहं वक्ष्ये राहुचक्रस्य मध्यतः । पुष्पितं फलितं चैव निःफलं भ्रटितं गुदम् । राजसन्मानसं हस्तं स्तनं जिह्वा क्रमेण च । पुष्पिते त्रीणि धिष्ण्यानि क्षेमलाभकराणि च । तत्र भङ्गो भवेद्युद्धे याता मासेन वाञ्छदा । ततश्चत्वारि धिष्ण्यानि पञ्चकेण फलन्ति च । गजवाजिधनं देशं यायी तु लभते ध्रुवम् । अफलेषु त्रिधिष्ण्येषु वराम्रायैर्थायिनं प्रति । सन्धिं सैवां तथा देशं स्थायी यच्छति निश्चितम् । फलं प्राप्नोति वर्षेण भ्रटितैश्च त्रितारकैः । छत्त्रश्वपुत्त्रमित्रादि देशकोषपरिग्रहैः । गुदैकेन भ्रंशं लक्ष्मीः पद्मिनी प्रियवादिनी । रूपयौवनसम्पन्ना मासयुग्मेन लभ्यते । विग्रहस्य भवेद्दुर्द्धिर्युद्धे भङ्गस्तथैव च । रोगपीड़ा भवेद्वर्षे राजपार्श्वे त्रितारकैः । छत्त्रश्वपुत्त्रमित्रादि देशकोषपरिग्रहाः । षड्भिर्मासैर्विनश्यन्ति यायिनस्तामसत्रये । तामसाख्ये चतुष्के तु तारकाहृदसंज्ञकाः । सर्व्वनाशकराः प्रोक्ता मासैकेन न संशयः । ततस्त्रीणि स्तम्भानि राजस्तम्भप्रदानि च । आर्य्यासानश्च गुल्मश्च पञ्चकेन फलन्ति च । युद्धे भङ्गो महाभीतिर्द्रव्यनाशः कुलक्षयः । सद्यो मृत्युं लभेद्यायी राहुवक्त्रे सुनिश्चितम् ।" इति दशाङ्गफलम् ।

"युद्धकाले यदा शीघ्रं यात्रायोगो न लभ्यते । उत्पाद्येते तदा शीघ्रं तत्कालेन्दुदिवाकरौ । इष्टनाड्योहताधिष्ण्यैः षष्टिभागाप्तशेषकैः । अश्विन्यादीन्दुभुक्तेन युतस्तात्कालचन्द्रमाः । यथा चन्द्रस्तथा सूर्य्यः कर्त्तव्यश्चैककालिकः । अहोरात्रस्य मध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले । स्थिरचक्रे पुरा प्रोक्तं चन्द्रादित्यफलं मया । चरचक्रेऽप्यनेनैव प्रकारेण फलम्भवेत् । सर्व्वेषु शुभकार्य्येषु यात्राकाले विशेषतः । सर्वकाले शुभश्चन्द्रोज्ञेयो हृदि गुदोदरे । पुच्छषट्के कपालस्थे शशाङ्के राहुवक्त्रगे । बन्धनं हानिर्मृत्युश्च सर्वकार्य्येषु जायते । हृदि गुदोदरे चन्द्रे विवाहे नन्दति द्वयम् । नैःस्वं वैधव्यविद्वेषौ सुखे पुच्छे तु मस्तके । पुष्पिते फलिते शुद्धे प्रश्नकाले शशी शुभः । अफले भ्रटिते मध्ये मृत्युः शेषाङ्गगे विधौ । ऊर्द्ध्वं तु खेचरं चक्रमधोभूचरमुच्यते । उभयोः सन्निपातेन राहुकालानलं मतम्" ।

१० सूर्य्यकालानलचक्रम्—"ऊर्द्ध्वगास्त्रिशिखाः शूलाग्याश्चाप्यस्तिर्य्यक् च संस्थिताः । द्वे द्वे नाड्यौ स्थिते कोणे श्टङ्गयुग्मं तथैकया । मध्ये त्रिशूलदण्डाधो भानुभाद्यं भमण्डलम् । साभिजिच्च प्रदातव्यं सव्यमार्गेण सर्व्वदा । ख्याष्टके जयोलाभः कण्ठषट्के तथा पुनः । श्टङ्गयुग्मे कलाभङ्गो मृत्युः शूलत्रये स्फुटम् । नाभस्थं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । अधोगतैश्च नक्षत्रैर्द्दर्गोबधबन्धनम् । विवाहे विग्रहे युद्धे रोगार्त्तौ गमने तथा । सूर्य्यकालानलं चक्रं ज्ञातव्यं च प्रयत्नतः ।" (रोगे च कुजनचात्र दिन चचन्तु युद्धके । प्रयाणे कृत्तिका लेख्या धन्यत्रार्कस्य दीयते) । क्वचित् अधिकपाठः

११ चन्द्रकालानलचक्रम्—"चन्द्रकालानलं चक्रं व्योमाकारं लिखेद्बुधः । चतुर्द्दिक्षु त्रिशूलानि मध्ये भिन्नानि कार-

येत्। पूर्वत्रिशूलमध्यस्थं दिगष्टकादि लेखयेत्। मध्यमार्गेषु दातव्या अष्टाविंशतितारकाः। त्रिशूले च बहिर्मध्ये मध्ये बहिस्त्रिशूलके। त्रिशूले चक्रबाह्ये च चक्रमध्ये तथैव च। नामऋक्षं स्थितं यत्र तत्र ज्ञेयं शुभाशुभम्। त्रिशूले च भवेन्मृत्युर्मध्यस्थे बहिरष्टकम्। लाभः क्षेमं जयः प्रज्ञा चन्द्रगर्भे न संशयः। वर्जनीयं प्रयत्नेन प्रथमाष्टत्रिपञ्चकम्। ऋक्षं द्वात्रिंशकं यत्र कालरूपं न संशयः। लाभालाभौ सुखं दुःखं जयश्चैव पराजयः। चन्द्रकालानलं चक्रं ज्ञात्वा संशयवर्जितम्"।

१२ घोरकालानलचक्रम्—"शलाकासप्तकं चक्रं लिखित्वा चन्द्रभादितः। त्रिषु त्रिषु च ऋक्षेषु नव सूर्यादयो ग्रहाः। यदङ्के नामनक्षत्रं युद्धकारस्य जायते। फलं तस्य प्रवक्ष्यामि एकैकस्य यथाक्रमम्। भानुना शोकसन्तापः शशाङ्कः क्षेमलाभदः। भूसुतो मृत्युमाप्नोति बुधेन बुद्धिः प्रजायते। जीवे लाभः, शुभं शुक्रे, सूर्यपुत्रे महद्भयम्। राहुणा घातपातश्च केतौ मृत्युर्न संशयः। यात्राजन्मविवाहेषु संग्रामे विग्रहेऽपि वा। घोरकालानलं चक्रं ज्ञात्वा कर्म समारभेत्"।

१३ गूढकालानलचक्रम्—"सप्तरेखोद्भवं चक्रं चन्द्रभाद्यं भमण्डलम्। लिखित्वा कल्पयेच्चक्रं षडङ्गं जयकाङ्क्षिभिः। दिनर्क्षाद्गण्यते चक्रे गूढसम्पुटकर्त्तरी। दण्डः कपालं वज्राङ्कं ज्ञातव्यं स्वरवेदिभिः। यत्र ऋक्षे स्थितश्चन्द्रस्तत्रादौ त्रीणि गूढकम्। सम्पुटे नव भान्यत्र कर्त्तरी च ततस्त्रिभिः। दण्डे धिष्ण्यानि च त्रीणि कपाले धिष्ण्यसप्तकम्। वज्राङ्के त्रीणि धिष्ण्यानि षडङ्गस्येति निर्णयः। यदङ्के नामनक्षत्रं युद्धकारस्य जायते। वक्ष्ये शुभाशुभं तस्य गूढकालानले स्थितम्। गूढस्थे विभ्रमो, युद्धे जयो भवति सम्पुटे। कर्त्तर्यां कष्टं युद्धं, दण्डे भङ्गो न संशयः। कपालस्थे भवेन्मृत्युर्वज्रे तस्य महद्भयम्। गूढकालानलं चक्रं भाषितं ब्रह्मयामले"।

१४ शनिसूर्यकालानलचक्रम्—"द्वादशारं लिखेच्चक्रं मेषादि द्वादशान्वितम्। क्षेत्रयुग्मञ्च तत्रैव विन्यासं रविचन्द्रयोः। सिंहाद्यं मकरान्तञ्च भानुक्षेत्रमुदाहृतम्। कुम्भादिकर्कपर्यन्तं चन्द्रक्षेत्रं न संशयः। चन्द्रक्षेत्रगते सूर्ये चन्द्रस्तत्रैव संस्थितः। यायिनो विजयो युद्धे स्थायिनो भङ्गमादिशेत्। सूर्यक्षेत्रे गते चन्द्रे सूर्यस्तत्रैव संस्थितः। यायी भङ्गमवाप्नोति स्थायिनो विजयो भवेत्। सूर्ये सूर्याङ्कसंयुक्ते चन्द्रे चन्द्राङ्कसंगते। तदा काले भवेद्‌युद्धमन्वियुद्धं तत्र विपर्यये। सूर्यक्षेत्रगते चन्द्रे चन्द्रक्षेत्रगते रवौ। महायुद्धं प्रवर्त्तेत संहारः सैन्ययोर्द्वयोः। यात्रायां युद्धकाले च चक्रमेतद्विलोकयेत्"। अत्र विशेषः। "एकेन क्रूरवेधेन विद्धो भवति चन्द्रमाः। स्वल्पं युद्धं तदा काले जायते नात्र संशयः। द्वाभ्यां वापि त्रिभिर्वापि पापैर्विद्धो यदा शशी। तदा युद्धं महाघोरं सैन्ययोरुभयोरपि। वक्रैः पृष्ठे भवेद्युद्धमग्रे चैवातिचारिभिः। मध्यगत्या भवेन्मध्ये पापैः सौम्यैस्तु तन्न हि। ऊर्द्ध्वदृष्टौ भवेदूर्द्ध्वं मध्यदृष्टौ तु मध्यमे। अधोदृष्टावधस्तात्तु केकरे पार्श्वतो भवेत्। शनिराहुकुजादित्यास्त्वेकरेखागता यदि। चन्द्रेण संयुतास्ते च तदा पातचतुष्टयम्। शनिना चन्द्रयुक्तेन जीववेधगतेन च। तदा वृष्टिर्भवेन्नूनं वर्षोपलमयोच्छ्रितम्। भौमेनाग्निर्भवेत् पातो राहुणा चोल्कपातकृत्। भानुना चण्डवातश्च मर्त्त्यैः सर्व्वं भवन्ति च। शुक्रेण जलपातोऽपि पांशुपातः शशाङ्कजे। गुरुणा वज्रपातः स्याद्दिग्दाहः केतुना भवेत्"।

१५ संघट्टचक्रम्—"अश्विन्यादि लिखेत् चक्रं सप्तविंशतितारकम्। त्रिकोणं नवभिर्वेधः कर्त्तव्यस्त्रिशृङ्गाकृति। अश्विनीरेवतीवेधो मेषचाश्विनिज्येष्ठयोः। मघापौष्णमघाश्लेषे अश्लेषामूलयोस्तथा। एवं संघट्टचक्रं च कार्य्यं स्वक्षगता ग्रहाः। भूपनामर्क्षसंघट्टे युद्धं भवति नान्यथा। निर्वेधे सौम्यवेधे च युद्धं नास्ति न संशयः। क्रूरवेधे भवेद्युद्धं तत्काले घोरदर्शनम्। युद्धकाङ्क्षी भवेद्राजा यस्य भं क्रूरवेधितम्। युद्धद्वेषी भवेत् सौम्ये तथा वेधविवर्जिते। सौम्यक्रूरविभागेन मिश्रामिश्रक्रमेण च। वक्रातिचारगत्या च युद्धं स्वल्पञ्च जायते च"।

१६ कुलाकुलचक्रम्(२)—"द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम्। विषमा अकुलाः सर्वाः शेषाश्च तिथयः कुलाः। रविचन्द्रौ गुरुः सौरिश्चत्वारोऽप्यकुलामताः। भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः। वारुणाद्रार्भिजिन्मूलं कुलाकुलमुदीरितम्। कुलानि समधिष्ण्यानि शेषभान्यकुलानि च। तिथौ वारे च नक्षत्रे अकुले यायिनो जयः। कुलाख्ये स्थायिनो नूनं सन्धिश्चैव कुलाकुले"।

दंष्ट्रे द्वयं मतम् । दिनर्क्षमादितः कृत्वा नामर्क्षं यत्र संस्थितम् । मुखदंष्ट्रागतो मृत्युः शुभमन्यत्र संस्थिते । ज्वरिते नष्टदग्धे च विवाहे विग्रहे रणे । काल-दंष्ट्रागतं नाम यस्य तस्य महद्भयम्” ।

२४ सूर्य्यफणिचक्रम्—“सप्तविंशतिभान्यत्र पङ्क्तियुक्तानि क्रमेण च । तन्मन्तरे तन्मन्तरे चैव फणिचक्रं त्रिना-डिकम् । यत्र ऋक्षे स्थितो भानुस्तदादि गणयेद्बुधः । नामर्क्षं च स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । कुर्य्या-न्मृत्युं च रोगञ्च नाडीवेधं गतो ध्रुवम् । वर्ज्जयेत् सर्व्वकार्य्येषु युद्धकाले विशेषतः । निर्व्वेधर्क्षगतमध्यस्थं यस्य नाम प्रजायते । सिद्ध्यन्ति तस्य कार्य्याणि संग्रामे विजयो भवेत्” ।

२५. चन्द्रफणिचक्रम्—“सूर्य्यफणीश्वरे चक्रे यदुक्तं च शु-भाशुभम् । चन्द्रादौ तत्फलं चक्रे ज्ञेयं सर्व्वं फणीश्वरे ।”

२६ कविचक्रम्—“हीनसैन्यः सदा स्थायी यायी सैन्या-धिकः सदा । अबलस्य बलोपायं वक्ष्येऽहं कविसङ्करे । प्रयाणे चोत्प्रयाणे वा निशीथे मृगयाकृते । शोकार्त्ते व्यसनप्राप्ते हतसैन्ये विनायके । अष्टधा कविकाल-स्तु कथितो दुर्ब्बले नृपे । इत्थं कुर्व्वन् परान् युद्धे जयती-ह न संशयः । चतुरस्रं त्रिनाडीकम् कविचक्रं लिखे-द्बुधः । प्रवेशे निर्गमे भानि स्थापयित्वाग्रादि विन्यसेत् । यत्र नामाङ्किते स्थाने शत्रुसैन्यं व्यवस्थितम् । तत्र चक्रम् समालेख्य सेनाध्यक्षपूर्व्वकम् । त्रीणि त्रीणि प्रवेशे च ऐशाद्यौ विदिशि क्रमात् । निर्गमे त्र्यं त्र्यं च पूर्व्वाद्यादिक्रमेण च । सौम्याः क्रूरा ग्रहास्तत्र प्रवेशे निर्गमे स्थिताः । चक्रातिचारगास्तत्र ज्ञात्वा कविरणं कुरु । जीवपक्षस्थिते चन्द्रे क्रूरक्षे प्रवे-शके । यानं कविरणे प्रोक्तं ज्ञात्वा प्रवेशनिर्गमौ । उदितोऽस्तसरो यस्य यत् जन्मेन्दुसमाश्रयः । तद्दिने ते भटाः सर्व्वे वर्जनीयाः कवौ रणे । क्रूरे शीघ्रे प्रवे-शर्क्षे यत्र तत्र विशेद्रणे । चक्रशेषे निर्गमे सौम्ये तद्दिशि निर्गमं कुरु । प्रवेशर्क्षे प्रवेशं च निर्गमे निर्गमे कुरु । भूबलं पृष्ठतः कृत्वा प्रोक्तः कविरणे जयः ।”

२७ खलचक्रम्—“चतुरस्रं चतुर्द्वारं खलचक्रं लिखे-द्बुधः । नन्दाद्यास्तिथयोऽस्यास्तु पूर्व्वद्वारक्रमेण च । पूर्व्वाद्यादिचतुष्के तु सप्त सप्त क्रमेण तु । कृत्तिकादि लिखेन्मध्ये खले भान्यष्टविंशतिम् । शनिचन्द्रौ कुज-सौम्यौ भानुशुक्रौ बृहस्पतिः । मध्ये बहिर्गतादेवा

प्यपसव्यं दिशां क्रमैः । यद्दिने यद्दिशि स्युस्ते तिथि-धिष्ण्यदिनाधिपाः । प्रवेशः खलकद्वारे तत्र व्यक्तो न सर्व्वदा । खलकाभ्यन्तरे कालः शनिसूर्य्यौ व्यमङ्गलैः । बुधशुक्रेन्दुभिर्ब्बाह्ये यायी स्थायी क्रमाज्जयी । ख-लके मध्यनक्षत्रे यो ग्रहो यत्र संस्थितः । तत्र स्थाने गते चन्द्रे फलं वच्मि शुभाशुभम् । सूर्य्यस्थाने-स्थिते शूरे मृत्युश्चन्द्रसमाश्रिते । भौमस्थाने महा-क्रोधी बुधस्थाने महद्भयम् । गुरुस्थाने स्थितः स्याद्भुर्भङ्गमायाति भार्गवे । शनिस्थे सततं युद्धं राहुस्थे मरणं ध्रुवम् । चक्रस्थाने भवेद्युद्धं शीघ्र स्थाने च धावति । समचारगते स्थायी यायीन्दु-स्थे च मोहनम् । क्रूरपृष्ठे जयो युद्धे, सौम्यपृष्ठे पराजयः । क्रूरे च संमुखे मृत्युर्ज्जयः सौम्य-ग्रहे स्थिते । योधयोः पृष्ठगाः क्रूरा उभयोर्मृत्यु-कारकाः । सौम्याः सन्धिप्रदा युद्धे मिश्रा मिश्रफलप्रदाः ।”

२८ कोटचक्रम्(८)—“अथातः सं प्रवक्ष्यामि कोटयुद्धस्य निर्णयम् । स्वल्पारिः कुरुते यत्र भूरिसैन्यपराभवम् । यस्याश्रयबलादेव राज्यं कुर्व्वन्ति भूतले । विग्रहे चतुराशायां सामात्यैः शत्रुभिः सह । विषमं दुर्गमं घोरं चक्रं भीरुभयावहम् । कपिशीर्षैश्च शोभाढ्यं रौद्राकृतकमण्डितम् । प्रतोली तत्र कालाख्यं परिखा कालसर्पिणी । रथमण्डलताटोपः ठक्कुनीयन्त्रमण्डितम् । सुसन्नैर्मुद्गरैः पाशैःकुन्तखड्गैर्धनुःशरैः । संयुतैः सुभटैः शूरैरिति दुर्गं समादिशेत् । दुर्गस्थो दुर्गमः शत्रुरसाध्यो येन सिध्यति । कोटचक्रं प्रवक्ष्यामि विशपादष्टधा मतम् । प्रथमं स्वर्णमयं कोटं जलकोटं द्वितीयकम् । तृतीयं ग्रामकोटञ्च चतुर्थं गिरिगह्वरम् । पञ्चमं पर्व्वतारोहं षष्ठकोटञ्च डामरम् । सप्तमं चक्रभूमिस्थं विषमाख्यं तथाष्टमम् । स्वर्णमये संज्ञेयेत् खण्डुर्जलस्थे जलमोचनम् । ग्रामदुर्गेऽग्निदानञ्च प्रवेशो गह्वरस्य च । पर्व्वते स्थानभेदश्च भूबलं डामरे-रणे । चक्राख्ये कपिशीर्षे विषमे स्थायियायिता । खातिवर्त्तं पातकर्णैश्चक्रावर्त्तं च डामरम् । नाना-वर्त्तश्च पद्माङ्कं यन्त्रभेदञ्च शाम्बरम् । एतन्नामाष्टकं ज्ञेयं दुर्गाष्टकक्रमेण च । यस्य वर्गस्य योऽभ्यस्तः स वर्गस्तस्य भक्षकः । अ गरुडः क मार्ज्जारः च सिंहः ट शुनीसुतः । त सर्पः प आखुकश्च य मृगः श चञ्च-रुतः । दुर्गवर्गस्य ये शत्रवः कक्षाविज्ञानजा नराः ।

तद्वर्गास्तु रणे त्याज्या न कर्त्तव्या गडाधिपाः स्ववर्ग-पञ्चमे स्थाने खण्डभङ्गश्च जायते । अवर्गाद्यष्टकं ज्ञेयं पूर्वाद्यष्टदिशां क्रमात् । कोटचक्रं लिखेद्वादौ चतुरस्रं त्रिनाडिकम् । कृत्तिकादीनि भान्यत्र साभि-जन्ति न्यसेद्बुधः । बहिः कोटे च मध्ये च मध्ये दुर्गे बहिर्बहिः । प्रवेशो निर्गमस्तत्र ज्ञातव्यः खरैर्दि-भिः । ईशात् प्रवेशधिष्ण्यानि मध्यात् प्राचीविनि-र्गमः । बहिर्द्वादश भान्यत्र प्राकारे तारकाष्ट-कम् । दुर्गमध्ये तथा चाष्टौ तन्मध्ये चाभितुर्य्यकम् । कृत्तिका पुष्यसार्पे च मघास्वातीविशाखकम् । अनुराधा-भिजित् कर्णौ धनिष्ठाश्चियमाश्चयम् । आर्द्रां पुनर्वसु भाग्यं चित्रा ज्येष्ठा तथोत्तरा॥२ । शतभं रेवती चैव प्राकारे तारकाष्टकम् । स्मगरौद्रोत्तराहस्तमूलमाषाढ-पूर्वकम् । पूर्वोत्तरा तथा भाद्रा मध्ये तारादकं तथा । प्राच्यां रौद्रं यमे हस्तं पूर्वाषाढ़ा च पश्चिमे । कौवेर्य्या-मुत्तरा भाद्रा ह्येतत्स्तम्भचतुष्टयम् । कृत्तिकाद्यं मघाद्यञ्च मैत्राद्यं वासवादिकम् । त्रीणि त्रीणि प्रवेशे च द्वाद-शर्क्षाणि निर्गमे । कृत्तिकादिरयं न्यासः सुबोधार्थः प्रद-र्शितः । दुर्गभाद्गगचक्रा चात् ग्रहैर्वाच्यं ततः फलम् । दुर्गनामस्थितो वर्णोऽवर्गोच्चारितः स्फुटम् । तदाद्यादि लिखेच्चक्रं क्रमात् खरविचक्षणैः । चतुरस्रं १ वृत्तं २दीर्घं ३ त्रिकोणं ४ वृत्तदीर्घकम्५ । अर्द्धचन्द्रं ६ तथा ज्ञेयं गोस्तनं७ धनुराकृति८ । चतुरस्रे यथान्यासो भूमिभागक्रमेण च । प्रवेशे निर्गमे चास्ति तथा वृत्तादिसप्तके । दुर्गे भित्ति विभागेन दातव्यं धिष्ण्यमण्डलम् । तत्र स्थैः खेचरैः सर्वैः फलं वाच्यं यथोदितम् । बाह्यभे मध्यभे वापि यत्रस्थाः क्रूरखेचराः । तत्र स्थाने कृतं बलं हन्ति दुर्गं सवैनि-कम् । बुधशुक्रेन्दुजीवाश्च सदा सौम्या ग्रहा मताः । शन्यर्कराहुकेत्वारा मताः क्रूरा बुधैरिमे । त्रिप्रकारो ग्रहे चारो वक्रः शीघ्रः समोमतः । उच्चनीचसमाख्या च त्रिधा चक्रे भवन्ति च । अर्द्धं चाद्यः समाख्यं नद्दृष्टि-भेदश्चतुर्विधः । स्वर्क्षे मित्रे समं शत्रौ चतुर्धा च स्थे ग्रहः । सूर्य्यक्रान्ता उदीयन्ते शीघ्राश्चाकें द्वितीयगे । समास्तृतीयगे यान्ति मन्दगत्या चतुर्थगे । वक्रः स्यात् पञ्चषष्ठेऽर्के त्वतिवक्रोऽष्टसप्तमे । नवमे दशमे भानौ जायते कुटिला गतिः । शीघ्रगाश्च भवन्त्यर्के द्वादशैकादशे तथा । राहुकेतू सदा ज्ञेयौ रवीन्दू शीघ्रगौ तथा । भौमोऽतिचारगत्या च समश्च सप्रमन्दया । वक्रातिवक्रकौटिल्यगत्या वक्रग्रहोमतः । क्रूरोऽति-क्रूरतां याति सौम्योयात्यतिसौम्यताम् । वक्रचारे समु-त्पन्ने शीघ्रे तद्विपर्य्ययः । मेषो वृषोमृगः कन्या कर्क मीनतुलास्तथा । रव्यादीनां क्रमादुच्चं नीचं यत्तस्य सप्त-मम् । उच्चान्नीचाच्च यत्तुर्य्यं समस्थानं तदुच्यते । उच्चस्थं मध्यमं नीचं वक्रे यत्र व्यवस्थितम् । ऊर्द्धदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ । समदृष्टी च जीवेन्दू शनिराहू त्वधोदृशौ । शुक्रदोकेन्दुभौमेज्या एवं शुक्रशुभात्मजाः । अन्योन्यं रिपवोह्येते राहोः सर्वे च शत्रवः । स्वोच्चस्थे बलं पूर्णं पादोनं मित्रभे ग्रहे । अर्द्धं समक्षे ज्ञेयं पादं शत्रुस्थस्थिते । क्रूरोगर्भे पुरं-हन्ति प्राकारे खण्डकारकः । बहिःस्थो वेष्टके सैन्ये मृत्युदो नात्र संशयः । क्रूरागर्भे, शुभा बाह्ये निश्चितन्ते पुरान्तकाः । सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते । क्रूरचतुष्टयं मध्ये प्राकारे सौम्यखेचराः । भेदोभङ्गो भवेत्तत्र विना युद्धेन लभ्यते । प्राकारे संस्थिताः क्रूरामध्ये सौम्यग्रहा यदि । दुर्गभङ्ग समुत्पन्ने भङ्गमायाति वेष्टकः । मध्ये नाड्योस्थिताः सौम्याः क्रूरा बहिरवस्थिताः । सैन्यावर्त्तोबहिः सत्रो-र्विना युद्धेन जायते । प्राकारे पुरमध्ये च यदा क्रूरा व्यवस्थिताः । सौम्या बाह्ये तदा दुर्गमयत्ने-नापि सिद्ध्यति । सौम्या मध्ये च कोटे च बाह्ये पापग्रहा यदि । दैवैर्ब्रह्मादिभिर्दुर्गं रक्षारक्षे न लभ्यते । प्राकारबाह्यगाः क्रूराः सौम्या मध्यगता यदि । युद्धे प्राकारखण्डश्च पुरभङ्गो न जायते । सौम्या बाह्ये तथा कोटे मध्ये क्रूरग्रहाःस्थिताः । स्वयं दुर्गं प्रयच्छन्ति वेष्टकस्य गडाधिपाः । बाह्याभ्यन्तरगाः क्रूराः प्राकारे शोभना ग्रहाः । रिपुपक्षः क्षयं याति विना-युद्धेन निश्चितम् । प्राकारस्था ग्रहाः क्रूरा बहिर्मध्ये शुभाःस्थिताः । समयुद्धं भवेत्तत्र चाण्डःपाता दिने दिने । बाह्यान्तरगता यस्य ग्रहाः सौम्याः शुभा-न्विताः । भवेयुस्तस्य कोटस्य न नाशस्तु कदाचन । यदि सागरतः (शिरः) तत्र यधयुमानोरयोऽभवेत् ! ! तथापि न भयं विद्यादिति सत्यं च नान्यथा । सौम्याः क्रूराग्रहाश्चाष्टौ मध्ये प्राकारबाह्यगाः । एकस्था यत्र कुर्वन्ति सङ्ग्रामं तत्र दारुणम् । गजाश्वरथभूपालैः सामन्तैर्मण्डलेश्वरैः । तत्राध्यक्षभटा-मर्द्दं उभयोः सैन्ययोः क्षयः । बाह्ये गतग्रहमध्ये

तत्क्षणात् स्वर्गमायान्ति तस्मात् स्वर्गोपमा गजाः। नास्ति हस्तिसमो योद्धा नास्ति हस्तिसमः सखा। नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमो रिपुः”।

२० अश्वचक्रम्—“अश्वाकारं लिखेच्चक्रमश्वधिष्ण्यादितारकाः। वदनात् स्पृष्टगा देया अष्टाविंशतिसंख्यया। मुखाक्षिकर्णशीर्षेषु पुच्छाङ्घ्रौ युग्मसंख्यया। पञ्च पञ्चोदरे पृष्ठे सौरिर्यत्र फलं ततः। मुखाक्ष्युदरशीर्षेषु यदा सौरिर्व्यवस्थितः। युद्धकाले तदा तस्य जयो भवति नान्यथा। कर्णपुच्छाङ्घ्रिपृष्ठस्थे अश्वचक्रेऽर्कनन्दने। विभ्रमं भङ्गं हानिञ्च करोत्यश्वो महाहवे। एतत्स्थाने स्थितः सौरिर्यदा काले हयस्य च। पङ्गवश्चे गमे युद्धे वर्ज्जयेत्तं हयं नृपः। देशान्तरस्थितास्तस्य रिपवः सन्ति शङ्किताः। तुरङ्गायस्य भूपस्य विचरन्ति महीतले। मेदिनी तस्य वश्याश्वा इति वाक्यं विनिश्चितम्। सर्व्वाःश्रियो न राजन्ते विनाश्वेन महीभुजाम्”।

२१ रथचक्रम्—“आदौ चक्रं समालिख्य रथाकारं सुशोभनम्। रथाग्रे त्रिशूलानि रथचक्रं त्रिदण्डकम्। भानुभं मध्यशूलाग्रे ततः सव्यगतानि च। त्रीणि त्रीणि लिखेद्देवं सप्तविंशतिसंख्यया। महारथिकनक्षत्रं यत्र तत्र शुभाशुभम्। स्पृष्टे मृत्युर्जयश्चक्रे रथे सन्धिः सदण्डके”।

२२ व्यूहचक्रम्—“अष्टारं वर्त्तुलाकारं व्यूहचक्रं त्रिनाडिकम्। दण्डचतुष्टयं बाह्ये कर्त्तव्यञ्च चतुर्द्दिशम्। पूर्व्वदण्डाग्रतोन्यस्य दिनभाद्यं भमण्डलम्। प्रवेशे निर्गमे चैव त्रीणि त्रीणि प्रदक्षिणे। शशिसंज्ञाष्टकं मध्ये तद्बाह्ये भानुसंज्ञकम्। तृतीयं राहुसंज्ञं च केतु दण्डचतुष्टये। चन्द्रर्क्षे विजयो लाभः सूर्य्यर्क्षे मध्यमं फलम्। राहुधिष्ण्याष्टके विघ्नं मृत्युः केतुचतुष्टये। एवमुक्तं चतुःस्थाने यद्दिने यस्य नामभम्। तद्दिने तत् फलं तस्य सर्व्वकार्य्येषु सर्व्वदा”।

२३ कुन्तचक्रम्—“कुन्ताकारं लिखेच्चक्रं तीक्ष्णदण्डसमन्वितम्। दिनभादि समारभ्य कर्त्तव्यं नवकत्रयम्। राजभं नवके यत्र तत्र वक्ष्ये शुभाशुभम्। तीक्ष्णे मृत्युर्जयो दण्डे शेषधिष्ण्ये भयं रणम्”।

२४ खड्गचक्रम्—“खड्गचक्रं समालिख्य नवभेदसमन्वितम्। योधधिष्ण्यात् समारभ्य त्रीणि त्रीणि लिखेद्बुधः। वंशं वज्रं तथा हस्तिं पालिका वस्त्रधारिणी। खड्गं तीक्ष्णं विजानीयात् नवाङ्गानि विधानतः। शवादौ यत्र वस्त्रान्ते जायन्ते क्रूरखेचराः। मृत्युर्भङ्गो भवेद्युद्धे सौम्यैर्लाभो जयस्तथा। खड्गे धाराद्वये तीक्ष्णे क्रूरैर्जयति सङ्गरे। सौम्यैस्तथा भवेद्भङ्गो मिश्रैर्मिश्रफलं मतम्”।

२५ छुरिकाचक्रम्। “यथा खड्गं तथा विद्याच्छुरिकाचक्रनिर्णयम्। क्रूरसौम्यविभागेन योधधिष्ण्यादि विन्यसेत्”।

२६ चापचक्रम्—“चापचक्रं समालेख्य गुणबाणसमन्वितम्। शशिनक्षत्रतोभानि त्रीणि त्रीणि समालिखेत्। त्रीणि बाणस्य मूले तु मध्ये मुष्टिं क्रमात्तथा। चापमूलस्य मध्योर्द्ध्वे त्रीणि त्रीणि तथा पुनः। गुणे तु त्रीणि त्रीण्येव योधनक्षत्रतः फलम्। शरमूले भवेन्मृत्युर्मध्ये व्याधिः फले जयः। गुणमध्ये भवेद्भङ्गश्चापमध्ये धनक्षयः। चापोर्द्ध्वे विजयो ज्ञेयो, गुणोर्द्ध्वे लाभसंयुतः। चापाग्रे विग्रहो मृत्युर्गुणाग्रेऽपि तथा फलम्। पापग्रहयुते नेष्टं विशेषेण तु नान्यथा। सौम्ययोगे जयो लाभश्चापचक्रे समादिशेत्। शुभपापसमायोगे बलाधिक्ये बलं स्फुटम्”।

२७ शनिचक्रम्—“शनिचक्रं नराकारं लिखित्वा सौरिभादितः। नामधिष्ण्यं भवेद्यत्र ज्ञेयं तत्र शुभाशुभम्। मुखैकं स्कन्धयोस्तुर्य्यं षट्पादे तुर्य्यं वामके। हृदि पञ्च त्रयं शीर्षे नेत्रगुह्ये द्विकं द्विकम्। वाम्यास्ये दक्षदोर्लाभः भयोऽङ्घ्रौ वामदोरुजम्। हृदि श्रीर्मस्तके राज्यं नेत्रे सौख्यं रतिर्गुदे। जन्माद्द्वादशे तुर्य्ये यदा विघ्नकरः शनिः। तदा सौख्यं वपुस्थे चेत् हृच्छीर्षे नेत्रदक्षदोः। तृतीयैकादशे षष्ठे यदा सौख्यकरः शनिः। तदा विघ्नं शरीरे चेत् वक्त्राङ्घ्रिगुह्यवामदोः। यस्य पीडाकरः सौरिस्तस्य चक्रमिदं स्फुटम्। लिखित्वा कृष्णवर्णेन तैलमध्ये क्षिपेद्बुधः। निःक्षिप्य भूमिमध्यस्थं कृष्णपुष्पैः प्रपूजयेत्। तुष्टिं याति न सन्देहः पीडां मुक्त्वा शनैश्चरः”।

२८ सेवाचक्रम्—“सेवाचक्रं शीरे सप्त पृष्ठे सप्त तथोदरे। पादयोः सप्त ऋक्षाणि साभिजिन्त्यत्र विन्यसेत्। स्वामिभाद्भृत्यभं गण्यं, भृत्यभात् स्वामिभं तथा। निष्फलं पादपृष्ठस्थे फलदं मस्तकोदरे”।

२९ नरचक्रम्—“नरचक्रं समालिख्य अष्टावयवसंयुतम्। येन विज्ञातमात्रेण क्रियते वातनिर्णयः। मुखैकं मस्तके

विष्णुं धनिष्ठाख्यं सौम्यं रौद्रं पुनर्वसुम्। चित्रभं च तृतीयायां पङ्क्तौ वै धिष्ण्यसप्तकम्। चित्रभं तोयभं मूलं ज्येष्ठां चैत्रविशाखके। स्वातीं पङ्क्त्यां चतुर्थ्यां च ततश्च प्रविलोकयेत्। एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः। द्वारस्थं मघायाश्च द्वारस्था कृत्तिका ततः। अश्विन्यादित्रिकं चैव आर्द्रादिपञ्चकं तथा। रेवती पूर्वभाद्रेन्द्रोः पूर्वाषाढचतुष्टयम्। क्रमाच्च भानुभान्यत्र प्रोक्तानि सर्वसंख्यया। यथाहे चन्द्रभे द्रव्यं शल्यं भवति सूर्यभे। उदयादिगतानाड्यो गु२७घ्नाः षष्ट्याप्तशेषके। दिनेन्दुभुक्तयुक्तोऽसौ भवेत् तत्कालचन्द्रमाः। पट्टैर्भुक्तानि धिष्ण्यानि खखभैर्गुणयेत्ततः। भुक्तपादकलायोज्याः षष्ट्या भागं ततो-हरेत्। लब्धस्य लिप्तिका भागो ग्रहाःस्युः शशिपूर्वकाः। अश्विन्यादीन्दुभुक्तानि यानि षष्टिहतानि च। स्वभुक्तनाडीसंयुक्तं हितं नन्द९घ्नं त्रिधा। दिनेन्दुभुक्तमानादि जायन्ते चेष्टकालिकाः। चन्द्रवत् साधयेत्-सूर्यं लग्नं चेष्टकालिकम्। पश्चात् विलोकयेत् तौ च सङ्कटे चाहिभे स्थितौ। चन्द्रार्कौ च यदाऽर्केन्दू तदास्ति निश्चितं निधिः। भानुस्फुटे-गतौ द्वौ च तदा शल्यं न संशयः। स्वस्थ भे द्वितयं ज्ञेयं नास्ति किञ्चिद्विपर्यये। स्थितं न लभ्यते द्रव्यं चन्द्रे क्रूरग्रहान्विते। पुष्टे चन्द्रे भवेत्पुष्टः क्षीणे चन्द्रेऽल्पको निधिः। ग्रहदृष्टिवशात् सोऽपि वि-ज्ञेयो नवधा बुधैः। नवांशकानुमानेन भूमानं तस्य कल्पयेत्। कालमानेन तत्संख्या धातुमानं निरीक्षयेः। हेमं तारं च ताम्रं च रत्नं कांस्याय-सं त्रपु। चन्द्रे नागं विजानीयाद् भास्करादिग्रहेक्षिते। मिश्रैर्मिश्रं भवेद्द्रव्यं शून्यं दृष्टिविवर्जिते। सर्वग्रहेक्षिते चन्द्रे निर्दिष्टोऽसौ महानिधिः। हेमं तारश्च ताम्रं पाषाणं कणमयायसम्। स्वर्यादिग्रह-ते चन्द्रे द्रव्यमात्रं प्रजायते। भुक्तराश्यंशमा-नेन भूमानं कथितैः करैः। नीचे निम्नः, परे नीचे-स्तस्थोऽसौ महानिधिः। कोष्ठस्थे जङ्गमं द्रव्यं न-वांशकक्रमेण च। कोणद्वयं परित्यज्य शेषा मे-षादयः क्रमात्। मध्यलग्नाधिपो यत्र तत्र द्रव्यं विनिर्दिशेत्। चरलोके परे तत्र भिन्नस्थलञ्च संक्रमे। चन्द्रांशभुक्तिमानेन द्रव्यसंख्याभिधीयते। तस्माद्दशगुणा वृद्धिः पञ्चवर्णे तु वर्णक्रमात्। अधिष्ठितं भवेद् द्रव्यं यत्र चन्द्रो ग्रहान्वितः। तदधिष्ठातृको-ज्ञेयो भास्करादिग्रहक्रमात्। यक्षं गुह्यकं चैव क्षेत्रपालं च मातृकाम्। दीपेशं भीषणं रुद्रं यक्षं नागं विदुः क्रमात्। यक्षे होमः प्रकर्त्तव्यो गुह्यके नागराजो बलिः। क्षेत्रपाले सुरामांसं मातृकायां महाबलिः। दीपेशे दीपिकापूजा भीषणे भीषणार्चनम्। रुद्रे च रुद्रियोजाप्योयक्षे यक्षादिशामयः। नागे नाग ग्रहाःपूज्या गन्धमाल्येन संयुताः। पञ्चोपचारादितत्त्वानि सर्वकाल्येषु पूजयेत्। निवर्त्त्यैवमध्ये च सम्यगन्तो यत्र भूतले। तत्र चक्रं लिखेद्धीमान् द्रव्यशल्यस्य निर्णयम्। एवं कृतविधाने तु अबाध्यो निधिराप्यते। निधिं प्राप्य नरा लोके वन्दनीया न संशयः"।

५६ चन्द्रशृङ्गोन्नतिचक्रम्—"मीनमेषोदये चन्द्रः -उन्नतं दक्षिणोत्तरा। उत्तरोत्तरशृङ्गेषु समत्वं वृषकुम्भयोः। विड्वरं स्यात् समे चन्द्रे दुर्भिक्षं दक्षिणोन्नते। ईतिरोगं भयं शूले सुभिक्षं तूत्तरोन्नते"।

५७ जीवचक्रम्—"शीर्षे राज्यं चतुर्भिर्भवति खलु करे दक्षिणे श्रीश्चतुर्भिः पीनं षड्भिः पदस्थैर्गतिरपि च भवेद्वामहस्ते चतुर्भिः। कण्ठे चैकेन भूतिर्मदन-परिमितैश्चापि प्रीतिलाभः स्यान्नेत्रस्थैस्त्रिभिरपि शयनसुखं वाक्पतेश्चक्रमेतत्"।

५८ लाङ्गलचक्रम्—"लाङ्गलं दण्डकायुक्तं बीजद्वयसम-न्वितम्। दण्डकादि लिखेद्भानि दिनेशाक्रान्तभादितः। दण्डकाङ्कयुक्तानां द्विद्विस्थाने त्रिकं त्रिकम्। फालयोः पञ्चकं सव्यगणना चक्रलाङ्गले। दण्डस्थे च महीं हानिर्युगस्थे स्वामिनो भयम्। '[illegible]बीजद्वयोलस्थे सेसारम्भो दिनर्क्षगे"। "त्रिकं त्रिकं त्रिकं पञ्च त्रिकं पञ्च द्विकं द्विकम्। अशुभानि शुभानि स्युश्चक्रे लाङ्गल-संज्ञके" क्वचिदधिकः पाठः।

५९ बीजोप्तिचक्रम्—"सूर्यभादुरगं स्थाप्यं त्रिनाडेत्र्यान्तरं क्रमात्। मुखे त्रीणि गले त्रीणि भानि द्वादश चोदरे। पुच्छे तुर्यं बहिः पञ्च दिनभात् फलं वदेत्। वदने शुष्कतां विद्याद्गलेऽङ्गारकज्जला। उदरे धान्य-वृद्धिश्च पुच्छे धान्यक्षयो भवेत्। ईतिरोगभयं बाह्ये चक्रे बीजोप्तिसम्भवे"।

६० हलचक्रम्—"हलचक्रं हलाकारं सर्वावयवसंयुतम्। लिखित्वा विन्यसेद्भानि हलनामर्क्षपूर्वकम्। हलाधि-कर्णयोर्मेषु महाफले त्रिकं त्रिकम्। त्रीणि मुखे त्रिकं

ष्वाद्राम्बवर्ज्जिताः। ग्रहरेखाप्रदाश्चैव मित्रमध्यस्थिता ग्रहाः। अर्द्धं छिन्नं फलं दत्ते शोके लिप्तं तथैव च। फलार्द्धं शत्रुगेहस्थो नीचस्थो निष्फलो ग्रहः। एवं रेखाप्रमाणेन वर्षविंशोपका मताः। ज्ञातव्या द्विविधा केन्द्रेण वर्षे वर्षे प्रयत्नतः। एवं वर्षफलं प्रोक्तं चैत्रमासाद्यवासरात्। आषाढ़े कार्त्तिकेऽप्येवं जलं धान्यं विचिन्तयेत्। ननु देशे पुरे ग्रामे फलं भिन्नं प्रदृश्यते। तस्मात् तत्कारणं वाच्यं येन जानन्ति साधकाः। देशादिराशिनाथस्य यो रेखादायको ग्रहः। मित्रोदासीन शत्रुत्वे फलं भिन्नं करोति सः। भिन्नं छिन्नं फलं दत्ते समः साम्यं करोति च। प्रभुः सर्वत्र रोग्रेयः सर्वदा ज्ञानचिन्तकैः। एवं विचार्य कर्त्तव्या काल विंशोपकाबुधैः। तथा पानीयधान्यानां अकाले च विचिन्तयेत्"।

६१ स्थानचक्रम्—"स्थानचक्रं प्रवक्ष्यामि यदुक्तं ब्रह्मयामले। येन विज्ञायते सम्यक् स्थाने स्थाने शुभाशुभम्। स्थानपीड़ाप्रभावेण राज्ञां पीड़ा प्रजायते। तस्मादशोधिते स्थाने स्थातव्यं सर्वदा बुधैः। स्थाननामोद्भवं राशिं ज्ञात्वादौ द्वादशारके। राशिमण्डलकं न्यस्य वाममार्गेण संयुतम्। तत्र नव ग्रहाः स्थाप्याः भास्वच्चन्द्रः सराशिभे। तेषां विलोकनं वीक्ष्य स्थानराशिगतायथा। तृतीयैकादशे पादं द्विपादं व्योमबन्धुगे १०।४। त्रिकोणे ५।८। त्रयंघ्रि मूर्त्यस्ते ।।७। पूर्णं पश्यन्ति खेचराः। मन्दार्क राहुकेत्वाराः पञ्च क्रूरा ग्रहा मताः। शेषं चतुष्टयं सौम्यं मार्त्तण्डश्चापि पञ्चमः। एवं पञ्च ग्रहाः क्रूराः पञ्च सौम्यास्तथैव च। तेषां शुभाशुभाम् दृष्टिं ज्ञात्वा स्थानचक्रं चरेत्। एकैकग्रहजा दृष्टिः पूर्णपादचतुष्टयम्। पञ्चमे चापकैस्तेषां पादानां विंशतिर्भवेत्। तत्र विंशोपकाश्चेया सौम्यक्रूरग्रहोद्भवाः। एवं प्रसाधयेद्दृष्टिं बुध्यं मानं शुभाशुभम्। बह्वी सौम्योनिता शेषा जायते क्रूरशुभाशुभा। ते च विंशोपकास्तस्य स्थानस्य बलनिर्णये। एवं देशे पुरे ग्रामे बलं यत्र शुभाधिकम्। तत्र स्थाने स्थितो राजा दुष्टारिष्टैर्न पीड्यते। स्थानबलप्रभावेण सबलस्य बलोदयः। शत्रुसैन्यं जयं याति यावत्स्थाने शुभे स्थितः। एतानि सर्वचक्राणि ज्ञात्वा युद्धं समारभेत्। जयेदिह न सन्देहः शक्रतुल्योऽपि भूभुजि"। एतेषां लिपिचित्रं स्थाकल्पेऽपि चलामारचक्रं स्वामदेव चतुरशीतिचक्रापूरणम्।

चक्रयन्त्रे ७१ पृ० दर्शितानि "तथाचान्तरचक्रं च मूलचक्रं तथैव च। श्वचक्रं वातचक्रञ्च चक्राङ्गेषु चतुष्टयम्" शकुनाङ्गानि च चत्वारि चतुष्पट्रङ्गज्योतिषमध्ये चान्तरादिचक्राणि यानि तत्र चान्तरचक्रं वृ० सं० ८७अ० उक्तं यथा

"ऐन्द्र्यां दिशि शान्तायां विरुवन् पवंश्चितगणं वक्ति। शकुनिः पूजालाभं मित्ररत्नद्रव्यसम्प्राप्तिम्। तदनन्तरदिशि कनकागमो मैत्रेहाक्षिहृतार्थसिद्धिश्च। आयुधभन पूगफलागमस्तृतीये भवेद्भागे। स्निग्धद्विजस्य सन्दर्शनं चतुर्थे तथाऽऽहिताग्नेश्च। कोषेऽतुलोविभिक्षुप्रदर्शनं कनकलोहाप्तिः। याम्ये त्वाद्ये स्त्रपुत्रदर्शि सिद्धिरभिमतस्याप्तिः। परतः स्त्रीधर्म्माप्तिः सर्षपयवलब्धिरप्युक्ता। कोणाच्चतुर्थखण्डे लब्धिर्द्रव्यस्य पूर्वनष्टस्य। यहा तहा फलमपि यात्रायां प्राप्नुयाद्वा ता। याम्याविद्धिः प्रथमद्वितीयेन शिखिमहिषकुक्कटाप्तिश्च। याम्याद्वितीयभागे चारणसङ्गः शुभं प्रीतिः। ऊर्द्ध्वं सिद्धिः कैवर्त्तसङ्गमो मीनतित्तिराद्याप्तिः। प्रव्रजितदर्शनं तत्परे च पक्वान्नफललब्धिः। नैर्ऋत्यां स्त्रीलाभस्तुरगाख्यकारदूतवेश्याप्तिः। परतोऽस्य चर्मतन्त्रिलिंदर्शनं चर्मगयलब्धिः। वानरभिक्षुश्रवणावलोकनं नैर्ऋतीतृतीयांशे। फलकुसुमदन्तघटितागमश्च कोणाच्चतुर्थांशे। वारुण्यामर्णवजातरत्नवैदूर्यमणिमयप्राप्तिः। परतोऽतः शवरव्याधचौरसङ्गः पिशितलब्धिः। परतोऽपि दर्शनं वातरोगिणां चन्दनागुरुप्राप्तिः। आयुधपुस्तकलाभस्तद्विसमागमश्चोर्ध्वम्। वायव्ये फेनकचामरौर्णिकाप्तिः समेति कायस्थः। अपणयलाभोऽप्यथितं वैतालिकडिण्डिभाण्डानाम्। वायव्याद्यतृतीये मित्रेण समागमो धनप्राप्तिः। वस्त्राश्वाप्तिरतः परमिष्टसुहृत्सम्प्रयोगश्च। दधितण्डुलाजानां लब्धिरदृगदर्शनं च विप्रस्य। स्वर्णांशाप्तिरनन्तरमुपगच्छति सार्थवाहश्च। वेश्यावटुदासजनागमः परे शुष्कपुष्पफललब्धिः। अतः परं चित्रकरस्य दर्शनं वस्त्रसम्प्राप्तिः। ऐशान्यां देवलकोपसङ्गमो धान्यरत्नपशुलब्धिः। प्राक् प्रथमे वस्त्राप्तिः समागमश्चापि भक्तया। रजकेन समायोगो जलजद्रव्यागमश्च परतोऽतः। हस्त्युपजीविसमाजयायाद्वनहस्तिलब्धिश्च। द्वात्रिंशत् प्रविभक्तं दिक्चक्रं वास्तुवच्चनेऽप्युक्तम्। अरनाभिस्थैरन्तः फलानि नवधा विकल्पयानि। नाभिस्थे बन्धुसुहृत्समागमस्तुष्टिरुत्तमा भवति। प्राच्यत

षड्जस्यागमनस्तरे नृपतिसंयोगः। आग्नेये कौलिकतक्षपारिकर्मावरस्रुतसंयोगः। लब्धिश्च तत्कृतानां द्रव्याणामवलब्धिर्वा। नेमीभागं बुद्धा नाभीभागं च दक्षिणे योऽरः। धार्मिकजनसंयोगस्तत्र भवेद्धर्मलाभश्च। उल्लाक्रीडककापालिकागमो नैर्ऋते समुद्दिष्टः। वृषभस्य चात्र लब्धिर्माषकुलत्थाद्यशनं च। अपरस्यां दिशि योऽरस्तत्रासक्तिः कृषीवलैर्भवति। सामुद्रद्रव्यमुक्ताफलकाचकलमद्यलब्धिश्च। भारवहतक्षभिक्षुकसन्दर्शनमपि च वायुदिक्संस्थे। तिलककुसुमस्य लब्धिः सनागपुन्नागकुसुमस्य। कौवेर्यां दिशि शकुनः शान्तायां वित्तलाभमाख्याति। भागवतेन समागममाचष्टे पीतवस्त्रैश्च। ऐशाने व्रतयुक्तवनितासन्दर्शनं समुपयाति। लब्धिश्च परिज्ञेया कृष्णायोवस्त्रघराटानाम्। याम्येऽरांशे पञ्चाद्विषट्त्रिसप्ताष्टमेषु मध्यफला। सौम्येन च द्वितीये शेषेष्वतिशोभना यात्रा। अभ्यन्तरे तु नाभ्यां शुभफलदा भवति षट्सु चारेषु। वायव्यानैर्ऋतयोरुभयोः क्लेशावहा यात्रा। शान्तासु दिक्षु फलमिदमुक्तं दीप्तास्ततोऽभिधास्यामि। ऐन्द्र्यां भयं नरेन्द्रात् समागमश्चैव शत्रूणाम्। तदनन्तरदिशि नाशः कनकस्य भयं सुवर्णकाराणाम्। अर्थक्षयस्तृतीये कलहः शस्त्रप्रकोपश्च। अग्निभयं च चतुर्थे भयमाग्नेये च भवति चौरेभ्यः। कोणादपि द्वितीये धनक्षयो नृपसुतविनाशः। प्रमदागर्भविनाशस्तृतीयभागे भवेच्चतुर्थे च। कैरवककाककयोः प्रध्वंसः शस्त्रकोपश्च। अथ याम्ये नृपभयं मारीश्वतदर्शनं च वक्तव्यम्। षष्ठे तु भयं प्रोक्तं गन्धर्वाणां सडोम्बानाम्। धीवरशाकुनिकानां सप्तमभागे भयं भवति दीप्ते। भोजनविघात उक्तो निर्ग्रन्थिभयं च तत्परतः। कलहो नैर्ऋतभागे रक्तस्रावोऽथ शस्त्रकोपश्च। अपराद्ये चर्मकृतं विनश्यति चर्मकारभयम्। तदनन्तरे परिव्राट्श्रमणभयं तत्परे स्नवनभयम्। हस्तिभयं वारुण्यां वतस्काराणां भयं परतः। वायुपते विनाशः परे परे शस्त्रपुत्रवार्त्तानाम्। कोणे पुत्रकनाशः परे विषक्तेन वायुभयम्। परतो वित्तविनाशो मित्रैः सह विग्रहश्च विज्ञेयः। तस्मात्तच्चेऽश्ववधो भयमपि च पुरोधसः प्रोक्तम्। गोहरणशस्त्रघातावुदक्परे सार्थघातधननाशौ। आयत्ते च शुभयं व्रात्यद्विजदासगणिकानाम्। ऐशानस्याद्ये चित्राम्बरचितकनयं प्रोक्तम्। ऐशाने त्वग्निभयं दूषणमप्युत्तमस्त्रीणाम्। प्रोक्तस्चैवाद्ये दुःखोत्पत्तिः स्त्रिया विनाशश्च। भयमूर्ध्वं रजकानां विज्ञेयं चाक्रिकाणां च। हस्त्यारोहभयं स्याद् द्विरदविनाशश्च मण्डलसमाप्तौ। अभ्यन्तरे तु दीप्ते पत्नीमरणं ध्रुवं पूर्वे। शस्त्रानलप्रकोपावाग्नेये वाजिमरणशिल्पिभयम्। याम्ये धर्मविनाशः परेऽन्नत्रस्कन्दघोषवधाः। अपरे तु कर्मिणां भयमथ कोणे चानिले खरोष्ट्रवधः। अत्रैव मनुष्याणां विषूचिकाविषभयं भवति। उदगर्थविप्रपीडा दिशैशान्यां तु चित्तसन्तापः। आसीरगोपपीडा तत्र च नान्या तथात्मवधः"।

२मृगचक्रं वृ०सं० ८२अ० यथा

"सीमागता वन्यमृगा रुवन्तः स्थिता व्रजन्तोऽथ समापतन्तः। सम्प्रत्यतीतैष्यभयानि दीप्ताः कुर्वन्ति शून्यं परितो भ्रमन्तः। ते ग्राम्यसत्त्वैरनुवाश्यमाना भयाय रोधाय भवन्ति वन्याः। द्वाभ्यामपि प्रत्यनुवाशितास्ते वन्द्यग्रहायैव मता भवन्ति। वन्ये सत्त्वे द्वारसंस्थे पुरस्य रोधो वाच्यः सम्प्रविष्टे विनाशः। सूते मृत्युः, स्याद्भयं संस्थिते च गेहं याते बन्धनं सम्प्रदिष्टम्।"

३ श्वचक्रं वृ० सं० ८९ अ०

"नरतुरगकरिकुम्भपर्याणसक्षीरवृक्षेष्टकासञ्चयच्छत्रशय्यासनोलूखलानि ध्वजं चामरं शाद्वलं पुष्पितं वा प्रदेशं यदा श्वावमूत्र्याग्रतो याति यातुस्तदा कार्यसिद्धिर्भवेदार्द्रके गोमये मिष्टभोज्यागमः शुष्कसम्मूत्रणे गौडिकामोदकाप्तिरेवाथ वा। अथ विषतरुकण्टकीकाष्ठपाषाणशुष्कद्रुमास्थिश्मशानानि मूत्राथ हत्वाथवा यायिनोऽग्रेसरोऽनिष्टमाख्याति शय्याकुलालादिभाण्डान्यभुक्तान्यभिन्नानि वा मूत्रयन् कन्यकादोषकृत् भुज्यमानानि चेद्दुष्टतां तद्गृहिण्यास्तथा स्यादुपानत्फलं गोस्तु सम्मूत्रणे वर्णजः सङ्करः। गमनमुखमुपानहं सम्प्रगृह्योपतिष्ठेद्यदा स्यात्तदा सिद्धये मांसपूर्णाननेऽर्थाप्तिरार्द्रेण चास्थ्ना शुभं साग्निनालातेन शुष्केण चास्थ्ना प्रगृहीतेन मृत्युः प्रशान्तोल्मुकेनाभिघातोऽथ पुंसः शिरोहस्तपादादिवक्त्रे भुवो ह्यागमो वस्त्रचीरादिभिर्व्यापदः केचिदाहुः सवस्त्रे शुभम्। प्रविशति तु गृहं मनुष्यास्थिवक्त्रे प्रधानस्य तस्मिन् वधः शृङ्खलाशीर्णवल्लीवरत्रादि वा बन्धनं चोपगृह्योपतिष्ठेद्यदा स्यात्तदा बन्धनं लेढि पादौ विधुन्वन् स्वकर्णावुपर्याक्रमंश्चापि विज्ञाय यातुर्विरोधे विरोधस्तथा स्यात्स्वकण्डूयने स्यात् स्वपंश्चोर्ध्वपादः सदा दो-

चयम् चक्रा० फञ्। चाक्रायण चक्रगोत्रापत्ये पुंस्त्री "उपसिंह चाक्रायणः" छा० उ०। कुण्डलकलितनगण-मिह सुखभं गन्धकुसुमशरविरचितवलयम्। चक्रसुरग-पतिवरपरिगणितं षोडशकलमतिसुललितभणितम्" इत्युक्तलक्षणे २१ छन्दोभेदे चक्राकारे २२ दद्रुरोगे चक्रमर्दः। २३मनस्तत्त्वे चक्रगदाधरशब्दे उदा०। गिरिनद्या० ततः परं नदीनितम्बशब्दस्यनस्य वा णत्वम्।

चक्रकारक न० चक्रं चक्राकाररेखां करोति कृ-ण्वुल् ६त०। १नखे शब्दार्थचि०। तस्य नारीकुचयोः चक्राकाररेखाकरणात् तथात्वम् २व्याघ्रनखाख्ये गन्धद्रव्ये अमरः। [(चाकुलिया) शब्दच०।

चक्रकुल्या स्त्री चक्रस्य तदाकारस्य कुल्येव। १चित्रपर्ण्याम्

चक्रगज पु० चक्रे चक्राकारे दद्रुरोगे गजइव मर्दकत्वात्। चक्रमर्दे वृक्षे (दादमर्दनवृक्षे) राजनि०।

चक्रगण्डु पु० चक्रमिव गण्डुः। (गालवालिस)ख्याते उप-धानभेदे हेमच०।

चक्रगदाधर पु० "मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम्। धारयन् लोकरक्षार्थं मुक्तचक्रगदाधरः" विष्णुसं० भाष्यधृतवाक्योक्ते परमेश्वरे

चक्रगुच्छ पु० चक्रमिव गुच्छोऽस्य। अशोकवृक्षे शब्दच०।

चक्रचर त्रि० चक्रेण संघशश्चरति चर-ट। संघीभूय चारिणि गजविहगादौ। "तथा गावाः सुपर्णाश्च वि-हायश्चक्रचरास्तथा" भा० व० ८२१४ श्लो०।

चक्रचारिन् पु० चक्रेण चरति णिनि। रथे। "विधिरेकक-चक्रचारिणं किमु निर्मित्सति मान्मथं रथम्" नैष०।

चक्रजीवक पु० चक्रेण कुम्भसाधनचक्रेण जीवति जीव-ण्वुल् ६त०। कुम्भकारे हेमच०।

चक्रतीर्थ न० चक्रेण सुदर्शनेन खातेन कृतं तीर्थम्। प्रभास-क्षेत्रस्थे वैष्णवे तीर्थभेदे तत्कथा स्क० प्रभा० "तस्य सीमां प्रवक्ष्यामि विष्णुक्षेत्रस्य भामिनि !। पूर्वे-यमेश्वरं यावत् श्रीसोमेशस्तु पश्चिमे। उत्तरे तु विशा-लाक्षी दक्षिणे सरितां पतिः" इत्युपक्रमे "चक्रतीर्थे नरः स्नात्वा उपवासी जितेन्द्रियः। द्वादश्यां कार्त्तिके चापि दद्यात् विप्रेषु काञ्चनम्। विष्णुं संपूज्य विधिना मुच्यते सर्वपातकैः देव्युवाच चक्रतीर्थं कथं नाम त्वया प्रोक्तं वृषध्वज !। कुत्र तिष्ठति तत्तीर्थं किंप्रभावं वदस्व मे। ईश्वर उवाच। पुरा देवासुरे युद्धे हत्वा दैत्यान् जनार्दनः। चक्रं प्रक्षालयामास तत्र वै रक्तदिग्धकम्। अष्ट कोटीस्तु तीर्थानि तत्रानीय स्वयं हरिः। तीर्थं प्रकल्पयामास शुचि कृत्वा सुदर्शने। तीर्थस्य चक्रे नामापि चक्रतीर्थमिति स्मृतम्। षष्टायुतानि तीर्था-नामष्टौ कोट्यस्तथैव च। तत्र सन्ति महादेवि। चक्रतीर्थे न संशयः। यस्तत् कुरुते स्नानमेकचित्तो नरोत्तमः। सर्वतीर्थाभिषेकस्य स प्राप्नोत्यखिलं फलम्। तीर्था-नामष्टकोट्यस्तु निवसन्ति वरानने !। एकादश्यां विशेषेण चन्द्रसूर्यग्रहे तथा। तत्र स्नात्वा महादेवि ! यज्ञ-कोटिफलं लभेत्। तस्य कल्पेषु नामानि शृणु ते वच्म्यानुपूर्व्यशः। कोटितीर्थं पूर्वकल्पे श्रीनिधानं द्विती-यके। तृतीये शतधारं च चक्रतीर्थं चतुर्थके। एवं ते कल्पनामानि अतीतान्यखिलानि ते। कथितान्येवमन्यानि ज्ञेयानि विबुधैः क्रमात्। तत्र यद्दीयते दानं तस्य संख्या न विद्यते। चक्रक्षेत्रप्रमाणञ्च विष्णुचेत्रं प्रकी-र्त्तितम्। ब्रह्महत्यापहारीय तस्यमेतत्तथोदितम्। मासोपवासी तत्क्षेत्रमग्निहोत्री पतिव्रता। स्वाध्यायी यज्ञयाजी च तपश्चान्द्रायणादिकम्। तिलोदकं च पितृणां श्राद्धञ्च विधिपूर्वकम्। एकरात्रं त्रिरात्रं वा कृच्छ्रसान्तपनं तथा। मासोपवासी तत्रैव अन्यदा पु-ण्यकर्म्म तत्। दैत्यारिक्षेत्रमासाद्य यत्किञ्चित् कुरुते नरः। अन्यक्षेत्रात् कोटिगुणं पुण्यं भूयात्र संशयः। सुदर्शने वरे तीर्थे गोदानं तत्र दापयेत्। सम्यक्स्नात्वा-फलप्रेप्सुः सर्वपापविशुद्धये। चाण्डालः श्वपचोवापि तिर्यग्योनिगतस्तथा। तस्मिन् तीर्थे मृतः सम्यक् प्रा-प्नुतं लोकमाप्नुयात्। इति संक्षेपतः प्रोक्तं चक्रतीर्थ-समुद्भवम्। माहात्म्यं सर्वपापघ्नं सर्वकामफलप्रदम्"।

चक्रतैल न० चक्रस्य तत्फलस्य तैलम्। चक्रमर्दफल-जाते तैले। "चक्रतैलेन चाभ्यक्ता तज्जचूर्णेन घर्षयेत्"। "कृत्वा क्षण्णेच नेत्रेच चक्रतैलेन तर्पयेत्" सुश्रुतः।

चक्रदंष्ट्र पुंस्त्री चक्रमिव दंष्ट्रास्य। शूकरे राजनि०।

चक्रदत्त न० चक्रपाणिना निर्म्मिते वैद्यकशास्त्रभेदे।

चक्रदन्ती पु० चक्रमिव फलदपदन्तोऽस्याः। दन्तीवृक्षे राजनि०।

चक्रदन्तीबीज न० ६त०। जयपालबीजे राजनि०।

चक्रदेव पु० यादवे नृपभेदे। "अष्टादश सहस्राणि भ्रातृणां सन्ति नः कुले। चारुकस्य शतं पुत्रा एकैकस्तिदशो-पमः। चारुदेष्णः सह भ्राता चक्रदेवश्च सात्यकिः। चक्रश्च रौहिणेयश्च" भा० स० १४अ०। कृष्णोक्तिः।

**चक्रद्वार** पु० चक्रमिव द्वारमत्र । पर्व्वतभेदे । "द्रोणस्य शत शृङ्गस्य चक्रद्वारस्य पर्वतः" भा० शा० १२२अ० ।

**चक्रधनुस्** पु० सूर्य्याज्जाते कपिलाख्ये ऋषिभेदे । "अत चक्रधनुर्नाम सूर्य्याज्जातो महानृषिः । विदुर्यं कपिलं देवं येनार्त्ताः सगरात्मजाः" भा० उ० १०८अ० ।

**चक्रधर** पु० चक्रं मनसाख्यं सुदर्शनाख्यमस्त्रं वा धरति–धृ–अच् । १चक्रधारिणि विष्णौ २ग्रामयाजिनि च मेदि० । "प्रचक्रमे चक्रधरप्रभावः" रघुः । ३चक्रास्त्रधारकमात्रे नृपादौ "यजन्ते क्रतुभिर्देवास्तथा चक्रधरान्नृपाः" भा० व० ८५अ० ।

**चक्रधर्म्मन्** पु० विद्याधरभेदे । "विद्याधराधिपश्चैव चक्रधर्म्मा महातपाः । उपास्ते तत्र सततं धनानामीश्वरं प्रभुम्" भा० स० १० अ० ।

**चक्रधारण** न० चक्रं धार्य्यतेऽनेन धारि–करणे ल्युट् । रथावयवभेदे चक्रनाभौ शब्दार्थ० ।

**चक्रधारा** स्त्री ६त० । चक्रप्रान्ते शब्दार्थ० ।

**चक्रनख** पु० चक्रमिव नखोऽस्यस्य अच् । व्याघ्रनखे गन्धद्रव्यभेदे राजनि० ।

**चक्रन(णा)दी** स्त्री चक्रप्रधाना विष्णुचक्राचिह्नं यस्याम् नदी गिरिनद्या० वा णत्वम् । गण्डकीनद्याम् । "यत्रा-श्रमपदान्युभयतो नाभिदृषच्चक्रैश्चक्र(णा)नदी नाम सरित्प्रवरा सर्वतःपवित्रीकरोति" भाग०५।७।११। "चक्रनदी गण्डकी" श्रीधरः ।

**चक्रनाभि** पु० ६त० । चक्रस्य नाभौ । "यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम् । नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः । नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता । सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः" सुश्रुतः ।

**चक्रनामन्** पु० चक्रात् नक्षिकाचक्रात् नाम यस्य । १माक्षिक धातौ हेमच० । तस्य नक्षिकापटलजातत्वात् तथात्वम् २चक्रनामनामके चक्रवाके च ।

**चक्रनायक** पु० चक्रं तदाकारं नयति नी–ण्वुल् ६त० । व्याघ्रनखे गन्धद्रव्यभेदे राजनि० ।

**चक्रपञ्चाट** पु० चक्रः चक्राकारो दद्रुरोगः पद्ममिव तत्राटति प्रभवति अच् ७त० । चक्रमर्द्दके दद्रुघ्ने शब्दर० ।

**चक्रपद** न० "चक्रपदमिह भनगणगुरुभिः" वृ०र०टी० उक्ते त्रयोदशाक्षरपादे छन्दोभेदे । [६त०। आरग्वधे वैद्यकम् ।

**चक्रपरिव्याध** पु० चक्रं दद्रुरोगं परिविध्यति परि+व्यध–ण

**चक्रपर्णी** स्त्री चक्रमिव पर्णमस्याः ङीप् । पृश्निपर्ण्याम् शब्दच०

**चक्रपाणि** पु० चक्रं पाणावस्य प्रहरणार्थत्वात् सप्तम्याः परनि० व्य० सङ्कु० । विष्णौ । "निपातयिताम् समरे चक्रपाणिरिवासुरान्" भा० भी० ४८अ० । "प्रायेण निष्क्रामति चक्रपाणौ" माघः ।

**चक्रपाणिदत्त** पु० चक्रदत्ताख्यवैद्यकग्रन्थकारके विद्वद्भेदे ।

**चक्रपाद** पु० चक्रं पाद इव यस्य । रथे अजयपालः ।

**चक्रपाल** पु० चक्रं पालयति पालि+अण् । सेनापति चक्ररक्षके योधभेदे । चक्ररक्षशब्दे दृश्यम् ।

**चक्रपुष्करिणी** चक्रेण खननात् विष्णुना कृता पुष्करिणी । काशीस्थे मणिकर्णिकाख्ये पुष्करिणीभेदरूपे तीर्थे तत्कथा काशीख० २६अ० यथा

"खनित्वा तत्र चक्रेण रम्यां पुष्करिणीं हरिः । निजाङ्गस्वेदसन्दोहसलिलैस्तामपूरयत् । समाः सहस्रं पञ्चाशत् तपश्चचार सः । चक्रपुष्करिणीतीर्थे तत्र स्थाणुसमाकृतिः" इत्युपक्रमे "त्वदीयचरणाम्भोजमकरन्दमधूत्सुकः । मत्तोऽभ्रमरो भ्रान्तिं विहायास्त्वासु निश्चलः । त्वदीयस्यास्य तपसो महोपचयदर्शनात् । यन्मया कोन्नितो मौलिरद्विमवणभूषणः । तदान्दोलनतः कर्णात् पपात मणिकर्णिका । मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका । चक्रपुष्करिणीतीर्थं पुरा ख्यातमिदं शुभम् । त्वया चक्रेण खननात् शङ्खचक्रगदाधर ! । मम कर्णात् पपातेयं यदा च मणिकर्णिका । ततः प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका" । "अस्मिंस्तीर्थवरे शम्भो ! मणिश्रवणभूषणे । सन्ध्यां स्नानं जपं होमं वेदाध्ययनमुत्तमम् । तर्पणं पिण्डदानञ्च देवतानाञ्च पूजनम् । गोभूतिलहिरण्याश्व दीपान्नाम्बरभूषणम् । कन्यादानं प्रयत्नेन सप्ततन्तूननेकशः । व्रतोत्सर्गं वृषोत्सर्गं लिङ्गादिस्थापनं तथा । करोति यो महाप्राज्ञो ज्ञात्वायुः चञ्चलतरम् । विपत्तिं विपुलाञ्चापि सम्पत्तिमतिभङ्गुराम् । अक्षया मुक्तिरेकाऽस्तु विपाकस्तस्य कर्म्मणः । अन्यच्चापि शुभं कर्म्म यद्दत्तं श्रद्धया कृतम् । विनात्मघातमीशान ! त्यक्त्वा मत्स्योपदेशनम् । नैःश्रेयस्याः श्रियो हेतुस्तदस्तु जगदीश्वर ! । नानुशोचति नाख्याति कृत्वा कालान्तरेऽपि यत् । तदिहाक्षयमेवास्तु तस्येश ! त्व दनुग्रहात् । तव प्रसादात्तस्येश ! सर्वमक्षयमस्तु तत् । यदस्ति यद्भविष्यच्च यद्भूतञ्च सदाशिव ! । तस्मादेतत्र सर्व्वस्मात् क्षेत्रमस्तु शुभोदयम् यथा सदाशिव !

त्वत्तो न किञ्चिदधिकं शिव ! । तथाऽऽनन्दवनादस्मात् किञ्चनास्त्यधिकं क्वचित् । विना सांख्येन योगेन विना स्वात्मावलोकनम् । विना व्रततपोदानैः श्रेयोऽस्तु प्राणिनामिह” । [ अस्त्रभेदे त्रिका० ।

**चक्रफल** न० चक्रमिव फलमग्रं यस्य । चक्राकाराग्रयुक्ते

**चक्रबन्धु** पु० ६त० । सूर्ये हेमच० । चक्रबान्धवादयोऽप्यत्र ।

**चक्रभृत्** पु० चक्रं बिभर्त्ति भृ–क्विप् ६त० । १सुदर्शनधरे विष्णौ २चक्रास्त्रधारिणि च

**चक्रभेदिनी** स्त्री चक्रौ चक्रवाकौ भिनत्ति वियोजयति भिद–णिनि ङीप् । रात्रौ त्रिका० रात्रौ हि तयोर्वियोगात्तथात्वम् ।

**चक्रभोग** पु० चक्रस्य राशिचक्रस्य भोगः । “यत्स्थानमारभ्य चलितो ग्रहः पुनस्तत्स्थानमायाति स चक्रभोगः परिवर्त्त संज्ञः” इति सू०सि०टी०रङ्गनाथोक्ते ग्रहाणां राशिचक्रभोगे ‘तेषान्तु परिवर्त्तेन पौष्णान्ते भगणः स्मृतः” इति सू० सि० टीकायां दृश्यम् ।

**चक्रभ्रम** पु० चक्रमिव भ्रमति भ्रम–अच् । कुन्दाख्ये शिल्पिनां यन्त्रभेदे शब्दार्थचि० । इन् चक्रभ्रमिरप्यत्र । भावे इन् । चक्रभ्रमणे चक्रवाकभ्रान्तौ च “किमु चक्रभ्रमिकारिता गुणः” नैष० ।

**चक्रमण्डलिन्** पुंस्त्री० चक्रमिव मण्डलोऽस्त्यस्य इनि । अजगरसर्पे हेम० स्त्रियां ङीप् । [ भा०मौ०४अ० ।

**चक्रमन्द** पु० नागभेदे । ‘तथा नागौ चक्रमन्दातिषण्डौ”

**चक्रमर्द्द** पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद–अण् उप० स० (दादमर्दन) क्षुपभेदे राजनि० । ण्वुल् । चक्रमर्दकोऽप्यत्र अमरः । “चक्रमर्द्दोलघुः स्वादूरूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुक्रिमीन् हरेत् । हन्त्युष्णं तत्फलं कुष्ठकण्डूदद्रुविषानिलान् । गुल्मकासक्रिमिश्वासनाशनं कटुकं स्मृतम्” भावप्र० ।

**चक्रमुख** पुंस्त्री चक्रमिव वृत्तं मुखमस्य । शूकरे हारा० स्त्रियां जातित्वात् ङीष् ।

**चक्रमुद्रा** स्त्री “हस्तौ तु संमुखौ कृत्वा संलग्नौ सुप्रसारितौ । कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका” तन्त्रसारोक्ते देवपूजनाङ्गमुद्राभेदे ।

**चक्रमुषल** पु० चक्रं मुषलञ्च साधनतया अत्रास्ति अच् । चक्रमुषलनिष्पाद्ये युद्धभेदे “तत् चक्रं हलञ्चैव गदा कौमोदकीन्तथा । सौनन्दं मुषलञ्चैव वैष्णवान्यायुधानि च । दर्शयिष्यन्ति संग्रामे पास्यन्ति च महीक्षिताम् । रुधिरं कालयुक्तानां वपुर्भिः कालसन्निभैः । स चक्रमुषलो नाम संग्रामः कृष्ण ! विश्रुतः । दैवतैरिह निर्द्दिष्टः कालः स्यादेष संज्ञितः” हरि०९६अ० । चक्रेण निर्वृत्तम् अण् । चाक्र तन्निर्वृत्ते युद्धे “चाक्रं मौषलमित्येवं संग्रामं रणवित्तमाः । कथयिष्यन्ति लोकेऽस्मिन् ये धरिष्यन्ति पार्थिवाः” हरि० १०अ० ।

**चक्रयान** न० चक्रयुक्तं यानम् । चक्रयुक्ते याने रथादौ । “असौ पुष्य(ष्प)रथश्चक्रयाणं न समराय यत्” अमरः ।

**चक्ररक्ष** पु० चक्रं रक्षति अण् उप० स० । युद्धे सेनापति चक्ररक्षके योधभेदे । “माद्रेयौ चक्ररक्षौ तु फाल्गुनस्य तदाऽकरोत्” भा०आ०१३८अ० । “युधामन्युश्च चक्ररक्षौ ते भवितारौ महाबलौ” भा० वि० ३२अ० । “चक्ररक्षश्च शूरोवै मदिराश्वोऽतिविश्रुतः” ३२अ० । ण्वुल् चक्ररक्षकोऽप्यत्र । [ जातित्वात् ङीष् ।

**चक्ररद** पुंस्त्री चक्रमिव वृत्तोरदोऽस्य । शूकरे त्रिका० स्त्रियां

**चक्रलक्षणा** स्त्री चक्रे मण्डलाकारकुण्डे लक्षणं प्रतीकार साधनरूपं चिह्नमस्य । गुडूच्याम् रत्नमा० ।

**चक्रलताम्र** पु० चक्र–तृप्तौ करणे रक् चक्रः तृप्तिसाधनं लताम्रः । इक्षुरसाम्रके राजनि० [कुलाभेदे अमरः ।

**चक्रला** स्त्री चक्र दद्रुरोगं लाति ला–क । उच्चटायाम्

**चक्रलिप्ता** स्त्री ६त० । राशिचक्रस्य कलारूपे भागभेदे कलाश्च २१६०० मिताः । तथाहि द्वादशराश्यात्मकचक्रस्य एकैकराशेस्त्रिंशांशात्मकत्वात् ३६० अंशात्मकं राशिचक्रम् अंशस्य ६० कलामितः तदङ्कस्य षष्ट्या गुणने २१६०० कला भवन्ति इति कलापर्य्यायलिप्तानां तावन्मितत्वम् ।

**चक्रवत्** त्रि० चक्रमस्त्यस्य मतुप् मस्य वः । १चक्रास्त्रयुक्ते स्त्रियां ङीप् । २तैलिके च । “सुनाचक्रध्वजवतां वेशेनैव च जीवताम्” मनुः । “सुनावान् पशुमारणपूर्ब्बक मांसविक्रयजीवी । चक्रवान् तैलाद्यर्थविक्रयजीवी तैलिकः ध्वजवान् मद्यविक्रयजीवी शौण्डिकः” कुल्लूकः । चक्रं तदाकारोऽस्त्यस्य । चक्राकारस्थलाकारयुक्ते ३पर्व्वतभेदे पु० । “तत्रैव चक्रसदृशं चक्रवन्तं महाचलम् । वज्रकूटं विपुलं भगवान् संन्यवेशयत्” हरिवं० २२५अ० ।

**चक्रवर्त्तिन्** पु० चक्रे भूमण्डले, वर्त्तितुं, चक्रं सैन्यचक्रं वा सर्व्वभूमौ वर्त्तयितुं शीलमस्य इत–वृत–णिच्–वा णिनि । १समुद्रपर्य्यन्तक्षितेरधीश्वरे, अमरः २वास्तूकशाके राजनि० । ३जतुकायां शब्दार्थचि० ४जटामांसाम् ४अलक्तके च स्त्री ङीप् राजनि० । ५जनीनाम-

**चक्रव्यूह** पु० चक्राकारः व्यूहः। चक्राकारे सेनासन्नि-वेशभेदे चक्रशब्दे दृश्यम्।

**चक्रशल्या** स्त्री चक्रमिव शल्यमस्य। श्वेतगुञ्जायां राजनि०

**चक्रश्रेणी** स्त्री चक्राणां श्रेणिरत्र ङीष्। अजशृङ्ग्याम् वृक्षभेदे रत्नमाला तस्याःफलानां चक्राकारशृङ्गरूपतया जातत्वा त्तथात्वम्। [२चक्रवाके अमरः।

**चक्रसंज्ञ** न० चक्रस्य संज्ञा संज्ञास्य। १वङ्गे धातुभेदे हेमच०

**चक्रसंवर** पु० चक्रमिन्द्रियचक्रं संवृणोति अच्। बुद्धभेदे त्रिका०।

**चक्रसक्थ** त्रि० चक्रमिव सक्थि यस्य षच्। षचः चित्त्वेन नित्यमन्तोदात्तता "चक्रवक्षाचक्रान्तात्" पा० चक्रान्तप्रति-षेधात् न विभाषयाऽन्तोदात्तता। चक्रतुल्यसक्थियुक्ते।

**चक्रसाह्वय** पुंस्त्री० चक्रेण समाना आह्वा यस्य। चक्रवाके "चकोरान् वानरान् हंसान् सारसान् चक्रसाह्वयान्" भा० आनु० १४अ०। जातित्वेऽपि योपधत्वात् स्त्रियां टाप्।

**चक्रहस्त** पु० चक्रं हस्तेऽस्य। १चक्रपाणौ विष्णौ २चक्रधा-रिमात्रे त्रि०। [कृताङ्क राजनि०।

**चक्रा** स्त्री चक–रक्–टाप्। १नागरमुस्तायां, २कर्कटशृ-

**चक्रांश** पु० चक्रस्य राशिचक्रस्यांशः। राशिचक्रस्य ३६० षट्युत्तरशततयात्मके भागे।

**चक्रा(क्री)ङ्गी** स्त्री चक्राकारेणाङ्कति अङ्कते वा अङ्क–गतौ अकि–गतौ अच् गौरा० ङीष्। हंस्यां शब्दरत्ना०।

**चक्राङ्ग** पु० चक्रमिवाङ्गं चक्रमिवाङ्गं यस्य। १हंसे। स्त्रियां जातित्वात् ङीष्। चक्रमङ्गमस्य। २रथे अमरः। "द-ह्यन्तु चक्राङ्गा वचः काकं पिङ्गलमाः" भा० कर्ण० ४१अ० हंसकाकीये। ३चक्रवाके "कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्" मनुः अभक्ष्यमांसोक्तौ। हंसस्य पृथगुपादानादस्य चक्रवाकार्थता। [लतायां रत्नमाला।

**चक्राङ्गा** स्त्री चक्रमिवाङ्गमत्रस्याः अच्। सुदर्शनायां

**चक्राङ्गी** स्त्री चक्रमिव चक्रं तन्निकरमङ्गं यास्याः ङीष्। १कटुरोहिण्याम् मेदि०। २हंस्यां शब्दर०। ३हि-लमोचिकायां त्रिका०। ४मञ्जिष्ठायां ५वृषपर्ण्यां च राजनि०। ६कर्कटशृङ्ग्यां रत्नमा०।

**चक्राट** पु० चक्रं चक्राकारमटति अट–अण् उप० स०। १विषवैद्ये २धूर्त्ते ३दीनारे परिमाणभेदे च मेदि०।

**चक्राधिवासिन्** पु० चक्रं तन्निकरमधिवासयति अधि+वासि णिनि। तन्निकरसौरभयुक्ते नागरङ्गवृक्षे(नारेङ्गानेबु)त्रिका०।

**चक्रायुध** पु० चक्रमायुधमस्य। १विष्णौ "चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा। शिरश्छिन्नम्" भा०आ०१९२अ०। २चक्रास्त्रधारिमात्रे चक्रप्रहरणादयोऽप्यत्र।

**चक्रावर्त्त** पु० चक्रस्येवावर्त्तः। घूर्णने हेमच०।

**चक्राह्व** पु० चक्रेति आह्वा यस्य। १चक्रमर्दे राजनि०। २चक्रवाके च।

**चक्रि** त्रि० कृ–कि द्वित्वम्। करणशीले "चक्रिं विश्वानि चक्रये" ऋ० १।९।२। विश्वानीत्यत्र किंयोगे षष्ठी निषेधात् कर्मणि द्वितीया। [राजनि०।

**चक्रिका** स्त्री चक्रं तदाकारोऽस्त्यस्याः ठन्। जानुनि

**चक्रिन्** पु० चक्रमस्त्यस्य इनि। १विष्णौ २ग्रामजालिके ३चक्रवाके ४सर्पे पुंस्त्री०। ५कुलाले ६सूचके त्रि० मेदि०। ७अजे पुंस्त्री० ८तैलिके शब्दर०। चक्रं राष्ट्रचक्रं स्वत्वेनास्त्यस्य इनि। ९चक्रवर्त्तिनि हेमच०। १०चक्र-मर्दे तस्य तदाकारपत्रत्वात्। ११तिनिशे १२व्याघ्रनखे पु० १३काके १४गर्दभे च पुंस्त्री० राजनि०। तयोश्चक्रवद्-भ्रमणवत्त्वात्तथात्वम्। १५चक्रयुक्ते त्रि० सर्व्वत्र स्त्रियां ङीप्। १६चक्रयुक्तरथाद्यारूढे त्रि०। "चक्रिणोदश-मीस्थस्य" मनुः। "चक्रिणः चक्रयुक्तरथाद्यारूढस्य" कुल्लू०। "वैश्यायां शूद्रतश्चौराज्जातश्चक्री स उच्यते" उशनसोक्ते १७संकीर्णजातिभेदे पुंस्त्री०। "पदं सहे-न्द्राश्रयचारु चक्रिणः" माघः। विष्णोश्च मनस्तत्त्वा-त्मकचक्रस्य लोकरक्षार्थं सुदर्शनचक्रस्य वा धारणात् तथात्वम्। अतएव "शरीदः कुण्डली चक्री" "शङ्ख-भृन्नन्दकी चक्री" विष्णुस० द्विधा प्रयोगः अवय-वार्थभेदाभ्यामिति बोध्यम्।

**चक्रीवत्** पुंस्त्री० चक्रं तद्वद्भ्रमणमस्त्यस्य मतुप् आसन्दी-वदित्या० पा० नि०। १गर्दभे अमरः। "चक्रीवदृक्षरुक्ष धूम्ररूपो विषयुः" माघः। २राजभेदे पु० सि०कौ०। वैदिकप्रयोगे ३चक्रयुक्तमात्रे च। "सदोहविर्धानानि चक्रीवन्ति" कात्या० श्रौ० २४।२३।१०। सदोहविर्धाना-न्योभाञ्जि चक्रीवन्ति" २४।५।२६। स्त्रियां सर्व्वत्र ङीप्।

**चक्रु** त्रि० कृ–कु द्वित्वम्। कर्त्तरि उज्ज्वलद०।

**चक्रेश्वरी** स्त्री ६त०। १जिनानां विद्याभेदे २राष्ट्रेश्वरे पु०।

**चक्रोपजीविन्** त्रि० चक्रं तैलनिष्पीडनयन्त्रमुपजीवति उप जीव–णिनि। तैलिके।

**चक्ष** कथने त्यागे च चुरा० आत्म०सक०सेट्। चक्षे। अचक्षत् अचक्षत त्यागे तु सक० णिच् चक्षौ चक्षे चक्षते। भाष्यमते चक्षयति चक्षयते। चक्षौ चक्षे।

अनु+पश्चादुक्तौ "परायतीं मातरमन्वचष्ट" ऋ० ४।१८।३।
अभि+आभिमुख्येन दर्शने "कदा चिकित्वो अभिचक्षसे नः" ऋ० ५।३।९।
अव+अधोदर्शने।"सुपर्णोऽवचक्षत क्ष्मां सोमः" ऋ०९।७१।९।
आ+आख्याने। "विचक्षणः प्रस्तुतमाचचक्षे। "स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम्" रघुः। [२।४।४।२।
अनु+आ+अन्वाख्याने "एतमेव तदन्वाचष्टे" शत० ब्रा०
अभि+आ+आभिमुख्येनाख्याने। "अभ्याचष्टानुरागास्रैरक्षोभूतेन चक्षुषा" भाग० १।९।११। "अभ्याचष्ट प्रथकर्म" ८।५।१४। [शत० ब्रा० ३।३।३।४।
उद्+आ+उदाहरणे "तस्मादप्यद्युरेव गोर्नीर्थामुदाचष्टे"
प्रति+आ+प्रत्याख्याने निराकरणे "गुरुपुत्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः" भा० आ०७७अ०।
वि+आ+व्याख्याने विवरणे। "व्याचक्षाणस्य तु मे निदिध्यासस्व" शत० ब्रा० १४।५।४।४।
सम्+आ+सम्यगाख्याने। "तत्सर्वं नः समाचक्ष्व" भाग०१।४।१३। [परिचक्षते" मनुः।
परि+परितः कथने विख्यातौ "वेदप्रदानादाचार्य्यं पितरं
प्र+प्रकर्षेण कथने विख्यातौ। "तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते" मनुः "दहति प्रेतमिति प्रचक्षते" रघुः।
प्रति+प्रत्युत्तरोक्तौ प्रतिरूपोक्तौ च "यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम्। प्रतिचक्षीत मां लोकः" भाग०३।९।३।
वि+विशेषेण कथने विख्यातौ "विश्वं विचक्षते धीराः योगराद्धेन चक्षुषा" भाग० ३।११।१७। विचक्षणः।
सम्+सम्यक्कथने। "मेरोरभ्यन्तरे पार्श्वे पूर्वं संचक्ष्व सञ्जय!" भा० भी०७अ०।

चक्षण न० चक्ष–ल्युट् न ख्यादेशः। १अनुग्रहेण दर्शने "कदृग्भ्याश्च चक्षणम्" ऋ० १।१०५।६। "चक्षणमनुग्रहदर्शनम्" भा०। २कथने च। करणे ल्युट्। ३अवदंशे मद्यपानादिरोचके (चाकना) द्रव्यभेदे हेमच०।

चक्षणि त्रि० चक्ष–अनि। प्रकाशके। "स नो विभावा चक्षणिः" ऋ०६।४।२। [२उपाध्याये उणादिकोषः।

चक्षस् पु० चक्ष–असि न ख्यादेशः। १बृहस्पतौ त्रिका०।

चक्षुःश्रवस् पुंस्त्री० चक्षुषा शृणोति श्रु–असुन्, चक्षुरेव श्रवः कर्णौ यस्य वा। सर्पे अमरः। "यदसदार्कणिफलाढ्यजीवितं दृग्योद्वयं नस्तदवैमि चाफलम्। इति स्म चक्षुःश्रवसां प्रिया नले स्तुवन्ति निन्दन्ति हृदा तदात्मनः" नैष०।

चक्षुर्मल न० ६त०। (पिंचुटि) नेत्रमले शब्दार्थचि०।

चक्षुर्वर्द्धनिका स्त्री शाकद्वीपस्थे नदीभेदे। "महानदी च कौरव्य! तथा मणिजला नदी। चक्षुर्वर्द्धनिका चैव नदी भरतसत्तम!" भा०भी० ११अ०। [रत्नमा०।

चक्षुर्वहन न०चक्षुस्तज्ज्योतिर्वहति वह–ल्यु। १मेषशृङ्गीवृक्षे

चक्षुर्विषय पु० ६त०। १चक्षुर्ग्राह्ये रूपादौ। स च भाषा०उक्तो यथा "उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये। विभागसंयोगपरापरत्वे स्नेहद्रवत्वं परिमाणयुक्तम्। क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम्। गृह्णाति चक्षुः, सम्बन्धादालोकोद्भूतरूपयोः"। २नेत्रप्रचारस्थाने च "गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्" मनुः।

चक्षुर्हन् त्रि० चक्षुषा हन्ति हन–क्विप् ३त०। दृष्टिमात्रेण घातिनि "सर्पस्पर्शसमाः केचित्तथान्ये मकरस्पृशः। विभाव्य घातिनः केचित्तथा चक्षुर्हणोऽपरे" भा०आनु० २५अ०। "त्वां ते चक्षुर्हणं प्राप्य दग्धा घोरेण चक्षुषा" भा०भी० १२२अ०।

चक्षुष्मत् त्रि० प्रशस्तं चक्षुरस्त्यस्य मतुप्। प्रशस्तनेत्रयुक्ते "चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना" रघुः।

चक्षुष्य त्रि० चक्षुषे हितः यत्। १चक्षुर्हिते २प्रियदर्शने जटा०। ३केतकवृक्षे ४पुण्डरीकवृक्षे पु० मेदि० ५शोभाञ्जनवृक्षे पु० राजनि० ६रसाञ्जने हेमच०। ७सौवीराञ्जने ८खर्परीतुत्थे ९प्रपौण्डरीके च न० राजनि०। "शीतेन शिरसः स्नानं चक्षुष्यमिति निर्दिशेत्" सुश्रु०। "चक्षुष्यः सुतो भवति य एवं वेद" छा० उ०। चक्षुषि भवः शरीरावयवत्वात् यत्। १०नेत्रजाते त्रि०। "चक्षुष्यः खलु महतां परैरलङ्घ्यः" माघः। "चक्षुष्यः कणिशः प्रियश्च। "प्रियेऽभिज्ञे तु चक्षुष्य" इति विश्वः" मल्लि०।

चक्षुस् न० चक्ष–धातूनामनेकार्थत्वात् दर्शने करणे उसि। १नेत्रे तच्च चाक्षुषज्ञानसाधनमिन्द्रियभेदः अक्षिशब्दे ४५ पृ० दृश्यम् तस्य तैजसत्वं मुक्ता० समर्थितं यथा "चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादाद्यं परकीयेति घटादेः स्वीयरूपव्यञ्जकत्वात् व्यभिचारवारणाय द्वितीयं परकीयेति अथवा प्रभायादृष्टान्तत्वसम्भवादाद्यं परकीयं न देयम्" चक्षुःसन्निकर्षं तथात्वगादिवत् द्रव्यत्वे व्रतीति वाच्यम्। चक्षुषोऽधिष्ठातृदेवः

सूर्यः। "दिव्यातार्कं प्रचेतोश्रीत्यादि" शा०ति०उक्तेः। २तेजसि च। "सूर्यश्चक्षुषे" ताण्ड्य० ब्रा०। "चक्षुषे तेजसे" भा०।

**चक्षुष्या** स्त्री चक्षुषे हिता यत्। १सुभगायां स्त्रियां २कुलत्थिकायां मेदि०। ३अजशृङ्ग्याम् ४वनकुलत्थिकायाञ्च राजनि०।

**चक्षूराग** पु० चक्षुषोरागः रक्तता। १नेत्रारुणतायां चक्षुषः तदाकर्षकः रागः अनुरागः। २नेत्राकर्षके अनुरागे "चक्षूरागः कोकिलेषु (न परकलत्रेषु)" काद०।

**चक्षूरोग** पु० ६त०। नेत्ररोगे नेत्रावयवविभागः सुश्रुतोक्तः अक्षिशब्दे ८५ पृ०दर्शितः। तत्र निदानादि सुश्रुते उक्तं "उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्ययाच्च। प्रसक्तसंरोदनशोककोपक्लेशाभिघातादतिमैथुनाच्च। शुक्तारनालाम्लकुलत्थमाषनिषेवणाद्वेगविनिग्रहाच्च। स्वेदादथो धूमनिषेवणाच्च छर्देर्विघाताद्वमनातियोगात्। वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः। वाताद्दश तथा१० पित्तात् कफाच्चैव त्रयोदश। रक्तात् षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः। तथा बाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः। हताधिमन्थोऽनिमिषो दृष्टिर्गम्भीरिका च या। यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः। याप्योऽथ तन्मयः काचः साध्याः स्युः सान्यमारुताः। शुष्काक्षिपाकाधीमन्थस्यन्दमारुतपर्ययाः। असाध्यो ह्रस्वजात्यो यो जलस्रावश्च पैत्तिकः। परिम्लायी च नीलश्च याप्यः काचोऽथ तन्मयः। अभिष्यन्दोऽधिमन्थोऽम्लाध्युषितं शुक्तिका च या। दृष्टिः पित्तविदग्धा च पोथक्यो लगणश्च यः। असाध्यः कफजस्रावो याप्यः काचोऽथ तन्मयः। अभिष्यन्दोऽधिमन्थश्च बलासग्रथितश्च यत्। दृष्टिः श्लेष्मविदग्धा च पोथक्यो लगणश्च यः। क्रिमिग्रन्थिः परिक्लिन्नवर्त्म शुक्लार्म पिष्टकाः। श्लेष्मोपनाहः साध्यस्तु कथिताः श्लेष्मजेषु तु। रक्तस्रावोऽजकाजातं शोणितार्शोऽव्रणान्वितम्। शुक्रं न साध्यं काचश्च याप्यस्तज्जः प्रकीर्त्तितः। मन्थस्यन्दौ क्लिष्टवर्त्म हर्षोत्पातौ तथैव च। सिराजालञ्जनाख्या च सिराजालश्च यत् स्मृतम्। पर्वण्यव्रणं शुक्रं शोणितार्म्मार्जुनश्च यः। एते साध्या विकारेषु रक्तजेषु भवन्ति हि। पूयस्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी। असाध्याः सर्वजा याप्यः काचः कोपश्च पक्ष्मणः। वर्त्मावबन्धो यो व्याधिः सिरासु पिडका च या। प्रस्तार्यर्माधिमांसार्मस्नाय्वर्मोत्क्लिष्टिनी च या। पूयालसश्चार्बुदश्च श्याववर्त्मकर्दमवर्त्मनी। तथार्शोवर्त्म शुष्कार्शः शर्करावर्त्म यच्च वै। सशोफश्चाप्यशोफश्च पाको बहलवर्त्म च। अक्लिन्नवर्त्म कुम्भीका विसवर्त्म च सिध्यति। सनिमित्तोऽनिमित्तश्च द्वावसाध्यौ तु बाह्यजौ। षट्सप्ततिविकाराणामेषा संग्रहकीर्त्तना। नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः। शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः। सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु। बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ। भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितैः"।

"अथातः सन्धिगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। पूयालसः१ शोफनाहः२ स्रावाः ३।४।५।६ पर्वणिकालजी ७।८। क्रिमिग्रन्थिश्च९ विज्ञेया रोगाः सन्धिगता नव। पक्वः शोफः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसः१ सः। ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकः कण्डूप्रायो नीरुजस्तूपनाहः२। गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावान् रुक्सहीनान् स्वलिङ्गान्। तान् वै स्रावान् नेत्रनाडीमथैके तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा। पाकः सन्धौ संस्रवेद्यश्च पूयं पूयास्रावो३ नैकरूपः प्रदिष्टः। श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मास्रावो४ नीरुजः स प्रदिष्टः। रक्तास्रावः५ शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्। पीताभासं नीलमुष्णं जलाभं पित्तास्रावं६ संस्रवेत् सन्धिमध्यात्। ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्वणी७ वृत्तशोफा। जाता सन्धौ कृष्णशुक्लेऽलजी८ स्यात्तस्मिन्नेवाख्यापिता पूर्वलिङ्गैः। क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्युः क्रिमयः९ सन्धिजाताः। नानारूपा वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्ति"। "अथातो वर्त्मगतरोगविज्ञानीयमध्यायं व्याख्यास्यामः। पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः। सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः। विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान्। विकारान् जनयन्त्याशु नामतस्तान्निबोधत। उत्सङ्गिन्यथ१ कुम्भीका२ पोथक्यो३ वर्त्मशर्करा४। तथार्शोवर्त्म५ शुष्कार्शः६ तथैवाञ्जननामिका७। बहलवर्त्म८ यच्चापि व्याधिर्वर्त्मावबन्धकः९। क्लिष्टकर्दमवर्त्माख्यौ१० श्याववर्त्म११ तथैव च। प्रक्लिन्न१२ मपरि-

तत्र इत्यविशेषे तद्भेदगुणादिकं भावप्र० उक्तं यथा "श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः । गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः । स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम् । ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते । चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु । श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहहृत् । अथ पीतचन्दनम् (कलम्बक)। "कालीयकन्तु कालीयं पीताभं हरिचन्दनम् । हरिप्रियं कालसारं तथा कालानुसार्य्यपि । कालीयकं रक्तगुणं विशेषाद्व्यङ्गनाशनम्"। अथ रक्तचन्दनम् "रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम् । तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम् । रक्तं शीतं गुरु स्वादु छर्दितृष्णास्रपित्तहृत् । तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम् । तत्र पुंसि "बलवंशयतश्चोऽपि दृश्यते तस्य सर्वचिगुणैव चन्दनः" पञ्च० । क्लीवे "विना मलयमन्यत्र चन्दनं न विवर्द्धते" पञ्चत० । "ततः स्नानक्रियाः सर्व्वे दिव्यचन्दनभूषिताः" भा० व० ९७अ० । "चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्" सा० द० तत्र शृङ्गारोद्दीपकत्वमुक्तम् । २रक्तचन्दने न० मेदि० ३वानरभेदे पु० हेम० । ४शारिवौषधौ स्त्री राजनि० । (कलुयानी) नगरीसमीपस्थे ५नदीभेदे च स्त्री ।

**चन्दनागिरि** पु० चन्दनस्योत्पत्तिस्थानं गिरिः । मलयाचले

**चन्दनगोपी** स्त्री चन्दनमपि गोपायति गुप–अण् । शारिवाभेदे राजनि० ।

**चन्दनधेनु** स्त्री पतिपुत्रवत्या मृताया नार्य्या उद्देशेन पुत्रदातव्यायां चन्दनाङ्कितधेनौ । तद्विधिमाह रत्नाकरे देवलः "जीवद्भर्त्तृ तु या नारी पुत्रिणी म्रियते यदि । चन्दनाङ्कितां धेनुमाचार्य्याय प्रदापयेत् ; पतिपुत्रवती नारी म्रियते यापततयोः । वृषं नचोत् सृजेत् पुत्रः पिता यावच्च जीवति" । तथा कर्म्मोपदेशिन्यां ब्राह्मणसर्वस्वे च हलायुधधृतानि वचनानि स्मृतिः "पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः । चन्दनेनाङ्कितां "धेनुं तस्याःस्वर्गाय कल्पयेत्" । तथा जातूकर्ण्यः धेनुं चन्दनमालिप्य यो दद्यान्मातृहेतवे । यदि पापशतैर्युक्ता तथापि स्वर्गमाप्नुयात्" । तथा वशिष्ठः "न पुत्रस्य वृषोत्सर्गः पिता यावत् तु जीवति । चन्दनेनाङ्कितां धेनुमाचार्य्याय प्रदापयेत्" । "चतुर्हस्तो भवेद्यूपो [illegible] । वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो धेनुमौलिकः । विदध्याद्यजुषस्यैव कर्त्ता यूपः प्रशस्यते । अभावे दारुणेनापि यूपं कुर्य्याद्विधानतः" । "तरुणीरूपसम्पन्ना सुशीला च पयस्विनी । न्यायार्ज्जिता स्वच्छे जाता देया सा श्रोत्रियाय गौः । नदीतीरे वने गोष्ठे देवतायतनेषु च । श्रीक्षेत्रे कुरुक्षेत्रे राजद्वारे चतुष्पथे" । एषु वचनेषु वृषोत्सर्गनिषेधचन्दनधेनूत्सर्गविध्योर्युगपदुपसंहारदर्शनात् वृषोत्सर्गस्थाने प्रधानतया चन्दनधेनूत्सर्गः प्रतीयते अतोऽस्य वृषोत्सर्गकार्य्यकारित्वात् तत्फलहेतुत्वं लभ्यते । "एकोद्दिष्टं न कुर्व्वीत ब्राह्मणायैव सर्व्वदा । अप्यब्देकादशे प्राप्ते पार्व्वणं तु विधीयते" इति श्राद्धविवेकधृतोशनोवचने लिङ्गवचनाभिधानात् एकोद्दिष्टनिषेधपार्व्वणविध्योर्युगपदुपसंहारात् एकोद्दिष्टस्थाने पार्व्वणमिव । यद्वा पतिपुत्रवतीरूपप्रेतविशेषाभिमततर्पणं न चोत्सृजेदिति निषेधचन्दनधेनूत्सर्गविधिभ्यां प्रेततासाधिततासाम्यवृषोत्सर्गविध्यवगतफलभावनाकरणीभूतवृषकर्म्मकत्यागमनूद्य तत्कर्म्मीभूतवृषस्थाने तत्स्थाने धेनुमात्रगुणविधिर्लाघवादवगम्यते । पशुयागे छागान्यविध्यवगतापःप्रणयनीयाधिकरणचमसस्थाने "गोदोहेनापः प्रणयेदिति" विशेषविधिना गोदोहगुणविधिवत् । "नाभाभेऽपि प्रतिनिधीम् । तयोश्च द्वादशीं तत्र त्रयोदश्यान्तु पारणम्" इत्यत्र एकादशीरूपनिमित्तस्थाने द्वादशीमात्रगुणविधिवच्च । अन्यथा धेनूत्सर्गस्य पृथक्कर्म्मत्वे फलभावनातद्करणनियोज्यानां पृथक्कल्पने गौरवं स्यात् । उक्तविधिनिषेधयोरुपसंहारवैयर्थ्यञ्च स्यात् । ततश्च कार्य्यैक्यात् फलैक्यमिति । चन्दनधेनूत्सर्गेऽपि प्रेतत्वविमुक्तिपूर्व्वकस्वर्गप्राप्तिः फलम् । एवं कपिलोक्तमन्त्रस्य पापक्षयगम्यस्वर्गप्रार्थनायामपि तथैव तात्पर्य्यम् । तथा जातूकर्ण्यवचनस्थपापस्वर्गपदयोरपि तथैव तात्पर्य्यं बोध्यम् । अतएवार्थानां विधिशेषाणामेव जैमिन्युक्तप्रामाण्येन प्रकृते सिद्धे विधिशेषत्वे न्यायशास्त्र "पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वेति" कात्यायनवचनस्य पापपदस्य प्रेतत्व एव तात्पर्य्यदर्शनाच्च । अत्र यद्यपि पतिपुत्रवतीत्यत्र पतिपुत्रवत्त्वस्य विशेषणीभूतकर्त्त्रन्वयि मरणानन्वयित्वेन न विशेषणत्वं किन्तूपलक्षणत्वमेव यतश्च काकवन्तो देवदत्तस्य गृहा इतिवत् कादाचित्कतत्सम्बन्धमादायापि पतिपुत्रवतीति प्रयोग उपपद्यते । तथापि

व्यायावगतस्य तत्पुत्रस्य जीवत्पितृकत्वहेतोरेव तादृश निषेधप्राप्तेः पतिपुत्रवत्त्वयोर्निषेधहेतुत्वकल्पना नौचित्यात् तयोरौचित्यनिरूहेतुत्वे तु अदृष्टकल्पनाया अनावश्यकात् सिद्धजीवत्पितृकनिषेधप्रपञ्चतया पतिपुत्रवत्या निषेधोपपत्तौ अधिकनिषेधकल्पने गौरवाच्च। यत्तु जीवत्पितृकवर्षोत्सर्गनिषेधे पतिपुत्रवत्याः पृथगुपसंहारः सोऽपि तस्याः पुत्रानधिकारमात्रप्रयुक्तसिद्धवृषोत्सर्गाभावभागित्वानुवादः पूर्ववाक्यावगतधेनुदानस्य वृषोत्सर्गस्थानीयत्वज्ञापनार्थं एवेति प्रागपि निरूपितम्। ततश्चोक्तवचने तिर्य्यगधिकरणन्यायप्राप्तं जीवत्पितृकस्य वृषोत्सर्गकर्तृत्वाभावमनद्य सपतिकाया वृषोत्सर्गस्थाने चन्दनाङ्कितधेनूत्सर्ग एव विधीयते। एतेन वृषोत्सर्गकर्त्तरि कपिलप्रतिपन्नसपतिकावृषोत्सर्गकर्तृमृतकनिष्ठपुत्रान्यजीवत्पितृकेतरत्वविशेषणं सपतिकाया वृषोत्सर्गस्थाने अथ तत्पुत्रस्यैव चन्दनाङ्कितधेनूत्सर्गमात्रैव लभ्यते। अतोजीवत्पितृकेण काम्यवृषोत्सर्गः पतिते प्रव्रजिते वा पितरि जीवति पितामहादिवृषोत्सर्गश्च न कार्यः। एवं सपतिकाया अपि पुत्रस्य कर्त्तव्यत्वे अशक्त्वे वा पत्या कन्यादिना वा वृषोत्सर्गः कार्य्य एवेति स्थितम्। इदन्तु रत्नाकरकृताद्युपाध्यायचूडामणिविद्याभूषणयुभट्टरमहादेवभट्टाचार्य्यप्रभृतीनामपि सम्मतं तेषां पृथक् पृथक् पद्धतिरपि प्रतिभाति। क्वचिद्देशे स्मार्त्तभट्टाचार्य्यस्यापि एतत्पद्धतिर्दृश्यते। अत एवात्र विशेषादर्शिनामनाचारोऽनाचार एव। अत्र भविष्योक्तप्रकारस्तु वैकल्पिकएव "स्तुतिशास्त्रे विकल्पो हि आकाङ्क्षापूरणे सतीति" जैमिन्युक्तेः। तत्रत्यपूजाहोमाद्यङ्गेषु विशेषमन्त्रोक्तेः। कपिलकल्पेन वृषोत्सर्गधर्म्मातिदेशेन विशेषोक्तनिराशाश्च गव्यवाचस्पतिमतम्। रघुनन्दनमते तु चन्दनधेनोः काम्यत्वमात्रत्वात् वृषोत्सर्गं विहाय केवलचन्दनधेनुदानं न शास्त्रसिद्धं काम्येन नित्यबाधायोगात् अतिसामर्थ्ये उभयकर्त्तव्यतार्थं वृषोत्सर्गनिन्दा चन्दनधेनुदानस्तुतिपरा। रघुनन्दनकृततत्पद्धतिसत्त्वेऽपि तस्य काम्यस्यैव विधानार्थत्वम् इति साम्प्रदायिकाः

चन्दनपुष्प न० चन्दनमिव सुगन्धि पुष्पमस्य। लवङ्गे राजनि०

चन्दनमय त्रि० चन्दनात्मकः मयट्। चन्दनकाष्ठनिर्म्मिते पर्य्यङ्कादौ "यः सर्वः औषधीः पर्य्यङ्को निर्म्मितः स महादाता" इत्युपक्रमे चन्दनमयोरिपुरस्ते धर्म्मयशोदीर्घजीवितमस्तु" ह०व०७२अ० तन्मयपर्य्यङ्कस्य फलकथनम्।

चन्दनसारिवा स्त्री चन्दनइव सुगन्धिः सारिवा। सारिवाभेदे राजनि०। [ हृत०। १वृक्षचन्दनसारे च।

चन्दनसार पु० चन्दनस्येव सारोऽस्य। १वज्रक्षारे राजनि०

चन्दनाचल पु० चन्दनस्याकरोऽचलः। मलयाचले राजनि०। चन्दनाद्रिप्रभृतयोऽप्यत्र।

चन्दनादि पु० "चन्दनञ्च तथोशीरं कर्पूरोऽगस्त्यवालुकौ। एलाकर्पूरगोक्षुराः सप्तैते चन्दनादयः" इति वैद्यकोक्ते पित्तोपशमने द्रव्यसप्तके।

चन्दनाद्य न० "चन्दनाद्यं नवं भाण्डं यष्टिचैत्रेयपद्मकम्। मञ्जिष्ठा सरलं दारु मधुकापूतिकेशरम्। पत्रं तैलं मुरा मांसी कक्कोलं वनिताम्बुदम्। हरिद्रे सारिवे तिक्ता लवङ्गागुरुकुङ्कुमम्। त्वग्रेणुनलिकाटुभिरैस्तैलं मस्तु चतुर्गुणम्। लाक्षारससमं सिद्धं चन्दनं रक्तवर्द्धकम्। अपस्मारज्वरोन्मादकृत्याऽलक्ष्मीविनाशनम्। आयुःपुष्टिकरं चैव वशीकरणमुत्तमम्" चक्रदत्तोक्ते तैलभेदे।

चन्दनीया स्त्री चन्द्यतेऽनया चद० करणे अनीयर्। गोरोचनयाम् राजनि०। [ पु० मेदि०।

चन्दिर पुंस्त्री० चदि–किरच्। १गजे स्त्रियां ङीष्। २चन्द्रे

चन्द्र पु० चदि–आह्लादे णिच्–रक्। सोमस्य जलमये गसकाकारे (चाँद) ख्याते पदार्थे। तस्योत्पत्त्यमानादि इन्दुशब्दे ८५५।५६ पृ०उक्तम्। स च ग्रहभेदः तदधिकाराद्यादि ग्रहयज्ञशब्दे २७५७ पृ० दर्शितम्। अधिकमिन्दुशब्दे ८६० पृष्ठादौ दृश्यम्। तस्योत्पत्तिः सलिलशब्दे ।।।पृ०उक्तम्। तद्वंशादि हरिवंशे भागवते च दृश्यम्। चन्द्रस्य दिग्वलवर्णादिज्ञानाय सर्वग्रहाणां दिग्बलाद्युच्यते तत्र ज्यो० त०

"रक्तश्यामोभास्करोगौरइन्दुर्नात्युच्चाङ्गोरक्तगौरोमहीजः। दूर्वाश्यामोज्ञोगुरुर्गौरगात्रः श्यामः शुक्रोभास्करिः कृष्णदेहः"। "सूर्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः"। "प्राच्यां सौम्यगुरावार्कौ शाक्या भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्बलान्वितौ"। "भौमार्कजीवाः पुरुषाः क्लीबौ सोमजभानुजौ। स्त्रियाख्यौ भार्गवचन्द्रौ द्वौ तत्प्रतिमाश्रयोच्यते"। "चन्द्रार्कजीवाद्यवितौ शुक्रार्की यथाक्रमं

अथ जयमिते तस्मिन् सर्व्वास्ताः सङ्गताः स्त्रियः । पितरं शरणं प्राप्ताः क्षीयते नः पतिः पितः ! । न वयं तेन वर्त्तामो विना सुखनिराकृताः । उवाच दक्षः ताः सर्व्वा शापो मे नान्यथा भवेत् । मासमध्ये पक्षमेकं वर्द्धतां स क्रमेण वै । अयं क्रमेण प्राप्नोतु पक्षमेकं क्षयस्तथा । एवं शापं परस्यैव लेभे तस्य व्यवस्थया । तथैव राजते व्योम्नि जायन्ती दक्षदुहितुः" । ज्योतिषोक्ततत्कारणन्तु दृष्टान्तशब्दे ६११ पृ० दर्शितम् ।
२आह्लादजनकद्रव्यमात्रे त्रिका० । ३कर्पूरे ४स्वर्णे ५जले ६काम्पिल्ले पु० मेदि० । ७द्वीपभेदे शब्दमा० । ८विसर्गवर्णे तन्त्रसंकेतः चदि—दीप्तौ रक् । ९कमनीये त्रि० १०मयूरपिच्छे मेचके हेमच० । ११शोषणकाफले व्याडिः । अन्त्यपदलोपे १२चन्द्रगुप्ते नृपे च । "क्रूरग्रहः सकेतुः चन्द्रमसंपूर्णमण्डलमिदानीम्" मुद्राराक्षस० । "चन्द्रं गता पद्मगुणान्न भुङ्क्ते" कुमा० । "वधूजनचन्द्रमचकार" माघः । "चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्" सा० द० तस्य शृङ्गाररसोद्दीपकत्वमुक्तम् । स्वर्णे "चन्द्ररथः होता मन्द्रः ..." ऋ०१।१४१।१२।१३हीरके । चन्द्राधिष्ठातृके १४मृगशिरोनक्षत्रे १५एकाङ्के च ।

**चन्द्रक** पु० चन्द्र इव कायति कै—क । मयूरपुच्छस्थे चन्द्राकारे १पदार्थे अमरः । २नखे शब्दच० ३मत्स्यभेदे (चाँदा) राजनि० । "चन्द्रकस्त्वभिष्यन्दी मधुरो बलवर्द्धनः" राजनि० तद्गुणाश्चोक्ताः । स्वार्थे क । ४चन्द्रशब्दार्थे जले पतितस्य तैलस्य चन्द्राकारे ५मण्डले च "यां चन्द्रकैर्मदजलस्य महानदीनाम्" माघः । ६सितमरिचे न० राजनि० ७शिग्रुवीजे न० शब्दार्थचि० चन्द्रकोजातोऽस्य तारका० इतच् । चन्द्रकित जातचन्द्रके त्रि० ।

**चन्द्रकला** स्त्री ६त० । चन्द्रमण्डलस्य षोडशभागैकभागे तासां नामानि कलाशब्दे १७८४पृ० दर्शितानि तिथिभेदे स्त्रीणां देहांगभेदे स्थितानां तासां नामभेदाश्च कामशास्त्रे उक्ता यथा

"पूषा यशा सुमनसा रतिः प्राप्तिस्तथा धृतिः । ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी । अङ्गिरा शशिनी चेति छाया सम्पूर्णमण्डली । तुष्टिश्चैवामृता चेति कलाः सोमस्य षोडश" ।

**चन्द्रकवत्** पुंस्त्री चन्द्रकोऽस्त्यस्य मतुप् मस्य वः । मयूरे "मादकवत् सपदि चन्द्रकवान् द्रुमाग्रात्" माघः । स्त्रियां ङीप् ।

**चन्द्रकाटुकि** पु० प्रवरभेदे हेमा० व्र० ख० मूलं दृश्यम् ।

**चन्द्रकान्त** पु० चन्द्रः कान्तोऽभीष्टो यस्य । नानामण्ड्यां ते १मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम् । २कैरवे, ३श्रीखण्डचन्दने च न० । ४रात्रौ, ५ज्योत्स्नायाम्, स्त्री मेदि० ६चन्द्रशोभायां, चन्द्रपत्न्याञ्च स्त्री हेमच० । "चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम्" सुश्रु० । "स्नायं गवाक्षकिरणाकृतचन्द्रकान्तः" "इहा तत्रापि वपुरिदं चन्द्रकान्तानुसारि" अमरुश० । "चन्द्रकान्ताभिधा रौ तौ विरामः स्वराष्टौ" वृ० र० टी० उक्ते पञ्चदशाक्षरपादके ७छन्दोभेदे स्त्री । "दशरथात्मज चन्द्रकेतुराजभार्य्यायां स्त्री चन्द्रकेतुशब्दे दृश्यम् ।

**चन्द्रकान्ति** न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात् । १रजते रूप्ये, ६त० । तदुत्पत्त्यादि भावप्र० उक्तं यथा

"त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः । निरीक्षयामास शिवः क्रोधेन परिपूरितः । अग्निस्तु-न्नयनात्तस्मादेकस्माद्विलोचनात् । ततो रुद्रः समभवद्वैश्वानर इव ज्वलन् । द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तु वामकात् । तस्माद्रजतमुत्पन्नमुक्तकर्म्मसु योजयेत् । कृत्रिमञ्च भवेत्तद्धि वङ्गादिरसयोगतः । रूप्यन्तु रजतं तारश्चन्द्रकान्ति सितप्रभम् । गुरुस्निग्धं मृदु श्वेतं दाहे छेदे घनक्षमम् । वर्णाढ्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम् । कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु । दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् । रूप्यं शीतं कषायाम्लं स्वादु पाकरसं सरम् । वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित् । प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम् । तारं शरीरस्य करोति तापं विड्वन्धं बलं यच्छति शुक्रनाशम् । वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति त्वशुद्धम्" । चन्द्रस्य २शोभौ [ स्त्रियां ङीप् ।

**चन्द्रकिन्** पु० स्त्री चन्द्रकोऽस्त्यस्य इनि । मयूरे त्रिका० ।

**चन्द्रकुण्ड** पुंन० ६त० । कामरूपस्थे चन्द्रकृते कुण्डभेदे चन्द्रकूटशब्दे दृश्यम् ।

**चन्द्रकूट** पु०कामरूपस्थे पर्व्वतभेदे तत्कथा कालिका०८१अ० "पूर्व्वं वायुगिरेः शैलचन्द्रकूट इति स्मृतः । त्रिकोणसंस्थानमद्वा...तदूर्द्ध्वे चन्द्रमण्डलम् । द्वितीयगर्त्तस्था-दन्तु विन्दिन्दुव्यामलङ्कृतम् । चन्द्रपीठमिति प्रोक्तं तेन चन्द्रं प्रपूजयेत् । यद्यापि प्रतिदर्शं तु पर्व्वतं तं निशापतिः । प्रदक्षिणीकरोत्येव दशभीरश्मिभि-

र्युतः। तत्रैव पूर्वभागे तु सोमकुण्डाह्वयं सरः। तत्र स्नात्वा च पीत्वा च नरः कैवल्यमश्नुते। स्वर्गाद्गच्छंश्चन्द्रः कामाख्याशिवने यदा। तदा तद्रश्मिसंघात निःसृतास्तोयराशयः। तैस्तोयैर्व्याप्तवः कुण्डमभ-रोदिन्द्रचन्द्रयोः। मध्ये कुण्डतमस्थाने स्वयं ब्रह्मशिलोपरि। चन्द्ररश्मिसमुद्भूत! चन्द्रकुण्डमहोदधेः। सुधास्रवण! साह्लाद! त्वं चन्द्र! कलुषं हर। इत्यनेन तु मन्त्रेण सुस्नातश्चन्द्रपाथसि। चन्द्रकूटं समारुह्य पूजयेद्यस्तु तं नरः। अविच्छिन्ना सन्ततिस्तु सुकान्ता तस्य जायते। परत्र चन्द्रभवनं भित्त्वा याति परं पदम्। तीरे तु चन्द्रकूटस्य नन्दनो नाम वै गिरिः। तस्मिन् वसति शक्रस्तु कामाख्याशिवने रतः। न्यस्तभावं समासाद्य सर्वदेवेश्वरो हरिः। सेवितं त्रिदशेशानीं सततं वर्त्तते नरः। चन्द्रकूटस्य तु गिरेर्नन्दनस्य तथा गिरेः। प्रतिदर्शं तथा चन्द्रः प्रदक्षिणयति त्रिधा। चन्द्रकुण्डजले स्नात्वा समारुह्य च नन्दनम्। आराध्य शक्रं लोकेशं महाफलमवाप्नुयात्"।

**चन्द्रकूप** पु॰ चन्द्रकृतः कूपः काशीस्थे कूपभेदे। "चन्द्रकूपजले स्नात्वा जपाद्ध नियमं व्रती" काशीख॰ १०अ॰।

**चन्द्रकेतु** पु॰ भारतप्रसिद्धे १कौरवानुचरे सैन्यभेदे "प्रसञ्जयं चन्द्रकेतुं महानेव सुवर्णसम्। सूर्यभासञ्च पञ्चैतान् हत्वा विव्याध सौबलम्" भा॰द्रो॰४८अ॰। २लक्ष्मणात्मजभेदे। तस्य देशभेदे राज्याभिषेककथा रामा॰ उ॰१०२स॰ "इमौ कुमारौ सौमित्रे! तव धर्मविशारदौ। अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ। इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम्। रमणीयो ह्यसंबाधो रमेतां यत्र धन्विनौ। न राज्ञां यत्र पीडा स्यान्नाश्रमाणां विनाशनम्। स देशो दृश्यतां सौम्य नापराध्यामहे यथा। तथोक्तवति रामे तु भरतः प्रत्युवाच ह। अयं कारुपथो देशो रमणीयो निरामयः। निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः। चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम्। तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः। तञ्च कृत्वा वशे देशमङ्गदस्य न्यवेशयत्। अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता। रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा। चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता। चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा। ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा। ययुर्युद्धे दुराधर्षा अभिषेकञ्च चक्रिरे। अभिषिच्य कुमारौ द्वौ प्रस्थाप्य सुसमाहितौ। अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम्। अङ्गदञ्चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह। चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह"। [अमावास्यायाम् मेदि॰।

**चन्द्रक्षय** पु॰ क्षीयतेऽस्मिन् क्षि—आधारे अच्। ६त॰।

**चन्द्रगिरि** पु॰ चन्द्रकूटाख्ये पर्वतभेदे

**चन्द्रगुप्त** पु॰ मौर्य्यवंश्ये राजभेदे तद्राज्याभिषेककथा बृहत्कथायां विस्तरतो दृश्या। "नव नन्दान् द्विज कश्चित् प्रपन्नानुद्धरिष्यति। तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ। स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति" भाग॰ १२।१।७। श्लो॰। "द्विजः कश्चित् चाणक्यः" श्रीधर॰ "ततोऽपि द्विजहस्तेषु दशाधिकशतसमे। भविष्यं नन्दराज्यञ्च चाणक्योयान् हनिष्यतीति" स्कन्दपुराणैकवाक्यत्वात् तत्रार्थता।

**चन्द्रगृह** न॰ ६त॰। कर्कराशौ। चन्द्रमन्दिरादयोऽप्यत्र

**चन्द्रगोल** पु॰ चन्द्रस्य गोलः। गोलाकारे चन्द्रमण्डले

**चन्द्रगोलस्थ** पु॰ ७त॰। चन्द्रगोले तिष्ठन्ति स्था—क। चन्द्रलोकस्थेषु स्वधाभोजिषु पितृलोकेषु त्रिका॰। "विधूर्द्ध्वभागे पितरो वसन्ति" सू॰सि॰ उक्तेस्तेषां तथात्वम्।

**चन्द्रगोलिका** स्त्री चन्द्रगोलः साधनत्वेनास्त्यस्य ठन्। ज्योत्स्नायां हेम॰।

**चन्द्रचञ्चल** पु॰ चन्द्र इव चञ्चलः। (खलिसा) १मत्स्यभेदे जटा॰। (चाँदा) २मत्स्ये स्त्री शब्दर॰।

**चन्द्रचार** पु॰ चन्द्रस्य चारः गतिभेदः। चन्द्रमण्डलस्य राशिविशेषे गतौ तत्फलम् इन्दुशब्दे ८११पृ॰ उक्तम्

**चन्द्रचूड़** पु॰ चन्द्रः चूडायाम् यस्य। चन्द्रशेखरे शिवे।

**चन्द्रज** पु॰ चन्द्राज्जायते जन—ड। बुधे चन्द्रजातादयोऽप्यत्र। इन्दुजशब्दे ८२४पृ॰ दृश्यम्। "रोहिण्यादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा" बृ॰स॰७।१।

**चन्द्रतापन** पु॰ दानवभेदे। "श्वेतशीर्षचन्द्रहन्तृचन्द्रश्च चन्द्रतापनः" हरिवं॰ २४०अ॰ दानवोक्तौ

**चन्द्रदार** पु॰ ब॰ व॰ ६त॰। अश्विन्यादिषु १दक्षकन्यासु चन्द्रपत्नीषु २तन्नामनक्षत्रेषु च।

**चन्द्रदेव** पु॰ भारतप्रसिद्धे सुकदलस्थे नृपभेदे "प्रत्युद्ययुस्त्रिगर्त्तास्तम् (अर्जुनम्) इत्युपक्रमे" "सत्यसेनश्चन्द्रदेवो मित्रदेवः श्रुतञ्जयः" "शत्रुञ्जयस्य विंशत्या चन्द्रदेव तथाष्टभिः" इति च भा॰ क॰ २७अ॰।

**चन्द्रद्युति** पु॰ चन्द्रस्य द्युतिरिव द्युतिरस्य। चन्दने

पश्चर्षेर्महावाक्यात् सर्व्वे ते त्रिदिवौकसः। तदा सीताजलं चन्द्रस्नानयोगाच्च शाश्वतम्। भूत्वा निपतितं तस्मिन् हरह्लोहितसंज्ञके। तद्धितं तदा तोयम् तस्मिन् सरसि निर्म्मलम्। तद्दर्शं सर्वं ब्रह्मा विहरं शाधु मज्जनम्। तद्दर्शनाज्जलात्तस्मादुत्थिता कन्यकोत्तमा। चन्द्रभागेति तन्नाम विधिवक्ते स्वयं ततः। भार्य्यार्थं सागरस्यान्तु अपाह ब्रह्मसम्मते। तत्रैवाश्रितं तोयं गदाग्रेण निशापतिः। निर्भिद्य पश्चिमे पार्श्वं गिरिं तस्तु प्रवाहते। तत्पातजलं भित्त्वा हरह्लोहितसंज्ञकम्। कासारं सागरं यातं चन्द्रभागा नदी तु सा। सागरोऽपि तदा भार्य्यां चन्द्रभागां महानदीम्। तेन तोयप्रवाहेण निनाय भवनं स्वकम्। एवं तस्मिन् समुत्पन्ना चन्द्रभागाह्वया नदी। चन्द्रभागे महातीर्थे गुणैर्महाफला सदा"।

**चन्द्रभूति** न० चन्द्रस्येव भूतिः कान्तिरस्य। रजते राजनि० तस्य चन्द्रतुल्यकान्तिमत्त्वात् तथा त्वम्। [हेमच०।

**चन्द्रमणि** पु० चन्द्रप्रियो मणिः शाक० त०। चन्द्रकान्तमणौ

**चन्द्रमण्डल** न० ६त०। गोलाकारे विम्बे चन्द्रस्य तन्मानादि इन्दुशब्दे ९१२ पृ० द्रष्टव्यम्।

**चन्द्रमल्ली** स्त्री चन्द्र इव मल्ली। अष्टापद्यां शब्दचि०।

**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीते मि—असुन् मादेशः चन्द्रं कर्पूरं माति तुलयति मा—असुन् वा। १चन्द्रे २कर्पूरे च अमरः। "सितासितौ चन्द्रमसोन कश्चित्"ज्यो०त०। "राहुर्व हस्ती भूत्वा चन्द्रमसं गृह्णाति" श्रुतिः। "क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्" मुद्राराः०। तस्येदमित्यण् चान्द्रमस तत्सम्बन्धिनि "तिथिश्चान्द्रमसं दिनम्" सू० सि०। स्त्रियां ङीप्। "पद्माश्रिता चान्द्रमसीमभिख्याम्" कुमा०।

**चन्द्रमा** स्त्री चन्द्रेण मीयते मा—घञर्थे क। नदीभेदे। "कौशिकी त्रिस्रपा गोधं बाहुदामथ चन्द्रमाम्" भा० भी० ९अ० भारतवर्षे नदीकथने।

**चन्द्रमौलि** पु० चन्द्रो मौलावस्य। महादेवे इन्दुमौलिशब्दे ९१६ पृ० दृश्यम्। "चन्द्रमौलिः सदाशिवः" विष्णुधर्म्मो०।

**चन्द्ररसा** स्त्री चन्द्र इवाह्लादको रसोऽस्याः। भारतवर्षस्थे नदीभेदे। "चन्द्ररसा ताम्रपर्णीत्यादि" भाग०५।१८।१८। नद्युक्तौ "तत्र चन्द्ररसा ताम्रपर्ण्यादयः" भाग०४।२।२१।

**चन्द्ररेखा** स्त्री ६त०। चन्द्रस्य मण्डलस्थषकरेखाभेदे २अप्सरोभेदे च"चन्द्ररेखा तिलोत्तमा" काशीख०८अ०। ३वाकुचीलतायाम् राजनि०। ४चन्द्रशेखरस्य जायां चन्द्रशेखरशब्दे दृश्यम्। "नसरयुगलैश्चन्द्ररेखर्त्तु-लोकैः" वृ० र० टी० उक्ते ५छन्दोभेदे च

**चन्द्ररेणु** पु० चन्द्र आह्लादकोरेणुरस्य। काव्यचौरे त्रिका०।

**चन्द्रला** स्त्री कर्णाटदेशख्याते १देवीभेदे २तत्स्थाने च शब्दार्थचि०

**चन्द्रलेखा** स्त्री चन्द्रं तत्कान्तिं लिखति लिख—अण् उप० स०। (हाकुच) ख्याते १लताभेदे राजनि०। ६त०। २चन्द्ररेखायाम्। "स्रौम्रौयौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा" छन्दोम० उक्ते पञ्चदशाक्षरपादके ३छन्दोभेदे च।

**चन्द्रलोहक** चन्द्र इव शुभ्रं लोहकं धातुद्रव्यम्। रजतधातौ राजनि०।

**चन्द्रवंश** पु० ६त०। चन्द्रस्य सन्तानादिपरम्परायां स च हरिवं २५अध्यायादौ उक्तः। तत्र भवः यत्। चन्द्रवंश्य तद्वंशोद्भवे त्रि०। [द्वादशाक्षरपादके छन्दोभेदे।

**चन्द्रवर्त्मन्** न० चन्द्रवर्त्म निदगदन्ति नभसैः वृ० र० उक्ते

**चन्द्रवल्लरी** स्त्री ६त०। सोमलतायाम् भरतः।

**चन्द्रवल्ली** स्त्री चन्द्र इव वल्ली सुधातुल्यमधुस्राविलात्। १माधवीलतायाम् राजनि०। २सोमलतायां च।

**चन्द्रविन्दु** पु० चन्द्रः अर्द्धचन्द्रयुक्तो विन्दुः। अर्द्धचन्द्राकारोपरिगतविन्दुरूपसन्निवेशरूपे वर्णभेदे।

**चन्द्रविहङ्गम** पुंस्त्री चन्द्र इव सर्वाङ्गे शुभ्रः विहङ्गमः। (शङ्खचिल)पक्षिणि खगे त्रिका०। स्त्रियां जातित्वात् ङीष्

**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्तये व्रतम् नियमः। चान्द्रायणसंज्ञके व्रते। चान्द्रायणशब्दे दृश्यम्।

**चन्द्रशाला** स्त्री चन्द्रः शालेवाधारो यस्याः। १ज्योत्स्नायाम् त्रिका०। चन्द्र इव शाला उच्चस्थितत्वात्। २प्रासादोपरिस्थे गृहे (चिलेघर) हारा०। "वियद्गतः पुष्पकचन्द्रशालाः" रघुः। "च्छद्राजः षोडशकस्त्रिचन्द्रशाला भवेद्वलभी" "बहुरुचिरचन्द्रशाला शङ्खिसः पञ्चभौमश्च" वृ० सं० ५६अ०। ततः स्वार्थे क। चन्द्रशालिका १अटथ्यां त्रिका०।

**चन्द्रशिला** स्त्री चन्द्रप्रिया शिला शाक०मध्यपद०स०। चन्द्रकान्ते प्रस्तरभेदे। "प्रह्लादिता चन्द्रशिलेव तूर्णम्" भट्टिः।

**चन्द्रशू(सू)र** पु० चन्द्रे तज्जे शैष्मिके रोगे शू(सू)र इव। चाद्सूर) (हालौ) इति च ख्याते क्षुपभेदे मतुफले न०" भावप्र०। "चन्द्रशू(सू)रं हितं हिकावातश्लेष्मातिसारिणाम्"। तद्गुणा उक्ताः

न्द्रांशुरिवाह्लादकत्वात्” भा० , ३त० । २चन्द्रस्य किरणे च ।

**चन्द्रातप** पु० चन्द्रस्य आतो गमनं यतः पाति पा—क । (चाँदोया) १विताने चन्द्रस्य आतप इव किरणः । २ज्योत्स्नायाम् हेम० । “चन्द्रातपमिव रसतामुपेतम्” काद० । [तनयादयोऽप्यत्र ।

**चन्द्रात्मज** पु० ६त० । बुधे इन्दुजशब्दे दृश्यम् । चन्द्र-

**चन्द्रानन** पु० चन्द्र इवाननमस्य । कार्त्तिकेये “अमोघस्त्वनघो रौद्रः शिवचन्द्राननस्तथा” भा० व० २३१ अ० । कार्त्तिकेयनामोक्तौ । २चन्द्रतुल्यवदने त्रि० ।

**चन्द्रार्द्ध** पु० ६त० । चन्द्रस्य कलारूपे भागे तुल्यभागार्द्धपरत्वे अर्द्धचन्द्र इत्येव स्यात् । “भुजासक्तेन शशुभे गजदन्तेन केशवः । चन्द्रार्द्धविम्बसंसक्तो यथैकशिखरो गिरिः” हरिवं० ८७अ० । “मोहयसम्बुजाक्षीहन्त चन्द्रार्द्धचूडे ! प्रभवति स महाघोरबाणावलंबे !” महानाटकः ।

**चन्द्रालोक** पु० पीयूषवर्षकविकृते अलङ्कारप्रबन्धभेदे । “चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्षः कविः” इति इति तदारम्भपद्यम् ।

**चन्द्रावली** स्त्री वृन्दावनस्थे गोपीभेदे । “राधाचन्द्रावलीमुख्याः प्रोक्ता नित्यं प्रिया व्रजे । कृष्णवन्नित्यसौन्दर्य्यवैदग्ध्यादिगुणाश्रयाः” उज्ज्वलमणिः । [राजनि० ।

**चन्द्रास्पदा** स्त्री चन्द्र आस्पदं यस्याः । कर्कटशृङ्ग्याम् ।

**चन्द्रिका** स्त्री चन्द्रोऽस्त्यस्याः आश्रयत्वेन ठन् चदि—दीप्तौ रक् ततः स्वार्थे क वा । १ज्योत्स्नायाम् अमरः । २स्थूलैलायां(चाँदा)। ३नदीभेदे ४चन्द्रभागानद्याश्च शब्दर०। ५कर्णस्फोटालतायां ६मल्लिकायां० । ७श्वेतकण्टकार्य्यां ८मेथिकायां ९स्थूलैलायां राजनि०।१०चन्द्रहारे भावप्र० । “मेघमुक्तविशदां स चन्द्रिकाम्” रघुः । “नवचन्द्रिकाकुसुमकीर्णतमः” माघः । “न कस्य कुरुते चित्तभ्रमं चन्द्रिका” सा० द० । चन्द्रि चन्द्रयुक्तं कं शिरोऽस्य ११शिवे पु० । “चन्द्रिकानुप्रभावेन कृता दत्तकचन्द्रिका” १२ज्योत्स्नाया इव आह्लादिकायां स्त्रियां स्त्री यति- चन्द्रिका अलङ्कारचन्द्रिका इत्यादि !

**चन्द्रिकाद्राव** पु० चन्द्रिकया द्रावो निस्यन्दो यस्य । चन्द्रकान्तमणौ राजनि० ।

**चन्द्रिकापायिन्** पुंस्त्री चन्द्रिकां पिबति पा—णिनि । चकोरपक्षिणि शब्दार्थचि० स्त्रियां ङीप् ।

**चन्द्रिकाम्बुज** न० चन्द्रिकेव शुभ्रमम्बुजम् । सितोत्पले राजनि० ।

**चन्द्रिन्** त्रि० चन्द्रोऽस्त्यस्य इनि । १चन्द्रयुक्ते “चन्द्रिकानुप्रभावेण कृता दत्तकचन्द्रिका” २सुवर्णयुक्ते च “चन्द्री यजति प्रचेताः” यजु० २०।३७। “चन्द्री” सुवर्णमयः” वेददीपः । [३शालूके च मेदि० ।

**चन्द्रिल** पु० चन्द्र+ला० अस्त्यर्थे इलच् । १शिवे । २नापिते

**चन्द्री** स्त्री चदि—रन् गौरा० ङीष् । वाकुच्याम् राजनि० ।

**चन्द्रेश्वर** पु० चन्द्रसेविते काशीस्थे शिवमूर्त्तिभेदे चन्द्रशब्दे दृश्यम् । चन्द्रेशोऽप्यत्र शिवपर्य्याये न०

**चन्द्रेष्टा** स्त्री चन्द्र इष्टोयस्याः निशायाः वा परनिपातः । उत्पलिन्याम् राजनि० ।

**चन्द्रोदकुण्ड** पु० चन्द्रकृतमुदकं यत्र वा उदादेशः कर्म० । काशीस्थे कुण्डरूपे तीर्थभेदे “तथा चन्द्रोदकुण्डे च स्नानात् यान्ति पूतमाः” काशीख० १४ अ० ।

**चन्द्रोदय** पु० चन्द्रस्योदयः । विधोः प्राथमिकदर्शनयोग्यस्थानेषु १प्रकाशे दिनेषु तिथिखण्डभेदस्थित्या तन्निरूपणं हरिभक्तिविलासे १६ वि० यथा

“प्रतिपद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते । तदुक्तमन्न्याधानविषये शङ्खशातातपेन । “द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिति अपराह्णश्च पञ्चधा विभक्तस्याह्नश्चतुर्थोभागः । ततश्च यत्र प्रतिपदि अपराह्णे त्रिमुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावनमिति”

सुखबोधोक्ते २औषधभेदे तत्पाकप्रकारो यथा सुखबोधे “पलं मृदु स्वर्णदलं रसेन्द्रं पलाष्टकं षोडश गन्धकस्य । शोणैः सुकार्पासभवैः प्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः । तत्काचकुम्भे निहितं सुगाढे मृत्कर्पटैराहिवसत्रयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततोरजः पल्लवरागरम्यम् । निगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव । जातीफलं शोषमथेन्दुपुष्पं कस्तूरिकाया इह शाण एकः । चन्द्रोदयोऽयं कथितस्तु नाम्नो भुक्तोऽहिवल्लीदलमध्यवर्त्ती । मदोन्मदानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यकाण्डे । घृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समस्तकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि च । वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्त-

गदखण्डनः प्रचुररोगपञ्चाननः। ग्रहेषु रसराड्यं भवति यस्य चन्द्रोदयः सपत्नमददर्पितो जगदयां भवेद्भः”। २चक्रदत्तोक्ते वर्त्तिभेदे स्त्री तत्प्रकारो यथा “हरीतकी वचाकुष्ठं पिप्पली मरिचानि च। विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला। सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत्। नाशयेत्तिमिरं कण्डूं पटलान्यर्बुदानि च। अधिकानि च मांसानि यश्च रात्रौ न पश्यति। अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत्। वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी”।

**चन्द्रोपल** पु० चन्द्रप्रियः उपलः। चन्द्रकान्तमणौ हेमच० इन्दुकिरणसंपर्कात् तस्य क्षरणात् तत्प्रियत्वम्।

**चन्द्रौरस** पु०६त०। १बुधे “स्मौ म्यौ ल्गौ चेदिह भवति च चन्द्रौरसः” वृ० र० टीकोक्ते षड्विंशाक्षरपादके २वर्णवृत्तभेदे च

**चप** चूर्णीकरणे चु० उभ० सक० सेट् घटा०। चपयति-ते अचीचपत्-त। णिचोऽनित्यत्वात् स्वार्थे णिचि तद्रूपमित्यन्ये।

**चप** सान्त्वने भ्वा० पर० सक० सेट्। चपति अचापीत्-अचपीत्। णिचि चापयति।

**चप** गतौ चु०उभ०सक०सेट् इदित्। चम्पयति ते अचचम्पत् त

**चपट** पु० चपेट+पृषो० (चड) चपेटे अमरटीका।

**चपल** न० चुप-मन्दायां गतौ कल उपधोकारस्याकारः। १शीघ्रे मेदि० २क्षणिके त्रि० हेमच०। ३पारदे ४मत्स्ये ५चातके ६प्रस्तरभेदे च पु० मेदि०। ७चये पु० राजनि०। ८तरले चञ्चले च त्रि० मेदि०। ९दोषमनिश्चित्य कर्मकारिणि त्रि०अम०। १०चिकणे त्रि० शब्दर०। ११लक्ष्म्यां स्त्री “मिथयः स्थिरः सततमेतदिति प्रथितं यदेव जलजन्मतया। द्विरदात्ययास्तदपि यत्समहो चपलाजनं प्रति न चोद्यमदः” माघः। १२विद्युति १३पुंश्चल्यां १४पिप्पल्याञ्च स्त्री मेदि०। १५जिह्वायां स्त्री शब्दच०। १६विजयायां १७मादरायां स्त्री राजनि०।“नीचैर्नियतमिह यश्चपलो निपतः स्फुटं नभास निम्नगासुतः” माघः “शैशवाच्चपलमप्यशोभत” रघुः। “न पाणिपादचपलो न नेत्रचपलोऽनृजुः” मनुः। शौण्डा० ७त०। नेत्रचपलः। पादचपलः। च्वि अर्था० क्तादिभिः अभूततद्भावार्थे समासः। चपलकृतः चपलभूतः। विस्पष्टा० गुणवचनशब्दे परे तत्पुरुषे अस्य प्रकृतिस्वरत्वात् अन्तोदात्तता। चपलकटुकम्। प्रियादि०तस्मिन् परे पूर्वस्य न पुंवत्। प्रकाशमाना चपला विद्युत् यत्र प्रकाशमानाचपल इत्यादि। चपलस्य

भावः ष्यञ् चापल न० अञ् चापल्य न० त्व चपलत्व न० अनवस्थितत्वे “इङ्गजचापलदोषसमुद्भवः” माघः। “मा चापलायेति गणान् न्यषेधीत्” कुमा०। “उभयार्द्धयोर्जकारो द्वितीयतुर्यौ गणमध्यगौ यस्याः। चपलेति नाम तस्याः प्रकीर्त्तितं नागराजेन” वृ० र० उक्ते आर्य्याविशेषे १८मात्रावृत्तभेदे स्त्री। स्वार्थे क। चञ्चले त्रि०। भृशा० अभूततद्भावार्थे क्यङ्। चपलायते अचपलायिष्ट

**चपलता** स्त्री चपल-तल्। चाञ्चल्ये सा०द० उक्ते २व्यभिचारिगुणभेदे। “धृतिचपलताग्लानिश्चिन्तावितर्काः” व्यभिचारिण उद्दिश्य “मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः। तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः” इति लक्षयित्वा “अन्यासु तावदुपमर्दसहासु भृङ्ग! लोलं विनोदय मनः सुमनोलतासु। मुग्धामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः” सा० द० उदाहृतम्।

**चपलाङ्ग** पु० चपलमङ्गमस्य। शिशुमारे जलजन्तुभेदे। हारा०। [र० उक्ते छन्दोभेदे।

**चपलावक्त्र** न० “चपलावक्त्रमयुजोर्नकारश्चेत् पयोराशेः” वृ०

**चपेट** पु० चप-वञर्थे क चपाय सान्त्वनाय एटति गच्छति इट-क। विस्तृताङ्गुलिके हस्ते (चापड़) स्त्रीत्वमीप्यते “खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति” भाष्यप्रयोगात्। स्वार्थे क। अत्रैवार्थे अमरः।

**चपेटी** स्त्री भाद्रशुक्लषष्ठ्याम्। “प्रसूता द्वादशे मासि सम्यक्त्वापत्यहृद्भये। सुते जाते तथा षष्ठ्यां षष्ठीहादश रूपिणी। वैशाखे चान्द्रनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता। आषाढ़े कार्द्दमी ज्ञेया श्रावणे लुण्ठनी मता। भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा। नाड़ाख्या कार्त्तिके मासि मार्गे मूलकरूपिणी। पौषे भास्करूपा च शीतला तपसि स्मृता। गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता,, स्कन्द० पु०

**चप्य** त्रि० चप-पवर्गान्तत्वात् कर्म्मणि यत्। चर्वणीये। “चप्यं भवत्यग्नाद्यस्यावरुद्ध्यै” शत० ब्रा० १२७।२।१२। “चप्यं न पायुर्भिषगस्य” यजु० १९।८८।

**चम** अदने भ्वा० प० सक० सेट्। चमति अचामीत्। विचमति। अचमीत् चचाम चेमतुः। उदित् चमित्वा चान्त्वा। आचान्तः। आचमनम् आचमनीयम्। “आचान्तः पुनराचामेत्” स्मृतिः। “मनाग् मनोऽपि नाचामसि” प्रबोधच०। “चचाम मधु माध्वीकम्”

भट्टिः। चिचि चामयति। "इमां किमाचामयसे न चक्षुषी" नैष०।

**चम** भक्षे स्वादि० वैदिकः प० सक० सेट्। चम्नोति उदित् चमित्वा चान्त्वा। कविकल्पद्रुमे "कुषित्वां गच्छ गत्यां चम् नृचम् जम् जिष भव" इति वाक्ये "परोऽनुबन्धः पूर्वभाग्" इति तस्योक्तेः सर्व्वमाप्तादित्वं तेन शब्दकल्पद्रुमे स्वादिगणीयस्य उदित्त्वाद्युक्तिः प्रामादिकी

**चमत्कार** पु० चमदित्यव्यक्तं क्रियते कृ—भावे घञ्। लोकातीतवस्तु दृष्ट्वा चित्तस्य आनन्दहेतौ १प्रकाशे विस्मये, "लोकोत्तरचमत्कारप्राणदश प्रभावभिः"। "चमत्कारश्च चित्तविस्ताररूपो विस्मयापरपर्याय" सा० द०। "रसे सारश्चमत्कारः सर्व्वत्राप्यनुभूयते" तद्धृतधर्म्मदत्तवाक्यम्। "चमत्कारश्च लोकातीतार्थाकलनेन किमेतदितिज्ञानधाराजननेन चित्तवृत्तेः दीर्घविस्तारः। दृष्टहेतुभ्योऽसम्भावितत्वज्ञानेन हेत्वन्तरानुसन्धानाय मनसो व्यापारभेद एव चित्तविस्तार इत्यन्ये। सुखविशेष एव चमत्कार इत्यपरे। चमत्कारत्वञ्च आह्लादगतो जातिविशेषः यथाह रसगङ्गाधरे "रमणीयार्थप्रतिपादकः शब्दः काव्यं रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता लोकोत्तरत्वञ्च आह्लादगतचमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः" इति। "इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादक शब्दत्वं यत्प्रतिपाद्यार्थविषयकभावनात्वं चमत्कार जनकतावच्छेदकं तत्त्वं, स्वविशिष्टजनकतावच्छेदकार्थ प्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्" इति च। कर्त्तरि अण्। २अपामार्गे त्रिका०।

**चमर** पुंस्त्री चम—अरच्। १मञ्जिकाकृतौ मृगभेदे, यस्य पुच्छेन चामराख्यं व्यजनं भवति, स्त्रियां जातित्वात् ङीष्। "कुर्व्वन्ति बालव्यजनैश्चमर्य्यः" "बालप्रियत्वं शिथिलं चमर्य्यः" कुमा०। "स्फुरति चानुवनं चमरीचयः" माघः। २दैत्यभेदे पु०। ३चमरबालजाते चामरे न०।

**चमरपुच्छ** पुंस्त्री चमरस्य पुच्छमिव पुच्छमस्य। (केकड़े) विशेषवे १पशुभेदे। राजनि०। ६त०। २चामरे न०

**चमरिक** पु० चमरमिव केशरोऽस्त्यस्य ठन्। कोविदारवृक्षे रक्तकाञ्चनारे वृक्षे शब्दच०

**चमरी** स्त्री चमरजातिस्त्री ङीष् चमरमिवाकारोऽस्त्यस्या अच् गौरा० ङीष् वा। १चमरजातिस्त्रियां चमरशब्दे दृश्या०। २मञ्जर्य्यां मेदि०।

**चमस** पुंन० अर्द्धर्चादि० चमन्त्यस्मिन् चम—असच्। १पलाशादिकाष्ठजाते यज्ञियपात्रभेदे तस्य च भेदादिकं यज्ञपार्श्वे उक्तं यथा "चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः। त्र्यङ्गुलस्तु भवेत्खातो विस्तारश्चतुरङ्गुलः। विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः। अन्येभ्यो वापि वा कार्य्यास्तेषां दण्डेषु लक्षणम्। होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः। उद्गातृणां च तत्र्यश्रिः स्याद्यजमानः पृथुः स्मृतः। प्रशास्तुश्चतुरश्रः स्यादुत्तष्टो ब्राह्मणाच्छिनः। पोतुरप्येवमाद्यो स्यान्नेष्टुः स्याद्विन्दुशीतकः। अच्छावाकस्य रात्राव आग्नीध्रस्य मयूखकः। इत्येते चमसाः प्रोक्ता ऋत्विजां यज्ञकर्म्मणि। प्रत्याशाहा यटाह्वान्यग्राहा चमसाः स्मृताः" कात्या० श्रौ० १।२।२६। सूत्रभाष्ये कर्कः "स च चमसश्चतुरश्रो द्वादशाङ्गुलदीर्घश्चतुरङ्गुलखातः सदण्डश्च भवति परिशिष्टात् सूत्रकारप्रस्थानाच्च। चमसवत्सुवेणेति स्रुवस्य चतुरश्रतां विधाय चमसवदित्येव चमसस्य बिलं चतुरश्रतामाह" कात्या० श्रौ० २।३।१। "चमसवदविशेषात्" शारी० सू०। "अर्वाग्बिलश्चमस" इति तन्त्राप्रश्रुतश्रुतिः। स्त्रीत्वमपि मेदि०। २सोमपानपात्रभेदे च। कर्म्मणि घञ्। ३पर्पटे पिष्टकभेदे ४लड्डुके च पु० "चूर्णं यच्छुष्कमाषाणां चमसी साऽभिधीयते" भावप्र० उक्ते (धूमसी) ख्याते ५माषचूर्णे च स्त्री गौरा० ङीष्।

**चमसिन्** पु० चमस+अस्त्यर्थे इनि। चमसयुक्ते स्त्रियां ङीप् ततः नडा० अपत्ये फक्। चामसायन तदपत्ये पुंस्त्री०

**चमसोद्भेद** पु० भारतप्रसिद्धे प्रभासान्तिकस्थे तीर्थभेदे। "ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली। चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत" भा० शल्य० ३६अ०। "एष वै चमसोद्भेदो यत्राऽदृश्या सरस्वती। यत्रैनामभ्यवर्त्तन्त सर्व्वाः पुण्याः समुद्रगाः" भा०व० १३०अ०। चमसोद्भेदमप्यत्र न० "आश्रमान् सरितश्चैव सरांसि च नराधिप!। चमसोद्भेदनं विप्रास्तत्रापि कथयन्त्युत" ८८अ०। "स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत्" ८२अ०।

**चमीकर** पु० कनकराभिधे स्वर्णस्योत्पत्तिस्थाने शब्दार्थचि० यद्योगात् स्वर्णं चामीकरमित्युच्यते।

**चमू** स्त्री चम—ऊ। सेनामात्रे (गजाः ७२९, रथाः ७२९ अश्वाः २१८७, पदातयः ३६४५), एतत्संख्याभेदान्विते सैन्यभेदे च अमरः। "अक्षौहिणीशब्दे ९६पृ० दृश्यम्।

"रत्नाच्छेतोनैर्दशभिश्चता वासवीनां चमूनाम्" नैष० । आधारे क्त । ३चमसे स्त्री "दृषणा नभचमूषदः" ऋ० १। १४।४। "चमूषदः चमसादिपात्रेषु अवस्थिताः" भा० । ४द्यावापृथिव्योः द्वि० व० निघ०

**चमूचर** पु० चमूषु चरति चर–ट । २सैनिके शब्दार्थचि० ।

**चमूनाथ** पु० ६त० । सेनाध्यक्षे "युवतिचमूनाथभोज्य-वस्त्राणाम्" ह० सं० १६अ० । चमूपत्यादयोऽप्यत्र ।

**चमूरु** पुंस्त्री चम–खर्जूरा० ऊर प्रषो० अत उत्वम् । मृग-भेदे । "चकासतं चारुचमूरुचर्म्मणा" माघः । "हृद-युग्मं न चमूरुदृशः" प्रसन्नरा० ।

**चमूहर** पु० चमुं दैत्यसैन्यं हरति हृ–अच् । महादेवे 'चमूहरः हरेशश्च व्योमारिः शङ्करोभवः" भा० आनु० ८१अ० शिवनामोक्तौ । [पुष्पादौ न० ।

**चम्प** पु० तु० चपि–अच् । १कोविदारवृक्षे शब्दमाला २तत्-

**चम्पक** पु० चपि–ण्वुल् । (चाँपा) प्रसिद्धपुष्पप्रधाने १वृक्षभेदे अमरः । "चम्पकः कटुकस्तिक्तः कषायो मधु-रोहिमः । विषक्रिमिहरः लच्छ्रकफवातास्रपित्तहृत्" भावप्र०तद्गुणा उक्ताः । २तत्पुष्पादौ न० "व्याकोकयच्च-म्पककोरकावलीः" नैष० । "उन्निद्रपुष्पचनचम्पकपिङ्ग-भासा" माघः । ३पनसफलैकभागभेदे (चाँपी) ख्याते पदार्थे (चाँपाकला) प्रसिद्धे ४कदलीभेदे पु०तत्फले न० राजनि० । "चम्पकं वातपित्तघ्नं गुरु वीर्य्यकरं तथा । अतिशीतं रसे पाके मधुरं कथितं बुधैः" भावप्र०तद्गुणा उक्ताः । ५सांख्यमतसिद्धे सिद्धिभेदे "अध्ययेन स्वयं परीक्षितमप्यर्थं तावन्न श्रद्दधते यावद्गुरुशिष्यसब्रह्म-चारिभिः सह न संवाद्यते अतः सुहृदां गुरुशिष्य-सब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिस्तथा चम्पकमुच्यते इति" सांख्यशास्त्रम् ।

**चम्पकचतुर्द्दशी** स्त्री ज्यैष्ठशुक्लचतुर्द्दश्याम् ज्यैष्ठमासे इत्युपक्रमे "चतुर्द्दश्यां च शुक्लायां चम्पकैः पूजयेत् शि-वम् । अयुतैर्वा सहस्रैर्वा शतैर्वा परमेश्वरि ! । पायसञ्च बलिं दद्यात् ततो नक्तं चरेद्व्रती । वृषस्थेऽर्के विशेषेण न भूयो जायते भुवि । त्रिमध्याह्ने चम्पकैश्च सहस्रं जुहुयाच्छिवे । नयनदिं क्षरान् हन्ति हत्वा क्रोशांश्च यानि च । चम्पकचतुर्द्दशी ख्याता पूजयेद्यः सदाशिवम् । दशजन्मकृतं पापमर्भनादेव नश्यति" मत्स्यसू० ३५प० ।

**चम्पकमाला** स्त्री चम्पकपुष्पनिर्मिता माला ६त० । १चम्पक पुष्पमालायाम् । २चम्पकपुष्पाकारे स्त्रीणां कण्ठाभरण-भेदे । (चापकलि) शब्दार्थ० । "भौ सगयुक्तौ चम्पक माला" इ०र० उक्ते दशाक्षरपादके ३वर्णवृत्तभेदे चम्पक मालेत्यत्र "रुक्मवतीयम्" इत्यपि पाठः ।

**चम्पकरम्भा** स्त्री चम्पकोपपदा रम्भा शा० त० । (चाँपा-कला) कदलीभेदे राजनि० ।

**चम्पकारण्य** न० चम्पकप्रधानमरण्यम् । भारतप्रसिद्धे तीर्थभेदे "ततो गच्छेत राजेन्द्र ! चम्पकारण्यमुत्तमम् । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्" भा० व० ८४अ० । [उण् । पनसे (काँठाल) शब्दार्थचि०

**चम्पकालु** पु० चम्पकेन पनसावयवभेदेन अलति अल–

**चम्पकावती** पु० चम्पक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां दीर्घः । चम्पापुर्य्यां कर्णराजधान्याम् (भागलपुर) ख्याते पुरीभेदे शब्दरत्ना० ।

**चम्पकुन्द** पु० चम्प इव कुन्दते कुदि–अच् । (चाँदकाँड़ा) मत्स्यभेदे राजनि० । [६त० । पर्णशं त्रिका० ।

**चम्पकोश** पु० चम्पकैरुत्पाद्यते यत्र वश–घञर्थे आधारे क

**चम्पा** स्त्री चम्प–अच् । कर्णपुर्य्यामङ्गदेशस्थे १पुरीभेदे । (चाँपाइ) ख्याते तन्निकटस्थे २नदीभेदे ३पनसावयवभेदे (चाँपि) शब्दार्थचि० [शब्दे ७८५पृ० दृश्यम् ।

**चम्पाधिप** पु० ६त० । कर्णे तस्य तत्राधिपकथा अङ्गाधिप-

**चम्पापुरी** स्त्री चम्पानाम्निका पुरी । अङ्गदेशस्थे कर्णराज धान्याम् । चम्पानगर्य्यादयोऽप्यत्र ।

**चम्पालु** पु० चम्पया अलति अल–उण् । पनसे शब्दरत्ना० ।

**चम्पावती** स्त्री चम्पा अङ्गदेशस्थः नदीभेदः अस्त्यस्याः मतुप् मस्य वः । चम्पापुर्य्यां शब्दरत्ना० ।

**चम्पू** स्त्री चपि–ऊ । "गद्यपद्यमयी वाणी चम्पूरित्यभि-धीयते" इत्युक्ते काव्यभेदे साहि० ।

**चम्पेश** पु० ६त० । कर्णे त्रिका० । [ वाचिषु च०व०

**चम्पोपलक्षित** पु० ३त० । १अङ्गदेशे हेमच० २तद्देश-

**चम्ब** गतौ भ्वा०पर०सक०सेट् । चम्बति अचम्बीत् । चचम्ब

**चम्रिष्** त्रि० चमूषु चमसेषु इष्यति गच्छति इष–क्विप् वेदे नि० वस्य रः । चमसस्थे । "तस्य चम्रिषोऽस्यो न" ऋ० १।५६।१। "चमूषु चमसेषु इषः वर्त्तमानाः" भा०, पृषो० दीर्घः चमीव इत्यन्यतार्थे । "चमीषो न शरदा पाञ्चजन्यः" ऋ० १।१००।१२।

**चय** गतौ भ्वा० आ० सक० सेट् । चयते अचयिष्ट चेये ।

**चय** पु० चि–भावकर्म्मादौ अच् । १समूहे । २वप्रे ३प्राकार मूलबन्धने । यदुपरि प्राकारो निबध्यते प्राकारमूलस्थित

वेदिकेति यावत् । तथा चार्थशास्त्रम् । "खातस्योद्धृतमृदा वप्रं कारयेत् तस्योपरि प्राकारमिति" पगार इति गौडभाषा । ४परिखोद्धृतमृत्स्तूपे । तत्र-प्रभूके "स्फुरति चातुरनं चमरीचयः" । "नितम्बेषु नक्तमचिनाश्मनाश्रये:" "चयस्त्विषामित्यवधारितं पुरः" इति च माघः । वप्रे "चयाट्टालकशोभिना" भा०व०१३०अ० । ५अग्न्यादेश्चयने संस्कारभेदे । "यज्ञांश्च चयानवान्" हरिवं० ४१अ० । ६पुष्पादेः समाहरणे ७पीठे मेदि० । चये कुशलः आकर्षा० कन् । चयक चयनकुशले त्रि० ।

**चयन** न० चि—भावे ल्युट् । १पुष्पादेः समाहरणे २अग्न्यादेः संस्कारभेदे च । चयनप्रकारः कातीयादौ दृश्यः "स यथा कामयेत तथा कुर्यादिति अग्नेश्चयनस्य तथाचयनस्येति" शत०ब्रा०६।५।२।११। चीयतेऽनेन करणे ल्युट् । संस्कारसाधने ३यूपादौ च । "येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता" भा० द्रो० ५१अ० ।

**चर** गतौ भ्वा० पर० सक० सेट् । चरति अचारीत् । चचार चेरतुः । "दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः" मनुः । "चेरतुः खरदूषणौ" भट्टिः "हंसं तनौ सन्निहितं चरन्तम्" नैष० । चरः चारः चरणम् चरितं चरित्रम् । चरन् चञ्चूर्य्यते "ततश्चञ्चूर्य्यमाणासौ" भट्टिः । यङ्लुकि चञ्चुरीति चञ्चूर्त्ति ।

अति+अतिक्रम्य गमने "अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम्" भाग० १।१७।१४। "अयोगतश्चात्यचरद् योगं दिवि निशाकरः" हरिवं० २२६अ०। "पुत्राः पितृनत्यचरन्नार्य्यश्चात्यचरन् पतीन्" भा० शा० ८३८७श्लो० । अतिचारशब्दोक्तेऽर्थे अतिचारशब्दे ८८४पृ० दृश्यम् ।

वि+अति व्यतिक्रमे "त्वामहं न व्यतिचरे मनसाऽपि कदाचन" रामा० लं० १०१ । [१।६।१।८।

अधि+आधिक्येन चरणे । "यासुपरिष्टादधिचरसि" शत० अनु+अनुगमने पश्चाद्गमने साहाय्यकरणे । अनुचरः ।

अप+अपकारे अनिष्टसम्पादने । "योऽयन्तेषामपचरेत् न मायमीत वै द्विजः" भा०शा० ६५८६ । "पितृदेवर्षिभूतानां न चापचरिता मया" मार्क० पु० ।

अभि+आभिमुख्येन चरणे अतिक्रमे व्यभिचारे च "पतिं या नाभिचरति मनोवाग्देहसंयता" मनुः "यथैवाहं नाभिचरे कदाचित्" भा० वि० ४५७ अ० । अनिष्टसम्पादने "श्येनेनाभिचरन् यजेत" श्रुतिः । अभिचारश्च मारणोच्चाटनादीनि षट्कर्म्माणि "प्रति तमभिचर योऽस्मान् द्वेष्टि" अथ० २।११।२। अभिचारशब्दे दृश्यम् ।

वि+अभि+विशेषेण अतिक्रमे । यस्य यथात्वमुचितं तस्य तदतिक्रमे । "उष्मायां व्यभिचरतीव सप्तसप्तौ" किरा०। "व्यभिचचार न तापकरोऽनलः" नैष० । हेतोः साध्याभाववद्वृत्तित्वं, साध्यस्य च हेतुसमानाधिकरणाभावप्रतियोगित्वं व्यभिचारः । "न तावदव्यभिचरितत्वं तद्धि न साध्याभाववदवृत्तित्वम्" अनुमानचिन्ता० । स्त्रीणाञ्च पतिमतिक्रम्य अन्यपुंसि गमनं व्यभिचारः ।

अव+समन्तात् चरणे । "कषायं अवचारितम्" । "कफवातज्वरं हन्याच्छीघ्रं कालेऽवचारितम्" "प्रमार्जनं धावनञ्च वीक्ष्य वीक्ष्यावचारयेत्" "दूर्वां पुनर्णवाञ्चैव लेपे साध्ववचारयेत्" इति च सुश्रु० ।

आ+अनुष्ठाने । "प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः" रघुः । "यद्यदाचरति श्रेष्ठः" गीता । प्रतिपाल्यत्वादिना सदृशीकरणे च "संप्राप्ते षोडशे वर्षे पुत्रं मित्रवदाचरेत्" चाण० ।

अधि+आ+आधिक्येनाचरणे "शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत्" मनुः ।

अनु+आ+अनुगमने तुल्यरूपानुष्ठाने "कोनु तत्कर्म्म राजर्षेर्नाभेरन्वाचरेत् पुमान्" भाग० ४।५।७।

सम्—उद्+आ सम्यगाचरणे । "बालानपि च मार्गस्थान् सान्त्वेन समुदाचरेत्" भा० शा० २२अ० ।

उप+आ+उपासने । "उपाचरति तत्रस्थ धनानामीश्वरम् प्रभुम्" भा० स० १०अ० ।

सम्+आ+सम्यगाचारे । "त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु" भा०क० २१अ० । उपघातकरणम् । "उच्छिष्टाशनिषेकञ्च दूरादेव समाचरेत्" मनुः ।

उद्+ऊर्द्ध्व गतौ सक० आत्म० । धर्म्ममुच्चरते "धर्म्ममुत्क्रम्य गच्छतीति" सि० कौ० । उपरिष्टाद्गतौ अक० प० । वाष्प उच्चरति "उपरिष्टाद्गच्छति" सि० कौ० । "सौदामनीमुच्चरन्तीं यथैव" भा० व० ११२अ० । "शीवाहन्दैरुदचरत्" भट्टिः "दिव्यस्तूर्य्यध्वनिरुदचरत् व्यञ्जुवानो दिगन्तान्" रघुः । कण्ठताल्वाद्यभिघातेन उत्पादने "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायः । "अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात्" रघुः ।

वि+उद्+विशेषेण उत्थितौ। "यथाऽग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्ति" शत॰ ब्रा॰ ४।५।१।२३।

सम्+उद्+सम्युत्थितौ। "समुच्चरन्त्यपाद्दापः" निरु॰६।११

उप+उपासने "गिरिशमुपचचार प्रत्यहं सा सुकेशी" कुमा॰। अन्यथास्थितस्य वस्तुनोऽन्यथात्वप्रतिपादनरूपे शब्दादिव्यापारभेदे उपचारश्च लक्षणा रूढं वा। "यथा लोके भृत्यगतेषु योधेषु वर्तमानौ जयपराजयौ राज्ञि उपचर्य्येते" सा॰ द॰। "तेनोपचर्य्यते राज्ञः"। "चाम्मो-चरा प्रभिगतिर्गोणितेऽप्युपचर्य्यते तेन" सु॰ सू॰ ५।१५।

दुर्+दुष्टाचरणे। "कामवक्तव्यहृदया भर्त्तारं दुश्चरन्ति याः" रामा॰ आर॰ २।२५।

निस्+निर्गमने "इतश्चेतश्च निश्चेरुर्दृष्टाः सर्वे युयुत्सवः" हरिवं॰ २२अ॰। "यतोयतोनिश्चरति मनश्चञ्चलमस्थिरम्" गीता।

परि+परितोगमने "कक्षा ह्येनास्तथा ह्यथा नीचैः परिचरन्ति च" रामा॰ सु॰ १६।११। परितः सेवने "गात्रसंवाहनैश्चैव चमरव्यजनैस्तथा। शक्तः सर्वेषु कालेषु दितिं परिचचार ह" रामा॰ बा॰ ४६ अ॰ ११। "चाम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु यः" रा॰ अयो॰ ३५।१४। परिचर्य्या परिचारकः।

प्र+प्रकाशेन गतौ। "प्राणः प्राणीयत ततः पुनश्च प्रचचार ह" भा॰आनु॰२३अ॰। प्रवर्त्तने चरणे च। "यैः कर्मभिः प्रचरितैः शुश्रूषन्ते द्विजातयः" मनुः। प्रचारः।

सम्+प्र+सम्यक् प्रकाशके। "यदा प्रवृत्ति चैवेह लोके संप्रचरिष्यति" भा॰ आनु॰ ८६अ॰।

वि+विशेषेण गतौ "विचरन्ति महीपाला यात्रार्थं विजिगीषवः" रामा॰ आर॰ २२।७। "ततोद्रौणिर्महावीर्य्यः पार्थस्य विचरिष्यतः" भा॰ वि॰ ५८अ॰। "रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च" "इन्द्रियाणां विचरतां विषयेष्वपहारिषु" मनुः। वि+णि॰ चर पर्य्यालोचनया निर्णये। "आयतिं सर्वकार्य्याणां तदात्वञ्च विचारयेत्" मनुः। "मित्रामित्रं विचारयेत्" भा॰ शा॰ २८२६। "विचारदृक्चारदृगप्यवर्त्तत" "भविता न विचारचारु चेत्" नैष॰।

सम्+सम्यग्गतौ "नैव वाताः प्रवायन्ते न मेघाः सञ्चरन्ति च" हरिवं॰ १०७५८। "मार्गेषु सञ्चरतां यमानाम्" कुमा॰ "सञ्चारोरतिमन्दिरावधि" रतिमञ्जरी करणविभक्तिसहकारे आत्म॰। "रथेन सञ्चरते" सि॰ कौ॰। "पद्भ्यां व्यपः सञ्चरणाय एव" नैष॰।

चुर संयमे असंयमे च चुरा॰ उभ॰ सक॰ सेट्। चारयति-ते अचीचरत् त विचारयति विचारणा विचारितः

चर पु॰ चर-अच्। स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन कृतवृत्तौ भ्रमणकर्त्तरि चारे १प्रणिधौ, अमरः २कपर्दके, राजनि॰। ज्योतिषोक्तेषु ३मेषकर्कटतुलामकरराशिषु ४स्वातिपुनर्वसुश्रवणादित्रिकरूपे नक्षत्रभेदे ५भौमवारे ६अक्षद्यूतभेदे। ७चले अनवस्थिते त्रि॰मेदि॰। ८खञ्जनखगे पुंस्त्री शब्दमा॰। चरलक्षणादिकमुक्तं युक्तिकल्पतरौ "विवस्वानिव तेजोभिर्नभस्वानिव वेगतः। राजा चरैर्जगत् सर्वं प्राप्नुयाल्लोकसम्मतैः। तर्केङ्गितज्ञः स्मृतिमान् स्वीयभावप्रकाशकः। क्लेशायासक्षमो दक्षः सर्वत्र भयवर्जितः। शुभक्तो राजस्तु तथा कार्य्याणां प्रतिपत्तिमान्। अयोनिरन्याकारेण परराष्ट्रं विचक्षणः। कारुको मन्त्रकुशलान् सांवत्सरचिकित्सकान्। तथान्यानपि युञ्जीत समर्थान् शुद्धचेतसः। अन्धांश्च तथाऽलुब्धान् दृष्टार्थान् तथ्यभाषिणः। पाषण्डिकान् तापसादीन् परराष्ट्रे नियोजयेत्। स्वदेशपरदेशज्ञान् कुलीनान् सुविचक्षणान्। वार्त्ताहर्त्तॄन् बहूंश्चैव चराणां विनियोजयेत्। नैकस्य वचने राजा चारस्य प्रत्ययं वहेत्। द्वयोः संवादमाज्ञाय यद्युक्तं कार्य्यमारभेत्। तस्माद्राजा प्रयुञ्जीत चरान् बहुसहस्रान् बहून्। गौरेतोवामभाः कुब्जास्त्रिधा ये च कारवः। भिक्षुक्यश्चारणा दास्यो मालाकार्य्यः कलाविदः। अन्तःपुरगतां वार्त्तां निर्हरेयुरलक्षिताम्। प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधो मतः। अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञकः"। "शत्रुप्रजाध्यक्षवृत्तं विज्ञातुं कुशलाय ये। ते गूढचाराः कर्त्तव्याः यथार्थश्रुतबोधकाः" शुक्रनीतिशा॰। "चरस्थिरद्व्यात्मकनामधेयामेषादयोऽमी क्रमशस्त्रिधा स्युः" ज्यो॰त॰। "वातादित्यहरिवसं चरगणः" ज्यो॰ त॰ १५।११।१२।१३।१४ संख्यकनक्षत्राणि चराणि। "येऽनेन लङ्कोदयकालिकास्ते देशान्तरेण स्वपुरोदये स्युः। देशान्तरं प्रागपरं तथान्यद् याम्योत्तरं तच्चरसंज्ञकम्" सि॰शि॰ "उदयान्तरकर्मणा लङ्कायामौदयिका ये हा जातास्ते देशान्तरकर्मणा स्वपुरौदयिकाः स्युः। तच्च देशान्तरं द्विविधम्। एकं पूर्वापरमन्यद्याम्योत्तरम्। तच्चरसंज्ञकम्" प्रमि॰ उक्ते याम्योत्तरादौ देशान्तरे। चरानयनप्रकारादि सू॰ सि॰ २ नारयाभ्यां दर्शितं यथा

"अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टक्रान्तिमाह" र० ना०

"विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता। दिग्भेदे वियुता स्पष्टा भास्करस्य यथाऽऽगता" सू०

"यस्य ग्रहस्य स्पष्टक्रान्तिरभीष्टा तस्य ग्रहस्यायनांशसंस्कृतस्य भुजज्यातः परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतस्पष्टग्रहगोलदिका ज्ञेया। तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनगोलदिको ज्ञेयः। गोलस्तु मेषादिषट्कमुत्तरस्तुलादिषट्कं दक्षिणः। अथ शरक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकविक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिर्विक्षेपेण वियुतान्तरिता शेषदिका स्पष्टा क्रान्तिः स्यात्। ननु सूर्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयेत्यत आह भास्करस्येति। सूर्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः। अत्रोपपत्तिः। विषुवद्वृत्ताद्ग्रहबिम्बकेन्द्रपर्यन्तं याम्यमुत्तरं वान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिन्नदिक्त्वे तदन्तरमितमन्तरमिति। अत्र शरस्य क्रान्तिसंस्कारयोग्यत्वसम्पादिका क्रिया लोकभ्रमभयात् स्वल्पान्तरत्वाच्चोपेक्षिता भगवता कृपावता। अन्यथा शरस्य ध्रुवाभिमुखत्वे भगवदुक्तमायनदृक्कर्म कथमव्याहतं स्यादित्यलम्। अथ दिनरात्रिमानज्ञानार्थमहोरात्रासून् साधयति" र० ना०।

"ग्रहोदयप्राणहता खखाष्टैकोद्धृता गतिः। चक्रासवो लब्धयुताः स्वाहोरात्रासवः स्मृताः" सू०।

"ग्रहस्य येऽयनांशसंस्कृतराशेर्वक्ष्यमाणनिरक्षोदयासवस्तैर्गुणिता निजस्फुटगतिः कलाद्याष्टादशशतभक्ता फलेन युताश्चक्रासवः षष्टिघटिकानामसवः षट्शतयुतैकविंशतिसहस्रमिताः स्वस्वग्रहस्याहोरात्रासवः कालतत्त्वज्ञैः कथिताः। अत्रोपपत्तिः। ग्रहः पूर्वं गत्वा लम्बितः प्रवहेण गतिभोगकालेन भचक्रपरिवर्त्तनान्तरमुदेत्यतो भचक्रपरिवर्त्तकालः षष्टिघटिकासुमितो ग्रहगतिकलाभुक्तासात्मककालेनाधिको ग्रहाहोरात्रमसात्मकं नाक्षत्रप्रमाणेन भवति। तत्रैकराशिकलाभिर्यदि ग्रहस्थराश्युदयप्राणास्तदा गतिकलाभिः क इत्यनुपातेन गत्यसव इत्युपपन्नं ग्रहोदयेत्यादि। अनेनैव रीतिना ग्रहाणामुदयान्तरकर्मापीत्युक्तं भगवता। तथाहि। अनुपातानीतमध्यग्रहाणां नियताहोरात्रमानान्तरकाले ग्रहाणां स्थितिः रविमध्यगत्यसूनां प्रतिराशौ भिन्नत्वेन मध्यमसूर्याहोरात्रमानस्य नियतत्वाभावात्तत्त्रैराशिकावगतग्रहा अनियतमध्यार्काहोरात्रकालान्तरेणार्धरात्रे यत्संस्कारेण भवन्ति तदेवोदयान्तरं तच्चाधमं भगवता स्वल्पान्तरत्वादुपेक्षितम्। कथमन्यथा गतिकलासूनां समत्वमुपेक्ष्य गतिकलाणामसवो भगवदुक्ताः सङ्गच्छन्ते उदयान्तरस्य गतिकलासुभेदोत्पन्नत्वात्। अथ चरोपयुक्तां क्रान्तिज्यां द्युज्यां चाह" र० ना०।

"क्रान्तेः क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया। हीना त्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्" सू०।

"स्पष्टक्रान्तेः क्रमोत्क्रमज्ये क्रमज्योत्क्रमज्ये द्वे अपि प्रसाध्य तत्र तन्मध्ये क्रान्त्युत्क्रमज्यया त्रिज्या हीना दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्धं द्युज्येत्यर्थः। तद्दिनव्यासार्धं दक्षिणोत्तरं दक्षिणगोल उत्तरगोले च स्यात् क्रान्तेर्गोलद्वयेऽपि सत्त्वात्। अपरा क्रान्तिज्यैव। अत्रोपपत्तिः। क्रान्त्यंशानां क्रमज्या क्रान्तिज्या भुजो विषुवद्वृत्तानुकाराहोरात्रवृत्तान्युभयगोले तदुभयतस्तद्व्यासार्धं द्युज्या कोटिस्त्रिज्या कर्ण इति गोले प्रत्यक्षम्। त्रिज्यावृत्त उन्मण्डले याम्योत्तरवृत्ते वा प्रत्यक्षम्। तत्र भुजकर्णयोर्वर्गान्तरपदं कोटिरिति क्रान्तिज्यावर्गोनात्रिज्यावर्गान्मूलं द्युज्या। तत्रापि भुजोत्क्रमज्यया हीना त्रिज्या कोटिक्रमज्या स्यादिति वृत्ते प्रत्यक्षदर्शनात् क्रान्त्युत्क्रमज्ययोना त्रिज्या द्युज्या स्यादिति लाघवेन वर्गमूलनिरासेनोक्तं भगवता क्रान्तेरित्यादि। अथ चरानयनपूर्वकदिनरात्रिमानसाधनं श्लोकत्रयेणाह" र० ना०

"क्रान्तिज्या विषुवद्भाघ्नी क्षितिज्या द्वादशोद्धृता।
त्रिज्यागुणाहोरात्रार्धकर्णाप्ता चरजासवः।
तत्कार्मुकमुदक्क्रान्तौ धनहानी पृथक्स्थिते। स्वाहोरात्रचतुर्भागे दिनरात्रिदले स्मृते।
याम्यक्रान्तौ विपर्यस्ते द्विगुणे तु दिनक्षपे। विक्षेपयुक्तोनितया क्रान्त्या भानामपि स्वके" सू०।

"क्रान्तिज्या विषुवद्दिनीयमध्याह्ने द्वादशाङ्गुलशङ्कोश्छायया गुणया द्वादशभक्ता फलं कुज्या स्यात्। सा त्रिज्यया गुणिताहोरात्रार्धकर्णाप्ताहोरात्रवृत्तव्यासार्धकर्णेन व्यासदलेन द्युज्यया भक्ता फलं चरजा ज्या चरज्येत्यर्थः। अस्याश्चरज्यायाः धनुश्चरासवो भवन्ति। स्वाहोरात्रचतुर्भागे स्वस्य चरसम्बन्धिनो ग्रहस्य प्रागुक्ताहोरात्रासवस्तेषां चतुर्थांशे पृथक्स्थिते स्थानद्वयस्थे उत्त-

रक्रान्तौ सत्यां चराख्यमहानी युतहीनौ कार्य्यौ तौ क्रमेण दिनरात्रिदले दिनार्धरात्र्यर्धे कालविद्भिरुक्ते। दक्षिणक्रान्तौ सत्यां विपर्य्यस्तौ दिनरात्रिदले यत्र हीनं तद्दिनार्द्धं, यत्र युतं तद्रात्र्यर्धमित्यर्थः। द्युकाराद् ते दिनरात्र्यर्धे द्विगुणे दिनरूपे दिनमानरात्रिमाने [illegible] स्तः। उक्तरीत्या नक्षत्राणामपि दिनरात्रिमाने साध्ये इत्याह। विक्षेपेत्यादि। नक्षत्रध्रुवाभ्यामानीतया क्रान्त्या नक्षत्रविक्षेपैकभिन्नदिक्क्रमेण युतयान्तरित-योक्तप्रकारेण सिद्धया स्वके नक्षत्रदिनरात्रिमाने साध्ये इत्यर्थः। अत्रोपपत्तिः। द्वादशाङ्गुलशङ्कुः कोटिः पलभा भुजोऽक्षकर्णः कर्णः, क्रान्तिज्या कोटिः, कुज्या भुजोऽग्रा कर्ण इत्यक्षक्षेत्रद्वयं प्रसिद्धम्। तत्र यदि द्वादश-कोटौ पलभा भुजः, तदा क्रान्तिज्याकोटौ को भुज इ-त्यनुपातेन कुज्या। तत्स्वरूपं तु निरक्षदेशक्षितिजस्वदेश-क्षितिजान्तरालस्थिताहोरात्रवृत्तप्रदेशस्य द्युज्याप्रमाणेन ज्येति त्रिज्याप्रमाणेन तज्ज्या चरज्येति द्युज्याप्रमा-णेन कुज्या त्रिज्याप्रमाणेन केत्यनुपातेन चरज्या तद-नुचरासवोऽहोरात्रवृत्तखण्डप्रदेशे निरक्षस्वक्षितिजान्त-राल उत्तरगोले स्वक्षितिजस्य निरक्षक्षितिजादधःस्थत्वा-न्निरक्षक्षितिजयाम्योत्तरवृत्तान्तरालेऽहोरात्रवृत्तचतुर्थांश-त्वादहोरात्रस्य चतुर्थांशे चरासवो युता दिनार्धं हीना रात्र्यर्धं दक्षिणगोले स्वक्षितिजस्य निरक्षक्षितिजादूर्ध्व-स्थत्वाद्धीना दिनार्धं, युता रात्र्यर्धमित्युपपन्नं सर्वं क्रान्तिज्येत्यादि"।

तत्र प्रणिधौ। "राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव" माघः। "तेषां वृत्तं परिणयेत् सम्यग्राष्ट्रेषु तच्चरैः" मनुः। चले "तस्य सर्वाणि भूतानि स्थावराणि चराणि च" "देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वशः" मनुः। अपि कर्म्मण्युपपदे "चरेष्टः" पा० ट चरणकर्त्तरि त्रि०। भूचरः खचरः। "शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः" मनुः। मेषादौ "चरलग्ने चरांशे वा स्थापनं च विसर्ज्जनम्" ति० त०। स्वार्थे अण्। चार प्रणिधौ

**चरक** पु० चर एव स्वार्थे क संज्ञायां कन् वा। १चरे दूत-भेदे। २आयुर्वेदकारकमुनिभेदे पु०। "देवाकर्णय सुश्रु-तेन चरकस्योक्तेन जानेऽखिलं स्यादस्या नभदं विना न दहने तापस्य कोऽपि क्षमः" नैष०। मन्त्रिवैद्ययोरेक-रूपोक्तौ। चरकनामनिरुक्तिः आयुर्वेदशब्दे ७८० पृ० दर्शिता। ३तत्कृते ग्रन्थे च भावप्रका० तत्र च ग्रन्थे सूत्रस्थानं निदानस्थानं विमानस्थानं शारीर-स्थानम् इन्द्रियस्थानं चिकित्सितस्थानं कल्पस्थानं सिद्धिस्थानम् इत्यष्टौ स्थानानि। ४पर्पटे राजनि०। ५चक्रकरे ६भिक्षौ शब्दार्थचि०।

**चरकाल** पु० "निरक्षदेशक्षितिजाख्यवृत्तसञ्ज्ञमण्डलं तन्न-सुरन्ध्रदेशे। ये ये कुजेऽर्कस्य प्रकृष्टमोऽस्याद्गुरार्धन-कौदययोस्तु मध्ये" सि० शि०। "आदौ स्वदेशेऽथ निर-क्षदेशे सूर्य्योदयोऽस्तमयोऽन्यथातः। अतश्च पश्चोऽ-क्षाद्युदये समस्ते फलं चरोत्थं रविसौम्यगोले। याम्ये विलोमं खलु तत्र यस्माद्गुम्यखण्डं स्वक्षितिजादधस्तात्। नाड्याङ्कयाद्युत्तरयाम्यभागौ गोलस्य तावुत्तरयाम्यगोलौ" सि० शि० उक्ते दिनमानज्ञानोपाये कालभेदे।

**चरखण्ड** न० चरस्य खण्डम्। मेषकर्कटतुलामकररूपेषु राशिषु। चरमेषादयोऽप्यत्र। [ जातित्वात् ङीष्।

**चरट** पुंस्त्री० चर–बा० अटच्। खञ्जनखगे शब्दमा० स्त्रियां

**चरण** पु० चर–करणे ल्युट्। १देहावयवभेदे पादे "अेन धातोश्चरणौ भुवनस्ते" माघः "द्वितीये हस्तचरणौ तृतीये नयनर्हति" मनुः। २वेदैकदेशे शाखापरपर्य्याये "सोम च चरणैः सह" महाभाष्यकाः। चरणव्यूहः। ३म-करैः किरणे। ४श्लोकानां चतुर्थभागे पादे च। "प्रथ-माङ्क्रिसमोयस्य तृतीयचरणोभवेत्" छन्दोम०। "५चतुर्थ-भागमात्रे। "पश्यन्ति खेटाश्चरणाभिवृद्धितः" ज्योति०। ६एक देशमात्रे "अनुलोमितचरणाभिधानात्" शा सू०। भावे ल्युट्। ७अनुष्ठाने "ब्रह्मणा भैक्ष्यचरणम्" "त-पश्चरणैश्चोग्रैः" मनुः। "रमणीयचरणा अभ्याशोह रमणीयां योनिमापद्येरन्" श्रुतिः चरणशब्दस्य आचा-रार्थकत्वेऽपि कर्ममात्रपरत्वमुक्तं शा० सू० भा० तत्रानुशयवचने १८६ पृ० उक्तम् चरण+चतुरर्थ्यां कृशा-श्व। चरणय तन्निर्वृत्तादौ त्रि०

**चरणग्रन्थि** पु० ६त०। गुल्फे हेमच०।

**चरणपर्व्वन्** न० ६त०। गुल्फे त्रिका०।

**चरणव्यूह** पु० चरणानां वेदशाखानां व्यूहोऽत्र। वेद-शाखाविभाजके ग्रन्थभेदे।

**चरणायुध** पुंस्त्री० चरण आयुधं यस्य। कुक्कुटे अमरः "आकर्णं यच्छति स्तं चरणायुधानाम्" शा० द०। स्त्रियां जातित्वात् ङीष्।

**चरणि** पु० चर–अनि। मनुष्ये "सविताः च सत्यं चर-णीनाम्" ऋ०८ २४ २१। "चरणीनां मनुष्याणाम्" भा०।

**चरणिल** त्रि० चरणेन निर्वृत्तादि काश्यादि० चातुरर्थ्याम् इल । चरणनिर्वृत्तादौ [हेमच० ।

**चरणिटि** स्त्री चिरणिटि+पृषो० । चिरिण्ट्यां सुवासिन्यां

**चरण्य** पु० चरण इव शाखा० यत् । चरणतुल्ये पा० ।

**चरण्य** चरण-गतौ कण्ड्वा० सक० पर० सेट् । चरण्यति अचरण्यीत् । वरणगतौ इति पाठान्तरम्

**चरण्यु** त्रि० कण्ड्वा० चरण्य-उण् "चरणशीले "चतुर्न पश्विनौ चरण्युः" ऋ० १०।९५।६ "चरण्युश्चरणशीला" भा० ।

**चरथ** त्रि० चर-गतौ अथ । जङ्गमे । "स्थातुश्चरथमक्तून् व्यूर्णोत्" ऋ० १।६८।१ "चरथं जङ्गमम्" भा० ।

**चरभ** न० कर्म० । मेषकर्कट तुलामकरराशिषु चरराशिषु चरलग्नादयोऽप्यत्र ।

**चरम** त्रि० चर-अमच् । १अन्त्ये २पश्चिमे ३शेषभवे "अब्रवीत् क्रियतामेषा सुतानां चरमा क्रिया" भा० वि० २४अ० । चरमश्चाभवत् । जसि सर्वनामत्वात् वा जसः शीभावः चरमे चरमाः । ४अन्ते न० । "उत्तिष्ठेत् प्रथमं चैव चरमं चैव संविशेत्" मनुः ।

**चरमक्ष्माभृत्** पु० कर्म० । अस्ताचले पश्चिमस्थे अचले । अमरः चरमाचलचरमगिर्यादयोऽप्यत्र ।

**चरव्य** त्रि० चरवे हितः उवर्णान्तत्वात् यत् । चरुहिते तण्डुलादौ सि० कौ० ।

**चराचर** त्रि० चर-अच् नि० । १जङ्गमे । २आकाशे शब्दचि० । चराश्चाचराश्च समाहारद्व० । ३स्थावरजङ्गमरूपे जगति न० मेदि० । "त्वया विसृज्यते विश्वं जगदेतच्चराचरम्" देवीमा० । "एवं स जाग्रत्स्वप्नाभ्यामिदं विश्वं चराचरम्" मनुः । इतरेतरद्व० । ४चरे अचरे च त्रि० । "सर्वे भावाश्चराचराः" रामा० कि० ४२।४४ श्लो०

**चरि** पु० चर इन् । पशौ उणादिकोषः ।

**चरित** त्रि० चर-कर्मणि क्त । १अनुष्ठिते । भावे क्त । २चरित्रे ३स्वभावे । "सर्वं खलस्य चरितं मशकः करोति" हितो० "उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते" । उत्तररामच० । वीरचरितम् । चण्डीग्रन्थे प्रथमादिचरितादि बहुलाः उदा० । "वाग्देवताचरितचित्रितचित्तसद्मा" गीतगो० कर्मणि क्त । ४गते ५प्राप्ते ६ज्ञाते च ।

**चरितार्थ** त्रि० चरितः कृतः प्राप्तोऽर्थः प्रयोजनं येन । १कृतार्थे कृतप्रयोजने २प्राप्तफले सफले । "बभूव कृतसंस्कारा चरितार्थेव भारती" "रामरावणयोर्युद्धं चरितार्थमिवाभवत्" इति च रघुः "प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी" "आश्वासयत् सुचरितार्थपदैर्वचोभिः" इति च कुमा० "अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते" भाषा० ।

**चरित्र** न० चर-इत्र । १अनुष्ठाने २व्रतकर्माद्यनुष्ठाने ३स्वभावे ४चेष्टिते ५लीलादौ च शब्दरत्ना० । ६तिन्तिडीवृक्षे स्त्री शब्दर० ।
"एतद्देशप्रसूतानां सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" "स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च" मनुः । "चरित्रबन्धककृतम्" याज्ञ० । स्वार्थे अण् । चारित्र तत्रार्थे न० पृषो० दीर्घः चरीत्रमप्यत्र न० शब्दरत्ना० ।

**चरिष्णु** त्रि० चर-इष्णुच् । चरणशीले "यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च" मनुः ।

**चरु** पु० चरति होमादिकमस्मात् भीमा० अपादाने चर-उन् । हव्यान्ने होमार्थं पाच्यान्ने "अनवस्रावितान्तरूष्मपाकओदनश्चरुरिति याज्ञिकाः । चरन्त्यापोऽत्र आधारे उन् । २मेघे निघ० । ३चरुपाकपात्रे भाण्डे विश्वः चरुलक्षणमुक्तं कर्मप्रदीपे
"स्वशाखोक्तः प्रशस्तो हृदंष्ट्रोऽकठिनः शुभः । न चातिशिथिलः पाच्यो न चरुः स्याच्च चारसः" चरुपाकप्रकारः कातीये ४।१।५। सूत्रभाष्ययोर्दर्शितो यथा "अपरेण गार्हपत्यं चरुमपूर्वं स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन्" ५सू० । "गार्हपत्यादपरस्यां दिशि अपूर्वं चरुं चरुस्थालीम् तूष्णीं मन्त्रस्याविधानाल्लौकिकवागुच्चारणवर्जम् व्रीहीनुपाजेन स्रुचा प्राचीनावीती दक्षिणाकृत्योऽध्वर्युर्गृह्णीयात् अथ वा अपूर्वां स्रुचम् एवं गृहीत्वा दक्षिणाग्नेरुत्तरतो गार्हपत्यस्य पुरस्तात् दक्षिणाभिमुखस्तिष्ठन्नवहन्ति अत्र शाखान्तरात् दक्षिणाग्नेरुत्तरत उदग्ग्रीवं कृष्णाजिनमास्तीर्य तस्मिन्नुलूखलं निधाय तस्मिन् व्रीहीणां प्रक्षेपं कृत्वा मुसलमादाय दक्षिणाभिमुखस्तिष्ठन्नवहननं करोति व्रीहीणां करोति ततः शूर्पमादायोलूखलाद्व्रीहीन् निष्काश्य निष्पवनेन तुषान्निष्कासयेत्" कर्कः "सकृत् फलीकरोति" ६सू० "लोके तस्य पुनःपुनः क्रियमाणत्वात् सकृदित्युच्यते, कर्कः "सारतण्डुलमपूर्वे श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च" ७सू० "इममेव चरु

भारतखण्डसमीपतृखिन्नतखण्ड सम् अपूर्णं यथा स्तेन चरुणा स्थाल्याः पूरणं न भवति तथा श्रपयित्वा आधा- दितेनाज्ये्नाभिघार्य्य दक्षिणत उद्वास्य दक्षिणाग्नेः पूर्वभागे पात्रदक्षिणमुत्तरत आनीय बर्ह्यं कृत्वा तिष्ठ- न्तितः समिध आधायोपविश्य प्राङ्मुखो मेक्षणेन चरुं जुहोति” कर्कः ।

शाखान्तरे चरुपाकप्रकारो भवदेवभट्टादौ ज्ञेयः । “नवमतश्चरुर्भवति” श्रुतिः । “श्यामाकगावेधुकनैवारयव- मयः” तै० सं० “चरुर्वै देवानामन्नमोदनो हि चरुः” शत० ब्रा० ४।४।२।१। “ते पूष्णो चरुं कुर्व्वन्ति प्रपि- ष्टानामेव कुर्व्वन्ति यथा दन्तकायैवम्” १।७।४।७। “अद्यप्रदन्तकः पूषा पैष्टमत्ति सदा चरुम् । अग्नीन्द्रे- श्वरसाधक्स्त्रीसखण्डोऽत्र विधीयते” छन्दो० । “हे- मपात्रगतं दोर्भ्याम् आददानः मयश्चरुम्” “स तेजो वैष्णवं पत्न्योः विभेजे चरुसंज्ञितम्” “चरोरर्द्धभा- गाभ्यां तामयोजयतामुभे” इति च रघुः ।

चरुचेलिन् चरुचेलमिवास्त्यस्य इनि । महादेवे । “चरु- चेली मिलीमिली” भा० अ० १८६अ० शिवनामोक्तौ

चरुव्रण पु० चरोर्व्रण इव । पिष्टापूपे (पिठाइपिटा) त्रिका० ।

चरुस्थाली स्त्री ६त० । चरुपाकार्थस्थाल्यां “तिर्य्यगूर्द्ध- समिन्मात्रा दृढा नातिबृहन्मुखी । मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते” कर्म्मप्रदीपे तल्लक्षणमुक्तम् ।

चर्च अध्ययने चुरा० उभ० सक० सेट् । चर्चयति-ते अचच- र्चत्-त । चर्चितः चर्चा ।

चर्च उक्तौ भर्त्सने च तु०पर०सक०सेट् । चर्चति अचर्चीत् । उक्तिरत्र विचारार्थपरिभाषणम् ।

चर्च्चरी स्त्री चर्च-बा० अरन् गौरा० ङीष् । १गीतिभेदे । २चन्द्रकुन्तेषे ३करध्वनौ च । “चर्च्चरी गीतिभेदे च केशभिन्नकरशब्दयोः” रुद्रः । ४हर्षक्रीडायां सुभूतिः । ५कार्पटिकानां वादरचने ६तौर्य्यत्रिके ७वसन्तसमय- क्रीड़ायाम् ८चर्च्चर्य्याम् । ९साटोपवाक्ये शब्दार्थचि० १०वर्णवृत्तविशेषे । यथा “हारयुक्तसुवर्णकङ्कणपाणिपङ्क- विराजिता पादनूपुरसङ्गता सुपयोधरद्वयभूषिता । शो- भिता नयनेन पिङ्गलपन्नगाधिपवर्णिता चर्च्चरी तरुणीव चेतसि चाकचीति सुसङ्गता” “अनन्तरे चर्च्चरी” “अकहर ! संहर एह कोवमद आपत्तओ, कविरज धारा धाराअन्तदिसाअहओ । ए ! जझ पुत्तवि भवन्ते जइ पिअ पेक्खिहिसि, तदेव जं तु करीहिसि. तंसु सहीहिसि” “अनन्तरे चर्च्चरी “गन्धुम्मादअ-महुअर- गीएहिं वज्जन्तेहिं परहु अहूरेहिम् । पसरिअ- पवणुवेवत्तिअ-पल्लव-णिअरु सुललिअ-बिविहपआरेहिं णच्चइ कप्पअरु” इति च विक्रमोर्व० ।

स्वार्थे क अत इत्त्वम् । चर्च्चरिकाप्यत्रार्थे

चर्च्चरीक पु० चर्च-ईकन् फर्फरी० नि० । १महाकालभैरवे २केशविन्यासे ३शाके च मेदि० ।

चर्चस् पु० चर्च-असुन् । १निधिभेदे त्रिका० निधिशब्दे दृश्यम्

चर्चा स्त्री चर्च-अङ् । १दुर्गायाम् । चुं० चर्च-भावे अङ् । २विचारणायां ३चिन्तायां ४चार्च्चिक्ये चन्दनादिना देहलेपने च मेदि० । स्वार्थे क । चर्चिका तेष्वर्थेषु चर्चां वेत्ति तत्परं ग्रन्थं वाऽधीते उक्था० ठक् । चार्च्चिक विचारणाभिज्ञे तत्परग्रन्थाध्येतरि च त्रि०

चर्चि स्त्री चर्च-भावे इन् । विचारणायाम् “हे चर्चीतिस्- ष्व्येते एकया गौरतिरिक्तः एकयायुक्तनः” तै० ब्रा० १।२।२।२।

चर्च्चिक्य न० चार्च्चिक्य पृषो० ह्रस्वः । चार्च्चिक्ये हेम०

चर्चित त्रि० चर्च-कर्म्मणि क्त । १चन्दनादिना कृतलेपे देहादौ । “पयोधराश्चन्दनपङ्कचर्चिताः” ऋतुसं० । “भुजं चन्दनचर्चितम्” भा० स० २१७१ श्लो० । भावे क्त २तथालेपने न० ।

चर्त्य त्रि० चृत-कर्म्मणि यत् । हननीये ।

चर्पट पु० स्त्री० चृप-दीप्तौ अटन् । १स्फारे २विपुले ३चपेटे ४पर्पटे च मेदि० । ५आद्यप्रकाशवस्त्रां चपेटाम् स्त्री श- ब्दार्थचि० । ६पिष्टकभेदे पौर्व्यां स्त्री गौरा० ङीष् । त्रिका० । [र्वीत् । चचर्व ।

चर्व गतौ भक्षणे च भ्वा० पर० सक० सेट् । चर्वति अच-

चर्भट पु० चर-क्विप् भट-अच् कर्म्मधा० । १चर्भटौ क- र्कट्यां कृशा० गौरा० ङीष् २हर्षक्रीडायां ३साटोप- वाक्ये ४चर्पायाञ्च हेम० ।

चर्म्म न० चर्म्म साधनतया अस्त्यस्य अच् टिलोपः । चर्म्म- निर्म्मिते फलके (ढाल) भरतः ।

चर्म्मकषा(सा) स्त्री चर्म्म कष(ष)ति कष-अच् । १हिम- देशप्रसिद्धे गन्धद्रव्यभेदे (चामरकषा) २सप्तलातायां चर्म्मकसाप्यत्र भरतः

चर्म्मकार त्रि० चर्म्म तन्निर्म्मितं पादुकादि करोति कृ-अण् उप० स० । १पादुकादिकारके “चाण्डालां तीव-

राज्जातश्चर्म्मकार इति स्मृतः” पराशरोक्ते २वर्णसङ्कीर्ण-जातिभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष्। “चर्म्म-कारस्य द्वौ पुत्रौ गणकोवाद्यपूरकः”। “मनुना तु वैदेह्यां निषादाज्जातस्य कारावराख्यचर्म्मकारसंज्ञोक्ता यथा “कारावरो निषादात्तु चर्म्मकारः प्रसूयते” उत्तरत्र वैदेह्यामेवेत्युक्तेः अत्रापि तस्यामेवेत्यन्वयः। उश-नसा तु “सूताद्विप्रप्रसूतायां सूतोवेणुक उच्यते। नृपायामेव तस्यैव जातोयश्चर्म्मकारकः” इत्युक्तम्। एवञ्च मुनित्रयप्रामाण्यात् त्रिविधैव चर्म्मकारजातिः। “चिकित्सकानां चर्म्म कार्य्यम्” मनुना तेषां वृत्तिरुक्ता। चर्म्म करोति क्विप् चर्म्मकृदप्यत्र। ण्वुल् चर्म्मकारक तत्रार्थे [मधौ मेदि० २चर्म्मकारजातिस्त्रियां च

चर्म्मकारी स्त्री चर्म्म किरति कॄ–अण्। १चर्म्मकषायामो-

चर्म्मकील पु० चर्म्मणि कील इव। गुह्यजाते रोगभेदे (आंचिल) ख्याते रोगे “व्यानो म्लेष्मणा स्वेष्माणम्। करोत्युग्रं त्वचो बहिः। कीलोपमं स्थिरखरं चर्म्म-कीलन्तु तद्विदुः। वातेन तोदपारुष्यं पित्तादसित-रक्तता। स्वेष्मणा स्निग्धता तस्य ग्रथितत्वसवर्णता” भावप्र० तन्निदानाद्युक्तम्। “चर्म्मकीलं जतुमणिं मशकान् तिलकालकान्। उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः” भावप्र०। [पत्न्यां हेमच०

चर्म्मचटका स्त्री चर्म्मणा चटकेव। (चामचिका) अजिन

चर्म्मचटी स्त्री चर्म्म चटति भिनत्ति चट–भेदे अच् गौरा० ङीष्। (चामचिका) अजिनपत्न्यां शब्दरत्ना०। स्वार्थे क। चर्म्मचटिकाप्यत्र। [रोगे राजनि०।

चर्म्मचित्रक न० चर्म्म चित्रयति चित्र–ण्वुल्। श्वेतकुष्ठ-

चर्म्मज न० चर्म्मणि जायते जन–ड। १रोमणि। २रुधिरे च राजनि०।

चर्म्मण्य त्रि० चर्म्मणि भवः शरीरावयवत्वात् यत्। चर्म्म-भवे। “स्वेष्मणा चर्म्मण्यं वाग्वा विष्लिष्टं संश्लेष-येत्” ऐत० ब्रा० ५।२२।

चर्म्मण्वती स्त्री चर्म्मन्+अस्त्यर्थे मतुप् मस्य वः संज्ञायां आसन्दीवदित्यादिना नि०। नदीभेदे। सा च रन्ति देवस्य यज्ञोपकल्पितगोरादिचर्म्मत उत्पन्ना यथाह “महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः। ततश्चर्म्मण्वतीत्येवं विख्याता सा महानदी” भा० शा० २९अ०। “रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्म्मण्वती राजन्! गोचर्म्मभ्यः प्रवर्त्तिता” भा० अनु० ६६अ० नर्म्मदाफलं दक्षिणसिन्धुफलञ्चोक्ता भा० व० ८२अ० तन्माहात्म्यं यथा “चर्म्मण्वतीं समासाद्य नियतो नियताशनः। रन्तिदेवाभ्यनुज्ञातो अग्नि-ष्टोमफलं लभेत्”। अतस्तस्या दक्षिणदेशस्थत्वम्। असं-ज्ञायां तु चर्म्मवत् इत्येव। चर्म्मयुक्ते त्रि० स्त्रियां ङीप्। [राजनि०।

चर्म्मतरङ्ग पु० चर्म्मणि तरङ्ग इव। जरया पलिते वलौ।

चर्म्मतिल त्रि० चर्म्मणि तिला यस्य। चर्म्मोपरिजात कृष्णतिलके (तिल) युक्तदेहादौ [हेम०।

चर्म्मदण्ड पु० चर्म्मणा कृतोदण्डः। कषायाम् (कोड़ा)

चर्म्मदल न० चर्म्म दलयति दल–अण्। क्षुद्रकुष्ठभेदे। “स्फोटैः सकण्डूव्यथनैर्बहोचोषसवेषु तच्चर्म्मदलं वदन्ति” सुश्रुतः। “चर्म्मदलाजगल्लीमशकाश्चिप्पकाः” सुश्रुतः।

चर्म्मदूषिका स्त्री चर्म्म दूषयति दूषि–ण्वुल्। कोठरोगे राजनि०।

चर्म्मद्रुम पु० चर्म्म चर्म्माकारवल्कलं तत्प्रधानोद्रुमः। भूर्ज-वृक्षे राजनि०। तस्य चर्म्माकारवल्कलत्वात् तथात्वम्।

चर्म्मन् न० चर–मनिन्। १देहावरिकायां त्वचि, २इन्द्रियभेदे येन स्पर्श उपलभ्यते तस्मिन् ३फलके (ढाल) च। “त्वगिन्द्रियन्तु वायवीयं यथाह “देहव्यापि त्वगिन्द्रियम्” भाषा०। तस्य तथात्वं सि० मु० समर्थितं यथा “शरीर व्यापकं स्पर्शग्राहकमिन्द्रियं तत्र वायवीयं रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्यव्यञ्जक व्यजनवातवत्”। मनसा त्वग्योगोज्ञानसामान्ये कारणं यथाह तत्रैव “त्वचोयोगो मनसा ज्ञानकारणम्” “त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति। ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा। नाद्यः अनुभव-सामग्र्यभावात्तथाहि चाक्षुषादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादि-प्रत्यक्षं, ज्ञानादेरभावादेव न मानसप्रत्यक्षं, ज्ञानाद्यभावे च नात्मनोऽपि प्रत्यक्षमिति। व्याप्तिज्ञानाभावात् नानु-मितिः, सादृश्यज्ञानाभावात् नोपमितिः, पदज्ञानाभावात् न शाब्दबोधः, इत्यनुभवसामग्र्यभावात् नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। नैवं सुषुप्तिप्राक्कालोत्-पन्नेच्छादिव्यक्तेः सत्त्वव्यक्तेनात्मनश्च प्रत्यक्षप्रसङ्गात् तदतो-न्द्रियत्वे मानाभावात् सुषुप्तिप्राक्काले निर्विकल्पमेव जायत

सूक्ष्मत्वापि प्रमाणाभावात्। अथ स्पार्शनकाले त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले स्पार्शनप्रत्यक्षं स्यात् विषयेन्द्रियसंयोगस्य विषयत्वक्संयोगस्य च तदा सत्त्वात् परस्परप्रतिबन्धात् द्वैकमपि वा न स्यादिति। अत्र केचित् पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य हेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात् कल्प्यते इति। अन्ये तु अनुभवानुरोधात् चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यं चाक्षुषादिप्रत्यक्षकाले त्वचि मनःसंयोगाभावाच्च स्पार्शनप्रत्यक्षमिति वदन्ति”। चर्मत्वचोर्भेद इति तु रहस्यम्। त्वचश्च सप्तविधा यथाह सुश्रुतः “तस्य खल्वेवम्प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमावभासिनी नाम या सर्वं वर्णानवभासयति पञ्चविधाञ्च छायां प्रकाशयति या व्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठाना, द्वितीया लोहिता नाम षोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना, तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्मदलाजगल्लीमशकाधिष्ठाना, चतुर्थी ताम्रा नामाष्टभागप्रमाणा विविधकिलासकुष्ठाधिष्ठाना, पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना, षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्बुदश्लीपदगलगण्डाधिष्ठाना, सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना” यदेतत्प्रमाणं निर्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटसूक्ष्माङ्गुल्यादिषु। यतो वक्ष्यत्युदरेषु व्रीहिमुखेनाङ्गुष्ठोदरप्रमाणमवगाढं विध्येदिति”।

फलकविवृतियुक्तिकल्पतरौ यथा
“शरीरावरकं यत्तु चर्म तदभिधीयते। तत्पुनर्द्विविधं काष्ठचर्म चर्मप्रभेदतः। शरीरावरकत्वञ्च कथिता दक्षता तथा। दुर्भेद्यतेति कथितचर्मणां गुणसंग्रहः। सितो रक्तस्तथा पीतः कृष्णश्चत्वभिधाह्वितः। ब्रह्मादिजातिभेदेन चर्मणां वर्णनिर्णयः। चित्रवर्णस्तु सर्वेषां सर्वदैवोपपद्यते” इति भोजदेवः।

चर्ममालिका स्त्री चर्मनिर्मिता मालिकेव। कशायां ताडन्यां (कोड़ा) शब्दार्थचि०।

चर्मपट्टिका स्त्री चर्मनिर्मिता पट्टिका। (चामाटी) चर्ममवर्णाद्वतायाम् शब्दार्थचि०। [नवमायां जटा०।

चर्मपत्रा स्त्री चर्मेव पत्रं पक्षोऽस्याः। (चामचिका) अजि-

चर्मपादुका स्त्री चर्ममयी पादुका। चर्मकृतपादत्राणे। “ततो ब्रह्मचारी अनेन मन्त्रेण चर्मपादुके पादयोर्निदध्यात्” भवदेवः। [मद्यपात्रभेदे (कुपा) मेदि०।

चर्मपुट(क) पु० चर्ममयं पुटमत्र वा कप्। हतिसंज्ञके चर्म-

चर्मप्रभेदिका स्त्री चर्म प्रभिनत्ति प्र+भिद–ण्वुल् टापि अत इत्त्वम् हेत०। चर्मवेधनेऽस्त्रभेदे अमरः

चर्मप्रसेविका स्त्री चर्मणा प्रसीव्यते प्र+सिव–का० कर्मणि–वुञ् टापि अत इत्त्वम्। भस्त्रायाम् वह्निसन्दीपनार्थे चर्ममये यन्त्रभेदे अमरः।

चर्ममण्डल पु० ब० व०। देशभेदे “अपरान्ताः परान्ताश्च पह्लवाश्चर्ममण्डलाः” भा० भी० ९ अ० देशोक्तौ।

चर्ममय त्रि० चर्मणो विकारः मयट्। चर्मनिर्मिते पात्रादौ स्त्रियां ङीप्। “द्वीपिचर्मावनद्धैश्च व्याघ्रचर्ममयैरपि” भा० भी० ४६ अ०। “यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः” मनुः।

चर्ममुण्डा स्त्री चामुण्डा+पृषो०। दुर्गायां हेमच०।

चर्ममुद्रा स्त्री “वामहस्तं तथा तिर्य्यक् कृत्वा चैव प्रसार्य च। आकुञ्चिताङ्गुलीः कुर्यात् चर्ममुद्रेयमीरिता” तन्त्रसारोक्ते दैवपूजाङ्गे मुद्राभेदे।

चर्मण्वत् त्रि० चर्ममये कवचादौ भवति अभ्यस्यति वा–ण्व। चर्ममयकवचादौ कृताभ्यासे। “कल्पयश्चर्मण्वा अभितोजनाः” ऋ० ८।५।३८। “बाह्वेभ्यश्चर्मजम्” यजु० ३०। १५। पुरुषमेधे देवभेदोद्देशाबध्यपुरुषभेदोक्तौ।

चर्मयष्टि स्त्री चर्ममयी यष्टिरिव। कशादेशाङ्कन्यां (कोड़ा)। शब्दार्थचि०।

चर्मरङ्गा स्त्री चर्मणि रङ्गोऽस्याः। १आवर्त्तकीलतायां विभाण्डराम् राजनि०। २देशभेदे पु० ब० व० देशः इ०श० कूर्मविभागे १४अ० पश्चिमोत्तरदिशि उक्तः। “दिशि पश्चिमोत्तरस्याम्” इत्युपक्रमे ‘गुरुहासककच्छचर्मरङ्गाख्याः”।

चर्मरी स्त्री चर्म–राति रा–क गौरा० ङीप्। आवर्त्तविभागान्तर्गते फलविषे लताभेदे। “कुमुद्वतीरेणुकाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीत्युपक्रमे फलविषाः” सुश्रु०।

चर्मरु पु० चर्म–राति रा–बा० कु। चर्मकारे त्रिका०।

चर्मवत् त्रि० चर्मन्+अस्त्यर्थे मतुप् मस्य वः असंज्ञात्वात् न नि०। १चर्मयुक्ते स्त्रियां ङीप्। “कोऽयं चर्मवतीं चापि चाम्बिः बहुलकारिका” भा० व० १५ अ० २नृपभेदे पु०। “रक्तोमयाचो बभवन्ते नामानि” श्रुतिः। पठ्यते तत्रानिर्युक्तेशको बराद्” सप्तु

क्रमे "चक्षुष्मताचार्ते चर्मे सुवर्णालङ्कारणे" भा० भी० ८१अ० इत्युक्तम् ।

**चर्म्मवसन** पु० चर्म्म गजासुरचर्म्म वसनमस्य । कृत्तिवाससि शिवे कृत्तिवासस्शब्दे २१८८ पृ० दृश्यम् ।

**चर्म्मवृक्ष** पु० चर्म्मप्रधानः चर्म्मतुल्यत्वक्प्रधानो वृक्षः । भूर्जवृक्षे । "खर्जूरा नारिकेलाश्च चर्म्मवृक्षो हरितकी" हरिवं० ११अ० ।

**चर्म्मसम्भवा** स्त्री चर्म्मणि त्वचि सम्भवति सम्+भू–अच् । सूक्ष्मैलायां राजनि० । तत्फलस्य त्वङ्मध्ये सम्भवात्तस्यास्तथात्वम् ।

**चर्म्मसार** पु० चर्म्मणः सारः । रसे राजनि० । भुक्तान्नादेः रसस्य त्वङ्मध्ये जायमानत्वात् तस्य तथात्वम् ।

**चर्म्माम्भस्** पु० चर्म्मणोऽम्भः । चर्म्मान्तरस्थे रसे राजनि० । भुक्तान्नादिरसस्य चर्म्माभ्यन्तरस्थत्वात्तस्य तथात्वम् ।

**चर्म्मार** पु० चर्म्म शिल्पसाधनतया ऋच्छति ऋ–अच् । उप० स० । चर्म्मकारे जटा० ।

**चर्म्मावकर्त्तिन्** पु० चर्म्म अवकृन्तति स्वशिल्पनिर्वाहाय अव+कृती छेदे णिनि । चर्म्मकारे । तदन्नभक्षणं मनुना निषिद्धं यथा "कारुः सुवर्णकाराणां वेणचर्म्मावकर्त्तिनाम्" ।

**चर्म्मिक** त्रि०चर्म्म चर्म्ममयं फलकं (ढाल) । युद्धसाधनतयाऽस्त्यस्य व्रीह्या०वा ठन् । चर्म्ममयफलकेन योद्धरि (ढाली) तस्य भावः कर्म वा पुरोहिता० यक् । चार्म्मिक्य तद्भावे न० ।

**चर्म्मिन्** त्रि० चर्म्म देहावरकं (ढाल) फलकं वा अस्त्यस्य वा इनि ठिलोपः । चर्म्मयुक्ते (ढाली) ख्याते चर्म्मिके । "नागे नागे दश रथा रथेरथे दश रथे रथे । अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्म्मिणः" भा० भी० १० अ० । चर्म्माणि वल्कलान्यस्य सन्ति वा इनि । २भूर्जवृक्षे अमरः । ३कदल्यां ४भृङ्गरीटे च पु० शब्दर० ।

**चर्य्या** स्त्री चर–"परिचर्य्यापरिसर्य्येत्यादि" पा० परोक्तस्याविवक्षातः भावे यत् । १आचारमात्रे "वनवासस्य शूरस्य चर्य्या हि रोचते" रामा० अ० २६ १५। २गतौ "चर्य्यायां कवचत्वदशम्" भा० आ० ६१७ श्लो० । ३ईर्य्यापथस्थितौ परिव्राजकादीनां व्रतानुष्ठाने नियमपरिपालने । "गदमदचरेत्यादि" पा० कर्म्मणि यत् । ४चरणीये आचरणीये त्रि० "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्" मनुः भावे यत् । ५अनुष्ठानरूपे न० ।

**चर्व** भक्षणे दन्तैश्चूर्णने (चिबान) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । चर्वयति-ते चर्वति अचचर्वत्-त अचर्वीत् चर्वयां बभूव आस चक्रे चचर्व । चर्वणं चर्वणा चर्वितः । रसास्वादव्यापारे चर्वणाशब्दे दृश्यम् ।

**चर्व्वण** न०चर्व–भावे ल्युट् । १दन्तैश्चूर्णने (चिबान) २रसास्वादव्यापारभेदे च सा० द० । युच् चर्वणाप्यत्र स्त्री । "प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम्" चर्वणाऽऽस्वादनम् । तत्र"स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः । "निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः" "यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते" इति च सा० द० ।

**चर्व्वा** स्त्री चर्व–अङ् । १चर्वणे २तलप्रहारे शब्दार्थचि० ।

**चर्व्वित** त्रि० चर्व–कर्म्मणि क्त । १भक्षिते दन्तैश्चूर्णिते २आस्वादिते च ।

**चर्व्वितपात्र** न० ६त० । चर्वितस्य ताम्बूलादेस्त्यागार्थम् पात्रम् (पिकदानी) ख्याते पतद्ग्रहे । "ताम्बूलं दर्पणं पानपात्रं चर्वितपात्रकम्" पद्मपु० पा० ख० ।

**चर्व्य** त्रि० चर्व–कर्म्मणि ण्यत् यत् वा । दन्तैश्चूर्णनीये भक्ष्यभेदे आहारशब्दे ८९९ पृ० भावप्रका०वाक्यम् यथा "भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्यात् यथोत्तरम् । चर्व्यं च पिपिठकचणकादि" । "षट्कोटिं ब्राह्मणानाञ्च भोजयामास नित्यशः । चूष्यपेयलेह्यचर्व्यै रतितृप्तिं दिने दिने" ब्र० वै० पु० ।

**चर्षणि** पु० कृष-अनि"आदेश चः" उणा०। मनुष्ये निघ० । "यदकचर्षणीनां वसूनाम्" ऋ० ११७१९ "अर्य्यमृणो मातृका पत्नी तयोश्चर्षणयः सुताः। यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता" भाग० ६।६।४१ श्लोकः, तद्व्याख्यायां चर्षणयः कृताकृतज्ञानवन्तः" श्रीधरः । विचर्षणि विश्वचर्षणीत्यादिना निघण्टौ चर्षतेः पश्यतिकर्म्मसूक्तत्वेन तथार्थत्वम् । अस्यायमभिप्रायः "कृषेरादेश चः" उणा० २।१०२। सूत्रे उज्ज्वलदत्तेन "आदेश चः" इति पठित्वा चर्षणिः कृषधातोरुदाहृतम् । अतश्चर्षणिनिष्पत्तिर्निघण्टूक्तचर्षधातोरेव । सि०कौ० तु "आदेश चः" इति पाठात् कृषधातोरेव तन्निष्पत्तिरिति भेदः । तयोर्युक्तायुक्तत्वे सुधीभिर्भाव्ये । हृदिकारान्तत्वात् स्त्रियां वा ङीप् । २पुंश्चल्यां स्त्री "चर्षणीनामुदगाद्दुःखशोकान्" भाग० १०।२९।२। वाक्यस्य चर्षणीनां पुंश्चलीनाम्

चलित त्रि॰ चल–कर्त्तरि क्त। १कम्पिते अमरः। २गते "चलितवर्त्मपथपरिग्रहः" "चलितः पुरः पतिमुपे-तमात्मजम्" माघः। ३प्राप्ते ४ज्ञाते च त्रि॰। भावे क्त। ५चलने ६गतौ च न॰।

चलु पु॰ चल–उन्। गण्डूषे हेमच॰। [मेदि॰।

चलुक पु॰ चलुना मीयते कन्। १प्रसृतौ २भाण्डभेदे च

चलेषु पु॰ चलो लक्ष्यमप्राप्य इषुर्यस्य। लक्ष्यमप्राप्तबाणके धन्वधारुके। अत्र "उदराश्वेषु क्षेपे" पा॰ इषु शब्दे परे क्षेपे पूर्व्वपूर्व्वपदस्यान्तोदात्ततविधानात् पूर्व्वपदमन्तोदात्तम्।

चवर्ग पु॰च+प्रातिशाख्योक्तः वर्गप्रत्ययः ६त॰ वा। तालुस्थानोच्चरितानां स्पर्शवर्णानां वर्गे (च छ ज झ ञ) वर्णेषु। ततः "वर्गान्ताच्च" पा॰ छ। चवर्गीय तद्वर्गभवे त्रि॰।

चवल पु॰ चर्व–बा॰ अलच् पृषो॰। राजमाषे कलायभेदे शब्दार्थचि॰। [ङीप्। तत्रार्थे शब्दर॰

चवि स्त्री चर्व–इन् पृषो॰। चव्ये (चइ) शब्दर॰। वा

चविका स्त्री चवि+स्वार्थे क। चव्ये अस्याः गुणाश्च "कटूष्णा चविका लघ्वी रोचनी दीपनी मता। जन्तूदरश्वासकासशूलरोगविमर्द्दिनी" राजनि॰। "भेदिनी कफनाशिनी" इत्यधिकं राजवल्लभेनोक्तम्।

चव्य न॰ चर्व–कर्म्मणि यत् पृषो॰। १चविकायाम् तस्य क्लीबत्वमप्याह भरतः। स्वार्थे क चव्यका तत्रार्थे राजनि॰। सा च २वचायां मेदि॰। [राजनि॰।

चव्यजा स्त्री चव्यमिव जायते जन–ड। गजपिप्पल्याम्

चव्यफल न॰ चव्यमिव फलति फल–अच्। गजपिप्पल्याम् राजनि॰।

चव्यादि न॰ "चव्यं त्रिकटुकं पाठा क्षारं कुस्तुम्बुरूणि च। यमानी पिप्पलीमूलमुभे च विड़सैन्धवे। चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्। शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे। प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्। गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति" चक्रदत्तोक्ते घृतभेदे।

चष भक्षे भ्वा॰ उभ॰ सक॰ सेट्। चषति ते अचषीत् अचाषीत् अचषिष्ट चचाष चेषतुः चेषे।

चष वधे भ्वा॰ प॰ सक॰ सेट्। चषति अच–(चा)षीत्।

चषक पु॰न॰ चष–करणे क्वुन् अर्द्धर्चादि। १मद्यपानपात्रे अमरः। तत्र चषादिकं तुल्यत्वेनाभिहितम् यथा "यत् पानपात्रं भूपानां तज्ज्ञेयं चषकं बुधैः। काञ्चनं राजतं चैव स्फाटिकं काचमेव च। इत्थं चतुष्टयं चैव चतुर्णां पृथिवीभुजाम्। इत्यन्यदप्यतं तेषां निर्णयः पाठसम्मतः। षड्विंशतिगुणितं रत्नैश्चतुर्वर्णैः समन्वितम्। भार्त्तिकं तापकांसं वा सर्वेषामनुज्यते। काष्ठजं धातुजं चैवं जाङ्गलादिमहीभुजाम्। यदन्यत्तोयपानादिपात्रं पृथ्वीभुजां भवेत्। एवं तत्रापि नियम इति भोजस्य सम्मतः" "आननैः परिवृतं चषकान्तः" माघः। कर्म्मणि क्वुन्। २मधुनि, ३मद्यभेदे च न॰ मेदि॰ [च त्रि॰ कौ॰।

चषति पु॰ चष–भक्षे वधे वा भावे क्तिन्। १भक्षे २वधे

चषाल पु॰न॰ चष–आलच् अर्द्धर्चादि। यूपकटके यज्ञपशुबन्धनार्थे यूपमध्यदेये वलयाकारे काष्ठमये लौहमये वा पदार्थे अमरः। तल्लक्षणादिकमुक्तं का॰ श्रौ॰ ६।१।२८। इत्यादौ "चषालञ्चाष्टं पृथमात्रमष्टाश्रि मध्यसंगृहीतम्" २८सू॰ "यूप परिमाणमानन्तरं यदवशिष्टं पृथक्कृतमग्रम् ततश्चषालं कर्त्तव्यम् प्रकारिताङ्गुलिः पाणिरामणिबन्धनात् पृथक् इत्युच्यते चषालमिति संज्ञा यं सम्प्रदायार्थ "या चषाले-चषात्" इत्यादौ। अष्टाश्रि अष्टकोणम् तदपि तथाऽप्यष्ट-कोणं कुर्यात् तथैव। मध्यकरमध्ये संकुचितम्" कर्कः। "अर्द्ध मध्ये प्रतिमुञ्चति" २९सू॰ "तच्चषालं यूपस्याग्रे अर्द्धं प्रतिमुञ्चति अतएवोर्द्धप्रतिमोकविधानाच्चषालस्य तथा वेधः कार्यः। प्रतिमुञ्चतीति वचनात् चूड़ाग्रो यूपः चषालं च सछिद्रमिति गम्यत इति हरिस्वामिनः तथा चापस्तम्बः "मूलतोऽतष्टमपरम् अष्टाश्रिरष्ट पूर्वोऽग्रतोऽणीयान् प्रज्ञाताष्टाश्रिरिति" कर्क॰ "द्व्यङ्गुलं त्र्यङ्गुलं वा तदतिक्रान्तं यूपस्य" ३० सू॰ "यूपस्य यूपाग्रस्य द्व्यङ्गुलं त्र्यङ्गुलं वा चषालं तदतिक्रान्तं चषालच्छिद्राग्रवेधादतिक्रान्तं भवति अतिक्रम्योर्द्ध निःसृतं भवति तथा चषालस्योर्द्धं प्रवयं कर्त्तव्यम् यथा चषालो यूपाग्रादधो द्व्यङ्गुले त्र्यङ्गुले वा तिष्ठतीत्यर्थः" कर्कः "भूपवालबलिताङ्गुलीयकम्" माघः

चह कल्के (प्रतारणे) भ्वा॰ पर॰ सक॰ सेट्। चहति अचहीत्। चचाह चेहतुः।

चह कल्के (प्रतारणे) अद॰ चुरा॰ उभ॰ सक॰ सेट्। चहयति–ते अचचहत् त। चहयां, बभूव आस–चकार चक्रे।

चक्रे कल्के प्रतारणे चुरा० उभ० सक० सेट्। षष्ठा० चक्रयति ते अचीचक्रत्–त ।

**चाकचक्य** न० चक–यङ् चकः प्रकारे द्वित्वं चकचकस्तस्य भावः ष्यञ्। उज्ज्वलतायाम्। "नहि लौकिकशुक्तावप्यो प्रातिभासिकरजतोत्पादिका किन्तु विकलस्यैव। तथाहि। काचादिदोषदूषितलोचनस्य पुरोवर्त्ति द्रव्यसंयोगादिदमाकारा चाकचक्याकारा च काचिदन्तःकरणवृत्तिरुदेतीति" "चाकचक्यसंदर्शनसमुद्बुद्धरजतत्वसंस्कारसध्रीचीना" इति च वेदान्त० प०। पृषो०। चाकचिक्यमप्यत्र शब्दार्थचि०।

**चाकचिका** स्त्री चक–यङ् चाकं दीप्तिं चिनोति चि–क्विप् तथाभूता चीयते चि–बा० ड। श्वेतगुञ्जायां रत्नमा०।

**चाक्र** त्रि० चक्रेण निर्वृत्तम् अण्। चक्रनिर्वृत्ते "चाक्रमौषकमित्येवं संग्रामं रणवृत्तयः" हरिवं० १०० अ०।

**चाक्रवर्म्मण** पु० चक्रवर्म्मणोऽपत्यम् अण् न टिलोपः। चक्रवर्म्मणोऽपत्ये व्याकरणाचार्य्यभेदे। "कपचाक्रवर्मणस्य" उणा० १।१।२सू०। "ई३ चाक्रवर्मणस्य" पा० ६।१।१२ सू०। [ढञ्। चक्रवाकसमीपादौ।

**चाक्रवाकेय** त्रि० चक्रवाकस्यादूरदेशादि चतुरर्थ्यां सख्या०

**चाक्रायण** पु० चक्रस्य गोत्रापत्यम् अश्वादि० फञ्। चक्रस्य गोत्रापत्ये उषस्तौ "मटचीहतेषु कुरुषूषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राण उवास" छा० उ०।

**चाक्रिक** त्रि० चक्रेण समूहेन यन्त्रभेदेन चक्रयुक्तशकटेन वा चरति ठक्। संघीभूय मिलित्वा स्तुतिपाठके १घाण्टिके अमरः "पिशुनानृतिनां चैव तथा चाक्रिकबन्दिनाम्" याज्ञ०। "चाक्रिको घोषयामास पुरुषो मृष्टकुण्डलः" हरिवं० १५८ अ०। २तैलकारे हेमच० ३शाकटिके (गाडोयान) ख्याते च शब्दार्थचि० "भिक्षुकांश्चाक्रिकांश्चैव क्लीबोन्मत्तान् कुशीलवान्। श्राद्धान् कुर्य्यादरण्येऽजो दोषाय ते स्युरन्यथा" भा० शा० ६८ अ०। [ ढञ्। चक्रनिर्वृत्तादौ।

**चाक्रेय** त्रि० चक्रेण निर्वृत्तादि चक्र+सख्या० चतुरर्थ्यां

**चाक्षुष** न० चक्षुषा ख्याते चक्षुस्+शैषिकोऽण्। चक्षुर्योग्ये १रूपादौ २तद्वति त्रि०। तद्ग्राह्यविषयाश्च चक्षुर्विषयशब्दे २८४२ पृ० दृश्याः। चक्षुषा निर्वृत्तः अण्। ३प्रत्यक्षे न०। तज्ज्ञाने चक्षुषः करणत्वेऽपि विषयभेदेन तस्य व्यापारभेदा भाषा० उक्ता यथा "द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः। द्रव्येषु समवेतानां तथा तत्समवायतः। तत्रापि समवेतानां शब्दस्य समवायतः। तद्वृत्तीनां समवेतसमवायेन तु ग्रहः"। द्रव्यचाक्षुषं प्रति चक्षुःसंयोगो व्यापारः। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः। द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः"। चक्षुषोऽपत्यम्। ४चक्षुर्नामकस्य रिपुञ्जयनृपस्य पुत्रे षष्ठे मनुभेदे तत्कथा यथा "चक्षुषा ब्रह्मदौहित्र्यां वीरिण्यां स रिपुञ्जयः। वीरणस्यात्मजायान्तु चक्षुर्मनुमजीजनत्। मनुर्वै राजकन्यायां नड्वलायां स चाक्षुषः। जनयामास तनयान्दश शूरानकल्मषान्। ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् कविः। अग्निष्टुदतिरात्रश्च सुद्युम्नश्चापराजितः। अभिमन्युस्तु दशमो नड्वलायामजायत" मत्स्यपु० ४अ०। "षष्ठं ते सम्प्रवक्ष्यामि तन्निबोध नराधिप!। भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा। अतिनामा सहिष्णुश्च सप्तैते तु महर्षयः। चाक्षुषस्यान्तरे तात! मनोर्देवानिमान् शृणु। आद्याः प्रभूता ऋभवः पृथुकाश्च दिवौकसः। लेखा नाम महाराज! पञ्च देवगणाः स्मृताः। ऋषेरङ्गिरसः पुत्रा महात्मानो महौजसः। नाड्वलेया महाराज! दश पुत्रास्तु विश्रुताः। ऊरुप्रभृतयो राजन्! षष्ठं मन्वन्तरं स्मृतम्" हरि० ७अ०

**चाक्ष्म** त्रि० चक्ष–बा० म पृषो०। द्रष्टरि "चाक्ष्मो यदाचं भरते मती" ऋ० २।२४।९। "चाक्ष्मः सर्वस्य द्रष्टा" भा०।

**चाङ्ग** पु० चीयते चि–ड चमङ्गमस्य। १चाङ्गेर्य्यां रायमु०। चमङ्गं तदवयवो दन्तोऽस्यात्। दन्तपटुत्वे शब्दार्थचि०।

**चाङ्गेरी** स्त्री चाङ्गं दन्तपटुत्वमीरयति ईर–अण् उप० स० गौरा० ङीष्। अम्ललोणिकायाम् (आमरुल) अमरः। "चाङ्गेरी दीपनी रुच्या रूक्षोष्णा कफवातनुत्। पित्तलाम्ला ग्रहण्यर्शःकुष्ठातीसारनाशिनी" भावप्र०।

**चाङ्गेरीघृत** न० चक्रदत्तोक्ते चाङ्गेरीयुक्ते घृतभेदे तत्पाकविधिर्यथा "नागरं पिप्पलीमूलं चित्रकं हस्तिपिप्पली। श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यवानिका। चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम्। चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत्। अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्। गुदभ्रंशार्त्तिमानाहं घृतमेतद् व्यपोहति" चक्रदत्तः

**चाट** पु० चट–भेदे अच्। आदौ विश्वासमुत्पाद्य पश्चात् धनापहर्त्तरि चौरे "चाटचारभटादिषु दत्तं भवति निष्फलम्" स्मृतिः। "चाटतस्करदुर्वृत्तमहासाहसिकादिभिः। पीड्यमानाः प्रजारक्ष्याः कायस्थैश्च विशेषतः" याज्ञ०। "चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति" मिताक्षरा

**चाटपुट** पु० "गुरुर्लघु प्लुतश्चैव भवेच्चाटपुटाभिधः" सङ्गीतदामोदरोक्ते तालभेदे।

**चाटु** पु०न० चट–ञुण्। १प्रियवाक्ये २मिथ्याप्रियवाक्ये (खोषामुदेरकथा) च। "कुर्वन् चाटुशतान्यपि अव्यक्तकथया गिरा" हरिवं०२०। "नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः" सा० द०। स्वार्थे क। अत्रैवार्थे "विस्रब्धचाटुकशतानि रतान्तरेषु" सा० द०

**चाटुकार** त्रि० चाटुं करोति। हेत्वादौ प्राप्तस्य टस्यापवादेन "न शब्दश्लोकेत्यादिना" पा० अण्। प्रतत चाटुवाक्यकर्त्तरि। "चाटुकारमपि प्राणनाथं रोषादपास्य या" सा० द०।

**चाटुपटु** पु०७त०। भण्डे (भाँड़) हारा०।

**चाटु(टू)लोल** त्रि० चाटुषु लोलः (उल्लोलः। (खोषामुदे) चाटुकारे हारा०।

**चाटुवटु** पु० ७त०। विदूषके क्रीडासहचरे भण्डे।

**चाटूक्ति** स्त्री ६त०। प्रियकथने। चाटुवाक्यस्योक्तिर्यत्र। २सेवायाम् हारा०। [व्याख्याने।

**चाणक** पुंस्त्री चणकस्य क्षेत्रः अण् यलोपः। चाण-

**चाणकीन** न० चणकस्य भवनं क्षेत्रं ख । चणकोत्पत्तियोग्यक्षेत्रे।

**चाणक्य** पु० चणकस्य मुनेर्गोत्रापत्यम् गर्गा० यञ्। १वात्स्यायने चन्द्रगुप्तमन्त्रिणि कौटिल्ये "नव नन्दा भविष्यन्ति चाणक्योनान् हनिष्यति" विष्णु पु०। चन्द्रगुप्तमन्त्रे इत्यम् तद्धि नन्दवंशीयमुत्खातेभ मौर्य्यं चन्द्रगुप्तं राज्येऽभिषिक्तवान्। इत्यत् कथायां तद्विवर्तः। चाणक्येन प्रोक्तम् अण्। तत्तत्प्रणीते २नीतिशास्त्रभेदे च। "चाणक्यं सारसंग्रहम्" चाणक्यम्। चणक+स्वार्थे ष्यञ्। ३चणकशब्दार्थे।

**चाणक्यमूलक** न० चणक एव चाणक्यम् तदिव मूलमस्य। (चणकमूली) ख्याते मूलकभेदे। शब्दार्थचि०।

**चाणू(नू)र** पु० कंसानुचरे मल्लयुद्धाभिज्ञेऽसुरभेदे। "नागं कुवलयापीडं चाणू(नू)रं मुष्टिकं तथा" हरिवं०१२अ०। "वराहश्च किशोरश्च मल्लौ दानवसत्तमौ। मल्लौ रङ्गगतौ तत्र यातौ चाणू(नू)रमुष्टिकौ" हरिवं०५५अ०। अस्य दन्त्यनकारमध्यतेति केचित्।

**चाणू(नू)रसूदन** पु० चाणू(नू)रं सूदयति सूदि–ल्यु। वासुदेवे कृष्णे तद्वधकथा हरिवं० ८७अ०।

"ततः क्रोधाभिताम्राक्षः कंसः परमकोपनः। चाणू(नू)रमादिशद्युद्धे कृष्णेन सुमहाबलम्" इत्युपक्रमे "दोर्भ्यां-मानस्य कृष्णस्तु चाणू(नू)रं पूर्वजीविनम्। भ्रामयन् हित्वा मूर्ध्नि बाहुनाहत्य जानुना। निःसृते चास्य रुधिरे तस्य नेत्रे सलज्जने। तापनीये यथा पट्टे कक्षोपरि विलम्बिते। पपात स तरङ्गस्य मध्ये निःसृतलोचनः। चाणू(नू)रो विगतप्राणो जीवितान्ते महीतले"। चाणू(नू)रमर्दनादयोऽप्यत्र।

**चाण्ड** पुंस्त्री चण्डस्यापत्यं शिवा० अण्। १चण्डस्यापत्ये। चण्डस्य भावो युवा० अण्। २चण्डतायाम् न०।

**चाण्डाल** पुंस्त्री चण्डाल एव स्वार्थे अण्। चण्डालशब्दार्थे अमरः। स्त्रियां जातित्वात् ङीप्।

**चाण्डालकि** पु० स्त्री चाण्डालस्यापत्यम् इञ् "व्यासवरुडनिषादचाण्डालेत्यादि" पा० अकङ्। चण्डालापत्ये।

**चाण्डालिका** स्त्री चण्डालेन निर्वृत्ता ठक्। वीणाभेदे अमरः। चण्डालेन कृता कुला० अण्। २चण्डालकृतवस्तुमात्रे त्रि०

**चाण्डालिकाश्रम** न० भारतप्रसिद्धे तीर्थभेदे "कोकामुखे विगाह्याथ गत्वा चाण्डालिकाश्रमे" भा०आनु०२५अ०।

**चाण्डाली** स्त्री चाण्डमाकाति आ+ला–क गौरा० ङीप्। १लिङ्गिनीलतायां राजनि० जातौ ङीप्। २चाण्डालजाति स्त्रियाञ्च।

**चातक** पुंस्त्री चत–याचने कर्त्तरि ण्वुल्। सारङ्गे स्वनामख्याते खगभेदे स्त्रियां जातित्वात् ङीष्। अयञ्च पक्षी लघ्वाद्वर्गेषु सुश्रुते पठितः। "लघ्वाशिनो विकिरास्तेषु क्रा" "मधुराः कषाया दोषशमनाश्चेति" इत्याद्युक्तसद्भावालोकाः। "जगदवन्त्यभूः बनितचातकार्त्तस्वराः" माघः। "किं चातकः फलमपेक्ष्य सदम्बुपातम्" उद्भटः।

**चातकानन्दन** पु० चातकमानन्दयति आ+नन्द–णिच्–ल्यु। १वर्षाकाले राजनि०। २मेघे। इष्टजलपानस्य चातकप्रतत्वेन मेघस्य तथात्वम्।

**चातकाष्टक** न० काव्यभेदे काव्यसंग्रहे दृश्यम्।

**चातन** न० चत–णिच्–ल्युट्। १बाधने २पीडने च।

**चातुर** त्रि० चतुर एव स्वार्थे अण्। १चतुरे २नियन्तरि ३नेत्रगोचरे मेदि०। चतुर्भिरुह्यते शैषिकोऽण्। "च-तुश्चक्रयुक्ते ४शकटे न० सि० कौ०

**चातुरक्ष** न० चतुर्भिरक्षैर्निर्मायते अण्। १क्रीडाभेदे २उपधानभेदे (गालवालिश) पु० मेदि०।

**चातुरर्थिक** पु० चतुर्षु अर्थेषु विहितः ठक्। "तद-स्मिन्नस्तीति देशे तन्नाम्नि" ४।२।६७। "तेन निर्वृत्तम्" ६८। "तस्य निवासः" ६९। "अदूरभवश्च" ७० पा० सूत्रचतुष्कोक्तार्थेषु विहिते प्रत्ययभेदे। "जनपदे लुप्" पा०। जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात्" सि० कौ०।

**चातुराश्रमिक** त्रि० चतुर्षु आश्रमेषु विहितः ठक्। ब्रह्मचर्य्याद्याश्रमविहिते धर्मे। "चातुर्विद्यं तथावर्ण्यं चातुराश्रमिकान् परम्। तानहं संप्रवक्ष्यामि शाश्वतान् लोकभावनान्" भा० आ० ६५अ०।

**चातुराश्रम्य** न० चत्वार आश्रमाः संज्ञात्वात् कर्म्म० ततः ब्राह्मणा० स्वार्थे ष्यञ्। ब्रह्मचारिगृहस्थवानप्रस्थ-भिक्षुकरूपेषु आश्रमेषु "चातुर्विद्यं चातुर्होत्रं चातु-राश्रम्यमेव च" भा० शा० ४६अ०।

**चातुरिक** पु० चातुरीं वेत्ति ठक्। सारथौ जटाधरः।

**चातुरी** स्त्री चतुरस्य भावः ष्यञ् षित्वात् ङीष्यलोपौ। चतुरतायां "तव्रुडचातुरीतुरी" नैष०

**चातुर्जातक** न० चतुर्जातकमेव स्वार्थेऽण्। गुडत्वगेला नागकेशररूपे गन्धचतुष्के राजनि०।

**चातुर्दश** न० चतुर्दश्यां दृश्यते शैषिकोऽण्। १रक्षसि सि० कौ०। चतुर्दश्यां भवः सन्धिवेला० अण्। २चतु-र्दशीभवे त्रि०

**चातुर्दशिक** पु० चतुर्दशीम् अनध्यायेऽधीते ठक्। चतु-र्दश्यामध्येतरि। "शिष्यं हन्ति चतुर्दशी" भतुना तस्या अनध्यायतोक्तेस्तथात्वम्।

**चातुर्भद्र** न० चतुर्भद्रमेव स्वार्थे अण्। नागरातिविषा-मुस्तामृतरूपे द्रव्यचतुष्के राजनि०।

**चातु(र्थ)र्थिक** पु० चतुर्थे चतुर्थेऽह्नि भवः ठक् वुञ् वा। चतुर्थचतुर्थदिनजाते ज्वरभेदे "चातुर्थ(र्थि)कोज्वरोद्रो झान्ये चैव ज्वरास्ततः। अम्लफलं हरिद्रा च सर्प-श्चैव च वल्कलम्। सर्वज्वराणां धूपोऽयं हर-चातुर्थ(र्थि)कस्य च" गारुडे १८७अ०।

**चातुर्वर्ण्य** न० चत्वारो वर्णाएव चतुर्वर्णा० स्वार्थे ष्यञ्। ब्राह्मणादिषु चतुर्षु वर्णेषु "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" गीता।

**चातुर्भद्रावलेह** पु० चतुर्भिर्भद्रैर्निर्वृत्तः अण् कर्म्म०। "कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह। कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्" "चातुर्भ-द्रोक्ते अवलेहभेदे।

**चातुर्भौतिक** त्रि० चतुर्भिः पृथिव्यप्तेजोवायुभिर्निर्वृत्तः ठक् चतुर्म०द्विपदवृद्धिः। चतुर्भिर्भूतैर्निष्पादिते देहादौ नैयायिकादिमते आकाशस्यारम्भकत्वाभावात् चार्वाक-मते आकाशस्याभावात् भौतिकानां चतुर्भूतारब्धता। वेदान्त्यादिमते देहस्य पाञ्चभौतिकत्वमिति भेदः। यद्यपि मनुष्यदेहस्य पार्थिवत्वं नैयायिकैरङ्गीकृतं तथापि अन्यभूतानां तत्रोपष्टम्भकत्वात् चातुर्भौतिकत्वम् इति विवेकः।

**चातुर्महाराजिक** पु० चत्वारो महाराजिकाः आकार स्येनास्त्यस्य प्रज्ञा० अण्। परमेश्वरे "महाराजिक चातुर्महाराजिक" भा० शा० ३४० अ० नारदकृतविष्णु-स्तुतौ। महाराजिकानां च चतुःसंख्यकगणदेवतात्वात् तस्य तदात्मकत्वेन तथात्वम्।

**चातुर्मास** त्रि० चतुर्षु मासेषु भवः असंज्ञायाम् अण्। चतुर्षु मासेषु भवे। २दृष्टौ ३पौर्णमास्यां च स्त्री ङीप्। संज्ञायान्तु यथे ण्यः। चातुर्मास्य इत्येव तच्छब्दे दृश्यम्

**चातुर्मासिक** त्रि० चतुरोमासान् व्याप्य ब्रह्मचर्य्यमस्य ठक्। चतुर्मासव्यापकब्रह्मचर्य्ययुक्ते कर्त्तरि। यज्ञे तु "चतुर्मासात् ण्योयज्ञे" वार्त्ति० ण्य चातुर्मास्य इत्येव।

**चातुर्मास्य** त्रि० चतुर्षु मासेषु भवोयज्ञः "चतुर्मासात् ण्योयज्ञे" वार्त्ति० ण्य। चतुर्माससाध्ये यज्ञभेदे। चातुर्मास्ये च चत्वारि पर्व्वाणि वैश्वदेववरुणप्रघासशाक मेधशुनासीरीयसंज्ञानि। तत्कर्त्तव्यप्रयोगादि का० श्रौ० ५अध्यायादौ दृश्यम्। तदारम्भकालश्च फाल्गुनीपूर्णि-मोत्तरं प्रतिपदि तत्रोक्तः। २वार्षिकचातुर्मास्यकर्त्तव्ये व्रते च यथाह वराहपु० "आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा। चातुर्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे। अभावे तु तुलार्केऽपि मन्त्रेण नियतं व्रती। कार्त्तिके शुक्ल द्वादश्यां विधिवत् तत् समापयेत्। चतुर्वापि हि तत्रोर्व्वं चातुर्मास्यं व्रतं नरः। कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत्"। मात्स्ये "चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि। मधुस्वरोभवेन्नित्यं नरो गुड

विसर्जनात् । तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागात् शत्रुनाशः प्रजायते । लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन् । सदा मुनिः सदा-योगी मधुमांसस्य वर्जनात् । निराधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते । एकान्तरोपवासेन विष्णु लोकमवाप्नुयात् । धारणात्नखलोम्नाञ्च गङ्गास्नानं दिने दिने । ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते । घृत त्यागात् सुलावण्यं सर्वस्निग्धवपुर्भवेत् । फलत्या-गेन मतिमान् बहुपुत्रश्च जायते । नमोनारायणायेति नक्ताऽनशनजं फलम् । पादाभिवन्दनाद्विष्णोर्लभेद्गो-दानजं फलम् । एवमादिव्रतैः पार्थ ! तुष्टिमायाति केशवः । "अत्रैव यतिधर्मविषये काठकसूत्रम् । "एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम् । वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्" । एतद्यतिविषयम् । "अष्टौ वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी" इति शङ्खोक्तेः । "चातुर्मास्यगते या (द्वितीया) च" ति॰त॰ अनध्यायोक्तौ

**चातुर्मास्यद्वितीया** स्त्री "आषाढ़े फाल्गुनोर्जेषे या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः" इति स्मृत्युक्ते आषाढादिद्वितीयाचतुष्के

**चातुर्य्य** न॰ चतुरस्य भावः ष्यञ् । चतुरतायां दक्षतायाम् "चातुर्य्यमुज्ज्वलमनोभवया रतेषु" सा॰ द॰ "संभोगसङ्गेच चातुर्य्यैर्हावलास्यमनोहरैः" भा॰ आ॰ १८०५ ।

**चातुर्वर्ण्य** न॰ चत्वारो ब्राह्मणादयोवर्णा एव स्वार्थे ष्यञ् । ब्राह्मणादिषु चतुर्षु १वर्णेषु "चातुर्वर्ण्यं मया सृष्टमिति" गीता । भावे—ष्यञ् । २चतुर्वर्णधर्मे । वर्णभेदेन धर्म-भेदाः शङ्खेन दर्शिताः यथा ।

"चातुर्वर्ण्यं द्विजार्थाय मनुः शास्त्रमथाकरोत् । यजनं याजनं दानं तथैवाध्यापनक्रियाम् । प्रतिग्रहञ्चाध्ययनं विप्रः कर्म्माणि कारयेत् । दानमध्ययनञ्चैव यजनञ्च यथाविधि । क्षत्रियस्य तु वैश्यस्य कर्म्मेदं परिकीर्त्तितम् । क्षत्रियस्य विशेषेण प्रजानां परिपालनम् । कृषिगोरक्ष वाणिज्यं वैश्यस्य परिकीर्त्तितम् । शूद्रस्य द्विज-शुश्रूषा सर्व्वशिल्पानि चाप्यथ । क्षमा सत्यं दमः शौचं सर्व्वेषामविशेषतः । ब्राह्मणः क्षत्रियो वैश्य स्त्रयोवर्णा द्विजातयः । तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिबन्धनम् । आचार्य्यस्तु पिता प्रोक्तः सावित्री जननी तथा । ब्रह्मक्षत्रविशाञ्चैव मौञ्जी-बन्धनजन्मनि । विप्राः शूद्रसमास्तावद्विज्ञेयास्तु विच-क्षणैः । यावद्वेदे न जायन्ते द्विजाज्ञेया स्तु तत्परम्" । "ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्चेति वर्णाश्चत्वारः । तेषामाद्याद्विजातयः । तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत् क्रियासमूहः । तेषाञ्च धर्माः, ब्राह्मणस्याध्यापनं क्षत्रियस्य शस्त्रनिष्ठता वैश्यस्य पशुपालनं शूद्रस्य द्विजातिशुश्रूषा । द्विजानां यजनाध्ययने । अथैतेषां वृत्तयः ब्राह्मणस्य याजनप्रतिग्रहौ, क्षत्रियस्य क्षिति-त्राणं, कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य, शूद्रस्य सर्वशिल्पानि । आपद्यनन्तरा वृत्तिः" विष्णु सू॰ ।

**चातुर्होतक** पु॰ चतुर्होतृप्रतिपादकग्रन्थस्य व्याख्यानः ऋदन्तात् ठञ् । चतुर्होतृप्रतिपादकग्रन्थव्याख्याने । चतुर्होतृणां कर्म्म अण् । चातुर्होत्र चतुर्णां होतॄणां कर्म्मणि । चतुर्होतृशब्दे उदा॰ ।

**चातुष्टय** पु॰ चतुष्टयं कलापसूत्रवृत्तिं वेत्ति अधीते वा अण् । "सूत्राच्च कोपधात्" पा॰ कोपधात् प्रत्ययस्य लुको-विधानात् अस्य च कोपधत्वाभावात् न लुक् । चतुष्टय शब्दभिज्ञे

**चातुष्प्राश्य** न॰ चतुर्भिरध्वर्य्युब्रह्मादिभिर्ऋत्विग्भिः प्राश्यम् ततः स्वार्थेऽण् । चतुर्णामृत्विजां भोजनपर्य्याप्ते ओदने । "चातुष्प्राश्यमोदनं पचन्ति" शत॰ब्रा॰२।१।४।४। "दर्शपौर्णमासानीजानोदक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत्" का॰ श्रौ॰ ४।६।१०।

**चात्र** न॰ चात-करणे ष्ट्रन् । अग्निमन्थनयन्त्रावयवभेदे । चान्द्रायणशब्दे ६१ पृष्ठे दृश्यम् । तत्र च पृष्ठे चत्र-मिति पाठः प्राचीनहस्तलिखितग्रन्थपाठानुसारेण प्रमादात् मुद्रितः वस्तुतः चात्रमित्येव पाठः साधुः का॰ श्रौ॰ ४।८।२६ सूत्रभाष्ये तत्स्वरूपादिकम् उक्तं यथा ।

"अग्ने पुरस्तात् प्रत्यक्शूचे स्थिते मन्थनं कुर्य्यात् । तत्र च प्रथममधरारणिमुत्तराग्रां निधाय उत्तरारण्या ऐशानदिग्भागादष्टाङ्गुलदीर्घं द्व्यङ्गुलविपुलं प्रमन्थं छित्त्वा तस्य मूलं चात्रबुध्ने प्रवेश्य अधरारण्या मूला-दष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुलचतुष्टयपरिमिते पूर्वारण्यन्ते मन्थनं कृत्वा चात्रबुध्नोतस्य प्रमन्थस्याग्रं तत्र निधाय चात्रस्य ओविल्याख्यशङ्कोपर्य्युदगग्रामोवीलीं निधाय यन्त्रं धार-यित्वा चात्रं नेत्रेण प्रदक्षिणं निर्वेष्टयित्वा तथा मन्थनं कुर्य्यात् यथा जातोऽग्निः प्राच्यां पतति तत्र यज-मानः प्राङ्मुखो मन्थनकरणं करोति पत्नी चात्र

नेत्रेण निर्वर्त्तयित्वा मन्थनं करोति तथा शाखान्तरादध्य-
र्द्धं च तस्मादध्यर्द्धं प्रत्यङ्मुखोऽभिमन्थतीति”। चात्वं च
खादिरं द्वादशाङ्गुलदीर्घं मर्द्दनम् अग्रे कीलकीलयुक्तम्
मूले प्रमन्थाधारधयनार्थगर्त्तयुक्तम् मूलेऽग्रे च कोष्ठ
पट्टिकया संयुक्तं कार्यम्”। “ओवीली च खादिरी
द्वादशाङ्गुलदीर्घा चतुरङ्गुलविपुलाधोभागे यथा चात्वाप-
स्थितकीलकोपरिस्थापनार्थकोष्ठपट्टिकायुक्ता उपरि-
भागे मर्द्दना च कार्या। नेत्रं च गोवालवल्कल-
कृतं व्यामप्रमाणं कार्यम्। केचित् प्रमन्थाग्रेण
मन्थन्ति, अपरे तु मूलेन”

**चात्वाल** पु० चत–वालच्। १यज्ञकुण्डे २दर्भे ३उत्ताने
४उत्कटे च विश्वः ५उत्तरवेद्यग्रे चतुरस्रूपे ६गर्त्तावटे
च “चात्वालोत्करायन्तरेण सञ्चरः” का०श्रौ० १।२।४२।
“चात्वालश्च उत्करश्च चात्वालोत्करौ तौ अन्तरेण
तयोरन्तरालेन सर्वेषां विहितकार्याणां संचरः गमना-
गमनमार्गो भवति। अयं च सोत्तरवेदिकेषु पशुयागप-
चमहाहविःपशुसोमेषु ज्ञेयः चात्वालस्यैव अभावात्
सोत्तरवेदिकेषु सर्वेष्वनेनैव मार्गेण गमनागमने कार्ये” कर्कः।
“तद्चात्वालं परिलिखति या चात्वालस्य मात्रा नास्ति
मात्रास्ति यत्रैव स्वयं मनसा मन्येत तावतोत्करं तद्चात्वालं
परिलिखेत्” शत० ब्रा० ३।५।१।२६। “या चात्वालस्य
मात्रा वेदोत्तरवेदैरुक्ता सैवेतदर्थः चात्वालखननोत्पन्न-
दैव मृदोत्तरवेदिकरणात्” भा०।
“चात्वालं चात्वालवत्त्वं” आश्व० श्रौ० १।१।६। “चात्वा-
लोत्पादकः पशुसोमादिष्वस्ति येषु उत्तरवेद्यर्थं यत्र
मृत् चात्वाल्लिप्यते तत्त्वं” ना० रा० उक्तः उत्तरा-
वेद्यर्थमृदाहरणजातावट एव चात्वाल इति लभ्यते।

**चानराट** न० चनराटस्येदम् अण्। चनराटनामकाख्याने
तस्मिनृषभे परे दिक्संख्या अन्तोदात्ताः। “पूर्वचा-
नराटम्” सि० कौ०।

**चान्दनिक** त्रि० चन्दनेन सम्पद्यते ठक्। चन्दनेन कृतशोभे
“वपुश्चान्दनिकं तस्य कार्ष्णमेटनिकं शुभम्” भट्टिः।

**चान्द्र** त्रि० चन्द्रस्येदम् अण्। १चन्द्रसम्बन्धिनि दिनमासादौ
२तन्माने च। “अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः
शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः”
सू० सि०
“स्वर्यात् यथागमं त्यक्ता विनिःसृतः पृथग्भूतः शशी चन्द्रो-
ऽहरहः प्रतिदिनं यत् यत्सङ्ख्यापितं प्राचीं पूर्वां
दिशं गच्छति तत् प्रतिदिनं चान्द्रमानं तत्तु गत्यन्तरां-
शमितम्। ननु सौरदिनं सूर्यांशेन यथा भवति तथै-
तद्रूपैर्भागैः कियद्भिः पूर्वं चान्द्रं दिनं भवतीत्यत आह।
अंशैरिति। भावेस्तु शारात् सूर्यचन्द्रान्तरोत्पन्नैस्तस्य
तद्रूपत्वात्। द्वादशभिर्द्वादशसङ्ख्याकैस्तिथिर्ज्ञेया। एकं
चान्द्रदिनं ज्ञेयमित्यर्थः। एतदुक्तं भवति सूर्यचन्द्र-
योगाच्चान्द्रदिनप्रवृत्तेः पुनर्योगे मासपूर्त्तिर्भगणान्तरेण
चान्द्रो मासस्त्रिंशच्चान्द्रदिनात्मकः। अतस्त्रिंशद्भिर्वेदि-
भगणांशान्तरं तद्देवेन त्रिमिति। द्वादशभागैरेकं चान्द्र-
दिनम्। “दर्शः सूर्येन्दुसङ्गमः” इत्यभिधानाद्दर्शावधिकमा-
सस्य त्रिंशत्तिथ्यात्मकत्वात् तिथिश्चान्द्रदिनरूपेति। अथ
चान्द्रव्यवहारमाह” रङ्ग० “तिथिः करणसंज्ञकः क्षौरं
सर्वक्रियास्तथा। व्रतोपवासयात्राणां क्रिया चान्द्रेण
गृह्यते” सू० सि०।
“तिथिः प्रतिपदाद्या करणं ववादिकमुद्वाहो विवाहः
क्षौरं चौलकर्म। एतदाद्याः सर्वक्रिया व्रतवत्यादयुत्सव
रूपा व्रतोपवासयात्राणां नियमोपवासगमनानां क्रिया
करणम्। तथा यज्ञश्राद्धादिः। चान्द्रमानेन स्व-
कृते अङ्गीक्रियते। अथ चान्द्रमासं प्रसङ्गात्
पित्र्यमानं चाह” रङ्गना०।
“त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम्”
सू०सि० “कालेन येनैति पुनः शशीनं त्यक्तवा भचक्रं
विवरेण कृत्वा। मासः स चान्द्रोऽङ्ग्यमाः कुरामाः
पूर्णपयः। २८।२१।५०। स्मृतश्च दिनप्रमाणम्” सि०शि०
“दर्शान्ते किल शशी रविणा युक्तो भवति। ततोद्वावपि
पूर्वतो गच्छतः। तयोः शशी शीघ्रगत्वात् प्रत्यहं गत्य-
न्तरेणाग्रतो याति। एवं गच्छंश्चक्रकला २१६०० तुल्य-
मन्तरं यदाग्रतो याति तदा रविणा योगमेति। तयोः
कालयोरन्तरालं चन्द्रमासः। तत्प्रमाणमनुपातेन।
चन्द्रार्कयोर्मध्यगती आदौ सम्यक् सावयवे कृत्वा यदि
गत्यन्तरेणैकं कुदिनं लभ्यते तदा चक्रकलातुल्येनान्तरेण
कियन्तीत्यनुपातेन चान्द्रमासे कुदिनानि लभ्यन्ते।
२८।२१।५०”। प्रमिता०। अधिकं गौणचान्द्रशब्दे
२७११ पृ० दृश्यम्। आपस्तम्बः “चन्द्रमाः तस्या-
पराह्णे सूर्येण सह युज्यते। वृश्चिकपादयारभ्य वृश्चि-
कान्तावधिः परम्। चन्द्रार्कयोः स एव मासश्चान्द्र इत्यभि-
धीयते” विष्णु स०। २चान्द्रायणव्रते न०। “चान्द्रं कृच्छ्रं
तदर्द्धं च ब्रह्मक्षत्रविशां विधिः” प्रा० त०। “चान्द्रं

ग्रासप्रमाणमात्राविकारेणेति मदुक्तमत्राभिप्रायम् तेषां शिखण्डपरिमितपञ्चदशग्रासभोजनाशक्तेः । क्षीरादिद्रवहविषां शिखण्डपरिमितत्वन्तु पर्णपुटिकादिना सम्पादनीयम् । तथा कुक्कुटाण्डाद्यामलकादीनि तु ग्रासपरिमाणानि स्मृत्यन्तरोक्तानि शक्तविषयाणि शिखण्डपरिमाणानुगुणत्वात्तेषां, यत्तु नरते "श्वोभूताम्पौर्णमासीमुपवसेदिति" चतुर्दश्यामुपवासमभिधाय पौर्णमास्यामष्टदश ग्रासान् भुक्तेत्यादिना द्वात्रिंशदहरात्मकत्वं चान्द्रायणस्योक्तम् तत्पक्षान्तरप्रदर्शनार्थम् न सार्वत्रिकम् । योगीश्वरादिवचनानुरोधेन त्रिंशदहरात्मकस्य दर्शितत्वात् । यद्येतत्सार्वत्रिकं स्यात्तदा नैरन्तर्येण संवत्सरे चान्द्रायणानुष्ठानानुपपत्तिः स्यात् चन्द्रगत्यनुवर्त्तनानुपपत्तिश्च । चान्द्रायणान्तरमाह" मिता० । "यथा कथञ्चित्पिण्डानाञ्चत्वारिंशच्छतद्वयम् । मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्" या० । "पिण्डानाञ्चत्वारिंशदधिकं शतद्वयं मासेन भुञ्जीत यथाकथञ्चित्प्रतिदिनं मध्याह्नेऽष्टौ ग्रासान् तथा नक्तन्दिवयोश्चतुरश्चतुरो वा । अथवैकस्मिंश्चतुरोऽपरस्मिन् द्वादश वा तथैकरात्रमुपोष्यापरस्मिन् षोडश वेत्यादि प्रकाराणामन्यतमेन मनःप्रेक्षया भुञ्जीतेत्येतत्पूर्वोक्ताच्चान्द्रायणद्वयादपरं चान्द्रायणम् । अतस्तयोर्नायं ग्राससंख्यानियमः । किन्तु तत्र पञ्चविंशत्यधिकशतद्वयसंख्यैव । मनुना चैते प्रकारा दर्शिताः "अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते । नियतात्मा हविष्यस्य यतिचान्द्रायणञ्चरन् । चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः । चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणञ्चरन् । यथाकथञ्चित्पिण्डानान्तिस्रोऽशीतीः समाहितः । मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकतामिति । "तथा चत्वारिंशच्छतद्वयान्न्यूनसंख्यग्रासकल्पाद्यपि संख्यार्थमपर यत्नम् । यथाह यमः "त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः । हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतमिति" । एषु च यतिचान्द्रायणप्रभृतिषु न चन्द्रगत्यनुसरणमपेक्षितमतस्त्रिंशद्दिनात्मकसावनमासेन नैरन्तर्येण चान्द्रायणानुष्ठाने यदि कथञ्चित्तिथिवृद्धिह्रासवशेन पञ्चम्यादिस्वारम्भो भवति तथापि न दोषः । यदपि सोमायनाख्यं चान्द्रव्रतं मार्कण्डेयेनोक्तम् "गोक्षीरं सप्तरात्रन्तु पिबेत् स्तनचतुष्टयात् । स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् । स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् । एतत्सोमायनं नाम व्रतं कल्मषनाशनमिति" । तदपि चान्द्रायणधर्म्मकमेव । हारीतेनापि "अथातश्चान्द्रायणमनुक्रमिष्याम इत्यादिना वेतिकर्त्तव्यताकञ्चान्द्रायणमभिधाय" एवं सोमायनमित्यतिदेशस्याभिधानात् । यत्तु न तेन कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्य्यन्तं सोमायनमुक्तम् "चतुर्थीप्रभृति चतुःस्तनेन त्रिरात्रं त्रिस्तनेन त्रिरात्रं, द्विस्तनेन त्रिरात्रमेकस्तनेन त्रिरात्रमेवमेकस्तनप्रभृति पुनश्चतुःस्तनान्तं या ते सोम ! चतुर्थी तनूस्तया नः पाहि तस्यै स्वाहा या ते सोम ! पञ्चमी षष्ठीत्येवं यथार्थतिथिहोमा एकमासमेताभ्यः पूतश्चन्द्रमसः सामान्यतां समानलोकतां सायुज्यञ्च गच्छतीति" । चतुर्विंशतिदिनात्मकसोमायनमभिहितन्तदशक्तविषयम्" मिता० ।

प्रायश्चित्तविवेकेऽत्र विशेषोऽभिहितो यथा

"तत्र मनुः । "एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्द्धयेत् । उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम् । एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे । शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम् । अष्टावष्टौ समश्नीयात् पिण्डान्मध्यन्दिने स्थिते । नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् । चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः । चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम् । यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः । मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्" एतत्पञ्चविधं चान्द्रायणं पिपीलिकातनुमध्यं यवमध्यं यतिचान्द्रायणं सर्व्वतोमुखं शिशुसाह्वञ्च । तथाच जाबालः । पिपीलिकं यवमध्यं यतिचान्द्रायणन्तथा । चान्द्रायणं तथा चैवं चतुर्थं सर्व्वतोमुखम् । पञ्चमं शिशुसाह्वञ्च सर्व्वं पुण्यफलोदयम्" । कृष्णप्रतिपदमारभ्य मासमेकं यदा क्रियते तदा पिपीलिकामध्यं भवति । शुक्लप्रतिपदारम्भे यवमध्यम् । उभयत्रामावास्यायामभोजनम् । कृष्णप्रतिपदि चतुर्द्दशग्रासभोजनारम्भे ह्रासक्रमेण चतुर्द्दश्यामेकोग्रासः अमावास्यायामभोजनमेव प्राप्नोति । तथाच वशिष्ठः "मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्द्दश" । नन्वेवं क्रमेण पञ्चविंशत्युत्तरं ग्रासशतद्वयं स्यात् । न चत्वारिंशद्ग्रासाधिकशतद्वयं तच्च याज्ञवल्क्येनोक्तम् "यथा कथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम्" । इति "यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः" इति मनुनाप्युक्तम् । उच्यते । संयमदिवसे पौर्णमास्याममावास्यायां वा पञ्चदशग्रासभोजनेन संख्यापूरणसम्भवात् । अथ वा पञ्चदश्यादिकमेवेदं व्रतं न प्रति-

पदादिकं चतुर्दश्यामेव व्रतसङ्कल्पः यथाह गौतमः "पौर्ण-मास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नी-यात् अमावास्यायामुपोष्य एकैकोपचयेन पूर्व्वपक्षं विपरीतमेकेषाम्"। शङ्खलिखितौ "अमावास्यां व्रतोपा-यनं यवमध्यम्। अमावास्यायां पञ्चदश पिण्डानश्नी-यात्"। उपायनमारम्भः। युक्तञ्चेदम् "अमावास्या-मुपोष्य पञ्चदशकलात्मकस्य चन्द्रमसः सूर्य्यप्रवि-ष्टत्वात् अत एकैककलानिर्गमस्य प्रतिपदादिषु वृद्धिमत्त्व-प्रख्यत्वात्। आपस्तम्बः "एकैकं वर्द्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत्। अमावास्यां न भुञ्जीत यवमध्यं चरन् द्विजः। एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्द्धयेत्। पौर्णमास्यां न भुञ्जीत पिपीलिकतनुमध्यमम्"। अत्र कल्पतरुव्याख्यानम् "एकैकं ह्रासयेदिति कृष्णप्रति-पदि पञ्चदश ग्रासानारभ्य एकैकापचयेनामावास्यायामेको-पवासः तदनन्तरं शुक्लप्रतिपदि द्वौ ग्रासावेवं वृद्धिक्रमेण चतुर्दश्यां पञ्चदश ग्रासाः सम्पद्यन्ते पौर्णमास्यां चोप-वासइति पिपीलिकतनुमध्यं चान्द्रायणम्। एवं यव-मध्ये शुक्लप्रतिपदि एकोग्रासः एवमेकैकोपचयने पूर्णि-मायां पञ्चदश ग्रासाः कृष्णप्रतिपदि चतुर्दश ग्रासा एवमेकैकापचयेन अमावस्यायामुपवासः"। ऋषिचान्द्रा-यणमाह यमः "त्रीँस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढ़व्रतः। हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्"। अत्र चत्वारिंशच्छतद्वयसंख्या नास्ति। ग्रासपरिमाण-माह पराशरः। "कुक्कुटाण्डप्रमाणन्तु यावान् वा प्रवि-शेन्मुखम्। एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोध-नम्"। एकत्रचान्द्रायण एव चतुर्दश्यामुपवासं कृत्वा अपरदिने पञ्चदश्यां संयमः कार्य्यः तदप्याह। बौधायनः। "शुक्लाञ्चैव चतुर्दशीमुपवसेत् कृष्णां चतुर्दशीं वा केशश्मश्रुनखरोमाणि वापयित्वा" इत्य-भिधाय तिथिमन्त्रादिहोमं प्रत्यहमुक्तवान् विस्तर-भयान्न लिखितम्"।

"एकमाप्त्वा विपापोविपाप्मा सर्व्वमेनोहन्ति द्वितीय-माप्त्वा सपूर्व्वान् दशापरानात्मानञ्चैकविंशं पङ्क्तिञ्च पुनाति संवत्सरञ्चाप्त्वा चन्द्रमसः सलोकतामाप्नोतीति" गौतमः। एवञ्च सर्व्वविधचान्द्रायणे चान्द्रस्य चन्द्र-सम्बन्धिनो लोकस्यायनं यस्मादिति व्युत्पत्तिरित्यव-धेयम्। अस्य पुंस्त्वमपि "एष चान्द्रायणोविधिः" प्रा-युक्तस्मृतेः अत्र तस्येदमित्यर्थेऽपि तत्र चान्द्रायण-शब्दस्य तत्सम्बन्धिज्ञापकत्वात् पुंस्त्वमित्यन्ये। चान्द्रा-यणव्रताशक्तौ तत्प्रत्याम्नायधेनुमूल्याद्युक्तं प्रा० वि० आपस्तम्बः "कापालिकान्नभोक्तॄणां तन्नारीगामिना-न्तथा। ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्" तथा रजकाद्यन्त्यजाधिकारे यमः "भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च। कृच्छ्राब्दमाचरेज्ज्ञानादज्ञाना-दैन्दवद्वयम्"। ज्ञानतः कृच्छ्राब्दं त्रिंशद्धेनुदानसमानं विधायाज्ञाने तदर्द्धं चान्द्रायणद्वयं विदधाति। तेन चान्द्रायणद्वये पञ्चदश धेनवः अर्थादेकस्मिंश्चान्द्रायणे सार्द्धसप्तधेनवः। यत्त्वेकमेव चान्द्रायणं तत्रार्द्धधेनो-रभ्यधिकत्वेऽष्टकं देयम्। शिशुचान्द्रायणे तु पादोन धेनुचतुष्टयम्। यतोऽत्र प्रात्यहिकाच्चग्रासपरिमाणेन मासैकेन चत्वारिंशदुत्तरग्रासशतद्वयेन द्वात्रिंशदुच्च्छ्र्यस्ये-ति व्यवस्थया सार्द्धसप्तदिनभोजनं पर्य्यवस्यति सार्द्धद्वाविंशतिश्चोपवासाःपर्य्यवस्यन्ति। अतः सङ्कलनया पादोनप्राजापत्यचतुष्टयं स्यात्। यद्यपि यवमध्य-पिपीलिकतनुमध्यचान्द्रायणयोरप्येतावन्त एव ग्रासास्तथा-पि वचनात् मूर्द्धाटकतुल्यग्रासैः कल्पनीयतया सार्द्ध-सप्त धेनवः। अत्र तु तदभावान्न्यायाच्च पादोनधेनुचतु-ष्टयमेव। एवं यतिचान्द्रायणसर्व्वतोमुखचान्द्रायणर्षि-चान्द्रायणेषु बोध्यम्" प्रा० वि०।

मिताक्षरायां विशेष उक्तो यथा

"चान्द्रायणविषयभूतेषु पुनरुपपातकेषु प्राजापत्यत्रयं तदशक्तस्य प्रत्याम्नायत्वात्तावेन। यत्तु चतुर्विंशति-मतेऽभिहितम् "अष्टौ चान्द्रायणे देयाः प्रत्याम्नाय-विधौ सदेति" तदतिपतिनः पिपीलिकामध्यादिचान्द्रा-यणप्रत्याम्नायविषयम्। मासातिकृच्छ्रविषयभूते पुनरुप-पातके सार्द्धसप्तप्राजापत्याः प्रत्याम्नायाश्च धेन्वादयस्ता-वन्त एव। यत्र चान्द्रायणस्यापि तत्रैव प्रत्याम्नानमुक्त-म्। "चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च। मित्रवि-न्दापशुश्चैव कृच्छ्रमाग्नेयमन्तथा। नित्यनैमित्तिकानाञ्च काम्यानाञ्चैव कर्म्मणाम्। इष्टीनामशुचिव्याणामभावे चरवः स्मृताः" इति। तदपि चान्द्रायणशक्तस्य। यत्तु कृच्छ्रमाग्नेयमन्यथेति कृच्छ्राष्टकमभ्याम्नातम्। तदति-जठरमूर्खविषयम्। "चान्द्रायणैस्त्रिभिः कृच्छ्रैरिति दर्शितत्वादित्यलमतिप्रपञ्चेन।" ऐन्द्वादयोऽप्यत्र।

चान्द्रायणिन्। त्रि० चान्द्रायणमावर्त्तयति ठञ्। चान्द्रायण-व्रतानुष्ठायिनि राजनि०।

स्निग्धं पाण्डु दीर्घं लघु घनं महत्। अस्य वातेन नश्येत्तु तृष्णामूर्च्छाश्रमोद्भवः। नारिष्टं न भयं तस्य यस्येदं चामरं गृहे। क्षीरोदसम्भवं श्वेतं दीर्घं लघु घनं महत्। अस्य चामरवातस्य विज्ञेयो गुणविस्तरः। नाल्पेन तपसा लभ्यो देवानामपि जायते। द्वीपेऽभ्यन्तरे सिन्धोर्नागैः सम्पत्तिलोलुपैः। एषां पूर्ववदुन्नेयं जातिदोषगुणादिकम्। स्थलजे जलजे चैव भाव्यमेतद्विशेषणम्। स्थलजं सुखदं ह्यत्र हि दाहे मिषमिषायते। जलजं वह्निदं ह्यत्र महान्तं भूमशुद्धिरेत्। चामराणां समुद्दिष्टमित्येवं लक्षणद्वयम्। एवं विलक्षणं यो धत्ते स राजा सुखमश्नुते। जलजं चामरं राजा यो धत्ते जाङ्गलेश्वरः। तस्याचिरात् कुलं वीर्यं लक्ष्मीरायुश्च नश्यति। अनूपाधीश्वरो राजा यो वहेत् स्थलजं तथा। तस्य तानि विनश्यन्ति लक्ष्मीरायुर्यशो बलम्। नालं वर्गद्वये तेषां विधेयं शिल्पिना क्रमात्। संस्कारो वालुकायन्त्रे मञ्जरत्निकादिभिः। तद्गुणविलक्षणाघात् कलिमलं विपद्यते"।

"सचामरे देवमसेविषाताम्" कुमा०। "गच्छन्तमुच्चलितचामरचारुमश्वम्" माघः। "शशिप्रभं छत्रमुभे च चामरे" रघुः। अस्य स्त्रीत्वमपि वा ङीप्। तत्रार्थे भरतः।

**चामरग्राह** त्रि० चामरं गृह्णाति ग्रह—अण् उप० स०। चामरेण वीजनकर्त्तरि स्त्रियां टाप् मुग्धबोधमते अण् ङीप् इति भेदः। ततः रेवत्या० अपत्ये ठक्। चामरग्राहिक तदपत्ये पुंस्त्री। णिनि चामरग्राहिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

**चामरपुष्प(क)** पु० चामरमिव पुष्पमस्य। १क्रमुके, २काशे, ३केतके ४आम्रे च मेदि० एषां चामरतुल्यगुच्छवत्त्वात् तथात्वम्। वा कप्। तत्रार्थे जटा०।

**चामरिन्** पुंस्त्री चामरमिव केशरोऽस्त्यस्य इनि। १घोटके जटाध०। २चामरयुक्तमात्रे त्रि० स्त्रियां ङीप्।

**चामीकर** न० चमीकरे स्वर्णाकरभेदे भवम् अण्। १स्वर्णे २धुस्तूरे च अमरः। "जगतीरिह स्फुरितचारुचामीकराः" माघः। तस्य विकारः अण्। ३स्वर्णमये त्रि० "सपल्लवचामीकरकिङ्किणीकः" कुमा०। अस्योत्पत्त्यादिकं कनकशब्दे १६४४ पृ० उक्तम्।

**चामुण्डा** स्त्री "यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता। चामुण्डेति ततो लोके ख्याता देवी भविष्यसि" देवीमा० निरुक्तनामके देवीभेदे। २परब्रह्मणः समष्टिरूपशक्तिभेदे ३ब्रह्मविद्यायाश्च मुग्धवती। तत्र (ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे) इति चण्डिकानवार्णार्थनिरुक्ते उक्तं यथा।

"निर्धूतनिखिलध्वान्ते! नित्यमुक्ते। परात्परे!। अखण्डब्रह्मविद्यायै चित्सदानन्दरूपिणि!। अनुसन्दध्महे नित्यं वयं त्वां हृदयाम्बुजे। इत्थं विज्ञापयत्येषा या कल्याणी नवाक्षरी। अस्या महिमलेशोऽपि गदितं केन शक्यते। बहूनां जन्मनामन्ते प्राप्यते भाग्यगौरवात्। एनमर्थं गुरोर्लब्ध्वा तस्मै दत्त्वा च दक्षिणाम्। आशिषञ्च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयादित्यादि"। अत्र प्रथमश्लोके संबुद्धित्रयं ततश्चतुर्थ्यन्तन्ततः पुनः संबुद्धित्रयमिति सप्तभिः पदैः क्रमेण मन्त्रे सप्तधा परिच्छेदः। पदानां तत्तद्भक्त्यन्तता तत्तदर्थाश्चेति कथितं तदुत्तरपद्यार्द्धेनाकाङ्क्षितपदानामध्याहार उक्तः। इतरत्स्पष्टम्। सच्चिदानन्दात्मकपरब्रह्मधर्म्मत्वाद्देवशक्तेरपि त्रिरूपत्वम्। तत्र चिद्रूपा महासरस्वती वाग्बीजेन (ऐँ) सम्बोध्यते। ज्ञानेनैवाज्ञाननाशात् निर्धूतनिखिलध्वान्तपदेन तद्विवरणम् युक्तमेव। नित्यत्वं त्रिकालाबाध्यत्वम्। अतएव मुक्तत्वं कल्पितवियदादिप्रपञ्चनिराशाधिष्ठानत्वम्। एतेन सद्रूपात्मकलक्ष्मीरूपस्य हृल्लेखया (ह्रीँ) सम्बोधनमिति व्याख्यातम्। पर उत्कृष्टः सर्वानुभवसंवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात्। "आत्मनः कामाय सर्वं प्रियं भवतीति" श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषितया परत्वात्। स च मानुषानन्दमारभ्योत्तरोत्तरं शतगुणाधिक्येन श्रुतौ बहुशो वर्णितः "तेषु परमातिशयो य एको ब्रह्मण आनन्द" इति परमावधित्वेनाम्नातः। एव परात्परः "स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः" इति पुराणं च तेन आनन्दप्रधानमहाकालीस्वरूपस्य कामबीजेन (क्लीँ) सम्बोधनमुक्तम्। चामुण्डाशब्दो हि मोक्षकारणीभूतनिर्विकल्पकवृत्तिविशेषपरः तादर्थ्ये चतुर्थी चमूं सेनां वियदादिप्रपञ्चरूपाम् लाति आदत्ते स्वात्मसाक्षात्कारेण नाशयतीति व्युत्पत्तेः। पृषोदरादित्वात्साधु" इत्याहुः। "मया तवात्रोपहृतौ चण्डमुण्डौ महासुरौ" इति पद्ये द्विवचनयोः श्लेषेण तूलमूलभेदेनाज्ञानद्वयपरत्वम्। "यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता।

चायु त्रि० चाय–उण्। पूजके। "यज्ञेषु यत्र चायवः" ऋ० १।२४।४। "चायवः पूजकाः" भा०।

चार पु० चरएव अण्। १प्रणिधौ गुप्तचरे "चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्" "तत्प्रचारप्रतिषेधार्थं चारैश्चाप्यनुचारयेत्" "उपच्छन्नासदश्चैव चारान् सम्यग्विधाय च"–इति च मनुः। २प्रियालवृक्षे (पियाशाल) मेदि० ३कारागारे हेम० चर–भावे घञ् ४गतौ गोप्रचारः पशुचारः "चारोदयाः सप्तमाः श्रवणमघादित्यमूलहस्तेषु" वृ० स० ९अ० "अगस्त्यार्थेमान्तरितो व्यञ्जाति चायं नियतचारः" वृ० स०। काव्यभेदे दूतनियोगादिकं कालिकापु० ८८ अ० ९ं ह्रं यथा। "कृषिर्गोरक्षवाणिज्यं सस्यानां कारणाधनम्। आदानं सैन्यकरयोर्बन्धनं गजवाजिनोः। शून्यशस्यस्थानाञ्च भोजनं सततं ततैः। प्रजानां चारहेतूनां भञ्जनं चेति चाष्टमम्। एतद्वाष्ट वर्गेषु चारान् सम्यक् प्रयोजयेत्। कार्याकार्यविभागाय चाष्टवर्गाधिकारिणाम्। अष्टौ चारान् नियुञ्जीयादष्टवर्गेषु पार्थिवः। द्यस्त्वेषु युञ्जीत क्रमशः शृणु तानि मे। स्वामी सचिवराष्ट्राणि मित्रं कोषो बलं तथा। दुर्गन्तु सप्तमं प्रोक्तं राज्याङ्गं गुरुभाषितम्। दुर्गयुक्तं राष्ट्रवर्गे चारं नाक्रानि योजयेत्। तस्मादिमानि शेषाणि षड्वा चारपदानि तु। युवान्तेष्वेव पुत्रेषु चाक्षुषादौ महानसे। मध्यदासीनयोश्चैव शयनकविनिश्चये। आदौ दशसु चैतेषु चारान् राजा प्रयोजयेत्। न यत् प्रकाशं जानीयात् तत्तु चारैर्निरूपयेत्। निरूप्य तत्प्रतीकारमथार्थं विकृतचरेत्। यथानियोगमेतेषां यो यो यदान्यथा चरेत्। ज्ञात्वा तत्र चापचारैर्दण्डयेद्वा नियोजयेत्। चारांस्तु मन्त्रिणा सार्द्धं रहसि संस्थितो नृपः। प्रदोषसमये पृच्छेत्सदानीमेव चाह्वयेत्। चाप्रकं चाय युवानं ये तु चारा महानसे। नियुक्तांस्तान् मध्यराते पृच्छेत् यथापि मन्त्रिणि। एतान् चारान् स्वयं पश्येत् नृपतिर्मन्त्रिणा विना। अन्यांश्च मन्त्रिणा सार्द्धं निरूप्य प्रदिशेत् फलम्। नैकवेशधरश्चारो नैको मोहतादृवर्जितः। संस्तुतो नहि सर्वत्र नातिदीर्घो न वामनः। सततं न दिवाचारी न रोगी नाल्पबुद्धिमान्। न वित्तविभवैर्हीनो न भार्यापुत्रवर्जितः। कार्यश्चारो नृपतिना गुह्यतत्त्वविनिर्णये। अनेकवेशपर्यटनकं भाषोद्दिष्टम्। वहुदेशवचोभिज्ञं पराभिप्रायवेदकम्। ईदृगुणं प्रकुर्वीत चारं प्रज्ञानसाधनम्। अधितिष्ठेत् स्वयं राजा कर्मिमात्मपवीक्षया। वणिक्पथे च दुर्गादौ तेषु यज्ञान्नियोजयेत्। अन्तःपुरे पितृतुल्यान् धीरान् वृद्धान् नियोजयेत्। षण्ढान् षण्डान् तथा वृद्धान् स्त्रियो वा युवितत्पराः। शुद्धान्तद्वारि युञ्जीयात् स्त्रियो बुद्धिमनीषिणीः"। चरेण चरणेन निर्वृत्तम् अण्। ५कल्लिमविषे–न० हेमच०।

चारक त्रि० चारयति चर–णिच्–ण्वुल्। गवादीनां तृणादिषु गमयितरि १पशुपालके मेदि० चार–स्वार्थे क। २सञ्चे ३गतौ च। ४प्रियालवृक्षे राजनि०। ५कारागारे। हेम०। "निगडितचरणा चारके निरोद्धव्या" दशकु०।

चारकीण त्रि० चरकाय हितम् खञ्। चरकहिते।

चारचक्षुस् पु० चारश्चक्षुरस्य। नृपे। "यस्मात् पश्यन्ति दूरस्थाः सर्वानर्थान्नराधिपाः। चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः" रामा० २। २७। "प्रजायांशास्त्रकामांश्च चारचक्षुर्महीपतिः" मनुः "गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति च द्विजाः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" नीतिशा०। "स्वपरमण्डलकार्याकार्यावलोकने चाराश्चक्षूंषि क्षितिपालाना-मिति" नीतिवाक्यामृतम्।

चारटिका स्त्री चर–णिच् मकारि० अटन् संज्ञायां कन् अतइत्त्वम्। नलीनामगन्धद्रव्ये राजनि०।

चारटी स्त्री चर–णिच्–मकारि० अटन् गौरा० ङीष् १पद्मचारिणीवृक्षे अमरः। २भूम्यामलक्यां राजनि०।

चारण पु० चारयति कीर्त्तिं चर-णिच्–ल्यु। कीर्त्तिसञ्चारके नटे अमरः। "चाटचारणदासेषु दत्तं भवति निष्फलम्" स्मृतिः। "गन्धर्वाणां ततो लोकः परतः शतयोजनात्। देवानां गायनास्ते च चारणाः स्तुतिपाठकाः" पद्म० पु० पा० ख०। [राजपथे हेम०।

चारपथ पु० चारार्थः गद्दुजनगम्यः पन्थाः अच् समा०।

चारभट पु० चारे बुद्धिसञ्चारे भटः। धीरे हेम०।

चारमिक त्रि० चरममधीते वसन्ता० ठक्। चरमसमाप्तिपर्यन्ताध्यायिनि। | चक्रे वायौ त्रिका०।

चारवायु पु० चारेण रवैरदम्गतिभेदेन ज्ञातो वायुः। निदा-

चारायण पुंस्त्री चरस्य गोत्रापत्यम् नडा० फक्। चरगोत्रापत्ये। तेषां छात्रः अण् "इञश्च" पा० सू०।

चारायणीय तच्छात्रे। चारायणेभ्य आगतः वुञ्। चारायणक तत आगते त्रि०।

**चारिणी** स्त्री चर–णिनि ङीप्। करुणीवृक्षे राजनि०।

**चारित्र** न० चर–“चरेर्वृत्ते” उणा० णित्रन् चरित्रमेव स्वार्थे अण् वा। १चरित्रे २स्वभावे हेम०। ३कुलक्रमागताचारे शब्दार्थचि०। “चारित्रं येन नो लोके दूषितं दूषितात्मना” हरिव० १७०। ४तिन्तिडीवृक्षे स्त्री शब्दरत्ना० ५मरुत्वत्तनयपुत्रभेदे पु० “मरुत्वतो मरुत्वन्तो देवानजनयत् सुतान्” इत्युपक्रमे “नक्षत्रं चाकृतिश्चैव चारित्रं ब्रह्मवर्चसम्” हरिव० २०३ अ०।

**चारित्र्य** न० चरित्रमेव स्वार्थे ष्यञ्। चरित्रशब्दार्थे।

**चारिन्** त्रि०चर–णिनि। सञ्चारकारिणि कर्त्तरि “सङ्गमाय निशि गूढचारिणम्” रघुः “प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ” गीता स्त्रियां ङीप् स्वैरचारिणी।

**चारी** स्त्री चारो गतिभेदोऽस्त्यस्या अच् गौरा० ङीप्। गतिभेदयुक्तनृत्यक्रीडायां सङ्गी० दा० तल्लक्षणभेदादिकमुक्तं यथा

“न हि चारीं विना नृत्ये नृत्यशास्त्रं प्रवर्त्तते। शृङ्गारादिरसानान्तु भावोद्दीपनकारिकाम्। माधुर्योद्दर्शना नृत्ये चारी चारुगतिर्मता”। अन्ये तु “एकपादप्रचारो यः सा चारी च निगद्यते। पादयोश्चारणं यत्र सा चारीति निगद्यते। करणानां समायोगः खण्डकः परिकीर्त्तितः। त्रिभिः चतुर्भिर्वा खण्डकं मण्डलाह्वयम्। समनखा नूपुरविद्धा तिर्यङ्मुखी सरला च। कातरा च कुटीरा च विश्लिष्टा रथचक्रिका। पार्ष्णिरेचिका तलदर्शिनी गजहस्तिका। परावृत्तका चारुताडिताख्या स्यादुत्थिता। सर्पक्रीडनिका स्फुरलिका चारुरोचिका। तलोद्वृत्ता सञ्चरिता स्फुरिकापि तथैव च। ऊर्ध्वजङ्घा संकुटिता स्यादथैव मदालसा। उत्कुञ्चिता तिर्यगूर्द्ध्वकुञ्चिता चाथकुञ्चिका। षड्विंशति र्भौमचार्यः इत्याख्याता मनीषिभिः”। अन्ये तु। “सम पादस्थिता विद्धा शकटस्थार्द्धिकापि च। विश्लाघा ताड़िताऽऽबद्धा एकैका क्रीड़िता तथा। उरुद्वृत्ता स्यन्दिता च जनिता स्यन्दिता तथा। स्यन्दितावत् समतन्वी समोत्सारितचक्रिता। उत्स्यन्दिता च विज्ञेया चार्यः षोड़श भूमिगाः। इति भूमिचारी। आकाश चारी यथा “चारीश्चाकाशगा वक्ष्ये विक्षेपा स्खलरी तथा। अङ्घ्रिताड़िता भ्रमरी पुरःक्षेपा च डमिका। अपक्षेपा जङ्घावर्त्ती विद्धा च हरिणप्लुता “अलातकान्दोलिता च जङ्घाजङ्घालिका तथा। विद्युत्क्रान्ता भ्रमरिका दण्डपार्श्वेति षोड़श”। अन्ये तु। “विभ्रान्ता तिक्रान्ताऽपक्रान्ता च पार्श्वक्रान्तिका। ऊर्द्ध्वजानुर्दोलापादोद्वृत्ता नूपुरपादिका। भुजङ्गत्रासिका क्षिप्ताऽऽविद्धा ताला च सूचिका। विद्युत्क्रान्ता भ्रमरिका दण्डपादा तथैव च। आकाशचारिका एताः षोडशैव निरूपिताः”। एतास्वेव भूमिचारोऽप्यन्तरभेदोऽस्ति। “तिर्यक्चारी ऊर्द्ध्वचारी स्खलचारीति ता अष्टनीयाः। “तैस्तास्वत्रैव मात्रेण सञ्चारो निबन्धनः। नाट्ये वा भित्तिदेशे वा प्रथमं ताः प्रयोजयेत्। कृत्वाहारं तथाङ्गञ्च भुक्त्वा ताः न समाचरेत्। नृत्ते पादस्य विन्यासचारी सैवाभिधीयते। शृङ्गारादिरसानान्तु भवेद्दीपनकारणम्। माधुर्यं भूयसा नृत्ये नृत्यगीतलयान्विताः। नियतार्द्ध विशेषाख्या चारी सञ्चारतो भवेत्” सं० दामो०।

**चारु** पु० चरति चित्ते–उण्। १वृहस्पतौ २मनोहरे त्रि० मेदि० “चकासतं चारुचमूरुचर्मणा” “अर्द्धप्रसारितसुराधिपचापचारु” माघः। गुणवचनत्वेन स्त्रियां वा ङीप् चार्व्वी चारुः। ३कुङ्कुमे न० शब्दार्थचि०। ४रुक्मिणीतनयभेदे पु० “चारुगर्भश्चारुदंष्ट्रम्।

**चारुक** पु० चारु+संज्ञायां कन्। शरबीजसमे क्षुद्रधान्यभेदे भावप्र० तद्गुणा उक्ता यथा “चारुकः शरबीजं स्यात् कथ्यन्ते तद्गुणा अथ। चारुको मधुरो रूक्षो रक्तपित्तकफापहः। शीतलो लघुरग्राह्य स्यायो वातकोपनः”। [याम् राजनि०।

**चारुकेशरा** स्त्री चारुः केशरोऽस्याः। नागरमुस्ता-

**चारुगर्भ** पु० श्रीकृष्णस्य रुक्मिणीगर्भजाते तनयभेदे यथा “तस्याम् (रुक्मिण्याम्) उत्पादयामास पुत्रान् दश म-हारथान्। चारुदेष्णं सुदेष्णञ्च प्रद्युम्नञ्च महाबलम्। सुषेणं चारुगुप्तञ्च चारुबाहुञ्च वीर्य्यवान्। चारुविन्दं सुचारुञ्च भद्रचारुं तथैव च। चारुञ्च बलिनां श्रेष्ठं सुतां चारुमतीं तथा” हरिव० ११८अ०। चारुगुप्तादयोऽप्यत्रोक्ताः तत्पुत्रभेदे।

**चारुचित्र** पु० धृतराष्ट्रपुत्रभेदे “चित्रोपचित्रौ चित्राक्षचारुचित्रः शरासनः” भा० आ० ११७अ०।

**चारुधारा** स्त्री चारु चारुतां धारयति धारि–अच् चार्व्वी धाराऽस्या वा। इन्द्रपत्न्यां शच्याम् त्रिका०।

**चारुनेत्र** त्रि० चारु मनोहरं नेत्रमस्य। १सुलोचने

२हरिणे पुंस्त्री त्रिका० । ३अप्सरोभेदे स्त्री "चारुनेत्रा घृताची च मेनका पुञ्जिकास्थली" काशीख० १०अ०।

**चारुपर्णी** स्त्री० चारूणि पर्णान्यस्याः ङीप्। (गन्धमादाल) प्रसारिण्याम् राजनि० ।

**चारुपुट** पु० चारु-पुटमत्र । तालभेदे संगीतदा० ।

**चारुफला** स्त्री चारु फलमस्याः । द्राक्षायाम् राजनि० ।

**चारुश्रवस्** पु० श्रीकृष्णपुत्रभेदे "तथा द्वादश वर्षाणि त्वतो भूतेन पुष्यता । आराध्य पशुभर्त्तारं रुक्मिण्यां जनिताः सुताः । चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः । चारुश्रवा चारुयशाः प्रद्युम्नः शम्भुरेव च । यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः" भा० अनु० १४अ० । चारुगर्भचन्द्रानुक्ताः श्लोकाश्च चारुश्रवस् इत्यादयोऽपि तत्पुत्रभेदे ।

**चारुलोचन** त्रि० चारु लोचनमस्य । १सुन्दरनेत्रयुक्ते २हरिणे पुंस्त्री० स्त्रियां जातित्वात् ङीष् शब्दार्थचि०।

**चारुवक्त्र** त्रि० चारु वक्त्रमस्य । १सुमुखे २कुमारानुचरभेदे पु० "श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः" भा० श० ४६अ० कुमारानुचरोक्तौ

**चारुवर्द्धना** स्त्री चारु चारुतां वर्द्धयति वृध-णिच्-ल्यु । १नार्य्यां राजनि० । २मनोहरतावर्द्धकमात्रे त्रि० ।

**चारुव्रता** स्त्री चारु व्रतमस्याः । १मासोपवासिन्यां स्त्रियां त्रिका० २तादृशव्रतयुक्ते पुरुषे पु० ।

**चारुशिला** स्त्री नित्यकर्म० । १मणिमात्रे त्रिका० । कर्म्मधा० । २मनोहरशिलामात्रे स्त्री "कुलिशचारुशिलोपचयैरयम्" भट्टिः ।

**चारुशीर्ष** त्रि० चारु शीर्षमस्य । १मनोज्ञमस्तके २शक्रसखे आलम्बायने पु० । "चारुशीर्षस्तु तं प्राह शक्रस्य दयितः सखा । आलम्बायन इत्येव विश्रुतः करुणात्मकः" भा० अनु० १८अ० । स च आलम्बस्यापत्यम् ।

**चारुहासिन्** त्रि० चारु हसति हस-णिनि । १मनोहरहासिनि स्त्रियां ङीप् । सा च "अयुगभसा चारुहासिनी" वृ० र० उक्ते २वैतालीयभेदे छन्दसि ।

**चार्च्चिक्य** न० चर्च्च-भावे ण्वुल् चर्च्चिकैव स्वार्थे ष्यञ् । चन्दनादिना गात्रलेपने अमरः । [वेष्टिते रथे ।

**चार्म्म** पु० चर्म्मणा परिवृतो रथः अण् । चर्म्मणा चर्म्मतो

**चार्म्मण** न० चर्म्मणां समूहः अण् । चर्म्मसमुदाये ।

**चार्म्मिक** त्रि० चर्म्मणा निर्वृत्तः ठक् । चर्म्मनिर्म्मिते भाण्डादौ । "चर्म्मचार्म्मिकभाण्डेषु" मनुः । ततः पुरोहिता० भावे यक् । चार्म्मिक्य तद्भावे न० ।

**चार्म्मिकायणि** पुंस्त्री चर्म्मिणोऽपत्यम् वाकिनादि० फिञ् कुक् नलोपश्च । चर्म्मिणो (ढाली) नामकयोधस्यापत्ये ।

**चार्म्मिण** न० चर्म्मिणां समूहः अण् । चर्म्मिणां समूहे ।

**चार्व्वाक** पु० चारुः लोकसम्मतो वाकोवाक्यं यस्य पृषो० । बृहस्पतिशिष्ये लोकायते नास्तिकभेदे तन्मतसिद्धपदार्थादि सर्व्वद० सं० दर्शितं यथा ।

"अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण दूरोत्सारितत्वात् । दुरुच्छेदं हि चार्वाकस्य चेष्टितम् । प्रायेण सर्व्वप्राणिनस्तावत् "यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः । भस्मीभूतस्य देहस्य पुनरागमनं कुतः" इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्त्तमाना एवानुभूयन्ते । अत एव तस्य चार्व्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् । तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते, तेषु विनष्टेषु सत्सु स्वयं विनश्यति । "तदिह विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति" । तच्चैतन्यविशिष्टदेह एवात्मा देहातिरिक्त आत्मनि प्रमाणाभावात् प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रामाण्याभावात् । अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । न चास्य दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम् अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद्यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्त्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति यावदादेयं तावदादाय निवर्त्तते । तस्माद्दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि कश्चिद् भीरुर्दृष्टं सुखं त्यजेत् तर्हि स पशुवन्मूर्खो भवेत् । तदुक्तम् "त्याज्यं सुखं विषयसङ्गमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा । व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान् को नाम भोस्तुषकणोपहितान् हितार्थी" । ननु पारलौकिकसुखाभावे बहुवित्तव्ययशरीरायाससाध्ये अग्निहोत्रादौ

वा न्यधायि । मेनाहक् चेत् कथमुदधिसुतामन्तरेणाप्यु-तस्य मीतं तस्यां नयनयुगमभूत् चित्रलेखाङ्कितायाम्” उज्ज्वलमणिः कर्म्म० । ७चित्रायां रेखायाम् स्त्री रत्नवीरेकात् इत० । ७चित्रस्य लेखने पु० । “अपा-ऽविरहसमागमनिव, चित्रलेखादर्शितविचित्रतकमुवना-कारम् । (राजकुलम्) कादं० ।

**चित्रलोचना** स्त्री चित्रं लोचनमस्याः । शारिकाखगे [ जटाधरः ।

**चित्रवदाल** पु० चित्रवत् आ समन्तात् चलति आ+चल-अच् । पाठीनमत्स्ये (बोयाल) जटाधरः ।

**चित्रवर्मन्** पु० १धृतराष्ट्रपुत्रभेदे “चित्राङ्गश्चित्रवर्म्मा” भा० आ० ६७अ० । चित्रं वर्म्मास्य । २चित्रकवचयुक्ते त्रि० ।

**चित्रवल्लिक** पु० वल्लीव कायति कै-क पृषो० ह्रस्वः कर्म्म० । पाठीनमत्स्ये हेमच० ।

**चित्रवल्ली** स्त्री० नित्यकर्म्म० । १मृगेर्वारौ २महेन्द्रवारुण्याञ्च राजनि० कर्म्म० । ३चित्रायां लतायाम् ।

**चित्रवहा** स्त्री चित्रं वहति वह-अच् । भारतप्रसिद्धे नदीभेदे “करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम्” भा०भी० ९अ० । नानानद्युक्तौ “कपिञ्जल्या तथा मेध्या नदी चित्रवहा तथा” भा० अनु०१६५अ० तीर्थोक्तौ ।

**चित्रवाण** पु० १धृतराष्ट्रपुत्रभेदे “चित्रवाणश्चित्रवर्म्मा सुवर्म्मा दुर्विमोचनः” भा० आ० ११०अ० । २चित्रशरयुक्ते त्रि० ।

**चित्रवाहन** पु० मणिपूरेश्वरे नागभेदे । “मणिपूरेश्वरं राजन् ! धर्म्मज्ञं चित्रवाहनम्” भा०आ० २१५अ० ।

**चित्रवीर्य्य** पु० चित्रमाश्चर्य्यं वीर्य्यमस्य । रक्तैरण्डे । राजनि० ।

**चित्रवेगिक** पु० चित्रवेगोऽस्त्यस्य ठन् । नागभेदे “पराशरो वीरणकः सुचित्रश्चित्रवेगिकः” भा० आ० ५७अ० । नागोक्तौ ।

**चित्रशाला** स्त्री चित्रलेखननिर्म्माणार्थां शाला । चित्रलेखन-निर्म्माणार्थायाम् शालायाम्, आलिन्याम् हेम० ।

**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन-ड । बृहस्पतौ अमरः । चित्रशिखण्डिप्रसूताद्योऽप्यत्र ।

**चित्रशिखण्डिन्** पु०चित्रः शिखण्डः अस्त्यस्य इनि । “मरी-चिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः” इत्युक्तेषु सप्तसु ऋषिषु अमरः । “ये हि ते ऋषयःख्याताः सप्त चित्रशिखण्डि-नः । तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्” । “मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः । सप्त प्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः । एताभिर्धार्य्यते लोकास्ताभ्यः शास्त्रं विनिःसृतम्” भा० शा० ३३७अ० ।

**चित्रशिरस्** पु० चित्रं शिरोऽस्य । १गन्धर्व्वभेदे “महाद्युति चित्रशिरा ऊर्णायुरनघस्तथा” हरिवं० २३१अ० गन्धर्व-भेदोक्तौ । २मूत्रपुरीषविषे कीटभेदे सुश्रु० “चित्रशिरः सरावकुर्द्दिशतदारुकारिमेदकशारिकामुखाश्चमुखस्त्वच वि-षदिग्धा मूत्रपुरीषविषाः” सुश्रुतः ।

**चित्रशीर्षक** पु० चित्रं शीर्षमस्य कप् । कीटभेदे सुश्रुतः । कीटशब्दे २०५८पृ० दृश्यम् ।

**चित्रसर्प** पु० नित्यकर्म्म० । मालुधानसर्पे शब्दर० ।

**चित्रसेन** पु० धृतराष्ट्रपुत्रभेदे “तेषां धृतराष्ट्रस्य पुत्राणां चत्वा-रः प्रधाना बभूवुः । दुर्य्योधनो दुःशासनोविकर्णश्चित्रसेनश्चेति” भा०आ० ९५अ० । २गन्धर्वभेदे । “चि-त्रसेनश्च शीतोष्णस्तथा चित्ररथोऽपि च । एते चान्ये च गन्धर्वा धनेश्वरमुपासते” भा० स० १०अ० । “ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयत् । गन्धर्वराजस्तान् सर्वानब्रवीत् कौरवान् प्रति” भा० व० २४०अ० । अर्जुनेन तत्पराजयकथा तत्रैव दृश्यम् । “अनु योगन्धर्व-राजानं चित्रसेनमरिन्दमम् । विजित्य तरसा संख्ये वेनं प्राप सुदर्शयाम्” भा० वि० ४९अ० । चित्रगुप्ता-दिवितयान्तर्गते मर्त्त्यलोकविवेचके ब्रह्मपादजक्षत्रिय-भेदे कायस्थशब्दे १९३२पृ० दृश्यम् । ५नदीभेदे स्त्री चित्रवहाशब्दे दृश्यम् ।

**चित्रहस्त** पु० चित्रः आश्चर्य्यो हस्तः हस्तक्रिया यत्र । मह-युद्धाङ्गहस्तक्रियाभेदे “चित्रहस्तादिकं कृत्वा कच्चावन्न च चक्रतुः” भा० स० २२अ० । भीमजरासन्धयोर्मल्ल-युद्धवर्णने ।

**चित्रा** स्त्री चित्र-अच् । १मूषिकपर्ण्यां २गोडुम्बायां ३सुभ-द्रायां ४दन्तिकायां ५मायायां ६सर्पभेदे ७नदीभेदे च मेदि० । ८चित्रगुप्तस्य भगिन्यां सा च नदी भूत्वा चित्रा यथा नदी जाता सैव चित्रा नदी । चित्रपथाशब्दे दृश्यम् ९अप्सरोभेदे हेमच० । १०अश्वाकुमाभेदे उज्ज्वलमणिः । “परमप्रेष्ठसख्यो तु ललिता सविशाखिका । सचित्रा च-म्पकलता तुङ्गविद्येन्दुलेखिका । रङ्गदेवी सुदेवी । चेत्यष्टौ सर्वगुणाः प्रियाः” “चित्रानाम यत्कान्दोऽथ तु छन्दोयो-भातलो यौ” वृ० टी० उक्ते पञ्चदशाक्षरपादके वर्णवृत्तभेदे । राशिचक्रस्थे १२नक्षत्रभेदे । सा च

राशिचक्रस्य १७३।२० अवधि १८६।४० पर्य्यन्तं १३।२० अंशाद्यात्मिका तत्स्वरूपादिकम् नक्षत्रशब्दे ४९७५पृ० उक्तम्। “हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव” रघुः। चित्रानामके चन्द्रकलत्रे १२दक्षकन्याभेदे च। १४मूषिकपर्ण्यां १५दन्तीवृक्षे १६मञ्जिष्ठायां राजनि०। चित्रायां जाता अण् “चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्” वार्त्ति० जातार्थाणो लुक्। १७चित्राजातायां स्त्रियां स्त्रीभिन्ने तु न लुक् चैत्रः इत्येव।

**चित्राक्ष** त्रि० चित्रमक्षि यस्य षच् समा०। चित्रनेत्रयुक्ते स्त्रियां षित्त्वात् ङीष्। सा च १शारिकाखगे त्रिका० २धृतराष्ट्रपुत्रभेदे पु० “चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह” भा०आ० ६७अ०।

**चित्राक्षुप** पु० नित्यक० पृषो० द्रोणपुष्प्याम् शब्दार्थ चि०।

**चित्राङ्ग** पु० १धृतराष्ट्रपुत्रभेदे। “अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः” भा०११७अ० तत्पुत्रोक्तौ। २चित्राङ्गयुक्तमात्रे त्रि०। ३रक्तचित्रके ४सर्पभेदे ५चित्रके (चिते) राजनि०। चित्रमङ्गं यस्मात्। ६हरिताले ७मञ्जिष्ठायां ८हिङ्गुले च न० राजनि०।

**चित्राङ्गद** पु० शान्तनोः सत्यवत्यां जाते पुत्रभेदे। “भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति तस्यां पूर्व्वं कानीनो गर्भः पराशराद् द्वैपायनोऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः। विचित्रवीर्य्यश्चित्राङ्गदश्च तयो रप्राप्तयौवन एव चित्राङ्गदो गन्धर्व्वेण हतः विचित्रवीर्य्यस्तु राजासीत्” भा० आ० ९५अ०। ब्रह्मपादशचित्रगुप्तादिलिखितधर्म्मान्तर्गते पापलोकविचारके २वृत्तभेदे च। कायस्थभेदं चित्राङ्गदमुपक्रम्य “कलेर्दश सहस्राणि नागलोकेश्वरोभव। ततस्त्रिलोकनाथस्त्वमिन्द्रतुल्योभविष्यसि” इति प्रति तं ब्राह्मणशापमुक्त्वा। “तत आनन्दमनसा गतश्चित्राङ्गदस्ततम्” इत्युक्तम् आचार निर्णयतन्त्रे। ३गन्धर्व्वभेदे। हरिवं० १०८अ० दृश्यम्। ४अप्सरोभेदे स्त्री। “अलम्बुषा घृताची च चित्रा चित्राङ्गदा रुचिः” भा० अनु० १९०। मणिपूरेश्वरचित्रवाहनस्य कन्यायाम् ५अर्जुनकलत्रभेदे च स्त्री “अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम्। मणिपूरेश्वरं राजन्! धर्म्मज्ञं चित्रवाहनम्। तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना। तां ददर्श पुरे तस्मिन् विचरन्तीं यदृच्छया। दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम्” भा० आ० २१५अ० “चित्राङ्गदा वरारोहा नापराध्यति किञ्चन” भा० आश्व० ८१अ०।

**चित्राङ्गदसू** स्त्री चित्राङ्गदं सूते सू–क्विप् ६त०। सत्यवत्यां शान्तनुपत्नीभेदे राजनि०।

**चित्राटीर** पु० चित्रां नक्षत्रमटति चित्रं वा अटति अट–बा० ईरच्। १चन्द्रे २घण्टाकर्णे शिवानुचरभेदे ३वह्निज्वालाङ्कितभाले च मेदि०।

**चित्रादित्य** पु० चित्रस्य चित्रगुप्तस्य आदित्यः तत्पूजितत्वात्। प्रभासतीर्थस्थे चित्रगुप्तस्थापिते आदित्यमूर्त्तिभेदे चित्रपथाशब्दे दृश्यम्।

**चित्रान्न** न० नित्यकर्म्म०। चित्रौदने “दध्योदनं हविषूर्णं मांसं चित्रान्नमेव च” याज्ञ० तल्लक्षणन्तु “अजाक्षीरेण संसिद्धा यवाश्च तिलतण्डुलाः। अजाकर्णस्य रक्तेन रक्ताश्चित्रान्नसंज्ञिताः” दीपिकोक्तम्।

**चित्रापूप** पु० नित्यकर्म्म०। पिष्टकभेदे त्रिका०।

**चित्रामघा** स्त्री० ऋषभि निघण्टुः। [राजनि०।

**चित्रायस** न० कर्म्म० अच् समा०। तीक्ष्णलौहे (इस्पात)।

**चित्रायुध** त्रि० चित्राण्यायुधान्यस्य। १आश्चर्य्यायुधयुक्ते २धृतराष्ट्रपुत्रभेदे पु० “चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा” भा० आ० ११७अ०। “कार्ष्णिश्चित्रान्तराश्चित्रा चित्रायुधमुदावहन्” भा० द्रो० २२अ०। कर्म०। आश्चर्य्यायुधे न० चित्रायुधहरश्चितम्” भा० स० १६अ०। [चित्रलिखितपुत्तलिकादौ।

**चित्रारम्भ** पु० आरभ्यते आ+रभ कर्म्मणि घञ् ७त०।

**चित्रार्पितारम्भ** त्रि० चित्रेऽर्पित आरम्भोऽस्य। चित्रलिखिते “तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे” कुमा०।

**चित्रावसु** पु० चित्राणि विविधानि चन्द्रार्कज्योतीषि वसन्ति यस्यां वस उ–पृ० दीर्घः। रात्रौ “रात्रिर्वै चित्रावसुः सा चित्राणि संवस्य वसतीति” शत० ब्रा० २।३।४।१७। “चित्राणि पश्नक्षत्रादीनि” भा०। “चित्रावसो! स्वस्ति ते पारमशीय” यजु० ३।१८।

**चित्रिक** पु० चैत्रिक+पृषो०। चैत्रमासे शब्दरत्ना०। चित्राध्यार्थे च। चित्राशब्दे स्त्री।

**चित्रिन्** त्रि० चित्र–णिनि चित्र+अस्त्यर्थे इनि वा। १आश्चर्य्यकारके २चित्रयुक्ते च। स्त्रियां ङीप्। “अभिसिद्धासि तुविजाता चित्रिणीष्वा” ऋ० ४।२२।२।

"चित्रिणीषु चित्रकर्मसुशास्त" भा०। ४नायिकाभेदे स्त्री रतिमञ्जरी। "भवति रतिरसज्ञा नातिदीर्घा न खर्वा तिलकुसुमसुनासा स्निग्धदेहोत्पलाक्षी। कठिनघनकुचाढ्या सुन्दरी या सुशीला सकलगुण-विचित्रा चित्रिणी चित्रवक्त्रा। पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा। शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम्। शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्। वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्। पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी। शङ्खिनी क्षारगन्धा च मद्यगन्धा च हस्तिनी"।

**चित्रेश** पु० ६त०। १चन्द्रे शब्दच०। २चित्रेश्वरशिव-लिङ्गे न०

**चित्रेश्वर** न० प्रभासक्षेत्रस्थे चित्रगुप्तस्थापिते शिवलिङ्गभेदे यथा "ततो गच्छेन्महादेवि! चित्रेश्वरमनुत्तमम्। धनुषां सप्तके तस्य स्थितमाग्नेयदिग्विभागे। लिङ्गं महाप्रभावं हि सर्वपातकनाशनम्। तत्र चित्रेश्वरं पूज्य नरकात् न भ-वेद्भयम्। यत्तदस्थिगतं पापं चित्रोमार्जयति प्रिये! तस्मात् सर्वप्रयत्नेन चित्रेशं पूजयेत् सदा। तस्मात् पाप कृतोवापि नरकं नैव पश्यति"।

**चित्रोक्ति** स्त्री चित्रा आश्चर्यकरी उक्तिः। आकाश-वाण्यां त्रिका०। २चित्रकथने च।

**चित्रोपला** स्त्री ६त०। चित्रं उपलोयस्याम्। १नदीभेदे। "चित्रोपलां चित्रपद्मां मञ्जुलाम् मञ्जुवाहिनीम्" भा० भीष्म० ९अ०। नदीकथने। इयं चित्रोत्पलेति पुरु-षोत्तमतत्त्वे उक्ता। "नदी तत्र महापुण्या विष्णु-पादविनिर्गता। चित्रोत्पलेति विख्याता सर्वपापहरा शुभा" "चित्रोत्पला महानदी" रघुनन्दनः।

**चित्रौदन** पु० नित्यकर्म०। केतुबलिरूपे चित्राक्ते चित्रा-न्नशब्दे लक्षणसमम्। "चित्रौदनञ्च केतुभ्यः सर्वभक्ष्यैः समर्चयेत्" संस्का० त०।

**चित्र्य** त्रि० चित्र—कर्मणि यत्। पूज्ये "चय्य मा मर्त्योदिवि चित्र्यं रथम्" ऋ०५।६३।७। "चित्र्यं पूज्यम्" भा०।

**चिद्** अव्य०। चित्+क्विप्। १असाकल्ये किमर्थार्थे। तस्य चार्थाख्यार्थत्वेऽपि "अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्युपमार्थेऽपि" निरुक्तोक्तेः अव्ययाना-मनेकार्थत्वात् वा। २उपमायाम्। "दधि चिदित्युप-मार्थे" निरु०। ३निन्दायाम् "कुल्माषांश्चिदाहरेदिति कुत्सिते" निरु०। "यश्चिदिवमोत्मादितवृताब्दे डि-तेषु गतेः" पा० सूत्र परेषु तिङन्तं चानुदात्तम्। देवः पचति चित्" सि० कौ० "तिङन्तं च चिदुत्तरम्" पा०। "अविद्यमानपूर्वं चिदुत्तरं यत् तिङन्तं तद्युक्तं तिङन्तं नानुदात्तम्"। "विमलब्रह्म उदरस्तनमात्म-विलोकरूपं किं रतम्" सि० कौ०।

**चिदाकाश** पु० न०। चित् आकाशमिव निर्लेपत्वात् सर्वाधारत्वाच्च। आकाशवन्निर्लेपे शुद्धे ब्रह्मणि।

**चिदात्मन्** पु० चित् चैतन्यमात्मा स्वरूपमस्य। चैतन्य-स्वरूपे परात्मनि प्रत्यगात्मनि परपुरुषे। "एतद्रूपं भगवतोह्यरूपस्य चिदात्मनः" भाग० १।३।३१। श्लोकः

**चिदाभास** पु० चित आभासः प्रतिबिम्बः। बुद्धावात्म प्रतिबिम्बे जीवे "बुद्धिवृत्तिचिदाभासाविति वेदान्तका०। चित्रदीपशब्दे दृश्यम्। [१हृदयालौ हेमच०।

**चिद्रूप** पु० चिदेव रूपमस्य। १आत्मनि, २स्फूर्त्तिमति च।

**चिन्तन** न० चिति—भावे ल्युट्। अनुध्याने "परद्रव्येष्वभि-ध्यानं मनसाऽनिष्टचिन्तनम्" मनुः। युच्। चिन्त-नाप्यत्र स्त्री।

**चिन्ता** स्त्री चिति—भावे अ। १अनुध्याने सा० द० उक्ते २व्यभिचारिगुणभेदे च तत् "धृतिचपलताग्लानिचिन्ता वितर्काः" व्यभिचारिणो विभज्य "ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्" सा० द० लक्षि-तम्। "चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः" चाणक्यम्। "चिन्तामपरिमेयाञ्च प्रलयान्ता-मुपाश्रिताः" गीता। "धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्" मनुः। ३दर्शनसंभोगभावनाभेदे रसमञ्ज०।

**चिन्तामणि** पु० चिन्तायां सर्वकामदोमणिः शा० त०। चिन्तितार्थप्रदे मणिभेदे। "चिन्तामणीनुदारांश्च चि-न्तिते सर्वकामदान्" हरिवं० १५२अ०। "सामर्थ्य सम्पा-दितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं कुमारः" भट्टिः। २सर्वकामदे परमेश्वरे च "आयुरारोग्यमैश्वर्यञ्च भोगां-श्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यम् सर्वकामप्रदो-हरिः" इत्युक्तेस्तस्य तथात्वम्। ३मन्त्रविशेषे "सहज-स्थानगो भौमो भाग्यस्थश्च बृहस्पतिः। चिन्तामणिसमा-ख्योऽयं यातुः संकल्पपूरकः" ज्यो० उक्ते ४यात्रायोगभेदे ५बुद्धदेवे त्रिका०। ६स्पर्शमणौ "यथा चिन्तामणिं स्पृ-ष्ट्वा लौहं काञ्चनतां व्रजेत्"। पद्मोत्त०ख० कपिलव्यवहारा-द्भुते तदीयचिन्तामणिहारकगणदैत्यनाशके गणेश-भेदे तत्कथा "रत्नं हृत्वा महावीर्यं चिन्तामणिसंज्ञा-

ऽद्भुतः चिन्तामणिरिति ख्यातं तव नाम भविष्यति। अतश्चिन्तामणिं नाथ! त्वमेव स्वीकुरु प्रभो"!। "मुनिना कपिलेनासौ प्रार्थितोऽभिजिताऽपि च। मणिश्चिन्तामणिर्व्यत्वा गुगुभे स विनायकः। चिन्तामणिरिति ख्यातिस्ततोऽपि परमां दधौ। कपिलस्य स्थले जातः कपिलाख्यामतो ययौ" स्क० पु० गणपतिकल्पे

**चिन्तामणिविनायक** पु० काशीस्थे गणपतिमूर्तिभेदे "चतुर्थावरणे काश्यां भक्तविघ्नविनायकाः। द्रष्टव्या हृष्टचेतोभिः सप्टमष्टौ विनायकाः" इत्युपक्रमे "हेरम्बा दक्षिदिग्भागे चिन्तामणिविनायकः। भक्तचिन्तामणिः साक्षात् चिन्तितार्थसमर्पकः" काशी० ५७ अ०।

**चिन्तावेश्मन्** न० ६त०। मन्त्रणागृहे।

**चिन्ति** पु० चिति—इन्। देशभेदे तस्य सुराष्ट्रेण सह द्वन्द्वे कार्त्तकौजपा० पूर्वपदप्रकृतिस्वरः चिन्तिसुराष्ट्राः।

**चिन्तिडी** स्त्री तिन्तिडी+पृषो०। तिन्तिडीवृक्षे हिमको०।

**चिन्तित** त्रि० चिति—कर्म्मणि क्त। चिन्ताकर्म्मणि "सख्या इवं सत्पथाश्रयि चिन्तितानि" किरा०। कर्त्तरि क्त। २चिन्तायुक्ते ३तत्नामिकायां स्त्रियां स्त्री। भावे क्त। ४चिन्तायाम् न०।

**चिन्तिति** स्त्री० चिति—क्तिन् बा० इट् णिलोपश्च। चिन्तायाम् शब्दरत्ना०। [त्रिका०।

**चिन्तिया** स्त्री० चिन्ता+स्वार्थे बा० घ। चिन्तायां

**चिन्त्य** त्रि० चिति—कर्म्मणि यत्। चिन्तनीये "केषु केषु च भावेषु चिन्त्योऽसि भगवन्! मया" गीता। "अयं हि सर्वधर्म्माणां धर्म्मश्चिन्त्यतमोमतः" भा० आनु० ४४अ०।

**चिन्त्यद्योत** पु० चिन्त्यःसन् द्योतते द्युत—अच्। देवभेदे। "गणा देवानामूष्मपाः सोमपाश्च लोकाः तुषितास्तुषिता ब्रह्मकायाः। आभासुरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोविरुद्धाः। शुद्धाश्च निर्माणरताश्च देवाः स्पर्शाशना दर्शपा आज्यपाश्च। चिन्त्यद्योता ये च देवेषु मुख्याये चाप्यन्यादेवतास्त्वाजमीढ!।। सुपर्णगन्धर्वपिशाचदानवा यक्षास्तथा चारणपन्नगाश्च" भा० अनु० १८अ०।

**चिपिट** पु० चि—पिटच् किच्च। (चिडा) ख्याते पृथुके हेमच०। तत्करणप्रकारादि भावप्र० उक्तं यथा "शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः। कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि। शालयो यवनालाद्याश्चिपिटा पृथिवर्द्धनाः"। अस्य भक्ष्याभक्ष्यत्वं यथा "दधि शिलाकं पृथुकं पथ्यं देवविनिर्मितं। भक्ष्यं विप्राणां भोजने च निवेदने। अभक्ष्यं सत् यतीनाञ्च विधवाब्रह्मचारिणाम्" ब्रह्मवै० पु०। "नासिकाया नते इनच् पिटच् चिकचि च" पा० नासि०. पिटच् प्रकृतेश्चिः। २नतनासिकायां (खांदा) ३तद्वति त्रि० (चेपटा) ४ख्याते पदार्थे "करतलपीडनचिपिटीकृतश्रवणपुटेन" काद०। "उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलोऽतुलभोगदः। वक्रोहस्वश्च चिपिटः सुखसौभाग्यभञ्जकः। चिपिटीभिर्भवेद्दासी" इति काशी० ख० ३७। प्रान्ते अङ्गुल्यानिपीडनेन ५नेत्रस्याकुलतायाम्। "अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः" नैष०। "दृगन्तचिपिटीकरणं नेत्रान्ताङ्गुलीकरणम्" मल्लि०। अङ्गुल्या हि नेत्रप्रान्तनिपीडने एकपदार्थस्य द्विधा भानं लोकप्रसिद्धम्। ६शुष्कामिनीदृष्टे स्त्री राजनि०। पृषो० चिपटोऽपि पृथुके हेमच०। स्वार्थे क। चिपिटक पृथुके अमरः।

**चिपिटनासिक** पु० चिपिटा नासिका यत्र। १देशभेदे स च देशः "उत्तरतः कैलासः" इत्युपक्रमे "कैशधरचिपिट नासिकदासेरकवाटधानाः" इ०स० १४०अ० कूर्मविभागे उत्तरस्यामुक्तः। सोऽभिजनोऽस्य अण्ः तद्राजाणो वा बहुत्वे लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०।

**चिपुट** पु० चिपिट+पृषो०। पृथुके शब्दः।

**चिप्प** पु० "नखमांसमधिष्ठाय वातं पित्तं च देहिनाम्। करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्" भाव० उक्ते नखरोगभेदे। (आङ्गुल हाडा)

**चि(छि)प्पिका** पु० रात्रिचरजन्तुभेदे "सौभाग्यिकापिङ्गलचि(छि)प्पिकाख्यौ वलगुल्युलूकौ शशकश्च रात्रौ" वृ० स० ८८अ०। "सर्वे स्वकालोत्क्रमचारिणः स्युर्देशस्य नाशाय भयानदा वा" तस्य दिवाचारेऽनिष्टफलमुक्तम् "नानाविधानि विकृतानि हि चि(छि)प्पिकायास्तस्याः शुभः कुलुकुलु न शुभास्तु शेषाः" वृ० स० ८८अ०।

**चिप्य** पु० स्वश्रुतोक्ते कृमिभेदे कृमिशब्दे दृश्यम्।

**चिमि** पु० चि—बा० मिक्। १शुकपक्षे शब्दरत्ना०। २पट्टवस्त्रे (पाटशाक) शब्दमाला। स्वार्थे क तत्रार्थे।

**चिर** न० चि—रक्। १दीर्घकाले। २तद्वर्त्तिनि पदार्थे त्रि०। स्वरादौ (।ऽ) त्रिकले गणे शब्दार्थचि० "दीर्घसूत्री चिरक्रियः" अमरः। चिरजीवी चिरकारी चिरकालादि।

**चिरकारिन्** त्रि० चिरेण करोति क—णिनि। १चिरेण कर्म कर्त्तरि दीर्घसूत्रे। २गौतमस्य पुत्रभेदे पु०।

"चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः। चिरेण सर्वकार्याणि विमृश्यार्थान् प्रपद्यते। चिरं सञ्चिन्तयन्नर्थांश्चिरं जाग्रत् चिरं स्वपन्। चिरं कार्याभिपत्तिश्च चिरकारी तथोच्यते" भा० शा० २६७अ०। तस्य चिरकारिताफलं तत्राध्याये वर्णितम्। स्वार्थे क, चिरःकारः क्रियाऽस्त्यस्य ठन् वा। चिरकारिकोऽप्यत्र तत्रैवोदा०

**चिरकाल** पु० कर्म०। दीर्घकाले। [क्रियाकारके अमरः।

**चिरक्रिय** त्रि० चिरा क्रिया यस्य। दीर्घसूत्रे विलम्बेन

**चिरजात** त्रि० चिरं दीर्घकालं जातः। दीर्घकालजाते। दस्यदस्युशब्दे ३४५पृ० उक्ते भा० व० वाक्ये उदा०

**चिरजीवक** पु० चिरं जीवति जीव–ण्वुल्। १जीवकवृक्षे। जटाधरः। २चिरजीवनयुते त्रि०

**चिरजीविका** स्त्री कर्म०। दीर्घकालवृत्तौ "हणीष्व वित्तं चिरजीविकाश्च कठ० उ०

**चिरजीविन्** त्रि० चिरं जीवति जीव–णिनि। १दीर्घकालजीवनयुक्ते २विष्णौ ३काके च पु० मेदि० ४जीवकवृक्षे ५शाल्मलिवृक्षे पु० राजनि०। ६मार्कण्डेये "अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः। कृपः परशुरामश्च सप्तैते चिरजीविनः" ति० त० उक्तेषु ७अश्वत्थामादिषु "चिरजीवी यथा त्वं भोः" ति०त०। मार्कण्डेयप्रभृतयः। "अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि। समेत्य राजकर्त्तारः सभामीयुर्द्विजातयः। मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च कश्यपः। कात्यायनो गौतमश्च जावालिश्च महायशाः। एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन्। वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम्" ... "अथ राज्ञो वभूवैव वृद्धस्य चिरजीविनः" (दशरथस्य) रामा० अयो० १।२६। श्लोकः। [दार्वे।

**चिरञ्जीविन्** पु० चिरं जीवति जीव–णिनि। चिरजीविपदार्थे।

**चिरण्टी** स्त्री चिरेण अटति पितृगेहात् भर्त्तृगेहम् अट–अच् पृषो०। १यौवनवत्यां पितृगेहस्थायां स्त्रियाम्। अमरः २युवत्यां स्त्रियां। [शब्दरत्ना०।

**चिरतिक्त** पु० चिरस्तिक्तो रसो यस्य। (चिराता) भूनिम्बे

**चिरत्न** त्रि० चिरे भवः चिर+त्न। चिरन्तने पुरातने जटा०।

**चिरन्तन** त्रि० चिरम्+भवार्थे ट्युल् तुट् च। पुरातने अमरः। "स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत्" माघः। स्त्रियां ङीप्।

**चिरपाकिन्** पु० चिरेण पाकोऽस्त्यस्य दुर्जरत्वात् इनि। कपित्थे. राजनि०।

**चिरपुष्प** पु० चिराणि पुष्पाण्यस्य। बकुलवृक्षे राजनि०।

**चिरम्** अव्य० चि–बा० रमुक्। बहुकालार्थे हेम०। "चिरं जीवेद्य भवान् सखा मी" मेघ०। "ततः प्रजानां चिरमात्मना धृताम्"। "विपक्षभावे चिरमस्य तस्थुषः" रघुः। एषु क्रियाविशेषणत्वात् चिरशब्दात् द्वितीयैत्यपि भवितुमर्हति। चिरन्तनः चिरञ्जीवन इत्यादौ चास्य उदा०

**चिरमेहिन्** पु० चिरेण मेहति मिह–णिनि। दीर्घकालेन प्रस्रावकारिणि गर्द्दभे हेमच०।

**चिरम्भण** पुंस्त्री० चिरं भणति भण–अच्। चिल्ले त्रिका०। तस्य दीर्घकालरावशब्दयत्वम्।

**चिररात्र** न० चिरा रात्रिः योगविभागात् अच् समा०। दीर्घकाले "चिररात्रोषिता कोऽहं ब्राह्मणस्य निवेशने" भा० आ० १६८अ०। "चिररात्रप्रुषितं कर्म्म तद्वतात् कर्त्तुमर्हति" भा०उ० ६२अ०।

**चिररात्राय** अव्य० चिररात्रमयते अय–अण् उप० स०। दीर्घकाले। "हविर्यद् चिररात्राय तच्चानन्त्याय कल्पते" मनुः "शक्यते दुष्करेऽप्यर्थे चिररात्राय जीवितम्" भा० व० १२१अ०।

**चिरलोक** पु० चिर० चिरकालस्थायी लोकोयेषाम्। प्राप्तपितृलोकेषु पितृषु "स एकः पितॄणां चिरलोकलोकानामानन्दः" तैत्ति० उ०। "चिरकालस्थायी लोको येषां पितॄणां चिरलोकाः पितरः" भा०।

**चिरविल्व** पु० चिरं विलति विल–भेदने क। करञ्जवृक्षे अमरः। "चिरविल्वयुतं पुष्पं पनसार्जुनसंकुलम्" भा० व० ५५अ०। [अमरः। स्वार्थे क अत्रार्थे

**चिरसूता** स्त्री चिरं सूता। बहुकालप्रसववत्यां गवादी।

**चिरस्थ** त्रि० चिरं तिष्ठति स्था–क। १चिरस्थायिनि २बायके पु० त्रिका०। स्था–णिनि। चिरस्थायिन् दीर्घकालस्थायिनि त्रि० स्त्रियां ङीप्।

**चिरस्य** अव्य० चिरमस्यते अस–यत् शक०। दीर्घकाले। अमरः। "चिरस्य दृष्टेव मृतोत्थितेव" कुमा०।

**चिराटिका** स्त्री चिरमटति अट–ण्वुल् कापि अतइत्वम्। श्वेतपुनर्णवायां रत्नमा०। २चटिकालतायाञ्च (पाकाडी) वैद्यकम्। "गोमूत्रयुक्तस्य पुरातनस्य यद्वायवस्थानि चिराटिकायाः" वैद्यकम्।

**चिरात्** अव्य० चिरमतति अत–क्विप्। १दीर्घकाले, "चिराद्वारैः समागतम्" रामा० ४।२७।१७। "तस्मा चिराभ्यहताश्लेषेन स्फुटकाशौ निवसतः" द्वितो०। २गरुडे पु० त्रिका०। ३चिरतिक्ते (चिराता) शब्दर०।

**चिराय** अव्य० चिरमयते अय–अण्। चिरकाले दीर्घकाले। "चिराय यदि ते सौम्य! चिरमस्मि न दुःखितः" भा० शा० २६७अ०। "चिराय मान्तः प्रथमाभिधेय-

तास्" । "अभीष्टमासाद्य चिराय काम्यः" माघः ।

**चिरायुस्** पु० चिरमायुर्यस्य । १देवे । २चिरजीविनि त्रि० त्रिका० "सद्यः सौहृदा च वीर्यवन्तं चिरायुषं च पुत्रं जनयति" सुश्रुतः । [अचिरायीत् । वैदिकोऽयम् ।

**चिरि** हिंसे स्वादि० पर० सक० सेट् । चिरिणोति

**चिरि** पु० चि—बा० रिक् । शुकखगे त्रिका० । स्वार्थे क । तत्रार्थे हेमच० :

**चिरिण्टी** स्त्री चिरण्टी+पृषो० । स्ववासिन्यां पितृगेहस्थायां कन्यायाम् अमरे रिमध्यपाठान्तरम् ।

**चिरिबिल्व** पु० चिरबिल्व+पृषो० । करञ्जवृक्षे भावप्र० ।

**चिरु** न० चीयते चि—बा० रुक् । बाहुसन्धौ शब्दच० ।

**चिरे** अव्य० चिरमेति इ—विच् । दीर्घकाले । "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" अमरटीकायाम् आद्यशब्देन चिरे चिरेण चिरात् इति संग्राह्यम्" भानुजदीक्षितः ।

**चिरेण** अव्य० चिर+ बा० एनप् । दीर्घकाले "निद्रा चिरेण नयनाभिमुखी बभूव" रघुः । "चिरेण मित्रं बध्नीयात् चिरेण च कृतं त्यजेत् । चिरेण च कृतं मित्रं चिरं धारणमर्हति" भा० शा० २६७अ० । [हेम० ।

**चिर्भटी** स्त्री चिरेण भटति भट-अच् गौ०ङीष् पृषो० । कर्कट्याम्

**चिर्भिट** पु० चिर्भटी+पृषो० । १कर्कटीभेदे गोरक्षकर्कट्याम् (गोरक्ष) राजनि० । फले न० "चिर्भिटं मधुरं रूक्षं गुरु पित्तकफापहम् । अनुष्णं ग्राहि विष्टम्भि पक्वं तृष्णाघ्नं पित्तलम्" भावप्र० तत्फलगुणोक्तिः । [चिचेल ।

**चिल** वासे आच्छादने तु०पर०सक० सेट् । चिलति अचेलीत् ।

**चिल(मि)मीलिका** स्त्री चिरं मिलति मीलति वा ण्वुल् । रस्य लः १कण्ठीभेदे २खद्योते ३विद्युति च मेदि० ।

**चिलिचिम** पु० चिल—इन् चिलिं वास चिनोति चि—मक् । (चेलुकगुडिया) मत्स्यभेदे अमरः । अस्य पृषो० चिलिचीम चिलीचिम चिलीचिमि चिलीचीम चेलिचीम चेलिम चिल्लिम चिलोचीमि इति रूपान्तराणि । (चेङ्ग) ख्याते मत्स्ये भरतः ।

**चिलमीनक** पु० चिल—क कर्म० संज्ञायां कन् । (चेङ्गो) मत्स्ये भरतः । [अचिल्लीत् । चिचिल्ल ।

**चिल्ल** शैथिल्ये भावकृतौ च भ्वा० पर० अक० सेट् । चिल्लति

**चिल्ल** पु० चिल्ल—अच् । १पक्षिभेदे (चिल) अमरः । क्लिन्न+पृषो० । २क्लिन्ने त्रि० मेदि० ।

**चिल्लक** पुंस्त्री चिल्ल इव कायति शब्दायते कै—क । झिल्लिकायां शब्दरत्ना० चिल्ल+स्वार्थे क चिल्लशब्दार्थे पु० "खरोष्ट्रमहिषा व्याघ्राः । श्येना गृध्राश्च चिल्लकाः" भा० द्रो० प० ।

**चिल्लभक्ष्या** स्त्री ६त० । इङ्गिलासिन्यां शब्दच० ।

**चिल्लाभ** पु० चिल्ल इव प्रसह्यहारित्वादाभाति आ+भा—क । ग्रन्थिभेदके चौरे त्रिका० ।

**चिल्लि** पु० चिल्ल—इन् । भ्रूमध्ये शब्दार्थचि० । स्वार्थे क तत्रार्थे । "चकितचपरकेतनचरासमानतां चिल्लिकालतास्" काद०

**चिल्ली** स्त्री चिल्ल—बा० ई । क्षुद्रवास्तुकशाके राजनि० । "तण्डुलीयकोपोदकाऽश्ववलाचिल्लीपालङ्क्यावास्तूकप्रभृतीनि । सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च । मन्दवातकफान्याहु रक्तपित्तहराणि च । कटुर्विपाके क्रमिहा मेधाग्निबलवर्द्धनः । सक्षारः सर्वदोषघ्नो वास्तूको रोचकः सरः । चिल्ली वास्तूकवत् ज्ञेया पालङ्क्या तण्डुलीयवत्" सुश्रु० । २झिल्लिकायां शब्दर० । स्वार्थे क । चिल्लिकाप्यत्र ।

**चिवि** स्त्री चीव—इण् पृषो० । चिबुके जटाधरः ।

**चिविट** पु० चिपिट+पृषो० । चिपिटे त्रिका० ।

**चिविल्लिका** स्त्री रक्तदलायां क्षुद्रक्षुपभेदे राजनि० ।

**चिवु(क)** न० चीव—संवरणे उ पृषो० ह्रस्वः । ओष्ठाधोभागे अमरः । "वक्ति तावदरं शीर्षं चिबुके च सुगुण्डके" वामन० । स्वार्थे क तत्रैवार्थे । २मुचकुन्दवृक्षे पु० राजनि० ।

**चिश्चा** अव्य० इत्युक्तिशब्दविशेषानुकरणे । "चिश्चा कृणोति सकनावगत्य" ऋ० ६।७५।५। चिश्चेति शब्दानुकरणे इषुधिर्यमाणेभ्यिषुधिश्चिश्चाशब्दं करोति" भा० ।

**चिहण** त्रि० चिक्कण+पृषो० । चिक्कणे "आदिश्चिहणादीनाम्" पा० अस्य क्लीवकन्थाशब्दे परे आद्युदात्तता चिहणकन्थम् सि० कौ० ।

**चिहणादि** पु० क्लीवकन्थाशब्दे परे आद्युदात्ततानिमित्ते शब्दगणे स च गणः पा० ग० सूत्रे उक्तो यथा "चिहण मडर मडुमर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण चिहणादिः ।

**चिहुर** पु० चिकुर+ पृषो० । चिकुर शब्दार्थचिन्तामणिः ।

**चिक्क** व्यथने चु० उभ०सक० सेट् । चिक्कयति ते अचिचिक्कत् त । चीक्कोऽयमिति केचित् ।

**चिक्क** पु० चिक्क-अच्, चक्क-न उपधाया इत्वम् वा ।

कर्षादिके (१८) १ चिह्नके गन्धे शब्दार्थचि० । २ध्वजे च "चक्रे प्रजाः स्वा. धनिवेशचिह्नाः" "स्वनामचिह्नं निचखान सायकम्" रघुः ।

**चिह्नकारिन्** त्रि० चिह्नं करोति कृ-णिनि । १चिह्नकर्त्तरि २घोरदर्शने विश्वः स्त्रियां ङीप् ।

**चिह्नधारिन्** त्रि० चिह्नं धारयति धारि-णिनि । १चिह्नयुक्ते स्त्रियां ङीप् सा च २प्रग्राणालतायां शब्दच० ।

**चिह्नित** त्रि० चिह्न-कर्माणि क्त । १अङ्किते २लाञ्छिते । "दिवा चरेयुः कार्यार्थं चिह्निताः राजशासनैः" मनुः ।

**चिह्नि** पु० चिह्न+पृषो० (गान्धारी) पर्वतमविद्धे इक्षभेदे शब्दार्थचि० । स्वार्थे क । तत्रार्थे "चिह्नकोवातनिशीरी श्लेष्मकोपात्पुष्टिकृत् ; कास्ये यो विषहृत्तस्य फलं मलुक्षनिषूदनम्" भावप्र० ।

**चीक** मर्षणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।

**चीचीकुटि** अव्य० शारिकादिशब्दानुकरणे "चीचीकूटीति वाशन्ते सारिका इष्णिवेश्मसु" भा० मौ० २अ० । "चीचीकूटीति वाशन्तं श्यामस्य न शृणोमि किम्" हरिव० २०अ० । [राजनि० ।

**चीडा** स्त्री चिड-पृषो० । स्वनामख्याते गन्धद्रव्ये ।

**चीन** पु० चि-नक् पृषो० दीर्घः । "काश्मीरं तु समारभ्य कामरूपात्तु पश्चिमे । भोटान्तदेशो देवेशि ! मानसेशाच्च दक्षिणे । मानसेशादुत्तपूर्वे चीनदेशः प्रकीर्त्तितः" शक्तिसङ्गमतन्त्रोक्ते १देशभेदे । सोऽभिजनोऽस्य अणः तद्राजस्य वा बहुत्वे लुक् । २तद्देशवासिषु तन्नृपेषु च ब० व० । "वाजिनां च सहस्राणि चीनदेशोद्भवानि च" भा० उ० २७अ० । अयञ्च देशः वृ० सं० १४अ० कूर्मविभागे ऐशान्यामुक्तः । ऐशान्यामित्युपक्रमे "वनराजकिरातचीनकौणिन्दाः" "शकाश्चीनकाम्बोजा दारुणाम्लेच्छजातयः" भा० भी० ९अ० अनपदोक्तौ । तद्देशस्य क्रियालोपात् शनैर्वृषलत्वं मतम् यथाह मनुः "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजाः यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराताद्दरदाः खशाः" । ४तद्देशजे वस्त्रभेदे च "कामीटीचीनपीनस्तनवसनदशान्दोलनस्पन्दमन्दः" उद्भटः । ५व्रीहिभेदे अष्टादशधान्यशब्दे ५२४पृ० दृश्यम् । "चीनकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद्गुणैः" भावप्र० । ६सूत्रे ७मृगभेदे च मेदि० । ८पताकायां न० त्रिका० । ९सीसके न० रत्नमाला तन्त्रोक्ते १०तद्देशवासिजनानामाचारभेदे पु० । पृषो० अस्य णत्वमपि वदन्ति । ११चीनकर्पूरे राजनि० ।

**चीनकर्पूर** पु० चीनोपपदः कर्पूरः । कर्पूरभेदे राजनि० ।

**चीनज** न० चीने तद्देशे जायते जन-ड । १तीक्ष्णलौहे राजनि० । २चीनजातमात्रे त्रि० ।

**चीनपिष्ट** न० चीनस्य सीसकस्य पिष्टं चूर्णं हृत० । (चीनेर सिन्दुर) १सिन्दूरभेदे हेमच० । चीनं पिष्टमिव । २सीसके राजनि० ।

**चीनवङ्ग** न० चीनभवं वङ्गम् । सीसके राजनि० ।

**चीनांशुक** न० कर्म० । चीनाख्ये पट्टवस्त्रभेदे "चीनांशुकमिव केतुः प्रतिवातं नीयमानस्य" शकु० । "चीनांशुकमिव पीनस्तनजघनायाः कुलीनायाः" उद्भटः ।

**चीनाक** पु० चीनं तदाकारं क कति अक-अण् । (चीनिया) कर्पूरभेदे । "चीनाकसंज्ञः कर्पूरःकफक्षयकरः स्मृतः । कुष्ठकण्डूविषहरस्तथा तिक्तरसश्च सः" भावप्र० ।

**चीनाककर्कटी** स्त्री चीनमिव स्वादुः कर्कटी पृषो० दीर्घः । १राजकर्कट्यां चित्रकूटप्रसिद्धकर्कटीभेदे राजनि० ।

**चीभ** प्रशंसायां भ्वा० आत्म० सक० सेट् । चीभते अचीभिष्ट । चिचीभे ऋदित् अचिचीभत् त ।

**चीर** न० चि-क्रन् दीर्घश्च । १वस्त्रखण्डे मेदि० । (कानि) "चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम्" शान्तिश० । २वृक्षत्वचि सुभूतिः । ३गोस्तने ४वस्त्रभेदे ५रेखा लेख्यभेदे मेदि० । ६वस्त्रमात्रे ७चूडायां ८सीसके हेमच० । ९लिखनभेदे १०वल्कले च शब्दार्थचि० "तं कदाचित् तपस्यन्तमार्द्रचीरजटाधरम्" भा० व० १८७अ० । "चेलचीरपरिच्छदाः" कुमा० । [स्वार्थे क । चीरशब्दार्थे

**चीरक** न० चीर+संज्ञायाम् कन् । विकारलेखने विश्वः ।

**चीरपत्रिका** स्त्री चीरमिव पत्रमस्याः कप् अत इत्वम् । चञ्चुशाके राजनि० ।

**चीरपर्ण** पु० चीरमिव पर्णमस्य । शालवृक्षे राजनि० ।

**चीरनिवसन** पु० चीरं निवसनं वस्त्रं यस्य । "ऐशान्यामित्युपक्रमे "पौरवचीरनिवसननिनेत्रमुञ्जाद्रिगन्धर्वाः" वृ०सं०१४ उक्ते १देशभेदे २तद्देशवासिषु ३तन्नृपेषु ब० व० । ४चीरधारिणि त्रि० [वर्मजाः" सुश्रुतः ।

**चीरल्लि** पु० । पक्षिभेदे "धारयेदपि जिह्वाश्च चाषचीरल्लि

**चीरि** स्त्री चि-बा० क्रि दीर्घश्च । १नेत्रांशुके शब्दरत्ना० । २झिल्लिकायां ३कच्छटिकायां शब्दार्थचि०

चीरिका स्त्री चीरीति कायति कै–क । झिल्लिकायां हेमच० ।

चीरिणी स्त्री वैवस्वतमनोस्तपस्यास्थानसमीपस्थे वदरीक्षेत्रस्थे नदीभेदे। "जह्नु बाहुर्विशालायां वदर्यां स (वैवस्वतः) नराधिपः। इत्युपक्रमे "तं कदाचित् तपस्यन्तमार्द्रचीर जटाधरम्। चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत्" भा० व० १८७अ०। [पालङ्क्यशाके भावप्र०।

चीरितच्छदा स्त्री चीरवदाचरितः छदो दलं यस्याः।

चीरीवाक पु० चीरीतिशब्दोवाकः वाचकोऽस्य। कीटभेदे "चीरिवाकस्तु लवणं वलाका शकुनिर्दधि" मनुना लवणहरणकर्म्मविपाके तद्योनिरुक्ता "स्तिनी वस्त्रं श्वा रसन्तु चीरी लवणहारकः" याज्ञ० ऐकवाक्यात् अस्य चीरीसमानार्थकताऽवसेया।

चीरुका स्त्री चीति–रौति–रुशब्दे वा० क। १झिल्लिकायां शब्दार्थचि०। सा वाहत्येनास्त्यस्य अच्। २फल-प्रधानवृक्षभेदे न०।

चीर्ण त्रि० चर भक्षणे क्त पृषो० अत इत्त्वम्। १कृते २शीलिते, ३सम्पादिते "चीर्ण व्रतानपि सदा कृतवर्जितानिमान्" याज्ञ०। ४विदारिते च। [ब्यवहृते च मेदि०।

चीर्णपर्ण त्रि० चीर्णं विदारितं पर्णमस्य। १खर्जूरवृक्षे २नि-

चीलिका स्त्री चीति शब्दं लाति ला–क टापि अत इत्त्वम् चीरिका+रस्य लो वा। झिल्लिकायां शब्दरत्ना०।

चील्लक पु०चीदिति शब्दं लकति लक–अच् पृषो०। झिल्लिकायां शब्दर०।

चीव ग्रहणे संवृतौ च भ्वा० उभ० सक० सेट्। चीवति ते अचीवीत् अचीविष्ट। चिचीव चिचीवे ऋदित्। अचि-चीवत् त।

चीव दीप्तौ चुरा०उभ०सक०सेट्। चीवयति ते अचीचिवत् त

चीवर न० चि–वरच् नि० दीर्घः चीव–अच् वा। भिक्षु प्रावरणे उज्ज्वलद० "कौपिनाच्छादनं यावत्तावदिच्छेच्च चीवरम्" भा० आ० ८१अ०। "प्रेतचीवरवसा स्वनो-ग्रया" रघुः। "मुण्डभाण्डचीवराणि" पा० चीव-रादर्जने परिधाने च" वार्त्ति० चीवराणि अर्जयति परिधत्ते वा सं चीवरयते भिक्षुः सि० कौ०। [त्रिका०।

चीवरिन् पु० चीवरमस्त्यस्य इनि। १भिक्षुके बुद्धभिक्षुके

चुक पीड़ने चु० उभ०सक० सेट्। चुकयति ते अचुचुकत् त।

चुक्कार पु० चुक्क–भावे–अच् चुक्कं पीड़नमाराति यस्मात् ददाति आ+रा–क। सिंहनादे त्रिका०।

चुक्र न० चक–रक् अत उत्त्वम्। १अम्लरसे २अम्लवेतसे पु० विश्वः ३शाकभेदे, (चुकापालङ्) ४वृक्षभेदे च शब्दार्थचि०। "चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम्। शूलगुल्मविबन्धामवातश्लेष्महरम् परम्। वमिहृल्लासवैरस्यहृत् पीड़ार्त्तिमान्द्यहृत्" भावप्र०। ५काञ्जिकभेदे। ६रसाम्ले ७सन्धानविशेषे शब्दार्थचि० "यन्मस्त्वादि शुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते। द्विगुणं गुड़मध्वारनालमस्तुक्रमादिह" वैद्यकपरिभाषा। ततः इष्ठा भावे इमनिच्। चुक्रिमन् अम्लत्वे पु०। स्वार्थे क संज्ञायां वा कन्। चुक्रक तत्रार्थे। (चुकपालङ्) शाके न०।

चुक्रफल न० चुक्रं फलति फल–अच्। वृक्षाम्ले राजनि०।

चुक्रवास्तुक न० चुक्रं वास्तुकमिव। (चुकपालङ्) शाकभेदे राजनि०। [राजनि०

चुक्रवेधक न० चुक्रमिव विध्यति विध–ण्वुल्। काञ्जिकभेदे

चुक्रा स्त्री चक–रक् अत उत्त्वम्। १चाङ्गेर्याम् (आमरुल) मेदि०। २तिन्तिड्यां शब्दर०। स्वार्थे क चुक्रिका। अम्ल लोणिकायाम् (आमरुल) अमरः।

चुक्राम्ल न० चुक्रमिवाम्लम्। १वृक्षाम्ले (चुकापालङ्) २शाके ३अम्ललोणिकायां (आमरुल) स्त्री राजनि०।

चुक्री स्त्री चुक्र+गौरा० ङीष्। चाङ्गेर्याम् "चुक्री त्वम्ल-तरा स्वाद्वी वातघ्नी कफपित्तकृत्। रुच्या लघुतरा पाके ग्रहण्यर्शोऽनिलापहा रोचनी" भावप्र०।

चुक्षा स्त्री चक्ष वधे बा० स पृषो०। १हिंसायां चुक्षा शोधनस्य क्रमा० च। चोक्ष हिंसाशीले त्रि०। "पिष्टाकीर्णं स्वच्छं शुभ्रं नीलाञ्जनसमोदकम्। लताविताननच्छन्नं चौक्ष(क्ष)मित्यभिधीयते। पद्मादिभिरव-न्नं यत् चु(क्षे)क्षेति च परे जगुः। तत्स्वादकं चौ-(क्षम्)क्षं मुनिभिः समुदाहृतम्" भावप्र० उक्ते जलाधारभेदे। सुश्रुतेन तज्जलस्य चौक्षसंज्ञोक्ता यथा "चौक्ष्यमिवाविल योनिम्" इति सुश्रुते निदानस्थाने चौक्षेति पाठास्तु लिपिकरप्रमादकृतः भावप्र० वङ्गे तु पुस्तकेषु चौक्ष्यमिति पाठः युक्तएव त्रिकाण्डे चुक्षा शब्दस्य पवित्रवाचकतार्थकत्वात् तत्रत्यजलस्यैव चौक्ष-संज्ञोचितत्वात्

चुचु(चू)क पु० न० चुचु इत्यव्यक्तशब्दं कायति पीयमानं कै–क। १कुचस्याग्रे अमरः तत्र चूचुकमिति। दीर्घ-

२चुम्बने स्त्री “अन्तेऽस्य चुम्बा प्रथमाऽभियोगः” “चुम्बाविरामे वदनं प्रमार्ष्टि” कु० स० ७८श्लो० ।

चुम्बक पु चुम्बति लौहम् चुबि–ण्वुल् । स्वनामख्याते अयस्कान्ते मणिभेदे “चुम्बको वेधनः शीतो मेदोविषगरापहः” भावप्र० । २घटस्योपर्य्यावलम्बने ३बहु-ग्रन्थैकदेशे । ४चुम्बनकर्त्तरि ५कामुके ६चुम्बनपरे ७धूर्त्ते च त्रि० शब्दार्थचि० ।

चुम्बन न० चुबि–भावे ल्युट् । मुखसंयोगविशेषे । “समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि । दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः” सा० द० । चुम्बनस्थानमाह कामशास्त्रे “कुचे काले ललाटे च कपोले च नेत्रयोरपि । अधरे मुखमध्ये च कपोलभगमूलयोः । चुम्बनस्थानमित्युक्तं विज्ञेयं कामकैरिह” । चु० चबि–भावे हच् । चुम्बनाध्यत स्त्री

चुर स्तेये (परद्रव्यापहरणे) वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चोरयति-ते चोरति अचूचुरत्–त अचोरीत् “यथाग्निं चोरयेत् स्वाहात्” वाम० । “अचूचुरत् चन्द्रमसोऽभिरामताम्” माघः ।

चुर त्रि० चुर–क । चौर्य्यकर्त्तरि [अचुरणीत् ।

चुरण चौर्य्ये कण्ड्वा० पर० सक० सेट् ।। चुरण्यति

चुरा स्त्री चुर–वा० भावे अ । चौर्य्ये शब्दरत्ना० । चुरा-शीलमस्य छत्रा० ण । चौर चुराशीले त्रि० ।

चुरि(री) स्त्री चुर वा० कि वा ङीप् । उपकूपे कूपसमीपस्थे जलाधारे हेम० ।

चुरुचुर पु० त्रि० चुर–कु चुर–क कर्म० । पिशुने अस्य कर्णे उपपदे पात्रेसमि० स० । कर्णेचुरुचुर कर्णे-पिशुने कुमारो व्यायुदात्ततास्य । [त पा०

चुल समुच्छ्राये वा चुरा० उभ० सक० सेट् । चोलयति-ते अचूचुलत्

चुल्ल त्रि० चुर-क रस्य लः । चोरे ततः चतुरर्थ्यां बला० य च । चुल्य तत्सन्निकृष्टदेशादौ त्रि० ।

चुलका स्त्री नदीभेदे “कावेरीं चुलकां चापि वेण्यां शतबलामपि” भा० भी० ९अ० । नद्युक्तौ

चुलुक पु० चुल-उकञ् । १प्रसृतौ २निविडपङ्के, ३भाण्डभेदे च त्रिका० ४भाजनाभ्यञ्जनयोग्ये जले न० हेमच० । “काव्यादुत्तरवाहिन्या एकेन चुलुकेन तत्” काशी० २९अ० । ५गोत्रप्रवर्त्तके ऋषिभेदे पु० ततः गर्गा० गोत्रे यञ् । चौलुक्य चुलुकगोत्रापत्ये पुंस्त्री० । स्त्रियां ङीप् यलोपश्च चौलुकी ।

चुलुकिन् पु० चुलुक+अस्त्यर्थे इनि । शिशुमाराकारे मत्स्यभेदे शब्दरत्ना० । चुलकयाकिनि त्रि० स्त्रियां ङीप् ।

चुलु(लुम्प)म्प लौल्ये भ्वा० पर० सक० सेट् । चुलुम्पति अचुलुम्पीत् “अमोघेनालिकेनीरममिव चुलुकैश्चुलुम्पन्नपो ये” महावी० । अस्य नोपधत्वे क्विपि चुलुन् नोपधत्वे चुलुम् । [२ताम्यां स्त्री त्रिका० ।

चुलुम्प पु० चुलुम्प–भावे घञ् । १बालकलालने जटा० ।

चुलुम्पिन् पु० चुलुम्प–णिनि । शिशुमाराकृतिमत्स्ये शब्दर० ।

चुल्ल भाव करणे भ्वा० पर० अक० सेट् । चुल्लति अचुल्लीत् चुचुल्ल । [२तद्युक्ते जने त्रि० मेदि० ।

चुल्ल न० क्लिन्नस्य चुलादेशः लच्प्रत्ययः । १क्लिन्ननेत्रे

चुल्लकी स्त्री० चुल्ल–ण्वुल् गौरा० ङीष् । शिशुमारे कुम्भीरभेदे मेदि० ।

चुल्ली(ल्लि) स्त्री चुल्ल-इन् वा ङीप् । चुल–वा० क्विप् वा । पाकार्थमग्निस्थापनस्थाने (चुला) अमरः । “चुल्ली चिरं रोदिति” उद्भटः । “पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः” मनुः । चाप् । चुल्लाप्यत्र । दीर्घान्तः चितायां मेदि०

चूत पुंन० चुष–क्त वा० छट् । १वृक्षे मांसपिण्डभेदे २कामोदीपनकाण्डे च शब्दार्थचि० । पनसफलान्तर्गते (भुति) इति ख्याते पदार्थे भरतः ।

चूचुक न० चूष्यते चूष-वा० उकः पृषो० षस्य च । १कुचाग्रे भरतः २चूचुकाग्रविशिष्टे त्रि० “परमपि शमदमावलाचूचुकाः” भा० आनु० २६अ० ।

चूडक पु० चूडा+स्त्यर्थे वा० कन् । कूपे त्रिका० ।

चूडा स्त्री चुड-अङ् चुल-समुच्छ्राये अङ् लस्य डः नि० दीर्घः । १मयूरशिखायां २शिरोमध्यस्थशिखामात्रे, शिखायाम् अमरः । ३वडभ्यां ४बाहुभूषणे, मेदि० । ५अग्रे हेमच० । ६कूपे त्रिका० । ७संस्कारभेदे तद्विहितनक्षत्रादि ज्यो० पी० धा० उक्तं यथा ।

“चूडा वर्षात्तृतीयात् प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी पर्वोनाहे विचैत्रोदगयनसमये ज्ञेन्दुशुक्रेज्यकानाम् वारे, लग्नांशयोश्चास्वभनिधनतनौ नैधने शुद्धियुक्ते शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः (१) क्षीणचन्द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपङ्गुताज्वराः । स्युः क्रमेण बुधजीवभार्गवैः केन्द्रगैश्च शुभमिष्टतारया (२) पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत् । पञ्च-वर्षाधिकस्येष्टं गर्भिण्यामपि मातरि । (३)

नारादौष्ट्रेऽब्जे त्रिकोणोद्गमे वा चौरं सत् स्यान्नो स्वमित्रस्ववर्गे। सौम्ये भेऽब्जे शोभने दुष्टतारा शस्ता ज्ञेया चौरयात्रादिकृत्ये (४)। अब्दमध्याः सूतिकायाः सूनोश्चौलादि नाचरेत्। ज्येष्ठापत्यस्य न ज्येष्ठे केचिन्मार्गेऽपि नेच्छते" (५)। मुहूर्त्तचिन्तामणिः

'चूडा वर्षादिति। तृतीयाद्वर्षादिति ल्यब्लोपे पञ्चमी। तेन गर्भाधानकालाज्जन्मकालाद्वा तृतीये विषमे वर्षे पञ्चमे सप्तमे वा चूडाकरणं प्रभवति सत् सच्छुभोदर्कं भवतीत्यर्थः। तदाह वशिष्ठः "तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतोहितम्। चौलं शिशूनां यत्नेन स गृह्योक्तविधानतः। आधानतोजन्मतो वा सप्तमाब्देऽपि कारयेत्"। स्वकुलाचारत इत्यनेन येषां कुले पार्थक्येन चूडाकरणं तत्र मुहूर्त्तविचारः। येषामुपनीत्या सहेष्यत इति पक्षस्तेषामुपनयनमुहूर्त्तेन सिद्धत्वान्न पृथङ्मुहूर्त्तविचारानुरोधः। अतएवोक्तं याज्ञवल्क्येन "चूडा कार्या यथाकुलमिति"। मनुना प्रथमवर्षे उक्तम्। "चूडाकर्म्म द्विजातीनां सर्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्" एवं बहुकालोक्तौ यथाचारं व्यवस्था द्रष्टव्या। स्वच्छे विशेषकालानुक्तौ तु समबलत्वात्सर्वेषां विकल्पः। विशेषमाह गुरुः "तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः। पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽथवा समम्" इति। अष्टेति अष्टाष्टमी अर्काः द्वादशी रिक्ताः प्रसिद्धाः आद्या प्रतिपत् षष्ठी प्रसिद्धा पर्वाणि अष्टमीचतुर्द्दशीपूर्णिमामावास्यासंक्रान्तयः। एतैर्दिने रहितेऽहनि। अत्र तत्पुरुषसमासे "राजाहःसखिभ्यष्टजिति" पा० टच् "न पूजित" इति टिलोपः। षष्ठ्यादितिथीस्त्यक्त्वा शेषासु तिथिषु चूडा स्यादित्यर्थः। यदाह गुरुः "द्वादशीं चाष्टमीं रिक्तां षष्ठीं प्रतिपदन्तथा। हित्वा शेषासु तिथिषु क्षौरकर्म शुभावहम्" काश्यपः "पञ्चपर्वतिथिं रिक्तां त्यक्त्वान्यदिवसे शुभमिति"। अतएवाह वशिष्ठः "पञ्चमी सप्तमी चैव दशम्येकादशी तथा। त्रयोदशी तृतीया च क्षुरकर्म शुभावहा" इति। चकाराद्द्वितीयाऽपि। ननु सप्तमी त्रयोदश्योर्नवपदस्यात्कथं तयोर्ग्रहणम्, यदाह गुरुः "विद्यारम्भोव्रतादेशः चौरश्चैव विशेषतः। नवपक्षे न कर्त्तव्यं यदीच्छेद्दीर्घजीवितमिति" चेत् उच्यते वैदिकं मुण्डनक्षौरमित्युच्यते तद्विषयको विधिः। अवैदिक मुण्डनं सुखार्थं यत् चौरमुच्यते तद्विषयं चौरमिति सामान्यव्युत्पत्तेरतद्विषयको निषेध इति वयं ब्रूमः। अब्दे देशाचारतो व्यवस्थामाहुस्तदयुक्तं विरोधाभावात्। विचित्रेति। चैत्ररहिते उत्तरायणे चूडा स्यात्। शुभाशुभप्रकरणाभिहितो जन्ममासनिषेधोऽत्रापि ध्येयः। तदाह राजमार्त्तण्डः "उत्तरगामिनि सवितरि चूडाकरणं शुभं वा यवनाः। चैत्रं हित्वा पापग्रहदिवसं जन्ममासञ्च"। तथा सोमेन्दुशुक्रज्यकानां वारे लग्नांशयोश्चेति सौम्यग्रहवारे सौम्यग्रहाणां लग्ने कर्कमिथुनवृषकन्यातुलाधनुर्मीनानामन्यतमे लग्ने तेषामेव च नवांशे चूडा स्यात्। "चन्द्रज्ञगुरुशुक्राणां वारलग्नांशकेषु चेति" काश्यपोक्तेः। विशेषमाह पराशरः "सितेज्यसौम्यवारेषु चौरं पक्षद्वये हितम्। इन्दुवारः सिते पक्षे वाराः शेषा न शोभनाः"। प्रयोगपारिजाते पापवाराणामप्यपवादः पठितः "पापग्रहाणां वारेऽपि विप्राणां तु शुभो रविः। क्षत्रियाणां तु भूसुतर्विट्शूद्राणां शनिः शुभः।" इति। तथा अष्टमनिधनतनौ भं लग्नं राशिश्च तस्य भे स्वभे ताभ्यां निधनमष्टमलग्नं तत्र विद्यते यस्मिन् तनौ स्वजन्मजन्मलग्नराशिभ्यामष्टमलग्नरहिते लग्ने चूडा स्यादित्यर्थः। तथा नैधनेऽष्टमस्थाने शुद्धियुक्ते शुद्धिः शुक्रव्यतिरिक्तसर्वग्रहराहित्यं तद्युक्ते सति चूडा स्यात्। उक्तञ्च कश्यपेन "नैधने शुद्धिसंयुक्ते लग्नराशौ न नैधने" इति। पराशरः "अष्टमस्था ग्रहाःसर्वे नेष्टाः शुक्रविवर्जिताः। शुक्रश्च निधने क्षौरे सर्वसंपत्करः शिशोरिति"। शाक्तोपेतैरिति। शाक्तोपेतैर्व्वेष्टायुक्तैर्विमलैरसुराचाररहितैश्चरलघुभिर्द्वादशभिर्नक्षत्रैरुपलक्षिते काले चूडा स्यात्। यदाह वशिष्ठः "अदितिद्वितये पौष्णद्वितये श्रवणत्रये। हस्तात्त्रितये शाक्रे चैन्द्रे चौलमीरितम्"। कश्यपोऽपि "हस्ते चादितिपुष्येन्द्रभेषु हस्तत्रयेऽपि च। विष्णुत्रये च पौष्णर्क्षे चौलकर्म्म शुभप्रदमिति" अविहितनक्षत्रेषु जन्मनक्षत्रमप्रशस्तमित्याह कश्यपः "नवान्नप्राशने चौले व्रतबन्धेऽभिषेचने। शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्म्मणीति" नारदादिवाक्यान्यन्नप्राशनेऽभिहितानि अत्र केचित् जन्मनक्षत्रपदन्तारापरं ज्ञेयमित्याहुः तथाचोक्तं वसिष्ठेन "हित्वैकं जन्मर्क्षं तारे जन्मसंज्ञिते शुभदे। उद्वाहे चोपनये यात्रायामन्नभोजने क्षुरे कार्ये" इति। तत्र अवैदिकक्षुरविषयत्वात् "जन्म

र्व्वं कर्म्मनक्षत्रे" इति गुरुवचनमपि तद्विषयमेव वैदिकक्षुरपरञ्च तत्कश्यपादिवाक्यमिति समञ्जसम्। अथ लग्नबलमाह। पापेति। एकादशषष्ठतृतीयस्थानस्थितैः पापग्रहैरुपलक्षिते काले चूडा स्यात्। "षष्ठान्त्यारिगे चन्द्रे पापैरायारिसंस्थितैः" इति काश्यपोक्तेः। (१) क्षीणेति। तथा क्षीणचन्द्रः। कुजो मङ्गलः सौरिः शनिः भास्करः सूर्य्यः एतैः केन्द्रस्थैः क्रमेण यथासंख्यं मृत्युः मरणं, शस्त्रहतिः शस्त्रानुहतिः, पङ्गुता खञ्जता ज्वरः प्रसिद्धः एतानि फलानि स्युर्भवेयुः। बुधजीवभार्गवैस्तु केन्द्रस्थैः शुभकल्याणकारि फलं चूडाकर्त्तुः स्यात् तदुक्तं रत्नमालायां "क्षौरेषु सकलविधिना चौलमाहुर्मुनीन्द्राः केन्द्रं यातेषु बुधगुरुसितेषु सर्व्वे ज्वरःस्यात्। शस्त्राघातो धरणितनये पङ्गुता चार्कपुत्रे शीतज्योतिष्यपचिततनौ निश्चितं नाशमेति"। केन्द्रव्यतिरिक्तस्थानफलमपि तत्रैव "धनव्ययत्रिकोणगैरसद्ग्रहैर्व्वं तावपि। क्षुरक्रिया न शोभना शुभैस्तु पुष्टिकारिणीति" अतो न शुक्र एव शस्तो नान्ये शुभग्रहाः प्रागुक्तपराशरवाक्यस्मरणात्। क्षुरक्रिया क्षौरम् दुष्टतारयेति च पुनरिष्टतारया गोचरप्रकरणोक्तया शुभफलदतारया चूडा स्यात्। उक्तञ्च राजमार्त्तण्डेन "रविशुद्धौ व्रतकरणं रविगुरुशुद्धौ व्रतोद्वाहे। क्षौरन्तारशुद्धौ शेषञ्चन्द्राश्रितं कर्म्मेति"। ज्योतिर्निबन्धे "विवाहे सविता, शस्तो व्रतबन्धे बृहस्पतिः। क्षौरे ताराविशुद्धिश्च, शेषे चन्द्रबलम्बलमिति"। चौलप्रयोजनमाह वशिष्ठः "सर्व्वेषामेव वर्णानां चूडाकर्म्मविधिः स्मृतः। केशमूलं पिता ज्ञेयः, केशाग्रं जननी तथा। चौलेनैवायुषो वृद्धिश्चौलेनैवायुषः क्षयः। तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिमान्नरः"
व्यवहारनिबन्धे चौलारम्भे विशेषमाह श्रीपतिः" "केशश्मश्रुनखं पुरं पाटलिपुत्रस्य रीमहिष्कृताम्। दिति भट्टितिश्च चरतां क्षौरविधौ भवति कल्याणमिति"। यत्तु कैश्चिदुक्तम् "चन्द्रशुद्धिर्यत्र नास्ति ताराशाय विशेषतः। क्षौरकर्मेऽपि कर्त्तव्यं वारेण बुधसोमयोः" इति तत्सामान्यक्षौरविषयम् (२)। पीयूषधारा॥

अथ सगर्भायां मातरि सत्यां शिशोश्चौलार्थं सङ्कटमाह। पञ्चेति चौलाधिकारिणः शिशोर्मातुर्गर्भे पञ्चमासेभ्योऽधिके सति चौलं न सत् शुभफलदात् नैव स्यात्। अतः पञ्चमासेभ्यः पूर्व्वं चौलकृतं सच्छुभफलमित्यर्थः तदुक्तं गृह्यपरिशिष्टे "चूडाकर्म्म न कर्त्तव्यं यस्य मातास्ति गर्भिणी। करोति यदि मन्दात्मा तदा गर्भस्य नाशनम्। पितुर्व्वर्त्तिं वदन्त्येके चतुरब्दोत्तरे स्फुटम्" इति। वशिष्ठः "पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत्। विपद्यते शिशुश्चैव दम्पती शिशुरब्दतः। गर्भे मातुः कुमारस्य न कुर्य्याच्चौलकर्म्म च। पञ्चमासादधः कुर्य्यादत ऊर्द्ध्वं न कारयेत्" इति। अस्यापवादमाह। पञ्चेति पञ्चवर्षाधिकस्योल्लङ्घितपञ्चमवर्षस्य शिशोर्मातरि गर्भिण्यामपि सत्यां पञ्चमासादप्यूर्द्ध्वं विहितकाले चौलमिष्टकल्याणकारि भवेत्। अतो बालो यावत्पञ्चवर्षो न भवति तावत्पर्य्यन्तं निषेध इत्यर्थः। तदाह नारदः "सूनोर्मातरि गर्भिण्यां चूडाकर्म्म न कारयेत्। पञ्चमाब्दात् प्रागथोर्द्ध्वं गर्भिण्यामपि कारयेत्"। यदा तूपनयनेन सह चौलश्चिकीर्षितं तदा विशेषमाह ज्योतिर्नारदः "सहोपनीत्या कुर्य्याच्चेत्तदा दोषो न विद्यते" इति। अत्र तु पञ्चवर्षाणां न्यूनाधिकभावो नापेक्षितः सर्व्वापवादकत्वादस्य। एवं पार्थक्येन मौञ्ज्यपि सगर्भायां संस्कार्य्यमातरि सत्यां न भवति। तदुक्तम् "सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत्। गते तु पञ्चमे मासे गर्भादीनां क्षतिर्भवेत् (२)।

अथ चौले ताराबलमावश्यकमित्युक्तं तत्र दुष्टायां तारायां सत्यामपवादं शालिन्याह तारादौष्ट्ये इति तारायां दुष्टत्वं गोचरप्रकरणेऽभिहितं ततस्तत एवावधार्य्यम्। तस्मात्तारादोषे सत्यपि क्षौरञ्चौलं सच्छोभनं स्यात्। कस्मिन् सति? अब्जे चन्द्रे त्रिकोणगे नवपञ्चमस्थानस्थिते, अथ वोच्चगे वृषराशिस्थे। अथ वा सौम्यानां बुधगुरुशुक्राणां वर्गे षड्वर्गे अथ वा स्वस्यैव षड्वर्गे सति। उक्तञ्च ज्योतिस्तत्त्वे "सौम्यग्रहस्ववर्गे चन्द्रे तुङ्गे त्रिकोणगे वापि। क्षौरादिकोपकरणे तारादोषो न दोषाय"। आदिशब्देन यात्रा। "विपत्तारे गुडं दद्यात्" इत्यादयोऽपि तारादौष्ट्यापवादाः प्रागुक्तास्तेऽप्यत्रोह्याः। अथ शुभताराया गुणमाह सौम्ये भे विहिते नक्षत्रे सति अब्जे शोभने चन्द्रे गोचरोक्ताष्टस्थानस्थे सति दुष्टताराऽसमीचीनतारापि चेत् स्यात्तदा क्षौरयात्रादि मङ्गलकृत्येषु शस्ताऽतिप्रशस्ता निखिलदोषापवादिका स्यादित्यर्थः। तदप्युक्तं ज्योतिस्तत्त्वे "कृष्णचन्द्रव्यतिथी रिक्ता चन्द्रश्चाष्टमगस्तथा।

चतुर्थी भाग्यवेत्तारा षट्पञ्च नवमी तथा। अत्याप्त-हृद्युत्पी तारा न शुभा नापि निन्दितेति। (४) पी॰धा॰ "अथ चौड़ादिकार्ये कालविशेषनिषेधमाह ऋतु मता इति। ऋतुः स्त्रीधर्मः स यस्या अस्तीति ऋतु-मती तस्यामथवा सूतिकायां जातापत्यायाः सूनोः पुत्रस्योपनयनमन्यस्याः कन्याया वा चौलोपनयनविवाहा-दिशुभकार्यमात्मजस्य नाचरेत् न कारयेत्। उक्तं च प्रचेतसा "यस्य माङ्गलिकं ह्यन्नस्य माता रज-स्वला। वैधव्यं जायते तत्र न मार्यौः पाणिपीडने"। पाणिपीडने वैधव्यमन्यत्र मृत्युरित्यर्थः। सूतिकाया अपि कर्मानर्हत्वात् उक्तोविष्णुस्मृतौ। "सूतिकान्यु न वर्ती विंशतिरात्रेण कर्माणि कारयेत् मासेन स्त्री-जननीमिति"।

अतएव सूतिकाया उक्तकालपर्यन्तं कर्मानर्हत्वात्तदपत्य-स्यापि मङ्गलकार्ये निषेधः। ज्येष्ठेति ज्येष्ठापत्यस्याद्य-गर्भस्य पुत्रस्य कन्याया वा व्रतबन्धविवाहादि शुभकार्यं ज्येष्ठमासे न भवति उक्तञ्च रत्नमालायाम् "आद्यगर्भ-दुहितुः सुतस्य वा ज्येष्ठमासि न च जातु मङ्गलमिति" केचिदिति। मार्गेऽपि मार्गशीर्षमासेऽपि केचिदाचार्य्यै-राद्यगर्भसुतकन्ययोर्मङ्गलकार्यं नेष्यते तदाह गार्ग्यः "मार्गे मासि तथा ज्येष्ठे विवाहं चौलमेव च। ज्येष्ठपुत्र दुहित्रोश्च न कुर्वीत व्रतं तथा"। भरद्वाजोऽपि "मार्ग-शीर्षे तथा ज्येष्ठे क्षौरं परिणयं व्रतम्। आद्यपुत्र-दुहित्रोश्च यत्नतः परिवर्जयेत्"। अथाद्येन ज्ञापकात् द्वितीयादिगर्भपुत्रदुहित्रोर्ज्येष्ठे मार्गशीर्षे च न मङ्ग-लकार्याणां निषेधः किं तु विधिरिति प्रतिभाति" पी॰ धा॰।

चूड़ामणि पु॰ चूडास्थितोमणिः शा॰ त॰। १शिरःस्थे रत्ने अमरः। "चूडामणीकृतविधुर्वलयीकृतवासुकिः" सि॰ द॰। "चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम्" रघुः। चूडायां मणिरिवास्य। २काकमाचिकाफले मेदि॰। ३ग्रहणविशेषे यथा नारदे। "सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा। चूडामणिरयं योगस्तत्रानन्तं फलं स्मृतम्। अन्यवारे ग्रहणात् कोटिगुणमत्र फलं लभेत्"

चूड़ाम्ल न॰ चूडायामम्लोऽम्लम्। वृक्षाम्ले राजनि॰।

चूड़ार त्रि॰चूडामृच्छति ऋ—अण्। चूडागते तद्धः। प्रगृह्या॰ चतुरर्थ्यां अञ्। चौडार्य्यं तन्निर्वृत्तादौ त्रि॰।

चूड़ारक त्रि॰ चूडामृच्छति ऋ—ण्वुल्, चूडा+या॰ चारक वा। १चूडायुक्ते २ऋषिभेदे पु॰ तस्य गोत्रापत्यम् इञ्। चौडारकि तद्गोत्रापत्ये पुंस्त्री। बहुत्वे तु इञो यञ्ञन्ते च इञो लुक्। चूडारकाः तद्गोत्रापत्येषु ब॰व॰।

चूड़ारत्न न॰ चूडाया रत्नम्। चूडामणौ हेमच॰।

चूड़ाल त्रि॰ चूडा अस्त्यस्य प्राणिस्थत्वात् लच्। चूडायुक्ते "चूडालाः कर्णिकाकाभ—प्रकाश पिठरोदराः" भा॰ सौ॰ ७अ॰। २मस्तके न॰ शब्दरत्ना॰। ३उच्चटायां स्त्री अमरः ४श्वेतगुञ्जायां ५नागरमुस्तायां च राजनि॰।

चूड़ावत् त्रि॰ चूडा अस्त्यर्थे प्रशंसायां मतुप् मस्य वः। चूडाविशिष्टे पक्षे इनि। चूडिन् तत्रार्थे पुरोहिता-दिगणे चूडिक इति निर्देशात् पक्षे ठनपि। चूडिक तत्रार्थे। ततः पुरोहिता॰ भावादौ यक्। चौडिक्य चूडाविशिष्टत्वे न॰। [चूषत् त।

चूष सङ्कोचे चुरा॰ उभ॰ सक॰ सेट्। चूषयति ते अचु-

चूत पु॰ चूष—क्त चोतति रसम् चुत—अच् वा पृषो॰। १आम्रे, अमरः "नवचूतप्रवालोमजिकाति" "चूताङ्कु-राखादकषायकण्ठः"। "अङ्कुराभ्युद्गतान्यचूता-ङ्कुराग्राः"कुमारः। चूष—क्त पृषो॰। २गुह्यद्वारे न॰। स्वार्थे कन्। चूतक आम्रे कूपके च।

चूर दाहे दिवा॰ आत्म॰ अक॰ सेट्। चूर्य्यते अचूरिष्ट। चुचूरे ईदित् चूर्णः। [दनम्।

चूरु पु॰ चूर—उण्। ऋषिभेदे शब्दा॰ ऋषिशब्दे २१८४पृ॰

चूर्ण पेषे चु॰ उभ॰ सक॰ सेट्। चूर्णयति-ते अचु चूर्णत् त। चूर्णः चूर्णितः

चूर्ण न॰ चूर्ण—कर्म्मणि अच्। १पेषणजाते क्षोदे (गुडा) प्रभृतौ राजनि॰ "अष्टादशगुणं चूर्णं चूर्णादष्टगुणं पयः" वैद्य॰। तल्लक्षणमुक्तं भावप्र॰ "अत्यन्तशुष्कं तद्द्रव्यं सुपिष्टं वस्त्रगालितम्। तत् स्याच्चूर्णं रजः॰ क्षोदस्तन्मात्रा कर्षसम्मिता। चूर्णे गुडः समो देयः शर्करा-द्विगुणा मता। चूर्णेषु भर्जितं हिङ्गु देयं नो-त्क्लेदकृद्भवेत्। लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणो-न्मितैः। पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः। चूर्णावलेहगुटिका कल्कानामनुपानकम्। पित्तवात-कफातङ्के त्रिद्व्येकपलमाहरेदिति" (आवीर) २क्षारे। क्षोदे "कलशेषु स्वपूरेषु चूर्णप्रतिनिधीकृतः" रघुः। ४धूलौ तत्रपूजोपकरणे ५क्षारे (चूण) मेदि॰। "चूर्ण-भावोयतां त्वां पूर्णचन्द्रनिभानने।। पर्णानि स्वर्णवर्णानि मीदन्यामर्णवोपमे" उद्भटः। भावे अच्। ६प्रेषणे पुं॰

वयःप्रकर्षं बलमिन्द्रियाणाम् । स्त्रीषु प्रहर्षं परमग्नि-वृद्धिं वर्णप्रसादं पवनानुलोम्यम् । रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात् । जराकृतं रूपमपास्य सर्वं बिभर्त्ति रूपं नवयौवनानाम् । सिता मत्स्यण्डिकाऽलाभे धात्र्याश्च स्वरु मर्जनम् । चतुर्भाग-जले मायो द्रव्यं शतरसं भवेत् ।”

**च्यवान** पु॰ च्यवन+पृषो॰ दीर्घः । च्यवनर्षौ “प्रमुञ्चन्तं द्रापिमिव च्यवानात्” ऋ॰१।११६।१०। “च्यवानात् च्यवनाद्दृषेः” भा॰ “युवं च्यवानमश्विना जरन्तं पुन-र्युवानं चक्रथुः शचीभिः” ऋ॰१।११७।१३। “हे अश्विनौ युवं युवां शचीभिरात्मीयैर्भैषज्यलक्षणैः कर्मभिः जरन्तं जीर्यन्तं च्यवानमेतत्संज्ञमृषिं युवानं पुन-र्यौवनोपेतं चक्रथुः” भा॰ “च्यवानऋषिर्भवति स्तोतॄणां च्यवानमित्यस्य निगमा भवन्ति” इति निरु॰ ४।१९

**च्यावन** त्रि॰ च्यु–णिच्–ल्यु । च्युतिकारके “दुश्च्यावश्च्या-वनो जेता हन्ता ब्रह्मद्विषां हरः” भा॰ कर्ण॰ ३४अ॰। भावे ल्युट् । २च्युतिसम्पादने “यद्वदं च्यावनं स्थानात् प्रतिष्ठायां शतक्रतोः” हरिवं॰ २८ अ॰ ।

**च्यु** गतौ भ्वा॰ आत्म॰ सक॰ अनिट् । च्यवते अच्योष्ट । चुच्युवे । च्युतः । च्युतिः “वसु न च्यवते नित्यम् यशसा वर्चसा श्रिया” भा॰व॰ २१५ अ॰ । “अद्य ते कतिचिद्रात्रयश्च्युतस्यार्य्यकवेश्मनः” रा॰ अयो॰ ७२।५। “न च्यवेयं स्वधर्म्मात्” भा॰व॰ २८६ अ॰ । “अच्योष्ट सत्वान्नृपतिश्च्युताशः” “च्युतायनायाः फलवद्विभूत्या” भट्टिः उपसर्गपूर्वकस्य तत्तदुपसर्गद्योतार्थयुक्तगतौ ।

**च्यु** सहने सक॰ हसने अक॰ चु॰ उभ॰ सेट् । च्यावयति अचि(चु)च्यवत् त । चु(चि)च्यावयिषति

**च्युत** क्षरणे भ्वा॰ पर॰ अक॰ सेट् । च्योतति इरित् अ-च्युतत् अच्योतीत् । चुच्योत । च्युतः । “इदं शोणित मत्यर्थं संप्रहारेऽच्युतत्तयोः” इदं कवचमच्योतीत्” इति च भट्टिः । [च्युतः । च्युतोपमः ।

**च्युत** त्रि॰ च्यु–क्त च्युत–क वा । १गते २क्षरिते च । अ-

**च्युति** स्त्री च्यु–भावे क्तिन् । १गतौ “सत्वात् च्युतिः क्षत्रियस्य न धर्म्मेषु प्रशस्यते” भा॰ शा॰१०३अ॰। “कार्य्यं हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्वि-नोऽन्ये” कुमा॰ । च्युत् भावे क्तिन् । २क्षरणे । मद-च्युतिः । च्योतति शोणितमस्मात् अपादाने क्तिन् । ४गुदद्वारे शब्दार्थचि॰ ।

**च्युप** पु॰ च्यवन्ते भावन्तेऽनेन धातूनामनेकार्थत्वात् च्यु–भाव-ने प किच्च । वक्त्रे उज्ज्व॰ । पान्तादुपधत्वात् पुंस्त्वम् ।

**च्युस** हानौ हसने चु॰ उभ॰ अक॰ सेट् । च्योसयति ते अचुच्युसत् त ।

**च्यूत** पु॰ चूत+पृषो॰ । आम्रवृक्षे शब्दर॰ पाठान्तरम् ।

**च्यौत्न** न॰ च्यु–गतौ करणे त्नण् । १बले निघ॰ । कर्त्तरि त्नण् । २गन्तरि २प्रणुद्गे-२क्षीणपुण्यजने” सि॰कौ॰।

इति वाचस्पत्ये चकारादिशब्दार्थनिरूपणम् ।

---

२८९७पृ॰ चयशब्दपरिशिष्टम् ।

भावप्र॰ उक्ते दोषवृद्ध्यादौ “कालस्वभावोऽयमाहारादि वशात् पुनः । चयादीन् यान्ति सद्योऽपि दोषाः काले विशेषतः । चयकोपशमाः पूर्वाह्णे वसन्तस्य लिङ्गं, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषः, प्रदोषे वार्षिकम् शरदमर्द्धरात्रे प्रत्यूषसि हेमन्तमुपलक्षयेत् । एवमहो-रात्रमपि वर्षमिव शीतोष्णवर्षादोषोपचयप्रकोपोपशमान् जानीयादिति । सुश्रुतः । चयकोपशमा दोषा विहाराहार-सेवनैः । समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्य्ययम् । समानैः तुल्यैः चयादियोग्यैरिति यावत् । विपर्य्ययं कालेऽपि वैपरीत्यं बोध्यम् । चयलक्षणमाह सुश्रुतः । स्वस्थानस्थस्य दोषस्य वृद्धिः स्याच्छ्राव कोष्ठता । पीतावभासता वह्निमन्दता चाङ्गगौरवम् । आलस्यञ्चयहेतौ तु द्वेषश्च चयलक्षणम् । सञ्चयोपहृता दोषा लभन्ते नोत्तरां गतिम् । ते तूत्तरासु गतिषु भवन्ति बलवत्तराः” ।

२९७२ पृ° चोरगणेशशब्दपरिशिष्टम् ।

चोरगणेशमन्त्रादिकमुक्तं गणेशविमर्षिण्याम् "चक्षुर्द्वयं तथा कर्णद्वयं नासापुटद्वयम् । मुखं नाभिं लिङ्गमूलं गुदस्थानं तथैव च । मनोद्वारं भ्रुवोर्मध्ये दशैव द्वारसंस्थिताः । अङ्कुशं प्रथमं बीजं हृदये दशधा जपेत् । प्रजपान्ते ततो मातः ! कपाटं निःक्षिपेत्ततः । कर्णयोश्च तथा कूर्चं वाणीं नासापुटे ततः । मुखे क्लीं द्विविधं बीजं नाभौ वाणीं ततो जपेत् । ह्सौ बीजं लिङ्गमूलेवं गुदे परिकीर्त्तितम् । ओंकारञ्च भ्रुवोर्मध्ये मनःस्थाने तथैव च । एतदेकादश बीजं प्रतिद्वारे कपाटवत् । चोरगणेशमन्त्रं जप्त्वा कर्ममात्रं न कुर्यात् । यदि कुर्यात्तदा दोष उक्तो वर्णविलासतन्त्रे । "गणेश उवाच । अथुनाहं प्रवक्ष्यामि चोरमन्त्रमतः शृणु । चोरमन्त्रपरिज्ञानं विना हे ब्राह्मणेश्वरि ! । पुराणं प्रपठेद्यस्तु स एव मूर्त्तिमान् कलिः । परजन्मनि पापिष्ठः स भवेच्चौरकुक्कुरः । शिवपूजा विष्णुपूजा शक्तिपूजा तथैव च । सर्वपूजासु यत्तेजो हरते गणपः स्वयम् । पञ्चाशद्गणदेवानां ज्योतींषि सुनिपुङ्गवा ! । प्रतिद्वारपथे गत्वा प्रतिपद्मेषु जृम्भते । हरन्ति जपतेजांसि प्रतिपद्मेषु संस्थिताः । जपपूजासु यत्तेजस्तत्र चौरो गणाधिपः । तस्माच्चौरप्ररोधार्थं चोरमन्त्रं जपेद्बुधः । ततस्तु पूजयेद्धीमान् यस्य या इष्टदेवताः । ततः फलमवाप्नोति ब्रह्मादित्रिदिवौकसः । चौरमन्त्रं महामन्त्रं पञ्चाशद्गणतोषणम् । चौरमन्त्रं विना भद्रे ! शान्तिस्वस्त्ययनं कुतः । कर्णद्वयं तथा चक्षुर्द्वयं नासा मुखं ततः । नाभिस्थाने लिङ्गमूले गुदस्थाने तथैव च । मनोद्वारं भ्रुवोर्मध्यं दशैकं द्वारमीरितम् । प्रतिद्वारे न्यसेन्मन्त्रं चौराख्यं ब्राह्मणेश्वरि ! । चौरमन्त्रश्चाङ्क भद्रे ! प्रतिद्वारे कपाटवत् । रहस्यं ते प्रवक्ष्यामि पञ्चाशद्गणतोषणम् । अङ्कुशं प्रथमं बीजं शयने दशधा जपेत् । प्रजप्य सुभगे ! मातः । कपाटं निःक्षिपेत्ततः । अन्यथा अङ्कुशैर्बीजैः कपाटं भेदिरे गणाः । चन्द्रिकान्तर्गतानित्यं शङ्करं वरसुन्दरम् । चन्द्रिकासु समासीनः शिञ्जिनी अणिमा गुणः । चन्द्रबिन्द्वात्मिका नित्या गणेशपरिपूजिता । ह्रीं ह्रीं बीजद्वयमिति विन्यसेन्नयनद्वये । कर्णयोश्च तथा ह्रीं ह्रीं ऊँ ऊँ नासाद्वये तथा । मुखे क्लीं द्विविधं बीजं नाभौ ह्रीं सुभगेश्वरि ! । ह्सौ बीजं लिङ्गमूले गुदेवं परिकीर्त्तितम् । ऊङ्कारञ्च भ्रुवोर्मध्ये मनःस्थाने तथैव च । एतदेकादशद्वारे चौरमन्त्राणि विन्यसेत् । दशधा चौरमन्त्रञ्च एकधा वापि बीजकम् । अनेनैव जपेनापि प्रतिद्वारे कपाटकम्" । जपकालोऽपि तत्रैव । "शृणु चापि प्रवक्ष्यामि मन्त्रस्य जपनिर्णयम् । प्रातःकाले च शय्यायां शुक्लस्थापः स्वदेहके । पूर्वन्मातृकान्यासं विन्यसेन्मातृकास्थले । तथा एकादशद्वारे चौरमन्त्राणि विन्यसेत् । दशधा चौरमन्त्रञ्च एकधा वापि संजपेत् । चौरमन्त्रजपात् तुष्टिर्गणेशस्य सदा भवेत् । यमस्य नाधिकारोऽपि चौरमन्त्रजपात् प्रिये ! । सर्वमन्त्रजपात्तेजः सर्वस्मात् समुपस्थितम् । तत्तेजो हरणे शक्तिर्गणेशस्य नचैव हि" चोरगणेशोऽप्यत्र । अयञ्चशब्द उत्कृष्टे चारकशब्दात् परं बोध्यः तत्र च कर छिद्रेत्यत्र करणच्छिद्रेति शुद्धम् करणं च नेत्रादि । छिद्रं द्वारानावरणम् ।

---

# छ

छकारो व्यञ्जनवर्णभेदः स्पर्शसंज्ञकस्तस्योच्चारणस्थानं तालु आभ्यन्तरप्रयत्नः जिह्वामध्येन तालुस्पर्शः । बाह्यप्रयत्नाः विवारश्वासाऽघोषा महाप्राणश्च । मातृकान्यासेऽस्य वामकूर्परे न्यासः । तन्त्रमते अस्य वाचकशब्दाः । "छन्दनं सुषुम्णा च पशुः पशुपतिः स्मृतिः । निर्मलं तरलं वह्निर्भूतमाता विलासिनी । एकनेत्रश्च वृषली द्विशिरा वामकूर्परः । गोकर्णो लाङ्गली रामः कामधाता सदाशिवः । माता निशाचरः पाशुर्विद्युत्तः स्थितिशब्दकः" वर्णाभिधानम् । "मातृकावर्णात्मिकायास्तस्या ध्यानमुक्तं वर्णोद्धारतन्त्रे "ध्यानमस्याः प्रवक्ष्यामि द्विभुजां तु त्रिलोचनाम् । पीताम्बरधरां नित्यं वरदां भक्तवत्सलाम् । एवं ध्यात्वा छकारन्तु तन्मन्त्रं दशधा जपेत्" । काव्येऽस्य प्रथमनिर्देशफलं वृ° र° टी° उक्तं यथा "कः शोगो यस लक्ष्मीं वितरति वियदोषस्तथा चः सुखं छः प्रीतिं जोमित्रलाभमित्यादि" ।

छ पु° १छकारवर्णे । छो-घञर्थे भावे क । २छेदने स्त्री

कर्म्मणि घञर्थे क । २निर्भर्त्सिते त्रि० मेदि० । ४यज्ञे न० शब्दार्थचि० । छद–णि० भावे क्त । ५छादने ।

**छग** पुंस्त्री छं रोमभिश्छादनं गच्छति गम–ड । अजे छागे हेमच० । स्त्रियां जातित्वात् ङीष् ।

**छगण** पुंन० । छाय पङ्केश्छादनाय गण्यते गण–कर्म्मणि घञ् । करीषे हेमच०

**छगल** पुंस्त्री छो–कलच् गुक् ह्रस्वश्च । १छागे स्त्रियां जातित्वात् ङीष् । २नीलवस्त्रे न० । ३वृद्धदारकवृक्षे पु० हेमच० । ४अमलप्रधानदेशे पु० सोऽभिजनोऽस्य तण्–शिला० अञ् । ५तद्देशवासिनि त्रि० । ६मुनिपत्नीभेदे स्त्री छागली ७ऋषिभेदे पु० । ततो बाह्वा० अपत्ये इञ् । छागलि तदपत्ये पुंस्त्री । आत्रेये तु अण् । छागल आत्रेये छागलापत्ये । तद्भिन्ने छागलस्यापत्ये च ढक् । छागलेय ऋषिभेदे तस्य स्मृतिकर्त्ता ।

**छगलक** पुंस्त्री छगल+स्वार्थे क । छागे अमरः ।

**छगलण्ड** पु० दक्षिणदेशे सप्तशृङ्गसन्निधौ प्रचण्डादेव्याःस्थाने शब्दार्थचि० ।

**छगलाङ्घ्रि(न्त्री)** स्त्री छगलस्येवान्त्रम् अङ्घ्रिर्मूलं वा यस्याः षट्स्थात् गौरा० ङीष् । १वृद्धदारकौषधे अमरः २वृके शब्दर० । स्वार्थे क । अत्रैवार्थे ।

**छगलिन्** पु० ऋषिभेदे । स च कलापान्तेवासी । "हरिद्रुश्छगली तुम्बुरुरुलपश्चत्वारः कलापान्तेवासिनः" सिद्धा० तस्य कलापान्तेवासित्वात् णिनि प्राप्ते विशेषविहिता तेन प्रोक्तमधीयते इत्यर्थे ढिनुक् । छागलेयिन् तदध्येतृषु ब० व० ।

**छच्छिका** स्त्री "छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका । छच्छिका शीतला लघ्वी पित्तश्रमतृषापहा । वातनुत् कफकृत् सा तु दीपनी लवणान्विता" इत्युक्ते तक्रभेदे । भावप्र० । सरहीनं दधीति शेषः ।

**छटा** स्त्री छो–अटन् किच्च । १दीप्तौ, २परम्परायाञ्च शब्दार्थचि० "यस्याश्चलहरिविवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन" "शठच्छटाभिश्छपनेन विभ्रता" माघः । "सान्द्रोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र० । "घोरेन्दीवरदामसुन्दरवपुश्छायाः कटाक्षच्छटा" सा० द० ।

**छटाफल** पु० छटेव परम्परान्वितं फलं यस्य । गुवाके । त्रिका० ।

**छटाभा** स्त्री छटया दीप्त्या भाति भा–क । विद्युति हारा० ।

**छत्र** पु० छद–णिच् ष्ट्रन् ह्रस्वः चार्थे चा० । छत्राकारपत्रे (छातारिया) १क्षुपभेदे रत्नमाला । २आतपत्रे न० । मेदि० । ३अतिच्छत्रायां (छत्ता) तृणे स्त्री । ४भूतृणे राजनि० । तत्र आतपत्रशब्दे ६२८पृ० उष्णवारणशब्दे ११८०पृष्ठे च विवृतिः । "रत्नानि हरिणं छत्रं धनं धान्यं पशून् स्त्रियः" । "अभ्यञ्जनाञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्" मनुः । "शशिप्रभं छत्रमुभे च चामरे" रघुः । ५आवरणमात्रे च । छत्रं गुरौ तेषु पात्राच्छादनं शीलं यस्य छत्रा० ण । छात्रः शिष्ये ।

**छत्रक** पु० छत्रमिव कायति कै–क । (राङ्गाकुलेखाडा) १तृणे, २मधुकरङ्के पक्षिणि च रत्नमाला । स्वार्थे क । ३छत्रे न० । ४ईश्वरमन्दिरभेदे शब्दार्थचि० ।

**छत्रगुच्छ** पु० छत्रमिव गुच्छोऽस्य । गुण्डतृणे राजनि० ।

**छत्रध(धा)र** पु० छत्रं धरति धारयति वा अच् अण् वा । छायाकरणाय नियुक्ते दासभेदे तत्र अचन्तस्य "अधिनियुक्ते" पा० पूर्व्वपदमाद्युदात्तम् ।

**छत्रपत्र** पु० छत्रमिव पत्रमस्य । १स्थलपद्मे, रत्नमाला २भूर्जपत्रवृक्षे च त्रिका० ।

**छत्रपुष्प(क)** पु० छत्रमिव पुष्पमस्य वा कप् । तिलकवृक्षे शब्दार्थचि० । [स्वातन्त्र्ये च मेदि० ।

**छत्रभङ्ग** पु० छत्रस्य भङ्गो यत्र । १नृपनाशे २वैधव्ये ३स्व-

**छत्रा** स्त्री छद–त्रन् टाप् । (मौरि)तृणे मेदि० २अतिच्छत्रे (छकुपा) ३कुस्तुम्बुरौ (धनिया) ४शिलीन्ध्रे च मेदि० । ५मञ्जिष्ठायां राजनि० ।

**छत्राक** न० छत्रा अतिच्छत्रेव कायति कै–क । १शिलीन्ध्रे "छत्राकं विड्वराहञ्चेति" मनुः । "पलाण्डुं विड्वराहञ्च छत्राकं ग्रामकुक्कुटम्" याज्ञ० । २जलवर्बुरवृक्षे पु० राजनि० गौरा० ङीष् । ३रास्नायां स्त्री अमरः ।

**छत्रातिच्छत्र** पु० छत्रमतिक्रम्य छत्रमावरणमत्रास्य अच् । छत्राकारे जलोद्भवे सुगन्धितृणभेदे शब्दरत्ना० ।

**छत्रादि** पु० "छत्रादिभ्यो णः" पा० शीलार्थे णप्रत्ययनिमित्ते पा० ग० सू० उक्ते गणभेदे स च गणो यथा "छत्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोड विक्षा चुक्षा मन्द्र" छात्रः चौर इत्यादि राजनि० ।

**छत्राधान्य** न० छत्रा धान्यमिव । कुस्तुम्बुरौ धन्याके

**छत्त्रिका** स्त्री छत्त्रं तदाकारं पुष्पं यास्त्यस्य ठन्। १शिलीन्ध्रे स्वेदजे शाकभेदे हारा० तस्या उत्पत्ति-स्थानादिकं भावप्र० उक्तं यथा।
"उक्तं संस्वेदजं शाकं भूमिच्छत्रं शिलीन्ध्रकम्। क्षिति गोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत्। सर्वे संस्वेदजाः शाकादोषलाः पिच्छलाश्च ते। गुरवश्छर्द्यतीसारज्वर-श्लेष्मामयप्रदाः। श्वेतशुभ्रस्थलीकाष्ठवंशगोमयसम्भवाः। नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः"। २छत्त्र-विशिष्टे त्रि० ततः पुरोहिता० भावे यक्। छात्त्रिक्य छत्त्रयुक्तत्वे न०

**छत्त्रिन्** त्रि० छत्त्रमस्त्यस्य। १आतपत्रयुक्ते। "छत्त्रिणो गच्छन्ति" सा० द०। "वर्णितेषु च छत्त्री दण्डी रात्रि-टवीषु च" भावप्र० "मौञ्जी यज्ञोपवीती च छत्त्री दण्डाजिनी तथा" (वामनः) हरिवं० २६२अ०। २नापिते पु० शब्दरत्ना० [सि० कौ०

**छत्वर** पु० छद–ष्वरच् नि० ह्रस्व तः। १गृहे २कुञ्जे च

**छद** संवृतौ अद०चु०उभ०सक०सेट्। छदयति ते अचिच्छदत् त

**छद** संवृतौ वा चु० पक्षे भ्वा० उभ० सक० सेट्। छादयति ते छदति ते अचिच्छदत् त अच्छादीत्–अच्छदीत् अच्छदिष्ट। ऊर्ज्जने बलाधाने जीवने चायं मित्। छदयति ते इति भेदः। छन्नः–छादितः। घे ह्रस्वः छदः। "अग्निमन्नच्छादयसि" अथ० ८,२.१४, "वस्त्रं छादयेदाच्छेन" कात्या० श्रौ० ४,६,५, "छादयन्निव जालेन" भा० आ० १८२अ०। उपसर्गपूर्व्वकस्य तत्तदुपसर्ग-द्योत्यार्थयुक्तसंवरणे "आच्छाद्य चार्चयित्वा च" मनुः।

**छद** संवृतौ चु० उभ० सक० सेट् इदित् भाषि०। छन्दयति ते अचिच्छन्दत् त। छन्दः।

**छद** पु० छद–घ पि संज्ञायां घः ह्रस्वः। १वृक्षादिपत्त्रे २खगपत्त्रे अमरः ३गालिपर्णवृक्षे ४तमालवृक्षे च मेदि० "क्षतां विन्दुसरोरत्नैर्मवेन स्फाटिकच्छदाम्" (नलिनीम्) भा० स० ४६अ०। "नित्यपुष्पफलास्तत्र पादपाः हरितच्छदाः" भा० व० ८६अ०

**छदन** न० छद–ल्युट्। १पत्ते, २पत्त्रे मेदिनिः (तेजपात) ३त्वचि राजनि०। भावे ल्युट्। ४पिधाने न०। "विमलस्फाटिकाभानि पाण्डुरच्छदनानि" हरिवं० २१६अ०। "विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः" भा० व० १५८अ०।

**छदपत्त्र** पु० छदनं पत्रमस्य। भूर्जपत्रे रत्नमाला।

**छदि** स्त्री छद-कि। छदिषि पटले (चाल) अमरः "छदिः स्त्रियाम्" पा० उक्तेरिदन्तता च।

**छदिस्** न० छद–इसि। पटले चालं क्लीबं रायमुकुटः। "इन्द्रस्य छदिरसि" यजु० ४।२८।२ गृहे निघण्टुः

**छद्मतापस** पु० छद्मना, छलेन तापसः। लोकप्रतारणार्थं तापसताख्यापनाय तापसचिह्नधारिणि तत्कर्माननुष्ठायिनि वैडालव्रतिके यथार्थचि०

**छद्मन्** न० छाद्यते स्वरूपमनेन छद-मनिन्। १कपटे २छले। ३स्वरूपाच्छादने मेदि०। "जगाद वदनच्छद्मपद्मपर्यन्त पातिना" माघः। "छद्मना चरितं च यत्" मनुः "शकांश्च यवनांश्चैव अजयच्छद्मपूर्वकम्" भा०स० २९अ०

**छद्मिका** स्त्री छद्म अस्त्यस्याः व्रीह्या० इनि संज्ञायां कन्। गुडूच्यां राजनि०।

**छद्मिन्** त्रि०छद्म अस्त्यर्थे व्रीह्या० इनि। छद्मयुक्ते "ब्राह्मणच्छद्मिने देवलोके गत्वा परां गतिम्" भा०व०२९९अ०। "वाल्मीकच्छद्मिनं नगम्" ७७अ०। स्त्रियां ङीप्।

**छन्द** पु० छदि–संवरणे धातोरनेकार्थत्वात् इह इच्छायाम् अच्। १अभिलाषे, २वशतायाम्, "स्वच्छन्दोच्छलदच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र०। ३विषभेदे च अमरः ४विषे शब्दच०। ५रहसि त्रि० अमरटीका। "छन्दानुवृत्तिदुःसाध्याः सुहृदोविमनीकृताः" माघः। "वरदानात् पितुः कामं छन्दमृत्युरसि प्रभो!" भा० शा० ५०अ०।

**छन्दक** त्रि० छन्दयति संवृणोति रक्षति छदि–ण्वुल्। १रक्षके २वासुदेवे पु०। "वासुदेव! सर्वच्छन्दक! हरिहय! हरिमेध! महायज्ञ"। भा०शा०३४०अ० नारदकृतनारायणस्तवे।

**छन्दःपर्ण** पु० छन्दांसि वेदविहितकर्म्माणि पर्णानीव यस्य। मायामये संसारे। "छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्" गीता छन्दांसि छादनात् तत्त्ववस्तुप्रावरणात् संसारवन्धनादीनि कर्म्माणि ऋग्यजुःसामवेदविहितानि पर्णानीव यस्य यथा वृक्षस्य छादनार्थानि रक्षणार्थानि च पर्णानि एवं धर्म्माधर्म्मोपार्ज्जनेन कर्म्मभिः संसार वृक्षोरक्ष्यते इति तस्य तथात्वम्।

**छन्दश्चिति** स्त्री ६त० छन्दसः समूहे। तत्र छन्दोभेदे एकादिगुरुज्ञानाय करणसूत्रं लीला० उक्तं यथा "छन्दश्चित्यादौ करणसूत्रं श्लोकत्रयम् 'एकाद्येकोत्तराअङ्का व्यस्ता भाज्याः क्रमस्थितैः। परः पूर्वेण सङ्गु-

पाद्रस्तत्परस्तत्परेण च ॥ एकद्वित्र्यादिभेदाः स्युरिदं साधारणं स्मृतम् । छन्दश्चित्युत्तरे छन्दसुपयोगोऽस्य तद्विदाम् ॥ मूषाखण्डनभेदादौ खण्डमेरौ च शिल्पके । वैद्यके रसभेदोये तन्नोक्तं विस्तृतेर्भयात् । तत्र छन्दश्चित्युत्तरे किञ्चिदुदाहरणम् । "प्रस्तारे मित्र ! गायत्र्याः स्युः पादे व्यक्तयः कति । एकादिगुरवश्चाशु कथ्यतां तत्पृथक् पृथक् । इह हि षडक्षरगायत्रीचरणः अतः षडन्तानां एकाद्येकोत्तराङ्कानां व्यस्तानां क्रम स्थानाच्च न्यासः

६ ५ ४ ३ २ १

१ २ ३ ४ ५ ६

६ १५ २० १५ ६ १ यथोक्तकरणेन लब्धाः एकगुरुव्यक्तयः । ६ । द्विगुरवः । १५ । त्रिगुरवः । २० । चतुर्गुरवः । १५ । पञ्चगुरवः । ६ । षड्गुरवः । १ । तथैका सर्वलघुः । १ । एवमासामैक्यं पादव्यक्तिमितिः । ६४ । एवमुक्तकरणाच्चरसङ्ख्याङ्कान् यथोक्तं विन्यस्य एकादिगुरुभेदानानीय तान् सैकानेकीकृत्य जाता गायत्र्युक्तव्यक्तिसङ्ख्या । १६७७७२१६ । एवमुक्तप्रायुक्तविपर्यन्तं छन्दसां व्यक्तिमितिर्ज्ञातव्या" ।

अधिकं प्रस्तारशब्दे मर्कटीजालशब्दे मेरुशब्दे पताकाशब्दे च दृश्यम् ।

छन्दस् न० छन्दयति छदन् । १वेदे भावे असुन् । २स्वैराचारे ३अभिलाषे च मेदि० । ४कपटे । नियताक्षरवर्णमात्रादिरचनाविशेषवशात् ५चतुश्चरणादौ पद्ये । लौकिक तत्संज्ञाभेदाश्च वृत्तरत्नाकरादौ सलक्षणा उक्तास्ते तु तत्तच्छब्दे उक्ता वक्ष्यन्ते च । वैदिकच्छन्दांसि तु सर्वानुक्रमिकायां कात्यायनेन दर्शितानि यथा

"अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः कृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतयः चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि । ऊनाधिकेनैकेन निचृद्भूरिजौ द्वाभ्यां विराट्स्वराजौ । पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत् । आद्यं तु सप्तकं पादविशेषात् संज्ञाविशेषास्तान्नल्काममत एवोदाहरिष्यामो विराड्रूपा विराट्स्थानाश्च बहुला अपि त्रिष्टुभ एवेत्युद्देशः । तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा अनादेशेऽष्टाक्षराः पादाश्चतुष्पादाश्च-

तः । प्रथमं छन्दस्त्रिपदा गायत्री । पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः । षट्सप्तैकादशा उष्णिग्गर्भा । त्रयः सप्तकाः पाद निचृन्मध्यमः षट्कश्चेद्दर्तनिचृद्द्विमकश्चेद्यवमध्या । यस्यास्तु षट् सप्तकाष्टकाः सा वर्धमाना विपरीता प्रतिष्ठा । द्वौ षट्कौ सप्तकश्चेति तृतीयमी ॥

द्वितीयमुष्णिक् त्रिपदान्त्यो द्वादशकः । आद्यश्चेत् पुर उष्णिङ् मध्यमश्चेत्ककुप् । त्रैष्टुभजागतचतुष्काः ककुम्न्यङ्कुशिरैकादशिनोः परः षट्कस्तनुशिरा मध्ये चेत्पिपीलिकमध्याद्यपञ्चकास्त्रयोऽष्टका अनुष्टुब्गर्भा । चतुःसप्तकोष्णिगेव ।२

तृतीयमनुष्टुप् । पञ्चपञ्चकाः षट्कश्चैको महापदपङ्क्तिः । जागतावष्टकश्च कृतिः । मध्ये चेदष्टकः पिपीलिकमध्या । नवकयोर्मध्ये जागतः काविराट् । नववैराजत्रयोदशैर्नष्टरूपा । दशकास्त्रयो विराडेकादशका वा ।४

चतुर्थं बृहती तृतीयो द्वादशकः । आद्यश्चेत् पुरस्ताद्बृहती । द्वितीयश्चेन्न्यङ्कुसारिण्युरोबृहती स्कन्धग्रीवी वा । अन्त्यश्चेदुपरिष्टाद्बृहती । अष्टिनोर्मध्ये दशकौ विष्टारबृहती । त्रिजागतोर्ध्वबृहती । त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या । नवकाष्टकैकादशाष्टिनो विषमपदा । चतुर्नवका बृहत्येव । ५

दशमं पङ्क्तिः पञ्चपदा । अथ चतुष्पदा विराड्दशकाः । अयुजौ जागतौ सतोबृहती युजौ चेद्विपरीताऽऽद्यौ चेत् प्रस्तारपङ्क्तिरन्त्यौ चेदास्तारपङ्क्तिराद्यन्त्यौ चेत् संस्तारपङ्क्तिर्मध्यमौ चेद्विष्टार पङ्क्तिः ।६

षष्ठं त्रिष्टुप् त्रैष्टुभपदा । द्वौ तु जागतौ यस्याः सा जागते जगती त्रैष्टुभे त्रिष्टुप् । वैराजौ जागतौ चाभिसारिणी । नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थानैकादशिनस्त्रयोऽष्टकश्च विराड्रूपा । द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती । यतोऽष्टकस्ततोज्योतिः । चत्वारोऽष्टका जागतश्च महाबृहती । मध्ये जागतश्चेद्यवमध्या आद्यौ दशकावष्टकास्त्रयः पङ्क्त्युत्तरा विराट् पूर्वा वा ।७

सप्तमं जगती जागतपदा । षष्टिनस्त्रयः एकौ च द्वौ महासतोबृहती । अष्टकौ सप्तकः षट्कौ दशकौ नवकश्च षडष्टका वा महापङ्क्तिः"

तत् प्रतिपादकग्रन्थस्य वेदाङ्गत्वं यथोक्तं शिक्षायाम्

३१।७। "छन्दःपादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते" इति।

छन्दोग्रन्थस्य वेदोपयोगिता ऋग्वेदभाष्ये दर्शिता यथा छन्दोग्रन्थोऽप्युपयुज्यते छन्दोविशेषाणां तत्र तत्र विहितत्वात्। "तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते" इति ह्याम्नातम्। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि। चतुर्विंशत्यक्षरा गायत्री। ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक्। एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्याः। तथान्यत्रापि श्रूयते। "गायत्रीभिर्ब्राह्मणस्य दध्यात्, त्रिष्टुब्भी राजन्यस्य, जगतीभिर्वैश्यस्येति"। तत्र मगणयगणादिशाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुविज्ञेयः। किञ्च "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति। गर्त्तं वा पद्यते। प्र वा मीयते पापीयान् भवति तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति" श्रूयते। तस्मात्तद्वेदनाय छन्दोग्रन्थ उपयुज्यते।

६ सामभेदे "छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत" श्रुतिः छन्दोगः।

छन्दोऽधीते "श्रोत्रियंश्छन्दोऽधीते" पा० घण् वा श्रोत्रियच्चादेशः। श्रोत्रिय छन्दोऽध्येतरि पक्षे अण्मात्रम्। छान्दस तत्रार्थे "श्रोत्रियच्छान्दसौ समौ" अमरः। छन्दसा इच्छया निर्म्मितम् यत्। छन्दस्य इच्छया निर्म्मिते त्रि०। छन्दसो व्याख्यानो ग्रन्थः यत् अण् वा। छन्दस्य छान्दस वेदव्याख्यानग्रन्थे। तत्र गायत्र्यादौ छन्दसि "सप्त छन्दांसि प्रभुमेकं तन्वन्ति" भा० व० १३४अ०। "गायत्री छन्दसामहम्" गीता। "छन्दोभिरच्छादयन् यदेभिरच्छादयन् तच्छन्दसां छन्दस्त्वम्" छा० उ०। वेदे "छन्दसि बहुलम्" पा०। "शुक्लच्छन्दांस्यधीयत" मनुः "हिरण्यगर्भो भगवान् एष छन्दसा स्तुतः" हरिवं० २२६अ०। "आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव" रघुः। इच्छायाम् छन्दसः। छन्दस इदम् अण्। छान्दस वेदसम्बन्धिनि त्रि०। सर्वच्छन्दसि समार्द्धसमविषमभेदादिज्ञानाय लीला० उक्तं यथा

"समादिवृत्तज्ञानाय करणसूत्रं वृत्तार्द्धम्। पादाक्षरमितगच्छे गुणवर्गफलस्य द्विगुणे॥ समवृत्तानां सङ्ख्या तद्वर्गो वर्गवर्गश्च। स्वस्वपदोनौ स्यातामर्द्धसमानाञ्च विषमाणाम्॥ उदाहरणम्। समानामर्द्धतुल्यानां विषमाणां पृथक् पृथक्। वृत्तानां वद मे सङ्ख्यामनुष्टुप्छन्दसि द्रुतम्॥ न्यासः। उत्तरगुणः।२। गच्छः। ८। लब्धाः समवृत्तानां सङ्ख्याः। २५६। तथार्द्धसमानाम्। ६५२८०। विषमाणाञ्च। ४२९४९०१७६०। "अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः। तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते॥ प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्। द्वितीयस्तुर्यवद्वृत्तं तदर्द्धसममुच्यते॥ यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्। तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः"॥

**छन्दस्तुभ्** पु० छन्दसा पद्येन स्तुभ्नाति स्तम्भ् स्तुभ–क्विप्। गरुडाग्रजेऽरुणे तस्य तत्कथा "पितामह उवाच। एष लोकविनाशाय रविरुद्यन्तुमुद्यतः। पश्यन्नेव हि लोकान् स भस्मराशीकरिष्यति। तस्य प्रतिविधानञ्च विहितं पूर्वमेव हि। कश्यपस्य सुतो धीमानरुणेत्यभिविश्रुतः। महाकायो महातेजाः स स्थास्यति पुरो रवेः। करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति। लोकानां स्वस्ति चैवं स्यादृषीणाञ्च दिवौकसाम्। ततः पितामहाज्ञां सर्वं चक्रे तदाऽरुणः। उदितश्चैव सवितारुणेन समावृतः" भा० आ० २४अ०।

**छन्दु** त्रि० छदि–उण्। उपच्छन्दयितरि। "कथा छन्दुर्भवति हर्यतः" ऋ० १८५४,४। "छन्दुरुपच्छन्दयिता" भा०।

**छन्दोग** पु० छन्दः सामवेदं गायति गै–क। "सामवेदज्ञे "यत्नेन भोजयेत् श्राद्धे बह्वृचं वेदपारगम्। शाखान्तगमथाध्वर्युं छन्दोगन्तु समाप्तिकम्" मनुः। "छन्दोगैर्विविधैः पृथक्" गीता। छन्दोगपरिशिष्टम्।

**छन्दोदेव** पु० ब्राह्मण्यां नापितेन जाते मतङ्गनामके चाण्डालभेदे तपस्यया इन्द्रदत्तवरेण छन्दोदेवनामतां प्राप्ते स्त्रीणां पूज्ये देवभेदे तत्कथा भा० आनु० २७अ०। "ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह। जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत्" २७अ०इत्युपक्रमे तेन निर्विद्य तपश्चरणं तं प्रति इन्द्रस्य वरदानादि "नूनं दैवं न शक्यं हि पौरुषेणातिवर्त्तितुम्। तदर्थं यत्नवानेवं न लभे विप्रतां विभो!। एवं गते तु धर्मज्ञ। दातुमर्हसि मे वरम्। यदि तेऽहमनुग्राह्यः किञ्चिद्वा

आमाशयोत्क्लेशभवाश्च सर्व्वास्तस्मादितं लङ्घनमेव तासु। शूलहृल्लासबहुला कृमिजा च विशेषतः। कृमिहृद्रोगतुल्येन लक्षणेन च लक्षिता। क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकाम्। छर्दिं प्रसक्तां कुशलो नारभेत चिकित्सितुम्। वमीषु बहुदोषासु छर्दनं हितमुच्यते। विरेचनं वा कुर्व्वीत यथादोषोच्छ्रयं भिषक्। संसर्गीञ्चानुपूर्व्व्येण यथास्वं भजनाय तान्। लघूनि परिशुष्काणि शालयान्यन्नानि वाऽऽचरेत्। यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत्।

"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च। हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः" इति माधवकरः। वा ङीप्। तत्रार्थे "आमाशयोत्क्लेशभवा हि सर्व्वाश्छर्द्द्यो मता लङ्घनमेव तस्मात्" सुश्रुतः।

छर्द्दिका स्त्री छर्द्द–णिच् ण्वुल्। १उत्कासिकायां, २विष्णुक्रान्तायाञ्च। धात्वर्थे ण्वुल्। ३वमने। राजनि०। स्वार्थे क प्रयो०। छर्द्दीकाप्यत्र। [च शब्दच०।

छर्द्दिकारिपु स्त्री पु० ६त०। १क्षुद्रैलायाम्, २छर्द्दिनाशके

छर्द्दिघ्न पु० छर्द्दिं हन्ति–हन–टक्। १निम्बभेदे। २छर्द्दिनाशके त्रि० रत्नमाला स्त्रियां ङीप्।

छर्द्दिस् स्त्री छर्द्द–भावे इसि। १वमने. २कर्त्तरि इसि। २वमिरोगे ३उद्गारे च। छर्द्द–कर्म्मणि इसि। ४गृहे निघ०। "यातं छर्द्दिष्पा उत नः परस्पाः" ऋ०८।९।११। "छर्द्दिरिति गृहनाम तस्य पालकाः" भा०। "अग्निष्टाभिपातु मह्या स्वस्त्या छर्द्दिषा" यजु० १२।१९। "छर्द्दिषा गृहेण" वेददी०। छृद–दीप्तौ इसि। ४तेजसि "वायुष्टाभिपातु मह्या स्वस्त्या छर्द्दिषा" यजु० १४।१२। "छर्द्दिषा तेजोविशेषेण" वेददी०।

छल न० छल–अच्। १स्वरूपाच्छादने २व्याजे ३यथार्थगूहने ४कटयुक्त्यादिना तन्मर्य्यादायास्खलने ५शाठ्ये ६कापट्ये न्यायमतसिद्धे वाक्यान्तरेण प्रयुक्तस्य वाद्युक्तशब्दस्यार्थान्तरकल्पनया प्रतिवादिना दत्ते ७दूषणभेदे तल्लक्षणभेदादिकं गौ० सू० वृत्तौ दर्शितम्। यथा "वचनविघातोऽर्थविकल्पोपपत्त्या छलम्।१। तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्चेति।२। अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्।३। सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्।४। धर्म्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्।५। वाक्छलमेवोपचारच्छलं तदविशेषात्।६। न तदर्थान्तरभावात्।७। अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः।८। गौ० सू०

"क्रमप्राप्तं छलं लक्षयति। अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पो अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः तत्र तात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितं तात्पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसङ्ख्यापरत्वकल्पनयाऽसिद्ध्यभिधानं, प्रमेयं धर्म्मत्वादित्यत्र पुण्यार्थकल्पनया भागासिद्ध्यभिधानम् वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्।१ सू० लक्षितं छलं विभजते।२। तत्र वाक्छलं लक्षयति। यत्र शक्यार्थद्वये सम्भवति एकार्थनिर्णायकविशेषाभावादनभिमतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलं, लक्षणन्तु शक्त्या एकार्थमात्रबोधतात्पर्य्यकशब्दस्य शक्यार्थान्तरतात्पर्य्यकत्वकल्पनया दूषणाभिधानं यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसङ्ख्याः कम्बला इति एवं गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गं श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धावतीत्यभिधानमित्यादिकमुह्यम्॥ ३ सू०। सामान्यच्छलं लक्षयति। सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य अतिसामान्ययोगादसम्भवदर्थकत्वकल्पनया दूषणाभिधानं सामान्यच्छलम्। यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयतीति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरणसम्पत् व्रात्ये व्यभिचारात्॥ ४ सू०। उपचारच्छलं लक्षयति। धर्म्मशब्दस्यार्थेन विकल्पो विविधः कल्पः शक्तिलक्षणान्यतररूपस्तथा शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलं यथा मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः एवं घटस्य कथं नीलरूपाभेदः। एवम् शब्दो नित्य इति शक्त्या प्रयुक्ते कृतकत्वादुत्पन्नस्य कथं नित्य इति प्रतिषेधोऽप्युपचारच्छलम् वाद्यभिमतार्थस्यादूषणेन छलस्यासदुत्तरत्वम्। न च श्लिष्टसाधारणप्रयोगाद्वादिन एवापराधः स्यादिति वाच्यं तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात् अन्यथा पर्वतो वह्निमानित्युक्ते पर्वतोऽयं कथं वह्निमानित्यादिदूषणेनानुमानाद्युच्छेदः स्यात्॥ ५ सू०। प्रसङ्गाच्छलं

परीक्षितुं पूर्वपक्षयति । शब्दस्यार्थान्तरलक्षणाऽविशेषा-
ल्लाक्षणिकस्यैवोपचारच्छलत्वं स्यादिति छलमेव न तु त्रित्व-
मिति सूत्रार्थः ॥ ६ सू० ॥ समाधत्ते । उपचारच्छलस्य
वाक्छलाभेदो न, तयोरर्थान्तरभावात् भिन्नत्वात् भिन्न-
तया प्रमाणसिद्धत्वादिति फलितार्थः। पूर्व्वोक्तभेदकधर्म्मेण
भेदसत्त्वेऽपि यत्किञ्चिद्धर्म्मेणाभेदे सामान्यधर्म्मेणाभेदस्य
सर्व्वत्र सम्भवाद्विभागः कुत्रापि न स्यादिति । ७ सू० ।
विपक्षे बाधकमभिप्रेत्याह यदि किञ्चिद्धर्म्मादविशेषे कि-
ञ्चित्साधर्म्यात्छलत्वादिरूपात्छलस्यैक्यं स्यात्तु तद-
भिमतं त्रित्वमपीति भावः" ॥ ८ छलिः
"व्याजिप्रवीरतुरगसैन्यगजच्छलेन" माघः । "धर्म्मेण
व्यवहारेण छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्च-
मेन बलेन च" मनुः । "भुजगच्छितच्छलेन धनुः" भट्टिः
"अध्यासरोहेव छलच्छलेन" रघुः । "छलं
भूतेन व्यवहारान्नयेत् नृपः" याज्ञ० । "भूतं तत्त्वार्थ-
संयुक्तं प्रमादाभिहितं छलम्" नारदोक्ते प्रमादा-
भिहिते च ५छलकारिणि त्रि० । स्वार्थे क । तत्रार्थे
"मायाभ्यां (मधुकैटभाभ्याम्)छाद्यते विश्वं रजसा तमसा
तथा । रजस्तमोमयावेतौ यतीनां दुःखदायकौ । छलकौ
धर्म्मशीलानां दुष्करौ सर्व्वदेहिनाम्" हरिवं० २०३अ० ।
६नाटकप्रभेदवीथ्यङ्गभेदे न० "वीथ्यामेको भवेदङ्कः"
इत्युपक्रमे "अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनी-
षिणः । उद्धात्यकावलगितेत्यादिना विभज्य सा० द०
लक्षितं यथा "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलना
छलम्" "यथा वेणूत्रां भीमार्जुनौ" "कर्त्ता द्यूत-
च्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते ? दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्या-
गतौ स्वः" ।

छल नामधातुः छल+करो०-णिच् सक० सेट् । छलयति
"छलयसि विक्रमणे बलिमद्भुत वामन" गीतगो० "द्यूतं
छलयतामस्मि" गीता ।

छलन न० छल+करो० णिच्–भावे ल्युट् । १प्रतारणे
"यथापरं यथायोगं न च स्यात् छलनं प्रभः" भा०
भी० १अ० । युच् । २वञ्चनायां स्त्री शब्दार्थचि० ।
"छलना छलम्" सा० द० ।

छलिक न० नाटकभेदे अलङ्कारग्रन्थे १८२पृ० उक्ते दृश्य
काव्यभेदे दृश्यम् । "देवि ! शर्म्मिष्ठायाः छलितं चतुष्प-
दीम् छलिकं दुष्प्रयोज्यमुदाहरन्ति" मालविका० ।

छलित छल+नामधा० कर्म्मणि क्त । १प्रतारिते "छलितरामं
नाटकम् । भावे क्त । २प्रतारणे न० ।

छल्ली स्त्री छद–क्विप् तां लाति ला–क गौरा० ङीष् । १वल्-
कले (छाल) शब्दरत्ना० २लतायाम् ३सन्ततौ च ।
मेदि० ला–बा० कि । छल्लिरपि तत्रार्थे ।

छवि (वी) स्त्री छ्यति असारं छिनत्ति तमो वा छो–वि–
किच्च वा ङीप् । १शोभायां २कान्तौ च अमरः ।
"आपाण्डुरश्मश्रुच्छविः" रघुः । "आपाण्डुरीभूतमुख-
च्छवीनाम् कुमा० ।

छष वधे भ्वा० उभ० सक० सेट् । छषति ते अच्छा(च्छ)षीत्
अच्छषिष्ट । चच्छाष चच्छषे । [त्रि० ।

छा पु० छो–क्विप् । १पारदे एकाक्षरको० २छेदनकर्त्तरि

छाग पुंस्त्री छो–गन् स्वनामख्याते पशुभेदे अमरः । जाति-
त्वात् स्त्रियां ङीप् । २पुरोडाशे न० शब्दार्थचि० ।
छागया दुग्धम् अण् । ३छाग्या दुग्धे न० छागस्येद-
मण् । ४छागसम्बन्धिनि त्रि० स्त्रियां ङीप् । छागस्य
लक्षणादिकं ब० सं० दर्शितं यथा
"छागशुभाशुभलक्षणमभिधास्ये नवदशाष्टदन्तास्ते ।
धन्याः स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्ता ये ।
दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भवति ।
ऋष्यनिभकृष्णलोहितवर्णानां श्वेतमपि शुभदम् ।
स्तनवदवलम्बते यः कण्ठेऽजानां मणिः स विज्ञेयः ।
एकमणिः शुभफलकृत्धन्यतमा द्वित्रिमणयो ये ।
मुण्डाः सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च ।
अर्द्धासिताः सितार्द्धा धन्याः कपिलार्द्धकृष्णाश्च ।
विचरति यूथस्याग्रे प्रथमं चाम्भोऽवगाहते योऽजः ।
स शुभः सितमूर्द्धा वा मूर्द्धनि वा टिक्किका यस्य ।
स पृषतकण्ठशिरा वा तिलपिष्टनिभश्च ताम्रदृक् शस्तः ।
कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः ।
यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन ।
यो वा चरति सशब्दं मन्दं च स शोभनश्छागः ।
ऋष्यशिरोरुहपादो यो वा प्राक्पाण्डुरोऽपरे नीलः ।
स भवति शुभकृच्छागः श्लोकश्चाप्यत्र गर्गोक्तः । कुट्टकः
कुटिलश्चैव जटिलो वामनस्तथा । ते चत्वारः श्रियः पुत्रा
नालक्ष्मीके वसन्ति ते । अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः । निकृत्तकर्णा द्विपमस्तकाश्च

भवन्ति ये चासिततालुजिह्वाः । वर्णैः प्रशस्तैर्मणिभिश्च तुल्या छागाश्च ये ताम्रविलोचनाश्च । ते पूजिता वेश्मसु मानवानां सौख्यानि कुर्वन्ति यशः श्रियं च" । वर्णो तस्य शुभाशुभत्वं युक्तिकल्पतरौ दर्शितं यथा "तेषां शुभाय निर्दिष्टं पशुष्वेतुभयं वर्णौ । ये कृष्णाः शुभदश्छागाः पशवोऽन्ये तथैव च । देवजातिभवत्-स्वच्छास्ते सर्वार्थसिद्धये । ये पीता हरिता वापि नरजातेरुदीरिताः । ये शुक्लाश्च महान्तो वा रक्ता जातेः शुभप्रदाः । यो मोहादथ वाऽज्ञानाद्बलिमन्यं प्रयच्छति । वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेदिति" । तन्मांसगुणा भावप्र० उक्ता यथा "छागलो वर्करश्छागो वस्तोऽजः स्तब्धकः स्तुभः । अजा छागी स्तुभा चापि छेलिका च गलस्तनी । छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् । नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् । परं बलकरं रुच्यं बृंहणं वीर्यवर्द्धनम् । अजाया अप्रसूतायाः मांसं पीनस-नाशनम् । शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् । अजातशृङ्गस्य बालस्य मांसं लघुतरं स्मृतम् । हृद्यं ज्वरहरं श्रेष्ठं सुखदं बलदं स्मृतम् । मांसं निष्कुषि-तावृषस्य (चापि) छागस्य कफकृद् गुरु । स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् । वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च । श्वेतं अन्न विकारघ्नं छागमुण्डं रुचि-प्रदम् ।" तद्दुग्धादिगुणास्तत्रोक्ता यथा "छागं कषायं मधुरं शीतं ग्राहि पयो लघु । रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् । अजानां लघुकायत्वात्कटुतिक्तादिद्रव्य-निषेवणात् । नात्यम्बुपानाद् व्यायामात् सर्वव्याधि-हरं पयः । छागं दध्युत्तमं ग्राहि लघु दोष-त्रयापहम् । शस्यते श्वासकासार्शःक्षयकार्श्येषु दीप-नम् ।" तद् घृतगुणा घृतशब्दे २७६८ पृ० दृश्याः । तन्मूत्रगुणाः "गोजाविमहिषीणां तु स्त्रीणां मूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं स्मृतम् ।" "यज्ञादेशे पशुश्छागः" ति० त० "मातुल-हारिणकौरभ्रशाकुनच्छागकार्षभैः" याज्ञ० । "षण्मासांश्छागमांसेन" मनुः "यज्ञादेशे पशौ स एव पशुशब्द-वाच्यः यथाह कात्या० श्रौ० ६।१।२०।"छागं मन्त्राम्नानात्" सू० । "अथ पशुमुपाकरोति होता यक्षदग्निनी छाग-स्येत्यादिषु मन्त्रेषु छागस्याम्नानात् तथा "अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति" यदि च छागो याग-साधनं भवति तदा अयं मन्त्रः संगतार्थो भवति नान्यथा । इति वीरश्रम् । "पन्नदन्" सू० । "पन्नदो जातदन्त इति निगमयुक्तम्" । "अव्यङ्गम्" सू० । विगतमङ्गं चक्षुःकर्णादिकं यस्यासौ व्यङ्गः अव्यङ्गमाङ्गनम् शाखान्तरात्" कर्कः "वायव्यं श्वेतमालभेत" श्रुतौ छाग एवालभ्यः "छागो वा मन्त्रवर्णात्" जै० सू० तथा निर्णयात् ।

**छागण** पु० छया छादनेन गणयति गण–कर्म्मणि अच् । छगण+स्वार्थे अण्–वा । करीषाग्नौ त्रिका० ।

**छागभोजिन्** पु० छागं भुङ्क्ते भुज–णिनि । १वृके राज-नि० । २छागमांसभक्षके त्रि० स्त्रियां ङीप् ।

**छागमय** न० छाग+मयट् । स्कन्दस्य षष्ठे वक्त्रे "षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत् । षटाशिरोऽभ्यन्तरं राजन् नित्यं मातृगणार्चितम् । "षण्णान्तु प्रवरं तस्य शीर्षाणा-मिह शब्द्यते । शक्तिं येनासृजद्दिव्यां भद्रशाख इति च ह" भा० व० २२७अ० ।

**छागमुख** पु० छागस्य मुखमिव मुखमस्य । १कुमारानु-चरभेदे २कुमारे कार्त्तिकेये च तस्य षष्ठशिरसश्छागमु-खाकारत्वात् तथात्वम् "कुमाराश्च विशाखश्च पितृत्वे समकल्पयन् । स भूत्वा भगवान् संख्ये रक्षंश्छागमुख-स्तदा" भा० व० २२७अ० ।

**छागमित्र** पु० छागस्य मित्रम् । देशभेदे तत्र भवः काश्या० ठञ् ञिठ् वा इदित् । छागमित्रिक तद्भवे त्रि० स्त्रियां ठञि ङीप् ञिठि टाप् ।

**छागरथ** पु० छागो रथो यस्य । छागवाहने वह्नौ हेमच० ।

**छागल** पुंस्त्री छगल एव प्रज्ञा० अण् । १छागे पशुभेदे । छगलस्यापत्यम् अण् । २आत्रेये ऋषिभेदे आ-त्रेयभिन्ने तु छागलिरित्येव छगलशब्दे दृश्यम् । स्वार्थे क । तत्रार्थे संज्ञायां कन् । "श्वेतं सुपाक समदीर्घवृत्तं निःशल्कं छागलं वदन्ति । मध्ये द्विवृत्तः शितः तस्य पृष्ठे चाष्टः सुपवृत्तो रुचिदोषप्रदः" राजनि० उक्ते ४मत्स्यभेदे

**छागलाद्यघृत** न० चक्रदत्तोक्ते छागमांसपक्वे घृतभेदे यथा "छागमांसतुलां गृह्य साधयेन्नल्वणाम्भसि । पाद-शेषेण तेनैव घृतप्रस्थं विपाचयेत् । ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा । काकोली क्षीरकाकोली पृथक् पलकैः समन्वितैः । सम्यक् सिद्धे त्ववतार्य्य शीते तस्मिन् प्रदापयेत् । शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत् । पलं पलं पिबेत् मात्रयं छागं हन्ति

भवतु यमस्तस्या न वध्यते । ता च रोषात् शशापास्य भाविनोऽर्थस्य गौरवात् । यदा सन्तर्जयामास छायां वैवस्वतो यमः । तं शशाप ततः क्रोधात् सावर्णजननी नृपः । चरणः पततामेष तवेति भृशदुःखिता" ।

छाया च तमोरूपद्रव्यान्तरमिति मीमांसकाः । तेन "त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे । दिवावसानच्छायेव पुरोमूलं वनस्पतेः" शकु० । छायागतिरत्ना सङ्कुच्यते" नैयायिकास्तु तेजःसामान्याभाव एव तमश्छायादिव्यपदेशभाक्त्वात्तु: तत्र गत्यादिकमौपचारिकम्" "अत्र च तेजःसामान्याभावप्रयोजकस्य छायासम्बन्धित्वम् यथा वृक्षस्यातपसम्बन्धप्रतिरोधात् छायासम्बन्धित्वं तथा च वृक्षप्रयुक्तातपाभावः" इति बोधः "छाया बाहुल्ये" पा० । छायान्ततत्पुरुषो नपुंसकं स्यात् पूर्व्वपदार्थबाहुल्ये" इक्षूणां छाया इक्षुच्छायम् सि० कौ० । कस्य बाहुल्यमित्यपेक्षायां छायायानिमित्तभूतावरकद्रव्याणामेव बाहुल्यमपेक्षितं तस्य षष्ठीतत्पुरुषे पूर्व्वपदार्थगतमित्याशयेन पूर्व्वपदार्थेत्युक्तम् । "इक्षुच्छायानिषादिन्य" इत्यत्र त्वाकृत्यावेशः" सि०कौ० । "आवरकद्रव्यस्यैकत्वे तु "विभाषा सेनासुराच्छायेत्यादि" पा० वा क्लीवत्वम् कुड्यछाया कुड्यच्छायम् ।

आतपाभावश्च तेजःसामान्यप्रभासञ्चाराभावः तेन प्रदीपप्रभावरकपदार्थस्य प्रभानिरोधसम्बन्धित्वात् शङ्कुच्छाया नरच्छाया इत्यादि । दीपादिच्छायाकाशच्छायादौ व्यवहारःछायाव्यवहारः तत्र करणसूत्रं लीला०उक्तं यथा । "अथ छायाव्यवहारे करणसूत्रं वृत्तम् । छाययोः कर्णयोरन्तरे ये तयोर्व्यस्तविश्लेषभक्तारसाद्रीषवः । सैकलब्धेः पदघ्नन्तु कर्णान्तरं भान्तरेणोनयुक्तं दले स्तः प्रभे । उदाहरणम् । नन्दचन्द्रैर्मितं छाययोरन्तरं कर्णयोरन्तरं विश्वतुल्यं ययोः । ते प्रभे वक्ति योयुक्तिमान् वेत्त्यसौ व्यक्तमव्यक्तयुक्तं हि मन्ये ऽखिलम् । न्यासः




छायान्तरं । १९ । कर्णान्तरम् । १३ । अनयोर्वर्गान्तरेण । १९२ । भक्ता रसाद्रीषवः ।५७६। लब्धं ३। सैकस्यास्य । ४ । मूलम् । २ । अनेन कर्णान्तरं ।१३। गुणितं । २६ । द्विस्थं । २६ । भान्तरेण । १९ । ऊनयुतं ।७। ४५ । तदर्द्धे लब्धे छाये ७/२।४५/२ तयोश्छाययोर्भपद-मित्यादिना जातौ कर्णौ २५/२।५१/२ । छायान्तरे करणसूत्रं वृत्तार्द्धम् । शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्नश्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ।

उदाहरणम् । शङ्कुप्रदीपान्तरभूस्त्रिहस्ता दीपोच्छ्रितिः सार्द्धकरत्रया चेत् । शङ्कोस्तदा शङ्कुतलाश्रितस्य तत्र प्रभा स्यात्कियती वदाशु । न्यासः




शङ्कुः १/२ प्रदीपशङ्कुतलान्तरं ३ अनयोर्घातः ३/२ विनरदीपशिखौच्च्येन । २ । भक्तोलब्धानि छायाङ्गुलानि । १२ । अथ दीपोच्छ्रित्यानयनाय करणसूत्रं वृत्तार्द्धम् । छायाहृते तु नरदीपतलान्तरघ्ने शङ्कौ भवेन्नरयुते खलु दीपकौच्च्यम् ।

उदाहरणम् । प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता छायाङ्गुलैः षोडशभिः समा चेत् । दीपोच्छ्रितिः स्यात्कियती वदाशु प्रदीपशङ्क्वन्तरमुच्यतां मे । न्यासः




शङ्कुः । १२ । छायाङ्गुलानि । १६ । शङ्कुप्रदीपान्तर

हस्ताः । ३ । लब्धं दीपकौच्च्यं हस्ताः ११/४ । प्रदीपशङ्क्वन्तरभूमानानयनाय करणसूत्रं वृत्तार्द्धम् । विशङ्कुदीपोच्छ्रयसङ्गुणा भा शङ्कूद्धृता दीपनरान्तरं स्यात् । उदाहरणम् । पूर्व्वोक्त एव दीपोच्छ्रायः ११/४ शङ्क्वङ्गुलानि । १२ । छाया । १७ । लब्धाः शङ्कुप्रदीपान्तरहस्ताः । ३ ।

छायाप्रदीपान्तरदीपौच्च्यानयनाय करणसूत्रं सार्द्धवृत्तम् । छाययोरन्तरसङ्गुणा भा छायाप्रमाणान्तरहृद्भवेद्भूः । भूशङ्कुघातः प्रभया विभक्तः प्रजायते दीपशिखौच्च्यमेवम् । त्रैराशिकेनैव यदेतदुक्तं व्याप्तं स्वभेदैर्हरिणेव विश्वम् । उदाहरणम् । शङ्कोर्भार्कमिताङ्गुलस्य सुमते ! दृष्टा किलाष्टाङ्गुला छायाग्राभिमुखे करद्वयमिते न्यस्तस्य देशे पुनः । तस्यैवार्कमिताङ्गुला यदि तदा छाया प्रदीपान्तरं दीपौच्च्यञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि चेत् । न्यासः




अत्र छाययोरन्तरमङ्गुलात्मकं । ५२ । छाये च । ८ । १२ । अनयोराद्या । ८ । इयमनेन । ५२ । गुणिता । ४१६ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् ।१०४। इदं प्रथमच्छायाप्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायाप्रमाणं । १५६ । भूशङ्कुघातः प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्च्यं समम् ० हस्ताः ६/१/२ एवमित्थम् छायाव्यवहारे त्रैराशिककल्पनयाऽऽनयनं वर्त्तते तद्यथा । प्रथमच्छायातो द्वितीयच्छाया । । १२ । यावताधिका तावता छायावयवेन यदि छायाग्रान्तरतुल्या भूर्लभ्यते तदा छायया किमिति एवं पृथक् पृथक् छायाप्रदीपतलान्तरप्रमाणं लभ्यते । ततो द्वितीयं त्रैराशिकं यदि छायातुल्ये भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपौच्च्यमुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्धम् ।

"भवेत् सैव (मेघविस्फूर्जितैव) छाया तयुगगयुता स्याद् द्वादशान्ते यदा" इत्युक्ते अष्टविंशत्यक्षरपादके । छन्दोभेदे च ।

शङ्कुच्छाया हि दिग्देशकालज्ञानोपायः यथोक्तं त्रिप्रश्नाधिकारे सूर्य्यसिद्धान्तरङ्गनाथाभ्याम् । तत्र च त्रयाणां दिग्देशकालानां प्रश्नाः त्रिप्रश्नाः तेषामधिकार इति त्रिप्रश्नशब्दार्थः । तत्रादौ दिग्ज्ञानमाह ।

"शिलातलेऽम्बुसंशुद्धे वज्रलेपेऽपि वा समे । तत्र शङ्क्वङ्गुलैरिष्टैः समं मण्डलमालिखेत् । तन्मध्ये स्थापयेच्छङ्कुं कल्पनाद्वादशाङ्गुलम् । तच्छायाग्रं स्पृशेद्यत्र वृत्ते पूर्व्वापरार्द्धयोः । तत्र बिन्दू विधायोभौ वृत्ते पूर्व्वापराभिधौ । तन्मध्ये तिमिना रेखा कर्त्तव्या दक्षिणोत्तरा । याम्योत्तरदिशोर्मध्ये तिमिना पूर्व्वपश्चिमा । दिङ्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि" । सू॰ सि॰

"तत्र दिक्साधनोपक्रमे प्रथममम्बुसंशुद्धे जलवत्समीकृते शिलाप्रदेशे । अपि वाथ वा तदभावेऽन्यत्र वज्रलेपे चत्वरादौ घुट्टनादिना समस्थाने कृते शङ्क्वङ्गुलैः शङ्कुस्थाङ्गुलविभागमानकृतैरभीष्टसंख्याकाङ्गुलैर्व्यासार्द्धरूपैस्तैः समवृत्तमालिखेत् । सर्व्वतः केन्द्राद्वृत्तपरिधिरेखा तुल्या यथा स्यात् तथेत्यर्थः । ततस्तन्मध्ये तस्य वृत्तस्य केन्द्ररूपमध्ये कल्पनया द्वादशसङ्ख्याकाङ्गुलानि यस्य तं द्वादशविभागाङ्कितमित्यर्थः । शङ्कुं समतलमस्तकपरिधिकाष्ठदण्डं स्थापयेत् । ततः पूर्व्वापरार्द्धयोर्दिनस्य प्रथमद्वितीयभागयोस्तच्छायाग्रं स्थापितशङ्कोश्छायान्तप्रदेशो मण्डलपरिधौ यस्मिन् विभागे स्पृशेत् । दिनस्य प्रथमविभागेऽनुलक्षं छायाग्रं वृत्ते यत्र प्रविशति, दिनस्यापरार्द्धे छायाग्रं वृत्ते यत्र निर्गच्छतीत्यर्थः । तत्र निर्गमप्रवेशस्थानयोरुभौ द्वौ बिन्दू पूर्व्वापरसञ्ज्ञौ क्रमेण वृत्ते परिधिरेखायां कार्य्यौ । तन्मध्ये पूर्व्वापरबिन्द्वन्तरमध्ये तिमिना मत्स्येन रेखा कार्य्या सा दक्षिणोत्तररेखा भवति । मत्स्यस्तु बिन्द्वन्तरालतुल्यमितेन व्यासार्द्धेन बिन्दुद्वयकेन्द्रकल्पनेन वृत्तद्वयं निष्पाद्य वृत्तद्वयसंयोगाभ्यां वृत्तद्वयपरिधिविभागाभ्यामन्तर्गतं मत्स्याकारं स्थानं भवति । तत्रैकः संयोगो मुखं बाह्यवृत्तभागसम्पाजनेन, अपरसंयोगस्तु पुच्छमितरवृत्तभागद्वयसम्पाजनेन । मुखपुच्छस्पृग्व्यौ रेखा दक्षिणोत्तररेखा । तत्र पूर्व्वबिन्दोः सव्यं रेखाग्रं दक्षिणा दिक् । पश्चिमबिन्दोः सव्यं रेखाग्रमुत्तरा दिक् ।

छुर। स्त्री छुर–क। सौधलेपनद्रव्ये सुधायां चर्ने (कलि चुन्)हारा०।

छुरिका स्त्री छुर–छेदे क स्वार्थे क टापि अत इत्वम् छुर–वा० अनुन् वा। स्वनामख्याते अस्त्रभेदे।

छुरिकापत्री स्त्री छुरिकेव पत्रमस्याः ङीप्। भेतालमा० याम् राजनि०।

छुरित त्रि० छुर–क्त। २खचिते जटाधरः। ३लिप्ते ४छिन्ने च त्रि० “परस्परेण च्छुरितामलच्छवी” माघः।

छुरी स्त्री छुर–क गौरा० ङीष्। छुरिकायाम् अमिधेनौ भरतः।

छूरिका स्त्री छुरिका+पृषो०। १छुरिकार्थे २अन्नग्रायां गवि “गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने” छूरिकाया वन्नग्राया गोर्वेधनार्थं नासाभेदने” कुल्लू०

छूरी स्त्री छुरी–पृषो०। छुरिकायां हेम०।

छृद सन्दीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। छर्दयति ते छर्दति अचिच्छृदत्–त अचच्छर्दत् त अच्छर्दीत्

छृद देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट्। छृणत्ति छृन्ते इरित्। अच्छृदत् अच्छर्दीत्। अच्छर्दिष्ट छर्दिष्यति–छर्त्स्यति उदित् छर्दित्वा छृत्वा छृन्नः

छृप दीपने सिक० सन्दे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट्। छर्पयति ते छर्पति। अचिच्छृपत् त-अच च्छर्पत् त। अच्छर्पीत्

छेक पु० छो–वा० डेकन्। १स्वकासक्ते खगपश्वादौ २नागरे विदग्धे त्रि० मेदि०। विदग्धप्रिये शब्दालङ्कारभेदे ४अनुप्रासभेदे अनुप्रासशब्दे १७८पृ० दृश्यम्। ५मत्तायां स्त्रियां स्त्री शब्दार्थचि०। [दृश्यम्

छेकापह्नुति स्त्री अर्थालङ्कारभेदे। अलङ्कारशब्दे पृ० ३९८

छेद छेदने अद० चु० उभ० सक० सेट्। छेदयति ते अचिच्छेदत् त

छेद पु० छिद–भावे घञ् अच् वा। १छेदने “अभिप्रायच्छेदपाताना छिद्यन्ते मन्दनद्रुमाः” कुमा०। कर्त्तरि अच्। २छेदके, भाजके “छेदं गुणं गुणं छेदमिति” लीलावती। कर्मणि घञ्। ३खण्डे, त्रि० “बलाहकच्छेदविभक्तरागाम्” कुमा०। “विच्छित्तिमदच्छेदपाण्डुगण्डः” मेघः। खण्डार्थस्य तु लिङ्गित्वेन स्त्रियां गौरा० ङीष्। ततो नित्यमर्हति ठञ्। छैदिक नित्यच्छेदार्हे वेतसा

छेदन न० छिद–भावे ल्युट्। १द्विधाकरणे “चरणादूदतो भग्ने छेदने कर्णनासयोः” याज्ञ०। करणे ल्युट्। २छेदसाधने “तद् यत्नं यत्नविदां न यत्नं छेदनं कृतम्” भा० व० ५४अ०। कर्त्तरि ल्यु। ३छेदके त्रि०

छेदनीय पु० छेदनाय उत्कालुत्सेधनाय हित–छ। १कतकवृक्षे राजनि०। छिद–कर्मणि अनीयर्। २छेद्ये त्रि०

छेदादि पु० नित्यमर्हतीत्यर्थे ठञ्प्रत्ययनिमित्ते शब्दगणे स च गणः “छेद भेद द्रोह दोह नर्त्त कर्ष तीर्थ संप्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण संप्रश्न विप्रश्न विकर्ष प्रकर्ष (विराग विरङ्ग च)” पा०ग०सू०। छैदिकः

छेदि पु० छिद–इन्। १वज्रे उज्ज्व०। २छेत्तरि त्रि०। ३वर्द्धकौ पु० शब्दचि०। [हेमच०।

छेदित त्रि० छेदो जातोऽस्य तारका० इतच्। द्विधाकृते

छेद्य त्रि० छेत्तुं योग्यः कर्म्मणि योगार्थे यत्। भेत्तुं योग्ये “शीर्षच्छेद्यमतोऽहं त्वाम्” भट्टिः।

छेद्याख्यरोगप्रतिषेधोपायाः सुश्रुतोक्ता यथा“अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः। स्निग्धं गुडवतो वाथ उपविष्टस्य यत्नतः। संरोधयेत्तु नयनं भिषक्चूर्णैस्तु सावर्णैः। ततः संरोधितं दृष्टं सुस्थितं परिचक्षितम्। चर्म यत्र वलीजातं तत्रैतद्गमयेद्विषक्। अपाङ्गं प्रेक्षमाणस्य वडिशेन समाहितः। सुचण्डग्रास्तस्य मेधावी सूचीसूत्रेण वा पुनः। नचोत्तापयता क्षिप्रं कार्यं भक्षुवर्त्म तु तत्। यस्तूपातभयात्तस्य वर्त्मनी चाक्षयेद्दृशम्। ततः प्रथिथिलीभूतं लिखिरेव विलम्बितम्। उद्गिलम्बमक्कलाग्रेण तीक्ष्णेन परिशोधयेत्। विदग्धं सर्वतश्चापि छ्दाङ्गुल्या चयब्बवात्। नीत्वा कनीनकोपाल्तं छिन्द्यात्तर्तिकनीनकम्। चतुर्भागस्थिते मांसे नाक्षि व्यापत्तिमर्हति। कनीनकवधाद्दस्रं नाडी चाप्युपजायते। हीनच्छेदात्पुनर्हि वृद्धिमेवाधिगच्छति। चर्म यच्चावलद्धापि तदप्युच्छेद्यं बुध्मितम्। छिन्द्याद्दक्षेच यत्नेन वर्त्मशुक्लान्तमाश्रितम्। प्रतिसारणमक्ष्णोस्तु ततः कार्यमनन्तरम्। यवनालस्य चूर्णेन त्रिकटोर्मणस्य च। स्वेदयित्वा ततः पश्चाद्बध्नीयात् कुशलो भिषक्। देशर्तुबलकालज्ञः स्नेहं दत्त्वा यथाहितम्। व्रणवत् संविधानन्तु तस्य कुर्यादतःपरम्। त्र्यहाद्मुक्त्वा करस्वेदं दत्त्वा शोधनमाचरेत्। करञ्जबीजामलकमधुकैः साधितं पयः। हितमाश्च्योतनं त्वथे हिरञ्जः क्षौद्रसंयुतम्। मधुकोत्पलकिञ्जल्कदूर्वा

कफजैव मूर्द्धनि। प्रलेपः शस्तः पीतः क्षीरपिष्टः प्रयुज्यते। तैलाञ्जनैरपहरेद्दर्म्मशेषं भवेद्यदि। यच्च चास्यन्दधिनिभक्षीणं रक्तमथापि वा। धूसरन्तु यच्चापि शुक्लमप्युपाचरेत्। चर्म्माभमच्छ्वं यत्तु स्नायुमांसघनावृतम्। छेद्यमेव तदर्म्म स्यात्तन्वप्यशुद्धगतञ्च यत्। विशुद्धवर्णमक्लिष्टं क्रियासञ्चिगतक्रमम्। छित्त्वाऽर्म्मापि भवेत्सम्यग्यथासमनुपद्रवम्। सिराजाले सिरायास्तु कठिनास्तास्तु बुद्धिमान्। उद्धृत्य शस्त्रलाग्रेण बडिशेनावलम्बिताः। सिरासु पिडका जाता या न सिध्यन्ति भेषजैः। अर्म्मवच्छस्त्रलाग्रेण तासाञ्छेदनमिष्यते। रोगयोश्चैतयोः कार्य्यममर्म्मोक्तं प्रतिसारणम्। पिष्टिकास्वपि यथादोषं लेखनद्रव्यसम्भृतः। सन्धौ संलेख्य शुक्ले च पर्व्वणीकां विचक्षणः। उत्तरे च त्रिभागे च बडिशेनावलम्बिताम्। छिन्द्यात्ततोऽर्द्धमये स्यादश्रुनाडी हतोऽन्यथा। प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते। लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम्। शङ्खं समुद्रफेनञ्च मण्डूकीञ्च समुद्रजाम्। स्फटिकं कुरुविन्दञ्च प्रवालाश्मन्तकन्तथा। वैदूर्य्योपलकं मुक्तामयश्चाकरजांस्ति च। समभागानि सम्भृत्य ताम्रं स्रोतोऽञ्जनेन तु। चूर्णाञ्जनं कारयित्वा भाजने मेषशृङ्गजे। संस्थाप्योभयतः कालमञ्जयेत्ततं बुधः। कृच्छ्राणि पिडकां कृच्छ्रातिराजालानि तेन वै अर्म्मतथा यत्र नाम्ना शुक्तार्य्योऽर्बुदमेव च। अभ्यन्तरं वर्त्म यथा विन्यासं तेषु वक्ष्यते। वर्त्मोपसंस्थ निर्भुज्य सूच्योद्धृत्य प्रयत्नतः। मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषग्वरः। ततः सैन्धवकासीसकणाभिः प्रतिसारयेत्। स्थिते च रुधिरे वर्त्म दहेत्सम्यक्शलाकया। क्षारेणावशिष्टेऽपि व्याधिशेषो भवेद्यदि। तीक्ष्णैरुभयतो भागैस्ततो दोषमपि चिकित्सेत्। वितरेच्च यथादोषमभ्यञ्जनक्रियाविधिम्। मासमेकञ्च परतो नावश्य स्यात्सुयन्त्रतः"।

छेमण्ड पु° छमण्ड+पृषो° अत एत्वम्। मातृपितृहीने बालके (छों ड) शब्दरत्ना°।

छेलक पुंस्त्री छो-कर्म्मणि वा° ऐलकम्। १छागे २छाग्यां स्त्री टाप्। भावप्र° छागशब्दे दृश्यम्।

छेलु पु° छो-वा° ऐलु। कोविदारवृक्षे शब्दच°

छैदिक लि° छेदं नित्यमर्हति ठञ्। नित्यच्छेदार्हे वेतसे पु°

छो छेदने दि° पर° सक° अनिट्। छ्यति अच्छात् अच्छासीत्। चच्छौ। छातः-छितः। (देवो वा)

छोटिका स्त्री छुट-ण्वुल्। तर्ज्जन्यङ्गुष्ठध्वनौ (तुडी

छोटिन् पु° छुट-णिनि। धीवरे त्रिका°।

छोरण न° छुर-भावे ल्युट्। १परित्यागे त्रिका°।

छोलङ्ग पु° छुर-वा° अङ्गच् रस्य लः। मातुलुङ्गे (टावालेबु) शब्दरत्ना°।

छोहारा स्त्री द्वीपान्तरखर्जूरिकायाम्। "खर्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्यते" भावप्र° खर्जूरशब्दे २४६८४ तद्गुणा दृश्याः।

छ्यु गतौ भ्वा° आत्म° सक° अनिट्। च्यवते अच्छ्योष्ट सेयमिति अपि(चु)च्छ्युवत् त। चेः इति चु(चि)च्छ्यावयिषति ते।

इति वाचस्पत्ये छकारादिशब्दार्थनिरूपणम्।

## ज

जकारो व्यञ्जनवर्णभेदः स्पर्शसंज्ञकस्तस्योच्चारणस्थानं तालु, आभ्यन्तरप्रयत्नः जिह्वामध्यभागेन तालुस्पर्शः बाह्यप्रयत्नाश्च घोषसंवारनादाः अल्पप्राणश्च । मातृकान्यासेऽस्य वामकफोणिमूले न्यासः । तन्त्रोक्ता अस्य वाचकशब्दा यथा "जश्चतुराननः शूली भोगी च विजया स्थिरा । बलदेवो जयो जेता धातकी सुमुखो विभुः । लम्बोदरी स्मृतिः शाखा सुप्रभा कर्णकाधरा । दीर्घबाहुरपि हंसो गन्धी तेजाः सुराधिपः । जवनो वेगितो वामकफोणिपदात्मकः । कृशानुस्तेजगो वेदी चामोदो मदविह्वलः" वर्णोद्धारतन्त्रम् । अस्य ध्येयरूपं यथा "जकारं परमेशानि ! या स्वयं मध्यकुण्डली । शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये !" कामधेनुतन्त्रम् । काव्येऽस्य प्रथमविन्यासफलं वृत्त० र० टी० उक्तं "जोऽभित्रलाभमित्यादि" ।

**ज** पु० जि—जन—जु—वा ड । १मृत्युञ्जये २जन्मनि ३पितरि ४जनार्दने त्रि० मेदि० ५विषे ६भुक्तौ ७तेजसि ८पिशाचे च । शब्दरत्ना० । ९वेगे एकाक्षरकोषः "जो गुरुमध्यगतः" इत्युक्ते गुरुमध्ये प्रान्तयोर्लघुद्वययुक्ते छन्दःशास्त्रप्रसिद्धे (।ऽ।) त्रिवर्णे १० गणे तस्य काव्यप्रथमविन्यासे । "भुजगोरुज ज" इत्युक्तेः रोगःफलम् सर्वोऽस्य देवः" ११जाते त्रि० "प्रावृट्शरत्कालदिवां जे" पा० अलुक् स० । प्रावृषिजः शरदिजः कालेजः दिविजः । "विभाषा वर्षक्षरशरेत्यादि" पा० । वर्षेज वर्षज इत्यादि । "तत्पुरुषे कृति बहुलम्" पा० । मनसिजः मनोजः सरसिजं सरोजमित्यादि । जरायुजः अण्डजः स्वेदजः उद्भिज्जः" । १२वेगिते १३जेतरि त्रि०शब्दरत्ना० [कपुष्पे न०मेदि० ।

**जकुट** पु० जं जातं कुटति कुट—क । १मलयाचले २वार्त्ताकुपुष्पे

**जक्ष** भक्षे अक० हासे अक० अदा० स्वपादि० प० सेट् । स्वपादित्व इदाद्यन्तर्गणत्वेन अदादेः सार्वधातुकस्य इट् । जक्षिति जक्षितः अभ्यस्तसंज्ञः तेन जक्षति । अजक्षीत् "उतेव स्त्रीभिः सह मोदमानो जक्षद्भिर्वा यानैर्वा पश्यन्" शत०ब्रा० १४।७।१।१४। "अन्नत्यां क्वचिदश्नाति जक्षत्यां क्व च जक्षिति" भाग० ४।२५।५७। "इविजक्षिति निःशङ्कोमस्रेषु मघवानसौ" अक्षिमोऽनपराधेऽपि" भट्टिः । अस्यान्तःस्थादितां केचिन्मन्यन्ते । "यक्षाणामिति येऽप्युक्तास्ते वै यक्षास्तु यक्षणात्" विष्णुपु० यक्षनामनिरुक्तौ तथादर्शनात् ।

**जच** दाने भ्वा० इदित् आ०सक०सेट् । इदित्करणसामर्थ्यात् अनुपधस्यापि नुम् । जञ्चते अजञ्चिष्ट । चित् । जजञ्चे अजाञ्चि (जा) जञ्चम् । इदित्करणात् जञ्च्यते ।

**जक्षण** न० जक्ष—भावे ल्युट् । भक्षणे हेमच० ।

**जगच्चक्षुस्** पु० जगतां चक्षुरिव प्रकाशकत्वात् । सूर्ये हेमच०

**जक्षादि** पु० "जक्ष जागृ दरिद्रा च चकासृः शासिरेव च । दीधी वेवी च विज्ञेयो जक्षादिः पञ्चकोगणः" इत्युक्तेऽ भ्यस्तसंज्ञे धातुपञ्चके "नाभ्यस्ताच्छतुः" पा० जक्षत जाग्रत् इत्यादि ।

**जगत्** पु०गम—क्विप् नि०द्वित्वम् तुक् च । १वायौ २जङ्गमे त्रि० मेदि० । ३विश्वे न० अमरः । ४लोके सचराचरे प्रपञ्चभूते भोगोपयोगिपरिकरसहिते मायामये संसारचक्रे यथोक्तमभियुक्तैः "न निरूपयितुं शक्या विस्पष्टं भासते च या । सा मायेतीन्द्रजालादौ लोकाः संप्रतिपेदिरे । स्पष्टं यथा जगद्भेदमशक्यं तन्निरूपणम् । मायामयं जगत् भाति वीक्ष्यस्वापक्षपाततः" । "जगद्योनिरयोनिस्त्वं जगदन्तोनिरन्तकः । जगदादिरनादिस्त्वं जगदीशोनिरीश्वरः" कुमा० । "जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ" रघुः । "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्" मनुः । लोके "जगत्यपर्याप्तसहस्रभानुना" "युगान्तकालप्रतिसंहृतात्मनोजगन्ति यस्यां सविकाशमासत" माघः । जङ्गमे "जगतां तस्थुषश्च" श्रुतिः । क्विबन्तत्वात् जगत् जगतौ इत्यादिरूपम् "पृषन्महद्बृहज्जगच्छतृवच्च" पा० निपातनपक्षे जगत् जगन्तौ इत्यादिरूपमिति केचिदाहुस्तच्चिन्त्यम् तस्य शतृवत्त्वेऽपि "नाभ्यस्ताच्छतुरिति" पा० निषेधात् न नुम् । शतृवत्त्वप्रयोजनं तु स्त्रियां ङीप् जगती [हेमच० ।

**जगत्कर्त्तृ** पु० ६त० । १ईश्वरे तदभेदात् २ब्रह्मादौ

**जगच्छन्द** पु० जगती छन्दोऽस्य वेदे नि० पुंवद्भावः । जगत्या छन्दसा स्तुत्ये । "स्वरोऽसि गयोऽसि जगच्छन्दाः" ता० ब्रा० १।५।१५ ।

**जगत्पति** पु० ६त० । १परमेश्वरे तदभेदात् २हरिहरादौ "यदा च तस्याभिगमे जगत्पतेः" कुमा० जगदीशादयोऽप्यत्र । "जगदीशो निरीश्वरः" कुमा०

प्रतिदानन्तु निषिद्धं नात्र पार्व्वति" । मायातन्त्रसारे पूर्ब्बं प्रकारमुक्त्वा "मुहूर्त्तव्यापिनी चापि प्रातश्चेन्नवमी तिथिः । तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं वरवर्णिनि ! । त्रिकालं पूजयेत्तत्र नैककाले कदाचन" । कात्यायनीतन्त्रे ७पटले । "कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च । उपसर्गोदितो भानुर्दुर्गामाराध्य यत्नवान् । पुत्त्रारोग्यं धनं लेभे लोकसाक्षित्वमेव च । तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि । प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम्" । यक्षिवक्त्रतन्त्रे "कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम् । त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत् । मृण्मयीं प्रतिमां भक्त्या जगद्धात्र्या विधानतः । पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत् । पुत्त्रपौत्त्रधनैश्वर्य्यं संयुतोऽसौ भवेत् पुरी" । तन्त्रान्तरे । "कुजवारे युगाद्यायां नवम्यान्तु जगत्प्रसूः । प्रादुर्भूता महेशानी तत्र तां परिपूजयेत्" तन्त्रान्तरे । "त्रिकालं पूजयेद्दुर्गां मूलेनैकाक्षरेण च (दुँ) । नानारत्नविधानेन गीतवाद्यपुरःसरम् । कार्त्तिकस्य सिते पक्षे नवम्यान्तु विशेषतः । ततोवं साधकश्रेष्ठो लभेद्राज्यमकण्टकम्" । योगिनीतन्त्रे "कार्त्तिकेऽमलपक्षे तु नवम्यान्तु विशेषतः । उद्धृतान्तु जगद्धात्रीं पूजयेद्दीपमालया" आगमतत्त्वसारे "कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे । प्रादुर्भूता जगद्धात्री युगादौ दैत्यनाशिनी" । उत्तरकामाख्यातन्त्रे "कार्त्तिके शुक्लपक्षे तु नवम्यां प्रथमेऽहनि । त्रिसन्ध्यं पूजयेद्देवीं दुर्गां मन्मतृप्तये" । कुब्जिकातन्त्रे "कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् । दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये । दुर्गाकल्पे विद्योत्पत्तौ "कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः । सर्व्वदेवहितार्थाय दुष्टानां दमनाय च । आविरासीत् जगच्छान्त्यै युगादौ परमेश्वरी" । व्रतकालविवेकधृतवचनम् "कार्त्तिकेऽमलपक्षस्य नवम्यां नवमेऽहनि । पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम्" । स्मृतिः । "युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" । तत्त्वसारार्णवे "कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता । पूर्व्वाह्णसमये तत्र पूजाविधिरिहोदितः" । तत्त्वसारार्णवे भविष्यपुराणम् "कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता । पूर्व्वाह्णसमये काष्ठात्रिका परदिने यदि । तत्र पूजादिकं कुर्य्यात् भेदनिर्णयमादृते" । स्मृतिसागरे "कार्त्तिकस्य युगाद्यायामद्विकामोऽर्च्चयेदुमाम्" । ततश्च उक्तवचनेन तत्तिथेर्युगादित्वेन कीर्त्तनात् तत्पूजायाश्च युगाद्यादिनकर्त्तव्यत्वेन विधानात् पूर्व्वापरदिनयोस्तस्याः सत्त्वे परदिन एव कर्त्तव्यता न तु युग्माग्रेण चाष्टमीविद्धाया ग्राह्यता युगाद्या वर्षवृद्धिश्चेत्यादि वचनात् यत्तु "श्रावणी दौर्गनवमी दूर्वा चैव हुताशिनी । पूर्व्वविद्धैव कर्त्तव्येत्यादि" वचनं तत् एतद्भिन्ननवमीकर्त्तव्यदुर्गाव्रतपरम् तत्र व्रतं प्रसङ्गे मध्यमार्णं दृश्यम् । जगद्धात्रीविद्योत्पत्तिमाह कात्यायनीतन्त्रे ७६ प० । "पार्व्वत्युवाच । भगवन् ! प्राणनाथेश ! सर्व्वतत्त्वविशारद ! । श्रुता कात्यायनीविद्यासत्पत्तिश्च त्रिलोचन ! । महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः । तत् सर्व्वं ब्रूहि भगवन् ! कृपया परमेश्वर ! । इति देवीप्रश्ने "श्रीशिव उवाच । शृणु पार्व्वति ! वक्ष्यामि रहस्यं परमाद्भुतम् । यत् श्रुत्वा लभते देवि ! सौभाग्यसुखमुत्तमम् । पुरा पुरन्दराद्याः सर्व्वेश्वरत्वाभिमानिनः । प्राहुः किमीश्वरोऽस्मत्तोऽन्यत्र किञ्चित् सुराऽन्निति । तत्र दुर्गा जगन्माता नित्या चैतन्यरूपिणी । एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्रणम् । करिष्यामीति निश्चित्य ज्योतीरूपं दधार सा । आविरभूद्दुर्गा जगद्धात्री जगन्मयी । कोटिसूर्य्यप्रतीकाशं चन्द्रकोटिसमप्रभाम् । ज्वलन्तं पर्व्वतमिव सर्व्वलोकभयङ्करम् । तद्दृष्ट्वा सुराः सर्व्वे भयव्याकुलचेतसः । किमेतच्च विनिश्चेतुं मन्त्रयन्ति ह्यभवन् सुराः । वायुमाहुः समागत्य किमेतत् परमाद्भुतम् । विजानीहि महावीर मातरिश्वन् ! दिशां पते ! । ततो वायुर्द्रुतं तत्र गतः सोऽग्निकं ततः । तमग्निकमुपायातं प्राह तेजोमयी ततः । भगवन् ! कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि । आदातुं शक्यते सर्व्वं पृथिवीतलसंस्थितम् । इति प्रश्नं कृपात् वायुः क्षणं तत्रैव तिष्ठति । आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम् । वायुः सर्व्वप्रयत्नेन नादातुं तत्क्षमोऽभवत् । ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः । अग्ने ! एतद्विजानीहि किमेतत् कर्म्म चाद्भुतम् । इत्युक्तो देवतावृन्दैरग्निस्तोकोऽन्तिकं गतः । अमरो जातवेदा वा तेजोवानित्युवाच तम् । स प्रोक्तवानग्निरस्मि सर्व्वदाहकशक्तिकः । दहैतत् तृणमत्रत्यमिति तस्मै तृणं ददौ । अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत्क्षमोऽभवत् । ततो निवृत्ते वह्निभूत्वा सोऽपत-

वैरजे तीर्थे दत्त्वा पिण्डं पितृंस्तथा। दर्शनार्थं ययौ धीमानजितं पुरुषोत्तमम्। तं दृष्ट्वा पुण्डरीकाक्षम-क्षरं परमं शुचिः। उषोष्य स त्रिरात्रं दत्त्वा महेन्द्र ! दक्षिणं ययौ"। उषोष्य स्थित्वा। तथा "आदौ यद्दारु प्लवते सिन्धोः पारे अपूरुषम्। तदालभस्व दुर्द्दणो ! तेन याहि परं स्थलम्" तैत्तिरीयश्रुतिः। अस्य व्याख्या शाङ्खायनभाष्ये "आदौ विप्रकृष्टे देशे वर्त्तमानं यद्दारु दारुमयं पुरुषोत्तमाख्यदेवताशरीरं प्लवते जलस्योपरि वर्त्तते अपूरुषं निर्म्मातृरहितत्वेन अपूरुषं तद् आलभस्व दुर्द्दणो ! हे ! होतः, तेन दारुमयेन देवेन उपास्यमानेन परं स्थलं वैष्णवं लोकं गच्छेत्यर्थः। अथर्ववेदेऽपि "आदौ यद्दारु प्लवते सिन्धोर्मध्ये अपूरुषम्। तदा लभस्व दुर्द्दणो तेन याहि परं स्थलम्"। अत्रापि तथैवार्थः मध्ये तीरे। स्कन्दपुराणम् "इन्द्रद्युम्न ! प्रवृत्तस्ते भक्त्या निष्कामकर्म्मभिः। एतद्दृज्य वित्त-कोटीसु यत्क्रमायतनं कृतम्। भक्त्येऽप्येतस्य राजेन्द्र ! स्थानं न लभ्यते मया"। ब्रह्मपुराणे "विरजे विरजा नाम ब्रह्मणा संप्रतिष्ठिता। तस्याः सन्दर्शने मर्त्यः पुनात्यासप्तमं कुलम्। स्नात्वा दृष्ट्वा तु तां देवीं भक्त्याऽऽ पूज्य प्रणम्य च। नरः स्ववंशमुद्धृत्य मम लोकं स गच्छति। यास्ते वैतरणी नाम सर्वपापहरा नदी। तस्यां स्नात्वा नरश्रेष्ठ ! सर्वपापैः प्रमुच्यते"। वैतरणीमधिकृत्य महाभारते "आयातभागं सर्वेभ्यो भागेभ्यो भागमुत्तमम्। देवाः सङ्कल्पयामासुर्भयाद्रुद्रस्य शाश्वतीम्। इमां गाथां समुद्धृत्य मम लोकं स गच्छति। द्वैपायनं तस्य पन्थाः यज्ञस्येव विराजते"। ब्रह्मपुराणे "आस्ते स्वयम्भूस्तत्रैव क्रोडरूपी हरिः स्वयम्। दृष्ट्वा प्रणम्य तं भक्त्या नरो विष्णुपुरं व्रजेत्"। तथा "विरजायां मम क्षेत्रे पिण्डदानं करोति यः। स करोत्यक्षयां तृप्तिं पितॄणां नात्र संशयः। मम क्षेत्रे मुनिश्रेष्ठ ! विरजे ये कलेवरम्। परित्यक्ष्यन्ति पुरुषास्ते मोक्षं प्राप्नुवन्ति वै। नदी तत्र महापुण्या विन्ध्य-पादविनिर्गता। चित्रोत्पलेति विख्याता सर्वपाप-हरा शुभा"। चित्रोत्पला महानदी। तथा "सत्यं सत्यं पुनः सत्यं क्षेत्रं तत् परमं महत्। पुरुषाख्यं सकृद्दृष्ट्वा सागराम्भःसमन्वितः। ब्रह्मविद्यां सकृज्ज्ञात्वा गर्भवासो न विद्यते"। पुरुषोत्तमक्षेत्रदर्शनसागर-मरणब्रह्मविद्याज्ञानानां प्रत्येकं गर्भवासाजनकत्वम्।

कूर्म्मपुराणे "तीर्थं नारायणस्यान्यत् नाम्ना तु पुरुषो-त्तमम्। तत्र नारायणः श्रीमानास्ते परमपूरुषः। पूजयित्वा परं विष्णुं स्नात्वा तत्र द्विजोत्तमाः !। ब्राह्म-णान् भोजयित्वा तु विष्णुलोकमवाप्नुयात्"। श्राद्ध-कल्पतरौ वायुपुराणे "धूतपापं तथा तीर्थं सुभद्रा-दक्षिणस्तथा। गोकर्णो गजकर्णश्च तथा च पुरुषोत्तमः। एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते"। ब्रह्मपुराणे "चक्रं दृष्ट्वा हरेर्दूरात् प्रासादोपरि संस्थितम्। सह-सा मुच्यते पापात् सर्वस्मादिति मे मतिः"। तथा "मार्कण्डेयह्रदे गत्वा स्नात्वा चोदङ्मुखः शुचिः। निमज्जेत् त्रींश्च वारांश्च इमं मन्त्रमुदीरयन्"। "मार्क-ण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा तु शङ्करम्। दशानामश्व-मेधानां फलं प्राप्नोति मानवः। पापैः सर्वैर्विनिर्मुक्तः शिवलोकं स गच्छति। तत्र भुक्त्वा वरान् भोगान् यावदाहूतसंप्लवम्। इह लोकं समासाद्य ततो मोक्षमवाप्नुयात्। कल्पवृक्षं ततो गत्वा कृत्वा तं त्रिः-प्रदक्षिणम्। पूजयेत् परया भक्त्या मन्त्रेणानेन तं वटम्"। "भक्त्या प्रदक्षिणं कृत्वा नत्वाकल्पवटं नरः। सहसा मुच्यते पापात् जीर्णत्वच इवोरगः। छायां तस्य समाक्रम्य कल्पवृक्षस्य भो द्विजाः !। ब्रह्महत्यां नरो जह्यात् पापेष्वन्येषु का कथा। दृष्ट्वा कृष्णाङ्गसम्भूतं ब्रह्मतेजोमयं वटम्। न्यग्रोधाकृतिनं विष्णुं प्रणिपत्य च भो द्विजाः !। राजसूयाश्वमेधाभ्यां फलं प्राप्नोति चाधिकम्। तथा स्ववंशमुद्धृत्य विष्णु-लोकं स गच्छति। वैनतेयं नमस्कृत्य कृष्णस्य पुरतः स्थितम्। सर्वपापविनिर्मुक्तस्ततो विष्णुपुरं व्रजेत्। दृष्ट्वा वटं वैनतेयं यः पश्येत् पुरुषोत्तमम्। सङ्कर्षणं सुभद्राञ्च स याति परमां गतिम्। प्रविश्यायतनं विष्णोः कृत्वा तं त्रिःप्रदक्षिणम्। सङ्कर्षणं स्वमन्त्रेण भक्त्याऽऽ पूज्य प्रसादयेत्"। एवं प्रसाद्य चानन्तमजेयं त्रि-दशार्च्चितम्। कैलासशिखराकारं चन्द्रात् कान्ततराननम्। नीलवस्त्रधरं देवं फणाविकटमस्तकम्। महाबलं हलधरं कुण्डलैकविभूषणम्। रौहिणेयं नरो भक्त्या लभेताभि-मतं फलम्। सर्व्वपापविनिर्म्मुक्तो विष्णुलोकं स ग-च्छति। आभूतसंप्लवं यावत् भुक्त्वा तत्र सुखं नरः। पुण्यक्षयादिहागत्य प्रवरे योगिनां कुले। ब्राह्मणप्रव-रो भूत्वा सर्व्वशास्त्रार्थपारगः। ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम्। एवमभ्यर्च्य हलिनं ततः

कृष्णं विचक्षणः । द्वादशाक्षरमन्त्रेण पूजयेत् सुसमाहितः" । आप्लुतसंप्लवं यावत् भूतसंप्लवं यावत् आप्रलयकालम् इति यावत् छान्दसोभकारस्य उकारः । द्वादशाक्षरमन्त्रेण ओं नमोभगवते वासुदेवाय इत्यनेन । "द्विषट्कवर्णमन्त्रेण भक्त्या ये पुरुषोत्तमम् । पूजयन्ति सदा धीरास्ते मोक्षं प्राप्नुवन्ति वै । तस्मात्तेनैव मन्त्रेण भक्त्या कृष्णं जगद्गुरुम् । संपूज्य गन्धमाल्याद्यैः प्रणिपत्य प्रसादयेत्" एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम् । सर्वपापहरं देवं सर्वकामफलप्रदम् । प्रांशुं द्विभुजं देवं पद्मपत्रायतेक्षणम् । महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् । शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम् । सर्वलक्षणसंयुक्तं वनमालाविभूषितम् । दृष्ट्वा नरोऽञ्जलिं बद्ध्वा दण्डवत् प्रणिपत्य च । अश्वमेधसहस्राणां फलं प्राप्नोति भोद्विजाः ! । यत् फलं सर्वतीर्थेषु स्नानदाने प्रकीर्त्तितम् । नरस्तत् फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च" । अत्र यद्यपि दृष्ट्वा प्रणम्येति श्रवणात् समुच्चितयोरेव फलान्वयोऽन्यथा वाक्यभेदः स्यात् तथापि येषे दर्शनमात्र एव फलोपसंहारात् प्रत्येकं फलान्वयइति वदन्ति । ब्रह्मपुराणे "ततः पूज्य स्वमन्त्रेण सुभद्रां भक्तवत्सलाम् । प्रसादयेत्ततोविप्राः ! प्रणिपत्य कृताञ्जलिः" । स्वमन्त्रेण प्रणवादिनमोऽन्तेन नाम्ना । यथा गारुडे "प्रणवादिनमोऽन्तेन चतुर्थ्यन्तेन सत्तमाः! । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः" । "एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् । बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम् । कामगेन विमानेन नरोविष्णुपुरं व्रजेत् । निष्क्रम्य देवतागारात् कृतकृत्योभवेन्नरः । प्रणम्यायतनं पश्चात् व्रजेत्तत्र च भोद्विजाः! । भक्त्या दृष्ट्वा च तं देवं प्रणम्य नरकेशरिम् । मुच्यते पातकैः सर्वैः समस्तैर्नात्र संशयः" । नरकेशरिं नरकेशरिणम् । तथा 'अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च । सर्वपापविनिर्मुक्तोनरोयाति परं पदम्' । तथा "श्वेतगङ्गां नरः स्नात्वा यः पश्येत् श्वेतमाधवम्" । तथा "कुशाग्रेणापि राजेन्द्र ! श्वेतगाङ्गेयमम्बु च । स्पृष्ट्वा स्वर्गं गमिष्यन्ति मनुजा ये समाश्रिताः । यस्तस्यां प्रतिमां लोके माधवाख्यां शशिप्रभाम् । विहाय सर्वलोकान् वै मम लोके महीयते" । तथा 'श्वेतमाधवमालोक्य समीपे मत्स्यरूपिणम् । एकार्णवजले मग्नं रोहितं रूपमास्थितम् ।

वेदानां तारणार्थाय रसातलतले स्थितम्" । तथा "आद्यावतारणं रूपं माधवं मत्स्यरूपिणम् । प्रणम्य प्रयतोभूत्वा सर्वदुःखाद्विमुच्यते" । तथा "पूर्वोक्तेन तु मन्त्रेण नमस्कृत्य तु तं गतम् । दक्षिणाभिमुखोगच्छेत् धन्वन्तरमतन्त्रयम्" । मार्कण्डेयस्य । तथा "उपसेनं पुरा दृष्ट्वा स्वर्गद्वारेण सागरम् । गत्वाचम्य शुचिस्नात्वा ध्यात्वा नारायणं परम् । न्यसेदष्टाक्षरं मन्त्रं पश्चाद्धस्तशरीरयोः" । "समुद्रोदकेन नाचामेत्" तस्यापेयत्वस्य तैत्तिरीयश्रुतावुक्तत्वात् । "यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः । क्षयी चाप्यायितश्चन्द्रः कोन नश्येत् प्रकोप्य तान्" इति मनुनाभिहितत्वाच्च" तस्यास्पृश्यत्वेऽपि विधिभेदेनैव तस्य स्पृश्यता यथाह ब्रह्मपुराणम्

"स्पर्शनश्राव्यं विधिवत्ततःस्नानं समाचरेत् । अन्यथा भोद्विजश्रेष्ठाः ! स्नानं तत्र न शस्यते" । वनपर्वणि "अग्निश्च तेजो वसुधा च देहोरेतोधाविष्णोरमृतस्य नाभिः । एवं ब्रुवन् पाण्डव ! सत्यवाक्यमतोऽवगाहेत पतिं नदीनाम् । अन्यथा हि कुरुश्रेष्ठ ! स्पृश्योन महोदधिः । कुशाग्रेणापि कौन्तेय ! देवयोनिरपांपतिः । देवान् पितॄंस्तथा चान्यान् सन्तर्प्याचम्य वाग्यतः" (अन्यान् ऋषीन्) ब्रह्मपु० । "स्नात्वा त्वब्दैवतैर्मन्त्रैरभिषेकस्तु मार्ज्जनम् । अन्तर्जले जपेत् पश्चात् त्रिरावृत्त्याघमर्षणम्" । अब्दैवतैः "आपोहिष्ठा" इत्यादिभिः । अघमर्षणम् ऋतञ्च सत्यञ्चेत्यादि । "हस्तमात्रं चतुःकोणं चतुर्द्वारं सुशोभनम् । पुरं विलिख्य भो विप्रास्तीरे तस्य महोदधेः । एवं सम्यक् समालिख्य पूजयेत्तत्र भोद्विजाः ! । अष्टाक्षरविधानेन नारायणमजं विभुम् । ओंनमो नारायणाय" इत्यष्टाक्षरमन्त्रः । ब्रह्मपुराणे "तीर्थे चाप्यत्र विधिवत् नारायणमनामयम् । रामं कृष्णं सुभद्राञ्च प्रणिपत्य च सागरम् । दशानामश्वमेधानां फलं प्राप्नोति मानवः ! । सर्वपापविनिर्मुक्तः सर्वदुःखविवर्जितः । कुलैकविंशमुद्धृत्य विष्णुलोकञ्च गच्छति । पितॄणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः । अक्षयां पितरस्तेषां तृप्तिं संप्राप्नुवन्ति वै" । तथा "कोट्यो नव नवत्यश्च तत्र तीर्थानि सन्ति वै । तस्मात् स्नानञ्च दानञ्च होमं जपसुरार्च्चनम् । यत् किञ्चित् क्रियते तत्र चाक्षयं भवति द्विजाः ! । ततोगच्छेतद्विजश्रेष्ठाः ! तीर्थं यज्ञाङ्गसम्भवम् ।

इन्द्रद्युम्नसरोनाम यत्रास्ते पावनं शुभम्। गत्वा तत्र शुचिः श्रीमानाचम्य मनसा हरिम्। ध्यात्वोपस्थाय च जपन्निदं मन्त्रमुदीरयेत्"। "एवमुच्चार्य विधिवत् स्नात्वा देवानृषीन् पितॄन्। तिलोदकेन चान्यांश्च सन्तर्प्याचम्य वाग्यतः॥ दत्त्वा पितॄणां पिण्डांश्च संपूज्य पुरुषोत्तमम्। दशाश्वमेधिकं सम्यक् फलं प्राप्नोति मानवः"। तथा "नाना नद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे। ज्यैष्ठशुक्लदशम्यादि प्रत्यक्षं यान्ति सर्वदा॥ स्नानदानादिकं तस्मात् देवताप्रेक्षणादिकम्। यत् किञ्चित् क्रियते तात! तस्मिन्। कालेऽक्षयं भवेत्। एवं कृत्वा पञ्चतीर्थमेकादश्यामुपोषितः"। "ज्यैष्ठे शुक्लदशम्यान्तु पश्येत् श्रीपुरुषोत्तमम्। स पूर्वोक्तं फलं प्राप्य क्रीडित्वा चाच्युतालये। प्रयाति परमं स्थानं यस्मान्न विनिवर्त्तते"। तीर्थभेदेन स्नानान्तरापत्तिमाह निगमः। "नावर्त्तयेत् पुनः कर्म्म तर्पणादिकमञ्जसा। काम्यनैमित्तिके हित्वा एकं श्लोकत्रयं चरेत्। व्यपोह्य चाष्टमं भागमुदयाद्दिवसस्य तु। तिथ्योर्युग्मेऽप्ययुग्मे वा यद्वदाहुस्तथाचरेत्"। ब्रह्मपु० "मार्कण्डेयो वटः कृष्णो रौहिणेयो महोदधिः। इन्द्रद्युम्नसरश्चैव पञ्चतीर्थी विधिः स्मृतः"। मार्कण्डेयो वटो मार्कण्डेयह्रदः। कृष्णोऽक्षयवटः "न्यग्रोधाकृतिनं विष्णुमिति" पूर्वोक्तात्। वराहपुराणे "यस्मिन् देशे प्रदेशेन कुरुक्षेत्रे नराधिप!। वर्षाणामयुतं यत्र वायुभक्षो जितेन्द्रियः। ज्यैष्ठे मासि सिते पक्षे द्वादश्यान्तु विशेषतः। पुरुषोत्तममासाद्य ततोऽधिकफलं लभेत्। अग्निपुराणे "वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता। तत्र मां लेपयेद्गन्धलेपनैरतिशोभनम्"। तथा "ज्यैष्ठ्यामृक्षावतीर्णस्तत् पुण्यं जन्मवासरम्। तस्यां मे स्नपनं कुर्यात् महास्नानविधानतः। ज्यैष्ठे मासतमे काले ब्रह्मणा वन्दितस्य मम्। रामं सुभद्रां संस्नाप्य मम लोकमवाप्नुयात्"। तथा "आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रवर्त्त्याथ प्रीणयेच्च द्विजान् बहून्"। तथा "पुष्याभावात्तथा कार्या सदा सा प्रीतये मम"। स्कन्दपुराणे "फाल्गुन्यां क्रीडनं कुर्य्यात् दोलायां मम भूमिप!"। ब्रह्मपुराणे "उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमे। दृष्ट्वा रामं सुभद्राञ्च विष्णुलोकं व्रजेन्नरः। नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम्। फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्। विषुवद्दिवसे प्राप्ते पञ्चतीर्थीविधानतः। कृत्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्रां च मोहिताः। नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम्। विमुक्तः सर्वपापेभ्यो विष्णुलोकञ्च गच्छति। यः पश्यति तृतीयायां कृष्णं चन्दनरूषितम्। वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम्"। तथा "मासि ज्यैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते। पौर्णमास्यां तथा स्नानं सर्वकालं हरेर्द्विजाः। तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम्। बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम्। तथा "स्नातः पश्यति यः कृष्णं व्रजन्तं दक्षिणामुखम्। ब्रह्महत्यादिभिः पापैः मुच्यते नात्र संशयः। प्रदक्षिणं प्रकुर्वाणाः ये पश्यन्ति तथाष्टदलम्। कृष्णं बलं सुभद्राञ्च ते यान्ति भवनं हरेः। ये पश्यन्ति तदा कृष्णं सप्ताहं मण्डपे स्थितम्। हरिं रामं सुभद्राञ्च विष्णुलोकं व्रजन्ति ते"। तथा, "सम्वत्सरमुपोषित्वा मासमात्रमथापि वा। तेन जप्तं हुतं तेन तेन तप्तं तपोमहत्। स याति परमं स्थानं यत्र योगेश्वरो हरिः"। तथा "दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं सह सुभद्रया। विष्णुलोकं नरो याति समुद्धृत्य शतं कुलम्"। तथा "वापिकांचनरोमायान् यावत् स पुरुषोत्तमे। काशीवासयुगाख्यो दिनेनैकेन लभ्यते"। मत्स्यपुराणे "कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ। कृत्वा सूर्य्यग्रहे स्नानं विमुक्तिं महोदधौ"। ब्रह्मपुराणे "पथि श्मशाने स्वगृहमण्डपे वा रथ्याप्रदेशेऽपि च यत्र तत्र। इच्छन्ननिच्छन्नपि यत्र तत्र संत्यज्य देहं लभते च मोक्षम्। देहं त्यजन्ति पुरुषाः ये तत्र पुरुषोत्तमे। कल्पवृक्षं समासाद्य मुक्तास्ते नात्र संशयः। वटसागरयोर्मध्ये ये त्यजन्ति कलेवरम्। ते दुर्लभं परं मोक्षमाप्नुवन्ति न संशयः"। तत्रैव "तथा चैवोत्कले देशे कीर्त्तिवासा महेश्वरः। सर्वपापहरं तस्य क्षेत्रं परमदुर्लभम्। लिङ्गकोटिसमायुक्तं वाराणस्या समं शुभम्। एकाम्रकेति विख्यातं तीर्थं ष्टकसमन्वितम्। तीर्थं बिन्दुसरो नाम तस्मिन् क्षेत्रे द्विजोत्तमाः!। देवानृषीन् मनुष्यांश्च पितॄन् सन्तर्पयेत्ततः। तिलोदकेन विधिना नामगोत्रविधानवित्। स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत्। पिण्डं ये संप्रयच्छन्ति पितृभ्यः सरसस्तटे। पितॄणामक्षयां तृप्तिं ते कुर्व्वन्ति न संशयः। ततः सम्पोष्य हं गच्छेदागत्य तः संयतेन्द्रियः। प्रविश्य पूजयेत् पूर्वं कृत्वा तत्र प्रदक्षिणम्।

श्रीवत्सवत्सकम्। वटमूले वटेशञ्च लिङ्गान्यष्टौ महेशितुः। यानि दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा विमुच्यते"। तन्नैवेद्यान्नस्य चण्डालादिस्पर्शे स्थानभेदे भोज्यता। केचिदपि निबन्धृभिः तन्नैवेद्यान्नस्य चण्डालादिना स्पर्शे भोज्यताया अनुक्तेः तन्मूलीभूतवचनानाम मूलकत्वं निबन्धृभिरादृतत्वात् अमूलकत्वे तत्क्षेत्र-मध्ये एव भक्ष्यता तथाहि "प्रविशन्तस्तु तत्क्षेत्रं सर्वे स्युर्विष्णुमूर्त्तयः। तत्रान्नपाचिका लक्ष्मीर्भोक्ता यत्र जनार्दनः। चण्डालेनापि संस्पृष्टं ग्राह्यं तत्रा-न्नमग्रजैः" ब्रह्मवैवर्त्तपुराणवचनस्य अमूलत्वे तत्-क्षेत्रप्रवेशमात्रे च सर्वेषाम् विष्णुमूर्त्तित्वनिर्देशेन तत्क्षेत्र-स्थे चण्डालादिस्पर्शे न दुष्टत्वं नान्यत्र। "विष्णोर्नैवेद्य-गतं तद्धि निर्माल्यं पतितादयः। स्पृशन्ति येन दुष्टं हि यथा विष्णुस्तथैव तत्" इति उत्कलखण्डीयवाक्यस्य समू-लत्वे विष्णोर्नैवेद्यगतमिति विशेषणात् तत्रैव तस्य स्पर्शदो-षराहित्यं नेतरत्र। यत्तु "चिरस्थमपि संशुष्कं नीतं वाऽदूरदेशतः। यथा तथोपयुक्तं तु सर्वपापापनोदनम्" तत्रत्यवाक्यान्तरम् तत्र "नीतं वाऽदूरदेशत" इत्यकार प्रश्लेषः बोध्यः वा शब्दार्थे अदूरत एव निकटस्थितमेव नीतं केनापि दुष्टतामिति व्याख्येयम् पूर्व्वोक्तवचनादेक-वाक्यत्वात्। वैष्णवास्तु तथा मन्यन्ते। ते हि सर्वत्र तदन्न-स्योपयोगं कुर्वन्ति। वङ्गदेशीयानां स्मार्त्तानां तु अन्य-स्थानगतस्य पावनत्वेऽपि न भक्ष्याचरणम्। "या प्रामो हरेर्मूर्त्तिर्जगन्नाथस्य भारत!। कलेवरस्तदन्ते त्यक्त्वा यायात् हरेः पदम्" ब्रह्मवै° पु°। "कलेवर सहस्राणि विष्णुस्त्यजति मेदिनीम्। तदर्थं जाह्नवीतोयं दूर्वं यात्यहेतवा" इति च पठन्ति। "विमला तत्र देवी तु जगन्नाथस्तु भैरवः" इति तन्त्रोक्ते तत्क्षेत्रस्थे पीठरक्षके ३भैरवभेदे पु°। भामिनीविलासरचनाकर्त्तादिग्रन्थकारके ४विद्वद्भेदे। "जगन्नाथस्यायं सुरधुनि! समुद्धारसमयः" तत्कृतगङ्गालहरी

**जगन्निवास** पु° ६त°। १परमेश्वरे तदभेदात् २विष्णौ च "जगन्निवासो वसुदेवसद्मनि" माघः। ईश्वरस्य सकले सर्वभूताधारत्वात् तथात्वम्।

**जगन्मङ्गल** न° जगतां मङ्गलं यस्मात्। कालीकवचभेदे "श्रीजगन्मङ्गलं नाम कवचं पूर्वसूचितम्" भैरवीत°।

**जगन्मोहिनी** स्त्री जगन्ति मोहयति मुह–णिच्–णिनि ६त°। १महामायायां २तदभिमानिन्यां दुर्गायां च।

**जगर** पु° जागर्त्ति युद्धे ऽनेन जागृ–अच् पृषो°। कवचे हेम°।

**जगल** पु° जन–ड गल–अच् कर्म्मधा°। १सुराकल्के (मेथोया) अमरः २मदनवृक्षे ३पिष्टमद्ये ४धूर्त्ते त्रि° मेदि° कवचे न° हेम°। गोमये न° रत्नमाला। तत्र सुराकल्कगुणाः भावप्र° उक्ता यथा "याहुग्णोऽजगलः पक्वा हन्त्युदरक्फ शोफहृत्"।

**जग्ध** त्रि° अद्–कर्म्मणि क्त। १भुक्ते अमरः भावे क्त। २भोजने न°। ["गर्हिताऽन्नाद्ययोर्जग्धिः" स्मृतिः।

**जग्धि** स्त्री अद्–क्तिन्। १भोजने, २सहभोजने च अमरः।

**जग्मि** पु° गम–किन् द्वित्वम् १वायौ तस्य सततगतित्वात् तथात्वम्। २गन्तरि त्रि° स्त्रियां वा ङीप्।

**जगुरि** त्रि° गॄ–निगरणे किन् द्वित्वं वेदे उत्वम्। उद्गूर्णे। "दूरे ह्यध्वा जगुरिः पराचैः" ऋ°१०।१०८।१। २जङ्गमे च "इमामग्निपदिशन्त्य जगुरिः जङ्गू-यतेः" १।२५! निरुक्ते उक्तेस्तथात्वम्

**जघन** न° वक्रं हन्ति हन–यङ् अच् पृषो°। स्त्रीणां १श्रोणिपुरोभागे, २श्रोण्यौ च। "पीनांशुकमिव पीन-स्तनजघनायाः कुलीनायाः" उद्भटः। "जघनेन चमेन वा" भट्टिः। "गङ्गायमुनयोर्मध्ये पृथि-व्या जघनं स्मृतम्। प्रयागं जघनस्थानम्" भा° व° ८५ अ°। [कुकुन्दरयोः हला°।

**जघनकूपक** पु° द्वि°व° जघनस्य कूप इव कायतः कै–क।

**जघनचपला** स्त्री "प्राकप्रतिपादितमर्द्धे प्रथमे प्रथमेतरे तु चपलायाः। अन्यायत्तेन सोक्ता द्वितीयकेऽभिर्जघनच-पला" वृ° र° उक्ते मात्रावृत्तभेदे।

**जघनेफला** स्त्री° जघने इव मध्यभागे फलमस्याः अलुक्स°। काकोदुम्बरिकायाम् अमरः।

**जघन्य** त्रि° जघनमिव शाखा° यत् जघने भवः दिगा° यत् वा। १चरमे २गर्हिते "अग्न्यर्थंशात्रः समचेत्र वैश्या-योऽहेत्रवपक्षः स जनोजघन्यः" ३क्षत्रपयुक्ते नरे ४अन्त्ये ५शूद्रे च शब्दर°। "जघन्यं सेवमानान्तु संयतां वासयेद्गृहे। उत्तमां सेवमानस्तु जघन्योवधमर्हति" मनुः वर्ग्यादि° अकर्म्मधारये तत्पुरुषे अर्थात् उत्तरपद-स्याद्युदात्तता। ६राजातुचरभेदे तल्लक्षणादि ह°म°६८अ° उक्तं यथा "पश्चापरे वामनको जघन्यः" इत्यादिना। विभज्य "मालव्यसेवी तु जघन्यनाथा सगडे न्दुलक्षणवर्णः सुगन्धिः। युक्तैरसारः पिशुनः कविश्च क्षतवाविः

स्थूलकराङ्गुलीकः । क्रूरो घनी स्थूलमतिः प्रतीतका-मकविः स्यात् परिहासभीरुः, उरोऽङ्घ्रिहस्तेष्वति-रक्तपादपरस्वभावश्च जघन्यनामा" । "जघन्यगुण-वृत्तस्था अधो गच्छन्ति तामसाः" गीता ।

**जघन्यज** पु० जघन्ये चरमे जायते जन–ड ।१शूद्रे, २कनिष्ठे त्रि० मेदि० । "ततोविष्णुरजघन्यो जघन्यजः" हरिव० ९अ० । "जघन्यजस्तत्कस्य नुतहीनेति यः श्रुतः" भा० आ० २अ० जघन्यप्रभवादयोऽप्यत्र । "जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः" मनुः ।

**जघन्यभ** न० कर्म० । "आर्द्राश्लेषा तथा स्वातिर्ज्येष्ठा च भरणी तथा । शततारा जघन्यानि ताराश्च कथितानि वै" ज्यो० उक्तेषु षट्सु नक्षत्रेषु ।

**जघ्नि** पु० हन–किन् द्वित्वञ्च । हननसाधनास्त्रादौ ।

**जघ्नु** त्रि० हन–कु द्वित्वञ्च । घातके उणा० ।

**जघ्रि** त्रि० घ्रा–किन् द्वित्वञ्च । घ्रातकर्त्तरि "भ्राजन्त्यभि विक्त जघ्रिः" ऋ० १।१६२।१५।

**जङ्गम** त्रि० गम– यङ्–अच् । सततगतियुते । "शरीरिणां स्थावरजङ्गमानाम्" कुमा० "गुल्मैः स्थावरजङ्गमैः" मनुः

**जङ्गमकुटी** स्त्री जङ्गमा कुटीव । छत्रे त्रिका० ।

**जङ्गमगुल्म** पु० कर्म० । रथके पदातिसमूहे "एवं विधान् प्रदेशान् गुल्मैः स्थावरजङ्गमैः । तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत्" मनुः ।

**जङ्गमविष** न० सुश्रुतोक्ते विषभेदे सर्पादि तच्चोक्तं यथा "अथाऽतो जङ्गमविषविज्ञानीयमध्यायं व्याख्यास्यामः । जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोडश । समासेन मया यानि विस्तरस्तेषु वक्ष्यते । तत्र दृष्टिनिःश्वास-दंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्द्धितगुदा-स्थिपित्तशूकशवानीति । तत्र दृष्टिनिःश्वासविषास्तु दिव्याः सर्पाः । भौमास्तु दंष्ट्राविषाः । मार्जारश्वा-नरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाक (सौम्यकीटभेदः) गृहगोधिका चतुष्पादकीटास्तथान्ये दंष्ट्रान-खविषाः । चिपिटपिच्चिटककषायवासिकसर्षपवासिक तोटकवर्चःकीटकौण्डिन्यकाःशकृन्मूत्रविषाः । मूषिकाः शुक्रविषाः । लूताश्च लालामूत्रपुरीषमुखसन्दंशनखशुक्रा-र्त्तवविषाः । वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गाः समुद्रवृश्चिकाश्चालविषाः (अनःपुच्छाग्रवर्त्ति कण्टकः) (हुल) इति । चित्रशिरःशरावकुर्द्दिशतदारुकारिमेदक-सारिकामुखाःमुखसन्दंशविशर्द्धितमूत्रपुरीषविषाः । मक्षि-काकणभजलायुका मुखसन्दंशविषाः । विषहतास्थिसर्प-कण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि । शकुलीमत्स्यरक्त-राजीवरकीमत्स्याश्च पित्तविषाः । सूक्ष्मतुण्डोच्चिटिङ्ग-वरटीशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः । कीटसर्पदेहा गतासवः शवविषाः । शेषास्त्वनुक्ता मुखस-न्दंशविषेष्वेव गणयितव्याः । राज्ञोऽरिदेशे विषदक्ता-न्मार्गाम्बुयवसवनानि विशेत् । संदूषयन्त्यभिरत-गुणान् विज्ञाय चिह्नैरभिशोधयेत् । दुष्टं जलं पिच्छि-लमुग्रगन्धि फेनान्वितं राजिभिरावृतञ्च । मण्डूक-मत्स्यं म्रियते विहङ्गा मत्ताश्च सानूपचरा भ्रमन्ति । मज्जन्ति ये चात्र नराश्वनागास्ते च्छर्दिमोहज्वरदाहशो-फान् । गच्छन्ति तेषामपहृत्य दोषान् दुष्टं जलं शोध-यितुं यतेत" ।

**जङ्गल** न० गम–यङ्–अच् पृषो० । १वने, २[illegible] ३मांसे स्त्री मेदि० ४निर्जलदेशे शब्दर० ।

**जङ्गाल** पु० गम–यङ् लुक् बा० ड जङ्गं कुटिलगतिम् आलाति वारयति आ+ला–क । जलगतिवारणार्थे सेतौ (जाङ्गाल) जटाधरः ।

**जङ्गिड** पु० राक्षसादिभयनिवारके मणिभेदे । "मणिं विष्कन्धदूषणं जङ्गिडं बिभृमो वयम्" "अयं नो विश्वभेषजं जङ्गिडः पात्वंहसः" "देवैर्दत्तेन मणिना जङ्गिडेन मयोभुवा" अथ० २।४।१।३।४।

**जङ्गुल** न० गम–यङ् लुक् बा० उल । विषे त्रिका० ।

**जङ्घा** स्त्री जंघन्यते कुटिलं गच्छति गत्यर्थस्य हन्तेः कौटिल्ये यङ् लुकि अच् पृषो० । गुल्फजान्वोरन्तराले अवयवे अमरः । "पादजङ्घयोः सन्धाने गुल्फः" "जङ्घयोः सन्धाने जानु नाम" सुश्रु० । "चत्वार्यरत्निकास्थीनि जङ्घयोस्तावदेव च" याज्ञ० ।

**जङ्घाकर** त्रि० जङ्घां तत्साध्यगतिं करोति कृ–"दिवाविभेत्यादिना" पाट० । जङ्घाकारिके धावके जङ्घाकर+स्वार्थे क । तत्रार्थे

**जङ्घाकारिक** त्रि० कृ–घञ् कारः विक्षेपः ६त० ततः अस्त्यर्थे ठन् । जङ्घाचालनेनाजीविनि धावके (धाउडे) अमरः ।

**जङ्घात्राण** न० त्रायतेऽनेन त्रै–करणे ल्युट् ६त० । जङ्घा-सन्नाहे त्रिका० ।

**जङ्घाप्रहृत** त्रि० जङ्घा तद्गतिः प्रहृताऽत्र निष्ठान्तत्वात् परनि० जङ्घागतिशून्ये पन्नगतिके । ततः अक्षद्यूता० निर्वृत्तेऽर्थे ठञ् । जाङ्घाप्रहृतिक तद्विहिते त्रि० ।

जह्नुप्रसृत त्रि॰ जह्नुः प्रसृतोऽस्य। प्रसृतजह्नुव्यापारे। ततः स्वार्थे उञ्। जाह्नुप्रसृतिक तद्वंश्ये त्रि॰। [ऋषयः प्रभुः" भा॰ व॰ ४अ॰।

जह्नुबन्धु पु॰ ऋषिभेदे। "जह्नुबन्धुश्च रैभ्यश्च कोपवेग-

जह्नुरथ पु॰ जह्नुः रथ इव यस्य। ऋषिभेदे। तस्य गोत्रापत्यम् अञ्। जाह्नुरथि तद्गोत्रापत्ये बहुत्वे तु यस्का॰ गोत्रप्रत्ययस्य लुक्। जह्नुरथाः तद्गोत्रापत्येषु

जह्नारि पु॰ विश्वामित्रभेदे। "मार्गमर्षिर्हिरण्याक्षो जह्नारि बौभ्रशायनिः" भा॰ अनु॰ ४अ॰। विश्वामित्रपुत्रोक्तौ।

जङ्घाल त्रि॰ जङ्घा वेगवती अस्त्यस्य लच्। धावके जङ्घाले विणि। "हरिणैणकुरङ्गर्ष्य पृषतन्यङ्कुशम्बराः। राजीवश्च, तथा मुण्डी जङ्घालाः परिकीर्त्तिताः" भावप्र॰ मृगेषु वनेषु पु॰ स्त्री। "जङ्घालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः। किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः" भावप्र॰ तन्मांसगुणोक्तिः।

जङ्घाशूल न॰ जङ्घायाः शूलमिव। जङ्घायां व्यथाकारके शूलरोगभेदे। "जङ्घाशूलहरस्त्वयं सप्तरात्रेण नाशयेत्" गरुडपु॰।

जङ्घिल त्रि॰ अतिशयवेगवती जङ्घाऽस्त्यस्य पिच्छा॰ इलच्। वेगवज्जङ्घाविशिष्टे धावके। [जजाज जेजतुः

जज युद्धे भ्वा॰पर॰सक॰सेट्। जजति अजाजीत्–अजजीत्

जञ्ज युद्धे भ्वा॰ प॰ सक॰ सेट् इदित्। जञ्जति अजञ्जीत् जजञ्ज "पृथुजयो जञ्जयन्निव जञ्जती" ऋ॰ १।१६८।७। कर्मणि जञ्ज्यते

जञ्झ शब्दकरणे भ्वा॰ पर॰ अक॰ सेट् निरु॰। जञ्झति अजञ्झीत्" "मरुतो जञ्झतीरिव" ऋ॰ ५।५२।६। "जञ्झतीः शब्दकारिण्यः "जञ्झतीरापो भवन्ति शब्दकारिण्यः" निरु॰ ६।१६।

जञ्जि त्रि॰ जा–जन–श किन् द्वित्वञ्च। जातरि २जाते च।

जञ्ज त्रि॰ जजि–अच्। १योद्धरि भावे घञ्। २योधने। उञ्छादि॰ घञन्तत्वेन अन्तोदात्तता।

जञ्जन त्रि॰ जन–यङ् लुक्–अच्। पृषो॰ पुनः पुनर्जायमाने ततोऽभूततद्भावे च्विः भूयोऽप्युपयोग पृषो॰ गत्वदी जञ्जणा भूतद्भावे "जिह्वाभिरहनन्नमदर्चिषा जञ्जणाभवन्" ऋ॰ ८।४३।८। २ज्वलति निरु॰।

जञ्जपूक त्रि॰ जप+यङ्–ऊक। अतिशय जपशीले।

जञ्जभ्यमान त्रि॰ जभ–यङ्–शानच्। गात्रविनामेन विदारितमुखे पूर्वमीमांसा।

जट संहतौ भ्वा॰ पर॰ अक॰ सेट्। जटति अजाटीत्–अजटीत्। जजाट जटतुः जटा।

जटा स्त्री जट–अच् जन–ड्वा॰ टन् अन्यलोपश्च। १केश-विकारे अन्योन्यसंलग्नकेशे २व्रतिनः ३शिखायां ४शठायाम् अमरः। ५मूले ६शाखायां मेदि॰। ७कपिकच्छ्वाम् राजनि॰। ८जटामांस्यां ९रुद्रजटायां १०शतावर्य्यां रत्नमाला॰ ११वेदपाठभेदे ऋग्वेदभाष्ये १४११।१२पु॰ इच्छन्

जटाचीर पु॰ जटासहितं चीरं वसनमस्य। शिवे त्रिका॰।

जटाजूट पु॰ जटानां जूटोबन्धः। जटासमूहे। (झुँटि) "जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्" दुर्गाध्यानम् "शम्भोर्जटाजूटतटादिवापः" माघः।

जटाज्वाल पु॰ जटेव ज्वालास्य। प्रदीपे हारा॰।

जटाटङ्क पु॰ जटा टङ्कइवास्य। शिवे महादेवे त्रिका॰।

जटाटीर पु॰ जटामटति अट–ईरन्। महादेवे त्रिका॰

जटाधर पु॰ ६त॰। शिवे १महादेवे शब्दर॰। २बुद्धभेदे त्रिका॰। ३दाक्षिणात्ये देशभेदे स च देशः "कौशकी-पजटाधर कावेर्य्योरिव्यमूकच" वृ॰ स॰१४अ॰ दक्षिणस्या उक्तः ४कोषकारभेदे च ५जटाधारके त्रि॰।

जटामांसी स्त्री जटां मन्यते मन-स दीर्घश्च। स्वनामख्याते गन्धद्रव्यभेदे। "जटामांसी भूतजटा जटिला च तपस्विनी। मांसी तिक्ता कषाया च मेध्या कान्तिबलप्रदा। स्वाद्वी हिमा त्रिदोषास्रदाहवीसर्पकुष्ठनुत्" भावप्र॰।

जटायु (स्) पु॰ जटां याति या–कु जटा+अर्श॰ युच् वा जट–संहतौ अच् जटं संहतमायुरस्य वा। १स्वनामख्याते खगभेदे, २गुग्गुलौ च मेदि॰ "द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च। तस्मात् जातोऽहमरुणात् संपातिश्च ममाग्रजः। जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम!। सोऽहं राम! सहायस्ते भविष्यामि यदीच्छसि। सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे "जटायुषं तु प्रतिपूज्य राघवो मुदा परिष्वज्य च सन्नतोऽभवत्। पितुर्हि शुश्राव सखित्वमात्मवान् जटायुषा संकथितं पुनः पुनः" रामा॰ आर॰ १४अ॰ "सखा दशरथस्यासीज्जटायुररुणात्मजः। गृध्रराजो महावीरः सम्पातिर्यस्य सोदरः। स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम्। सक्रोधोऽभ्यद्रवत् पक्षी रावणं राक्षसेश्वरम्। अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चेति मैथिलीम्। ध्रियमाणे मयि कथं हरिष्यसि निशाचर!। न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूम्

जिह्वास्थि न० अस्थि जिह्वाया राजद० परनि० षष्ठीत०। अस्थिजिह्वायाम् ।

जित् त्रि० जि—क्विप्। जेतरि। "मारजित् लोकजित्जिनः" अमरः "स्वर्जिता यजेत" "विश्वजिता यजेत" श्रुति। "यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा" मनुः

जित त्रि० जि—कर्म्मणि क्त। १पराजिते २पराभूते। भावे क्त। ३जये न०। तदस्यास्ति अच्। ४अर्हदुपासकभेदे पु० हेमच०।

जितकाशि पु० जितः अभ्यासवशात् तथा हढ़ीकृतः काशिः मुष्टिर्येन। षड्मुष्टौ योधभेदे नीलकण्ठः।

जितकाशिन् त्रि० जितेन जयेन काशते प्रकाशते काश—णिनि। १जिताहवे, जयिनि हेमच०। "अनिरुद्धो रणे वाणो जितकाशी महाबलैः" हरिवं० १७७ अ०।

जितक्रोध त्रि० जितः क्रोधो येन। १क्रोधशून्ये २विष्णौ पु०। "मनोहरो जितक्रोधो वीरबाहुर्विदारणः" विष्णु सं० "वेदमर्य्यादां स्थापयन् असुरान् हन्ति न तु कोपवशात्" भाष्योक्तेः तस्यासुरहननाय न कोपः किन्तु वेदमर्य्यादारक्षार्थ एवेति न तस्य कोपशालितेति बोध्यम्। जितमन्युरप्यत्र भवम्। "अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः" विष्णुस०।

जितनेमि पु० जिता नेमिरत्र। आश्वत्थदण्डे हेमच०

जितलोक त्रि० जितः आयत्तीकृतः कर्म्मादिद्वारा लोकः स्वर्गादिर्येन। इष्टापूर्त्तादिकर्म्मभिः आयत्तीकृतस्वर्गादिलोके धार्म्मिके "स एकः पितृणां जितलोकानामानन्दः अथ ये शतं पितृणां जितलोकानामानन्दः शत० ब्रा० १४।७।१।३२। "पितृणां दक्षिणमार्गानुयायिनाम् श्राद्धपिण्डपितृयज्ञादिकर्म्मभिः पितृलोकद्वारा जितो लोको यैस्ते यद्वा जिता लोका येषामिति जितलोकाः" भा०। २अभिभूतलोके त्रि०।

जितवत् त्रि० जि+क्तवतु। १कृतजये स्त्रियां ङीप् सा च उशीनरनृपस्य २कन्यायाम्। "अस्ति वै मानुषे लोके नरदेवात्मजा सखी। नाम्ना जितवती नाम रूपयौवनशालिनी। उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः। दुहिता कथिता लोके मानुषे रूपसम्पदा" भा० आ० ९९ अ०

जितव्रत त्रि० जितमायत्तीकृतं व्रतं येन। १आयत्तीकृतव्रते पृथुवंश्ये २हविर्धानपुत्रभेदे पु० "हविर्धानाद्धविर्धानी विदुराह्वत षट् सुतान्। बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम्" भाग० ४।२४।८।

जितशत्रु पु० जितः शत्रुर्येन। १पराजितरिपुके रिपुजयकर्त्तरि। २अर्हतां पितृभेदे पु० हेमच०।

जिताक्षर त्रि० जितानि आयत्तीकृतानि अक्षराणि शीघ्रं तद्वाचनपाठवादि येन। दृष्टिमात्रेण अक्षरवाचनशक्तियुक्ते।

जितात्मन् त्रि० जितो वशीकृत आत्मा इन्द्रियं मनो वा येन। १जितेन्द्रिये। २आत्मभागार्हे देवभेदे पु० कीर्त्तिमच्छन्दे २०६१पृ० दृश्यम्।

जितामित्र त्रि० जितः अमित्रो येन। १शत्रुपराजयकर्त्तरि २जितकामादिरिपुके च। ३विष्णौ पु० शब्दरत्ना० "अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः" विष्णु स० "जिता अमित्रा आभ्यन्तरा रागद्वेषादयो बाह्या रावणादयश्च येनासौ जितामित्रः" भा०।

जितारि पु० जिता अरयो आभ्यन्तरा रागादयो बाह्याश्च रिपवो येन। १बुद्धे त्रिका० २हन्तार्हत्पितरि हेमच० ३जितशत्रौ शत्रुजयकारिणि ४कामादिरिपुजयकर्त्तरि च त्रि० ५अविक्षितो नृपस्य पुत्रभेदे पु० "अविक्षितः परिक्षित्तु शवलाश्वश्च वीर्य्यवान्। आदिराजो विराजश्च शाल्मलिश्च महाबलः। उच्चैःश्रवा भङ्गकारो जितारिश्चाष्टमः स्मृतः" भा० आ० ९४ अ०।

जिताष्टमी स्त्री आश्विनकृष्णाष्टम्यां जीमूतवाहनपूजाद्यङ्गभूतायां जीमूताष्टम्यां तत्र कर्त्तव्यञ्च प्रमत्कारचि० भविष्योत्तरे "इषेमास्यसिते पक्षे अष्टमी या तिथिर्भवेत्। पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका। शालिवाहनराजस्य पुत्रो जीमूतवाहनः। तस्यां पूज्यश्च नारीभिः पुत्रसौभाग्यलिप्सया। प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः। पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्रिकाम्"। विष्णुधर्म्मोत्तरे "पूर्वेद्युरपरेद्युर्वा प्रदोषे यत्र चाष्टमी। तत्र पूज्यः सदा स्त्रीभिः राजा जीमूतवाहनः"। तथा च यद्दिने प्रदोषव्यापिनी अष्टमी तत्रैव व्रतम्। उभयदिने चेत् परदिने निःसन्ध्यव्यापित्वात्। उभयदिने प्रदोषाव्याप्तौ उदयगामिन्यां तदुक्तं निर्णयामृतधृतस्मृतौ "कृष्णे व्रतं चाभ्युदिते शशाङ्के यत्राष्टमी चाश्विनकृष्णपक्षे। यत्रोदयं वै कुरुते दिनेशः तदा भवेज्जीवितपुत्रिका सा" इति अस्यामष्टम्यां स्त्रीभिर्न भोक्तव्यम् "आश्विनस्यासिताष्टम्यां याः स्त्रियोऽन्नं हि भुञ्जते। मृतवत्सा भवेयुस्ता वैधव्यञ्च भवेद्ध्रुवम्" वचनात्।

"जिह्मं त्यजेयुर्निर्वाणमयस्लोऽन्येन वारयेत्" याज्ञ०। "सुहृदर्थमाहितमजिह्मधियाम्" माघः४कपटे न०। "तदाशु कर्तुं त्वयि जिह्ममुद्यते" किरा० "जिह्मं कपटम्" मल्लि०। ५पिहिते त्रि० "जिह्मकारमपोर्णुत" ऋ०८।४।५। "जिह्मकारं पिहितद्वारम्" भा०। ६अप्रकाशमाने च। "उद्घाघुष्टं चक्रलजिह्मकारम्" ऋ० १।११६।११। "जिह्मम् अप्रकाशमानम्" भा०। ७अप्रसन्ने च। "विधिसमयनियोगाद्दीप्तिसंहारजिह्मम्" किरा० "जिह्मम् अप्रसन्नम्" मल्लि०।

**जिह्मग** पुंस्त्री जिह्मं कुटिलं मन्दं वा गच्छति गम–ड। १सर्पे स्त्रियां जातित्वात् ङीष्। २मन्दगे त्रि० मेदि० स्त्रियां टाप्। "व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः" "स हहा जिह्मगात् सर्वांस्तीव्रकोपसमन्वितः" भा० आ० ६ अ०। ३खञ्जरी० स्त्रियां जातित्वात् ङीष्।

**जिह्ममेहन** पुंस्त्री जिह्मं मन्दं मेहति मिह–ल्यु। भेके

**जिह्मशल्य** पु० जिह्मं कुटिलं शल्यमस्य। खदिरवृक्षे जटा०

**जिह्माशिन्** त्रि० जिह्मं मन्दमश्नाति अश–णिनि। मन्दभोजिनि ततः अपत्ये शुभ्रा० ढक्। जैह्माशिनेय तदपत्ये पु० स्त्री।

**जिह्वल** त्रि० ह्वल–अच् वा० अस्य जिह्वं जिह्वाव्यापारं लाति ला–क वा। भोजनलोलुपे। "श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः। पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः" ब्रा० त०।

**जिह्वा** स्त्री लेढ्यनया लिह–स्वादे व "शेवयह्वजिह्वेत्यादिना" नि०। १रसास्वादकरणे इन्द्रियभेदे २तदधिष्ठाने गोलके (जिभ) ख्याते पदार्थे च। तदिन्द्रियस्य जलीयत्वं नि० सु० समर्थितं यथा "रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् यस्तु रसव्यञ्जकोदकवत् रसनसन्निकर्षे अभिचारवारणाय द्रव्यत्वे सतीति विशेषणीयम्। तस्याधिष्ठातृदेवता च प्रचेताः "दिग्वातार्कप्रचेतोऽश्व्यादि" शा० ति० उक्तेः। अग्नेर्जिह्वाश्च सप्त तन्नामानि "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः" मुण्डकोप०। "तस्याः कफादिदोषात् लक्षणादिकं भाव०प्र० दर्शितं यथा "शाकपत्रप्रभा रूक्षा स्फुटिता रसनाऽनिलात्। रक्ता श्यामा भवेत् पित्तात् श्लिष्टार्द्रा धवला कफात्। परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके। द्वे दोषद्वयाधिक्ये दोषद्वितयलक्षणा" यस्य क्लीबत्वं भरत आह स्म। जिह्वकः। इन्द्रियग्रहणे तथात्वमिति तु युक्तम्। ३वाक्ये निघण्टुः

**जिह्वाजप** पु० जिह्वया जपः। "जिह्वाजपः स विज्ञेयो केवलं जिह्वया बुधैः" तन्त्रसारोक्ते जपभेदे। "उच्चैर्जपादिविशिष्टः स्यादुपांशुर्दशभिर्गुणैः। जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः" तन्त्रसा० तत्फलमुक्तम्।

**जिह्वानिर्लेखन** न० जिह्वा निर्लिख्यतेऽनेन निर्+लिख–करणे ल्युट्। (जिभ छोलान) द्रव्यभेदे तल्लक्षणं यथा "जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा। पाटितं स्याद् तत्काष्ठं स्याद्दुपत्रमयं तथा। तत्काष्ठं दन्तधावनयोग्यकाष्ठम्। दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत् सुखम्। तज्जिह्वामलवैरस्यदौर्गन्ध्यजडताहरम्" भाव० प्र०।

**जिह्वाप** पुंस्त्री जिह्वया पिबति पा–क। १कुक्कुरे २व्याघ्रे ३विडाले ४भल्लूके च मल्लरभावली ५चित्रकव्याघ्रे त्रिकः। स्त्रियां जातित्वात् सर्वत्र ङीष्।

**जिह्वामल** ६त०। जिह्वास्थितमले कुलुके त्रिका०।

**जिह्वामूल** न० ६त०। जिह्वाया मूले। तत्र भवः छ। जिह्वामूलीय अयोगवाहान्तर्गतवर्णभेदे। "जिह्वामूलीयस्य जिह्वामूलम्" सि०कौ०। स च कखयोः परयोः विसर्गस्थाने जातः। स्वर्णे च "जिह्वामूले तु कुः प्रोक्तः" शिक्षायां कवर्गस्य जिह्वामूलस्थानत्वोक्तेस्तथात्वम्।

**जिह्वारद** पुंस्त्री० जिह्वा रद इव यस्य। पक्षिणि हारा० तस्य जिह्वाया एव दन्तकार्यकारित्वात्तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**जिह्वारोग** पु० मुखरोगान्तर्गतजिह्वागतरोगभेदे। तल्लक्षणादि भावप्र० उक्तं यथा।
"वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः। उपजिह्विका च गदा जिह्वायां पञ्च कीर्त्तिताः। तत्र वातजस्य लक्षणमाह। जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। स्फुटिता सनाभिर्दीर्णा। प्रसुप्ता रसानभिज्ञतया सुप्तेव। शाकच्छदनप्रकाशा शाको गहभूमिजातो द्रुमः तद्दलवत् कण्टकाचिता। पित्तजमाह। पित्तात् सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च। कफजमाह। कफेन गुर्वी बहला चिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः। बहला स्थूला। मांसोच्छ्रयैः मांसजकण्टकैः। अलासमाह। जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां स तु

स्तम्भयति महतो मूले च जिह्वा स्तम्भेति वाकम् । प्रगाढः प्रकर्षेण गाढो दारुणः । कफरक्तमूर्त्तिः कफरक्ताभ्यां मूर्त्तिर्यस्य स कफरक्तज इत्यर्थः । जिह्वास्तम्भेन वातुरत्न बोद्धव्यः । भक्षं पाकेनेति पित्तस्य पत-स्त्रिदोषजोऽयम् । असाध्यत्वञ्चास्य । उपजिह्विकामाह । जिह्वाग्ररूपः श्वयथुश्च जिह्वामुन्नाम्य जातः कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्तः प्रकथ्यतेऽसावुपजिह्विकेति । जिह्वाग्ररूपः जिह्वाग्राकृतिः" भावप्र० । "धकारहरणाच्चैव जिह्वारोगः प्रजायते" शाताप० ।

**जिह्वाशल्य** पु० जिह्वायाः शल्यमिवास्यस्य अच् । खदिरवृक्षे राजनि० ।

**जिह्वावत्** पु० यजुर्वेदीयवंशान्तर्गतर्षिभेदे । "अथ वंश" इत्युपक्रमे । "जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगः" शत०ब्रा०१४।८।४।२३। २जिह्वायुक्ते त्रि० । स्त्रियां ङीप् ।

**जिह्वास्वाद** पु० जिह्वया स्वादः । लेहने (चाटा) हेमच० ।

**जीति** स्त्री जि—क्तिन् वेदे दीर्घः । जये "अजीतयेऽहतये पवस्व स्वस्तये" ऋ० ८।८६।४ । "अजीतये अजयाय" भा० । लोके तु ज्या—क्तिन् सम्प्रसारणे "अचः" इति पा० सम्प्रसारणस्य दीर्घः । २हानौ स्त्री ।

**जीन** त्रि० ज्या—क्त सम्प्रसा० दीर्घः । जीर्णे अमरः "जीनकार्मुकवस्त्रादीन् पृथक् दद्यात् विशुद्धये" मनुः ।

**जीमूत** पु० जयति नभः, जीयतेऽनिलेन वा । जि—क्त । "जेमुट् चोदात्तः दीर्घश्च" । जीवनस्योदकस्य मूतं बन्धो यस्येति वा जीवनं जलं मूतं बद्धमनेन । मूङ् बन्धने कर्मणि क्तः पृषोदरादित्वात् साधु । ज्यानं जीर्णं ज्या—सं० क्विप्, जिया वयोहान्या मूतो बद्ध इति वा जीवनं मुञ्चति वा पृषो० । १पर्वते २मेघे ३मुस्तायां ४देवताड़वृक्षे च अमरः ५इन्द्रे ६भृतिकरे ७घोषकलतायां च हेम०। मेघे "यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते" दुर्न्दुभिपूजामन्त्रः । "जीमूतैरपिहितसानुरिन्द्रकीलः" किरा० । "जीमूतस्येव भवति प्रतीकम्" ऋ० ६।७५।१ "प्रतिचरणविहितरेफाः सुरवीर्यवद्याणजीमूतलीलाकरोद्दामशङ्खादयः" वृ० र० उक्ते दण्डकभेदे तथा च एकादशभीरगणैः रचितो जीमूताख्यो दण्डकः । स्वार्थे क । जीमूतक तेष्वर्थेषु ।

**जीमूतकूट** पु० जीमूतो मेघः कूटेऽस्य । पर्वते शब्दा० ।

**जीमूतकेतु** पु० विद्याधरपतौ राजभेदे जीमूतवाहनपितरि । नागानन्दे दृश्यम् ।

**जीमूतमूल** पु० जीमूतस्य मुस्तकस्य मूलमिव मूलमस्य । शट्यां शब्दरत्ना० ।

**जीमूतवाहन** पु० जीमूतो मेघो वाहनमस्य । मेघवाहने १इन्द्रे शालिवाहनपुत्रे २नृपभेदे जिताष्टमीशब्दे दृश्यम् । जीमूतकेतोः विद्याधरस्य ३पुत्रे च तत्कथा नागानन्दे दृश्या ।

**जीमूतवाहिन्** पु० जीमूतं मेघमुद्दिश्य वहति अर्हं गच्छति वह—णिनि । धूमे हेमच० । मेघानां धूमादेवाविर्भावात् तस्य तथात्वम् ।

**जीर** पु० ज्या—रक् सं०प्र०दीर्घः । १जीरके, २खड्गे, ३अणौ च । मेदि०"जोरी रक् च" उणा०सौ०जु—रप्रत्ययः इत्यान्यादेशः ।४जवशीले ५क्षिप्रे च उज्ज्वल०जीरदानुः । "उत नः सुद्योत्मा जीराश्वः" ऋ०१।१४१।१२। "जीराश्वः क्षिप्राश्वः" भा० संज्ञायां कन् । (जीर) ख्याते पदार्थे मेदिनि० । मदनपालनिघण्टौ तस्य जीवता तद्भेदा गुणाश्चोक्ता यथा "जीरकं दीर्घकं शुक्लमजाजीकणजीरकम् । जीरकं जरणं कृष्णं वर्षकाली सुगन्धिकम् । कालिका बाष्पिका कुञ्चिकारवी चोपकुञ्चिका । पृथ्वीका सुषवी पृथ्वी स्थूलजाप्युपकालिका । जीरकत्रितयं रूक्षं कट्वुष्णं दीपनं लघु । संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् । चक्षुष्यं पवनाध्मानगुल्मच्छर्दिबलासजित्" मदनपालः ।

**जीरण** पु० जीरक+पृषो० । जीरके राजनि० ।

**जीरदानु** पु०जीरं क्षिप्रं जवशीलं वा ददाति दा—नु ।१जवशीलदाने, २क्षिप्रदातरि च "विद्यामेषं वृजनं जीरदानुम्" ऋ० १।१६६।१५ "जीरदानुं जवशीलदानम्" भा० "जीरदानूरेतो दधत्योषधीषु गर्भम्" ५।८३।१ "जीरदानुः क्षिप्रदानः" भा० ।

**जीरि** पु० जीर्यति जॄ—बा०रिक् । १मनुष्ये "रचन्ति जीरयो वनानि" ऋ०४।५।१६ "जीर्यन्ति इति जीरयो मनुष्याः" भा० जॄ—अन्तर्भूतण्यर्थे रिक् । २जारके ३प्रभिभावके च त्रि० "प्रजीरयः सिस्रते सध्र्यक् पृथक्" ऋ० २।१७।२ "जीरयो जरयितारः" भा०।

**जीर्ण** त्रि० जॄ—क्त ।१जरायुक्ते २पुरातने च अमरः "वासांसि जीर्णानि यथा विहाय" गीता । "जीर्णमन्नं प्रशंसीयात् भार्यां च गतयौवनाम्" चाणक्यः। २शैलजे न० राजनि० । ३उदराग्निना कृतपाके त्रि०।"अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम्" वैद्यकम् ।

द्रव्यभेदे जीर्णताबाधनद्रव्यभेदा जीर्णमञ्जर्य्यामुक्ता यथा "नारीकेलफलेषु तण्डुलमथ क्षीरं रसाले हितं जम्बीरोत्थरसः घृते समुचितः सर्पिस्तु मोचाफले । गोधूमेषु च कर्कटी हिततमा मांसात्यये काञ्जिकं नारङ्गे गुड़मक्षयञ्च कथितं पिण्डारके कोद्रवः । पिष्टान्ने सलिलं पियालफलजे पथ्या सिता माषजे स्वल्पं क्षीरभवे तु तक्रमुचितं कौष्माण्डं कोलम्बके । मत्स्ये चूतफलं चजीर्णशमनं मध्वम्बु पानात्यये तैलं पौष्करजे कटूत्पशमनं शेषांस्तु बुद्ध्या जयेत् । पनसे कदलं कदले च घृतं घृतपाकविधावपि जम्बुरसः । तदुपद्रवशान्तिकरं लवणं लवणेषु च तण्डुलवारि वरम् । नारिकेलफलतालबीजयोः पाचनं य इह तण्डुलं विदुः । ते वदन्ति तनयोऽस्य तण्डुलान् क्षीरवारि परिपाचयत्यपि । दाड़िमाम्रलकतालतिन्दुकीबीजपूरलवलीफलान्यपि । बाकुलेन च फलेन पाचयेत् पाकमेति बकुलं समूलतः । मधूकभल्लातकपाटलानां पक्वाश्च खर्जूरकपित्थकानाम् । पाकाय येषां पिचुमर्दबीजं हितेऽपि तक्रं प्रवदन्ति पथ्यम् । गोधूममाषहरिमन्थसतीनमुद्गपाको भवेदिति च माद्यचपलकेण । खर्जूरिका विसकशेरुसिताश्च शस्तं शृङ्गाटके मधुफलेष्वपि भद्रमुस्तम् । पिशितपनसयोः स्यादाम्रबीजेन पाकः क्षयरमहिषयोषित्क्षीरयोः सैन्धवेन । चिपिटपरिणतिः स्यात् पिप्पलीदीपिकाभ्यामपहरति तुषाम्भो वैदलानामजीर्णम् । कर्पूरपूगीफलनागवल्लीकाश्मीरजातीफलजातिकोषम् । कस्तूरिकासिद्धकनारिकेलजलं पचत्याशु समुद्रफेनः । श्यामाकनीवारकुलत्थयष्टिनिष्पावकङ्गू दधिमस्तकस्तु । चिञ्चाकुलत्थौ तिलतैलयोगात् जटाञ्जनादस्य निहन्त्यथाम्लम् । कशेरुशृङ्गाटमृणालमस्ती खर्जूरखण्डा अपि नागरेण । पलाशभस्माम्बु तथार्द्रजो वा रसो निहन्त्याद्रकमिक्षुजातम् । चन्द्रेण केनाप्यथ क्षोपकेन कौष्माण्डमा वा हतमेति पाकम् । तिलादितैलान्यपि काञ्जिकेन सर्ज्जस्य मज्जा पनसाम्रकयोः । निमज्ज चित्रं बहुमांसमत्स्यभोजी सुखी स्यात् परिपीय शुक्तम् । हनङ्गुतं केवलवह्निपक्वमांसेन मत्स्यं परिपाकमेति । कपोतपारावतनीलकण्ठकपिञ्जलानां पिशितानि जग्ध्वा । कासस्य मूलं परिपेयमुष्णं सुखी भवेत्तु बहुशो न भूतम् । क्षौद्रैः रसाला सुरभीयवसुमण्डेन कौष्ण्येन विपाकमेति । गव्यस्य चूर्णेन हयारिगारीपयोदधिक्षीरमुपैति पाकम् । वटो वेषवाराजवङ्गेन फेणी ग्रसं पर्पटः शिग्रुबीजेन याति । कषायमूलं तो लड्डुका पूपकादेर्विपाको भवेच्चञ्चुबीमण्डयोश्च । क्षाविद्रोधागण्डकाविल्वतैलात् यावत् चारात् कोलकुमार्दयोऽपि । शीघ्रं न्वेव पायसो मुद्गयूषात् बालुकादथारनालं सुखाय । तप्तं तप्तं हेम वा तारमग्नौ तोये क्षिप्तं सप्तकृत्वस्तदम्भः । पीत्वावशम् दीर्घकालोपपन्नमप्यजीर्णं शीघ्रमेवं जहाति । पाकङ्किका केसुककारवेल्लीवार्त्ताकुवंशाङ्कुरमूलकानाम् । सपोट कालाबुपटोलकानां सिद्धार्थको मेघवरस्य पक्वा । शुण्ठीसतीनस्य च नागरङ्गजम्बीरयोः कोद्रवको निहन्ता । जरामिरागैरिकचन्दनाभ्यासन्थेति शीघ्रं बहुशो न भूतम् । पटोलवंशाङ्कुरकारवेल्लीफलान्यलाबूनि पचन्ति जग्ध्वा । क्षारोदकं मद्यतरोर्निपीय भोक्तुं पुनर्वाञ्छति तावदेव । विपच्यते सूरणको गुडेन तथालुकं तण्डुलतोयपानात् । जम्बीरनीरेण निशारकोमं सुखेन तूर्णं परिपाकमेति । पञ्चकसिद्धार्थकवास्तुकानां नागविशारकथितेन पाकः । शाकानि सर्वाण्युपयान्ति पाकं क्षारेण सद्यस्तिलनालजेन । आम्रातकोदुम्बरपिप्पलीनां फलानि च प्लक्षवटादिकानाम् । मुः, शमनं पर्युषितोदकेन पियालमज्जा च कटुष्णकेन । स्नेहाजीर्णं रोगिणां सप्तचूर्णं ज्वालां सद्यो हन्ति वैरेचकानाम् । मांसं भूयाज्जिह्वमूलेन पाकसिद्धा सुखत्वमेतां चूर्णयोगात् । उष्णेन शीतं शिशिरेण चोष्णमम्लेन च क्षारगणो गुणाय । स्नेहेन तीक्ष्णं वमनातियोगे सिता हिता स्यादिति काशिराजः । ताम्बूलमध्यस्थितचूर्णकेन संदह्यते यस्य मुखं नरस्य । तैलेन वा केवलकाञ्जिकेन । सुखाय गण्डूषमसौ विदध्यात् । शीतोदकं मद्यजरोगहारि नारीपयश्चाञ्जनवह्निनाशि । तक्रोदकं धूमजे प्रशस्तं धात्रीप्रलेपोऽतिविरेचनेषु । छागस्य मांसं श्रमजेऽनुकूलं प्रवातसुप्तिः सुरतावसाने । क्षीरोद्भवा सैन्धवसाधितन्तु छागाण्डमुक्तं सुरतातिरेके । श्रवणपूरणजे तिलतैलतः श्रवणपूरणमेव सुखं विदुः । कवलजेषु गदेष्वथ कारयेत् कवलमार्द्रकजद्रवजं पुनः" ।

जीर्णक त्रि॰ जीर्णप्रकारः स्थूला॰ कन् । जीर्णप्रकारे ।

जीर्णज्वर पु॰ कर्मधा॰ । द्वादशाहाधिककालोत्पन्ने ज्वरे तल्लक्षणादिकं भावप्रका॰ उक्तं यथा ।

"यो द्वादशभ्यो दिवसेभ्यः ऊर्द्ध्वं दोषत्रयेभ्यो द्विगुणेभ्य ऊर्द्ध्वम्। नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः"। जीर्णज्वरस्यैव विशेषं वातबलासकमाह। नित्यं मन्दज्वरो रूक्षः शूनः कष्टेन सिध्यति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी। वातबलासकी नर ईदृग्भवेत्। शूनः शोथी। श्लेष्मभूयिष्ठो बहुश्लेष्मवान्। जीर्णज्वरी नरः कुर्य्यान्नोपवासं कदाचन। लङ्घनात् स भवेत् क्षीणो ज्वरस्तु स्याद्बली यतः। पुराणेऽपि ज्वरे दोषा बद्धपथ्यैः पुनस्तथा। लङ्घयेत् तत्र तत्त्वात् पूर्वसेवाचरेत् क्रियाम्" तथा पूर्ववत्।

**जीर्णदारु** पु० नित्यक०। वृद्धदारकवृक्षे (बिधारा) राजनि०

**जीर्णपत्र** पु० जीर्णं पत्रमस्य। पट्टिकालोध्रे शब्दार्थ०। २जीर्णपत्रयुक्ते त्रि०। बहु० कप्। क्वापि अत इत्त्वम्। जीर्णपत्रिका वंशपत्रीतृणे स्त्री राजनि०।

**जीर्णपर्ण** पु० जीर्णानि पर्णान्यस्य। १कदम्बे। २पुरातनपत्रयुक्ते त्रि०। कर्म०। ३पुरातनपत्रे न०। ४पुरातनताम्बूले च। "पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णपर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" वैद्यकम्।

**जीर्णफञ्जी** स्त्री नित्यक०। वृद्धदारके वृक्षे (बिधारा) राजनि०।

**जीर्णबुध्न** पु० जीर्णं बुध्नं मूलमस्य। पट्टिकालोध्रे राजनि० तदिव कायति कै—क। जीर्णबुध्नक। (केवोटा घास) ख्याते तृणकभेदे। [राजनि०।

**जीर्णवज्र** न० जीर्णं पुरातनं वज्रं हीरकमिव। वैक्रान्तमणौ

**जीर्णवस्त्र** न० कर्म०। पुरातनवस्त्रे पटच्चरे अमरः।

**जीर्णा** स्त्री जॄ—क्त। स्थूलजीरके राजनि०।

**जीर्णास्थिमृत्तिका** स्त्री। कृत्रिममृत्तिकाभेदे।

"अथ वक्ष्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये!। शिवाजलस्थले कुर्य्याद् दीर्घं गर्त्तं मनोहरम्। निःक्षिपेत् तत्र नानास्थिखण्डं द्विपदप्रदाम्। सर्जिक्षारं यवक्षारं स्वक्षारं लवणानि च। नद्यकोष्णजलं देयं नानामूत्राणि तत्र च। एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम्। कङ्कालस्योर्द्ध्वं तदूर्द्ध्वन्तु कुर्य्याद्वह्नीष्टकां शुभाम्। त्रिवर्षाज्जायते सर्वमेकीभूतं दृषत्समम्। ततो निष्काश्य तच्चूर्णं कृत्वा पात्राणि निर्मिमेत्। प्रथमं भोजनं तत्र कारयेदन्नदूषणम्। कटाविषस्य संयोगात् तस्य भङ्गः प्रजायते। दुर्व्वीविषादिसंयोगात् पात्रे स्फोटा भवन्ति हि। तत्र क्षिप्तं चतुर्विधं पात्रं कृष्णं प्रजायते। एवं ज्ञात्वा तत्र दद्यात् कदाचिद्विषादिकर्मिति रावणः" शब्दार्थचिन्तामणिः।

**जीर्णि** स्त्री जॄ—क्तिन्। जीर्णतायाम्। अमरः।

**जीर्णोद्धार** पु० जीर्णस्य पूर्वप्रतिष्ठापितलिङ्गादेरुद्धारः। १पूर्वप्रतिष्ठापितलिङ्गादेः भग्नतादौ स्थानादुद्धारे तद्विधानम् अग्निपु० ६७ अ० उक्तं यथा।

"भगवान् उवाच। जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद् गुरुः। अचलां विन्यसेद् गेहे अतिजीर्णां परित्यजेत्। व्यङ्गां भग्नां च शैलाढ्यां न्यसेदन्यां च पूर्ववत्। संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः। सहस्रं नरसिंहेन हुत्वा तामुद्धरेद् गुरुः। दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले। धातुजां रत्नजां वापि अगाधे वा जलेऽम्बुधौ। यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत्। वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत्। यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेत् पुनः। कूपवापीतडागादेर्जीर्णोद्धारे महाफलम्" नि०सि०विशेषो यथा

"अथ जीर्णोद्धारः स च लिङ्गादौ दग्धे भग्ने चलिते वा कार्यः। स्वयं चानादिसिद्धप्रतिष्ठितलिङ्गादौ भङ्गादिदुष्टेऽपि न कार्यः। तत्र तु महाभिषेकं कुर्य्यादिति त्रिविक्रमः। कर्त्ताऽमुकदेवस्य जीर्णोद्धारं करिष्ये इत्युक्त्वा पुण्याहं वाचयित्वा आचार्य्यमृत्विजश्च वृत्वा लिङ्गे ओं व्यापकेश्वरहृदयाय नमः ओं व्यापकेश्वरशिरसे स्वाहेत्येवं षडङ्गं कृत्वाऽघोरमन्त्रं शतं जप्त्वाऽग्निं प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णदेवं प्रणवेन संपूज्य ब्रह्मादिमण्डलदेवतानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत। "जीर्णभग्नमिदं चैव सर्वदोषावहं नृणाम्। अस्योद्धारे कृते शान्तिः शास्त्रेऽस्मिन् कथिता त्वया। जीर्णोद्धारविधानञ्च अपराङ्गहितावहम्। तदधिष्ठितां देव! प्रहराभि तवाज्ञयेति"। ततः क्षीराज्यमधुदूर्वाभिः समिद्भिर्वाष्टोत्तरसहस्रं शतं वा देवमन्त्रेण हुत्वाऽङ्गानां दशांशेन लिङ्गचालनार्थं सहस्रं शतं वा पायसेन हुत्वा लिङ्गं प्रार्थयेत। "लिङ्गरूपं समागत्य येनेदं समधिष्ठितम्। शास्त्राज्ञं वंशितं स्थानं गच्छन्त्वेव शिवाज्ञया। अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता। शिवेन सह संतिष्ठेहि" मन्त्रितजलेनाभिषिच्य विसर्जयेत्। ततोऽस्त्रमन्त्रितेन खनित्रेण खात्वा लिङ्गमानीय नद्यादौ वामदेवेन लिङ्गं प्रणवेन मूर्त्तिं क्षिपेत्। दारुजन्तु मधुनाऽभ्यज्याघोरेण दहेत्। हेमरत्नादिमयन्तु दग्धं चलितं

चा पुनस्तत्रैव स्थापयेत। ततः शान्त्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत। "भगवान् भूतभव्येश! लोकनाथ! जगत्पते!। जीर्णलिङ्गसमुद्धारः कृतस्त्वाज्ञया मया। अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले। प्रायश्चित्ताय देवेश! अघोरास्त्रेण तर्पितम्। ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि। तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वरेति"। ततो यजमानः प्रार्थयेत। "गोविप्रशिल्पिभूतानामाचार्य्यस्य च यज्वनः। शान्तिर्भवतु देवेश! अच्छिद्रं जायतामिदम्"। मूर्त्तौ तु विशेषः। "त्वत्प्रसादेन निर्विघ्नं देव! निर्मापयत्वसौ। वासं कुरु सुरश्रेष्ठ! तावत्त्वं चालये स्वके। वसन् क्षेमं सहित्वेह मूर्त्तिं यै तव पूर्ववत्। यावत् कारयेत् भक्तः कुरु तस्य च वाञ्छितमिति"। ततो नवां मूर्त्तिं लिङ्गं वा तन्त्रोक्तविधिना स्थापयेत्।

भग्नमन्दिरादेः २संस्कारे च स च विष्णुधर्मोत्तरे तृतीयकाण्डे उक्तो यथा "यस्य राज्ञस्तु विषये देववेश्म विशीर्यते। तस्य सीदति तद्राज्यं देववेश्म यथा तथा। कृत्वा जीर्णस्य संस्कारं तथा देवनिवेशनि। द्विगुणं फलमाप्नोति नात्र कार्य्या विचारणा"। विष्णुरहस्ये "पतितस्य च यः कर्त्ता पतमानस्य रक्षिता। विष्णोरायतनस्येह स नरो विष्णुलोकभाक्" अग्निपुराणे "पतितं पतमानन्तु तदार्द्धस्फुटितं नरः। समुद्धृत्य हरेर्धाम द्विगुणं फलमाप्नुयात्" देवीपुराणे "भूताच्छतगुणं पुण्यं प्राप्नुयाज्जीर्णकारकः। तस्मात् सर्वप्रयत्नेन जीर्णस्योद्धारमाचरेत्"। हयशीर्षपञ्चरात्रे "वापीकूपतडागानां सुरभाण्डां तथानघ!। प्रतिमानां समानाञ्च संस्कर्त्ता यो नरो भुवि। पुण्यं शतगुणं तस्य भवेन्नैवात्र संशयः।" प्रतिष्ठाया विधिः कार्य्यस्तथा मन्दिरनिर्मिते। प्रायः श्रीहयशीर्षोक्तैरनुसारेण वैष्णवैः। देवालयप्रतिष्ठा च ख्याता तल्लिखनेन किम्। श्रीमूर्त्तिस्थापनेनैव संपूर्णा सा विशेषतः। देवस्य हि देवतायाः प्रतिष्ठाविधिना सदा। संस्कार्यं सहजान्तु तदुदायोऽस्य कर्म वा" हरिभक्ति०२० विलासः।

जीर्वि पु० जॄ—क्विन्। कुठारे उज्ज्वलदत्तः।

जीव प्राणने असुधारणे भ्वा०अक०प०सेट्। जीवति अजीवीत् जिजीव। ऋदित् अजिजीवत् त जीवितं जीवनम् जीवः जीविका। "संशयं पुनरारुह्य यदि जीवति पश्यति" हितो० "वातः परमपि जीवेज्जीवितनाशो भवेदस्याः" सा०द० "ज्योग् जीवति" ऋ० उ०। "शतं जीवन्तु शरदः" ऋ०१०।१८।१। प्राणधारणञ्च प्राणधारणोद्योगोपलक्षि धारणमपि "नक्षत्रैर्यश्च जीवति" मनुः। करणे सक०। "जीवेद्वैश्यस्य जीविकाम्" मनुः। जीवेत् कुर्य्यात् [रघुः।

अति+अतिक्रम्य जीवने सक०। "अत्यजीवदमरालकेश्वरौ"

अनु+पश्चाज्जीवने अनुरूपजीवने च सक०। "जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर!" भा० उ० ४५ ११ श्लो० "यां तां श्रियमसूयामः पुरा दृष्टा युधिष्ठिरे। अद्य तामनुजीवामः" भा० द्रो० ४११ श्लो०।

आ+वृत्तिकरणे उपभोगे च सक०। "आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयम्" याज्ञ०। "आजीवन्नुपभुञ्जानः" मिता०। "यथाजीवन्ति पुरुषं सर्वभूतानि सञ्जय!" भा०उ०१२अ०।

उद्+उच्छ्वासने अक०। "उदजीवत् सुमित्राभूर्भीताऽक्षिप्यत मायतम्" भट्टिः।

प्रति+उद्+प्रतिरूपोज्जीवने।

उप+आश्रित्य वर्त्तने सक०। "पूर्ववयसि पुत्राः पितरमुपजीवन्ति उत्तरवयसि पुत्रान् पिता" शत० ब्रा० १२।२।३।१। "भ्रातरमुपजीवेयुर्यथैव पितरं तथा" मनुः। उपजीवी उपजीव्यः।

जीव पु० जीव—कर्त्तरि क। १प्राणिनि २जीवन्तीवृक्षे ३वृहस्पतौ च मेदि०। ४कर्णे ५श्लेषके त्रिका०। भावे घञ्। ६असुधारणे अमरः करणे घञ्। ७वृत्तौ आजीविकायां मेदि०। मनुष्यादिकीटपर्यन्ते ८प्राणिमात्रे ९कार्य्यकारणसङ्घाते। अनेकान्तवादिनां जीवास्तिकायसंज्ञया परिभाषिते १०पदार्थभेदे। त्रिविधश्चासौ अनादिसिद्धमुक्तबद्धभेदात्। अनादिसिद्धोऽर्हन् जीवास्तिकायाख्यः। व्यपेतमोहादिबन्धो मुक्तः। मोहाद्यावृतस्तु बद्ध इति। ११उपाधिप्रविष्टे वाङ्मनःप्राणकरणग्रामानुप्रविष्टे ब्रह्मणि। घटावच्छिन्नाकाशवत्शरीरत्रितयावच्छिन्ने १२चैतन्ये। दर्पणस्थमुखप्रतिबिम्बवत् बुद्धिस्थे १३चैतन्यप्रतिबिम्बे। १४साभासाहङ्कारे चित्प्रतिबिम्बे। मायादिकलापस्य १५धारयितरि "प्राणान् केवलरूपेण धारयन् जीव उच्यते" इत्यभियुक्तोक्तेः १६लिङ्गदेहे। "एवं पञ्चविधं लिङ्गं त्रिवृत् षोडश विस्तृतम्। एष चेतनया युक्तो जीव इत्यभिधीयते" इति श्रीभागवतम्। पञ्चविधं पञ्चतन्मात्रात्मकम्। त्रिवृत् त्रिगुणम्। षोडश विकारात्मना विस्तृतमित्यन्नाद्यभिमानित्वेन इन्द्रलोक

परलोकगामी व्यवहारिको जीव उच्यते ।"बालाग्रशत भागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" श्रुतिः । "बालाग्रशतशोभागः कल्पितस्तु सहस्रधा । तस्यापि शतशोभागो जीवः सूक्ष्म उदाहृतः" भट्टः । "जीवो नाम देहादिव्यतिरिक्तस्तत्त्वाची त्वम्पदार्थो योऽयं विज्ञानमयः योऽयं संसरति योऽयं संसारी सन् देहादिर्जीवः तस्य इष्टव्रत दृष्ट-त्वानुपपत्तेः । "अस्ति देवि ! परं ब्रह्मस्वरूपी निष्कलः शिवः । सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलोऽव्ययः । स्वयं ज्योतिरनाद्यन्तो निर्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः । अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः । देहाद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः । सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः । तत्तज्जातियुतं देहमायुर्भोगञ्च कर्मजम् । प्रतिजन्म प्रपद्यन्ते तेषामप्यपरं पुनः । सूक्ष्मं लिङ्ग-शरीरं तदामोक्षादक्षयं प्रिये !"कुलार्ण० । १७विष्णौ, "जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः" विष्णु० सह० । तत्र इहस्पती

"जीवः सप्तनवद्विपञ्चमगतः" "जीवार्किभानुच्छत्रयागां क्षेत्राणि सुरजादयः" ज्योति० ।८पुष्यनक्षत्रे च । तस्य जीवाधिष्ठातृकत्वात् तथात्वम् अश्वशब्दे ४६८ पृ० दृश्यम् । घटसंवृत आकाशे नीयमाने यथा घटे। घटो नीयेत नाकाशं तद्वत् जीवो नभोपमः"। आर्हतमतसिद्ध-जीवभेदाश्च अर्हच्छब्दे ३८४ पृ० दृश्याः । स च जीवो विभुरिति साङ्ख्यनैयायिकवैशेषिकपातञ्जलवेदान्तिनः । अणुपरिमाण इति रामानुजादयः । मध्यमपरिमाणः इति माध्यमिकाः । आत्मन्शब्दे६७२पृ०दृश्यम् "हन्ता-हमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नाम-रूपे व्याकरवाणि" छा० उ० । "भावनाख्यस्तु संस्कारो जीववृत्ती त्विमौ गुणौ" भाषा० जीव—क १६जीवनयुक्ते त्रि०।"कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमि-शयान् बहून् । जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते । धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ! । सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते । अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च । वृक्षांस्तथौ-षधीश्चापि छिन्दन्ति पुरुषा द्विज ! । जीवा हि बहवो ब्रह्मन् ! वृक्षेषु च फलेषु च । उदके बहवश्चापि तत्र किं प्रतिभाति ते । सर्वैः व्याप्तानि जीवन्ति बहुधा द्विज-सत्तम ! । प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते । चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान् बहून् । पद्भ्यां घ्नन्ति नरा विप्र ! तत्र किं प्रतिभाति ते । उप-विष्टाः शयानाश्च घ्नन्ति जीवाननेकशः । ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते । जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा । अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते । अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा । के न हिंसन्ति । जीवान् वै लोकेऽस्मिन् द्विजसत्तम ! ।"भा० व०२०७अ०। अत्र जीवस्य हिंसा देहवियोजनम् ।

जीवक पु० जीवयति जीव+णिच्—ण्वुल् । १अष्टवर्गान्तर्गते १ओषधिभेदे "जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ । जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्" तदभावे विदारी-मूलं प्रतिनिधितया देयमिति" । "जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । मधुरौ पित्तदाहार्शःकार्श्य-वातक्षयापहौ" भावप्र० २पीतशालवृक्षे ३क्षपणके च पु०। जीव—ण्वुल् । ४प्राणधारके त्रि० मेदि०। ५सेवके ६वृद्ध्याजीविनि त्रि० ७अहितुण्डिके पु० मेदि० ।

जीवकाद्यतैल न० चक्रदत्तोक्ते तैलभेदे । तच्च तैलं द्विविधं मधुकक्षेदात् यदाह तत्रैव "जीवकर्षभकौ द्राक्षा-सिता यष्टी बलोत्पलैः । तैलं नस्यं पयः पक्वं वातपित्त-शिरोगदे" । अन्यत् । "जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला। नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा । तैल-प्रस्थं पचेदेभिः शनैः पयसि षड्गुणैः । जाङ्गलस्य च मांसस्य तुलार्द्धस्य रसेन च । सिद्धमेतद्भवेत्तस्य तैलम-र्द्धावभेदकम् । बाधिर्यं कर्णशूलञ्च तिमिरं गलशुण्डि-काम् । वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति । दन्तचालं शिरःशूलमर्दितञ्चापकर्षति" इत्युक्तम् । चक्रद० ।

जीवघन पु० जीव एव घनो मूर्त्तिरस्य । हिरण्यगर्भे तस्य सर्वजीवसमष्टिरूपत्वात् तथात्वं यथाह प्रश्नोप०भा०। ओम् शब्दे २५६० पृ० तद्वाक्यम् दृश्यम् । "स एतस्मा-ज्जीवघनात् परात् परम्"।

जीवजीव पुंस्त्री जीवञ्जीव+पृषो० । चकोरखगे शब्दर० स्त्रियां जातित्वात् ङीष् । स्वार्थे क । तत्रार्थे । "हृत्वा रक्तानि वासांसि जायते जीवजीवकः" मनुः ।

जीवञ्जीव पुंस्त्री जीवं जीवयति विषनाशकत्वात् जीव—णा० खच् । चकोरपक्षिणि अमरः स्त्रियां जातित्वात् ङीष् । "जीवञ्जीविकसङ्घाश्चाप्यनुगच्छन्ति पण्डितान्" भा० अ०

**जीवत्तोका** स्त्री जीवत् तोकं यस्याः। जीवत्पुत्रिकायां स्त्रियां। (जेओँ त् पोयाती) हेमच०।

**जीवत्पति** स्त्री जीवन् पतिर्यस्याः सपूर्वत्वात् वा न ङीपौ। सधवायां स्त्रियाम्। हेमच०।

**जीवत्पितृक** पु० जीवन् पिता यस्य कप्। विद्यमानपितृके जने। "अमावास्यां गयाश्राद्धं दक्षिणायनभोजनम्। न जीवत्पितृकः कुर्य्यात् कृते तु पितृहा भवेत्" ति० त०। तत्र जीवत्पितृकस्य श्राद्धविशेषेऽधिकारः निर्णयसिन्धौ व्यवस्थापितो यथा।

"जीवत्पितृकस्य साग्नेरेव वृद्धिश्राद्धेऽधिकारः न तु निरग्नेः "न जीवत्पितृकः कुर्य्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः। पितामहेऽप्येवमेव कुर्य्याज्जीवति साग्निकः। साग्निकोऽपि न कुर्वीत जीवति सपितामहे" इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः प्रयोगपारिजातेऽप्यनाहिताग्निर्न कुर्य्यादितीदं व्याख्यातम् तत्र "अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि। येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेदिति" हारीतोक्तेः सोमन्तवन्तु वृद्धिश्राद्धभिन्नश्राद्धपरमित्युक्तं मदनरत्ने। श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः। निर्णयामृते तु हारीतीयेऽनग्निकोऽनाहिताग्निरभिप्रेतः पूर्ववचने तु साग्निः श्रौताग्निः स्मार्त्ताग्निर्वोच्यते। तेनोभयाग्निहीनस्य नेत्युक्तं तच्च पूर्वोक्तदिशा गतिसम्भवेनाग्निपदस्य स्मार्त्ताग्निपरत्वे मानाभावात् वक्ष्यमाणनित्यानित्यसंयोगविरोधात् "पितरो जनकस्येष्टा यावद्व्रतमनाहितम्। समाहितव्रतः पश्चात् स्वान् यजेत पितामहानिति, पृथ्वीचन्द्रोदये यमवचोविरोधाच्च। अपरार्केऽपि समावर्त्तने ब्रह्मचारी स्वयमेव नान्दीश्राद्धं कुर्य्यादित्याहुः अतः पूर्वमेव साधु चोपदेशोऽप्येवमाह। ननु मतं जीवत्पितृकस्य पुत्रनामकर्णादौ न वृद्धिश्राद्धम् हारीतीये जन्मादावित्यादिशब्देन तत्प्राप्तावपि "उद्वाहे पुत्रजनने पुत्रेष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति" मैथिलपरिशिष्टे उद्वाह एव तस्योपसंहारात् एवं यत्र तु संस्कारादिपदं तदप्युद्वाहादिपरमेवेति तत्र उद्वाहपदस्य स्वविवाहपरत्वस्यापि सम्भवात् पुत्रविवाहपरत्वे मानाभावात् "नामकर्मणि बालानां चूडाकर्मादिके तथा" इत्यादिभिर्नित्यश्राद्धस्य चौलाद्यङ्गत्वावगतौ नित्यानित्यसंयोगविरोधाच्च अतो जन्मादाविति सर्वसंस्कारसंग्रहः।

तथा च कात्यायनः "अपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु। पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्"। सुतानां चौलादिसंस्कारेषु पिता अपितृभ्यः पिण्डान् श्राद्धम्। "पिण्डदोऽंशहरश्चैषामिति" दर्शनात् आद्वहनाद्विवाहपर्य्यन्तं दद्यात् विवाहस्य प्रथमः "नान्दीश्राद्धं पिता कुर्य्यादाद्ये पाणिग्रहे बुधः। अत ऊर्द्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकमिति" स्मृतेः तस्य पितुरभावे तत्क्रमात् "असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैरिति" यः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रात्रादिर्दद्यादिति चन्द्रिकादयः। हेमाद्रिस्तु तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्य्यात् स तत्क्रमात् संस्कार्य्यपितृक्रमाद्दद्यात्तत्र अपितृभ्य इति व्याचख्यौ। समावर्त्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात्पितैव नान्दीश्राद्धं कुर्य्यात् तदभावे ज्येष्ठभ्रात्रादिः तदभावे स्वयमेव कुर्य्यात्। उपनयनेन कर्म्माधिकारस्य जातत्वात् एवमाद्यविवाहेऽपीति पृथ्वीचन्द्रोदयचन्द्रिकादयः। मदनरत्नेऽप्येवम्। यदा तु पितरि संन्यस्ते प्रोषिते पतिते वा धर्म्मार्थं तत्पुत्रमन्यः संस्कुर्य्यात्तदा संस्कार्य्यपितुः पित्रादिभ्यो दद्यात् "पितरो जनकस्येष्टा यावद्व्रतमनाहितम्। समाहितव्रतः पश्चात्स्वान् यजेत पितामहानिति" पृथ्वीचन्द्रोदये यमोक्तेः जीवत्पितृकस्य विशेषमाह कात्यायनः "हुत्वा तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः" इति। तीर्थे इव प्रायश्चित्ताङ्गश्राद्धेऽपि तस्याधिकारः।

"पितरि जीवति यः श्राद्धं कुर्य्यात् स येषां पिता कुर्य्यात्तेषां कुर्य्यात्। पितरि पितामहे च जीवति येषां पितामहः कुर्य्यात् तेषां कुर्य्यात् त्रिषु जीवत्सु नैव कुर्य्यात्" विष्णु०सू०। "जीवत्पितृकोऽपि" कात्या० श्रौ० सू० पिण्डपितृयज्ञेऽधिक्रियते च। "जीवान्तर्हितेऽपि" कर्क०सू० "जीवपितृकस्य जीवेन पित्रादिना अन्तर्हितेऽपि व्यवहितेऽपि पितामहादेः पिण्डदानं भवति सोमादाविव "येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तथा सुतः" इति कर्कस्मृतेः। "जीवपितृकस्य होमान्तमनारम्भो वा" सू०। "जीवपितृकस्य यजमानस्य होमान्तमेव पिण्डपितृयज्ञसंज्ञं कर्म भवति अथवाऽनारम्भ एव पिण्डपितृयज्ञस्य वाशब्दः पूर्वपक्षनिरासार्थः। अतोऽनारम्भपक्ष एव युक्तः यतः पिण्डदानं प्रधानम्। तदभावे होमस्याङ्गभूतस्यानुष्ठानं न घटते। एवं जीवान्तर्हितेऽपीति पक्षं दूष-

पित्रा जीवत्पितृकस्य होमान्तमित्यत्रोपपत्तिमाह" कर्कः। "न ब्रवेते आतुकर्णौ न जीवन्तमति ददातीति" सू०। "जीवपितृकस्य होमान्तकर्म्म कुर्वतः यतोऽत्र कर्म्म आचार्य्यौ न ब्रवेते जीवता पित्रा व्यवहिते पितामहादौ पिण्डदानं न भवतीत्याह कुतो न भवतीत्यत्र हेतुः "न जीवन्तमति ददातीति" शाखान्तरे श्रवणात् अतःप्रधाने पिण्डदाने जीवत्पितृकस्य निषिद्धे अनारम्भ एव घटते न होमान्तता। आपस्तम्बः "यदि जीवत्पिता न दद्यादा होमात् कृत्वा विरमेदिति" आग्रवे च "यदि दद्याद्येभ्य एव पिता दद्यात्तेभ्यो दद्यादिति" काठके "पितापुत्रो चेदाहिताग्नी स्यातां तेभ्यः पिता तेभ्यः पुत्रो दद्यात् पिता प्रेतः स्यात् पितामहो जीवेत् पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यादिति" कर्क० जीवपुत्रोऽप्यत्र। समासान्तविधेरनित्यत्वात् न कप्। जीवपितृ इत्यपि तत्रार्थे।

**जीवथ** पु० जीव–अथ। १कूर्म्मे २प्राणे ३मयूरे ४मेघे च ५चिरायुष्के ६धार्म्मिके च ७जीवनवति त्रि० उणादिको०।

**जीवद** पु० जीवं जीवनं ददाति दाति वा दा–दो–वा क। १वैद्ये २रिपौ ३शत्रुपर्णीवृक्षे च मेदि० ४जीवनदातरि त्रि०। ५जीवन्तीवृक्षे स्त्री राजनि०।

**जीवदात्री** त्रि० जीवं ददाति दा–तृच्। १जीवनदायिनि स्त्रियां ङीप्। सा च २ऋद्धिनामौषधौ ३जीवन्तीवृक्षे च राजनि०।

**जीवदानु** त्रि० जीवं ददाति दा–बा० नु। १जीवनदातरि "विरिष्यन्तु दाराय पृथिवीं जीवदानुम्" यजु० ११।२८।

**जीवदृष्टा** स्त्री जीवाय जीवनाय दृष्टा। जीवन्तीवृक्षे राजनि०।

**जीवधन** न० जीव एव धनम्। गवादिजन्तुरूपे धने त्रिका०।

**जीवधानी** स्त्री जीवा धीयन्तेऽस्याम् धा+अधि–करणे ल्युट् ङीप्। पृथिव्याम्। "ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त" भाग० २।१३।२। "जीवधानीं सर्वजीवाधारभूतां मह्नीम्" श्रीधरः।

**जीवन** न० जीव–भावे ल्युट्। १वृत्तौ २प्राणधारणे। करणे ल्युट्। ३जले मेदि०। जलं विना प्राणधारणाभावात्तस्य जीवनकरणत्वम् अत एव "अन्नमयं हि सोम्य! मन आपोमयः प्राणः" छान्दोग्ये प्राणानां जलमयत्वश्रुत्या तस्य तथात्वं समर्थितं यथा।

"आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः" "आपो सोम्य! पीयमानानां योऽणिमा स ऊर्द्ध्वः समुदीषति स प्राणो भवति" "षोडशकलः सोम्य! पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो, न पिबतो विच्छेत्स्यते" इति छा० उ०। ४जीवनसाधने त्रि० "सर्वोऽप्यौ जीवनः माता" सुश्रुतो०। ५हैयङ्गवीने शब्दच०। तस्योत्तमायुर्वृद्धिकरत्वेन जीवनहेतुत्वात् तथात्वम्। ६मज्जनि राजनि० ७वाते ८जीवशाकौषधौ च पु० राजनि०। ९क्षुद्रफलकवृक्षे पु० शब्दच०। १०पुत्रे पु० हेमच०। जीवयति जीव–णिच्–कर्त्तरि–ल्यु। ११परमेश्वरे पु० "वीरहा रक्षणः सत्त्वो जीवनः पर्य्यवस्थितः" विष्णु स०। "सर्वाः प्रजाः प्राणरूपेण जीवयन् जीवनः" भा०। "प्रवृत्तिश्च निर्वृत्तिश्च तथा जीवनकारणम्" भाषा०। "जीवनं जीवनं हन्ति प्राणान् हन्ति समीरणः। हिमालयं वारदेवे प्राणदा समदूतिका" उद्भटः। इत्वौ १२जीविकायाम्। "कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः। सेवा रूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु" याज्ञ०। "विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः। धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः" मनुः। १३जीवदातरि "शीतलस्य वपौ वायुः सर्वस्मिं जीवनः शुचिः" भा० व० १६८ अ०।

**जीवनक** न० जीवन+संज्ञायां कन्। अन्ने हेमच०। तस्य प्राणधारणहेतुत्वात् तस्य तथात्वम्।

**जीवनयोनि** स्त्री ६त०। न्यायोक्ते हेतौ प्राणसञ्चारकारणे अतीन्द्रिये यत्नभेदे। "यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्। शरीरे प्राणसञ्चारकारणं परिकीर्त्तितम्" भाषापरि०। "जीवनयोनिर्यत्नो यावज्जीवनमनुवर्त्तते स चातीन्द्रियः। तत्र प्रमाणमाह शरीरे प्राणसञ्चारकारणं परिकीर्त्तितमिति। प्राणसञ्चारो हि अधिकः वाय्वादिः प्रयत्नतः साध्यः। इत्थं प्राणसञ्चारस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधादतीन्द्रिययत्नसिद्धिः। स एव जीवनयोनिप्रयत्नः" मुक्ता०

**जीवना** स्त्री जीवयति जीव–णिच्–ल्यु। मेदौषधौ मेदि०

**जीवनाघात** न० जीवनस्याघातो यस्मात्। विषे शब्दच०।

**जीवनावास** पु० जीवनं जलं आवासोऽस्य। वरुणे शब्दच०। ६त०। २प्राणायतने देहे च।

**जीवनी** स्त्री जीव्यतेऽनेन जीव–करणे ल्युट् ङीप्। १का-कोल्यां २डोड्यां ३मेदायां ४महामेदायां ५जीवन्त्यां

ज्वरनाशनः” महौषधादीनां चतुर्णां प्रत्येकं रसार्द्धम्। अन्यविधोऽपि “मरिचं टङ्कनं शङ्खचूर्णं पारदगन्धकम्। शोधितं ब्रह्मपुत्रस्य भागमेकं विनिःक्षिपेत्। गुञ्जामात्रा प्रदातव्या नागवल्लीदलैः सह। ज्वराङ्कुशो रसोह्येष ज्वरमष्टविधं जयेत्” अन्यविधोऽपि “त्रिभागतालेन हतस्य ताम्रं रसस्य गन्धस्य समीनमायुः। विषं समं तद्द्विगुणस्य ताम्रं क्षिपप्रवारस्य दिवाकरातपे। संमर्द्य निम्बुरसेन चूर्णं गुञ्जाप्रमाणं सितया समेतम्। ज्वराङ्कुशोऽयं विविधप्रभावो ज्वरं निहन्त्यष्टविधं समग्रम्” मीनमायुः मत्स्यपित्तम्। [राजनि०।

**ज्वराङ्गी** स्त्री ज्वरस्याङ्गुबाधनमङ्गमस्याः ङीप्। भद्रदन्तिकायां

**ज्वरातिसार** पु०। ज्वरयुक्तोऽतिसारः। ज्वरयुक्ते अतिसाररोगे तत्स्वरूपादि भैषज्यर०उक्तं यथा।“पित्तज्वरे पित्तभवोऽतिसारस्तथातिसारे यदि वा ज्वरः स्यात्। दोषस्य दुष्टस्य समानभावाज्ज्वरातिसारः कथितो भिषग्भिः”।“ज्वरातिसारयोरुक्तमन्योन्यं भेषजं पृथक्। न तन्मिलितयोः कुर्यादन्योन्यं वर्द्धयेद् यतः। प्रायो ज्वरहरं भेदि, स्तम्भनन्त्वतिसारनुत्। अतोऽन्योन्यविरुद्धत्वाद् वर्द्धनं तत्परस्परम्। ज्वरातिसारिणामादौ कुर्यात् लङ्घनपाचने। प्रायस्तावामसम्बन्धं विना न भवतो यतः। ज्वरातिसारे पेयादिक्रमः स्याल्लङ्घिते हितः। ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः”।

**ज्वरान्तक** पु० ज्वरस्यान्तक इव ज्वरमन्तयति वा अन्त-ण्वुल् वा ६त०कर्म०। आरग्वधे नेपालनिम्बे (सोँदाल) राजनि०। ज्वरान्तकरसः।

**ज्वरान्तकरस** पु० ज्वरस्यान्तकः कर्म०।

“भास्कररोगस्तकः सर्जो देवी विहङ्गतीक्ष्णकम्। शोधितं गगनञ्चैव पुष्करस्य महेश्वरम्। भूनिम्बादिगणैर्भाव्य मधुना गुडिका दृढा। चातुर्थकं तृतीयस्य ज्वरं सन्ततकं तथा। आमज्वरं भूतकृतं सर्वज्वरमपोहति” भैषज्यर० उक्ते औषधभेदे। अत्र सर्जोरसः, देवी गौराङ्गमृत्तिका, विहङ्गं स्वर्णमाक्षिकं, पुष्करं रसाञ्जनं, महेश्वरं सुवर्णम् अन्यत् सुगमम्। ताम्रादीनां समभागचूर्णं भूनिम्बादिक्वाथेन भावयेत्। भूनिम्बाद्यष्टादशद्रव्याणि सर्वद्रव्यतुल्यानि अष्टावशिष्टं क्वाथं कृत्वा दिनत्रयं विभाव्य विशोष्य मधुना विमर्द्य यानुरूपं लिहेत्”

**ज्वरापहा** स्त्री०ज्वरमपहन्ति अप+हन—ड ६त०। (बेलशुँठ) १बिल्वशुण्ठ्याम्, २बिल्वपत्त्र्याञ्च। ३ज्वरनाशके त्रि० शब्दच०।

**ज्वरार्य्यभ्र** पु० ज्वरस्यारिः कर्म०।

“अभ्रं ताम्रं रसं गन्धं विषञ्चेति समंसमम्। द्विगुणं धूर्त्तवीजस्य व्योषं पञ्चगुणं मतम्। जलेन वटिकां कुर्याद् यथा दोषानुसारतः। अभ्रं ज्वरारिनामेदं सर्वज्वरविनाशनम्। वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान्। विषमाख्यान् द्वन्द्वजांश्च धातुस्थान् विषमज्वरान्। नाशयेन्नात्र सन्देहो वृक्षमिन्द्राशनिर्यथा। प्लीहानं यकृतं गुल्ममग्निमान्द्यं सशोथकम्। कासं श्वासं तृषां कम्पं दाहं शीतं वमिं भ्रमिम्” भैषज्यर० उक्ते औषधभेदे।

**ज्वरारिरस** न० ज्वरस्यारिः कर्म०।

“हरदनलिरसानां शुल्वनागाभ्रकाणाम् शुभविटकशिलानां सर्वमेकत्र शोध्यम्। विपिनजपदलोत्थैर्भावितं शोषयेत्तम् दिवसदयसमाप्तौ रक्तिकैकाञ्च कुर्यात्। एकैकां भक्षयेदस्य चार्द्रकस्य रसैर्युताम्। दत्तमात्रं ज्वरं हन्ति ज्वरारिः स निगद्यते। सर्वशूलविनाशी च कफपित्तविनाशनः”। भैषज्यर० उक्ते औषधभेदे। सर्वं (सोँदाली) पत्ररसेन दशदिनं भावयित्वा गुञ्जाप्रमाणमार्द्रकरसेन देयम्”।

**ज्वराशनिरस** पु० ज्वरस्याशनिरिव नाशकत्वात् कर्म०।

“रसं गन्धं सैन्धवञ्च विषं ताम्रं समं भवेत्। सर्वचूर्णसमं लौहं तत्समं चूर्णमभ्रकम्। लौहे च लौहदण्डे च निर्गुण्ड्याः स्वरसेन च। मर्दयेत् यत्नतः पश्चान्मरिचं सूततुल्यकम्। पर्णेन सह दातव्यो रसो रक्तिकसम्मितः। कासं श्वासं महाघोरं विभ्रमाख्यं ज्वरं वमिम्। धातुस्थं प्रबलं दाहं ज्वरदोषं चिरोद्भवम्। यकृद्गुल्मोदरप्लीहक्षयशुद्ध विनाशयेत्” भैषज्यर०उक्ते औषधभेदे। [ज्वरशब्दे उदा०।

**ज्वरित** त्रि०ज्वरः संजातोऽस्य तारका० इतच्। १ज्वरयुक्ते

**ज्वरिन्** त्रि० ज्वरोऽस्यस्य इनि। ज्वरयुक्ते स्त्रियां ङीप्।

**ज्वल** दीप्तौ चलने च भ्वा० पर० अक० सेट्। ज्वलति अज्वालीत्। घटा० ज्वलयति। ज्वला० ज्वलः ज्वालः। “अज्वाल लोकस्थितये स राजा” भट्टिः। “आगर्त्ते लोलो ज्वलति प्रदीपः सखीगणः पश्यति कौतुकेन। शङ्कसमालं कुरु नाथ! धैर्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते” उद्भटः।

उदादिपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तदीप्तौ । उज्ज्वलः ।
ज्वल त्रि० ज्वल–दीप्तौ वा अच् । दीप्तिविशिष्टे । [हेम० ।
ज्वलका स्त्री ज्वलतीति ज्वल–वा० वुन् । अग्निशिखायां
ज्वलति पु० ज्वल–भावे श्तिप् । ज्वलनक्रियायाम् । "ज्वा-लते" इत्याद्युपक्रम्य एकादश ज्वलतिकर्माणः निघ० २।१६। उक्तम् ।
ज्वलन त्रि० ज्वल–ताच्छील्यादौ युच् । १दीप्तिशीले, २वह्नौ ३चित्रकवृक्षे च पु० अमरः ।
ज्वलनाश्मन् पु० नित्यकर्म० । सूर्यकान्तमणौ राजनि० ।
ज्वलित त्रि० ज्वल–क्त । १दग्धे २दीप्ते च ।
ज्वलिनी स्त्री ज्वल–वा० इनि ङीप् । मूर्वालतायां राजनि०
ज्वाल पुंस्त्री ज्वल–ण । १अग्निशिखायाम् अमरः । २दीप्ति-युक्ते त्रि० । ३दग्धान्ने स्त्री शब्दच० । भावे घञ् । ४दीप्तौ पु० ।
ज्वालखरगद पु० ज्वालगर्दभाख्ये रोगे राजनि० । ज्वाल-गर्दभशब्दे दृश्यम् ज्वालागर्दभाख्योऽप्यत्र राजनि० ।
ज्वालाजिह्व पु० ज्वाला शिखैव जिह्वा यस्य दाह्यवस्तुलेह-नसाधनत्वात् । १वह्नौ हेम० तन्नामके चित्रके च ।
ज्वालामालिनी स्त्री ज्वालानां शिखानां मालाऽस्त्यस्य इनि ङीप् । देवीभेदे । तन्मन्त्रादिकं तन्त्रसारे उक्तं यथा "ओं नमो भगवति ! ज्वालामालिनि ! गृध्रगणपरिवृते ! हुं फट् स्वाहा"। तत्राङ्गन्यासः । "ओं नमो हृदयं प्रोक्तं भगवतीति शिरः स्मृतम् । ज्वालामालिनीति च शिखा गृध्रगणपरिवृते ततः । वर्म स्वाहास्त्रमित्युक्तं जाति-युक्तं न्यसेत्ततौ । प्रयोगस्तु ओं नमो हृदयाय नम इत्यादि "अमुष्मो नियतश्चैव जपेन्मन्त्रं जपात्मवान् । जपेद्दशसहस्रन्तु मनोविंशतिवासरान् । प्रत्यहं साधने सिद्धिमाददाति न संशयः । स्मृतिमात्रेण वै मन्त्री रिपून् सर्वान् विनाशयेत्" ।
ज्वालामुखी स्त्री पीठस्थानभेदे । "ज्वालामुख्यां महाजिह्वा देव ! उन्मत्तभैरवः । अम्बिका सिद्धिदानाम्नी स्तनौ जालन्धरे मनेति" तन्त्रम् । २विद्याभेदे "ज्वालामुखीक्रमं वक्ष्ये या पूजया वश्यतः शुभे । नित्याद्या मदनान्तरा मदनोन्मादनक्रियाः । कमला श्रीभारती च वागीश्वरी महेन्द्र्यपि । ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री प्राच्यकोटि च पूजयेत् । विजया चाजिता चैव मोहिनी चापराजिता । स्तम्भनी जम्भनी पूज्या कालिका महाप्रसूतः । ज्वाला-मुखी च संपूज्या विषादिहरणं भवेत्" । गारुड० पु० २०४ अ०
ज्वालावक्त्र पु० ज्वालेव वक्त्रमस्य । शिवे मत्स्यपु० ।
ज्वालिन् पु० ज्वल–णिनि । १शिवे "शिखी कुण्डी जटी ज्वाली मूर्त्तिजो मूर्द्धगो बली" भा० अनु० १७ अ० । २शिखायुक्तमात्रे ३दीप्तियुक्ते च त्रि० स्त्रियां ङीप् ।
ज्वालेश्वर पु० मत्स्यपु० उक्ते तीर्थभेदे ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यनिर्म्मिते वाचस्पत्ये जकारादिशब्दार्थसङ्कलनम् ।

---

## झ

झकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यस्तस्योच्चारणस्थानं तालु आभ्यन्तरप्रयत्नः जिह्वामध्येन तालुनः स्पर्शः। वाह्यप्रयत्नाः संवारनादघोषामहाप्राणाश्च। मातृकान्यासेऽस्य वामकराङ्गुलीमूले न्यस्यता। अस्य ध्येयरूपं कामधेनुतन्त्रे उक्तं यथा “झकारं परमेशानि! कुण्डली मोक्षरूपिणीम्। रक्तविद्युल्लताकारं सदा त्रिगुणसंयुतम्। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं तथा” वर्णोद्धारतन्त्रे तदधिष्ठातृदेवतारूपं यथा “ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने!। तप्तहेमवर्णाभां रक्ताम्बरविभूषिताम्। रक्तचन्दनदिग्धाङ्गीं रक्तमाल्यविभूषिताम्। चतुर्भुजां देवीं रत्नहारोज्ज्वलां पराम्। ध्यात्वा ब्रह्मस्वरूपां तां तन्मन्त्रं दशधा जपेत्”। तस्य वाचकशब्दाः वर्णाभिधानतन्त्रे उक्ता यथा “झो झङ्कारी गुहो भार्गी झर्झरो वायुः वसनः। अजेयो द्राविणी नादः पाशी जिह्वा जलं स्थितिः। विराजेन्द्रो चतुर्हस्ता अर्द्धेशः नादजः कुब्जः(कुञ्जः)। दीर्घबाहुरबोहयं ह्रोकम्पितसुचकम्। दुर्मुखो नष्ट आत्मवान् विकटा कुचमण्ड(ड्)लः। कलहंसप्रिया वामा वामाङ्गुलमूलपर्वकः। दक्षहाशोऽट्टहासश्च पाशात्मा व्यञ्जनस्वरः” मात्राभक्ते तस्य प्रथमविन्यासे कथनस्तं ह०र०टी० “प्रीतिं जो मित्रवामं भवपरणवकरौ झञ्जौ ठठौ खेदद्धखे”।

झ पु० झट–संहतौ ड। १झञ्झावाते २नष्टे ३अवकर्णषे शब्दर० ४भिन्नटीभ्ये ५देवगुरौ ६दैत्यराजे ७ध्वनिभेदे ८उद्भवाते च मेदि०। [परमेशानि!”कामधेनुत०।

झकार पु० झ+स्वार्थे कारप्रत्ययः। झस्वरूपे वर्णे “झकारं

झगझगायमान त्रि० झगझग+अभूततद्भावे भृशा० क्यङ् शानच्। देदीप्यमाने। “मधूरवरगामिनीं सुरदरावर्त्तोत्कटां रणत्कणितघण्टिकां निचितरक्तहस्तोद्यताम्। प्रभानिकररश्मिभिर्झगझगायमानांशुकां भजामि सुकलार्णवां त्रिदशवल्लभिवाग्मिनीम्” देवी० पु०।

झगिति अव्य० झटिति+पृषो०। शीघ्रार्थे शब्दार्थचि०।

झङ्कार पु० अनित्यव्यक्तशब्दस्य कारः कृ–घञ्। १भ्रमरादिशब्दे। “मन्दं दलितपांशवः परिपतन्तु झङ्कारझङ्कारवत्”अमरच०। ततः तार० इतच्। झङ्कारित तच्छब्दयुक्ते त्रि०। २जलकणवर्षणे च शब्दर०।

झङ्कारिणी स्त्री ६त०। गङ्गायां भिण्टीयशब्दे उदा०।

झङ्कृता स्त्री तारादेवतायां “झर्झरी झङ्कृता भिल्ली भरी झर्झरिका तथा” ताराशतनाम।

झङ्कृति स्त्री झम् इत्यव्यक्तशब्दस्य कृतिः कृ–क्तिन्। कांस्यादेर्ध्वनौ शब्दार्थचि०।

झञ्झा स्त्री झनिति कृत्वा झटति झट–ड। १ध्वनिभेदे, तथाध्वनियुक्ते २प्रचण्डानिले च शब्दर०।

झञ्झानिल पु० झञ्झायुक्तोऽनिलः। प्रावृषिजातवाते त्रिका० झञ्झामरुदादयोऽप्यत्र झङ्कारशब्दे उदा०।

झट संहतौ भ्वा० पर० सक० सेट्। झटति अझाटीत्–अझटीत्। जझाट।

झटा स्त्री झट–अच्। १शीघ्रे। २भूम्यामलक्यां शब्दार्थचि०

झटि पु० झट–इन्। क्षुद्रवृक्षभेदे। (झाँटि) शब्दार्थर०।

झटिति अव्य० झट क्विप् झट् इण–क्तिन् ६त० तारादि। १शीघ्रे अमरः। “सङ्गा गेहं झटिति चरणावङ्गुकुब्जं जगाम” महानाटकम्।

“झटित्यपरनाशेऽपि तदा दोषो न विद्यते” “मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्” सा० द०।

झठक पुंस्त्री अन्त्यजवर्णभेदे “प्रपास्वरण्ये झड़कस्य कूपे द्रोण्यां जलं कोटविनिर्गतञ्च” यत्निर्य०।

झणझणा अव्य० झणत् डाच् द्वित्व पूर्वपदटिलोपः। १अव्यक्तशब्दभेदे २तच्छब्दयुक्ते “दधं झणझणायितसीतात्वमनेभिव”भा०भी०१८अ०।३झणत्कारशब्दभेदे च।

झण(न)त्कार पु० झण(न)दित्यव्यक्तशब्दस्य कारः कृ–घञ्। कङ्कणादिध्वनौ। “उद्दे कुट्टमुजवल्लिकङ्कणझण(न)त्कारः क्षणं श्रूयताम्” काव्यप्रका०। “उद्दे जयति दरिद्रं परवधूगणझणत्कारः” उद्भटः।

झम भक्षे भ्वा० पर० सक० सेट्। झमति अझमीत्। जझाम। उदित् झमित्वा-झान्त्वा। झान्तः।

झम्प पु० झम्प+पृषो०।(झाँपदिवा पड़ा) झम्पे उच्चस्थानात् संपाततपतने जटाधरः। भावे च। तदर्थे स्त्री “मुक्तास्फोटदलत्पुटद्विवरैः पाताश्च झम्पाश्च ताः” महावीर०

झम्पाक पुंस्त्री झम्पेन आकायति आ+कै+क। १वानरे शब्दच०। स्त्रियां जातित्वात् ङीष्।

झम्पाशिन् पु० झम्पेन जले स्वेच्छया पतनेनाश्नाति अश–णिनि। मत्स्यरङ्कपक्षिणि जटाधरः स्त्रियां ङीप्।

**झम्पिन्** पु॰ झम्प+अस्त्यर्थे इनि । वानरे शब्दर॰ ।

**झर** पु॰ झॄ-अच् । निर्झरे उत्सान्निर्गते जलप्रवाहे । “स तदुल्मुकी भवन् प्रभाझरचक्रभ्रमिमातनोति यत्” नैष॰ । तस्य स्त्रीत्वं भरत आह ततः टाप् गौरा॰ ङीष् वा । “विपुलपुलिनाः कल्लोलिन्यो नितान्तपतज्झरामरुखचितशिलाः शैलाः सान्द्रद्रुमा वनराजयः” प्रबोधच॰ ।२नारिकायां स्त्री ङीष् भङ्गताशब्दे उदा॰ ।

**झर्च** उक्तौ भर्त्सने च तुदा॰ पर॰ सक॰ सेट् । झर्चति अझर्चीत् । जझर्च ।

**झर्च्छ** उक्तौ भर्त्सने च तुदा॰ पर॰ सक॰ सेट् । झर्च्छति अझर्च्छीत् । जझर्च्छ । [अझर्झीत् । जझर्झ ।

**झर्झ** उक्तौ भर्त्सने च तुदा॰ पर॰ सक॰ सेट् । झर्झति

**झर्झर** पु॰ झर्झ-अरच् । (झाँझ) इति ख्याते १वाद्यभेदे २पटहे, ३कलियुगे, ४नदभेदे च । ५वाद्यभेदे स्त्री ङीष् मेदि॰ । ६वेत्रनिर्मितदण्डभेदे पु॰ “काञ्चनोष्णीषिणस्तत्र वेत्रझर्झरपाणयः” भा॰भी॰९८ अ॰ । ७वेश्यायां स्त्री तिका॰टाप् । ८तारादेव्यां स्त्री भङ्गताशब्दे उदा॰ । ९वाद्यभेदे स्त्रीशब्दर॰गौरा॰ङीष् ।१०पाकसाधने लौहमये (झाझरा) इति ख्याते पदार्थे पु॰ रत्नमा॰ । झर्झरः तद्वाद्यं शिल्पमस्य वा ठक् । झार्झरिक तद्वादनशीले त्रि॰ पक्षे अण् । झार्झर तत्रार्थे त्रि॰स्वार्थे क । झर्झरिका तारिण्यां भङ्गताशब्दे उदा॰ ।

**झर्झरक** पु॰ झर्झर+संज्ञायां कन् । कलियुगे त्रिका॰ ।

**झर्झरावती** स्त्री झर्झरः शब्दभेदोऽस्त्यस्य मतुप् मस्य वः संज्ञायां पूर्वपददीर्घः । गङ्गायां झिण्टीशशब्दे उदा॰ ।

**झर्झरिन्** पु॰ झर्झरोऽस्त्यस्य इनि । शिवे “त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा” भा॰ शा॰२८६अ॰।

**झर्झरीक** पु॰ झर्झ-ईकन् फर्फरीका॰ नि॰ । शरीरे उज्ज्वलद॰ । [ चांस्कालने शब्दार्थचि॰

**झलज्झला** स्त्री ज्वलनं ज्वलति अच् पृषो॰ । हस्तिक-

**झला** स्त्री झरा-पृषो॰ ।१कन्यायाम् २आतपोर्म्मौ च मेदि॰

**झल्ल** पुंस्त्री झर्झ क्विप् तं लाति ला-क रस्य लः । “झल्लो-मल्लश्च राजन्याद् व्रात्याल्लिच्छिविरेव च” मनूक्ते सवर्णायां व्रात्यक्षत्रियाज्जाते जातिभेदे । “झल्लामल्लानटाश्चैव पुरुषा शस्त्रवृत्तयः । द्यूतपानप्रसक्ताश्च जघन्या राजसो गतिः” । मनुना तस्य शस्त्रवृत्तित्व (नेढाफी) मुक्तम् “नव झल्ला यष्टिप्रहरणाः” कुल्लू॰ । “तत्र मल्लानटा झल्लाः कृता वैतालिकास्तथा” भा॰व॰४अ॰।

**झल्लक** न॰ झर्झ-क्विप् तं लाति ला-क संज्ञायां रस्य लः । वाद्यभेदे कांस्यनिर्मितकरताले “शिवागारे झल्लकञ्च सूर्य्यागारे च शङ्खकम् । दुर्गागारे वंशिवाद्यं मधुरीं च न वादयेत्” ति॰ त॰ । तत्रार्थे स्त्री शब्दार्थचि॰ । गौरा॰ ङीष् ।

**झल्लकण्ठ** पु॰स्त्री झल्लकतुल्यः इव कण्ठः कण्ठस्वरोऽस्य । पारावते हारा॰ स्त्रियां जातित्वात् ङीष् ।

**झल्लरा** स्त्री झर्झति झर्झ-अरन् पृषो॰ । १झर्झरवाद्ये वाद्यभेदे २हुडुक्के ३वालककेशे मेदि॰४शुद्धे, ५क्लेदे च अजयपालः । गौरा॰ङीष् । झल्लरीत्यप्यत्रार्थे ।

**झल्लिका** स्त्री झर्झ-ण्वुल् पृषो॰१उद्वर्त्तनमले २द्योते ३दीप्तौ च शब्दार्थचि॰ ।

**झल्लीषक** न॰ हल्लीषक+पृषो॰। नृत्यभेदे “झल्लीषकन्तु स्वयमेव कृष्णः सुवंशघोषं नरदेव ! पार्थ !” हरिवं॰१४८अ॰।

**झल्लोल** पु॰ झर्झ-क्विप् तथा सन् लोलः पृषो॰। तर्कुवासके (टेकुयार बाँटुल) हारा॰ । [जझाष झषः ।

**झष** वधे भ्वा॰पर॰ सक॰ सेट् । झषति अझाषीत् अझषीत् ।

**झष** ग्रहणे पिधाने च भ्वा॰ उभ॰ सक॰ सेट् । झषति-ते अझाषीत् अझषीत् अझषिष्ट । जझाष जझषे ।

**झष** पु॰स्त्री झष-कर्मणि घ । मत्स्ये, अमरः स्त्रियां जातित्वात् ङीष् “वंशीकवलेन बडिशेन झषीरिवाचान्” आनन्दवृन्दावनचम्पूः २मकरे जलजन्तुभेदे “झषाणां मकरश्चास्मि” गीता ३मीनराशौ च “कार्मुकगौलिककन्या युग्मलवे झषगे वा” मु॰चि॰ । ४मकरराशौ “कार्मुकं तु परित्यज्य झषं संक्रमते रविः” मल॰त॰। भावे क ।५तापे । कर्त्तरि अच् । ६विपिने, ७वने च न॰ । दनागवल्लयां स्त्री शब्दार्थचि॰ । [शब्दार्थचि॰ झषकेतनादयोऽप्यत्र ।

**झषकेतु** पु॰ झषो मीनो मकरो वा केतुर्यस्य । मदने

**झषाङ्क** पु॰ झषोऽङ्कोऽस्य । १कन्दर्पे उपचारात् २तत्पुत्रे अनिरुद्धे च हेम॰ । [स्त्रियां जातित्वात् ङीष् ।

**झषाशन** पुंस्त्री॰ झषमश्नाति अश-ल्यु । शिशुमारे त्रिका॰

**झषोदरी** स्त्री झषस्योदरं जन्मस्थानतयाऽस्त्यस्याः अच् गौरा॰ ङीष् । मत्स्यगन्धायां व्यासमातरि सत्यवत्याम् त्रिकाण्डशेषः । सा च उपरिचरवसोः शुक्रे च ब्रह्मणः शापेन मत्स्ययोनिप्राप्तायामद्रिकायामप्सरोभेदस्य गर्भाज्जाता तत्कथा भा॰ आ॰ ६३ अ॰ ।

“मत्प्रियार्थमिदं सौम्य ! शुक्रं मम गृहं नय । गिरिकायाः प्रयच्छाशु तस्या ह्यार्त्तवमद्य वै” ।“गृहीत्वा तु

तदा श्येनस्त्वरितस्तूर्णं वेगवान् । अथ परममास्थाय प्रदुद्राव विहङ्गमः । तमपश्यदथायान्तं श्येनं श्येनस्तथापरः । अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया । तुण्ड-युद्धमथाकाशे तावुभौ संप्रचक्रतुः । युध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि । तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः । मीनभावमनुप्राप्ता बभूव यमुनाचरी । श्येनपादपरिभ्रष्टं तद्वीर्य्यमथ वासवम् । जग्राह तरसोत्पत्य साद्रिका मत्स्यरूपिणी । कदाचिदथ मत्सीं तां बबन्धुर्मत्स्यजीविनः । मासे च दशमे प्राप्ते तदा भरतसत्तम ! । उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसञ्च मानुषौ । आश्चर्य्यभूतं तज्ज्ञात्वा राज्ञेऽथ प्रत्यवेदयन् । काये मत्स्या इमौ राजन् ! संभूतौ मानुषाविति । तयोः पुमांसं जग्राह राजोपरिचरस्तदा । स मत्स्यो नाम राजासीद्धार्म्मिकः सत्यसङ्गरः । साप्सरा मुक्तशापा च क्षणेन समपद्यत । पुरोक्ता या भगवता तिर्य्यग्योनिगता शुभे ! । मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि । ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना । संत्यज्य मत्स्यरूपं तत् दिव्यरूपमवाप्य च । सिद्धर्षिचारणपथं जगामाथ वराप्सराः । या कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी । राज्ञा दत्ता च दाशाय कन्येयं ते भवत्विति । रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः । सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् । आसीत् सा मत्स्यगन्धैव किञ्चित्कालं शुचिस्मिता" ।

**झाङ्कृत** पु॰ झामित्यव्यक्तशब्दः कृतो येन । चारभेदे धरणिः । तत्रार्थे झाङ्कृत इति पाठः प्रामादिकः ।

**झाट** पु॰ झट–णिच्–अच् । १निकुञ्जे, २कान्तारे, ३व्रणादीनां मार्जने च मेदि॰ ४भूम्यामलक्याम् स्त्री अमरः ५यूथिकायाञ्च शब्दच॰ ।

**झाटल** पु॰ झट–णिच् अलच् । घण्टापाटलौ अमरः ।

**झाटामला** स्त्री झट–अच् न मला अमला कर्म॰ । भूम्यामलक्याम् "झ(झा)टामला झटा ताली" इत्यत्र झाटामलेत्येकपदमिति केचित् अतएव "झाटामला ज्योत्स्निका च पतिका च सुदर्शना" भैषज्यर॰ उक्तम् ।

**झाटिका** स्त्री झाटा स्वार्थे क । भूम्यामलक्याम् शब्दच॰ ।

**झामक** न॰ झम–कर्म्मणि ण्वुल् । (झामा) अतिशयपक्वेष्टकायाम् शब्दार्थचि॰ । [शब्दर॰ ।

**झामर** पु॰ झम–भावे घञ् तं राति रा–क । तर्कशाणे ।

**झालि** पु॰ "आम्रमाम्रफलं पिष्टं राजिकालवणान्वितम् । भृष्टं हिङ्गुयुतं पूतं घोलितं झालिरुच्यते । झालिर्ह-रति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी । मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी" भावप्र॰ उक्ते पदार्थे

**झावु** पु॰ झा–इति याति गच्छति या–डु । (झाउ) वृक्षभेदे अमरः स्वार्थे क । तत्रार्थे शब्दर॰ । [शब्दार्थचि॰

**झिङ्गाक** न॰ जिगि–आकन् पृषो॰ । (झिङ्गा) फलभेदे ।

**झिङ्गिनी** स्त्री जिगि–णिनि पृषो॰ । १जिङ्गिनीवृक्षे भावप्र॰ २उल्कायाञ्च शब्दर॰ । [भावप्र॰

**झिङ्गी** स्त्री॰जिगि–अच् गौरा॰ङीष् । जिङ्गिनीवृक्षे (झिङ्गा)

**झिञ्झी** स्त्री॰ झिञ्झा अस्त्यस्याः अच् गौरा॰ ङीष् । झिल्ल्याम् (झिँजिपोँका) शब्दार्थचि॰ ।

**झिण्टी** स्त्री झिमिति रटति अच् पृषो॰ गौ॰ ङीष् । (झाँटि) पुष्पप्रधानवृक्षे अमरः ।

**झिण्टीश** पु॰ शिवे "झिण्टीशचन्द्राभ्यां भङ्गारकारिणी झर्झरावती" काशीखं॰ गङ्गास्तवः ।

**झिरि** स्त्री झिरित्यव्यक्तशब्दोऽस्त्यस्याः बा॰ इन् । चिलूत्र वा ङीष् । तत्रार्थे शब्दर॰ । [झिल्ल्याम् शब्दर॰ ।

**झिरिका** स्त्री॰ झिरीति कायति शब्दायते कै–क ।

**झिल्लि** पु॰ झिरितिशब्दं शिरति वा॰डि । वाद्यभेदे "घण्टा-शब्दस्तथा भेरी मृदङ्गो झिल्लिरेव च । यन्त्राणां पूज्यते वाद्यं देवताराधनेषु च" शब्दार्थचि॰ धृतवाक्यम् ।

**झिल्ली** स्त्री॰ चिल्लति चिल–अच् पृषो॰ गौरा॰ ङीष् । (झिँझिपोँका) कीटभेदे । संज्ञायां क । २आतपरुचौ ३वर्त्त्यांञ्च मेदि॰ । ४तारिण्यां च भङ्गुताशब्दे उदा॰ ।

**झिल्लीकण्ठ** पुं॰स्त्री झिल्ली तद्रव इव कण्ठः कण्ठस्वरोऽस्य । गृहकपोते त्रिका॰ स्त्रियां जातित्वात् ङीष् ।

**झीरुका** स्त्री झिरित्यव्यक्तं रौति वा॰रु–कक् । झिल्ल्याम् शब्दरत्ना॰ । [च शब्दच॰ ।

**झुण्ट** पु॰ जुण्ट–अच्–पृषो॰ । अकाण्डे १द्रुमे,२स्तम्बे,३गुल्मे

**झुमरि** स्त्री रागिणीभेदे "प्रायः शृङ्गारबहुला माध्वीकमधुरा मृदुः । एकैव झुमरिर्लोके वर्षादिनियमोज्झिता । अतो बहुधनेनास्या मोदाहारि विशेषतः । इदं हि शास्त्रं गुह्यं प्रसिद्धं जनरञ्जनम्" सङ्गीत॰दा॰

**झूलि** पु॰१क्रमुकभेदे २दुष्टदैवस्तुतौ च मेदि॰ । [अझार झरः ।

**झॄ** वयोहानौ दिवा॰पर॰सक॰सेट् । झीर्य्यति अझारीत्

**झौड** पु॰ गुवाकभेदे भूरिप्र॰ । [जुझुरवे ।

**झ्यु** गतौ भ्वा॰ आत्म॰ सक॰ अनिट् । झ्यवते अझ्योष्ट ।

इति वाचस्पत्ये झकारादिशब्दार्थसङ्कलनम् ।

# ञ

"ञकारो व्यञ्जनवर्णभेदः अर्द्धमात्राकालेनोच्चार्य्यः तस्योत्पत्तिस्थानं नासिकानुगततालुस्थानम् तस्योच्चारणे जिह्वामध्येन तालुमध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा अल्पप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य वामहस्ताङ्गुल्यग्रे न्यास्यता। वर्णाभिधानेऽस्य वाचकशब्दा उक्ता यथा

"ञकारो बोधनी विश्वा कुण्डली नखदोविषत्। कौमारी नागविज्ञानी सव्याङ्गुलनखो बकः। सर्वेशश्चूर्णितो बुद्धिः खर्गात्मा घर्घरध्वनिः। धर्मैकपादः सुमुखो विरजा चन्द्रनेश्वरी। गायनः पुष्पधन्वा च योगात्मा च विरञ्चिनी"। एतदधिष्ठातृदेवीध्येयरूपं यथा "चतुर्भुजां धूम्रवर्णां कृष्णाम्बरविभूषिताम्। नानालङ्कारसंयुक्तां जटामुकुटराजिताम्। दैत्यहास्यकरीं नित्यां वरदां भक्तवत्सलाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्य स्वरूपं यथा "सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि! रक्तविद्युल्लताकारं या स्वयं परकुण्डली। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा" कामधेनुतन्त्रम्। तस्य मातृकान्ते प्रथमोपन्यासे मरणं फलम् भ्रमवृद्धे प्रमाणं द्रष्टव्यम्। [५गायत्रौ च मेदि०।

ञ पु० १गायने २ घर्घरध्वनौ एकाक्षरको०। ३वृषे ४शुक्रे

ञकार पु० ञ+स्वरूपे कारप्रत्ययः। अस्वरूपे वर्णे "ञकारो बोधनी विश्वा" वर्णाभिधानम्।

इति वाचस्पत्ये ञकारादिशब्दार्थसङ्कलनम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वाचस्पत्ये चवर्गादिशब्दार्थसङ्कलनं समाप्तम्।

# ट

टकारो व्यञ्जनवर्णभेदः अर्द्धमात्राकालेनोच्चार्य्यः अस्योच्चारणस्थानं मूर्द्धा। अस्योच्चारणे मूर्द्धस्थानेन जिह्वामध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः। विवारश्वासाघोषा बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षिणस्फिचि न्यास्यता वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "टकारश्च कपाली च सोमेशः खेचरी ध्वनिः। मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नरः। दक्षस्फिगर्द्धचन्द्रश्च जरा भूतिः पुनर्भवः। बृहस्पतिर्धनुश्चित्रः प्रमोदा विमला कटिः। गिरिर्महाधनुः प्राणात्मा सुमुखी मरुत्"। अस्य स्वरूपं यथा "टकारं चञ्चलापाङ्गि! स्वयं परमकुण्डली। कोटिविद्युल्लताकारं पञ्चदेवमयं सदा। पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम्। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं परं सदा" कामधेनुतन्त्रम्। एतदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व वरवर्णिनि!। भावतीपुष्पवर्णाभां पूर्णचन्द्रनिभेक्षणाम्। दशबाहुसमायुक्तां सर्वालङ्कारसंयुताम्। परमोक्षप्रदां नित्यां सदा खेरसर्वी पराम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। मातृकान्तेऽस्य प्रथमोपन्यासे खेदः फलम्। भ्रमवृद्धे प्रमाणं द्रष्टव्यम्।

ट पु० टल–ड। १वामने २पादे ३निःस्वने च मेदि०।

टक बन्धे चु० उभ० सक० सेट् इदित्। टङ्कयति–ते अटटङ्कत्–त। "टङ्कितेनोऽतिपाटले" काशी० गङ्गास्तवः। "नाकृष्टं न च टङ्कितम् न नमितम् नोत्थापितम् स्थानतः" महाना०। उद्+उत्क्षेपे। उट्टङ्कितम्।

टकार पु० ट+स्वरूपे कारप्रत्ययः। टस्वरूपे वर्णे "टकारश्च कपाली च" वर्णाभिधानम्।

टक्क पु० टकि–बा० कक् पृषो० उपधालोपश्च। देशभेदे।

टक्कदेशीय पु० टक्कदेशे भवः छ। १वास्तूकशाके त्रिका०। २तद्देशभवमात्रे त्रि०।

टगण पु० मात्रावृत्ते षाण्मात्रिकप्रस्तारे त्रयोदशभेदात्मके गणभेदे तेषामाकाराधिदेवाश्च छन्दोमञ्जर्य्यामुक्ता यथा "(ऽऽऽ) १ शिवः ।।ऽऽ शशी २ (।ऽ।ऽ दिनपतिः) ३ (ऽ।।ऽ सुरपतिः) ४ (।।।।ऽ शेषः) ५ (।ऽऽ। अहिः) ६ (ऽ।ऽ। सरोजम्) ७ (।।।ऽ। धाता) ८ (ऽऽ।।कलिः) ९

(।।ऽ।। चन्द्रः) १० (।ऽ।।। ध्रुवः) ११ (ऽ।। ।। धर्मः) १२ (।।।।। शालिकरः) १३।

**टगर** पु० टः टङ्कनो गर इव। टङ्कणक्षारे (सोहागा) २हेलाविलासविषये ३केकराक्षे च त्रि० मेदि०।

**टङ्क** पु० टकि–घञ्–अच् वा। १कोपे, २कोषे, ३खड्गे ४पाषाणभेदनेऽस्त्रे च।५जङ्घायां मेदि०। ६चतुर्माषकरूपे परिमाणे वैद्य० ७नीलकपित्थे, ८खनित्रे, ९दर्पे च पु०न० हेमच० १०परशौ ११राजाम्रे च शब्दार्थचि० “द्वार्यन्तां चैव टङ्कौघैः खनित्रैश्च पुरी द्रुतम्” हरिवं० ९०अ०। “टङ्कैर्मनःशिलगुहेव विदार्यमाणा” मृच्छ०। “हिमाद्रिटङ्कादिव भान्ति वप्राम्”भट्टिः। “चकोध रामं स्फटीव टङ्कच्छिन्नमनःशिलः” रघुः। [सारसुन्दरी।

**टङ्कक** पु० टङ्क्यते बध्यते संज्ञायां क। (तङ्का) रजतमुद्रायाम्

**टङ्कपति** पु० ६त०। रूप्याध्यक्षे (टाकशालेर अध्यक्ष) सारसुन्दरी। [ग्टहे सारसुन्दरी।

**टङ्कशाला** स्त्री ६त०। (टाकशाल) ख्याते रूप्यकनिर्माण

**टङ्कटीक** पु० टङ्क इव टीकते टीक–क। शिवे त्रिका०।

**टङ्कण(न)** न० टकि–ल्यु पृषो० वा णत्वम्। (सोहागा) ख्याते स्वर्णद्रावके १उपरसभेदे। उपरसभेदाश्च भाव०प्र० उक्ता यथा “गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्क(न)णम्। राजावर्त्तकचुम्बकौ स्फटिकया शङ्खः खटी गैरिकम्। कासीसं रसकं कपर्दसिकतावोलाश्च कङ्कुष्ठकम् सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः”। “तद्यथा लवणेन सुवर्णम्” छा० उ० भाष्ये “लवणेन क्षारेण टङ्कणादिना, खरेषु मृदुत्वकरं हि तत्” भा०। “टङ्कणं वह्निकृद्रूक्षं कफवातिकपित्तकृत्” भावप्र०। भावे ल्युट्। (टाकादेओया पानिदिआ भाषा)२धातूनां योजनभेदे। दन्त्यान्तः ३अश्वभेदे पु०स्त्री “टङ्कणखरनखरक्षतिक्षतहरितालपांशुलेन” काद० मूर्द्धन्यान्तः ४देशभेदे स च देशः वृ०स० १४अ०। कूर्मविभागे दक्षिणस्यामुक्तः।“अथ दक्षिणेन लङ्का” इत्युपक्रमे “कङ्कटटङ्कणवनवासिशिबिकफणिकारकोङ्कणाभीराः” इत्युक्तेः।

**टङ्कवत्** पु० टङ्क+अस्त्यर्थे मतुप् मस्य वः। १पर्वतभेदे “टङ्कवन्तं शिखरिणं वन्दे प्रलवणं गिरिम्” रामा०२।५५अ०

**टङ्का** स्त्री टकि–अच्। १जङ्घायां मेदि०। २तारादेव्यां टङ्कारकारिणीशब्दे दृश्यम्।

**टङ्कानक** पु० टङ्कं कोपमानयति उद्दीपयति आन–णिच् ण्वुल्। १श्रुद्रदारुवृक्षे (वामनगाछा) शब्दच०।

**टङ्कार** पु० टमित्यव्यक्तशब्दस्य कारः कृ–घञ्। १ध्वनिभेदे धनुर्ज्याकर्षणजे शब्दे २विस्मयहेतुके शब्दे च।३शिञ्जिनीध्वनौ प्रसिद्धे च मेदि०। कृ–णिनि। टङ्कारिन् १टङ्कारयुक्ते त्रि० स्त्रियां ङीप् सा च २तारादेव्याम् टङ्कारकारिणीशब्दे दृश्यम्।

**टङ्कारकारिणी** स्त्री०कृ–णिनि ङीप् ६त०। तारादेव्याम्“टङ्कारकारिणी टीका टङ्का टङ्कारिणी तथा तारासहस्रनाम।

**टङ्कारी** पु० स्त्री टङ्कमृच्छति ऋ–अण् गौरा०। (टेकारी) वृक्षभेदे“टङ्कारी वातश्लेष्मघ्नी शोफोदररुजापहा। तिक्ता च दीपनी रुच्या भिषग्भिः परिकीर्त्तिता” राजनि०।

**टङ्ग** पु०न० टङ्क+पृषो०। १खनित्र (टाँगि) .परशुभेदे च ३जङ्घायां मेदि०। (सोहागा) ४टङ्कणे शब्दच०।५चतुर्माषकमाने वैद्य०।

**टङ्गण** पु०न० टङ्कण+पृषो० (सोहागा) टङ्कणे।

**टङ्गिनी** स्त्री टकि–णिनि पृषो०। (आकनादी) पाठायाम् शब्दच०। [ज्येष्ठ्याम् त्रिका०।

**टट्टनी** स्त्री टट्टेति शब्दं नयति नी–ड गौरा० ङीष्।

**टट्टरी** स्त्री टट्टेति शब्दं राति रा–क गौरा० ङीष् १पटहवाद्ये २वाग्वादे ३असत्यवाद्ये च मेदि०।

**टट्टर** पु० भेरीशब्दे हेमच०।

**टल** विप्लवे (टला) भ्वा०पर० अक० सेट्। टलति अटालीत् टटाल टेलतुः। ज्वला० टलः टालः।

**टवर्ग** पु० ट+वर्णानिशासनोक्तः वर्गप्रत्ययः। ट ठ ड ढ ण इत्येषु वर्णेषु। तत्र भवश्च छ। टवर्गीय डादौ वर्णे।

**टा** स्त्री टल–ड। पृथिव्याम् एकाक्षरकोषः।

**टाङ्क** न० टङ्केन तद्रसेन निर्वृत्तम्। टङ्करूपनीलकपित्थरसेन निर्वृत्ते मद्यभेदे। “पानसं द्राक्षमाधूकं खार्जुरं तालमैक्षवम्। माध्वीकं टाङ्कं माद्वीकमैरेयं नारिकेलजम्। सामान्यानि द्विजातीनां मद्यान्येकादशैव च। द्वादशन्तु सुरा मद्यं सर्वेषामधमं स्मृतम्”। पुलस्त्येन अनुपानं निषिद्धम्। अस्त्वयत इति आपस्तो मद्यानामपस्त्रादिकर्मः मद्यःकृतस्नानेन मज्ञातमद्यभावः अभिहितम् इदं पुलस्त्योक्तं प्रायश्चित्तम्। “द्राक्षेक्षुटङ्कखर्जूरपनसादेश्च यो रसः। सद्योजातन्तु पीत्वा तं त्र्यहाच्छुध्येद् द्विजोत्तमः” [चामवीटे वृक्षभेदे त्रिका०।

**टाङ्कर** पु०टाङ्कं तत्तुल्यरसं राति रा–क टाङ्क+कुञ्जा० र वा।

**टार** पुंस्त्री० टां पृथ्वीमृच्छति ऋ–अण् उप० स०। घोटके

स्त्रियां जातित्वात् ङीष्। ४रक्ते ५वक्रे च हेमच०।

**टिक** गतौ भ्वा० आ० सक० सेट्। टेकते अटेकिष्ट टिटिके। ऋदित् अटिटेकत् न।

**टिटिभ** पुंस्त्री० टिटीति अव्यक्तशब्दं भणति भण—ड। को यष्टिके(टिटिरि)स्त्रियां ङीष् स्वार्थे क तत्रार्थे अमरः।

**टिट्टिभ** पुंस्त्री० टिट्टीत्यव्यक्तं शब्दं भणति भण—ड।(टिटिरि) कोयष्टिके खगे अमरः स्त्रियां ङीष्। "अनिर्दिष्टां-श्चैकशफांष्टिट्टिभांश्च विवर्जयेत्" मनुना तन्मांसभक्षणं निषिद्धम्। "टिट्टिभं तदुपेत्य राज्यध्यानमिवाहरः" भा० शा० १११अ०। कोयष्टिकशब्दे २२६६ पृ० तन्मांस-गुणा उक्ताः। टिट्टिभक स्वार्थे क। तत्रार्थे पुंस्त्री०।

**टिण्टिनिका** स्त्री अम्बुशिरीषिकायां (ञेँाक) भावप्र०।

**टिण्डिश** पु० रोमशफले (ढाँडश) ख्याते वृक्षभेदे राजनि०। "टिण्डिशो रुचिकृत् भेदी पित्तश्लेष्माश्मरीप्रणुत्। सुशीतो वातलो रूक्षो मूत्रलश्च प्रकीर्त्तितः" भावप्र०।

**टिप** प्रेरणे चुरा०उभ०सक०सेट्। टेपयति-ते अटीटिपत्-त।

**टिप्पनी** स्त्री टिप-क्विप् टिपा पन्यते स्तूयते पन—घञर्थे क गौरा०ङीष्। टीकायाम्। सा च टीकाव्याख्यारूप-तयैव व्यवह्रियते यथा चिन्तामणिटीकाया दीधितिव्या-ख्यायाः टीका जगदीशकृता गदाधरकृता च। यथा शारीरिकसूत्रभाष्यव्याख्या पञ्चपादिका भामती च। महाभाष्यव्याख्या कैयटकृता इत्यादि। प्रथमव्याख्याया-मपि क्वचित् प्रयुज्यते यथा "श्रीमद्गजाननं नत्वा-लीलावत्याः सुटिप्पणी। सवेधेन सुबोधार्थं क्रियते यद्गुरोः श्रुतम्" "टिप्पनी दायभागस्य श्रीनाथेन विधीयते"। [ऋदित्। अटिटीकत् न।

**टीक** गतौ भ्वा० आत्म० सक० सेट्। टीकते अटीकिष्ट।

**टीका** स्त्री टीक्यते गम्यते ग्रन्थार्थोऽनया। टीक—करणे अच् घञर्थे क वा। विषमपदव्याख्यारूपे ग्रन्थभेदे। "अपटीको जडो माघे भयं जाड्येन तास्यते। स च किञ्चित्तरत्येव कण्ठसंलग्नवल्लभः" उद्भटः। "नत्वा भगवतीं दुर्गां टीकां दुर्गार्थदुर्लभे। कुरुते दायभागस्य भट्टाचार्यमहेश्वरः" "करोति टीकामिह दायभागग्रन्थावबोधाय हरेकरव्याम्" श्रीकृष्णतर्का०।

**टुण्टुक** पु० स्त्री टुण्टु इत्यव्यक्तं कायति कै—क। (टुण्टुनि) १पक्षिभेदे शब्दर०। स्त्रियां जातित्वात् ङीष्। २श्योना-कवृक्षे अमरः। ३कृष्णखदिरे शब्दच०। तयोः तत्खग-प्रियत्वात् तथात्वम्। ४अल्पे त्रि० मेदि०। ५क्रूरे त्रि० विश्वः। ६टङ्किनीवृक्षे स्त्री शब्दच०।

**टुनाका** स्त्री तालमूलीवृक्षे शब्दच०।

**टेरक** त्रि० केकर+पृषो०। (टेरा) केकरनेत्रे। शब्दार्थचि०।

**टोट** त्रि० लोट+पृषो०। १अल्पे २हीने च। स्त्रियां गौरादिपाठात् ङीष्।

**टोडलतन्त्र** न० तन्त्रभेदे। [द्रुवः टांवः।

**टुवृ** विप्लवे भ्वा० पर० अक० सेट्। टुवति अटुवीत् ज्वला०

इति वाचस्पत्ये टकारादिशब्दार्थसङ्कलनम्।

## ठ

ठकारो व्यञ्जनवर्णभेदः। टवर्गीयः मूर्द्धन्यः वर्णमाला-कायोच्चार्यः। तस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्य स्पर्शः आभ्यन्तरप्रयत्नः। विवारश्वासाघोषा महाप्राणश्च बाह्यप्रयत्नाः। मातृन्यासेऽस्य दक्षजानुनि न्यस्यता वर्णा-भिधानेऽस्य वाचकशब्दा उक्ता यथा "ठः शून्यो मञ्जरी जीवः पाणिनी लाङ्गलं क्षमा। वनजो नन्दनो जिह्वा सुनन्दापूर्णकः सदा। वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्र-मण्डलः। दक्षजानूद्भवश्च देवभक्षो बृहद्ध्वनिः। एकपादो विभूतिश्च ललाटं सर्वमित्रकः। वृषघ्नो नलिनी विष्णुर्महेशो ग्रामणीः शशी"। एतदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने!। पूर्णचन्द्रप्रभां देवीं विकसत्पङ्कजेक्षणाम्। सुन्दरीं षोडशभुजां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्य ध्येयरूपं यथा "ठकारं चञ्चलापाङ्गि, कुण्डली मोक्षरूपिणी। पीतविद्युल्लताकारं सदा त्रिगुण-संयुतम्। पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा। त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा" इति काम-धेनुतन्त्रम्। मातृकान्तेऽस्य प्रथमोपन्यासे दुःखं फलम् भावस्ते समाप्तं इत्यस्य।

**ठ** पु॰ ठ+पृषो॰। शिवे २महाध्वनौ ३चन्द्रमण्डले एका-क्षरकोषः। ४मण्डले ५शून्ये ६लोकगोचरे च मेदि॰। शून्यवाचक विन्दुरूपवर्णभेदः। "स्मितमुखि! तदथठद्वयम् योजयित्वा" कर्पूरस्तवः(ठद्वयं स्वाहा)। "द्विठमेव चेत्यस्य व्याख्यायां द्विठं विसर्गस्तस्य विन्दुद्वयात्मकत्वात् विसर्ग-शब्देन च लक्षितलक्षणया स्वाहाकारो लभ्यते स्वा-हाशब्देनैव वह्नौ त्यागात् त्यागस्य च विसर्गपर्य्याय-त्वात्" इत्येवं रघुनन्दनादिसम्प्रदायविदः। [कामधेनुत॰।

**ठकार** पु॰ठ+कार। ठस्वरूपे वर्णे "ठकारं चञ्चलापाङ्गि!"

**ठक्कुर** पु॰१देवप्रतिमायां,२द्विजोपाधिभेदे च। यथा गोविन्द-ठक्कुरः काव्यप्रदीपकर्त्ता। ३देवतायाञ्च। "सुदामा नाम गोपालः श्रीमान् सुन्दरठक्कुरः" अनन्तसंहिता।

इति वाचस्पत्ये ठकारादिशब्दार्थसङ्कलनम्।

---

## ड

डकारो व्यञ्जनवर्णभेदः मूर्द्धन्यः अर्द्धमात्राकालोच्चार्य्यः टवर्गीयः। तस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्य स्पर्श-आभ्यन्तरयत्नः। संवारनादघोषा अल्पप्राणश्च बाह्यप्र-यत्नाः। मातृकान्यासेऽस्य दक्षपादगुल्फे न्यस्यता। अस्य वाचकशब्दा यथा "डः स्मृतिदारुका नन्दि-रूपिणी योगिनीप्रियः। कौमारी शङ्करस्त्रासस्त्रिवक्त्रो व्यापकोध्वनिः। दुरूहो जटिली भीमा द्विजिह्वः पृथिवी सती। कोल्लगिरिः क्षमा क्रान्तिर्नाभिः स्वाती च लोचनम्" वर्णाभिधानम्। तदधिष्ठा-तृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणु-ष्वावहिता मम। जवासिन्दूरसङ्काशां वराभयकराम्-राम्। त्रिनेत्रां वरदां नित्यां परमोक्षप्रदायिनीम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" इति वर्णो-द्धारतन्त्रम्। अस्य ध्येयरूपं यथा "डकारं चञ्चला-पाङ्गि! सदा त्रिगुणसंयुतम्। पञ्चदेवमयं वर्णं पञ्चप्राण-मयं सदा। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा। चतुर्ज्ञानमयं वर्णमात्मादितत्त्वसंयुतम्। पीतविद्यु-ल्लताकारं डकारं प्रणमाम्यहम्" इति कामधेनुतन्त्रम्। तस्य मात्रावृत्ते प्रथमोपन्यासे शोभा फलम् "डः शोभां ढो विशोभां भ्रमणमथ च णस्तु खं यस्तु युद्धम्" वृ॰ र॰ टी॰धृतवाक्योक्तेः।

**ड** पु॰ डी–ड। १शिवे २शब्दे ३त्रासे च एका॰ को॰। ४वाडवाग्नौ ५डाकिन्यां स्त्री मेदि॰।

**डकार** पु॰ ड+कारप्रत्ययः। डस्वरूपे वर्णे।

**डगण** पु॰ छन्दोग्रन्थोक्ते चतुर्मात्रिकप्रस्तारे पञ्चभेदभिन्ने गणभेदे तत्स्वरूपादिकं यथा (ऽऽ गजः१) (।।ऽ रथः२) (।ऽ।तुरङ्गमः ३) (ऽ।।पदातिः ४) (।।।।पत्तिः ५) इति।

**डङ्गरी** स्त्री डं त्रासं गिरति गॄ–अच् पृषो॰ गौरा॰ङीष्। दीर्घकर्कट्याम्(काँकड़ी)राजनि॰ अण्। डङ्गारीत्यप्यत्रार्थे।

**डप** संघाते (राशीकरणे) चु॰आत्म॰अक॰सक॰सेट्। डाप-यते अडीडपत। चुरादित्वेऽपि ञित्करणादफलवत्-कर्त्तर्य्यपि आत्म॰। तेनास्य ञित्करणसामर्थ्यात् पाक्षि-कचुरादित्वम् पक्षे भ्वादित्वम्। डपते अडपिष्ट।

**डप** संहतौ उक्तौ उपवत् इदित्। डम्पयते अडिडम्पत। पक्षे भ्वा॰ डम्पते अडम्पिष्ट।

**डब** लोकने चुरा॰ उभ॰ सक॰ सेट्। डम्बयति अडडम्बत् शब्दस्तोमे अस्य वा चुरादित्वोक्तिः प्रामादिकी। [त॰]

**डभ** संघे चुरा॰इदित् उभ॰ सेट्। डम्भयति ते अडडम्भत्

**डम** पु॰ डं त्रासं माति मा–क। चाण्डाल्यां नेटाज्-जाते सङ्कीर्णजातिभेदे (डोम) ब्रह्मपु॰। स्त्रियां–जाति-त्वात् ङीष्। [पलायने हारा॰।

**डमर** पु॰ डमेति शब्दं राति रा–घञर्थे क। भीत्या

**डमरु** पु॰डमिति शब्दमृच्छति ऋ–कु मृगया॰ कु॰नि॰।१वाद्यभेदे क्षीणमध्ये प्रान्ते दीर्घे, गुटिकाद्वयलम्बिते कापालि-कयोगिवाद्ये अमरः। तत्रार्थे हारा॰न॰। "दृष्ट्वा डमरु-डमरुडाङ्कृतिद्रुतभूतवर्गान्तु भर्गेच्छिषी रुधिरैर्भि-नोमि" प्रबोधच॰। (डमत् डमेति शब्दं कुर्वत्)।

**डमरुका** स्त्री "मुष्टिञ्च शिथिलां बद्धा ईषदुच्छ्रितमध्यमम्। दक्षिणां ऊर्द्ध्वसम्मस्य कर्णदेशे प्रधारयेत्। एषा मुद्रा डमरुका सर्वविघ्नविनाशिनी" तन्त्र॰ उक्ते मुद्राभेदे।

**डम्बर** पु॰डपि–संहतौ वा॰अरन्। १समूहे आडम्बरे २आयो-जने "अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरे" चाणक्यः।

२धातदत्ते कुमारानुचरभेदे। "डम्बराडम्बरौ चैव ददौ धाता महात्मने" भा० श० ४७ अ०।

**डयन** न० डी—भावे ल्युट्। खगानां नभोगतौ (ओड़ा) करणे ल्युट्। २कर्णीरथे हेमच०।

**डल्लक** न० वंशनिर्मितपात्रभेदे (डाला) "त्रिशतञ्च षट्त्रिंशं डल्लकं वस्त्रसंयुतम्। सभाज्यं यौपवीतञ्च सोपहारं मनोहरम्" ब्रह्मवै०

**डवित्थ** पु० "डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः"। सुपद्मोक्ते काष्ठमये १मृगे २द्रव्यवाचिसंज्ञाशब्दभेदे च "द्रव्यशब्दाः एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः" का०द०। शब्दकल्पद्रुमेऽयं वर्ग्यमध्यतया निर्देशितस्तन्मूलं चिन्त्यम्।

**डहु(हू)** पु० दह उ वा अक् लगव्यादि० नि०। लकुचे (मान्दार) "डहुर्गुरु विष्टम्भी त्रिदोषशुक्रदोषकृत्" भावप्र० तद्रूपोक्तिः शब्दरत्नावल्याभयं दीर्घान्ततया तदर्थं पठितः।

**डाकिनी** स्त्री डस्य त्रासार्थम् अकति अक—वक्रगतौ णिनि ङीप्। १देव्या अनुचरीभेदे। "वार्त्ताञ्च डाकिनीनां च विकटानां त्रिकोटिभिः" ब्रह्मपु०। (डान) इति ख्याते दर्शनमात्रेण २उपद्रवकारिस्त्रीजनभेदे। "डाकिनी शाकिनी भूतप्रेतवेतालराक्षसाः काशीख० ३० अ०।

**डाङ्गरी** स्त्री डङ्गरी पृषो०। दीर्घकर्कट्याम् (काँकड़ी) राजनि०

**डामर** पु० शिवप्रोक्ते तन्त्रशास्त्रविशेषे तच्च षड्विधं तेषां मानादिकं वाराहीतन्त्रे उक्तं यथा

"डामरः षड्विधो ज्ञेयः प्रथमो योगडामरः१। श्लोकास्तत्र त्रयस्त्रिंशत् तथा पञ्च शतानि च। त्रिविंशतिःसहस्राणि श्लोकाश्चैव हि संख्यया। गन्धादशसहस्राणि सङ्ख्याताः शिवडामरे२। श्लोकाः सप्तैव निश्चित्य ईश्वरेणैव भाषिताः। तावच्छ्लोकसहस्राणि पञ्च श्लोकशतानि च। गुणोत्तराणि दुर्गाया डामरे३ कथितानि च। नव श्लोकसहस्राणि नव श्लोकशतानि च। सारस्वते४ तथा श्लोकाः पञ्चैव परिकीर्त्तिताः शरसंख्यसहस्राणि श्लोकानां ब्रह्मडामरे५। पञ्चोत्तरशतान्यत्र संख्यानि शिवेन तु षष्टिः। श्लोकसहस्राणि गान्धर्वे६ डामरोत्तमे। श्लोकाश्च षष्टिसंख्याता ब्रह्मणाऽव्यक्तयोनिनेति"।

**डालिम** पु० दाडिम्ब+पृषो०। ख्यनामख्याते फलप्रधाने वृक्षे भरतः।

**डाहल** पु० त्रिपुरदेशे त्रिका०।

**डाहुक** पुंस्त्री० डेति हूयते हू—वा० ऊक पृषो०। दात्यूहखगे शटा० स्त्रियां जातित्वात् ङीष्।

**डिङ्गर** पु० डङ्गर+पृषो०। १डङ्गरशब्दार्थे २क्षेपे ३वने ४धूर्त्ते ५सेवके च शब्दर०।

**डिडिका** स्त्री यौवनकालजाते पिडकाख्यके रोगभेदे। "यौवने डिडिकास्वेव विशेषाच्छर्दनम् हितम्" सुश्रु०।

**डिडिमा** पु० स्त्री शुश्रुतोक्ते प्रतुदे खगभेदे स्त्रियां जातित्वात् ङीष्। प्रतुदशब्दे तद्भेदा दृश्याः।

**डिण्डिम** पु० डिमडेतिशब्दं माति। १वाद्यभेदे (डेँडरा) अमरः। "आर्यवाक्यचरितप्रतापनाडिण्डिमः" वीरच० "भेरीशङ्खाश्च हनन् हृष्टा डिण्डिमांश्च सहस्रशः" भा०द्रो० १८६अ०। २अपक्वपाकफले पानीयामलके शब्दच०।

**डिण्डिमेश्वर** पु० शिवपु० उक्ते तीर्थभेदे। [हेमच०।

**डिण्डिर** पु० डिडि—बा० किरच् आदेरुंस डः। समुद्रफेने

**डिण्डिरमोदक** न० डिण्डिर इव मोदकः मोदयति मोदि—ण्वुल्। ग्रन्थने (गाँजा) ख्याते मादक द्रव्यभेदे राजनि०।

**डिण्डिश** पु० डिण्डिक+पृषो०। (टाँडश) इति ख्याते रोमशफले वृक्षभेदे। "डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः। सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः। निःशेषबीजं सतिक्तस्वचं पक्वं रुचिकृत्कम् शोणितप्रकृतिम्। कृतप्रियं चक्रदात्वेदण्डं रुचिप्रदं डिण्डिशकं सर्पिषाक्तम्" वैद्यक०।

**डिण्डीर** पु० डिडि—ईरन् आदेरुंस डः। समुद्रफेने हेमच०।

**डित्थ** पु० डवित्थशब्दोक्ते काष्ठमये १हस्तिनि एकव्यक्तिमात्रबोधके २संज्ञाशब्दभेदे तत्प्रतिपाद्ये ३अर्थभेदे च।

**डिप** संहतौ वा चुरा० उभ० पक्षे भ्वा० आत्म० अक० सेट्। डेपयति—ते डेपते अदित् अडिडेपत् त।

**डिप** प्रेरणे वा चु० उभ० पक्षे तुदा० पर० सक० सेट्। डेपयति—ते अडीडिपत्-त कुटा० डिपति अडिपीत्। दिवादित्वमपीच्छन्ति डिप्यति इरित् अडिपत् अडेपीत्।

**डिप** संहतौ वा चुरा०उ०पक्षे भ्वा०आत्म०अक०सेट् इदित्। डिम्पयति-ते डिम्पते। अडिडिम्पत्-त अडिम्पिष्ट।

**डिब** संघे प्रेरणे च वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् इदित्। डिम्बयति-ते अडिडिम्बत् डिम्बति अडिम्बीत्।

**डिभ** हिंसे संहतौ वा चुरा०उभ०पक्षे भ्वा०पर०सक० सेट्। इदित्। डिम्भयति-ते अडिडिम्भत्-त डिम्भति अडिम्भीत्।

**डिम** हिंसने भ्वा० पर० सक० सेट्। डेमति अडेमीत्।

**डिम** पु० डिम-क। दृश्यकाव्यरूपनाटकभेदे। "मायेन्द्रजाल-संग्रामक्रोधोद्भ्रान्तादिचेष्टितैः। उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिहत्तकः" सा० द० तल्लक्षणमुक्तम्।

**डिम्ब** पु० डिबि-घञ् अच् वा। १भये, २कलहे, ३फुप्फुसे च हारा० ४डमरे, अमरः ५भयध्वनौ ६प्रसूते, ७प्लीहनि, ८विप्लवे च मेदि०।

**डिम्बाहव** न० डिम्बं भयध्वनियुक्तमाहवम् युद्धम्। युद्धभेदे तस्य नृपतिशून्यतया भययुक्तध्वनिमत्त्वात् तथात्वम्। "डिम्बाहवहतानां च विहितं पार्थिवेन च" मनुना तद्युद्धहतस्य सद्यःशौचमुक्तम्। जटाधरे पुंस्त्वपाठः प्रामादिकः आहवशब्दान्तत्वात् द्वन्द्वतत्पुरुषयोः परवल्लिङ्गताविधानात् क्लीवत्वौचित्यात्। "डिम्बाहवार्दितानाञ्च असुराणां परायणम्" भा०आ०२१ अ०।

**डिम्बिका** स्त्री डिबि-ण्वुल्। १कामुक्यां २जलविम्बे ३श्योणाकवृक्षे च शब्दरत्ना०। अच् गौरा० ङीष्। डिम्बीत्यप्यत्र।

**डिम्भ** त्रि० डिभि-अच्। १शिशौ अमरः २मूर्खे मेदि०।

**डिम्भक** पु० डिम्भ+स्वार्थे क। १बालके शब्दर०२शाल्वदेशपति ब्रह्मदत्तसुतभेदे। तत्कथा हरिवं० २८१अध्यायादौ दृश्या "हंसो ज्येष्ठो नृपसुतो डिम्भकोऽनन्तरोऽभवत्" "हंसश्च डिम्भकश्चैव तत्सर्वं महामते!"।

**डिम्भचक्र** न० स्वरोदयोक्ते शुभाशुभसूचके चक्रभेदे चक्रशब्दे २८२० पृ० दृश्यम्।

**डी** नभोगतौ (ओड़ा) भ्वा०आ०अक०सेट्। डयते अडयिष्ट डिड्ये डीनः। प्राद्युपसर्गभेदे खगगतिभेदाः खगगतिशब्दे २४१४ पृ०दृश्याः।

गतौ दिवा० आ० सक० सिघराट्ः। डीयते।

**डीतर** त्रि०डी-क्विप् ततस्तरप्। नभोगतियुक्ततरे "तस्मादिमा अजा अरा डीतरा आक्रममाणा इव यन्ति" शत० ब्रा०४।५।१।५।

**डीन** न० डी-भावे क्त। पक्षिगतिभेदे जटा०। खगगतिशब्दे २४१४पृ० दृश्यम्। २आगमशास्त्रविशेषे च यथा "डामरं डमरं डीनं ज्ञुतं कालीविलासकम्। सप्तकोटिमिता यस्मा मम वक्त्रात् विनिर्गताः" मुण्ड० त०।

**डीनडीनक** न० पक्षिगतिभेदे खगगतिशब्दे २४१४ पृ० दृश्यम्। [दृश्यम्।

**डीनावडीनक** न० खगगतिभेदे खगगतिशब्दे २४१४ पृ०

**डुण्डुभ** पुंस्त्री० डुण्डु इत्यनुकरणशब्दं भणति तेन भाति वा भण-भा-वा ड। (ढोंड़ा) इति ख्याते सर्पभेदे अमरः। स्त्रियां जातित्वात् ङीष्। "शयानं तत्र चापश्यत् डुण्डुभं वयसान्वितम्" भा० आ०६अ०। पृषो० अन्त्यलोपे डुण्डुरपि तत्रार्थे पुंस्त्री० त्रिका०।

**डुण्डुल** पुंस्त्री डुण्डु इति शब्दं लाति ला-क। क्षुद्रपेचके राजनि० स्त्रियां जातित्वात् ङीष्।

**डुल** पु० डु इति शब्दं लाति ला-क। पेचकभेदे ततः वरणा० चतुरर्थ्यां अ। डुल्य तत्सन्निकृष्टदेशादौ त्रि०।

**डुलि** स्त्री डुलि+पृषो०। कमठ्याम् डुलौ रायमुकुटः।

**डुलिका** स्त्री डुलिरिव कायति कै-क। खञ्जनाकारे खगभेदे जटाधरः।

**डोडिका** स्त्री (करेलुया) इति प्रसिद्धे फलशाकविशेषे। "डोडिका पुष्टिदा हृष्या रुच्या वह्निप्रदा लघुः। हन्ति पित्तकफार्शांसि क्रिमिगुल्मविषामयान्"। "बल्यं डोडीफलमविकलं छिन्नमीषत् तोये स्विन्ने हिङ्गुप्रणयिनि ततो वेसवारेण सिद्धम्। गव्यं तक्रं कथितनिहितं साधितं रामठेन खादन् खादन् निभृतमसृतं निन्दितं भोक्तुमिच्छेत्। सम्भूय शुष्कं तरणेः प्रतापात् प्रतप्तमाज्येन च डोडिकाकम्। यस्यैव्यवं रामठदत्तवासं खादन्नरो निन्दति व्यञ्जनानि। डोडिका वातला रुच्या शीता गुर्वी विपाकहा। हस्तिना रोचना हृद्या पक्विमा कफकर्त्तरी" शब्दार्थचि० धृतवाक्यम्। [दृश्यम्।

**डोडी** स्त्री डोडिकायां क्षुपभेदे राजनि०। डोडिकाशब्दे

**डोम** पु० स्त्री स्वनामख्याते सङ्कीर्णजातिभेदे स्त्रियां ङीष्। तत्स्पृश्यत्वमुक्तं मत्स्यसूक्ततन्त्रे १८ पटले "चण्डालश्चैव डोमश्च मानकश्च तथा यतिः। दक्षीरश्चैव भगक्षीरो भूषण्डश्च हवाश्रमी। डवा सुयज्ञी लिङ्गधारी सप्त एते यशस्विनि!। स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं जपेदिति"।

**डोर** न० दोष्+रा-ड पृषो०। हस्तबन्धादौ बन्धनसूत्रे "कोऽनन्त इत्युदीर्याथ रुत्वा तत्करपल्लवम्। हस्तादाकृष्य तद्डोरं छिन्नवान् पावकोपरि" भविष्य० पु० स्वार्थे क तत्रार्थे न०। तत्रैव "चतुर्दशग्रन्थियुक्तं कुङ्कुमाक्तं सुडोरकम्। स्त्रियश्च पुरुषश्चैव बध्नीयात् वामदक्षिणे"। [राजनि०।

**डोरडी** स्त्री डोरमिव डयते डी-ड गौरा०ङीष्। वृहत्याम्

**डुल** क्षिप्तीकरणे चु० उभ० सक० सेट्। डोलयति ते अडि-

डुवत् न । कात्या० श्रौ० १६।१२० सूत्रभाष्ये "मिश्रयति आड़ालयतीत्यर्थः" कर्कः। "मेचयतिराड़ालनार्थः" कात्या० श्रौ०१०।४।७। कर्कः "पार्श्वेनाज्यं वसां च मिचयत्याड़ालयति" ५।८।१८। कर्कः।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वाचस्पत्ये डकारादिशब्दार्थसङ्कलनम्।

---

## ढ

ढकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यः मूर्द्धन्यः टवर्गीयः। तस्योच्चारणे जिह्वामध्यभागेन मूर्द्धः स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा महाप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षपादाङ्गुलिमूले न्यस्यता। वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "ढो ढक्का निर्गुणः शूरो धनेशो धनदेश्वरः। अर्द्धनारीश्वरश्रोत्रलोश्चरस्त्रिशिखो नरः। दक्षपादाङ्गुलीमूलं सिद्धिदण्डो विनायकः। महाशक्तिपुरा वह्निर्निर्गुणो निधनो धनी। विघ्नेशः पाशिनी तद्धारिणी क्रोडपुच्छकः। एकाङ्गुरं च दुर्गात्मा विशाखा श्यामणोरतिः"। एतदधिष्ठातृदेवतारूपं वर्णोद्धारतन्त्रे उक्तं यथा। "रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम्। अष्टादशभुजां भीमां महामोक्षप्रदायिनीम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्"। अस्य स्वरूपं कामधेनुतन्त्रे उक्तं यथा

"ढकारः परमाराध्यो या स्वयं कुण्डली परा। पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा। सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम्। रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्"। मातृकान्यासेऽस्य प्रथमोपन्यासे विशोभा फलम् उभयत्र प्रमाणं दृश्यम्।

ढ पु० १ढक्कायां २शुनि ३श्वलाङ्गूले च मेदि०। तस्य तदाकृतित्वात् तथात्वम्। ४निर्गुणे ५ध्वनौ च एकाक्षरको०

ढकार पु० ढ+स्वरूपे कारप्रत्ययः। ढस्वरूपे वर्णे "ढकारं प्रणमाम्यहम्" कामधेनुत०। "ढकारस्य ढकारे परे लोपः" सि० कौ०।

ढक्का स्त्री ढगिति कायति कै-क। यशःपटहे (ढाक) ख्याते वाद्यभेदे अमरः। "न ते डडुकेन न सोऽपि ढक्कया न मर्द्दलैः सापि न तेऽपि ढक्कया" नैषधम्।

ढक्कानादचलज्जला स्त्री ढक्काया नाद इव चलज्जलं तद्रवो यस्याः। गङ्गायाम्। "ढक्कानादचलज्जला" काशी० गङ्गास्तवः।

ढक्कारवा स्त्री ढक्काया रव इव रवो यस्याः। तारिणीदेव्याम् "ढक्कारवा च ढक्कारी" तारसहस्रनाम।

ढक्कारी स्त्री ढगिति शब्दं करोति कृ-अण् उपप०स० गौरा० ङीष्। तारिणीदेव्याम् "ढक्कारवा च ढक्कारी ढक्कारवरवाद्यका" ताराहस्रनाम।

ढगण पु० मात्रावृत्ते त्रिमात्रिकप्रस्तारभेदे तद्भेदाश्च त्रयः "तत्स्वरूपादिकं यथा (ऽ।) १ ध्वजः। (।ऽ) २तालः। (।।।) ३ तालुवम्।

ढण्टी स्त्री वाद्यभेदे "ढण्टीवाद्यस्वरूपा च ढकाराक्षररूपिणी" रुद्रया० अन्नपूर्णासहस्रनाम।

ढामरा स्त्री हंस्याम् शब्दार्थचि०।

ढाल न० स्वनामख्याते चर्म्मशयादौ फलके तद्विद्यतेऽस्य इनि ढालिन् तद्युक्ते त्रि०। "ढालिपक्षजयकरी ढकारवर्णरूपिणी" अन्नपूर्णास्तवः। स्त्रियां ङीप्।

ढुण्ढ अन्वेषणे भ्वा० सक० पर० सेट्। ढुण्ढति अढुण्ढीत्। डुढुण्ढ। ढुण्ढिः।

ढुण्ढि पु०ढुण्ढ-इन्। काशीस्थे गणेशभेदे तन्नामनिरुक्त्यादिकं काशीख० ५७अ०उक्तं यथा "अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः सर्वार्थढुण्ढिततया भव ढुण्ढिनामा। काशीप्रवेशमपि को लभतेऽत्र देही तोषं विना तव विनायक! ढुण्ढिराज!" तन्माहात्म्यं तत्रैव यथा "ढुण्ढे प्रणम्य पुरतस्तव पादपद्मं यो मां नमस्यति पुमानिह काशिवासी। तत्कर्णमूलमधिगम्य पुरा दिशामि तत्किञ्चिदत्र न पुनर्भवतास्ति येन। यः प्रत्यहं नमति ढुण्ढिविनायकं त्वां काश्यां प्रगे प्रतिहताखिलविघ्नसंघः। नो तस्य जातु जगतीतलवर्त्तिनस्तु दुष्प्रापमत्र च परत्र च किञ्चनापि। प्रथमं ढुण्ढिराजोऽसि मम दक्षिणतोऽनाक्। आढुण्ढ्य सर्वभक्तेभ्यः सर्वार्थान् संप्रयच्छसि"। तस्य यात्राविधानमुक्तं तत्रैव यथा "माघशुक्लचतुर्थ्यान्तु नक्तव्रतपरायणाः। ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्विषाम्। विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम्। शुक्लां शुक्लतिलैर्लड्डून् प्राश्नीयात् कण्डुकान्

प्रती । कार्य्या बाला प्रयत्नेन चोलचित्रिमभीप्सुभिः । तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे ! सर्वोपसर्गहृत् । तां बालां नाम यः कुर्य्यान्निवेद्य तिलडुण्डुकान् । उपवास सङ्घस्तु स इन्द्राचिन् समाश्रया । होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः। तस्यां चतुर्थ्यां मन्त्रज्ञस्य मन्त्रः प्रसेत्स्यति" ।

**ढोल** पु॰ गले दोलायमानतया वाद्यमाने स्वनामख्याते वाद्यभेदे। "ढक्काढोलप्रिया नित्या ढोलवाद्यप्रमोदिनी । ढोलरूपा ढोलधरा ढोलशब्दस्वरूपिणी" इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम् ।

**ढक्काढोलप्रिया** स्त्री ढक्काढोलौ तच्छब्दः प्रियोऽस्याः । अन्नपूर्णायाम् ढोलशब्दे दृश्यम् ढोलरूपादयोऽप्यत्र ।

**ढौक** प्रेरणे गत्याञ्च भ्वा॰ आत्म॰ सक॰ सेट् । ढौकते अढौकिष्ट डुढौके । "तं विप्रदर्शं कृतघातयत्ना यान्तं वने रात्रिचरी डुढौके" भट्टिः । "शकुन्तला वत्सं ढौकते" शकु॰। णिचि ढौकयति ते "राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद्रथम्" भट्टिः । ऋदित् अडुढौकत् त।

इति वाचस्पत्ये ढकारादिशब्दार्थसङ्कलनम्

---

## ण

णकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यः मूर्द्धन्यः टवर्गीयः । अस्योच्चारणे जिह्वामध्येन मूर्द्धः स्पर्शः नासिकायाश्च प्रभेदश्च आभ्यन्तरप्रयत्नः । संवारनादघोषाः अल्पप्राणश्च बाह्यप्रयत्नाः । मातृकान्यासेऽस्य दक्षपादाङ्गुल्यग्रे न्यस्यता। अस्य वाचकशब्दाश्च वर्णाभिधाने उक्ता यथा "णो निर्गुणं रतिर्ज्ञानं जम्भनः पक्षिवाहनः। जया शम्भो नरकजित् निष्कलो योगिनीप्रियः । द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधिनी मता । त्रिनेत्रो मानुषी व्योम दक्षपादाङ्गुलीमुखम् । माधवः शङ्खिनी वीरो नारायणश्च निर्णयः" । एतदधिष्ठातृदेवतारूपं वर्णोद्धारतन्त्रोक्तं यथा "ध्यानमस्य णकारस्य प्रवक्ष्यामि च तत् शृणु । द्विभुजां वरदां रम्यां भक्ताभीष्टप्रदायिनीम् । राजीवलोचनां नित्यां धर्मकामार्थमोक्षदाम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" । एतत्स्वरूपं कामधेनुतन्त्रोक्तं यथा "णकारः परमेशानि ! या स्वयं परकुण्डली । पीतविद्युल्लताकारः पञ्चदेवमयः सदा । पञ्चप्राणमयं देवि ! सदा त्रिगुणसंयुतम् । आत्मादितत्त्वसंयुक्तं । महामोक्षप्रदायकम्" । मात्राद्यवृत्तेऽस्य प्रथमोपन्यासे मरणं फलम् मूलं डशब्दे दृश्यम् ।

**ण** पु॰ णख—गतौ ड पृषो॰ णत्वम् । १बिन्दुदेवे, २भूषणे, ३गुणवर्जिते, ४पानीयनिलये मेदि॰ । ५निर्णये, ६ज्ञाने च न॰ एकाक्षरको॰ ।

**णख** गतौ भ्वा॰पर॰सक॰सेट् । णोपदेशत्वात् सति निमित्ते णत्वम् । नखति प्रणखति । अनखीत्—अनाखीत् । ननाख नेखतुः । एवं णादिधातूनां गणपाठे णादित्वं प्रयोगे नादित्वं सति निमित्ते णत्वमिति बोध्यम् ।

**णट** नृत्ये चाभिनये नटकार्य्ये हिंसायामयं न णोपदेशी भ्वा॰ पर॰ सक॰ सेट् । नटति प्रणटति अनाटीत् अनटीत् । ननाट नेटतुः । हिंसायाम् प्रनटति । नटः नाट्यम् ।

**णट** नृत्ये भ्वा॰पर॰अक॰सेट् । नटति प्रणटति अनाटीत्-अनटीत् ननाट नेटतुः घटा॰ । नटयति अनीनटत् ।

"णट नृत्ये । इत्ययमेव पूर्वमपि पठितम् । तत्रायं विवेकः । पूर्वपठितस्य नाट्यमर्थो यत्कारिषु नटव्यपदेशो वाक्यार्थाभिनयो नाट्यम् । घटादौ तु नृत्तं नृत्यं चार्थो यत्कारिषु नर्त्तकव्यपदेशः पदार्थाभिनयो नृत्यम् गात्रविक्षेपमात्रं नृत्तम् । केचित्तु घटादौ णट नताविति पठन्ति । नतावित्यन्ये । णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव" सि॰कौ॰

**णद** अव्यक्तशब्दे भ्वा॰ पर॰ अक॰ सेट् । नदति प्रणदति अनादीत् अनदीत् । ननाद नेदतुः नदः । नादः नदनम् नदितम् । सति निमित्ते एतत्पूर्ववर्त्तिनः अप्युपसर्गस्य णत्वम् । प्रणिनदति परिणिनदति ।

"वाष्पवानदद्घोरम् रुधिरस्राव्यवर्षत" हरिवं॰१८४अ॰। "नदति मही गम्भीरम्" ह॰सं॰ ५४अ॰ । "शब्दं घोरं नदन्ति" भा॰व॰२६७अ॰ "शिवाश्चैवाशिवान्नादान्नदन्ते" हरिवं॰१८४अ॰। आर्षस्तङ् । णिचि नादयति "नदय-

भ्रेति पृथिवीमुत द्याम्" ऋ०८।८७।१२। "आ मातु-
पृष्ठे नदयन्त पृथिव्याः" ऋ०७।७।२। छान्दसो ह्रस्वः।
लोके तु न ह्रस्वः। "नादयन्नपयोऽचेव सर्वाः सविदिशो
दिशः" भा०व० २५२२ श्लो०। अन्तर्भूतण्यर्थे तु अस्य
सकर्मकता "नृत्यावसाने नटराजराजो ननाद ढक्कां
नव पञ्च वारान्" शब्देन्दुशेखरधृतवाक्यम्।

अनु+नादेनानुकरणे सक०। "तथा च तेषां वदतां महा-
त्मनां दिवं च खञ्चानुननाद निस्वनः" रामा०२।१११अ०।

अभि+आभिमुख्येन शब्दकरणे। "पुत्रेति तन्मयतया तर-
वोऽभिनेदुः" भाग० १।२।२।

उद्+उच्चैःशब्दकरणे। "कावमेघइवोन्नदन्" भा०द्रो०६८१४

प्रति+प्रतिशब्देन अनुकरणे सक०। "भयं प्रति नदन्तस्तान्"
भा० भी०४५।१८।

णद भाषे चु० उभ० सक० सेट्। नादयति ते प्रणादयति
अनीनदत्-त। ननाद नेदतुः।

णभ हिंसे भ्वा० आत्म० सक० सेट्। नभते प्रणभते लृदित्
अनभत् अनभिष्ट। नेभे। "नभन्तामन्यकेषां ज्याका
अधिधन्वसु" ऋ०१०।१३३।१। "नभन्तां हिंसयन्ताम्"
भा० आर्षस्तङ्। "नाभाकस्य प्रशस्तिभिः" निरुक्तधृता
ऋक्। वेदेऽस्य कश्चित् तुम्। "उन्नभाय पृथिवीं भिन्धीदं
दिव्यं नभः" तैत्ति०स०२।४।८।२।

णभ हिंसे दिवा० क्र्या० च पर० सक० सेट्। नभ्यति
प्रणभ्यति नभ्नाति। अनाभीत्-अनभीत्। ननाभ नेभतुः।

णम प्रह्वे अक० गतौ सक० भ्वा० पर० अनिट्। नमति
प्रणमति अनंसीत्। ननाम नेमतुः नेमिथ ननन्थ।
नतः नतिः नामः नत्वा नन्ता नम्यः आनाम्यः। अस्य
अनन्तत्वेन णत्वादित्वे प्राप्तेऽपि अनुपसर्गाद्वेति नियमात्
वा तथात्वम्। नमयति नामयति उपसर्गात्तु उन्नमय-
तीत्येव। नतिश्च आकर्षबोधकव्यापारभेदः स च करशिरः
संयोगादिः आकर्षबोधशालिनः कर्मता। नमति गुरुम्
दुःखितशब्दे उदा०। न्यग्भावे (नोया) अकर्म०। ततः
कर्मकर्त्तरि न यक्चिणौ नमते अनंस्त। "शुम्भेभिरस्मे
वसवो नमध्वम्" ऋ० ७।५६।१७। "एते द्यूने युवतयो
ऽनमन्त" १०।३०।६। न्यग्भावे "अनंसीद्भूर्भरेणास्य" भट्टिः।
"उन्नमति नमति वर्षति गर्जति मेघः करोति तिमि-
रौघम्। प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि"
मृच्छ०। "नतभ्रुवो नक्षत्रनाथनेत्रः" उद्भटः। "पुष्पभारनता
लता" रामा० २।९६ अ०। "तथाभिधानाद् व्यथते
नताननः" किरा०। भट्टि नंनम्यते। "नंनम्यमाना
फलदित्सयेव" भट्टिः।

अभि+आभिमुख्येन नमने। "देवान् वै यज्ञो नाभ्यनमत्"

अव+न्यग्भावे अधोभवने (नीचे नोओया) अक०। "स्त-
व्यादाद् अवनवनते" मेघ०। णिच् अवनमयति
"अवनामितमेढ्रस्य मेढ्रे" सुश्रु०। "शिरः सुकण्ठो
जग्राह सहस्तेनावनाम्य च" हरिवं० ६९ अ०।
केचिच्छराकोपभयात् शिरांस्यवनामिरे" भा०आ०१२४अ०।
आर्षो न ह्रस्वः आम्भावश्चार्षः।

उद्+ऊर्द्ध्वगतौ उच्चभवने उत्थाने च अक०। "उत्थायोत्थाय
तत्रैव दरिद्राणां मनोरथाः। हृदयेषु विलीयन्ते विध-
वास्त्रीस्तनाविव" पञ्चत०। "स्थितः सर्वोन्नतेनोर्वीम्" रघुः

अभि+उद्+आभिमुख्येनोन्नतौ अक०। "अभ्युन्नताङ्गुष्ठ-
नखप्रभाभिः" कुमा०। "अभ्युन्नता पुरस्तादवगाढा
जघनगौरवात् पश्चात्" शकु०।

उप+प्राप्तौ सक० स्वयमुपस्थितौ अक०। "यं वनिता
दीक्षोपनमेत"। "अभ्यागो ह यद्येनं साधवो धर्मा
आ च गच्छेयुरुप च नमेयुः" छा०उ०। "यदा तु पर-
बाधयान्ध आत्मने नोपनमति" भाग० ५।१४।१४ श्लो०।
"मत्संयोगः कथमुपनमेत् स्वप्नजोऽपि प्रियायाः"
मेघ०। "परलोकोपनतं जलाञ्जलिम्" कुमा०।

परि+तुल्यरूपसत्तया वस्तुनोऽन्यथाभवने अक० आत्म०। यथा
दुग्धपरिणामः दधि मृत्परिणामः घटादिः। "तथा
तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं
गत्वा घटादिविषयाकारेण परिणमते" "समसत्ताककार्यो
त्पादः परिणामः इति" वेदा०प०। कर्मकर्त्तरि आत्मनेपद-
मित्यन्ये "परिणामस्वभावा हि गुणा नापरिणम्य
क्षणमप्यवतिष्ठन्ते" सा०त०कौ०। गजानां तिर्य्यग्दन्तप्रहारे
सक०। "विध्ये नागः पर्य्यणंसीत् स एव" माघः। पर्य्यणं-
सीत् तिर्य्यक् प्रजहारेत्यर्थः। "तिर्य्यग्दन्तप्रहारैस्तु गजः
परिणतो मतः" वैजयन्ती। प्रौढताप्राप्तौ अक०।
"दिवसाः परिणामरमणीयाः" शकु०। "ता एवौषधयः
कालपरिणामात् परिणतवीर्य्या भवन्ति" सुश्रु०। परि-
पाके च "आहारस्य सम्यक्परिणतस्य" सुश्रु० सम्यक्नमने
सक०। "यस्तं परिणमेच्च तत्" भा० उ० ११०७।

प्र+प्रकर्षेण नतौ। "प्रणमेद्दण्डवद्भूमौ" भाग० ६।१९।८।
"प्रणेमुर्भुवि मूर्द्धभिः" भाग० १।१।२८। "उरसा
शिरसा दृष्ट्या वचसा मनसा तथा। पद्भ्यां कराभ्यां

**तपोमूर्त्ति** पु० तपः आलोचनभेद एव मूर्त्तिरस्य, तपः प्रधाना मूर्त्तिरस्य वा ।१परमेश्वरे २तपस्विनि च । रुद्र-सावर्णिरूपत्रायोदशमन्वन्तरे सप्तर्षिमध्ये ३ऋषिभेदे च "तपस्वी च तपोमूर्त्ति स्तपस्त्र्यग्नीध्रकादयः" भाग०८।१३।१२

**तपोमूल** त्रि० तपो मूलमस्य । १तपोहेतुके स्वर्गादौ तामसस्य मनोः २पुत्रभेदे पु० तपस्यशब्दे दृश्यम् ।

**तपोरति** त्रि० तपसि रतिरस्य । १तपःपरायणे तामसमनोः पुत्रभेदे पु० तपस्यशब्दे दृश्यम् ।

**तपोरवि** पु० तपसा रविरिव । १सूर्य्यतुल्यतेजोयुक्ततपस्के चतुर्थमन्वन्तरे पौलहे सप्तर्षिभेदे तपोधृतिशब्दे दृश्यम् ।

**तपोलोक** पु० तपोनाम लोकः । ऊर्द्धस्थेषु सप्तसु लोकेषु भुवनभेदे तपःशब्दे दृश्यम् । स च भूमेस्तस्त्रकोटि योजनोपरि वर्त्तते । "चतुःकोटिप्रमाणं तु तपोलोकोऽस्ति भूतलात् । उपरिष्टात् क्षितेरष्टौ कोटयः सत्यलोकमिति" काशीख० २२ अ० उक्तेः । स च विराट्-पुरुषस्य स्तनद्वयरूपेण कल्पितः यथाह भाग० २।५। ३८। "भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः । हृदा स्वर्लोक उरसा महर्लोको महात्मनः । ग्रीवायां जनलोकोऽस्य तपोलोकः स्तनद्वयात् । मूर्द्धभिः सत्य-लोकस्तु ब्रह्मलोकः सनातनः" ।

**तपोऽवट** पु० तपसोऽवट इव । ब्रह्मावर्त्तदेशे त्रिका० ।

**तपोवन** न० ६त० । १तापससेव्ये वनभेदे, "वपुर्भञ्जिमतो चैनामर्च्चितामातपोवनात्" तपोवनाद्वृत्तिपथं गताभ्याम्" रघुः । २तत्स्थापके तीर्थभेदे च ।

**तपोऽशन** पु० चतुर्थमन्वन्तरे सप्तर्षिमध्ये पौलस्त्ये १ऋषिभेदे तपोधृतिशब्दे दृश्यम् । २तामसस्य मनोः पुत्रभेदे तपस्य-शब्दे दृश्यम् ।

**तप्त** त्रि० तप–क्त । १दग्धे २तापयुक्ते च हेमच० । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति" श्रुतिः । "स तप्तकार्त्तस्वरभास्वराम्बरः" माघः ।

**तप्तकाञ्चन** न० कर्म० । अग्निसंयोगभेदेन विमले काञ्चने । "तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम्" दुर्गाध्यानम् ।

**तप्तकुम्भ** पु० तप्तः कुम्भो यत्र । नरकभेदे तत्स्वरूपं यथा "अतःपरं भीमतरं तप्तकुम्भं निबोध मे । समन्ततस्तप्त-कुम्भो वह्निज्वालासमाहतः । ज्वलदग्निचयोद्वृत्त तैलायश्चूर्णपूरितः" मार्क० पु० ।

**तप्तकृच्छ्र** न० "षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत् । पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते" इत्युक्ते व्रत-भेदे, "पयोघृतमुदकं वायुं तप्तं प्रतित्र्यहं पिबेत् स तप्तकृच्छ्र इति गौतमोक्तः पुंस्त्वमपि ।

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् । प्रति-त्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः" मनुः । तप्तानिलपानन्तु तप्तक्षीरवाष्पपानम् । एतद्द्वादशाह साध्यम् । जलादिपरिमाणमुक्तं ब्रह्मपुराणे "तप्त-कृच्छ्रं व्रतं कुर्वन् त्र्यहं सायं पिबेच्छुचिः । षट्पलानि सुतप्तस्य तोयस्य सुसमाहितः । प्रभाते त्रीणि दुग्धस्य सुतप्तस्य पिबेत् त्र्यहम् । पानं घृतस्य तप्तस्य मध्याह्ने त्रिदिनं पिबेत् । वायुभक्षस्त्र्यहं चान्यं निर्दिशेत् पातकं द्विजः" याज्ञवल्क्यः । "तप्तक्षीरघृताम्बूना-मेकैकं प्रत्यहं पिबेत् । एकरात्रोपवासश्च तप्तकृच्छ्रस्तु पावनः" एतच्चतुरहसाध्यं तप्तकृच्छ्रम् प्रा० वि० ।

**तप्तपाषाणकुण्ड** पु० नरकभेदे नरकशब्दे दृश्यम् ।

**तप्तमाष** पु० तप्तं माषमितं सुवर्णादिकं यत्र ।

दिव्यभेदे । तद्विधिः वीरमित्रोदये दर्शितो यथा तत्र पितामहः "तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् । कारयेदायसम्पात्रं ताम्रं वा षोड़शाङ्गुलम् । चतुरङ्गुलखातन्तु मृण्मयं वापि मण्डलम्" । सर्व-षोड़शांशप्रमितं मण्डलं सूर्य्यमण्डलाकारं वर्त्तु-लमिति यावत् । एतादृशं पात्रं घृततैलाभ्यां पूरयेदि-त्याह स एव "पूरयेद्घृततैलाभ्यां पलैर्विंशतिभिस्तु तत् । सुवर्णं माषकं तस्मिन् सुतप्ते निःक्षिपेत्ततः । अङ्गुष्ठाङ्गुलिमूलेन तप्तमाषकमुद्धरेत्" इति । सुवर्णमाष-कश्चषोड़शांशप्रमाणम् । सुवर्णपञ्चकं कृष्णमापनिष्पन्नं-स्पर्शम् । तन्माषपरिमितं हिरण्यं ताम्रं वा पिण्डी-कृत्य निःक्षिपेत् । अङ्गुष्ठाङ्गुलिमूलेन अङ्गुष्ठतर्जनीस-ध्यमाभिरित्यर्थः । इदञ्च तप्तमाषोद्धरणम् प्राड्विवाकेन घृततैलयोस्तापे समारब्धे धर्मावाहनादिषोड्शोपचारः पत्रारोपणान्तं सर्वसाधारणं कर्म विधाय "त्वमग्ने । वेदाश्चत्वारः" इत्यादिना अग्निदिव्यप्रकरणोक्तेन मन्त्रे-णाभिमन्त्र्य कारयितव्यम् शोध्यस्तु याज्ञवल्क्योक्तेन "त्वमग्ने । सर्वभूतानामित्यादि" मन्त्रेणाभिमन्त्र्य तप्त-माषमुद्धरेत् । अतएव बृहस्पतिः "समुद्धरेत्तैलघृतात् सुत-प्ततप्तमाषकमिति" । कल्पान्तरमाह स एव "सौवर्णे राजते ताम्रे वायसे मृण्मयेऽपि वा । गव्यं घृतमुपा-दाय तदग्नौ तापयेच्छुचिः । सौवर्णीं राजतीं ताम्री-मायसीं वा सुशोभनाम् । सलिलेन सकृद्धौतां प्रक्षिपे-

स्तन चुद्रिकाम् । अमहोषितरङ्गाख्ये ज्ञानखण्डे गोचरे । परीक्षेदार्द्रपर्णेन चटत्कारस्वबोधकमिति" । ततः प्राङ्मुखो धर्माश्रवणादिपल्लारोपणान्तं साधारणं कर्म कृत्वा घृतमभिमन्त्रयेत् । मन्त्रस्तु तेनैव दर्शितः "तत-स्थानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् । परं पवित्रममृतं घृत ! त्वं यज्ञकर्मसु । दह पावक ! पापं त्वं हिमशीतो भवेति च" । ततः प्राड्विवाकः शोध्येन "त्वमग्ने ! सर्वभूतानामित्यादि मन्त्रेणाभिमन्त्रणं कारयित्वा मुद्रिकां ग्राहयेदित्याह स एव "तप्तोषितमनः स्नात-मार्द्रवासःसमाहितम् । ग्राहयेन्मुद्रिकान्तान्तु घृतमध्यग-तान्तथा । प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः" इति । अत्र तर्जन्यैव मुद्रिकोद्धरणं कार्य्यं तस्याः परीक्षाभिधानात् पक्षद्वयेऽपि शुद्ध्यवधारणोपायं बृहस्प-तिराह "कराग्रं येन धुनुयात् विस्फोटो वा न जायते । शुद्धो भवति धर्मेण पितामहवचो यथेति" । कालिकापुराणेऽपि "न धुनेयुः करायन्तु यस्य रक्तं न जायते । विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य नोद्धतमिति" । रक्तं रक्तवर्णम् । यस्य कराग्रं विस्फो-टाद्यैर्नोद्धतमित्यन्वयः । पितामहोऽपि "यस्य विस्फो-टका न स्युः शुद्धोऽसावन्यथाऽशुचिरिति" ।

तप्तमाषपरीक्षाशब्दे अधिकं द्रष्टव्यम् ।

**तप्तमुद्रा**, स्त्री, वैष्णवैः शरीरधार्य्योऽग्नितप्तधातुमयमुद्राङ्कितभग-वदायुधचिह्नं तद्विधिः हरिभक्तिविलासे १५ विलासे । "आषाढ्यामथवा द्वादश्यां हरौ शयिते सति । वैष्णवः धारणं कृत्वा तप्तमुद्राश्च धारयेत् । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैकान्तितत्परे । कुर्य्यादात्मार्पणं तप्तमुद्राभि-रङ्कयेत्" । तप्तमुद्राधारणं वाराहे तप्तमुद्राप्रसङ्गे "चक्रादिधारणं पुंसां परं सम्बन्धवेदनम् । पातिव्रत्य-निमित्तं हि वलयादिविभूषणमिति" । तप्तमुद्रा-धारणफलं वायुपुराणे "अग्निनैव च सन्तप्तं चक्र-मादाय वैष्णवः । धारयेत् सर्ववर्णानां हरिसालोक्य सिद्धये" । ब्रह्माण्डे "कृत्वा धातुमयीं मुद्रां तापयित्वा स्विकां तनूम् । चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः" । नारदीयपञ्चरात्रे "द्वादशारन्तु षट्कोणं वलयत्रय-संयुतम् । हरेः सुदर्शनं तप्तं धारयेत्तु विचक्षणः । सौपर्णे च श्रीभगवद्गरुड़संवादे तप्तमुद्राप्रकरणे "गरुत्मन्विशेषेण सर्ववर्णेष्वयं विधिः । विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्तथैव च" । पाद्मे "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम्" । किञ्च तत्रैवोत्तरखण्डे श्री शिवोमासंवादे "शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो बाहु-मूलयोः । कृताग्निनैव सन्तप्य सर्वपापापनुत्तये" । "चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा । धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत्" । तदकरणे निन्दा तत्रैव "अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् । न तस्य किञ्चिदश्नीयादपि क्रतुसहस्रिणः । सर्ववेदविदोऽपि सर्वशास्त्रविशारदः । अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत् । तप्ते-नैवाङ्कनं कुर्य्यात् ब्राह्मणस्य विधानतः । श्रौतपाकादि सिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च । हरेः पूजाधिकारार्थं चक्रं धार्य्यं विधानतः । वैष्णवत्वस्य सिद्ध्यर्थं भक्ति सिद्ध्यै विशेषतः । उपवीतादिवद्धार्य्याः शङ्ख-चक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः" । श्रुतयश्च "यो ह वै सुगोसमौवेर्ध्यानस्तुतिकामोऽग्निना चक्रं धत्ते । अग्निर्वै सहस्रारः सहस्रारो नेमिर्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीति" । "चक्रं बिभर्त्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः । स एति नाकं दुरितं विधूय विशन्ति यद्यतयो वीतरागाः" इति । ऋक्‌परिशिष्टे "अतप्ततनुर्नतदामो अश्नुतेऽश्नुता स इद्वहन्तस्तत् समासतेति" यजुषि कठवेदीयाश्वलायन शाखायाञ्च । "प्रतद्विष्णोरक्षचक्रे सुतप्ते अस्माभिर्भि वर्त्तते चर्षणीन्द्राः । मूले बाह्वोर्दधतेऽन्ये पुराणालिङ्गा-न्यन्ये तप्तान्यायुधान्यर्पयन्तः" इति । छन्दोगपरि-शिष्टे "सकोवा च वामस्याश्यत् पुमानात्मङ्किताय प्रेमुणा हरिं भजेत् । सुगोकम्भ नौवेर्ध्यान्यङ्गेष्वग्नि-नाधत्ते" इति । शतपथी श्रुतिः अथर्वपरिशिष्टे तप्तचक्रादिप्रकरणे "देवासो येनेत बाहुना सुदर्शनेन प्रयताः स्वर्गमायन्" । "येनाङ्किता मनवो लोकसृष्टिं वितन्वते ब्राह्मणास्तद्वह-न्तीति" । पाद्मे तप्तमुद्राप्रसङ्गे "विष्णुचक्राङ्कितं विप्रं पूजयेत् सर्वकर्मणि । विष्णुचक्रविहीन-न्तु प्रयत्नेन विवर्जयेत्" । नारदीये "तप्तमुद्रा प्रसङ्गे "श्रीकृष्णचक्राङ्कविहीनगात्रः श्मशानतुल्यः प्रभवोऽथ नारी, । दृष्ट्वा नरस्त्वं नृपते ! अथाथा स्नात्वा समर्चेद्धरिमङ्घ्रि सद्यः" इति । बहूनाञ्च वेङ्कटाचार्य पादप्रभृतिभिर्बुधैः । श्रुतयः स्मृतयोऽत्र विलिखिता

तामसाः स्मृताः। तेषां योनिं प्रवक्ष्यामि नियताः पापकर्म्मिणाम्। अवाङ्निरयभावाय तिर्य्यङ्निरयगामिनः। स्थावराणि च भूतानि पशवो वाहनानि च। क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः। अण्डजा जन्तवश्चैव सर्वे चापि चतुष्पदाः। उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः। मग्नास्तमसि दुर्वृत्ताः स्वकर्म्मकृतलक्षणाः। अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः। तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम्। यथा ते सुकृतान् लोकान् लभन्ते पुण्यकर्म्मिणः। अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्म्मिणः। स्वकर्म्मनिरतानाञ्च ब्राह्मणानां शुभैषिणाम्। संस्कारेणोर्द्ध्वमायान्ति यतमानाः सलोकताम्। स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः। अन्यथा प्रतिपन्नास्ते विबुद्धाः स्वेषु कर्म्मसु। पुनरावृत्तिधर्म्माणस्ते भवन्तीह मानुषाः। पापयोनिं समापन्नाश्चाण्डाला मूकचूचुकाः। वर्णान् पर्य्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम्। शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः। स्रोतोमध्ये समागम्य वर्त्तन्ते तामसे गुणे। अभिषङ्गस्तु कामेषु महामोह इति स्मृतः। ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः। तमो मोहो महामोहस्तामिस्रः क्रोधसंज्ञितः। मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते। वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः। सर्वमेतत्तमो विप्राः! कीर्त्तितं वो यथाविधि"।

सांख्ये अधर्म्माज्ञानावैराग्यानैश्वर्य्यरूपास्तस्य धर्मा उक्ता यथा "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्य्यम्। सात्त्विकमेतद्रूपं तामसमस्मात् विपर्य्यस्तम्" सा॰ का॰ "रजस्तु चलतया परितस्त्रैगुण्यं चालयद् गुरुणा वृणता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्त्यते इति ततस्ततो व्यावर्त्त्य तमोनियामकमुक्तं गुरु वरणकमेव तमः" सांत॰ कौ॰। अयमर्थः त्रयोगुणास्त्रैगुण्यं सत्त्वादीनि परितः स्वकार्य्यकरणाय चालयत् प्रवर्त्तयत् रजः गुरुणा गौरवान्वितेन वृणता यत्र यत्र कार्य्यजननाय तस्य प्रवृत्तिस्तत्र तत्र प्रतिबन्धकेन तमसा क्वचिदेव कार्य्ये प्रवर्त्त्यते कर्त्तृत्वं क्रियते इति। तथा च तस्मात् तस्मात् कार्य्यात् व्यावर्त्त्य रजसः प्रवृत्तिं रोधयित्वा तमो नियामकमिति। अन्योऽपि विशेषस्तत्रोक्तो यथा "प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" "गुणा इति परार्थाः सत्त्वं लघुः प्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्द्दिश्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्। एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः, अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः, विषादो मोहः विषादात्मकस्तमोगुण इति। ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मपदग्रहणम्। नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः एवमन्यदपि व्याख्येयम्। भावरूपता चैषामनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्थाः अत्रापि यथासंख्यमेव। रजः प्रवर्त्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु क्वचिदेव प्रवर्त्तयति इति भवति तमोनियामकम्। प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तयः इति। वृत्तिः क्रिया सा च प्रत्येकमभिसम्बध्यते। अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते। तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति। अन्योन्याश्रयवृत्तयः। यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसी प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्तमितरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननवृत्तयः अन्यतमोऽन्यतमं जनयति जननञ्च परिणामः स च गुणानां सदृशरूपः अतएव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्। नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात्। अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः अविनाभाववर्त्तिन इति यावत् चः समुच्चये भवति चात्रागमः "अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः। रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः। तमसश्चापि मिथुने ते सत्त्वरजसी उभे। उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते। नैषामादिः संप्रयोगो वियोगो वोपलभ्यते" इति। सा॰त॰कौ॰

"गुरुतरवकमेव तमः प्रदीपवधार्थिनो वृत्तिः"। "ऊर्द्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः"। सा० का०। "सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्"। मनुः। चक्षुर्वृत्तिनिरोधके शार्वरादिके अन्धकारे "अदस्तयानुगमनुत्तमं तमः" "आच्छादितस्य तमसा नियतेर्नियोगात्" माघः। तत्र स्वपरप्रकाशकतेजः सामान्याभावरूपमिति नैयायिकाः अन्धकारशब्दे २०८४ दृश्यम्। काणादा अपि तथैवाङ्गीचक्रुस्तच्च कौमुदीशब्दे १५८८पृ० दर्शितम्। वेदान्तिनस्तु भावरूपं प्रतिपेदिरे यथा विवरणोपन्यासे। तमः प्रकाशवद्विरुद्धस्वभावयोरिति" शा० भाष्यव्याख्याने "ननु तमः प्रकाशदृष्टान्तो भावाभावरूपत्वस्योपाधिः। आलोकाभावस्तम इति नैयायिकाः। रूपदर्शनाभावस्तम इति प्राभाकरा इति चेत् नैवं उपचयाऽपचयाद्यवस्थाभेदवत्त्वेनोपलभ्यमानत्वेनाभावत्वायोगात् नीलरूपवत्त्वेन द्रव्यत्वाच्च। ननु भावत्वपक्षे सकलालोकवति देशे निमीलितनयनस्य कथं तमःप्रतीतिः सकलालोकेन निरस्तत्वाङ्गीकारात् तद्भावस्थानं तु मन्दालोकेनैव पूर्णत्वमिति चेत् न गोलकान्तर्वर्त्तितमसः प्रतीत्युपपत्तेः न च नेत्रान्तर्वर्त्तिवस्तुग्राहकत्वासम्भवः पिहितकर्णस्यान्तरशब्दग्राहकत्वदर्शनात्। न चैवं गोलकान्तरस्याञ्जनादेरपि निमीलितनयनेन ग्रहणप्रसङ्गः। तमोव्यतिरिक्तरूपिण आलोकसहितचक्षुर्ग्राह्यत्वनियमात्। अथ मतं द्रव्यत्वे सति तमसः आलोकविनाशितस्यालोकापगमे झटिति नोत्पत्तिः कार्यद्रव्याणां द्व्यणुकादिक्रमेणैवारम्भादिति तन्न विवर्त्तवादिनां क्रमानपेक्षणात् कारणं तु मूलाविद्यैव। अथापि तमो न रूपवद् द्रव्यं स्पर्शशून्यत्वादाकाशवदिति चेन्न वायुर्न स्पर्शवान् रूपशून्यत्वादाकाशवदित्याभाससमानयोगक्षेमत्वात् प्रत्यक्षविरोधस्य तुल्यत्वात्। अथालोकाभावे समारोपितं नीलं रूपं गोचरयतीति तमःप्रत्ययस्यान्यथा गतिरुच्येत एवमपि हेतुरनैकान्तिकः रूपवद्द्रव्यस्यैव धूमस्य चक्षुःप्रदेशादन्यत्र स्पर्शशून्यत्वात्। तत्र विद्यमान एव धूमस्पर्शोऽनुद्भूत इति चेत् तर्हि तमःस्पर्शोऽपि तद्वत् सर्वत्रानुद्भूत इति हेत्वसिद्धिः स्यात्। न च ततः सर्वत्रानुद्भूतोऽसम्भावितः। आकरजे सुवर्णादौ तेजस एव स्वपरप्रकाशकभास्वररूपस्योष्णस्पर्शस्य च सर्वत्रानुद्भूतदर्शनादेवं भावरूपतमोवादे न कोऽपि दोषः। नन्वभाववादेऽपि तथा उपचयाऽपचयाद्यवस्थानां प्रतियोग्यालोकोपाधिकत्वात् नीलरूपस्य चारोपितत्वादिति चेत् नैवं दुर्निरूपत्वात् तथाहि किमालोकमात्राभावस्तमः उत त्रैकालिकाऽभावः सर्वालोकाभावो वा प्रथमद्वितीयपक्षयोः प्रागभाव इतरेतराभावः प्रध्वंसाभावो वा तम इति दुर्भणं सवितृकिरणसन्तते देशे प्रदीपजन्मनः प्राग् जाते वा प्रदीपे दीपनाशे वा। तमोबुद्ध्यभावात्। तृतीये सर्वालोकसन्निधानमन्तरेण न निवर्त्तेत। रूपदर्शनाभावस्तम इत्यप्ययुक्तं सकलान्धकारसंवृतापवरकमध्यस्थितस्य बहीरूपदर्शनात्तमोदर्शनयोर्युगपदेव भावात्। तस्मादालोकाभावस्तम इति दृष्टान्ते नास्त्युक्तोपाधिः"। २२तमोवदावरके अज्ञाने अविद्यायां "सोऽहं देवः परं ज्योतिः तमः पारे प्रतिष्ठितम्" कुमा०। "आदित्यवर्णं तमसः परस्तात्" श्रुतिः। "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" "महाभूतादि वृत्तौजाः प्रादुरासीत् तमोनुदः" मनुः।

सांख्योक्ते अविद्याया २३अष्टविधे भेदे च। "भेदस्तमसोऽष्टविधः" सां० का०। "तमसोऽविद्याख्याया अष्टविधो भेदः। अष्टासु विधाः अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मसु आत्मबुद्धिरविद्या तस्या अष्टविधविषयत्वादष्टविधत्वम्" सा० तत्त्वकौ०। २४राहौ पु० न०। तस्य भूच्छायारूपत्वात् तथात्वम्। अशुभशब्दे दृश्यम्। "तमोसखे चेत् सुयशा ततस्त्वा" नैष० ता०। २५विशेषदर्शनविरोधिदोषे २६कार्याकार्याविवेके च न० शब्दार्थचि०। तमस्काण्डशब्दे परे कस्का० विसर्गस्य सः। तमस्काण्डः "अपातमस्काण्डमलीमसं नभः" माघः।

"अवसमन्धेभ्यस्तमसः" पा० अच् समा०। अवतमसं सन्तमसम् अन्धतमसम्। तृतीयान्तेनानेन क्तान्तस्य समासे तृतीयाया अलुक्। तमसाकृतः तमसाच्छन्न इत्यादि। तमसाकृतस्येदं अण्। तामसाकृत तमःसम्बन्धिनि त्रि० स्त्रियां ङीप्।

**तमस** पु० तम–असच्। १कूपे २अन्धकारे च संक्षिप्तसारः ३अन्धकारे ४नगरे न० त्रिका०। ५नदीभेदे स्त्री "संप्राप्य तीरं तमसापगायागङ्गाम्बुसम्पर्कविशुद्धिभाजः"। "विगाहितं वाहनमम्बु पुण्यम्" भट्टिः। "यस्याः स्मरणात् नश्यति पापं वा तमसा" जयमङ्गलः। गङ्गाम्बुसम्पर्कस्य उक्तेः सा गङ्गासङ्गता यमुना शाखाः संश्लि-

रप्रतिमं घोरं वाहनोर्मितरङ्गितम्” भा॰ भी॰ ८८अ॰। पुष्करा॰ देशे इनि ङीप् तरङ्गिन् तरङ्गयुक्तदेशे त्रि॰। नद्यां स्त्री ङीप्।

**तरङ्गिणी** स्त्री तरङ्ग+पुष्करा॰ नदी रूपदेशे इनि ङीप्। नद्याम् अमरः। “तरङ्गिणीवेणिरिवायता भुवः” माघः। “गजवाजिमनुष्याणां शोणितानां तरङ्गिणी” भा॰ भी॰ ६४ अ॰।

**तरङ्गित** त्रि॰ तरङ्गः संजातोऽस्य तार॰ इतच्। १जाततरङ्गे २चञ्चले च। तरङ्गशब्दे उदा॰ दृश्यम्।

**तरण** पु॰ तॄ—करणे कर्मणि भावे वा ल्युट्। १प्लवे (भेला) २स्वर्गे। ३प्लवने ४देशान्तरगमने ५पारगमने च न॰ शब्दार्थचि॰ “भवति भवार्णवतरणे नौका” मोहमुद्गरः। “स्वनदीतरणावर्षणानेध्यदर्शनप्रयाणेषु तु यत्नात् कालद्रव्यैकार्थत्वात्” कात्या॰ श्रौ॰ १।७।१२

**तरणि** पु॰ तॄ—अनि। १सूर्य्ये, २भेलके, ३अर्कवृक्षे, च अमरः ४किरणे हेमच॰ ६ताम्रे च। ७नौकायां, ८घृतकुमार्य्याम् स्त्री मेदि॰। वा ङीप् नौकायां ९तारके १०शीघ्रगन्तरि त्रि॰। “येवा पूर्षु तरणीन् यो वहन्ति” ऋ॰ ७।६७।८। “तरणीस्तारकान् शीघ्रगन्तॄन् वा” भा॰ ११गन्तुतीर्ष्यं वर्त्तमाने “प्रतुद तरणिर्भव” ऋ॰ ३।४८।२ गन्तुतीर्ष्यं वर्त्तते इति तरणिः” भा॰ “सोऽयं व्याकरणार्णवैकतरणिः” बोपदेवः।

**तरणिपोत** पु॰ तरणेः पोत इव। काष्ठाम्बुवाहिन्यां जटा॰।

**तरणिरत्न** न॰ तरणिप्रियं रत्नम्। सूर्य्यप्रिये १माणिक्ये राजनि॰ तरणिमणिप्रभृतयोऽप्यत्र पद्मरागशब्दे २७६२पृ॰ दृश्यम्

**तरणी** स्त्री तरत्यनया तॄ-करणे ल्युट् ङीप्। १नौकायां शब्दरत्ना॰ २पद्मचारिणीलतायां शब्दच॰। ३घृतकुमार्य्यां राजनि॰।

**तरण्ड** पु॰न॰। तॄ-अण्डच्। १वडिशीसूत्रबन्धनकाष्ठे,(फप) २प्लवे पु॰। ३नौकायां स्त्री मेदि॰ स्त्रीत्वपक्षे गौ॰ ङीप्। ४कुम्भतुम्बीरण्डादिकृतप्लवे शब्दरत्ना॰ ५देशभेदे पु॰ शब्दर॰।

**तरण्डक** न॰ तरण्ड+संज्ञायां कन्। तीर्थभेदे “ततो गच्छेत राजेन्द्र ! द्वारपालं तरण्डकम्। तत्र तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः” भा॰ व॰ ८३ अ॰। २वडिशसूत्रमध्यबद्धलघुकाष्ठभेदे (फाता) न॰। “संसारसागरावर्त्तपतज्जन्तुतरण्डकम्” काशीख॰ ११ अ॰। ३नौकायां स्त्री गौरा॰ ङीप शब्दरत्ना॰।

**तरण्डपादा** स्त्री तरण्ड एव पाद इव तरणहेतुत्वात् यस्याः। नौकाभेदे शब्दरत्ना॰।

**तरण्य** तरण गतौ कण्ड्वा॰ यक् भ्वा॰ प॰ सक॰ सेट्। तरण्यति अतरण्यीत् अतरण्यीत्।

**तरत्सम** त्रि॰ तरत्समेत्यादि कृचः सन्त्यत्र अच्। पावमानसूक्तान्तर्गते सूक्तभेदे तरत्समन्दीयशब्दे दृश्यम्। “शुद्धवत्योऽथ कुष्माण्ड्यः पावमान्यस्तरत्समाः” हेमाद्रि श्राद्धकल्पधृतवाक्यम्।

**तरत्समन्दीय** न॰ पावमानसूक्तान्तर्गते सूक्तभेदे। “जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्” मनुः। “तरत्समन्दीदीवतीत्येताः चतस्र ऋचोजपन्” कुल्लू॰। तास्र ऋचः ऋ॰ ९।५८।१ प्रभृतयश्चतस्रः।

**तरतम** त्रि॰ तरेति तमेति प्रत्ययार्थौ बोध्यतयाऽस्त्यत्र अच्। न्यूनाधिकभावेन वर्त्तमाने तरतमौ हि प्रत्ययौ न्यूनाधिकभावबोधकाविति तदर्थकत्वादस्य तथात्वम्। “तरतमयोगयुक्तांश्च भावानतिसृज्यानतिसृज्यानत्युग्रानतिशीतानित्येवमादीन् विवर्जयेत्” सुश्रु॰। तस्य भावः ष्यञ्। तारतम्य न्यूनाधिकभावे न॰ “तारतम्येन वर्त्तमानः” शा॰ भा॰।

**तरद** स्त्री तॄ—करणे अदि। १प्लवे भेलके। कर्त्तरि अदि। २कारण्डवखगे च मेदि॰।

**तरदी** स्त्री तरेण तरणेन दीयते खण्ड्यते दो—खण्डने घञर्थे क गौरा॰ ङीष्। कण्टकयुक्तवृक्षभेदे। राजनि॰। “तरदी मधुरा तिक्ता गुर्वी बल्या कफापहा” राजनि॰। टाप् तरदाप्यत्र तरटीति पाठान्तरम्।

**तरहटी** स्त्री पक्वान्नभेदे “घृतेन मर्दितां दृप्ता फेनिका मेलयेत्ततः। विधाय वटिकास्तस्या घृते मन्दाग्निना पचेत्। प्रक्षिप्ताः खण्डपाकेन कर्पूरेण विमिश्रयेत्। तत एताः समरिचास्तरहट्यस्तु ताः स्मृताः। बल्या पुष्टीकरी हृद्या हृष्या पित्तानिलापहा। सुस्निग्धा कफदा ऽत्यर्थं किञ्चित् सन्धानकारिता” शब्दार्थचि॰ वाक्यम्।

**तरन्त** पु॰ तॄ-झच्। १समुद्रे, २प्लवे, ३भत्ते, ४राक्षसे च ५नौकायां स्त्री गौरा॰ ङीष्। उणादिको॰।

**तरन्तुक** न॰ कुरुक्षेत्रस्थानभेदे। “तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य च। एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते” भा॰ व॰ ८३४ अ॰।

**तरपण्य** न॰ तरस्य नद्यादिपारयानस्य पण्यं मूल्यम्। नद्यादेः पारयानार्थं देये मूल्ये आतरे (भाड़ा) अमरः।

**तरवालिका** स्त्री करपालिका+पृषो०। खड्गभेदे हेमच०।

**तरम्बुज** न० मधुजलके फलभेदे कालिङ्गशब्दे २९७ पृ० तद्गुणादि दृश्यम्।
"अयि हे भामि भद्रेयानि! पौर्णमास्यां निशार्द्धके। तृष्णातुरा महाकाली भ्रमन्ती पितृकानने। तज्ज्ञात्वा ब्रह्मणा तस्यै फलं दत्तं तरम्बुजम्। तत्फलभक्षणात्तृप्ता वरदापि हरप्रिया। यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम्"। उत्तरकामाख्यातन्त्रम्।

**तरल** पु० तॄ–अलच्। १हारमध्यस्थे मणौ, अमरः २हारे, ३तले मेदि०। ४चपले, ५कामुके, ६विस्तीर्णे, ७भास्वरे, ८मध्यशून्ये-द्रव्ये, ९द्रवीभूते पदार्थे च त्रि० हेमच०। १२हीरके रत्ने १०यवाग्वाम्, ११सुरायाञ्च स्त्री भरतः। तत्र भास्वरे "तारावितानतरला इव यान्त्यवल्यः" किरा० "व्याधानुधाव्यमानतरलतारावलगा" काद०। "उत्फल्लिताक्षि! तरले" सा० द०। "तारापतिस्तरलविद्युदिवाभ्रवृन्दम्" रघुः। "वैरायितारस्तरलाः" माघः। हारमध्यमणौ "प्रवालमुक्तास्तरलाश्च हाराः" भा० क० ६४अ० १४ अ०। "हारांस्तरलविन्नांश्च सर्वभाषाविभूषिताः" हरिवं० १५२ अ०। भृशा० अभूततद्भावे क्यङ्। तरलायते "तथापि तरलायते चेतः" उद्भटः।

**तरललोचना** स्त्री तरलं चञ्चलं लोचनं यस्याः। चञ्चलनयनायां स्त्रियां हेमच० २चञ्चलनेत्रयुक्तमात्रे त्रि० कर्म०। ३चञ्चले नेत्रे न०।

**तरलित** त्रि० तरल इवाचरति तरलं करोति तरल+क्विप्-णिच् वा क्त। १आन्दोलिते, २कम्पिते, ३धूते, ४लुलिते च हेम०।

**तरवारि** पु० तरं शत्रूणां गतिं वारयति वृ–णिच्–इन्। खड्गभेदे। (तरवार) इति भाषा। हेमच० असिशब्दे ५५१पृ० तल्लक्षणादिकमुक्तं युक्तिकल्पतरौ च विशेष उक्तो यथा "अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका। ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम्। अभिन्ने दृश्यते यादृक् विभिन्ने घटिते तथा। यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते। नीलवर्णादिकं खड्गे रूपमित्यभिधीयते। तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते। अङ्गातिरिक्तं यज्जातिलक्ष्माङ्गालोपसूचकम्। तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदाः। अङ्गातिरिक्तं खड्गादि यच्छुभालोपसूचकम्। तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम्। यः खड्गे जायते शब्दो दण्डदन्तादिना हते। स ध्वनिस्तुलना मानं ज्ञानमष्टविधन्त्विदम्। पञ्चाद्या निपुणैः खड्गे ज्ञायन्तेऽपि कृत्रिमाः। अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजाविति। शतमङ्गानि चत्वारि रूपाणि जातयस्तथा। त्रिंशन्नेत्राणि जानीयादरिष्टानां तथैव च। भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः। मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः"। खड्गस्य शताङ्गनामानि लौहार्णवे "हृष्यस्वर्णगजोरुवृकदमनस्पृताङ्गकण्टारुणधेतामोजगदातिवामनकषायन्धिस्थिरातैत्तिराः। मालाजीवकषट्पदोर्ध्वमरिचश्यामाम्बवर्हिस्तनचौद्रबुद्रकमणिकातुषयवप्रोहिङ्गुमाषसर्षपाः। सिंहीतण्डुलगोशिराशिवनखश्याहालिकेशोपलक्रोष्टीकाकमाषपत्रतुवरीविम्बीफलीसर्षपाः। नीलीरक्तवचारसोमसुमनाजिह्वीशमीरोहितप्रोष्ठीमारिषभार्गवीक्षुरतडिन्मेघाद्रिगुञ्जाशराः। दूर्वाविल्वमसूरटुण्टुकमठीमार्जारिकाकेतकीमूर्वावज्रकशायचम्पकबलाश्यपोधवंशासनाः। ज्योतीजालपीपिलिकानलरजःकुष्माण्डरोमस्नुहीकर्कन्धूबकुलारनालमहिषस्वर्जुवक्रा इति। प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः क्रमात्"। तस्य चत्वारि रूपाणि। "नीलः कृष्णश्च पिङ्गश्च धूम्रश्चेति चतुर्विधः। वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः"। चतस्रो जातयः। "ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः। जातिभेदे विनिर्दिष्टः खड्गानां मुनिपुङ्गवैः"। त्रिंशन्नेत्राणि। "चक्रं पद्मं गदा शङ्खो डमरुश्च तुरङ्गमः। छत्रं पताका वीणा च मत्स्यश्चिह्नध्वजेन्द्रयः। कुम्भः शूलश्च शार्दूलः सिंहः सिंहासनं गजः। हंसो मयूरो जिह्वा च दमनः खड्ग एव च। तुलिका चामरं शैलः पुष्पमाला भुजङ्गमः। त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै"। त्रिंशदरिष्टानि "छिद्रं काकपदं रेखाभिन्नं भेकश्च मूषिकः। विडालः शर्करा नीली मशको भङ्गसूचिके। त्रिविन्दुः कालिका दारी कपोतः काक एव च। खर्परः शकली क्रोडी कुशपत्रकजालिके। करालकङ्कचञ्चूरश्वकृष्णपक्षत्रिलकम्। वातूलं षड्गिणाख्यञ्च मुनिना तत्त्ववेदिना। प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि"। द्विविधा भूमिः "दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत्"। अष्टधा ध्वनिः। "हंसकांस्याभ्रकानां काकतन्त्रीखरात्मनाम्। ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुन

मुनेर्मताः"। द्विविधं मानम्। "उत्तमाधमभेदेन मानं तद्द्विविधं भवेत्। इति प्रोक्तानि लक्षाणि खड्गानां ज्ञानहेतवे। एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः" खड्गाध्यायः। "तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत"। लौहदीपे "पद्मपत्रसमा भूमिरङ्कं श्वेतं प्रतीयते। अर्घं तत्तु महामूल्यं पद्मवज्रमुदाहृतम्। एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम् १। स्वर्णरेखावली तन्वी यद्भूमौ निकषोपमा। स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् २। गजशुण्डाकृतिर्भूमौ कृष्णावामाङ्कसम्भवः। गजवज्रमिति प्राहुरत्नस्पर्शे तु तद्विदेत्। ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा। अपि क्षीणोऽपि भूपालस्तद्धीयीत साधयेन्महीम् ३। एरण्डबीजप्रतिममङ्कं भूमिः सितेतरा। एरण्डकमिदं नाम्ना शत्रुदर्पणहरः। एतस्य स्पर्शमात्रेण नरः सद्यो विमुच्यते। भट्टिमास्त्रमिदं वज्रं केचिदाहुर्मनीषिणः ४। अङ्कं दमनपत्राभं खड्गे यस्मिन् प्रतीयते। विद्याद्दमनवज्रं तज्ज्ञेयं द्विविधं बुधैः। नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी। तस्मिन् पर्युषितं तोयं गन्धे दमनकोपमम्। तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साधयेत्" ५। शार्ङ्गधरीये "एका सूक्ष्मा सिता रेखा भूमिर्नीला दृढा यदि। सूक्ष्माङ्कमङ्कं वज्रं तद्विद्याल्लक्ष्मीयशःप्रदम्। एतत्कृते भवेच्छोषः सूक्ष्मचिरतरस्थितिः। एतं महात्मकपरे वदन्ति खड्गकोविदाः ६। घटायां दृश्यते भूमौ अङ्कश्च प्रतिबिम्बितम्। अङ्कवज्रं भवेत्तस्य द्विधा भूमिः सिताऽसिता ७। लौहप्रदीपे "निरङ्कं पद्मपत्राभमीषन्नृपमणिनिभञ्च यत्। दुर्लभं तन्महामूल्यं लौहलौहं प्रचक्षते। कृष्णा भूमिर्भवेद्यस्य पीता वज्राङ्कसंकुला। कृष्णवज्रमिति प्राहुस्तत्कृते मोह उच्यते। कृष्णा भूमिः शुकशोभन्नीभञ्च लाङ्गलकृतम्। लाङ्गलीवज्रकं विद्यात् कालसंत्रमथापरे ८। परमं कुम्भमूर्ध्नेदङ्कं भूमिः सितेतरा। पद्मास्त्रमिदं वज्रं शत्रुदर्पनिषूदनम्। यस्यां शुभस्पर्शमात्रेण वह्निरूपां वहेत् शिखाम् तस्य स्पर्शनमात्रेण यत्नकोपः स्फुटेदिति। दुर्लभं तन्महास्त्रं प्राज्ञैः कुत्रापि लभ्यते। तस्याञ्जनमहत्त्वस्य रिपून् नाशयति ध्रुवम् ९। श्वेताऽसिता यदा रेखा आमूलाग्रमवस्थिताः। श्वेताङ्कमिति तद्विद्यादृयशोलक्ष्मीबलप्रदम् १०। अम्भोजदलसङ्काशमङ्कं भूमिः सितेतरा। अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः ११। अङ्कं यस्य गदाकारं भूमिश्चैव सितेतरा। गदावज्रमिदं ब्रूयात् तत्कृते शूलसम्भवः १२। अङ्कं कृष्णतिलाकारं भूमिश्चैव सिताऽसिता। तिलवज्रमिदं ज्ञेयं लक्ष्मीबलयशःप्रदम्। तत्कृते तिलतैलाभा यथा प्रपद्यतेऽधिकम् १३। धूम्रवर्णा भवेद्भूमिरङ्कं वह्निशिखोपमम्। अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम्। अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात्। गात्रे यस्य भवेद् यस्तु तथा स्पर्शात् संक्रमात्। तत्कृते बलवान् दाहो दग्धवच्च व्रणो भवेत्। एतत् परमभाग्येन लभ्यते धरणीतले १४। भूमिः सिताऽसिता यापि अङ्कश्चेत् पिप्पलीप्रभम्। कणावज्रमिदं ज्ञेयमन्तर्दाहस्तु तत्कृते १५। कृष्णा भूमिर्यदीयाङ्गे दृश्यते ग्रन्थिसञ्चयः। ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम्। तत्कृते बलवान् दाहस्तृष्णा च ज्वर एव च १६। माषपर्णीदलाकारमङ्कं कृष्णासिपुत्रिका। स्थिरावज्रमिदं प्राहुस्तत्कृते वेपथुर्भवेत् १७। यदा तित्तिरिपक्षाभमङ्कं भूमिः सितेतरा। एतत्तित्तिरिवज्रं स्यात् तत्कृते बलधैर्यकम् १८। वनमालासमा यस्मिन् माला खड्गे प्रदृश्यते। मालाङ्कवज्रं तद्विद्यात्तत्तोयं गन्धवद्भवेत्। अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात्। एष दाहपरीतानामतिपित्तहतात्मनाम्। भवेत् परमभैषज्यं भाग्येनैतद्धि लभ्यते १९। यदा जीवकसङ्काशमङ्कं भूमिः सिताऽसिता। एतज्जीवकवज्रं स्यात् तत्कृते तत्क्षणाज्ज्वरः २०। भूमिः सिताऽसिता चेत् स्यादङ्कं भ्रमराभमिष्यते। तत्र चेन्मधु विन्यस्तं शोषमाप्नोति केवलम्। एतद्भ्रमरवज्रं स्यात्तत्कृते स्याद्विसूचिका २१। शार्ङ्गं कपिलाभासमङ्कं यस्मिन् प्रतीयते। शार्ङ्गवज्रमिदं प्राहुर्विषवेगनिषूदनम्"। लौहप्रदीपे "शार्ङ्गं कपिलाभासमङ्कं यस्मिन् प्रतीयते। शार्ङ्गवाङ्कन्तु तद्विद्यात् सर्वं नश्याऽहिनाशनम् २२। अङ्कं मरीचसङ्काशं भवेद्भूमिः सितेतरा। मरिचाङ्कमिदं वज्रं तत्कृते कटुरक्तता। तत्प्रक्षालननीरेण नश्यन्ति पीनसादयः २३। यदा सर्पफणाकारमङ्कं भूमिस्तु निर्मला। भुजङ्गवज्रं तद्विद्यात्तत्कृते विषवद्रुजा।

तस्य स्पर्शनमात्रेण भेकः प्राणैर्विमुच्यते। एकस्यास्य प्रसादेन क्वत्स्नां शास्ति महीं नृपः २४। यदाऽश्वखुर-सङ्काशमङ्कं भूमिस्तु निर्मला। अश्वाङ्कमिति तं विद्यात् खड्गं परमदुर्लभम्। तस्य संयोगमात्रेण वाजी-मन्दोऽपि धावति। तस्य क्षालनतोयेन हयानां रोग-नाशनम्। एतद्यते यत्र मूर्च्छा दाहश्च भ्रम एव च २५। मयूरपिच्छसङ्काशमङ्कं भूमिः सितेतरा। बर्हाङ्कमिति तं विद्यात्तद्यते शान्तिरिष्यते। सर्पाणा-मिह सर्वेषामस्य स्पर्शाद्विषघ्नता। एतदेव नृपतिभि-र्भोग्यैः सुलाभि लभ्यते २६। भूमिरञ्जनसङ्काशा-धारा चास्य सिता भवेत्। अञ्जनाख्यमिदं प्रायः सर्व-दैवोपलभ्यते"। लौहप्रदीपे "धारा शुभ्रा भवे-द्यस्य भूमिः कज्जलसन्निभा। कृष्णाङ्केंचितं चापि विद्यात् कज्जलवज्रकम्। मधुवर्णसमा भूमिरङ्कं वा मधुबिन्दुवत्। क्षौद्राख्यमिति जानीयात् जय-लक्ष्मीयशःप्रदम्"। शार्ङ्गधरीये "भिन्नकायो भवेद्यस्य रात्रिन्दिवविशेषितः। मधुरो मधुवर्णाभः स खड्गो देववल्लभः। विशेषाशाल रक्षन्ति सततं मक्षिकादयः"। "आलीनकोषिका यस्य कुन्राङ्कं कुण्डलीकृतम्। कुन्दपज्रकनामानं प्राह नागार्जुनो मुनिः। इदं कुण्डलवज्रं प्राह लौहार्णवे मुनिः। अस्य घातेषु बलवान् दाहो मदविशेषितः २९। यदङ्कं मक्षिकाकारं भूमिश्चैव सिताऽसिता। स्नेहं गृध्रति चैवास्य मक्षिकाङ्कं तमादिशेत् ३०। अङ्कं यदा तृणाकारं या च भूमिः सिताऽसिता। तृणवज्र-मिदं ख्यातं प्राह नागार्जुनो मुनिः ३१। अङ्कं यव-फलाकारं भूमिः कृष्णा सिता तथा। यवाङ्कमिति तं विद्यात्तत्स्पर्शे वणुसम्भवः। एष खड्गाधम-स्त्याज्यो यदीच्छेद्भूतिमात्मनः ३२। अङ्कं व्रीहि-प्रसूनाभं भूमिर्धूम्रा यदि ऽतिरक्। तद्व्रीहिवज्रं जानीयात्सम्पूर्णा भयवर्द्धनम् ३३। अतसीफलसङ्काश-मङ्कं भूमिः सिताऽसिता। अतसीवज्रमाख्यातं तद्यते शिरसोव्यथा ३४। यदा सर्षपबीजाभमङ्कं भूमिः सिताऽसिता। खरधारः खरस्पर्शः सर्षपाङ्कः सु-दुर्लभः ३५। सिंहाकारं भवेद्यस्य भूमिर्यस्य सिताऽसिता। सिंहीवज्रन्तु तद्विद्यात्तद्यते प्रभवेश्वरः। एतत्क्षालन-तोयेन कासरोगापनाशनम् ३६। अङ्कं तण्डुल-सङ्काशं भूमिर्धूम्रा सिताऽसिता। तण्डुलाङ्कमिमं विद्यायशःश्रीवर्द्धनम्। एतत्पर्युषितं तोयं तण्डुलोदकसन्निभम्। अस्य प्रभावान्मनुजो भर्तुर्हि लभते प्रियम् ३७। अङ्कस्तु गोखुराकारं भूमि-राघातनिःसृता। खड्गाधममिदं विद्याल्लोहजं नाम नामतः ३८। स्थूला दीर्घाः सिराः कृष्णा भूमि-श्चैव सिताऽसिता। सिराङ्कमिति तं ब्रूयादेनं खड्गाधमं बुधाः ३९। शिवलिङ्गाकृतिश्चाङ्के धारा-चैव सिताऽथवा। शिवाङ्कमिति तं ब्रूयाच्छत्रुपक्ष-निसूदनम् ४०। यदा व्याघ्रनखाकारमङ्कं भूमिस्तु पिङ्गला। नखवज्रमिदं विद्यात् तद्यते भयधुर्भवेत्। एतदामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ४१। व्याह्र-पुच्छोपमन्त्वङ्कं भूमिर्धूम्रा खराकृतिः। व्याघ्राङ्कमिति जानीयाच्छत्रुवंशोपनाशनम्। अस्य स्पर्शनमात्रेण क्रोधनृमत्ता जहत्यस्तन् ४२। यदा मनुजनेत्राभ-मङ्कं भूमिः सिताऽसिता। नेत्राङ्कमिति जानीयात् संग्रामे विजयप्रदम्। एतत्क्षालनतोयेन नूनमन्धोऽपि पश्यति ४३। अङ्कं वैणवं यस्य भूमिर्धूम्रा सिताऽ-सिता। वैणाङ्कमिति जानीयात् क्लेशदुःखभया-पहम् ४४। निरङ्कं स्थूलप्रकृतिस्तपसाङ्कं विदुर्बुधाः। एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम"। ४५। पद्म-पुराणे "निरङ्का निशिता धारा शाणे वह्निं वम-त्यपि। प्रोक्षीवज्रमिदं ज्ञेयं पृथिव्यां नातिदुर्लभम् ४६। अङ्कं काकपदाकारं भूमिराघातनिःसृता। एष खड्गाधमस्त्याज्यो काकाख्यो भूतिमिच्छता ४७। यदा कपालमङ्केषु दृश्यते स्पर्शतः खरम्। एतद्धि दुःख-जनकं कपालाङ्कं बुधस्त्यजेत् ४८। तन्वी पक्षा बलीतुल्या सुवर्णाङ्काऽसिपुत्रिका। पक्षवज्रकमाख्यातमा युर्वेदविदो जनाः"। लौहार्णवे "सुपर्णसन्निभा भूमिरङ्कं काले प्रतीयते। तत् पक्षवज्रं काकस्य सुपर्णमुपजायते ४९। तुवरीदलसङ्काशमङ्कं यस्मिन् प्रतीयते। तुवरीवज्रमाख्यातं तद्यते शिरसो भ्रमः। एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं निजम् ५०। वेल्लीदलसमा भूमिरङ्कं बिल्वीफलोपमम्। बिल्वी-वज्रन्तु तद्विद्यात्तस्यार्त्तं तिलमुच्यते। पित्तश्लेष्मविका-राणां प्रशमाय प्रयुज्यते ५१। प्रियङ्गुसदृशन्त्वङ्कं भूमिश्च कपिलाकृतिः। फलीवज्रमिदं प्रोक्तं शाणे धूम्रं वमत्यपि ५२। अङ्कं सर्षपपुष्पाभं भूमिश्चैव सिताऽ-सिता। एतत् सर्षपवज्रं स्यात् शाणे वह्निं वमत्यपि।

अपि कुष्ठजिकां याति एतदत्यन्तशोभनम् । एतत्प्रसादात् क्षितिपः समस्तां साधयते महीम् ५३ । नीलीरससमा भूमिरङ्ग नीलीतरङ्गवत् । नीलीवज्रमिदं दृष्टं शाणे वह्निशिखां वमेत् । एष खड्गवरो नृणामरिष्टभयनाशनः ५४ । रक्तास्तिस्रो महारेखा भूमिश्चैव सिताऽसिता । रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् । शाणेन यस्तु रक्तां वा नीलां वा वमते शिखाम् । रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति । क्षतेऽस्य रक्तं सुस्तृणा दारुणा जायते ५५ । अङ्गं वचादलसमं भूमिश्चैव सिताऽसिता । वचावज्रमिदं ज्ञेयं तत्क्षताहिविनाशनम् । एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ५६ । रसोनाङ्गसमं ह्यङ्गं भूमिश्चास्य दलोपमा । रसोनवज्रं जानीयात् शाणे वह्निं वमत्यपि । अस्य घायमतोयेन आमवातविनाशनम् ५७ । निरङ्गा निर्मला भूमिर्धारा तीक्ष्णा खरः स्वरः । सुषमा वज्रमेतत् स्यात् भुवि मात्यन्तदुर्लभम् ५८ । जिह्निनी सरणी दीर्घा यस्या रेखा सुविस्तरा । जिह्नीवज्रमिदं नाम सर्वकामार्थसाधनम् ५९ । अङ्गं शमीपत्रसमं भूमिर्धूम्रा सिताऽसिता । शमीवज्रमिदं ज्ञेयं शनैश्चरसुखावहम् । शाणेषु वमते वह्निं सहते वह्निपीडनम् ६० । रोहितमत्स्यकसदृशमङ्गं भूमिः सिताऽसिता वापि । धूम्रा गम्भीरस्वरयुक्ता धारा तीक्ष्णाऽसिता भवेद्रेखा । रोहिताख्यमिदं वज्रं सर्वारिष्टविनाशनम् । वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते । इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते ६१ । मकरीवल्कलाकारमङ्गं भूमिः सिताऽसिता । मोक्षीवज्रमिदं मोक्षं न्यस्तं तरति वारिधिं । एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः । कदाचिल्लभ्यते भाग्यैर्लभ्यते तेन वै मही ६२ । अङ्गं मारिषपत्राभं भूमिः स्याद्विषमच्छविः । इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदुर्लभः ६३ । भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्दलप्रभा । आघातं सहते नैव एष खड्गाधमो मतः ६४ । धारा तीक्ष्णा क्षुराकारा भूमिरङ्गविवर्जिता । आघातं सहते घोरं शाणे वह्निं वमत्यपि । क्षुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्लभम् ६५ । निर्मला सरला भूमिर्भवेन्नैव कदा कदा । मन्दा तीव्रा भवेद्धारा तडिद्वज्रस्य लक्षणम् ६६ । नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् । मेघाङ्गमिति जानीयाच्छाणे शीतं भवत्यपि ।

एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः । भर्तुः प्रतापं भमवेद्रविबिम्बं यथा घनः ६७ । मन्दा धारा स्वरं गाढ़ा भूमिरङ्गविवर्जिता । पर्वताङ्गमिदं नाम सर्वत्रैवोपलभ्यते ६८ । अङ्गं गुञ्जाफलसमं भूमिर्नीलदलोपमा । गुञ्जावज्रमिदं पृष्ठं तप्तं भवति घर्षणे । शाणे सिन्दूरसङ्काशं रजोवमति चाद्भुतम् । एष खड्गवरो राज्ञा भाग्यदेशोपलभ्यते । अस्य प्रभावात्तन्नास्ति यन्न साधयते नृपः ६९ । अङ्गं तत्र शराकारं भूमिश्चैव सिताऽसिता । धारा तीक्ष्णा च वमति शाणे वह्निसमाः शिखाः । शरवज्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ७० । दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः स्वरः । शाणेन वमते वह्निं दूर्व्वावज्रं सुदुर्लभम् ७१ । अङ्गं बिल्वदलाकारं भूमिश्चैव सिताऽसिता । बिल्ववज्रमिदं शाणे नीलपीते वमेच्छिखे । एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ७२ । मत्सरदलसङ्काशा भूमिरङ्गं मत्सरवत् । मत्सराङ्गमिदं शाणे रजो वमति चाद्भुतम् ७३ । शणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा । शणाङ्गमिति जानीयात् खड्गं परमदुर्लभम् ७४ । शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् । शटीवज्रमिदं प्रायो लभ्यते पुण्यवत्तरम् ७५ । मार्जाररोमसदृशमङ्गं भूमिः सितेतरा । मार्जाराङ्गमिदं नाम्ना रोगशोकभयावहम् । एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ७६ । केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते । विद्यात् केतकवज्रं तत् नाराचसदृशङ्करम्” ७७ । नौकमदीपे “अङ्गं सूर्व्वान्तनुनिभं भूमिर्भूर्वादलच्छविः । शाणेन वमते शुक्लां शिखां मौर्व्वी भवेत्ततः । मौर्व्याङ्गमिदमुत्कृष्टं यशःकीर्त्तिबलावहम् ७८ । विङ्कं तीक्ष्णं खरं गाढं शाणे वह्निर्वमेत् क्षणम् । शिलत्वन्यविधं लौहं वज्राङ्गमिति तद्वदेत् ७९ । कलायपुष्पसदृशमङ्गं भूमिः सिताऽसिता । कलायवज्रं जानीयात् तद्घाते पाक दृश्यते ८० । अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता । शिखां शाणे वमेच्छीतं तिक्तं तत्र जलं भवेत् इदं चम्पकवज्रं स्यात् सर्वत्र विजयप्रदम् ८१ । अङ्गं वलादलसमं भूमिः शुक्ला तथेतरा । वलावज्रमिदं ज्ञेयं नानाभावं भवेद्ध्रुवम् । इत्ययं वातरोगाणां नाशने परमौषधम् ८२ । अङ्गं वटारोहसमं भूमिर्वटदलच्छविः । वटवज्रमिदं ज्ञेयं वरं खड्गाधमं बुधैः ।

तम् । मलिनत्वं न सन्त्यक्ते निर्मलं शुध्यते परम् । तरुणादित्यकिरणसमादिव क्षणे स्थितः । दहेत् सर्वं न तु करं पुरुषस्य हि धारिणः । गात्रमङ्गुलमात्रेण खरतां व्रजति स्फुटम् । एष खड्गवरः सर्वमरिष्टं नाशयेद्ध्रुवम् । अस्य प्रसादात् पुरुषस्त्रिलोकमपि साधयेत् । तस्मादेष मनुष्याणां सुलभो न हि भूतले । दृश्यते प्रायशः स्वर्गे कुशद्वीपे हिमालये १ । धूम्रवर्णं महाधारं तीक्ष्णधारं खरस्वरम् । सर्वाघातसहं सर्वनेत्रवर्णस्वराकरम् । खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः । अस्य क्षते भवेद्दाहस्तृषा दाहो ज्वरो भ्रमः । मृत्युश्च जायते घाते वमेद्रक्तकणान् बहून् । संस्कारे चाप्यसंस्कारे नैर्मल्यं तस्य लक्ष्यते । घातेऽप्यघाते खरता भूरिश्चात्यन्ततीक्ष्णता । रक्तस्पर्शनमात्रेण भिनेदन्तरमन्तरम् । अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते २ । नीलवर्णः कृष्णवर्णः संस्कारे निर्मलो भवेत् । घातेन खरता चास्य घाततुल्यं निकृन्तति । वैश्यजातिरयं खड्गः क्षते स्वल्पाल्पदर्शनम् । नात्युत्कृष्टो नातिहीनः सर्वत्रैवोपलभ्यते ३ । रजतामोदसङ्काशः स्थूलधारो मृदुस्वरः । संस्कारे चैव मलिनः घाते चापि खरेतरः । शूद्रजातिरयं खड्गः क्षते नास्त्यपि वेदना । दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः । प्रायशः सर्वलोकेषु ह्ययमेवोपलभ्यते ४। द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् । त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् । चतुर्णां लक्षणेनैव जातिसङ्कर उच्यते" । अथ त्रिंशन्नेत्राणां लक्षणानि "चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते । तं चक्रनेत्रं जानीयात् भर्त्तुः सर्वार्थसाधनम् । अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् १ । प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् । यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् । एवं खड्गवरो यत्र तत्रैव कमलालया २। ऋज्वी स्थूला यदा रेखा गदाकारा प्रतीयते । गदानेत्रमिदं विद्धि सर्वशत्रुनिसूदनम् ३ । शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते । शङ्खनेत्रमिदं सर्वदेवानामपि दुर्लभम् ४। डमरुप्रतिमं नेत्रं यस्य भूमौ प्रतीयते । सर्वार्थसाधकं खड्गं तं विद्याद्विजयप्रदम् ५ । धनुःस्वरूपं यन्नेत्रं धनुर्नेत्रमुशन्ति तम् । तस्य स्पर्शनमात्रेण मन्त्रोऽपि प्रसुखायते । अयं निशीथे विजने खड्गो भनभनायते ६ । यन्नेत्रमङ्कुशाकारं तं विद्याद्गुणाकरम् । खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्वार्थसाधकम् । अलक्ष्मीपापशमनं [illegible]निवारणम् ७ । छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् । अस्य प्रभावात् क्षीणोऽपि सार्वभौमो भवेन्नृपः । दीनोऽपि च सुखी भूयात् सुखी भूयान्महेश्वरः । महेश्वरोऽपि सचिवः सचिवो मण्डलेश्वरः । मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ८ । पताकाकृति नेत्रन्तु सर्वसम्पत्तिकारकम् । पताकानेत्रमाख्यातं संग्रामविजयप्रदम् ९ । नेत्रं वीणाकृति यदा वीणानेत्रमुशन्ति तम् । निशीथे विजने खड्गो वीणावत् स्वनमावहेत् । अस्य प्रभावात् सर्वे शत्रा अपि वश्या भवन्ति हि १० । मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं विदुः । अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् ११ । शिवलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः । भर्त्तुः सर्वार्थसंसिद्ध्यै शत्रूणां नाशनाय च । वामपार्श्वे तु यात्रायां सर्वत्रोऽयं तथा रणे १२। ध्वजाकारं तु यन्नेत्रं ध्वजनेत्रं वदन्ति तम् । अस्य प्रभावात् भूपालः समग्रां लभते श्रियम् १३ । यस्यार्द्धचन्द्रप्रतिमं नेत्रं स स्यादर्द्धचन्द्रकः । तस्य धारणतो भूपो धरां कृत्स्नां लभते वै १४ । यन्नेत्रं कलशाकारं कलशाख्यं तमादिशेत् । तस्य प्रभावात् सकलां भूमिं भूपो लभेत वै १५। शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् । सर्वार्थसाधकः सर्वारिष्टाऽनिष्टप्रणाशनः १६ । शार्दूलनेत्रं तं विद्यात् शार्दूलाकृतिनेत्रतः । शत्रुश्रेणीविनाशाय संग्रामे विजयाय च १७ । सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः । अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते महीम् १८ । तत् सिंहासननेत्रं स्यात् नेत्रे सिंहासनोपमे । अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् १९ । गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् । अस्य प्रभावात् क्षीणोऽपि लभते राजसम्पदम् २० । नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् । अस्य प्रभावात् भूपालो यशः प्राप्नोत्यनुत्तमम् २१ । मयूराकृतिके नेत्रे तन्नेत्रमिति निर्दिशेत् । अस्य प्रभावात् मनुजः सर्पदर्पान्निकृन्तयेत् २२ । जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति तम् । संग्रामसर्वरेख्येयं विवेष्टि रिपुशिरोरजः २३ । दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् । कर्त्तुं रिपुगणं भूरि चर्वयत्यति

भैरवम् २४। खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम्। अस्य प्रभावान्मनुजस्त्रिलोकीं वशयेदपि २५। मनुष्यपुत्तलिकाकारं पुत्तलिकानेत्रमुच्यते। अयं सर्वेषां महीपानां मनुष्याणां साधयते क्षितिम्। न चेयं पुत्तलिका किन्तु जयलक्ष्मीरिह स्वयम्। तस्मान्नायं मनुष्याणामल्पभाग्येन लभ्यते २६। चामराकृतिनेत्रन्तु चामरनेत्रमिति निर्दिशेत्। अस्य प्रभावात् जायन्ते चामरोद्धृतसम्पदः २७। एकोऽनेकशिखो शैलनेत्रे तच्छैलसंज्ञकम्। अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे। स्थिरीकरोति धरणीं धरणीं पर्वतो यथा २८। पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम्। अस्य प्रभावात्तुष्यन्ति ग्रहाः सर्वाश्च देवताः २९। भुजङ्गसमे नेत्रे सर्पनेत्रमिदं मतम्। अयं शत्रुगणं हन्ति यथा मर्त्यं भुजङ्गमः ३०। सवर्णमसवर्णञ्च तत् सर्वं द्विविधं भवेत्। सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथा परम्। द्वयोरेकत्र दृष्टे च तत् पुनः द्विविधं भवेत्। एकं लोके शुभं, नेत्रं ददाति द्विविधं द्वयोः। मूलमध्याग्रसंस्थानात् तत् पुनस्त्रिविधं मतम्। अग्रे चाग्रफलं ज्ञेयं मध्ये मध्यफलं मतम्। मूले फलं जघन्यं स्यात् प्राह नागार्जुनो मुनिः। एकं द्वे त्रीणि नेत्राणि नात्र संख्याव्यतिक्रमः। एकं धर्मं, स्वर्गकामौ द्वे, त्रीणि च त्रिवर्गकम्। तत् फलानि प्रयच्छन्ति प्राह नागार्जुनो मुनिः। द्विनेत्रमिति जानीयात् समंशं नेत्रयोर्द्वयोः। त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतः परम्। यथोत्तरं गुणवहं खड्गानासुरसुतम्। दिङ्मात्रमिति निर्दिष्टं नेत्राणां शुभदायिनाम्। तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम्। यथा नेत्रस्य संस्थानं तथाऽरिष्टस्य लक्षयेत्। नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः। प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन निन्दितः"। अथ त्रिंशदरिष्टानां लक्षणानि "छिद्रवद् दृश्यते खड्गे स्वभावेन च लक्ष्यते। छिद्रारिष्टमिदं विद्धि भर्त्तुर्धैर्य्यबलापहम् १। यदा काकपदाकारमरिष्टं दृश्यते क्वचित्। अयं काकपदारिष्टः सर्वाभीष्टविनाशनः २। रेखाकारं यदारिष्टमूर्द्ध्वं वा तिर्य्यगेव वा। रेखारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यबलापहम् ३। भिन्नभ्रान्तिकरं पापं भिन्नारिष्टमिदं विदुः। भर्त्तुः कुलं यशो राष्ट्रं नाशत्वा न भजेत स्वयम् ४। यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित्। भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५। अरिष्टे सूचिकाकारे सूचिकारिष्टमुच्यते। अयं खड्गाधमः कुर्य्यात् पत्युः पातकसङ्कमम् ६। विड़ालनयनाकारो बिन्दुरेकोऽतिविस्तरः। विड़ालारिष्टमेतत् स्यात् भर्त्तुः सर्वार्थनाशनम् ७। अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते। शर्करारिष्टमेतत् स्याद्धनबुद्धिविनाशनम् ८। यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित्। नील्यरिष्टमिदं ज्ञेयं यशोलक्ष्मीविनाशनम् ९। अरिष्टे मशकाकारे मशकारिष्टमुच्यते। भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत् १०। व्यङ्गप्रतिमो बिन्दुरेकोऽनेकोऽथ वा यदा। व्यङ्गमारिष्टमित्येष धृतिस्मृतिविनाशनः ११। छत्रीरूपमरिष्टञ्चेदूर्द्ध्वं वा तिर्य्यगेव वा। छत्र्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् १२। त्रयश्चेद्बिन्दवो राजन्! पङ्क्तयो विषमेण वा। उपर्य्युपरि वायोऽशक्तिविनाख्यमरिष्टकम्। तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् १३। कालिकारिष्टमित्येतद्धि धीधृतिस्मृतिनाशनम् १४। एकत्र यदि नश्येत प्रयत्नेनापि संहतः। दारीनाममहारिष्टं सर्वाभीष्टविनाशनम्। अनेकगुणसम्पन्नः खड्गोऽनेकैर्न दृश्यते १५। कपोतपक्षप्रतिममरिष्टञ्चेत्तदाशुभम्। भर्त्तुः कुलं यशो विद्यां बलं बुद्धिञ्च नाशयेत् १६। काकाकृति यदा रिष्टं काकारिष्टं तदोच्यते। अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते १७। अरिष्टे खर्पराकारे खर्परारिष्टमुच्यते। भर्त्तुर्वंशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् १८। यदाश्वत्थोद्भवफलं लग्नं स्यादिव लक्ष्यते। फलकीति स वै खड्गः सर्वाभीष्टनिसूदनः १९। क्रोड़ीमुखसमाकारं यस्यारिष्टं प्रदृश्यते। क्रोड्यरिष्टमिदं नाम भर्त्तुः सर्वार्थनाशनम् २०। कुशपत्रसमाकारं यत्रारिष्टं तु लक्ष्यते। कुशपत्रारिष्टमिदं भर्त्तुर्दुःखाय कीर्त्तितम् २१। यदि छिन्नमिवाभाति मध्ये वा दृश्यते क्वचित्। जरारिष्टमिदं नाम भर्त्तुः कुलधनापहम् २२। एकैकरेखा दीर्घाया यदा पल्लविनी भवेत्। सर्वे नखे करेखेदं करालारिष्टमुच्यते। अयं हि क्षितिपालानां हस्तियोग्यो भवेन्न हि। दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः २३। अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते। अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो धनम् २४। खर्जूरदलप्रतिमं यदाऽरिष्टन्तु लक्ष्यते। खर्जूरारिष्ट-

खरध्वनिरयं मतः । जीवयोद्धानविज्ञानजयतेजो विनाशनः ७ । प्रसरस्यैव यस्यैव कतस्य ध्वनिरुद्भवेत् । प्रसरध्वनिनामायं स निन्द्यः खड्गलक्षणे ८। गभीरतारध्वनिता खड्गस्याशुभलक्षणम् । उत्तानमन्द्रध्वनिता खड्गस्य शुभलक्षणम् । अव्यक्तेनाल्पहीनोऽपि खड्गः सुध्वनिरुत्तमः । कान्तः कुरूपो मनुजो यथा भुवि सुगायनः । सर्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्जितः । स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्जितः । मन्त्रेण वाऽथ दन्तेन तथा लौहशलाकया । कोटेन शर्कराभिर्वा ध्वनिविज्ञानमुच्यते" । अथ द्विविधमानम् । "खड्गानां द्विविधं प्रोक्तं तस्य लक्षणमुच्यते । उत्तमाधमभेदेन भेदो हि द्विविधो मतः । उत्तमं यद्वियामं स्यादङ्गुलानां प्रकीर्त्तितम् १ । अधमं तत्र यत् खर्वं गुरुमानं प्रकीर्त्तितम् २ । तत् पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः । यो दृष्टिर्विंशतिपञ्चायततोऽत्रधारो भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभिः । मानेन चाष्टपञ्चिकः स हि खड्गमध्यो नातिप्रकृष्टमतिकष्टफलं ददाति । यो द्वादशाष्टनवमुष्टिभिरायतः स्यात् मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः । तावत् पर्वैः परिमितस्तु ततोऽधिको वा खड्गाधमो धनयशःकुलनाशनाय" । नागार्जुनोऽपि "यावन्तो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलको यदा । प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् । यावन्तो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः । प्रवेशस्तदर्द्धमुषितः स खड्गो मध्य उच्यते । यावन्तो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे तु तत् । अधमः कीर्त्तितः खड्गस्तदूनोऽनधिकः पर्वैः । भीमानामिदमुद्दिष्टं दिव्यास्तु कथयो मताः" । भोजस्तु "दीर्घता लघुता चैव खड्गविस्तीर्णता तथा । दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः । खर्वता गुरुता चैव मन्दता तनुता तथा । सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः । इति निखिलसदारसत्तमतं गतस्तन्त्रेषु निकषत्र खड्गपट्टैः । नृपतिरिति विचिन्त्य यो बिभर्त्ति स चिरतरां श्रियमच्छिन्नतां लभेत" युक्तिकल्पतरुः ।

तरस् न० तॄ-करणादौ यथायथम् असुन् । १बले २वेगे, ३तीरे, ४वानरे च । ५रोगे शब्दार्थचि० । "बलाय चिच्छिद्रिभाजरसात्मनैव" "कुचयोर्युगेन तरसा कलिताम्" "तरसाक्रम्य करोति कायम" इति च माघः । "वैतान-नाथं तरसा जिगीषुः" रघुः ।

तरस न० तॄ-असच् । मांसे अमरः । "तरसमयाः पूर्वोक्तमायाः" कात्या० श्रौ० २४।५।२० । "तरसमयाः मांसमयाः" कर्कः । तरस्+अस्त्यर्थे अच् । २वेगयुक्ते त्रि०

तरसत् पुंस्त्री० तरस इवाचरति तरस+क्विप् शतृ । मृगभेदे स्त्रियां ङीप् । "अपक्रामत्तरसन्ती न भुज्युः" ऋ० १०।९५।८ । "तरसन्तामनुगतस्य पत्नी" भा० ।

तरसान पु० तरसेनेव तॄ-आनच् सुट् च । नौकायां उज्ज्वलद०

तरस्थान न० ६त० । आतर(पारेर भाड़ा)ग्रहणस्थाने जटा०

तरस्वत् त्रि० तरोऽस्त्यस्य वा मतुप् मस्य वः मत्वर्थे । भान्तत्वात् १वेगयुक्ते भत्वम् २रोगिणि च । स्त्रियां ङीप् । ३चतुर्दशमनोः पुत्रभेदे । "तरस्वी भीरुर्वंशप्रथ तरस्वांस्तथा दत्त च" हरिवं० ७अ० ।

तरस्विन् पु० तरस्+अस्त्यर्थे विनि सान्तत्वात् भत्वम् । १वायौ २गरुडे राजनि० ३वेगवति, ४शूरे च त्रि० अमरः । "असकृदेकरथेन तरस्विना" "विजितेषु तरसा तरस्विना" रघुः । स्त्रियां ङीप् । "कौमोदकी विष्णुगदा तरस्विनी" भाग० ८।१०।२२ । [चक्रिते त्रिका० ।

तराम्बु पु० तरे तरणे अम्बुरिव गभीरत्वात् । नौकाभेदे

तरालु पुं० तराय तरणाय अलति पर्य्याप्नोति अल-उन् । नौकाभेदे हारा० ।

तरि(री) स्त्री तॄ-करणे इ । १नौकायाम्, २वस्त्रपेटके, ३वस्त्रदशायाञ्च हेमच० । "जीर्णा तरिः सरिदतीव गभीरनीरा" उद्भटः । "संसारसागरपारयन्ततरिकाङ्गाय विष्णवे" भा० अनु० ४७अ० । वा ङीप् । "तरीषु तत्रत्यमफल्गु भाण्डम्" माघः ।

तरिक पु० तराय तरणाय हितः वा० ठन् । १प्लवे त्रिका० २नौकायां स्त्री हारा० । तरे तरणार्थं देयशुल्कग्रहणेऽधिकृतः ठन् । ३तरपण्यशुल्कग्रहणाधिकारिणि । "तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान् दश" याज्ञ० । "तीर्थे तेऽनेन तरो नावादिस्तज्जन्यम् शुल्कं तद्ग्रहणेऽधिकृतस्तरिकः" मिता० ।

तरिणी स्त्री तरस्तरणं साध्यं तयाऽस्त्यस्याः इनि ङीप् । नौकायाम् हेमच० ।

तरिष्य तरिष+मतौ कण्ड्वा० यक् प० सक० सेट् । तरिष्यति अतरिषी(षी)त् ।

तरिता स्त्री तरो जातोऽस्याः तारका० इतच् । १तर्जन्यां शब्दच० । २लशुने । (गाँजा) तन्त्रम् "संविदा कालकूटञ्च तालकूटञ्च भुस्तुरम् । अहिफेनं खर्जुरसस्ताडिका तरिता तथा" कुलार्णवतन्त्रम् ।

**तरित्र** न० तरत्यनेन तॄ–इत्र । तरणसाधने नौकादौ । "अतरित्राणिव जवे बाहुभिर्मानिका रणे । पश्यन्तस्ते परांस्तत्र" भा० उ० ६२ अ० ।

**तरिरथ** पु० तरेः रथ इव चालकत्वात् । अरित्रे हारा० ।

**तरी** स्त्री तरि+ङीप् । १तरिशब्दार्थे २धूमे च त्रिका० ३क्रोण्यां जटाधरः । ४वस्त्रदशायां मेदि० ।

**तरीयस्** त्रि० अतिशयेन तरीता ईयसुन् तृचो लोपः । अतिशयेन तारके "स नमस्तरीयानिषरः परिज्मा" ऋ० ५।४१।१२ । स्त्रियां ङीप् इष्ठन् । तरिष्ठोऽप्युक्तार्थे त्रि० ।

**तरीष** पुंन० । तॄ–ईषन् ।१शुक्राणोभवे २नौकायाश्च उज्ज्वद० ३शोभनाकारे भेदे ४व्यवसाये उणा० ५समुद्रे ६समर्थे च संक्षिप्तसा० । ७स्वर्गे पु० ८इन्द्रकन्यायां स्त्री मेदि० ।

**तरीषन्** पु० तॄ–ईषन् छन्दसि नकारस्य नेत्त्वम् । तरणे "विश्वा आशास्तरीषणि" ऋ० १।१०।६ "तरीषणि तरणे" भा० "बहुलवचनात्गमलोऽल्लोपः" माधवः ।

**तरु** पु० तरत्यनेन नरकमारोपकाः तॄ–उन् । १वृक्षे अमरः । "तरवोऽभिनेदुः" भाग० १।२।१ "मुनिवनतरुच्छायां देव्या तया सह शिश्रिये" रघुः ।
"तरुषु पुष्पवरस्त्रैः पक्षिणश्चाप्युक्ताः" भट्टिः । "उप-रिजतरुजानि याचमानाः" माघः । २तारके त्रि० "भूर्भुवःस्वस्तरुस्तारः" विष्णुस० भूर्भुवःस्वस्तरुः लोक-त्रयतारकः" भा० ३तरुविकारे च । "संयमेंरायस्तरुभिः सुते गृभम्" ऋ०५।४४।५ "तरुभिस्तरुविकारैर्पात्रैः" ।

**तरुकूषि** पु० तरौ कूषयति कूषि–इन् ७त० । वागगुद खगे त्रिका० ।

**तरुत्र** त्रि० तॄ–बा०उत्रन् । १तारके २मयाश्वादीनां पालना-धिकृते च । "विप्रस्तरुत्र आदरे"ऋ०८।४६।२२ । "तरुत्रे मयाश्वादीनां तारके मयाद्यधिकृते वा" भा० ।

**तरु(ष)खण्ड** पु०तरूणां समूहः तरु+ख(ष)ण्ड । वृक्षसमूहे एवं वृक्षख(ष)ण्डादयोऽप्यत्र । "द्रुम(ष)खण्डघन दृष्ट्वा रामः सुग्रीवमब्रवीत् । एष मेघ इवाकाशो वृक्ष-(ष)ण्डः प्रकाशते" रामा० कि० १२ अ० । "तरुख(ष)-ण्डमध्ये" पञ्चत० । कदलीख(ष)ण्डः । शा० वा०

**तरुजीवन** न० जीव्यतेऽनेन जीव–करणे ल्युट् ६त० । वृक्षमूले शब्दच० ।

**तरुण** न० तॄ–उनन् । १कुब्जपुष्पे (सेओति) मेदि० २स्थू-जीरके ३एरण्डवृक्षे पु० राजनि० । ४यूनि ५नवे च त्रि० मेदि० "स बभार महाशाखिर्ज्ञोऽपि तरुणो यथा" भा०वि०११अ० । "तरुणं सर्षपशाकं नवोदनं पिच्छि-लानि च दधीनि" छन्दोम० । "वासो वसाना तरुणार्क-रागम्" कुमा० । "वृताऽपि तरुणातपं करुणया हरन्ती नृणाम्" रसगङ्गा० । "तरुणशकलमिन्दोर्बि-भ्रती शुभ्रकान्तिः" सरस्वतीध्यानम् । तरुणस्य भावः इमनिच् । तरुणिमन् तरुणभावे पु० । "वतेन्दुवदना-तनौ तरुणिमोद्गमो मोदते" काव्यप्र० । त्व तरुणत्व न० । तल् तरुणता स्त्री अण् तारुण्य न० तदर्थे । "तारु-ण्यस्य विलासः" सा० द० ।

**तरुणज्वर** पु० कर्म० । "आसप्तरात्रं तरुणं ज्वरमाहुर्मनी-षिणः" इति चक्रद० उक्ते सप्तरात्रमध्यजाते ज्वरे ।

**तरुणदधि** न० कर्म० । सद्योजाते दधनि । "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट्" चाणक्यम् ।

**तरुणाय** अतरुणस्तरुणो भवति भृशा० अभूततद्भावे क्यङ् अतरुणस्य तरुणतामाप्तौ अक० आत्म० सेट् । तरुणायते अतरुणायिष्ट । "उडुस्वरसं पीत्वा वृद्धोऽपि तरुणायते" सुश्रुतः । "वसुदेवो जरां त्यक्त्वा वृद्धोऽपि तरुणायते" हरिवं० २७ अ० ।

**तरुणी** स्त्री तरुण+मध्यमवयोवाचित्वात् ङीप् । १युवत्यां स्त्रियां "आकीर्णमाल्यकबरीं कबरीं तरुण्याः" । "तन्वी तरुण्यः परिवव्रुरेनम्" माघः । २घृतकुमार्यां ३दन्तीवृक्षे ४चिडानामगन्धद्रव्ये ५कुब्जवृक्षे (सेउती) च राजनि० ;

**तरुणीकटाक्षमाल** पु० तरुणीनां कटाक्षाणां माला यत्र प्रियत्वात् । १तिलकवृक्षे राजनि० । ६त० । २तरुणी-कटाक्षाणां पङ्क्तौ च स्त्री ।

**तरुतल** न० ६त० । १वृक्षमूले । "गोत्रैर्यदा तरुतलेषु मह-च्छदानीव" माघः । २तरुस्कन्धे च ;

**तरु(रू)ढ** त्रि० तॄ–तृच् "पसितस्कभितेत्यादिना" पा० नि० उट् ऊट् वा । तारके । "सहावानं तरुतार रथानाम्" "तरुतार तारयितारम्" विव० १०।८ । "को विप्रै-र्वाजं तरुता" १।१२६।२ ।

**तरुतु(तू)लिका** स्त्री तरौ तोलयति दोलयति वा तलम्, तल–उन्नतौ तुल–उन्नमे वा ण्वुल् टाप् कापि अत इत्वम् उणो० । (बादुड) खगभेदे हारा० । तस्य वृक्षे स्वदेहस्य तो(दो)लनात् तथात्वम् ।

**तरुत्र** त्रि० तॄ–बा० उत्र । तारके । "वाजयासस्तरो

अत्यचिकर्षीः" ऋ० ४।२१।२ "तरुमस्तारकः" भा० ।

**तरुनख** पु० तरोर्नख इव व्यथासाधनत्वात्। कण्टके हारा०

**तरुभुज्** पु० तरुं भुङ्क्ते भुज–क्विप् ६त०। (परगाछा) वन्दाके राजनि० ।

**तरुमृग** पु०स्त्री तरौ मृग इव तत्र धावकत्वात्। वानरे शब्दच० स्त्रियां जातित्वात् ङीष् । [हारा० ।

**तरुराग** न० तरूणां रागोरक्तता यस्मात् ५ब०। नवपल्लवे

**तरुराज** पु० तरूणां राजा श्रेष्ठत्वात् टच् समा० । १तालवृक्षे राजनि० । २तरुश्रेष्ठमात्रे च। "देवोपभोग्यमेतद्धि तरुराजसमुद्भवम्" हरिवं० १२६ अ० । आर्षे क्वचित् न टच् । "पारिजातस्य भद्रं ते तरुराजोमहात्मनः" हरिवं० १२६ अ० ।

**तरुरुहा** स्त्री तरुषु रोहति रुह–क । १वन्दाके (परगाछा) राजनि० । २वृक्षरोहिमात्रे त्रि० ।

**तरुरोहिणी** स्त्री तरौ रोहति रुह–णिनि ङीप्। १वन्दाके २वृक्षरोहिमात्रे त्रि० । स्त्रियां ङीप् ।

**तरुवल्ली** स्त्री तरोर्वल्लीव। वन्दाके राजनि० । [शब्दार्थचि० ।

**तरुविलासिनी** स्त्री तरोर्विलासिनीव । नवमल्लिकायाम् ।

**तरुश** त्रि० तरवः सन्त्यत्र लोमा० श। तरुयुक्ते [स्त्रियां ङीप्

**तरुशायिन्** त्रि० तरौ शेते शी–णिनि। खगमात्रे हारा०

**तरुष** त्रि० तृ–बा० उषन्। तारके । "भूरर्द्धैः सतस्यान्तरस्य तरुषः" ऋ० ६।१५।२ । "तरुषस्तारीता" भा० ।

**तरुष** हिंसायां वधकर्म्मसु "वनुष्यति तरुष्यति" निघण्टुक्तेः दिवा० प० सक० सेट् । तरुष्यति अतरोषीत्। "त्वं तुत्यं तरुषन्तः" ८।८८।५ । "तरुषन्तो बाधकान्" भा० । "वनुष्यतिः हन्तिकर्मा तरुष्यतिरप्येवं कर्मा" निरु० ५।२ "इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति" निरुक्तोक्तस्तुतिः वेदे गणव्यत्ययः ।

**तरुष्** न० तरुष्यति हिनस्त्यनेन तरुष–आधारे क्विप् । युद्धे "तनूरुचा तरुषि यत् कृण्वते" ऋ० ६।२५।४ "तरुषि युद्धे" भा० । [ऋ० १।२।४ "तरुमस्तारकः" भा०

**तरुस्** त्रि० तॄ–उषि । तारके । "क्रत्वा दक्षस्य तरुषः"

**तरुसार** पु० ६त० । १कर्पूरे हारा० । ६त० २वृक्षसारमात्रे च । "सुवर्णरजतताम्रायोरीतिदन्तशङ्खमणितरुसारमयानि" सुश्रु० । [राजनि० ।

**तरुस्था** स्त्री तरौ तिष्ठति स्था–क । वन्दाके (परगाछा)

**तरूट** पु० तरोः ऊट इव। उत्पलकन्दे "तरूटो गुरुविष्टम्भी शीतलश्च मतो बुधैः" राजवल्लभः ।

**तरूषस्** त्रि० तॄ–बा० ऊषस् । १तरणकुशले २आपदुद्धारके च । "त्वं न इन्द्र राया तरूषसोग्रम्" ऋ० १।१२९।१० "तरूषसा तरणकुशलेनाक्रामापद्भ्य उत्तारीत्र शक्त्या" भा०

**तर्क** दीप्तौ अक० आकाङ्क्षायाञ्च वितर्के सक० चुरा० उभ० सेट् । तर्कयति ते अततर्कत् त "एतत्तर्कय चक्रवाकहृदयाश्वासाय" प्रसन्नरा० । "तथा तर्कयामि यथानेनाचिरप्रव्रजितेन भवितव्यम्" शकु० । "दक्षिणेनाथ वामेन कतरेण स्विदध्वना। इति मां मन्दताः सर्वे तर्कयिष्यन्ति मानवः" भा० वि० ६१ अ० ।
वि+उत्प्रेक्षायां "तनूनं तत्तु मापस्यतीति वितर्कयामि" पञ्चत० ।

**तर्क** पु० तर्क–भावे अच्। १आकाङ्क्षायां २व्यभिचारशङ्कानिवर्तके ऊहभेदे अविज्ञातेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थे ऊहे ३व्याप्यारोपात् व्यापकप्रसञ्जने। ४आगमाविरोधिन्याये ५आगमार्थपरीक्षणे ६मीमांसारूपविचारे । ७मानसज्ञानभेदे। ८वस्तुतत्त्वोक्तिमात्रे "अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत् । नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः" वेदान्तप० । "आर्षं धर्मोपदेशञ्च धर्मशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनुः "तर्काप्रतिष्ठानात्" शा०सू० । करणे घञ् । ९न्यायशास्त्रे "प्रायस्तर्कमधीते तनुते कुतर्कान्निरन्वयम्" दीधितिः "सुहृदस्तर्काः समस्ताः स्थ मे" कुसु०। "यत्काव्यं मधु वर्षि धर्षितपरास्तर्केषु यस्योक्तयः" नैष० । "तर्के वा मयकर्कशे मम समं लीलायते भारती" प्रसन्नरा०। "गदाधरविनिर्म्मिता विषमदुर्गतर्काटवी" गदा० ८मीमांसाशास्त्रे १०अर्थवादे तर्कः। "अक्ताः शर्करा उपदधातीति विधिः श्रूयते । तत्राञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते । अतस्तर्कोऽर्थवादः । तर्को मीमांसेति कल्पतरुकारः तर्कलक्षणं गौ० सू० भाष्ये उक्तं यथा "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" गौ० सू० ।
"अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थमिति, अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति किं स्विदित्यमाहो स्विन्नेत्थमिति विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति, कारणोपपत्त्या स्यादेवमेतन्नेतरदिति तत्र निदर्शनम् योऽयं ज्ञाता

ज्ञातृधर्मं जानीते तत्र भो जानीयेति जिज्ञासा, स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः, विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति, यद्ययमनुत्पत्तिधर्मकस्ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणमुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ, उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्, उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति, तदेवमेकस्यानेकशरीरयोगः शरीरादिवियोगश्चात्यन्तं न स्यादिति। यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति, सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते। कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति अनवधारणात् अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या न त्ववधारयति न व्यवस्यति न निश्चिनोति एवमेवेदमिति। कथं तत्त्वज्ञानार्थ इति, तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद्भावितात् प्रसन्नादनन्तरप्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति। सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे उपदिष्ट इत्यविज्ञाततत्त्वमनुजानातीति यथा सोऽर्थो भवति तस्य यथाभावस्तत्त्वमविपर्ययं याथातथ्यम्" वात्स्यायनभाष्यम्।

विश्वनाथवृत्तौ चान्यथा सूत्रमिदं व्याख्यातं यथा "तर्क इति लक्ष्यनिर्देशः कारणोपपत्तित ऊह इति लक्षणम् अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् कारणं व्याप्यं तस्योपपत्तिरारोपस्तस्मात् ऊह आरोपः अर्थाद्व्यापकस्य, तथाच व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्यारोपाद्यो व्यापकस्याहार्यारोपः स तर्कः। यथा निर्वह्नित्वारोपाधिनिर्धूमत्वारोपः निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः। ह्रदो निर्वह्निः स्यान्निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति। निर्वह्निः स्यात् द्रव्यं स्यादित्यादिवारणाय व्याप्यस्येति तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थस्तत्र व्यापकेति। न चानुमानादितोऽर्थसिद्धेः सार्थक्यमिति वाच्यम् अप्रयोजकत्वादिशङ्काकलङ्कितेन हेतुनार्थस्य साधयितुमशक्यत्वात्तदेतदुक्तमविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति तत्त्वनिर्णयार्थमित्यर्थः। तत्र चाप्रयोजकत्वाशङ्का तत्र नायमेवम् एवेति भावः। परे तु ऊह इत्येव लक्षणं ऊहत्वञ्च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवसिद्धः। तर्कः किं स्वत एव निर्णायकः परम्परया वेत्यत आह कारणेति कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेणेत्यर्थः तथा च धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यनेन व्यभिचारशङ्कानिरासे निरङ्कुशेन व्याप्तिज्ञानेनानुमितिरिति परम्परयैवास्योपयोग इत्याहुः। स चायं पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसङ्गभेदात्। तत्र स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा यथा यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात्, यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात् यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् एतद्घटभिन्नः स्यादिति वा यथायथम्। तदपेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः सोऽपि पूर्ववत्त्रेधा। तदपेक्षापेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकं चतुःकक्षादावपि स्वस्य स्वापेक्षापेक्षापेक्षित्वसत्त्वान्नाधिक्यम्। अत्रापि पूर्ववत्त्रैविध्यम्। अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था यथा यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात्। तदन्यबाधितार्थप्रसङ्गस्तु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिः। प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकन्तु प्रसङ्गानात्मकत्वात् न तर्कः किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इति संक्षेपः"।

तर्कग्रन्थे जगदीशोक्तं तर्कविभागलक्षणादिकं यथा। "स चायं तर्कः पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गभेदादित्याचार्याः। तत्र स्वापेक्षापादकः प्रसङ्ग आत्माश्रयः। अपेक्षा च उत्पत्तौ स्थितौ च ज्ञप्तौ च ग्राह्या, तत्राद्या, यथा एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति। द्वितीया घटोऽयं यद्येतद्घटजनकः स्यात् एतद्घटभिन्नः स्यादिति तृतीया चायं घटो यद्येतद्घटवृत्तिः स्यात्तदास्य नोपलभ्येतेति स्वापेक्षापेक्षित्वनिबन्धनः प्रसङ्गोऽन्योन्याश्रयः यथा चायं घटो यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यात् इति उत्पत्तौ स्थितौ च स्वयमुदाहार्यम्। स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः

विशेषस्याभावात् कः शङ्कान्तरोत्पत्तेर्वारयितेति वक्तव्यम् मा नामास्तु तदा व्याघातात्मा विशेषस्तद्दर्शनस्तदाहितो वा संस्कारस्तावदस्ति । विशेषावगमतत्संस्कारौ च शङ्काविरोधिनौ । ननु स्वरूपेण क्वचिदपि विशेषस्याव-स्थानं तथेति चेन्न यावद्द्रव्यभाविनो विशेषस्य पूर्व-स्थितस्य यद्दर्शनं तदाहितो वा संस्कारः तस्य कालान्तरे तत्प्रतिधर्मसंशयविरोधित्वे अवयविपाकपक्षे कुम्भस्य परमाणुपाकपक्षे परम्परया तदारम्भकस्य परमाणोः पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितया तस्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात् । यदि च शङ्कायां व्याघातस्तदा शङ्काश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनाच्छङ्कायां शङ्कान्तरं मा भूत् । यदि तु व्यभिचारा-श्रयस्तदा व्यभिचारः स्यादेव व्याघाताश्रयस्य व्यभिचार-स्यापि प्रमित्वापत्तेः । अनादिसिद्धव्याप्तिकास्ते तर्का इति चेन्न सद्गुरोः प्रमितित्वासिद्धेः शरीरे आत्म-प्रत्ययस्य तादृशस्यात्मप्रमात्वोपगमात् अनादित्वासिद्धे-श्चोभयत्राविशेषात् । नापि यद्यत्र व्यभिचारः शङ्क्येत तदा व्याघातः स्यादित्येवं रूपात्तर्काद्व्याघातावगमः व्याघातप्रतिपादकस्य तर्कस्य मूलशैथिल्ये तर्काभासत्वा-पातात् तादृशस्यापि व्याघातोपनायकत्वे व्याघातापत्तेश्च साम्यं प्रकृत एव तर्काभासाद्भवतोऽपि व्याघात उपनेतुम् । अथ तर्कस्य व्याप्तिर्मूलभूताभ्युपगम्यते तत्रापि व्यभिचार-शङ्कायां पुनरनवस्थैव तत्रापि व्याघातापादने पुनरित्य-नवस्थैव । "तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा । त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि । व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् । व्याघाता-वधिराशङ्का तर्कः शङ्कावधिः कुतः ।" अव्यभिचार-स्यैकपरित्यागव्यवच्छेदेनापरान्वयः समञ्जावदृष्टे नष्टे-ऽदृष्टः शङ्क्यत इत्याहुः" ।

तर्कस्य यथा व्याप्तिनिश्चयोपयोगिता तथा तत्त्व० चि० पूर्वपक्षीकृत्य व्यरूपि यथा

"अथोच्यते व्यभिचारज्ञानविरहसहकृतं सहचार-दर्शनं व्याप्तिग्राहकम्, ज्ञानं च निश्चयः शङ्का च सा च क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहितसाधा-रणधर्मदर्शनात् तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात् क्वचित् स्वतः सिद्ध एव । तर्कस्य व्याप्तिग्रहमूलकत्वेनानव-स्थेति चेत् न यावदाशङ्कं तर्कानुसरणात् यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः तथाहि धूमो यदि वह्निसमवहिताजन्यत्वे इति वह्निसमवहिताजन्यः स्याच्चोत्पन्नः स्यादित्यत्र किं धूमोऽ-वह्नेरेव भविष्यति क्वचिद्वह्निं विनापि भविष्यति अहेतु-क एव वोत्पत्स्यत इति शङ्का स्यात् तर्हि स्वक्रियाव्या-घातः स्यात् यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य चोपादानं नियमतः कथं कुर्यात् तेन विनापि तत्सम्भवात् तथा च तदुपादान-मेव तादृशशङ्काप्रतिबन्धकं, शङ्कायां न नियतोपादानं, नियतोपादाने च न शङ्का तदिदमुक्तं "तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति" नहि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमत उपादत्ते तत् कारणं तन्नेत्याशङ्क्यते चेति एतेन व्याघातो विरोधः स च सहानवस्थाननियत इति तस्याप्य-नवस्थेति निरस्तं स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात् अतएव "व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः" इति खण्डन-कारमतमपास्तम् । नहि व्याघातः शङ्काश्रितः किन्तु स्वक्रियैव शङ्काप्रतिबन्धिकेति न वा विशेषदर्शनात् क्वचित् शङ्कानिवृत्तिरेव स्यात् न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः न तु स एव प्रयोजकः अत-एव न तदाहितसंस्कारो न मानान्तरं तर्कस्याप्रमात्वात् तत्र न प्रत्यक्षं व्याप्तिज्ञाने हेतुः तदभावेऽपि शब्दानुमा-नाभ्यां तदुपग्रहात् । ननु सहचारदर्शनव्यभिचारादर्शनव-द्व्यभिचारशङ्काविरहानुकूलतर्कयोर्ज्ञानं व्यभिचारिसाधा-रणमिति न ततोऽपि व्याप्तिनिश्चयः इति चेन्न स्वरूपस-तोरेव तयोर्व्याप्तिग्राहकत्वात् सत्तर्काद्व्याप्तिप्रमा तदाभा-सात्तदप्रमा विशेषदर्शनसत्त्वासत्त्वाभ्यां पुरुषज्ञानमिव । अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरा-पेक्षा यत्र तु व्याप्तिस्मरणं हेतुः तत्र न तर्कान्तरापेक्षेति नानवस्था अस्ति च जातमात्राणामिष्टानिष्टसाधनतानु-मितिहेतुव्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात् तस्य चानुभवमूला चाद्येऽपि व्याप्तिस्मरणपरम्परेति । यत्तु अनादिसिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इति तन्न तत्र प्रमाणानुपयोगेऽनुमान एव पर्यवसानात् । न च व्याप्तिग्रहान्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्ति-कत्वज्ञानमिति वाच्यम् अनुपपत्तेरप्यनुमानत्वात् । अन्ये तु विपक्षबाधकतर्कोद्भावनोपाधिनिरासपक्ष एव तदधीनो

व्याप्तिग्रह इति तदपि न तर्कस्याप्रमाणत्वात्। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न अनवस्थाभयेन तर्कं विना व्याघातात् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्। यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याभावग्रहः अयोग्यानान्तु साध्याव्याप्यत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यनौपाधिकत्वं सुग्रहमिति तदुक्तम् अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात्। ये चानुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रोच्छेदप्रसङ्गः अनुमानमात्रोच्छेदकत्वादेव पक्षेतरोनोपाधिरिति चेत् ध्वान्तोऽसि नहि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे साध्यव्यापकत्वेन तद्व्यतिरेकात् पक्षे साध्यव्यावर्त्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य यत्रलेपात्। अपि च करवह्निसंयोगः यत्नव्यतिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वात्र पावकं तत्र व्याप्यस्य पक्षधर्मत्वे किमप्रयोजकं नाम? तथाहिपक्षबाधकतर्काभावात्र तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति"। तर्कं वेत्त्यधीते वा ठञ्। तार्किक तर्कवेत्तरि तर्कशास्त्राध्येतरि च। "तार्किकशिरोमणिचिन्तनुते" दीधितिः।

**तर्कक** त्रि॰ तर्क–ण्वुल्। १तर्ककारके। २याचके हेम॰।
"काशैः सन्तर्पयामास कृपणांस्तर्ककानपि" भा॰ शा॰ ४५अ॰

**तर्कग्रन्थ** पु॰ तर्काधिकृतः ग्रन्थः शाक॰ त॰ कर्म॰ वा। तर्कप्रधाने ग्रन्थे "तर्कग्रन्थार्थरहितो नैव स्वङ्गात्वपण्डितः" सुश्रुतः।

**तर्कण** न॰ तर्क–भावे ल्युट्। तर्कशब्दार्थोक्ते ऊहभेदे "परकीयांशदोषाद्यैः शङ्कानर्यस्य तर्कणम्" सा॰ द॰

**तर्कमुद्रा** स्त्री "तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुली। प्रसार्य बन्धनं प्राज्ञस्तर्कमुद्रेति तान्त्रिकाः" इत्युक्ते मुद्राभेदे "वाक्यं प्रकोष्ठेऽध्यभवावाधीनं तर्कमुद्रया" भाग॰ ४।६।३२।

**तर्कविद्या** स्त्री ६त॰। गौतमोक्तानां प्रमाणप्रमेयादीनां षोडशानां पदार्थानां विद्यायां, कणादोक्तषट्पदार्थादिविद्यायाञ्च। "आन्वीक्षकी तर्कविद्यामनुरक्तो निरर्थिकाम्" भा॰ अनु॰ ३७ अ॰।

**तर्कारी** स्त्री तर्कमृच्छति ऋ–अण् ङीप्। जयन्तीवृक्षे। अमरः।

**तर्किन(ल)** तर्क–बा॰ इन्(ल) वा। चक्रमर्दवृक्षे रत्नमाला

**तर्किन्** त्रि॰ तर्क–णिनि। तर्ककारके पण्डितभेदे। "त्रैवेद्योहैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा" मनुः। [स्वार्थे क। तर्किक तदर्थे।

**तर्कु** पु॰ कृत–उ नि॰। (टेको) इति ख्याते यन्त्रभेदे। त्रिका॰।

**तर्कुट** न॰ कृत–छेदने बा॰ भावे उट पृषो॰। १(काटनाकाटा) सूत्रकर्त्तनभेदे त्रिका॰। करणे उट। २तर्कौ स्त्री हारा॰ गौरा॰ ङीष्।

**तर्कुपिण्ड** पु॰ ७त॰। तर्कुस्थितमृत्पिण्डे (टेकोर माटुव) अटाधरः। [हारा॰।

**तर्कुपीठी** स्त्री स्वल्पः पीठः ङीप् पीठी ६त॰। तर्कुपिण्डे

**तर्कुलासक** पु॰ तर्कुं लासयति चालयति लस–णिच्–ण्वुल्। तर्कुचालके यन्त्रे (चरका)। हारा॰।

**तर्कुशाण** पु॰ ६त॰। (टेकोरशाण) चालके त्रिका॰।

**तर्क्षु** पु॰ तरक्षु+पृषो॰। व्याघ्रभेदे मृगादने शब्दरत्ना॰।

**तर्ज** पु॰ तज–अच् बा॰ गुणः। अवधारे रत्नमा॰।

**तर्ज** भर्त्सने भ्वा॰ पर॰ सक॰ सेट्। तर्जति अतर्जीत् ततर्ज।

**तर्ज** भर्त्सने चुरा॰ आ॰ सक॰ सेट्। तर्जयते अततर्जत। तर्जना "सीतामभ्यर्थ्य तर्जितः" "तया तु तर्जिताः सर्वा सुखेभीमा यथागतम्"। "राक्षसोऽतर्जयत् तूर्णं पुनश्चाक्षीवयुद्धम्" भट्टिः। बालं पुनर्नातिसर्जेत् गृह्णीयाच्च चैनं तर्जयेत्" सुश्रुतः। आर्षत्वात् पदव्यत्ययः।

**तर्जन** न॰ तर्ज–भावे ल्युट्। भर्त्सने "तरुवृताकृततर्जनविभ्रमाः" माघः। पु॰ तर्ज–युच्। २भर्त्सने स्त्री "यस्या क्रमेण परिशान्तनतर्जनाभिः" माघः। "मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैः" सा॰ द॰।

**तर्जनी** स्त्री तर्ज्यतेऽनया तर्ज–करणे ल्युट् ङीप्। प्रदेशिन्यां वृद्धाङ्गुष्ठसमीपस्थे अङ्गुलिभेदे। "तर्जन्यङ्गुष्ठयोर्मध्ये पितृतीर्थं प्रचक्षते" स्मृतिः। तर्जनशब्दे उदा॰। मुद्राशब्दे भूरि उदा॰।

**तर्जनीमुद्रा** स्त्री "वामहस्तं विधायाथ तर्जनीमध्यमे ततः। प्रसार्य तर्जनीमुद्रा निर्दिष्टा शूलपाणिना" तन्त्रोक्ते मुद्राभेदे।

**तर्जिक** पु॰ तर्जसर्जनमस्त्यस्य ठन्। देशभेदे हेमच॰।

**तर्ण** पु॰ तृण–अच्। वत्से। ण्वुल्। तर्णक तत्रैव, अमरः "तृणयसनाया तर्णकपङ्क्तिः" छन्दोम॰। सद्योजाते २शिशौ च हेम॰। [२जले (भेला) पट्टाख्यकलतरः।

**तर्णि** पु॰ तरत्याकाशपथादिं तॄ–नि करणे नि वा। १सूर्ये

**तर्तरीक** न॰ तॄ–करणे ईक फर्फरीका॰ नि॰। २नौकाभेदे कर्त्तरि ईक। २पारगे त्रि॰ मेदि॰।

तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा । सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा । मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च । देवान् ब्रह्मऋषीन् सर्वांस्तर्पयेदक्षतोदकैः । अपसव्यं ततः कृत्वा सव्यं जानु च भूतले । अग्निष्वात्तांस्तथा सौम्यान् हविष्मतस्तथोष्मपान् । सुकालिनो बर्हिषद आज्यपांस्तर्पयेत्ततः । तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः । दर्भपाणिस्तु विधिना हस्ताभ्यां तर्पयेत्ततः"। अत्र केचित् पितृधर्म्मातिदेशात् दिव्यपितॄणामपि अञ्जलित्रयदानम् । तदसत् "कव्यवाडनलः सोमो यमश्चार्य्यमा तथा । अग्निष्वात्ताः सोमपाश्च बर्हिषदः सकृत् सकृत्" इति छन्दोगपरिशिष्टेन विशिष्टाञ्जलिविधानात् । "पित्रादीन्नामगोत्रेण तथा मातामहानपि । सन्तर्प्य भक्त्या विधिवदिमं मन्त्रमुदीरयेत् । येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः" । अत्र ब्रह्मादिचतुर्तर्पणप्रयोगाकाङ्क्षायां गोभिलयाज्ञवल्क्योक्तप्रयोगविधिपाठः । स च "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु । तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना" । अन्वारब्धेन पश्चाल्लग्नेन अत्रादेव वचनात् तर्पणाभिलापे प्रणवादित्वं तृप्यतामिति च लभ्यते । ततश्च ओं ब्रह्मा तृप्यतामिति प्रयोगः । देवा इत्यादि सर्वेत्यन्तेन मन्त्रलिङ्गाद्देवाञ्जलिः । तथा सनक इत्यादि सदा इत्यन्तेनैकाञ्जलिः एवं पुनरपि । "एकैकमञ्जलिं दत्त्वा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम्" इति व्यासगोभिलस्मृतिवचनात् । नतु द्वौ द्वाविति वीप्साश्रुतेः सनकादिप्रत्येक एव द्व्यञ्जलिरिति वाच्यं प्रत्येकपक्षे द्वौ द्वौ समुदायपक्षे तन्मन्त्रानुरोधेन तथैव युक्तत्वात् । अत्राञ्जलिपदं प्रागुक्तान्वारब्धेनेति श्रवणात्तथाविधहस्तद्वयपरम् तद्वैकल्पिकाञ्जलिपरं वा देवादिपक्षे । पितृपक्षे तु "तौ युतावञ्जलिः पुमान्" इत्येतत्परं पद्मपुराणीयतर्पणपक्षे तु पितृपक्ष एव हस्ताभ्यामिति श्रुतेस्तथैवाञ्जलिः । अन्यत्र नाञ्जलिरित्यवगम्यते । आचारमाधवीये प्रचेताः "मातृमुख्यासु याश्चान्यास्तासां दद्यात्त्रिरञ्जलीन्" । इति । पराशरभाष्ये सनकादिदिव्यमनुष्याणां तर्पणादिकं सामगेन प्राङ्मुखेन तदितरेणोदङ्मुखेन कर्त्तव्यं

तथा च परिशिष्टधृतं सामवेदीयषड्विंशब्राह्मणं "मनुष्याणामेषा दिक् या च प्रतीचीति" । तथाच ज्योतिष्टोमे श्रूयते "प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः उदीचीमसुराः अपरेषामुदीचीं मनुष्याः" । यत्तु "ततश्चोऽन्वञ्जानुरुदङ्मुखाः । दिव्येन तीर्थेन देवानुदकेन तर्पयेत्" इति शङ्खलिखितवचनं देवतर्पणे उदङ्मुखत्वविधायकं तच्छ्रुतिविरोधात् शाखान्तरीयम् असक्तविषयकम् । उदकेनेतिश्रवणात् यवादीति फलाधिक्यार्थं व्यवहारोऽपि तथा । यत्तु "निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ । कुशस्य मध्यदेशेन ऋषितीर्थेन उदङ्मुखः" अनुविष्णुना हन्तप्रयोगेषु अवदानमुक्तं तत् सनकादिप्रत्येकतर्पणे यथा "सनकस्तृप्यतां तस्मै तदुदकं हन्त" इत्यादौ न तु पद्मपुराणीयमिलिततर्पणे "दत्तेनाम्बुना" अनेन दत्तस्य पुनरुपादानाभावात् । ऋषितीर्थेन कनिष्ठाङ्गुलिमूलेन "प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्" इति विष्णुपुराणीयैकवाक्यत्वात् । मरीच्यादि ऋषितर्पणन्तु अङ्गुल्यग्रेण "अङ्गुल्यग्रमार्षम्" इति यमवचनात् एवञ्चार्षदेवतीर्थयोरङ्गुल्यग्रपैकदेशत्वसाधर्म्येण च । मरीच्यादितर्पणे तु दिगाद्याकाङ्क्षायां देववदिति । अतएव योगियाज्ञवल्क्यवचने सनकानित्यत्र मनुष्यानिति विशेषणं दत्तम् । ब्रह्माद्यानित्यत्र देवानिति विशेषणं दत्तमिति व्यवहारोऽपि तथा । मरीचिः "सौवर्णेन तु पात्रेण ताम्ररूप्यमयेन वा । औडुम्बरेण खड्गेन पितॄणां दत्तमक्षयम् । विना रूप्यसुवर्णेन विना ताम्रमयेन च । विना तिलैश्च दर्भैश्च पितॄणां नोपतिष्ठते" । एतच्च समस्ताभावे बोध्यं अत्र एकस्याभावे शङ्खः । "सौवर्णेन तु पात्रेण राजतेनौडुम्बरेण च । खड्गपात्रेण शङ्खेन वाप्युदकं पितृतीर्थं स्पृशन् दद्यात्" । शङ्कुः सुवर्णकोषकः । "अक्षतोदकैर्वाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄंस्तथा" इति छन्दोगपरिशिष्टेनापि पितृपक्षे तिलोदकमात्रविधानञ्च । पद्मपुराणे चन्दनविधानं फलाधिक्यार्थम् । अपसव्यं प्राचीनावीतित्वम् । उपवीतित्वम् प्राचीनावीतित्वञ्चाह गोभिलः "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येऽंसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवति एवं यज्ञोपवीती भवति । सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यकक्षमन्ववलम्बं

भवति एवं प्राचीनावीती भवति” इति। प्रतिष्ठापयति यज्ञोपवीतमिति शेषः। तथाचामरसिंहोऽपि “उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्” इति। “सावित्रीग्रन्थिसंयुक्तं उपवीतं तवाच्युत” इति ब्रह्मपुराणीयपूजादर्शनात्। गायत्रीमन्त्रेण उपवीतं कर्त्तव्यमिति प्रतीयते। लौकिकास्तु सावित्रीग्रन्थिरिति वदन्ति प्रवरसंख्यया वेष्टितग्रन्थिरिति लौकिकव्यवहारः। विद्याकरधृतं “यथा यज्ञोपवीतम्”। इत्यादिवाक्यात् उत्तरीयमपि यज्ञोपवीतवत् सव्यापसव्यत्वादिना धार्य्यं विहितं शुद्धितत्त्वे। पित्रादीत्यादिना मातामहादित्रयपरिग्रहः। तथाच विष्णुपुराणे “त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्। ऋषीणाञ्च यथान्यायं सकृच्चापि प्रजापतेः। पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते!। पितामहेभ्यश्च तथा प्रीणयेत् प्रपितामहान्। मातामहाय तत् पित्रे तत्पित्रे च समाहितः। दद्यात् पित्र्येण तीर्थेन काम्यञ्चान्यत् शृणुष्व मे”। स्मृतिसारे धृतम् “वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। स्नानसाध्यस्वके गात्रे रोमकूपे न कुत्रचित्”। जलतर्पणे रोमरहितप्रदेशे ‘वामबाहौ वस्त्राच्छादिते तिलान् संस्थाप्य. मुद्रारहितदक्षिणहस्ततर्ज्जन्यङ्गुष्ठयोरन्यतरेण तिलान् गृहीत्वा वामहस्ततलेन स्थापयित्वा तर्पयेदिति मदनपारिजातः। अतएव मरीचिः “शुक्लहस्तञ्च दातव्यं न मुद्रां दर्शयेत् क्वचित्। वामहस्ते तिला ग्राह्या शुक्लहस्तञ्च दक्षिणम्”। शुक्लहस्तं प्रसारितहस्तं यथा स्यात्। एवं मुद्रा प्रदेशिन्यङ्गुष्ठयोगे सन्दंशरूपः। शुक्लहस्तञ्च दक्षिणम्” इति दक्षिणहस्तं तिलरहितं कुर्य्यात् इति नैयतकालिककल्पतरुः। तथाच नारदीये “अङ्गुष्ठानामिकाभ्यान्तु दक्षिणस्येतरस्थितान्। तिलान् गृहीत्वा पात्रस्थान् ध्यात्वा संतर्पयेत् पितॄन्”। देवलः। “रोमसंस्थान् तिलान् कृत्वा यस्तु संतर्पयेत् पितॄन्। पितरस्तर्पितास्तेन रुधिरेण मलेन च”। वृष्टिजलसम्पर्के तर्पणनिषेधमाह वायुपुराणम् “मेघे वर्षति यः कुर्य्यात् तर्पणं चाल्पदुर्बलः। पितॄणां नरके घोरे पतितस्य भवेद्ध्रुवम्”। तथा “वृष्ट्युदकैर्न कुर्वीत तथा मेघादिनिःसृतैः”। इति मेघादि दर्शनादिति कौमुदी। योगियाज्ञवल्क्यः “अद्युद्धृतं जलेषु

तिलान् संमिश्रयेज्जले। अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः”। अत्र शेषार्द्धं मदनपारिजाते लिखितम्। “अन्यथा वामहस्तेन” ततस्तर्पणमाचरेदिति”। वायुपुराणम्। “तिलदर्भैस्तु संयुक्तं श्रद्धया यत् प्रदीयते। तत्सर्व्वममृतं भूत्वा पितॄणामुपतिष्ठते”। स्मृतिः “रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम्”। मत्स्यपुराणे “संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा। श्राद्धे जन्मदिने चैव न कुर्य्यात्तिलतर्पणम्”। श्राद्धे अमावास्यातिरिक्तश्राद्धे “मघासु च विशेषेण अमावास्यां तिलोदकैः। वर्षासु दीपदानेन पितॄणामनृणो भवेत्। अमावास्यान्तु ये मर्त्याः प्रयच्छन्ति तिलोदकम्। पात्रमौडुम्बरं प्राप्य मधुमिश्रं तपोधनाः!। कृतं भवति तत् श्राद्धं रहस्यञ्च सदा भवेत्। विशेषतश्च जाह्नव्यां सर्वदा तर्पयेत् पितॄन्। न कालनियमस्तत्र क्रियते सर्व्वकर्म्मसु”। बौधायनः “न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्। सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च”। स्मृतिः “निषिद्धदिनमासाद्य यः कुर्य्यात्तिलतर्पणम्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्”। प्रतिप्रसवमाह स्मृतिः “अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारेऽपि न दोषस्तिलतर्पणे। तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा”। स्कन्दपुराणम् “तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः। योऽन्यथा तर्पयेन्मूढः स विष्ठायां भवेत् कृमिः। विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्”। एतत्तु निषिद्धदिनतर्पणविधायकम्। “तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्” इति मदनपारिजातविद्याकरराजमेधिधृतमरीचिवचनात्। तिलाभावे पितृतीर्थेन प्रतिनिधिना तर्पणम् “तिलानामप्यभावे तु सुवर्णरजतान्वितम्। तदभावे निषिक्तेन तु दर्भतोयेन चान्यथा” इति याज्ञवल्क्यात्। सुवर्णरजतान्वितं सुवर्णरजतस्पृष्टम्। अतएव “सुलभं सकलं पुण्यं यज्ञदानादिकं फलम्। गङ्गातोयेन सतिलं दुर्लभं पितृतर्पणम्” इति भविष्यपुराणे गङ्गातोयस्य दुर्लभत्वमुक्तम् न च तदभावात्तर्पणाभावः शातातपः “पितॄणां पितृतीर्थेन सर्वं पित्र्यपो-

विधि । दक्षिणेनाथ गृह्णीयात् पितृतीर्थे समीपतः” । गोभिलः “गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि । गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति । सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि । पितुरक्षय्यकाले तु षष्ठ्यां तृप्तिमिच्छता । शर्म्मश्राद्धादिके कार्य्यं शर्म्मा तर्पणकर्मणि । शर्म्मणोऽक्षय्यकाले तु पितृणां दत्तमक्षयम्” । काण्र्णाजिनिः “नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः । आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्” । योगियाज्ञवल्क्यः “नामगोत्रस्वधाकारैस्तर्प्याः स्वनुक्रमपूर्व्वशः” । तेन अमुकगोत्रः पिता अमुकदेवशर्म्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधेति प्रयोगः सिध्यति । एवं मातामहादौ । एष चासम्बुद्धिप्रयोगो वाजसनेयीतरपरः । तेषान्तु सम्बुद्ध्यन्तता-माह ब्राह्मणसर्व्वस्वे भवदेवकृतभट्टकर्कः: “प्रणीतपितकस्त्र-मन्त्रस्वत्याचार्य्यनामगोत्रमुदाहृत्य यावता पितृकार्य्यसमाप्तेतस्ते उदकमिति पितॄन् पितामहान् प्रपितामहान् । एकैकशस्त्रींस्त्रीन्दद्यात्” । अत्र असाविति नाम गृह्णातीति कात्यायनोक्तस्य नाम्नः ते इति युष्मत्प्रयोगात् सम्बुद्ध्यन्तता प्रतीयते तस्य सम्बुद्ध्यन्तमात्रवाचित्वात् । असम्बुद्धिप्रथमान्तत्वेऽन्वयापत्तेः । ततश्चामुकगोत्र ! पितरमुकदेवशर्म्मन् तृप्यस्वैतत्ते तिलोदकं स्वधेति प्रयोगः सिध्यति । एवं मातामहानामपि । ततो मात्रादीनां षण्णां तर्पणानि । द्वादशानां मध्ये यो जीवति तं विहाय तत्प्रपितामहादीन् गृहीत्वा पूरयेत् । एवं प्रव्रजिते पतिते च । ततो विमातृव्यभ्रातृपितृव्यमातुलादीं स्तर्पयेत् । शङ्खः “बान्धवानां कृत्वा सुहृदां तर्पयेत्” सुहृदो मित्रादयः । मित्रायाप्यसवर्णाय जलं न देयम् । “सवर्णेभ्यो जलं देयं नान्यवर्णेभ्य एव च” इति याज्ञवल्कीयात् । भीष्मायासवर्णायापि भीष्माष्टम्यां तर्पणं कार्य्यम् “ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम !” इत्यादि वचनात् । मन्त्रस्तु “वैयाघ्रपद्यगोत्राय इत्यादि । ब्राह्मणेनैतत् पितृतर्पणानन्तरं कार्य्यम् अन्येन पितृतर्पणात् पूर्व्वम् । अत्र मौलं वर्णाद्युत्तरमिति हलायुधः । अपसव्येन दक्षिणामुखेन सतिलोदकेन सकृत् कर्त्तव्यम् । ततः कृताञ्जलिः “भीष्मः शान्तनवो वीर” इत्यादि पठेत् । ततो येऽबान्धवा बान्धवा वा इत्यादिना एका-

ञ्जलिर्देयः । योगियाज्ञवल्क्यः “निष्पीडयति यः पूर्व्वं स्नानवस्त्रन्तु तर्पणात् । निराशाः पितरस्तस्य यान्ति देवाः महर्षिभिः । तथा “अन्नप्रकरणस्य अपसव्येन पीडनम् । अन्नप्रकरवत् श्राद्धोच्छिष्टसमीपान्नविकरणवत् तस्याधोवस्त्रस्य “स्नानशाट्यान्तु दातव्या मदक्षिणो विमुक्तये” इति वशिष्ठवचने अधोवस्त्रस्य दुष्टस्यैव शुद्धये न्यहान प्रतीयते । योगियाज्ञवल्क्यः “वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः । भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले” । अत्र मन्त्रमाह गोभिलः “ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः । ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्” । अथस्तो मनुः । “आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विति-क्रमात् । अञ्जलित्रितयं दद्यात् एतत्संक्षेपतर्पणम्” । “आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु सर्व्वे पितरो मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्” ।

अन्वाष्टक्यां तर्पणस्य फलं यथा “तस्यां तिथौ वारिमात्रं पितृणां यः प्रयच्छति । गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः” ब्रह्म॰वै॰ श्रीकृष्णजन्मखण्डः । तर्पणञ्च देवर्षिपितृमनुष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम् । यथा “एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः । नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः । आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् । त्रींस्त्रीनञ्जलीन् दद्यादाकाशे दक्षिणे तथा । वसित्वा वसनं शुक्लं स्थले चास्तीर्णबर्हिषि । विधिज्ञस्तर्पणं कुर्य्यान्न पात्रे तु कदाचन । यदपां क्रूरमध्यं तु यदमेध्यन्तु किञ्चन । अशान्तं मलिनं यच्च तत्सर्व्वमपगच्छतु । गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना । प्रक्षिपेद्दिशि नैरृत्यां रक्षोपहतये द्रुतम् । अनाश्रितन्तु यद्भुक्तं पापात्तु यच्च प्रतिग्रहम् । दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्म्मभिः । पुनातु मे तदिन्द्रस्तु वरुणः स बृहस्पतिः । सविता च भगश्चैव मुनयः सनकादयः । आब्रह्म स्तम्बपर्य्यन्तं जगत् तृप्यत्विति ब्रुवन् । क्षिपेदपोऽञ्जलींस्त्रींस्तु कुर्व्वन् सङ्क्षेपतर्पणम्” गारुडे २१५ अ॰ । तर्पणविशेषस्तु गारुडे २१८ अ॰ वह्निपुराणे नित्याह्निकस्नानविधाननामाध्याये च द्रष्टव्यः । जीवत्पितृकस्य

तर्पणनिषेधो यथा "दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम्" विशेषतर्पणमेव च। न जीवत्पितृको भूप! कुर्यात् कल्पापमाप्नुयात्" कालिका० पु० ८६ अ०।
कर्त्तरि ल्यु। ५तृप्तिकारके त्रि०। "सुरभिर्मावतर्पणः" अमरः। "सन्तर्पणो नाकसदां वरेण्यः" भट्टिः।

**तर्पणी** स्त्री तृप–णिच–करणे ल्युट् ङीप्। गुरुस्कन्दवृक्षे शब्दमा०।

**तर्पणेच्छु** पु० तर्पणमिच्छति इष–उ० णि० २त०। १भीष्मे शब्दर०। २तर्पणेच्छुमात्रे त्रि०।

**तर्पिन्** त्रि० तृप–णिच्–णिनि। १तर्पके प्रीणयितरि स्त्रियां ङीप् सा च २पद्मचारिणीलतायाम् स्त्री शब्दच०।

**तर्पिली** स्त्री तृप–बा० इल गौरा० ङीष्। पद्मचारिण्याम्। त्रिका०। रस्य वा लः। तल्लिकोतिरूपान्तरं तत्रार्थे। स्वार्थे क। तर्पिलिका तत्रार्थे। तत्रापि वा रस्य लः। तल्लिलिकापि तत्रार्थे।

**तर्ब** गतौ भ्वा० पर० सक० सेट्। तर्बति अतर्बीत्। ततर्ब।

**तर्बट** पु० तर्बति सततं गच्छति तर्ब–अटन्। १वत्सरे २चक्रमर्द्दवृक्षे च राजनि०।

**तर्मन्** न० तृ–मनिन्। यूपाग्रभागे अमरः।

**तर्य** पु० ऋषिभेदे। "सदाप्रणो यजते वि द्विषो वधीदाग्रुहन्तः सुतविन्नर्यः" ऋ० ५।४४।१२ "सदाप्रणादयः पञ्चर्षयः" इति भाष्योक्तेः।

**तर्ष** पु० तृष–भावे घञ्। १अभिलाषे २तृष्णायाञ्च अमरः। "निवृत्ततर्षैरुपगीयमानात्" भाग० १।८ तर्षच्छेदो न भवति पुरुषस्येह कल्पषात्। "निवर्त्तते तदा तर्षः पापमन्तर्गतं यदा" भा० शा० २०४ अ०। तृ–कर्मणि करणे–वा स। ३समुद्रे ४भेलके च उज्ज्वल०।

**तर्षण** न० तृष–भावे ल्युट्। पिपासायां जटाधरः। [त्रिका०।

**तर्षित** त्रि० तर्षो जातोऽस्य तार० इतच्। तृषिते पिपासौ

**तर्षुल** त्रि० तृष–बा० उलच्। तृष्णायुक्ते "ज्ञानेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्त्यतर्षुलम्" भा० २१२ अ०।

**तर्ष्यावत्** त्रि० तृष्यावत् वेदे पृषो०। तृष्णायुक्ते। "निरबचिन्नद्धिमस्तमग्रीवात् गोधा" १०।२८।१०। "तर्ष्यावान् तृषावान्" भा०।

**तर्हि** अव्य० तद्+र्हिल्। तस्मिन् काले इत्यर्थे। "रक्षांसि वा एनं तर्ह्यालभन्ते यर्हि न जायते" ऐत० ब्रा०। "यर्हि वाव वो मयार्थो भविता तर्ह्येव वोऽहं पुनरागन्तास्मि" तै० स०।

**तल** प्रतिष्ठायां वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट्। तालयति ते तलति। अतीतलत् त अतालीत्।
तालयाम् बभूव आस चकार। ततास तेलतुः तलम्।

**तल** पु०न० तल–अच्। स्वरूपे "गैरेयनद्धेषु शिलातलेषु" कुमा०। "हिमभास्त्रि दर्पणतले च सुक्तः" माघः। "विदाङ्कुर्वन्तु मरुतस्तलं निहितदक्षिणः" "तलं स्वरूपं प्रमाणं वेति" मल्लिना०। २ज्याघातवारणे। ३कानने ४कार्य्यबीजे न० मेदि०। ५गर्त्ते पु०त्रिका०। ६पादतलस्य मध्ये हेमच०। "इदं रसातलं नाम सप्तमं पृथिवीतलम्" भा० वि० २६० पा०। "अवकाशमिव व्योम कुर्वन् व्योमेव भूतलम्" रघुः। ७तालवृक्षे पु० ८चपेटे (चड़) ९त्सरौ १०खड्गमुष्टौ ११सव्यहस्तेन तन्त्रीवादने पु० मेदि०। १२गोधायां पु० हेमच०।

**तलक** न० तल–बा० वुन्। पुष्करिण्याम् (तलाओ) हारा०।

**तलकीट** पु० कीटभेदे "तलकीटस्य बीजेषु पश्चेदुष्कारिकां शुभाम्" सुश्रुते चिकित्सायाम्।

**तलताल** पु० तलेन करतलेन ताड्यते ताड–कर्मणि घञ् डस्य लः। करतलेन वादनीये वाद्यभेदे "आस्फोटयन् क्ष्वेडयंश्च तलतालं च वादयन्" भा० व० १७८ अ०।

**तलत्राण** न० तलं करतलं त्रायते त्रै–ल्यु करणे ल्युट् वा। करतलत्राणकारके करतलरक्षके चर्म्मणि गोधाभेदे "बद्धाते तलत्राणाः सुयोधनपुरोगमाः" भा० द्रो० ११८ अ०। "निबद्धासितलत्राणः क्षात्रधर्म्ममनुव्रतः" भा० व० ६७ अ०।

**तलप्रहार** पु०तलेन चपेटेन प्रहारः प्र+हृ-घञ् ३त०।(चापड़मारा) चपेटाघाते। "तलप्रहारपतनैः सहसा भीमनिस्वनम्" रामा० लं० ७६ अ०। [तलमीने अमरे पाठान्तरम्।

**तलमीन** पु० तले जलनिम्ने स्थितो मीनः। (चिङ्गुड़ि)

**तलयुद्ध** न० तलस्य चपेटस्याघातेन युद्धम्। चपेटाघातेन युद्धे (चड़ाचड़ि) "बालानां तलयुद्धे संग्रामः सनृयुद्धे वा" ह० सं० ४७अ० तलयद्ध इति पाठान्तरम्।

**तललोक** पु०तलस्थो निम्नस्थः भूमेस्तलस्थो लोकः। पाताले "सत्लोकपालान् स्वर्गलोकपालांस्तलोकपालांस्तललोकपालान्" भाग० २।४६।४२ अ०।

**तलव** त्रि० तलं हस्तादितलं वाति निहन्ति ताड़यति वा–गतिहिंसनयोः क। तलवाद्यवादके। "तालुतालाय तलवम्" यजु० ३०।२१। "तलवं तलवाद्यवादनम्" वेददी०।

**तलवकार** पु॰ सामवेदशाखाभेदे "छान्दोग्ये तलवकारा- (तल्वकारा) दिशाखाभेदेषु विलक्षणगीतिप्रेतवोऽक्षर- विकाराद्य आम्नायन्ते" सा॰ स॰ भाष्यम्। तस्योपनिषत् "केनेषितं पततीत्यादि"।

**तलवारण** न॰ तले बाहुतले वारयति ज्याघातम् वारि- ल्यु। ज्याघातवारणार्थे हस्ततले बद्धे (चामाटी) चर्मभेदे

**तलसारक** न॰ तले वक्षःस्थलाधोभागे सारोबलं यस्मात् कप्। अश्वस्य वक्षोऽधोभागे बद्धरज्जुभेदे (तङ्) हेमच॰।

**तलहृदय** न॰ तलस्य हृदयमिव। पादतलस्य मध्यस्थाने हेम॰

**तला** स्त्री तलं ज्याघातवारणार्थत्वेनास्त्यस्याः अच्। १ज्याघातवारणार्थे हस्तबद्धे चर्ममये पदार्थे (चामाटी) अमरे पाठान्तरम् तलाऽस्त्रम् इति। २गोधायुक्ते त्रि॰। "ततः कवचधारी च तली खड्गी शरासनी" भा॰ उद्यो॰ १५७ अ॰।

**तलाची** स्त्री तलमञ्चति अनुच—क्विप् ङीप् अङ्कतेरलोपे पूर्वाणो दीर्घः। नलनिर्मितकटे (टकना) त्रिका॰।

**तलातल** न॰ सप्तसु अधोभुवनेषु पातालभेदे "ततोऽधस्ता- त्तलातले मयोनाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरा- रिणा त्रिलोक्याः संचिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत् प्रसादाल्लब्धपदो मायाविनामाचार्य्यो महादेवेन परि- रक्षितो विगतसुदर्शनभयो महीयते" भाग॰ ५।२४।२८ "अतलं वितलं सुतलं तलातलं महातलं रसा- तलं पातालमिति" भाग॰ ५।२४।११। पातालकथने।

**तलिका** स्त्री तलं वक्षःस्थलतलं अवलम्बनत्वेनास्त्यस्य वा॰ ठन्। अश्वहृदयवद्धरज्जुभेदे(तङ)हेमच॰।

**तलित्** स्त्री तडित्+डस्य लः। विद्युति शब्दार्थचि॰।

**तलित** न॰तल+तारका॰ इतच्। भक्ष्यमांसभेदे। यथा"शुद्ध- मांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनराज्ये संभृष्टं तलितं प्रोच्यते बुधैः। अस्य गुणाः। "तलितं बलमेधाग्निमांसौजःशुक्रवृद्धिकृत्। तर्पणं लघु सु- स्निग्धं रोचनं दृढताकरम्" भा॰प्र॰।

**तलिन** न॰ तल—इनन्। १शय्यायां त्रिका॰। २विरले ३स्तोके ४स्वच्छे त्रि॰ मेदि॰ ५दुर्बले त्रि॰ हेम॰।

**तलिम** न॰ तल—वा॰ इमन्। १कुट्टिमे (छात) २शय्यायां ३खड्गे ४वितानके च मेदि॰।

**तलुन** पु॰ तल—उनन्। १वायौ २यूनि त्रि॰ स्त्रियां ङीप्।

**तलेक्षण** पुंस्त्री तले ईक्षणमस्य। शूकरे शब्दार्थकल्प॰ स्त्रियां जातित्वात् ङीप्।

**तलोदरी** स्त्री तलं निम्नमुदरमस्याः बहुव्रीहित्वेऽपि नासिकोदरेत्यादिविशेषोक्तेः ङीप्। कृशोदर्य्यां भार्य्यायां शब्दार्थकल्पतरुः। [त्रिका॰।

**तलोदा** स्त्री तले उदकं यस्याः उदकस्य उदादेशः। नद्यां

**तल्क** न॰ तल—वा॰ कन् न कित्त्वम्। वने त्रिका॰।

**तल्प** पुंन॰ तल-पक्। १शय्यायाम्, २अट्टालिकायां, ३दारेषु च अमरः। "शुग्विषं तल्प आसीनमर्हयेत् प्रथमं गवा" मनुः। "औदुम्बरस्तल्पो भवति" तैत्ति॰ १।२।६।५ "सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार" रघुः। "यत्रातपे दातु- मिवाधितल्पम्" माघः। "सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः"। "गुरुतल्पोऽभिभाष्यैनस्तप्ते शय्यादयोमये" मनुः। "गुरोस्तल्पं तल्पं कलत्रं यस्य" प्राय॰वि॰। "आचार्य्यानीं स्वां च सुतां गच्छंस्तु गुरु- तल्पगः" याज्ञ॰। "पितृव्यदारगमने भ्रातृभार्य्यागमे तथा। गुरुतल्पव्रतं कुर्य्यान्नान्या निष्कृतिरुच्यते" संवर्त्तः "न कुर्वे गुरू तल्पवलस्य स्यादाल्प तल्पजः" "यस्तल्पजं प्रमीतस्य क्लीबस्य व्याधितस्य वा" मनुः। तल्पे भवः यत् तल्प्य यज्ञभेदे पु॰ "नमस्तल्प्याय गेह्याय" यजु॰ १६।४४। तल्पे साधुः यत्। तल्प्य शय्याशायी त्रि॰ "शतं तल्प्या राजपुत्रा आशापालाः" शत ब्रा॰ १३।१।६।२।

**तल्पकीट** पु॰ तल्पे शय्यायां जातः कीटः शा॰ त॰। (छार- पोका) कीटभेदे शब्दार्थचि॰।

**तल्पक** पु॰ तल्पं तल्पसंस्कारेऽधिकृतः वा॰ कन्। शय्या- रचनायामधिकृते दासभेदे। "सूपध्यञ्जनकर्त्तारस्तल्पका व्यवकास्तथा। प्रसाधका भोजकाश्च गात्रसंवाहका अपि" कामन्दकीयनीतौ चरभेदकथने।

**तल्पन** न॰ तल्प इवाचरति, तल्प+क्विप्—कर्त्तरि ल्यु। १करिपृष्ठे २पृष्ठवंशस्य मांसे च त्रिका॰।

**तल्पल** न॰ तल्पं तदाकारं लाति ला—क। करिपृष्ठवंशे "सान्द्रत्वक्तल्पलद्युतानिबिडकलाः" माघः "तल्पलाः पृष्ठवंशाः" मल्लि॰ त्रिकाण्डश्च्यां तल्पनेत्यत्र तल्पलेति वा पाठः आवे तल्पनेति वा पाठः। अन्यतरपाठः लिपिकर- प्रमादकृत इत्यवधेयम्।

**तल्ल** त्रि॰ तच्छिद्रं लीयते ली—ड। १तच्छिद्रे बीजे "तज्जला- निति शान्त उपासीत छान्दोग्योप॰ तल्लानित्यस्य भाष्ये "तज्जत्वात् तल्लत्वात् तदनत्वाच्च तज्जलान्" २विले त्रिका॰ ३जलाधारविशेषे (तलाओ हिन्दिभाषा) मेदि॰।

**तल्लज** पु॰ तत् प्रविष्टं यथा तथा लजति लज—बाल्ये अच्।

प्रशस्ते अयन्तु उत्तरपदस्थः "प्रशंसावचनैश्च" पा० ज्ञाप-
कार्थनित्यं समासः अजडतल्लज कुमारीतल्लज इत्यादि ।

**तल्लिका** स्त्री तल्ले चीयते चि—ड संज्ञायां कन् कापि अत इत्वम् (ताली) कुञ्जिकायां शब्दार्थचि० ।

**तल्ली** स्त्री तल् प्रतिष्ठं यथा तथा लसति लस—ड गौरा० ङीष् । १तरुण्याम् मेदि० ।

**तल्वकार** पु० सामवेदस्य शाखाभेदे तलवकारशब्दे दृश्यम् ।

**तवक्षीर** न० तु—अच् नित्यकर्म० । (तिखुर) ख्याते पदार्थे "तवक्षीरन्तु मधुरं शिशिरं दाहपित्तहृत् । क्षयकासकफश्वासास्रदोषं हन्ति सेवनात्" २गव्यलतायां स्त्री राजनि० । [ यवासशर्कराभेदे राजनि० ।

**तवराज** पु० तु—अच् ततः पूर्वः सन् राजते राज—अच् ।

**तवराजोद्भव** पु० तवराजादुद्भवति उद्+भू—अच् । यवासशर्कराजाते खण्डभेदे । "तवराजोद्भवः खण्डो दाहतृष्णाविनाशनः । मूर्च्छाभ्रमस्य तापस्य श्वासस्य च निवारकः । इन्द्रियतर्पणः शीतः सदा मधुर एव च" राजनि० ।

**तवर्ग** पु० त+वर्ग । त थ द ध न इत्येषु वर्णेषु । तत्र भवः वर्गान्तत्वात् छ । तवर्गीय तत्र भवे वर्णे ।

**तवस्** न० तु—असुन् । १बले २महति ३वले च निघण्टुः । "अस्मादहचित्तं तवसा तावस्यः" ऋ०१।१०।८ "तवसा बलेन" भा० । "तवस्तमस्तवसां वज्रबाहो ।" ऋ० २।३३।३ । "पर्याह्वाभि तवसं जग्मुरध्याम्" ऋ० १०।२८।७ । तवसे बलाय हितं—यत् । तवस्य बलहिते बलसाधने च त्रि० "तव्यो तवस्यमनुदाति" ऋ०२।२०।८। तवोऽस्त्यस्य मतुप् मस्य वः सान्तत्वात् मत्वर्थे न विसर्गः । तवस्वत् बलयुक्ते त्रि० "वीर उग्रते तवस्वान्" ऋ० ८। ९७।४६ । पक्षे विनि तवस्विन् तदर्थे त्रि०उभयत्र स्त्रियां ङीप्।

**तवागा** त्रि० तवसा बलेन गीयते गै—कर्मणि क्विप् पृषो० । प्रवृद्धबलयुक्ते "स्तुहि स एव स्थविरं तवागाम्" ऋ० ४।१८।१० "तवागाम् प्रवृद्धबलम्" भा० ।

**तविपुला** स्त्री चतुर्थवर्णात् परं तगणपूर्वके विपुलाछन्दोभेदे "तोऽब्धेस्तत्पूर्वान्या भवेत्" छ०र० । अब्धेश्चतुर्थाक्षरात् परं तगणश्चेत् तपूर्वा तविपुलानाम छन्दः इति तदर्थः ।

**तविष** पु०स्त्री०तव—"तवेर्णिद्वा" उणा० टिषच् । १स्वर्गे २समुद्रे च "तविषताविषावर्णित्व लिङ्गं चाहतः काचित्" । "३देवकन्यायां ४भूमौ ५नद्याञ्च स्त्री उज्ज्व० टित्त्वात् ङीप् । ६बले ७महति त्रि० निघण्टुः । इन्द्रे ८व्यवसाये पु० सि०कौ० ९बलवति च त्रि० । "वनो हत्वायां तविषो बभूव" ऋ०८।९६।१८ "तविषः प्रवृद्धो बलवान्वा" भा० "अहं शुष्मविष्णुविषान्" १।१६५।६ मेदिन्यां तवीषेति दीर्घमध्यपाठो लिपिकरप्रमादकृतः ह्रस्वमध्यपाठस्यैव प्रयोगदर्शनात् उणादिसूत्रे तथैव व्युत्पादितत्वाच्च । [४गुप्सिते च ।

**तष्ट** त्रि० तक्ष—क्त । १तनूकृते २छिन्नाकृते, च । ३ताडिते

**तष्टि** स्त्री तक्ष—क्तिन् । तक्षणे ।

**तष्टृ** पु० तक्ष—तृच् । १त्वष्टरि (छुतार) २जातिभेदे ३विश्वकर्मणि ४आदित्यभेदे च रमानाथः ।

**तस** अलङ्कारे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । तंसयति-ते तंसति अततंसत्-त अतंसीत् । ततंस "प्रतिजानामीति ते पिता गर्भे मुष्टिमतंसयत्" यजु० २३।२४ अवतंसः उत्तंसः । भ्वादित्वपक्षे अस्य आत्मनेपदित्वं केचिदिच्छन्ति तंसते अतंसिष्ट ।

**तस** उत्क्षेपे दिवा० पर० सक० सेट् । तस्यति इरित् अतसत् अतसीत् अतासीत् । ततास तेसतुः । उदित् तसित्वा तस्त्वा । तस्तः "यस्य तस्य विना मर्त्ती तेनेति करणं विना" उद्भटः ।

**तसर** पु० तस्—क्सरन् ।(गुटिपोकार सुता) सूत्रभेदे उणा०

**तस्कर** त्रि० तत् करोति कृ—ट "तद्बृहतोः करपत्योः" पा० सुट् दलोपश्च । १चौरे २छागागारे (पिड़िङ) शाकभेदे पु० रत्नमा० । ३मदनवृक्षे पु० शब्दा० ४श्रवणे "आहृता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता" रघुः "तस्करः कर्णचौरयोरिति" रघुटीकाधृतकोषान्तरं मल्लिनाथेन तु अस्य न श्रवार्थकता स्वीकृता किन्तु तस्य श्लोकस्यार्थान्तरमाह स्म यथा "तस्करता चौर्यं परस्वेभ्यः परधनेभ्यः अविषयभूतेभ्यः आहृता श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता अपहार्याभावात् तस्करशब्द एव अपहृतः इत्यर्थः" । ५कोपनायां नार्यां स्त्री शब्दार्थकल्प० टित्त्वात् ङीप् ।

**तस्करस्नायु** पु० तस्करस्य प्रकाशकस्येव स्नायुरिव नाडिका यस्याः । काकनासालतायाम् राजनि० ।

**तस्थिवस्** त्रि० स्था—क्वसु । स्थितवति "स पाटलायां गवि तस्थिवांसम्" "तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि" रघुः ।

**तस्थु** त्रि० स्था—बा० कु द्वित्वञ्च । स्थावरे "देहस्य सर्वसंघातो जगत् तस्थुरिति द्विधा" भाग० ७।७२।कौ० ।

**तक्ष्युस्** पु० ब० व० स्मा–भा० कृषि क्षित्वस्य । मानवे निघण्टुः ।

**ताक्षण्य** पुंस्त्री तक्ष्णोऽपत्यं कारित्वात् यञ् । तक्ष्णोऽपत्ये । पक्षे "तक्ष्णोऽण उपसंख्यानम्" पा० अण् अपूर्वत्वादनोऽल्लोपः । ताक्ष्ण तत्रार्थे पुंस्त्री० ।

**ताच्छीलिक** पु० तच्छीलार्थे विहितः ठञ् । तच्छीलार्थविहिते प्रत्यये । "ताच्छीलिकेषु वा सरूपविधिर्नास्ति" पा० "ताच्छीलिकेष्वेऽण् कृतानि भवन्ति" व्या०प० । [स्वभावे ।

**ताच्छील्य** न० तत् शीलमस्य तस्य भावः ष्यञ् । नियततत्-

**ताज(जि)क** न० नीलकण्ठादिप्रणीते वर्षलग्नप्रश्नादिनिरूपके ज्योतिषग्रन्थभेदे । "न स्याच्छुभं क्वचन ताज(जि)कशास्त्रगीतम्" नील० ता० । [शीघ्रे निघण्टुः ।

**ताजत्** त्रि० तनृज–सङ्कोचे बा० अदि हविनलोपौ ।

**ताट(ड)ङ्क** पु० ताड्यते ताडः पृषो० वा डस्य टः तथाभूतोऽङ्कः चिह्नं यस्य शक० । कर्णभूषणभेदे द्विरूपको० ।

**ताटस्थ्य** न० तटस्थस्य भावः ष्यञ् । १औदासीन्ये २नैकट्ये च

**ताड** पु० चु० तड–भावे अच् । १ताडने २गुणने च कर्म्मणि अच् । ३शब्दे ४मुष्टिमेयतृणादौ मेदि० ५पर्वते हेमच० ।

**ता(ट)ड़का** स्त्री । राक्षसीभेदे । तस्या उत्पत्तिकथा रामा० बा० २५ अ० ।

"पूर्वमासीत् महायक्षः सुकेतुर्नाम वीर्य्यवान् । अनपत्यः शुभाचारः स च तेपे महत्तपः । पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा । कन्यारत्नं ददौ राम ! ताड़(ट)कां नाम नामतः । ददौ नागसहस्रस्य बलं चास्याः पितामहः । न त्वेव पुत्रं यक्षाय ददौ चासौ महायशाः । तान्तु बालां विवर्द्धन्तीं रूपयौवनशालिनीम् । जम्भपुत्राय सुन्दाय ददौ भार्य्यां यशस्विनीम् । कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत । मारीचं नाम दुर्द्धर्षं यः शापाद्राक्षसोऽभवत् । सुन्दे तु निहते राम ! अगस्त्यमृषिसत्तमम् । ता(ट)ड़का सह पुत्रेण प्रधर्षयितुमैच्छत । भक्षार्थं जातसंरम्भा गर्ज्जन्ती साभ्यधावत । आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः । राक्षसत्वं भजस्वेति मारीचं व्याजहार सः । अगस्त्यः परमामर्षस्ता(ट)ड़कामपि शप्तवान् । पुरुषादी महायक्षी विकृता विकृतानना । इदं रूपं विहायाशु दारुणं रूपमस्तु ते । सैषा शापकृतामर्षा ता(ट)ड़का क्रोधमूर्च्छिता । देशमुत्सादयत्येनमगस्त्याचरितं शुभम् । एनां राघव ! दुर्वृत्तां यक्षीं परमदारुणाम् । गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम्" । "ताड़का चलकपालकुण्डला" रघुः । "तां ताड़काख्यां निजघान रामः" भट्टिः । [रत्नमा० ।

**ताड़काफल** न० तारकेव फलमस्याः ह्रस्व च । वृहदेलायां

**ताड़कारि** पु० ६त० । रामचन्द्रे तस्य ताड़काहननकथा । रामा० अयो० २६ अ० । "तामापतन्तीं वेगेन विक्रान्तामशनीमिव । शरेणोरसि विव्याध पपात च ममार च" ।

**ताड़केय** पु० ताड़काया अपत्यम् ढक् । मारीचे "मारीचः सुन्दपुत्रश्च ताड़कायां व्यजायत" हरिवं० २ अ० ।

**ताड़कायन** पु० विश्वामित्रपुत्रभेदे । "महान्मुनिश्च कपिलस्तथर्षिस्ताड़कायनः" भा० अनु० ४ अ० । विश्वामित्रपुत्रकथने ।

**ताड़घ** पु० तालं हन्ति हन+टक् नि० उप० स० । तालवादके शिल्पिभेदे अशिल्पिनि तु अण् । ताड़घात इत्येव ।

**ताड़न** न० चु० तड–भावे ल्युट् । १आघाते । "लालने बहवो दोषास्ताड़ने बहवो गुणाः" चाणक्यम् । "अपतंशोत् पणताड़नानि वा" कुमा० । २दीक्षाङ्गे दीक्षणीयमन्त्रसंस्कारभेदे च । "मन्त्रवर्णान् समालिख्य ताड़येच्चन्दनाम्भसा । प्रत्येकं वायुना मन्त्री ताड़नं तदुदाहृतम्" शार०ति० । वायुना यंबीजेन । ३गुणने च ।

**ताड़नी** स्त्री ताड्यतेऽनया ताड़ि–करणे ल्युट् ङीप् । अश्वादेस्ताड़नसाधने कशायां (चावुक) अमरः ।

**ताड़पत्त्र** न० तालस्य पत्त्रमिव लस्य डः । कर्णभूषणभेदे ताड़ङ्के हेमच० ।

**ताड़ाग** त्रि० तड़ागे भवम् अण् । तड़ागभवे जलादौ अण्पत्त स्त्री "ताड़ागं मातलं स्वादु कषायं कटुपाकि च । हेमन्ते सारसं ताड़ागं वा सेवेत" सुश्रुतः ।

**ताड़ि** स्त्री पु० तड़ इन् । (ताड़ियात) १पत्त्रप्रधाने वृक्षे भरतः वा ङीप् तत्रार्थे स्त्री मेदि० । २आभरणभेदे दुर्गसिंहः । "प्रक्रीड़ितचपलकपिलकपिकुलकरतलताड़नतरलिततालीपुटैः" काद० ।

**ताड़ुल** पु० चु० तड़–उल । ताड़के संक्षिप्तसा० ।

**ताड्यमान** त्रि० चु० तड़–कर्मणि शानच् । १ताड़नकर्मणि "श्रोतुर्वितन्त्रीरिव ताड्यमाना" कुमा० । २पटहे पु० त्रिका० । [ताण्डवशब्दे दृश्यम् ।

**ताण्ड** न० तण्डिना मुनिना कृतम् अण् । नृत्यशास्त्रे

**ताण्डव** न० तण्डिकृतं ताण्डं नृत्यशास्त्रं तत् प्रतिपादकतयाऽस्त्यस्य अच्, तण्डुना (नन्दिना) प्रोक्तम् अण् इति क्षीरस्वामी । नृत्ये अमरः "पुंनृत्यं ताण्डवं प्रोक्तं"

ष्णीव्रतं वाच्यमुच्यते" शब्दार्थचि० धृतवाक्योक्ते ४पु-
ष्पले च "गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे
शूलपाणेः" मालतीमा०।५उद्धतनृत्ये ६तृणभेदे च मेदि०।

**ताण्डवतालिक** पु० ताण्डवे तालस्तद्दानं शिल्पमस्य ठञ्। शिवद्वारपालके नन्दीश्वरे त्रिका०। [शिवमात्ये त्रि०।

**ताण्डवप्रिय** पु० ताण्डवं प्रियमस्य। १शिवे शब्दमा० २तत्प-

**ताण्डवित** त्रि० ताण्डव+कृतौ णिच् कर्मणि क्त। नर्त्तिते। "अतिप्रांशुवंशकाण्डताण्डवितधौतसितदुकूलाम्बरपट-लम्" "विकटकपाटतटताण्डवितभ्रूकुटिना क्रुधेव महामोहेन" प्रबोधच०।

**ताण्डिन्** पु० ब० व०। ताण्ड्येन प्रोक्तमधीयते वैशम्पायना-न्तेवासित्वात् इनि—यलोपः। तण्डिमुनिप्रोक्तताण्ड्य प्रोक्तशाखाध्यायिषु। तस्य छात्रः अण् संयोगपूर्वकत्वेनो न टिलोपः। ताण्डिन तस्य छात्रे। स च यजुर्वेदस्य कल्पसूत्रकर्त्ता तण्डिशब्दे ३२०७ पृ० दृश्यम्।

**ताण्ड्य** पु० तण्डिमुनेरपत्यम् गर्गा० यञ्। तण्डिमुनेर-पत्ये स्त्रियां ङीप् यलोपः। ताण्डी।

**तात** पु० तन—क्त दीर्घश्च। पितरि अमरः। "ईषदी-षदनधीतविद्यया तातमाहस्तदमाविवर्द्धयन्" कृष्णाश्रमौ हरिदासः "हा तातेति क्रन्दितमाकर्ण्य विषण्णः" रघुः। २अनुकम्प्ये मेदि०। "नाहं गच्छामि वत्स तात! हृष्टीनाधिप-रूपान्विताः" भा० आ० १७६ अ०। "स तात इति वि-प्रर्षिं वशिष्ठं प्रत्यभाषत। मातुः समक्षं कौन्तेय! अप-श्यन्त्याः परन्तप!। तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः। अदृश्यन्त्यनुपूर्वाथो शृण्वती तदुवाच ह। मा तात! तात! तातेति न ह्येनं पितरं पितुः। रक्षसा भक्षितस्तात! तव तातो वनान्तरे। मन्यसे यन्तु तातेति नैष तातस्तवानघ!। आर्य्य एष पिता तस्य पितुस्तव यशस्विनः" भा० आ०१७८अ० "ज्येष्ठ-भ्राता भवति मे ज्येष्ठो रक्षति कृच्छ्रतः" भा० आ० २११ अ०। ३पूज्ये त्रि० शब्दरत्ना०। "तस्यामनुष्ठेये यथा तात! संविधातुं तथार्हसि" रघुः। पूज्यं वशिष्ठं प्रति दिलीपसम्बोधनम्।

**तातगु** पु० तातस्येव गौर्वाचकशब्दो यस्य गवान्तत्वात् गौणत्वे ह्रस्वः। पितृभ्रातरि पितृव्ये। २जनकहिते शब्दार्थचि० त्रि०।

**ताततुल्य** पु० ६त०। पितृसमाने हेमच०। तातसमादयोऽप्यत्र

**तातन** पुंस्त्री तातं प्रयत्नं तनोति तन—ड। खञ्जनपक्षे लिकाद्युपेयः स्त्रियां जातित्वात् ङीष् तातनी।

**तातल** पु० तापं लाति ला—क पृषो०। १रोगे २पाके ३लौह-कूटे ४मनोजवे च मेदि०। ५तप्तमात्रे त्रि० अजयपालः।

**ताति** पु० ताय—क्तिच्। १पुत्रे जटाधरः। ताय—भावे क्तिन्। २वृद्धौ स्त्री "तदस्मभवता निष्पन्नाशिषां कामसरिष्टतातिम् आशास्महे" वी० च०। तातिल्प्रत्ययान्तः अरिष्टताति शब्दरत्नम्।

**तात्कालिक** त्रि० तस्मिन् काले भवः काश्या० आप-दादिपूर्वकात् कालान्तात् ठञ् ञिठ् वा। तत्कालभवे तत्र ठञि स्त्रियां ङीप् ञिठि टाप् इति भेदः "कर्त्तु-स्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः" शु०त० मनुः। "भवेत् तात्कालिको धटः" ज्यो०। तात्कालिकस्वरूप-ज्ञम् चन्द्रशब्दे दृश्यम् "अष्टगण्डोत्पन्नचन्द्रस्य तात्का-लिकत्वात्" सू० सि० रङ्गना०।

**तात्पर्य्य** न० तत्परस्य भावः ष्यञ्। १वक्तुरिच्छायाम्, २अभिप्राये ३तत्परतायाञ्च। तात्पर्य्यं शब्दार्थनिरूपणेन तात्पर्य्यज्ञानस्य शाब्दबोधजनकत्वमनुमानचि० समर्थितं यथा "तात्पर्य्याधीनं शब्दप्रामाण्यम्। तत्र तत्परत्वं न तत्साध्यकत्वम्। पदार्थतत्संसर्गयोः शब्दासाध्य-त्वात्। अथ तद्गोचरप्रवृत्तिनिवृत्तिसाध्यकत्वं तत्परत्वं तत्र भव्यार्थस्य साक्षात्, भूतार्थस्य तु प्रशंसानिन्दावाक्यस्य प्रशस्तनिन्दितस्वार्थप्रतिपादनद्वारा वाचनिकस्य वर्णनीयविषयप्रवृत्तिनिवृत्तिजनकत्वेन तत्परत्वमिति चेत् न तत्परत्वेऽङ्गीकृते तज्ज्ञानं जनयित्वा तस्य प्रवर्त्तकत्वं तत्प्रवर्त्तकत्वे च तत्परत्वमिति परस्पराश्रयात् वाच-निकस्याननुभावकत्वेऽपि वर्णनीयपरत्वात् काव्यादेः स्वरूपाख्यानमात्रपर्यवसानाच्च। ननु तद्बुद्धिज-नकत्वं तत्परत्वं प्रशंसानिन्दावाक्यमपि प्रशस्तनिन्दित-स्वार्थधीहेतुत्वेन तत्परार्थकं तत्र ज्ञानं प्रशस्ते सर्वः प्रवर्त्तते निन्दिताच्च निवर्त्तत इति स्वविषये प्रवृत्तिनि-वृत्ती जनयतीति तत्परमुच्यत इति चेत् न लौकिकाल-ौकिकयोरननुभावकत्वात्। तद्बुद्धिजनने तत्परत्वमित्य-न्योन्याश्रयाच्च तज्जननयोग्यत्वमिति चेत् तथैकलोच्चा-रणेन नानार्थे नानार्थपरत्वं लक्षणायाञ्च लक्ष्यार्थपरत्वं स्यात् योग्यतासत्त्वात् नापि तत्प्रतिपादकत्वं तात्प-र्य्यं विना न तदेतदन्योन्याश्रयात् प्रशंसादिवाक्यस्य प्रश-स्याद्यप्रतिपादकत्वात् वाचनिकस्याप्रतिपादकत्वाच्च। अथ गङ्गापदं स्वार्थाविनाभावे तीरं प्रतिपादयत् तत्पर-

मिति चेत् न भक्ताः क्रोशन्तीत्यत्र तेन विनापि पुरुषे तात्पर्य्यात् गङ्गादिपदं मत्स्यादिपरं मञ्चतीरपरञ्च स्यात् तद्विनाभावस्य तदेव स्यात् तस्मै बाधके सतीति चेत्। तर्हि मुख्यार्थपरतैव न स्यात्। नापि गच्छ गच्छसीत्यत्र गमनाभावपरत्वम्। उच्यते। तत्प्रयोजनकत्वं तत्परत्वं तदर्थप्रतीतिः प्रवृत्तिनिवृत्ती च। प्रयोजनत्वञ्च न साध्यत्वं अन्योन्याश्रयात् नापि प्रतिपाद्ये च्छाविषयत्वं यस्य यदिच्छाविषयत्वं प्रति तत्परत्वापत्तेः तदर्थसाध्यसाधनत्वे नेच्छानियम इति चेत्। न इह धूम इत्यत्र अन्यत्राप्यभेदेन साध्यस्य वस्तुभेदतया वाक्यभेदप्रसङ्गात् पुंभिच्छाया नियन्तुमशक्यत्वात्। किन्तु प्रतिपादकेच्छाविषयत्वं तत्परत्वं यः शब्दो वक्त्रा यदिच्छया प्रयुक्तः स तत्परः सा च प्रतिपाद्यधीः प्रवृत्तिनिवृत्तिविषययोः तत्परत्वं नानार्थात् श्लिष्टादनेकपदार्थान्वितैकक्रियापरात् सकृदुच्चरितपदादनावृत्त्या क्रमेणानेकार्थज्ञानं, न त्वेकदैव सकृदर्थपरत्वनियमेनैकशोच्चारणेऽनेकपरत्वाभावादिति वदन्तोऽन्यैकवाक्यतया वदन्ति तन्न ब्रूमः। अनेकार्थप्रतीतीच्छयैकसदुच्चारणं भवत्येव पुंभिच्छाया नियन्तुमशक्यत्वात् यदि तदुच्चारणमेकार्थपरं तदा आवृत्तिरपि न स्यात् तात्पर्य्यनिर्वाहार्थमावृत्तिकल्पनात्। अन्यतरैकपरेऽपि तदापत्तेः। अतएव तदुच्चारणस्योभयपरतायामावृत्तिकल्पनं, तस्मात्तु तथा सकृदनेकार्थोपस्थितौ तात्पर्य्यादिज्ञाने युगपदनेकान्वयबोधो भवत्येव शाब्दत्वादस्मात् प्रथममेकस्यान्वयबोधो न तदन्यस्येति नियन्तुमशक्यत्वात्"।

"वाक्याङ्गा वक्तुरिच्छा तु तात्पर्यं परिकीर्त्तितम्" भाषा० "तात्पर्यं निर्वक्ति वक्तुरिच्छेति। यदि तात्पर्यज्ञानं कारणं न स्यात् तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो न स्यात्। न च तात्पर्य्यग्राहकप्रकरणादीनामेव शाब्दबोधे कारणत्वमस्त्विति। तात्पर्य्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्य्यज्ञानमेव लाघवात् कारणमस्तु। इत्थञ्च वेदस्थलेऽपि तात्पर्य्यज्ञानार्थमीश्वरः कल्प्यते। न च तत्राध्यापकतात्पर्य्यज्ञानं कारणमिति वाच्यम् सर्गादावध्यापकाभावात् न च प्रलय एव नास्तीति कुतः सर्गादिरिति वाच्यम् प्रलयस्यागमप्रतिपाद्यत्वात्। इत्थञ्च शुकवाक्येऽपि ईश्वरीयतात्पर्य्यज्ञानं कारणम्। विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्य्यस्य ज्ञानं कारणम्। अन्ये तु नानार्थादौ क्वचिदेव तात्पर्य्यज्ञानं कारणम्। तथा च शुकवाक्ये विनैव तात्पर्य्यज्ञानं शाब्दबोधः। वेदे तु अनादिमीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः। मुक्ता०

"ननु नानार्थादौ त्वस्य नियमानुरोधेन शिवसाधनं तात्पर्य्यस्य तु स्यात् तद्विषयस्यान्वयधीहेतुत्वात् अन्यथा घटकर्म्मत्वादिपरत्वाभावस्य घटकर्म्मत्वाद्यन्यपात्रपरत्वस्य वा निश्चयेऽपि घटमित्यादिवाक्यात् कर्म्मत्वं घटीयमित्याद्यन्वयबोधापत्तेरिति चेन्न कर्म्मताधर्म्मिकघटाद्यन्वयधीपरत्वाभावनिश्चयदशायां प्रमेयत्वादिप्रकारेण घटकर्म्मत्वादिपरत्वस्य निश्चयेऽपि घटीयं कर्म्मत्वमित्यन्वयमतेरनुत्पत्त्या कर्म्मताधर्म्मिकघटान्वयबोधपरत्वप्रकारकनिश्चयत्वेनैव तात्पर्य्यधियस्तस्यां कारणत्वेन वाक्यार्थस्य तत्रानिवेशात्। वस्तुतः समानानुपूर्वीकस्यैव वाक्यान्तरस्य तस्यैव वा वाक्यान्तरमन्तर्भाव्य घटीयकर्म्मत्वादिपरत्वनिश्चयसत्त्वेऽपि व्युत्पन्नस्य तद्वाक्यव्यक्तेर्विदानीमन्तर्भावेण तत्परत्वस्यानिश्चयेऽभावे वा घटीयं कर्म्मत्वमित्याद्यन्वयमतेरनुत्पादाद्वाक्यैव तत्तद्वाक्यव्यक्तिधर्म्मिकस्य घटकर्म्मत्वादिपरत्वनिश्चयस्य तत्तदन्वयबोधहेतुत्वमुपेयं तथा च तत्तद्धेतुभूतानां प्रकरणज्ञानाभिधानामेव विज्ञानव्यक्तीनामन्यथासिद्धत्वम् अवश्यं क्रमपूर्ववर्त्तितावत्त्वात्। अतएव सैन्धवमानयेत्यादावपि लवणपरत्वधीर्न लवणाद्यन्वयधौ हेतुः किन्तु तदर्थकत्वेनाभिमतं भोजनादिप्रकरणस्य प्रतिसन्धानमिति न्यायसिद्धान्तः" शब्द० प्र०।

**तादर्थ्य** न० तदर्थ+स्वार्थे० ष्यञ्। तदुद्देश्यकत्वे।

**तादात्म्य** न० तदात्मनो भावः ष्यञ्। अभेदे तदात्मशब्दे दृश्यम्।

**तादीत्ना** अव्य० तदानीम्+पृषो०। तदानीमित्यर्थे "आतुस्तर्य्य अनयन् छागपार्थं तादीत्ना शत्रुम्" ऋट १।३२।४ "तादीत्ना तदानीमित्यस्य पृषोदरादित्वाद्वर्णविपर्य्ययः।

**तादृक्ष** त्रि० स इव दर्शनमस्य तद्+दृश–क्स सर्वनाम्नष्टेरात्त्वम् उप० स०। तत्तुल्यदर्शने।

**तादृश** त्रि० स इव दर्शनमस्य तद्+दृश–ट उप० स०। तत्तुल्यदर्शने "न तद्विधं प्रेम पतिषु तादृशः" कुमा० "निजगुणैस्तादृशमेव दर्शितम्" माघः। स्त्रियां ङीप्। "यादृशी भावना यस्य सिद्धिर्भवति तादृशी" उद्भटः।

**तादृश्** त्रि० स इव दर्शनमस्य तद्+दृश–क्विन् उप०स०। तत्तुल्ये "तादृग्गुणा सा भवति समुद्रेणेव निम्नगा"

"तादृशोऽर्हति तत्तस्मिन् वीजं सर्वाङ्गितं गुणैः" मनुः।

**तान** पु० तन–घञ्। १विस्तारे अवतानः वितानः। "भूयो गुडूचीतानैराबोध्येत्" सुश्रुतः। २तानविशेषे शब्दार्थकल्प० ३गानाङ्गभेदे। "विकार्यन्ते प्रयोगा ये मूर्च्छना शेषसंश्रयाः। तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवाः। तेभ्य एव भवन्त्यन्ये कूटतानाः पृथक् पृथक्। ते स्युः पञ्च सहस्राणि त्रयस्त्रिंशत् शतानि च" सङ्गी० दा० "तानप्रदायित्वमिवोपगन्तुम्" कुमा०। "गाता यं यं स्वरं गच्छेत् तं तं वंशेन तानयेत्" मल्लिनाथधृतम्। "गायन्ति दिव्यतानैस्ते भा०स०४अ०।

**तानव** न० तनोर्भावः पृथ्वा० पक्षे अण्। तनुत्वे "तानवं तनुता गात्रे दौर्बल्यभ्रमणादिकृत्" उज्ज्वलमणिः "अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात् कुतः" अमरः।

**तानव्य** पुंस्त्री तनोरपत्यं गर्गा० यञ्। तनोरपत्ये स्त्रियां लोहि० ष्फ षित्त्वात् ङीष्। तानव्यायनी।

**तानूनप्त्र** न० तानूनप्त्रा देवताऽस्य अण्। तनूनप्तृदेवताके पृषदाज्ये "तानूनप्त्रं स्पृशामि कांस्ये चमसे वा" मानवसू०। "तानूनप्त्रमेतत्" कात्या० श्रौ० ८।१।२४। "एतदाज्यं तानूनप्त्रसंज्ञं भवति" कर्कः। "तदेतत्तानूनप्त्रं निदानेन" शत० ब्रा० ३।४।२।८ "तानूनप्त्रा च प्रजापतिः वायुर्वा" तनूनप्तृशब्दे दृश्यम्। [त्रिका०।

**तानूर** पु० तन–बा० ऊरच्। पयसां सलोच्छ्वसे आवर्त्ते

**तान्त** त्रि० तम–क्त। १म्लाने २क्लान्ते च। शब्दार्थकल्प०। "मृदुलतान्तलतान्तमलोकयत्" "रतिरभसविलासाभ्यासतान्तं न यावत्" माघः। "अलसतान्ततारकेण" दशकुमा०।

**तान्तव** न० तन्तोर्विकारः अञ्। वस्त्रे "मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च" "सर्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च" मनुः।

**तान्तव्य** पुंस्त्री तन्तोः सन्तानस्यापत्यं गर्गा० यञ्। तन्तोरपत्ये स्त्रियां लोहिता० ष्फ षित्त्वात् ङीष्। तान्तव्यायनी।

**तान्तुवायि** पुंस्त्री तन्तुवायस्यापत्यं "उदीचामिञ्" पा० इञ्। तन्तुवायस्यापत्ये। अन्यमते सेनान्तलक्षणकारिभ्यः" पा० ण्य। तान्तवाय्य तदर्थे।

**तान्त्रिक** त्रि० तन्त्रं सिद्धान्तं वेत्ति शास्त्रमधीते वा उक्था० ठक्। १ज्ञातसिद्धान्ते २शास्त्राभिज्ञे च "एवं प्रयत्नवैविध्यं तान्त्रिकैः परिकीर्त्तितम्" भाषा० तन्त्रे विहितः ठक्। ३तन्त्रविहिते त्रि० स्त्रियां ङीप् "वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः" तन्त्रम्। इदमर्थे ठञ्। ४शास्त्रसम्बन्धिनि च। अथातो धर्मं व्याख्यास्यामः श्रुतिप्रमाणको धर्मः श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च" हारीतः।

**तान्दुर** न० तन्दुरेण पाकयन्त्रभेदेन निर्वृत्तम् अण्। तन्दूरपक्वे मांसभेदे तत्पाकविधिः शब्दार्थचि० धृतपाकवे यथा "अङ्गारपूर्णगर्त्ते यदलम्बनवलम्बितम्। संस्कृतं पिहितं मांसं पक्वं तान्दुरमुच्यते" सुस्वादु तान्दुरन्तु। "पचेद्गर्त्तेऽन्तरीक्षस्थं लम्बि सम्भारसम्भृतम्। चतुर्दिङ्मण्डलाकारं पार्श्वप्रज्वलितानले। विपक्वं सुरभि स्वादु तान्दूरमिति कीर्त्तितम्। अन्यच्च। "लोष्टिकायां सघस्मारमलम्बमवलम्बितम्। मांसं पिधाय वाह्याग्निज्वालया खेदितम् वरम्। तान्दुरं रुचिदं बल्यं लघु पथ्यतमं मतम्। सद्योहतं नवं स्थूलमन्यथा दोषकारणमिति"

**तान्व** पु० तन्वाः प्राणाभिजितत्वात् प्राणवता अपत्यम् "प्राणिरजतादिभ्योऽञ्" पा० अञ् संज्ञापूर्वकविधेरनित्यत्वात् वेदे न गुणः। तनूजे पुत्रे। "न जामये तान्वारिक्थम्" ऋ० ३।३१।२। तनुनामकस्य ऋषेरपत्यम् प्राणित्वात् अञ् पूर्ववद् गुणाभावः। २ऋषिभेदे। "सद्यो विदिद तान्वः" ऋ० १०।९३।१५। तान्वो नामर्षिः" भा०। तनु दशापवित्रवस्त्रम् तस्येदम् अण् पूर्ववद् गुणाभावः। ३दशापवित्रवस्त्रसम्बन्धिनि "अहन्यर्षाणि तान्वा" ऋ० ९।१४।४। "तान्वा तान्वानि छान्दस आत्" भा०। स्वार्थे अण्। ४दशापवित्रवस्त्रे च। "स्वधयाति रिप्र विरप्श तान्वा" ऋ०९।७८। "तान्वा सवीयेन वस्त्रेण" भा० पूर्ववत् तृतीयास्थाने आत्,

**ताप** पु० तप–घञ्। त्वगिन्द्रियग्राह्ये उष्णादिस्पर्शभेदे १सन्तापे २कष्टे च मेदि०। "निदाघकालोल्वणतापयेव" कुमा०। "करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्" मनुः।

**तापक** त्रि० तापयति तापि–ण्वुल्। १तापकारके २ज्वरे पुं० शब्दर०। ३रजोगुणे च तस्य सत्त्वं तापकं रजः सा० शास्त्रे प्रसिद्धम्। "सत्त्वं तत्त्वं वह्निभावेन हस्तं भावाये वा राजसास्तापकास्ते। तस्मा भेदप्राकृषी तामसी या वह्निस्तस्यां तस्य दृश्यं नाप्नोति" सर्वद०।

**तापत्य** पुंस्त्री तपत्याः सूर्य्यकन्यायाः अपत्यम् क्षत्रियत्वात्

ष्य । कौरवे तपत्यपत्ये तपतीशब्दे दृश्यम् । तपत्या उपाख्यानं अण् । २तपत्युपाख्याने न० । "तापत्यमथ वाशिष्ठमौर्वं चाख्यानमुत्तमम्" भा० आ० १प० । तदाख्यानं च भा०आ० चैत्ररथपर्वणि १७२ अध्याये दृश्यम् ।

**तापत्रय** न० ६त० । आध्यात्मिकाधिदैविकाधिभौतिकरूपे दुःखत्रये । "आध्यात्मिकादि मैत्रेय! ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं फलम्" विष्णु पु० ।

**तापदुःख** न० तापरूपं दुःखम् । "पातञ्जलोक्ते दुःखभेदे "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" सू० । "ते जात्यायुर्भोगाः पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुकाः दुःखफला इति । यथा चेदं दुःखं प्रतिकूलात्मकं एवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः । कथं तदुपपद्यते"। "अथ का तापदुःखता सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति । तत्रास्ति द्वेषजः कर्माशयः सुखसाधनानि च प्रार्थयानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते" भा० । "ते जात्यायुर्भोगा इति यद्यपि जात्यायुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वं न तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस्तदनुभवात्मनस्तथाप्यनुभाव्यतया भोग्यतया भोगकर्मतामात्रेण भोगफलत्वमिति मन्तव्यं नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु हेयाः प्रतिकूलवेदनीयत्वात् । कस्मात् ? पुनः पुण्यहेतवस्त्यज्यन्ते सुखफलाः अनुकूलवेदनीयत्वात्, न चैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्तुं, न च ह्लादपरितापौ परस्पराविनाभूतौ यतो ह्लाद उपादीयमाने नैव परितापोऽप्यवर्जनीयतयापतेत् तयोर्भिन्नहेतुकत्वाद्भिन्नरूपत्वात् चेत्यत आह यथा चेदमिति" विवरणम् ।

**तापन** न० तप–णिच्–भावे ल्युट् । (तापान) १तापकरणे हेमच० । तापि–कर्त्तरि ल्यु । २सूर्ये ३कामबाणभेदे पु० जटाध० । ४सूर्यकान्तमणौ राजनि० । ५अर्कनामवनस्पतौ अर्कवृक्षे च । ६तापके त्रि० । "ततोऽम्बराच्चिन्तितमात्रमागतं महाप्रभं चक्रममित्रतापनम्" भा० आ० १९अ० । "ततस्तु राजानममित्रतापनं समीक्षते तस्य नृपस्य मन्त्रिणः" ४४ अ० ।

**तापनीय** न० उपनिषद्भेदे । उपनिषच्छब्दे १२२४पृ० दृश्यम् । गोपालतापनीयः नृसिंहतापनीयः । तपनीयस्य स्वर्णस्य विकारः अण् । २स्वर्णमये त्रि० "तापनीये तथा पट्टे कक्षोपरिविलम्बिते" हरिवं० ८७ अ० । जातरूपेभ्यः परिमाणे अण् । ३स्वर्णनिष्कपरिमाणे सुवर्णे न० ।

**तापश्चित** न० तपश्चि चीयते चि–क्त स्वार्थे अण् । सत्त्रभेदे तद्विधानादि कात्या० श्रौ० २४।५।१ । यथा "तापश्चितम् दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः" सू० "तापश्चितमिति सत्त्रनाम तत्र दीक्षाः संवत्सरं भवन्ति उपसदः सुत्याश्च" इदानीमहान्याह अत्र सुत्या आह"कर्कः' 'गवामयनेनेयुः'' २सू०। गवामयनमेव कर्त्तव्यमित्यर्थः ।''अग्निष्टोमेन वा'' ३सू० "ईयुः अपूर्वत्वादग्निष्टोमः नैकाहिको न द्वादशाहिकः संस्थामात्रोपदेशात् । अग्निष्टोमसंस्थेन ज्योतिष्टोमेन पूरणं कर्त्तव्यम्" कर्कः। शत०ब्रा०१०।२।५।१ तन्निरुक्तिर्दर्शिता यथा "एतद्ध यत्ते तपः । यदुपसदस्तपो वा उपसदस्तद्यत्तपसि चीयते तस्मात् तापश्चितस्तद्वै यावदेवोपसद्भिश्चरन्ति तावत् प्रवर्ग्येण संवत्सरमेवोपसद्भिश्चरन्ति संवत्सरम्प्रवर्ग्येण" "यावतीरुपसदः कुर्य्यात्तावद्भिः प्रवर्ग्यैश्चरितव्यम् उपसदः तापश्चिते चयने संवत्सरसंमिताः" भा० ।

**तापस** त्रि० तपश्चरणं शीलमस्य छत्रा०ण । १तपश्चरणशीले स्त्रियां टाप् । तपोऽस्त्यस्य "अण् च" पा० अण् । तपोविशिष्टे त्रि० । "तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाचरेत्" मनुः । "सीदन्ति तापसकुलानि यमोकुलानि" कु० स० १९ अ० । स्त्रियां ङीप् "अन्नवीच्च वाराणोति केस त्वं दुष्टतापसि" भा० शा० ७४ अ० ।

**तापसतरु** पु० तापसहितस्तरुः शा० त० । इङ्गुदीवृक्षे अमरः । तापसद्रुमादयोऽप्यत्र ।

**तापसद्रुमसन्निभा** स्त्री तापसद्रुमेण तस्य निभा० नि० स० । गर्भदात्रीक्षुपभेदे राजनि० ।

**तापसपत्री** स्त्री तापसप्रियं पत्रमस्याः जातित्वात् ङीष् । दमनकवृक्षे राजनि० ।

**तापसप्रिय** पु० तापसानां प्रियः छायाप्रदत्वात् । १प्रियालवृक्षे राजनि० । २तापसप्रियमात्रे त्रि० ।

**तापसेष्टा** स्त्री तापसैन इष्टा । १द्राक्षायां राजनि० २तापसाभिलषिते त्रि० ।

**तापस्य** न० तापसस्य धर्म्मः ष्यञ् । तापसधर्मे "स्त्रीधर्मयोगं तापस्यं मोक्षं सन्न्यासमेव च । राज्ञश्च धर्ममाख्यं

काष्ठीनां च विनिर्णयः" मनुः। "पुरा रामभयादेव तापसं समुपाश्रितः" भा० व० २७६ अ०।

**तापहर** त्रि० तापं हरति हृ—ट। तापनाशके। स्त्रियां ङीप् ङीबन्तः। २व्यञ्जनभेदे (तापहरी) भाव० प्र०
"घृते हरिद्रासंयुक्ता मांषाणां भर्जयेद्वटीः। तद्वत्तांश्चापि निर्धौतान् घृतेन परिभर्जयेत्। विधियोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत्। सुपक्वार्द्रकहिङ्गूनि मात्रया तत्र निःक्षिपेत्। एषा सिद्धिं समायाता प्रोक्ता तापहरी बुधैः"। अस्या गुणाः। "भवेत् तापहरी बल्या रुच्या च प्राणमाहरेत्। बृंहणी तर्पणी रुच्या गुर्वी तत्र गुणाः स्मृताः"

**तापिक** त्रि० तापे तापकाले भवं ठञ्। ग्रीष्मभवे जलादौ म०।

**तापिच्छ(ञ्ज)** पु० तापिनं छादयति छदयति वा छद+णिच्—ड पृषो०। १तमालवृक्षे अमरः। "अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिच्छगुच्छावलीम्" गी०गो० "प्रफुल्लतापिच्छनिभैरभीषुभिः" माघः। २धातुमाक्षिके राजनि०

**तापिन्** त्रि० तापयति तापि—णिनि। १तापके तप—णिनि। २तापयुक्ते त्रि० स्त्रियां वा ङीप्। ३बुद्धदेवे पु० त्रिका०

**तापी** स्त्री तापयति अच् गौरा० ङीप्। विन्ध्याचलस्थे पश्चिमवाहिनदीभेदे राजनि०। सा च माक्षिकधातूद्भवस्थानविशिष्टा। २यमुनायां त्रिका०।

**तापीज** पु० ताप्या नद्याः समीपे आकरभेदे जायते जन—ड। माक्षिकधातौ "एवन्तु माक्षिकं धातु तापीजमतोपमम्। मधुरं काञ्चनाभासमल्पं वा रजतप्रभम्। पिबन् हन्ति जराकुष्ठमेहार्शःपाण्डुमयान्" सुश्रुतः तापीजमाक्षिकताप्यशब्दादयोऽप्यत्र।

**तापेश्वर** पु० तीर्थभेदे हेम० लि० पु०।

**ताम** पु० ताम्यत्यनेन तम—करणे घञ्। १भीषणे २दोषे च अजयपालः। ३ग्लानिकारके त्रि० भावे घञ्। ४ग्लानौ पु०

**तामर** न० तामं ग्लानिं रवते छिनत्ति रु—वधे बा० ड। १जले २घृते च भरतधृतव्याडिः।

**तामरस** न० तामरे जले सरति सृ—ड। १पद्मे, ताम्यतेऽनेन रस्यते इति रसम् कर्म०। २स्वर्णे ३ताम्रे च मेदि०। ४धुस्तूरे, अमरः "इह सह तामरसं मनोज्ञायाः" ह० र० उक्ते ५द्वादशाक्षरपादके छन्दोभेदे च। "तामरसलास्यरसान्तराभाम्" "स्मयता नवतामरसाननः" "विकचतामरसा गृहदीर्घिकाः" रघुः। "नवरतमभ्रमरागतामरसदृशः" माघः। ६पद्मिन्यां स्त्री ङीप्। "यथा गजस्तामरसीं मदोत्कटः" भारते विराटपर्वणि ७ अ०।

**तामलकी** स्त्री तम क्विप्—क्विप् ताम् कर्म०। भूम्यामलक्याम्। अमरः। "कटुकेन्द्रयवोशीरसिंहीतामलकीघनैः" सुश्रुतः

**तामलिप्त** पु० (तमलुक) देशभेदे त्रिका०। स्वार्थे क। तत्रार्थे। स च देशः वृ०स० १४ अ० कूर्मविभागे प्राच्यामुक्तः "अथ पूर्वस्याम्" इत्युपक्रमे "एकपादतामलिप्तककोशलकावर्द्धमानाश्च" | गौरा० ङीष् तत्रार्थे स्त्री।

**तामस** त्रि० तमोऽस्त्यस्य तमः, प्रधानत्वेनास्त्यस्य वा अण्। १तमोगुणयुक्ते २तमःप्रधानगुणके स्त्रियां ङीप्। ३सर्पे पुंस्त्री० जातित्वात् ङीष्। ४खले त्रि० मेदि० ५उलूके पुंस्त्री राजनि० स्त्रियां ङीष्। ६चतुर्थे मनौ पु० "तथा देवगणाश्चैव तामसस्यान्तरे मनोः। पुत्रांश्चैव प्रवक्ष्यामि तामसस्य मनोर्नृप!। द्युतिस्तपस्यः सुतपास्तपोभूतस्तपोऽशनः। तपोरतिरकल्माषस्तन्वी धन्वी परन्तपः। तामसस्य मनोरेते दश पुत्रा महाबलाः" हरिवं० ७ अ०। "चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः। पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः। सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः। ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे। देवा वैधृतयो नाम विधृतेस्तनया नृप!। नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा। भाग० ८।१।२४। भागवते अन्यथोक्तं कल्पभेदादविरुद्धम्। तमोऽधिकृत्य प्रवृत्तम् अण् तमसा कृतो वा अण्। ७तमोगुणाधिकारेण प्रवृत्ते शास्त्रे ८तमसाकृते च स्त्रियां ङीप्। तामसशास्त्राणि च पद्मपुराणे पार्वतीं प्रतीश्वरवाक्येनोक्तानि यथा

"शृणु देवि! प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि। प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्। मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततःपरम्। कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्। गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन वै। द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः। निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्। धिषणेन च संप्रोक्तं चार्वाकमतिगर्हितम्। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा। बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम्। मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च। मयैव कथितं देवि! कलौ ब्राह्मणरूपिणा। अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम्। कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते। सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र

मोह्यते । परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते । ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया । सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि ! जगतां नाशकारणात्”

कूर्मपुराणे कैमाख्रितन्त्राणां तामसत्वमुक्तं यथा “यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी । करालभैरवञ्चापि यामलं वाममाश्रितम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु । मया सृष्टानि चान्यानि मोहायैषां भवार्णवे” । तामस पुराणानि यथा । “मात्स्यं कौर्म्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि निबोधत” । सात्त्विक पुराणानि यथा । “वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुड़ञ्च तथा पाद्मं वाराहं शुभदर्शने ! । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै” । राजस पुराणानि यथा “ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि शुभानने !” पद्म० उ० ख० ४२ अ०। “सङ्कीर्णेषु सरस्वत्याः पितॄणां व्यपदिश्यते । अग्नेः शिवस्य माहात्म्यं तामसेषु दिवाकरे । राजसेषु च माहात्म्यमधिकं ब्रह्मणः स्मृतम् । यस्मिन् कल्पे तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते । सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुत्तमम् । तथैव योगसंसिद्धा गमिष्यन्ति परां गतिम्” मत्स्य पु० ।

तामसमुनयः पद्मपु० उ० उक्ता यथा । “कणादो गौतमः शक्तिरुपमन्युश्च जैमिनिः । दुर्वासाश्च मृकण्डुश्च भार्गवश्च बृहस्पतिः । जमदग्निश्च इत्येते मुनयस्तामसाः स्मृताः” । तामसस्मृतयस्तत्रैवोक्ता यथा “बार्हस्पत्या गौतमी च सांवर्त्ती यमनिर्म्मिता । शाङ्खी चौशनसी चैव तामस्यः स्मृतयः स्मृताः” । तामसश्रद्धादिकं गीतायां १७अ० उक्तं यथा ।

“त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः” । तामसाहारादिकमपि भा० १७ अ० उक्तं यथा “यातयामं गतरसं पूति पर्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्” । “विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते” । “मूढग्राहेणात्मनो यत् पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्” । “अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम्” । किञ्च “नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः” । “यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम् । अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत्तत्तामसमुच्यते” । “अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते । अधर्म्मं धर्म्ममिति या मन्यते तमसावृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी” । “यया स्वप्नं भयं शोकं विषादं मदमेव च । न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता” । “यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्” १८अ० । राजसतामसकर्म्माणि यथा “यत् शैवं दैवतं पैत्रं चौपदेवं तथाध्वरम् । शाक्तं शैवं गाणपत्यं यागहोमादिकं तथा । पौरहित्यं याजनञ्च देवलं ग्रामयाजनम् । विष्णुसेवापराधश्च तथा नामापराधकः । असत्प्रतिग्रहो देवि ! सङ्कल्प आभिचारिकः । पशुजीवादिहननं पातकञ्चोपपातकम् । अतिपापं महापापमनुपातकमेव च । लोभो मोहो ह्यहङ्कारः कामः क्रोधः मदस्तथा । एतद्यदपरं कर्म गर्हितञ्च वरानने ! । राजसं तामसं प्रोक्तं मया च मुनिभिः सदा” पद्म० उ० ख० ।

हारीतः “तामसेन तु द्रव्येण ऋत्विग्भिस्तामसैस्तथा । तामसं भावमास्थाय तामसो यज्ञ उच्यते । तामसेन तु यज्ञेन दानेन तपसा तथा । निरये जन्म चेदाप्नुहि विद्याश्च तामसीम्” । “तामसी हविषो व्याधिपत्य रूपा” इति रत्नाकरः । तमसो राहोरपत्यम् अण् । ८राहुसुते तामसकीलः ।

**तामसकील** पु० तामसः राहुसुतः कील इव । ६त० । बृ० सं० ३अ० उक्ते राहुसुते केतुभेदे । तन्निमित्तोत्पातभेदस्तत्रोक्तो यथा “तामसकीलकसंज्ञा राहुसुताः केतवस्त्रयस्त्रिंशत् । वर्णस्थानाकारैस्तान्दृष्ट्वार्के फलं ब्रूयात् । ते चार्कमण्डलगताः पापफलाश्चन्द्रमण्डले सौम्याः । ध्वाङ्क्षकबन्धप्रहरणरूपाः पापाः शशाङ्केऽपि । तेषामुदये रूपाण्यम्भः कलुषं रजोवृतं व्योम । नगतरुशिख-

रविमर्दी शर्वरो मारुतश्चण्डः। ऋतुविपरीतास्तरवो दीप्ता मृगपक्षिणो दिशां दाहः। निर्घातमहीकम्पाद्यो भवन्त्यथ चोत्पाताः। न पृथक् फलानि तेषां शिखिकीलकराहुदर्शनानि यदि। तदुदयकारणमेषां केत्वादीनां फलं ब्रूयात्"। "यस्मिन् यस्मिन् देशे दर्शनमायान्ति सूर्यविम्बस्थाः। तस्मिंस्तस्मिन् व्यसनं महीपतीनां परिज्ञेयम्। क्षुत्प्रम्लानशरीरा मुनयोऽप्युत्सृष्टधर्मसच्चरिताः। निर्मांसबालहस्ताः कष्टेनायान्ति परदेशम्। तस्करविलुप्तवित्ताः प्रदीर्घनिःश्वासाकुञ्चिताक्षिपुटाः। सन्तः सन्नशरीराः शोकोद्भववाष्परुद्धदृशः। क्षामा जुगुप्समानाः स्वनृपतिपरचक्रपीडिता मनुजाः। स्वनृपतिचरितं कर्म च पराकृतं प्रब्रुवन्त्यन्ये। गर्भेष्वपि निष्पन्ना वारिमुचो न प्रभूतवारिमुचः। सरितो यान्ति तनुत्वं क्वचित् क्वचिज्जायते सस्यम्। दण्डे नरेन्द्रमृत्युर्व्याधिभयं स्यात् कबन्धसंस्थाने। ध्वाङ्क्षे च तस्करभयं दुर्भिक्षं कीलकेऽर्कस्थे। राजोपकरणरूपैश्छत्रध्वजचामरादिभिर्विद्धः। राजान्यत्वकृदर्कः स्फुलिङ्गधूमादिभिर्जनहा। एको दुर्भिक्षकरो द्व्याद्याः स्युर्नरपतेर्विनाशाय। सितरक्तपीतकृष्णैस्तैर्विद्धोऽर्कोऽद्वयवर्णघ्नः। दृश्यन्ते च यतस्ते रविबिम्बस्योत्थिता महोत्पाताः। आगच्छति लोकानां तेनैव भयं प्रदेशेन"।

स्वार्थे क संज्ञार्थे। त्रिंशत्त्र्यधिकाराहुके तामसकीलका इति ख्याताः वृ० स० ११ अ०।

**तामसध्यान** न० वटुकभैरवस्य ध्येयरूपभेदे। "तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिप्रभेदतः" इत्युपक्रमे सात्त्विकराजसे उक्त्वा तामसध्यानमुक्तं तन्त्रसारे यथा

"ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं दिग्वस्त्रं पिङ्गलाभं डमरुमथ सृणिं खड्गशूलाभयानि। नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम्" "तामसं शत्रुशमनं तत्राभूतगदापहम्" तन्त्रसा०।

**तामसिक** त्रि० तमसा निर्वृत्तं ठञ्। तमोगुणकार्ये त्रि०

**तामसी** स्त्री तमांसि भूम्ना सन्त्यस्यां प्रज्ञा० अण् ङीप्। १अन्धकारबहुलायां रात्रौ २महाकाल्यां मेदि०। ३जटामांस्यां राजनि०। ४तमोगुणवत्यां स्त्रियाञ्च।

**तामालेय** त्रि० तमालस्यादूरदेशादि सख्या० ढञ्। तमालस्यादूरदेशादौ।

**तामिस्र** पु० तमिस्रा तमस्ततिरस्त्यत्र अण्। नरकभेदे। "तामिस्रो ह्यन्धतामिस्र इत्युपक्रमे। तन्निदानरूपादि भाग० ५।२६ उक्तं यथा "यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते" "स पर्य्यायेण यातीमान् नरकानेकविंशतिम्। तामिस्रमन्धतामिस्रं महारौरवरौरवौ। नरकं कालसूत्रञ्च महानरकमेव च। सञ्जीवनं महावीचिं तपनं सम्प्रतापनम्। संघातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम्। लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम्। असिपत्रवनञ्चैव लोहदारकमेव च" मनुः एतदुपक्रमे यातीति क्रियासम्बन्धापेक्षतया पन्थानं शाल्मलीं नदीमित्युत्तरत्र पाठे द्वितीयाश्रवणाच्च तामिस्रादिशब्दानां द्वितीयान्ततैव नरकविशेषवाचित्वात्तस्य पुंस्त्वात्। शब्दकल्पद्रुमे क्लीवतोक्तिः मनुवचने द्वितीयान्ततामिस्रशब्दे प्रथमान्तत्वभ्रान्त्यैवेति बोध्यम्। तमिस्रया साध्यमण्। २ द्वेषे। "भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः। तामिस्रोऽष्टदशधा" सा० का०। "तामिस्रो द्वेषोऽष्टादशधा शब्दादयो दशविषया रञ्जनीयाः स्वरूपतः, ऐश्वर्य्यन्त्वणिमादिकं न स्वरूपतो रञ्जनं किन्तु रञ्जनीयशब्दाद्युपायाः। ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति। शब्दादिभिर्दशभिः सहाणिमाद्यष्टादशधेति तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति" तत्त्वकौ०। द्वेषमूलत्वात् भोगेच्छाप्रतिघातरूपे ३क्रोधे भाग० टी० श्रीधरः।

**तामु** त्रि० तम–उण्। क्लोतरि निघण्टुः।

**ताम्बली** स्त्री ताम्बूली+पृषो०। (पान) ताम्बूल्यां "शुक्ला शताम्बल्यारसाभाः" गोभ० ब्रा० १।१०।७।

**ताम्बूल** न० तम–अवच् वुगागमः दीर्घश्च गौ० ङीष् तस्याः पत्रमण्। (पान) ख्याते १नागवल्लीदले। २क्रमुके च मेदि०। "ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धनिर्नाशनम्। वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं ताम्बूलस्य सखे! त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः" अपि चाहुः "ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम्। वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु। बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्" भाव० प्र०। "अनिधाय मुखे पर्णं पूगं

खादयते नरः। मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरते हरिम्” राजनि०। भावप्र० दिनचर्य्यायामुक्तं यथा “धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः। पूगकर्पूर कस्तूरीलवङ्गसुमनःफलैः। फलैः कटुकषायैर्वा मुख-वैशद्यकारिभिः। ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः। धूमेन अगुर्वादिधूमेन। अपोह्य कफं दूरीकृत्य कषायकटुतिक्तकैः फलैः कर्पूरकस्तूरीलव-ङ्गादिभिः पूगैः क्रमुकैः सुमनःफलैः जातीफलैः एलाहरीतक्यादिफलैः। रात्रौ सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे। सभायां विदुषां राज्ञं कुर्य्यात्ताम्बूल चर्वणम्। ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनन्तु परं सरम्। तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु। वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्। मुख वैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्। हनुदन्तमल-ध्वंसि जिह्वेन्द्रियविशोधनम्। मुखप्रसेकशमनं गला-मयविनाशनम्। नवं तदेव मधुरं कषायानुरसं गुरु। मलावहजननं प्रायः पत्रशाकगुणं स्मृतम्। मद्गुदेशो-द्भवं पर्णं परं कटुरसं सरम्। पाचनं पित्तजननमुष्णं कफहरं स्मृतम्। पर्णं पुराणमकटु सुश्लक्ष्णन्तु पाण्डु-रम्। विशेषाद् गुणवद्वेद्यमन्यद्धीनगुणं स्मृतम्।

खदिरः कफपित्तघ्नश्चूर्णं वातकफापहम्। संयोगत स्त्रिदोषघ्नं सौमनस्यं करोति च। मुखवैशद्यसौगन्ध्य-कान्तिसौष्ठवकारकम्। प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा। निशासु चूर्णमधिकं ताम्बूलं भक्षयेत् सदा। आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता। तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत्। पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णं पर्णं हरत्यायुः शिरा बुद्धिविनाशिनी। आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम्। तृतीयादनु पातव्यं सुधातुल्यं रसाय-नम्। ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः। देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः। शोषः पित्ता-निलास्रं स्यादतिताम्बूलचर्वणात्। विषमूर्च्छामदा-र्तानां क्षयिणां रक्तपित्तिनाम्।

“विना पर्णं मुखे दत्त्वा गुवाकं भक्षयेद्यदि। तावद्भवति चण्डालो यावद्गङ्गां न गच्छति” कर्मलोचनम्। “ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। तपस्विनाञ्च विप्रेन्द्र! गोमांससदृशं ध्रुवम्” इति ब्रह्म-वै० पु० प्र०। मार्कण्डेयः “भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम्” वशिष्ठः “सुपूगञ्च सुपर्णञ्च सुचूर्णेन समन्वितम्। अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः” “ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्” नैष० “ताम्बूलाक्तं दशनममलज्दर्शयन्तीह चेटी” सा० द०। २पर्णलतायां स्त्री गौरा० ङीष्। “ताम्बूलीनां दलैस्तत्र रचिताः पानभूमयः” रघुः। [हेमच०।

**ताम्बूलकरङ्क** पु० ६त०। (पानडिपा) ताम्बूलपात्रभेदे

**ताम्बूलद** त्रि० ताम्बूलं ददाति दा–क। १राज्ञां ताम्बूल-दाने अधिकृते दासभेदे २विप्रादिभ्यो ताम्बूलदातरि च स्त्रुत्। ताम्बूलदायकोऽप्युभयत्र “अथताम्बूलकुसुम-गन्धमाल्यादिदायकाः” कामन्दकीये।

**ताम्बूलपत्र** पु० ताम्बूलमिव पत्रमस्य। पिण्डालौ राजनि०। कर्म्म०। ताम्बूलीपत्रे न०।

**ताम्बूलपेटिका** स्त्री ६त०। ताम्बूलकरङ्के

**ताम्बूलराग** पु० ताम्बूलकृतो रागः शाक० त०। (पानेर बोल) १ताम्बूलजनिते रागे ताम्बूलस्य राग इव रागो रक्तता यस्य। २मसूरे हारा०।

**ताम्बूलवल्ली** स्त्री ताम्बूलाख्या वल्ली। (पान) नागव-ल्ल्याम् अमरः। स्वार्थे क तत्रैवार्थे।

**ताम्बूलिक** त्रि० ताम्बूलं तद्रचनं शिल्पमस्य। ताम्बूलर-चनाधिकृते “आदिशब्दात् मालाकाररजकताम्बूलिक-गान्धिकादयः” सा० द०।

**ताम्बूलिन्** त्रि० ताम्बूलं पण्यतयाऽस्त्यस्य इनि। १ताम्बूल-विक्रेतरि (तामुलि) ख्याते २जातिभेदे पुंस्त्री स्त्रियां ङीप्।

**ताम्र** न० तम–रक् दीर्घः। १धातुभेदे (ताँमा) अमरः २कुष्ठ-भेदे कर्म्मविपाकः। ३रक्तवर्णे हेमच०। ४तद्वति त्रि०। धातुभेदस्योत्पत्तिकारणगुणादि भावप्र० उक्तं यथा “अथ ताम्रस्य उत्पत्तिर्नामलक्षणगुणाश्च। “शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले। तस्मात्ताम्रं समुत्पन्न-मिदमाहुः पुराविदः। ताम्रमौदुम्बरं शुल्वमुदुम्बर-मपि स्मृतम्। रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनाम-कम्। जपाकुसुमसङ्काशं स्निग्धं मृदुघनक्षमम्। लो-हनागोज्झितं ताम्रं मारणाय प्रशस्यते। कृष्णं रूक्ष-मतिस्तब्धं श्वेतञ्चापि घनासहम्। लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम्। एको दोषो विषे ताम्रे त्वष्टावन्यत्र कीर्तिताः। दाहः स्वेदो रुचिर्मूर्च्छा क्लेदो रेको वमिर्भ्रमः” (रेकः विरेकः) तस्य मारणवि-धिस्तत्रोक्तो यथा

"सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः । वास-रत्नयमण्डेन ततः खाते विनिःक्षिपेत् । पादांशं सूतकं दत्त्वा वामभण्डेन मर्द्दयेत् । तत उद्धृत्य पत्राणि लेपये-द्विगुणेन च । गन्धकेनाम्लपिष्टेन तस्य कुर्य्याच्च गोल-कम् । ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं वा पुनर्न-वाम् (चाङ्गेरी चतुष्पत्राम्लशाकोनिकाभेदः ।) तत्कल्केन बहिर्गोलं लेपयेदङ्गुलोन्मितम् । धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत् । बालुकाभिः प्रपूर्य्याथ विभूति लवणाम्बुभिः । दत्त्वा भाण्डमुखे मुद्रां ततश्चुल्ल्यां विपा-चयेत् । क्रमवृद्ध्याग्निना सम्यग्यावद्यामचतुष्टयम् । स्वाङ्गशीतं समुद्धृत्य मर्द्दयेच्छूरणद्रवैः । यामैकं गोलकं तत्र निःक्षिपेच्छूरणोदरे । मृदा लेपस्तु कर्त्तव्यः सर्वतोऽङ्गुष्ठमात्रकः । पाच्यं गजपुटे चिन्नं मृतं भवति निश्चितम् । वमनं च विरेकं च भ्रमं मोहमथारु-चिम् । विदाहं स्वेदमुत्क्लेदं न करोति कदाचन । एवं मारितस्य ताम्रस्य गुणा ताम्रं कषायं मधुरं च तिक्तमम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्याल्लघु लेखनञ्च । पाण्डूदरार्शोज्वर कुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम् । शोथं कृमिं शूलमपाकरोति प्राहुर्बुधा बृंहणमल्पमेतत्"।

"ताम्रभाण्डेन शुद्ध्यति" मनुः । ताम्रपात्रभक्ष्ये भोजननि-षेधः स्मृतितरोड्तवाक्यव्याख्यानभोजननिषेधश्च वक्ष्यते । रक्त-वर्णविशिष्टे "ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य" "तपस्विने ताम्ररुचा करेण" कुमा॰ "प्रचक्रमे पल्लवरागताम्रा" रघुः । ५ द्वीपभेदे पु॰ । स्वार्थे क । तत्रार्थे अमरः ।

**ताम्रकर्ण** त्रि॰ ताम्रौ कर्णौ यस्य । १रक्तकर्णयुक्ते स्त्रियां ङीष् । ङीषन्तः २पश्चिमदिग्हस्तिन्याम् अमरः ।

**ताम्रकार** पुंस्त्री॰ ताम्रं ताम्रपात्रादिकं करोति कृ-अण् उप॰ स॰ । ताम्रोपजीविनि सङ्कीर्णजातिभेदे । "आ-योगवेन विप्रायां जातास्ताम्रोपजीविनः" कंसकार-शब्दे दृश्यम् । स्त्रियां जातित्वात् ङीष् ।

**ताम्रकुट्ट** पुंस्त्री॰ ताम्रं कुट्टयति कुट्ट-अण् उप॰ स॰ । ताम्रकारे (काँसारि) संकीर्णजातिभेदे । ण्वुल् । ता-म्रकुट्टक तत्रार्थे अमरः ।

**ताम्रकुण्ड** न॰ कुण-ड कित् ताम्रमयं कुण्डम् । ताम्रमये देवजलाधारे पात्रभेदे "देवताम्बुजलाधारः कुण्डं कुण्ड-मुखा स्मृताः" "शाश्वतः उपचारात् ताम्रकुण्डम्" उज्ज्व॰

**ताम्रकूट** पुंन॰ ताम्रस्य कूटमिव । रक्तवर्णनिर्यासके (ता-माक) क्षुपभेदे "संविदा कालकूटं च ताम्रकूटं च धुस्तुरम् । अहिफेनं खर्ज्जूररसस्ताडिका तरिता तथा । इत्यष्टौ विजिद्रव्याणि यथा कुर्य्यात् तथा" कुला॰ त॰ ।

**ताम्रकृमि** पु॰ कर्म॰ । इन्द्रगोपकीटे हारा॰ ।

**ताम्रगर्भ** न॰ ताम्रं गर्भं उत्पत्तिस्थानमस्य । तुत्थे (तुँते) राजनि॰ । तस्य ताम्रोद्भवत्वं तुत्थशब्दे दृश्यम् ।

**ताम्रचूड** पुंस्त्री॰ ताम्रा रक्ता चूडा यस्य । १कुक्कुटे (कुकड़ा) ख्याते खगे अमरः स्त्रियां ङीष् । तद्गुणविशेषकथनं वृ॰सं॰ दद्म॰ यथा "भीमा भवन्ति कृतकुण्ठकृति ताम्रचूडास्पष्टा हतानि भयदान्यपराणि रात्रौ" । कुक्कुटश्च द्विविधः नारि-केलाकृतिः प्राचप्रवाटः, बलाकाकृतिश्च प्रतीचप्रवाटः । तत्र प्राचप्रवाटः बलाधिकः । तथैव वर्णितं दशकुमारे ताम्र-चूडयुद्धाधिकारे । "कथमिव नारिकेलजातेः प्राचप्र-वाटकुक्कुटस्य प्रतीचप्रवाटः पुनरैरसमोऽस्य बलाका-जातिस्ताम्रचूडो बलप्रमाणाधिकस्यैवं प्रति विरुष्ट इति । "प्रायुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षसुक्तकण्ठी-रवरवं विहङ्गमद्वयम् । जितवाशी प्रतीच्यवाट कुक्कुटः" दशकु॰ । २कुक्कुरद्रुमे (कुकशिमा) राजनि॰ । तस्य रक्त-शिखत्वात्तथात्वम् । "हाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना । अपरेणाग्निदायादस्ताम्रचूडं भुजेन वः । महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम्" भा॰व॰ २२४अ॰ तत्रैव "अददत्ताम्रचूडञ्च प्रददौ चरणायुधम्" । ३कुमारानुचरमातृगणभेदे स्त्री "सुभगा कल्पिनी तथा ताम्रचूडाविकासिनी" भा॰ श॰ ४७ अ॰ । मातृगणोक्तौ ४रक्तशिखायुक्ते त्रि॰ ताम्रचूडभैरवः ।

**ताम्रजाक्ष** पु॰ सत्यभामायां कृष्णाज्जाते पुत्रभेदे । "जज्ञिरे सत्यभामायां भीमो भीमरथः क्षुपः । रोहितो दीप्तिमां-श्चैव ताम्रजाक्षो जलान्तकः । भाव्यभीमरिका चैव ताम्र-पक्षा जलन्धमा । चतस्रो जज्ञिरे तेषां स्वसारो गरु-डध्वजात्" हरिवं॰ १६२ अ॰ ।

**ताम्रत्रपुज** पु॰ ताम्रस्य त्रपु च ताभ्यां जायते जन-ड । कांस्ये भावप्र॰ । तस्योभयधातुजन्यत्वात् तथात्वम् ।

**ताम्रदुग्धा** स्त्री ताम्रं रक्तं दुग्धं निर्यासोऽस्याः । गोरक्ष-दुग्धायां राजनि॰ ।

**ताम्रद्वीप** पुंन॰ । कर्म॰ । दक्षिणदेशस्थे द्वीपभेदे । "द्वीपं ताम्राह्वयञ्चैव पर्वतं रामकं तथा । तिमिङ्गिलञ्च स नृपं वशे कृत्वा महामतिः" भा॰ स॰ ३० अ॰ । सह-देवदक्षिणदिग्विजये ।

**ताम्रपक्षा** स्त्री सत्यभामासुतायां ताम्रजाक्षशब्दे दृश्यम् ।

**ताम्रपट्ट** न० ताम्रनिर्मितं पट्टम् । ताम्रमये लेखनपत्रभेदे "दद्याद्भूमिं निबन्धं वा कृत्वा लेख्यञ्च कारयेत् । आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः । पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् । अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः । प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् । स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम्" याज्ञ० ।

**ताम्रपत्र** पु० ताम्रं रक्तं पत्रमस्य । १जीवशाके राजनि० । २रक्तवर्णपत्रके वृक्षमात्रे च । कर्म० । ३ताम्रमये लेखनपत्रे । ४रक्ते दले नवपल्लवे च न० ।

**ताम्रपर्णी** स्त्री दक्षिणदेशस्थे नदीभेदे ।

"ताम्रपर्णीन्तु कौन्तेय ! कीर्त्तयिष्यामि तां शृणु यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे । गोकर्ण इति विख्यातस्त्रिषु लोकेषु विश्रुतः । शीततोयो बहुजलः पुण्यस्तात ! शिवः शुभः । ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः । तत्र वृक्षतृणाद्यैश्च सम्पन्नफलमूलवान् । आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसमो गिरिः । वैदूर्य्यपर्वतस्तत्र श्रीमान् मणिमयः शिवः । अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः" भा०व०८८अ० । तस्याः सिन्धुसङ्गमस्थाने मुक्ताजन्म यथोक्तं "ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः । ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम्" रघुः "सिंहलकपारलौकिकसौराष्ट्रकताम्रपर्णीपारशवाः" कौवेरपाण्ड्यवाटकहैमा इत्याकरा अष्टौ" बृ० स० ८१ अ० मुक्ताकरोक्तौ । २शिलाभेदे च । "ताम्रपर्णी शिला राजन् ! श्रीमान् मलयपर्वतः" भा० भी० ६ अ० ।

**ताम्रपल्लव** पु० ताम्राणि पल्लवानि यस्य । १अशोकवृक्षे राजनि० । २रक्तपल्लवयुक्ते वृक्षमात्रे च । कर्म० । ३रक्ते पल्लवे क्ली० ।

**ताम्रपाकिन्** पु० पच्यते पाकः फलपुष्पादि ताम्रः पाकः अस्त्यस्य इनि । गर्द्दभाण्डवृक्षे । रत्नमा० ।

**ताम्रपात्र** न० ताम्रस्य विकारः अण् कर्म० । ताम्रमये पात्रे तत्र तर्पणविधिस्तर्पणशब्दे उक्तः । "गृहीत्वौदुम्बरं पात्रम्" इत्यादि कृत्वा तस्य संकल्पपात्रतोक्ता तत्र भोजननिषेधो मनुनोक्तो यथा "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्" । तत्र एतेतरोक्त तदारगव्यादिभोजननिषेधमाह स्मृतिसागरे स्मृतिः "नारिकेलजलं कांस्ये ताम्रपात्रे स्थितं मधु । गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना । ताम्रपात्रधृतं मांसं यच्च गव्यं घृतेतरत् । आमिषन्तु गवां मांसं दधि मद्यं पयो रजः । द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि । पयोऽनुद्धृतसारञ्च ताम्रपात्रे न दुष्यति" उत्तरार्द्धानुसारात् "ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् । चरुणा क्षालिते पात्रे नवे ताम्रमयादिके" शारदाति० वाक्यम् अनुद्धृतसारक्षीरविषयम् उद्धृतसारस्यैव तत्र स्थितत्वे निषेधात् पानपात्रं च ताम्रपात्रं प्रशस्तं यथाह सुश्रुतः "दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः" । "जलपात्रं तु ताम्रस्य तदभावे मृदो हितम्" भावप्र० ।

**ताम्रपादी** स्त्री ताम्रः रक्तः पादो मूलमस्याः ङीष् । हंसपद्याम् राजनि० । तस्या हंसस्येव रक्तमूलत्वात्तथात्वम् ।

**ताम्रपुष्प** पु० ताम्रं पुष्पं यस्य । १रक्तकाञ्चने जटा० २भूमिचम्पके शब्दच० । ३रक्तपुष्पयुक्तमात्रे त्रि० । "ताम्रपुष्पैश्च शिखरैर्दीप्यमानः सुतेजसा" हरिवं० २१७ अ० । कर्म० । ४रक्ते पुष्पे न० ।

**ताम्रपुष्पिका** स्त्री ताम्रं पुष्पं यस्याः कप् कापि अत इत्त्वम् । रक्तत्रिवृति (लालतेउड़ि) राजनि० ।

**ताम्रपुष्पी** स्त्री ताम्रं रक्तं पुष्पं यस्याः ङीष् । १धातकीवृक्षे २पाटलावृक्षे च राजनि० ।

**ताम्रफल** पु० ताम्रं रक्तं फलमस्य । १अङ्कोटवृक्षे । राजनि० । २रक्तफलयुक्ते वृक्षमात्रे त्रि० । कर्म० । ३रक्ते फले न० ।

**ताम्रमूला** स्त्री ताम्रं रक्तं मूलं यस्याः अजादेराकृतिगणत्वात् टाप् । १दुरालभायां २लज्जालौ च राजनि० । ३कच्छुराद्रव्ये (खिराइ) रत्नमाला । ४रक्तमूलके वृक्षमात्रे त्रि० । कर्म० । ५रक्ते मूले न० ।

**ताम्रयोग** पु० चक्रदत्तोक्ते औषधभेदे तद्विधानादि तत्रोक्तं यथा "स्थाल्यां संमर्द्य दातव्यौ माषिकौ रसगन्धकौ । मध्य-चूर्णं तदुपरि ताम्रचीर्णं द्विमाषिकम् । ततो नैपालताम्रादि पिधाय सुकरालितम् । पांशुना पूरयेदूर्द्ध्वं सर्वां स्थालीं ततोऽनलः । स्थाल्यधो नालिकां यावद्देयस्तेन हृतस्य च । ताम्रो ताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका । त्र्यूषणस्य च रक्त्येका विडङ्गस्य च तन्मधु । एतेनालोड्य लेह्यं प्रथमे दिवसे ततः । रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु । स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवक्षितः । तदा

विडङ्गस्त्रिफलां दद्याद्रक्तिद्वयं पुनः। ईदृशाद्धं योगहद्धिस्ततो ह्रासक्रमोऽप्ययम्। यङ्गणीमर्शःपक्तिं क्षयं शूलञ्च सर्वदा। ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः"।

**ताम्ररसायनी** स्त्री ताम्ररसस्य रक्तनिर्यासस्यायनी। गोरक्षदुग्धायां जटाधरः।

**ताम्रलिप्त** पु० देशभेदे। सोऽभिजनोऽस्य तस्य राजा वा अण्। तद्देशवासिनि तन्नृपे च बहुषु अणो लुक्। स च देशः प्राचीस्थः। "ताम्रलिप्तञ्च राजानं कर्वटाधिपतिं तथा" भा० स० २९ अ०। भीमप्राचीदिग्विजये। "वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः" भा० स०५१अ०। स्वार्थे क। तत्रार्थे "किराताः कर्वराः सिद्धा वैदेहास्ताम्रलिप्तकाः" भा०भी० ७ अ०। जनपदोक्तौ।

**ताम्रवर्ण** पु० ताम्रो रक्तो वर्णोऽस्य। १पद्मिकाकृक्षे वृक्षभेदे राजनि०। २जटायां स्त्री शब्दच०। ३ताम्रवर्णयुतमात्रे त्रि०। कर्म०। ४रक्ते वर्णे पु०।

**ताम्रवल्ली** स्त्री कर्म०। १मञ्जिष्ठायाम् शब्दच०। २चित्रकूटदेशप्रसिद्धे लताभेदे राजनि०। ३रक्तलतामात्रे च।

**ताम्रवीज** पु०ताम्रं वीजं यस्य। १कुलत्थे राजनि०। २रक्तवीजके वृक्षमात्रे त्रि०। कर्म०। ३रक्ते वीजे न०। ४कुलत्थिकायां स्त्री शब्दार्थचि०। [३रक्तवर्णके वृक्षे पु०।

**ताम्रवृक्ष** पु० कर्म०। १रक्तचन्दनवृक्षे २कुलत्थे च रत्नमा०

**ताम्रवृन्त** पु० ताम्रं वृन्तमस्य। १कुलत्थे, स्त्रीत्वमपि टाप् त्रिका०। २रक्तवृन्तके वृक्षमात्रे त्रि०। कर्म०। ३रक्ते वृन्ते न०।

**ताम्रशिखिन्** पु० ताम्रा रक्ता शिखास्त्यस्य इनि। कुक्कुटे जटाधरः। ब० व०। ताम्रशिख इत्यपि तत्र। ताम्रशिखायुक्ते च त्रि०।

**ताम्रसार** न० ताम्रं रक्तं सारमस्य। १रक्तचन्दनवृक्षे। रत्नमाला। २रक्तसारके वृक्षमात्रे त्रि०। कर्म०। ३रक्ते सारे पुंन०।

**ताम्रसारक** पु० ताम्रो रक्तः सारोऽस्य कप्। १खदिरे राजनि०।२रक्तचन्दनवृक्षे च। ३तत्काष्ठे न० शब्दार्थचि०।

**ताम्रसारिक** पु० ताम्रः सारोऽस्त्यस्य ठन्। १रक्तखदिरे, २रक्तचन्दने च शब्दार्थचि०

**ताम्रा** स्त्री ताम्र+टाप्। १सैंहिक्यां २ताम्रवल्ल्यां शब्दमा०।

**ताम्राख्य** पु० उपद्वीपभेदे शब्दमाला। ताम्रद्वीपे।

**ताम्राक्ष** पुंस्त्री ताम्रे अक्षिणी यस्य षच् समा०। १कोकिले त्रिका०। स्त्रियां षित्वात् जातित्वाच्च ङीष्। २रक्ताक्षयुक्ते त्रि० स्त्रियां षित्वात् ङीष्। "वियाला यत्र ताम्राक्षैः पूर्णचन्द्रनिभाननैः। यशोभूः कीर्य्यते" भा० क० ४६ अ०।

**ताम्राभ** न० ताम्रस्य आभेवाभा यस्य। १रक्तचन्दने शब्दच०। ताम्रा रक्ता आभा यस्य। २रक्तवर्णाभायुक्ते त्रि० "रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ। सञ्छन्नैः संवृत सर्वं ताम्राभैः खमिवावृतम्" भा० द्रो० ११८ अ०।

**ताम्रारुण** न० तीर्थभेदे "ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति ब्रह्मलोकञ्च गच्छति" भा० व० ८४ अ०।

**ताम्रार्द्ध** पु० ताम्रस्यार्द्धोऽर्द्धभेद इवाद्यदोऽस्य। कांस्ये त्रिका०

**ताम्रावती** स्त्री ताम्रमाधेयत्वेनाऽस्त्यस्य मतुप् मस्य वः संज्ञायां दीर्घः। ताम्राकरे नदीभेदे "ताम्रावती वेत्रवती नद्यस्त्रिस्रोऽथ कौशिकी" भा० व० २२१ अ०।

**ताम्राश्मन्** पु० नि० कर्म०। पद्मरागे "ताम्राश्मरश्मिच्छुरितैर्नखाग्रैः" माघः। "ताम्राश्मनां पद्मरागाणाम्" मल्लिना०।

**ताम्रिक** त्रि० ताम्रं तत्पात्रादिनिर्माणं शिल्पमस्य ताम्रस्येदं वा ठञ्। १कांस्यकारे २सङ्कीर्णजातिभेदे पुंस्त्री० स्त्रियां ङीष्। ३ताम्रसम्बन्धिनि त्रि०। "कार्षिके ताम्रिके पणः" अमरः। "कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः" मनुः। "निष्काः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः" माघ०। ४गुञ्जायां स्त्री टाप् राजनि०। ५वाद्यभेदे शब्दार

**ताम्री** स्त्री ताम्रस्य विकारः अण् ङीप्। वाद्यभेदे० त्रिका०।

**ताय** पालने विस्तारे च भ्वा० आत्म० सक० सेट्। तायते अतायि-अतायिष्ट। तताये। ऋदित्। णिच् अततायत्-त। ताय्यिः तातिः "उभौ भार्यां आतायेताम्" भट्टिः। "सरसि सुताय्यमाने" यजु० २९।५। घञ्। तायः इषा० बांद्यु दासः। ल्युट्—तायनम् "हस्तिसर्गतायनेषु क्रमः" पा०।

**तायिक** त्रि०ताये हवौ साधु ठञ्। तक्षिकाभिधदेशे हेमच०

**तायु** पु० ताय—उण्। चौरे लोने निघण्टुः "अपत्ये तायवो यथा नक्षत्रा" ऋ० १।५०।२।

**तार** पु० तारयति सजापकान् संसारार्णवात् तॄ—णिच्—अच् ताय्यतेऽनेन वा तॄ—णिच् करणे अच्, तॄ—णिच्—भावे अच् वा। १प्रणवे ओङ्कारे "तारयेद् यज्ञवाम्भोधेः सजपासक्तमानसम्। ततस्तार इति ख्यातो यस्तं ब्रह्मा व्यलोकयत्" काशीख० ७२ अ०। २वानरभेदे ३शुद्धमौक्तिके ४सुक्ताविशुद्धौ मेदि० ५देवीप्रणवे कूर्चवीजे (हूँ) तन्त्रसा० ६तारणे विश्व० ७महादेवे "काश्यां विश्वेश्वरोऽहं गिरि-

पतितनयासंयुतो वामभागे शुभ्रदण्डेन दक्षे त्रिपथ-गतटिनीतीरसुद्धाम्बुभागे । मायाबीजस्य कर्णे सुर-मुनिसहितो ध्यानयुक्तं वदामि प्रीत्या लोकस्य तस्मात् सुरमुनिगणकैरुच्यते तारनामेति” शब्दार्थचि० धृतवाक्यम् ८रूप्ये न० राजनि० ।९नक्षत्रे न० स्त्री० मेदि० “विपत्तारे गुडं दद्यात्” ताराबलादिन्दुबलेन्दुवीर्य्यात्” ज्योति० त० सां० त० उक्ते अध्ययनरूपे प्रथमे १०गौणसिद्धिभेदे । “ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः” सां० का० । “त्रिहन्यमानस्य दुःखस्य त्रित्वात् तद्विघातास्त्रय इति इमा मुख्याः तिस्रः सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयस्तत्रापि हेतुमत्तया तिस्रः हेतुतया पञ्च व्यवस्थिताः । तास्वाद्या अध्ययनादिलक्षणा सिद्धयो हेतवः मुख्यास्तु हेतुमत्यः । विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमसिद्धिस्तार-मुच्यते” त० कौ० ११विष्णौ पु० “अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः” भा० अनु० १४९ अ० सहस्रनामकथने । १२उच्चशब्दे पु० ।१३तद्वति त्रि० मेदि० । १४स्फुरितकिरणे १५निर्मले त्रि० धर० । दिक्शब्दात् परम् तीरस्य तारादेशः । १६तीरे । दक्षिणतारं दक्षिणतीरमित्यर्थः १७उत्तैस्तरे त्रि० १८नेत्रकनीनिकायां न० स्त्री० “मत्तयेव घूर्णितमन्दतारया” काद० । “तारैर्वभूवे परभागलाभतः” माघः शुद्धमुक्ताफले । “तारहेममहारत्नविमानशत-शोभितम्” भाग० ४।६।२७ । प्रणवे “तारो मायारमा-योगो मनोरीयनमुच्यते” । (ओं ह्रीं श्रीं) दी० त० “तारं व्योमाग्निमनुयुग्दण्डी ज्योतिर्मनुर्मतः” दी० त० । “हरिममलं तरलतारमुरसि दधतम्” जयदेवः । “उरसि निहिततारो हारः” अमरुः । “तारलोलवलयेन करेण” सा० द० ।

तारक त्रि० तारयति तॄ-णिच्-ण्वुल् । १तारयितरि । “तत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे” जाबालोप० । स्त्रियां क्वापि अत इत्त्वम् । २दैत्यभेदे तत्कथा शिवपुराणे दृश्या । ३कर्णे ४भेलके च मेदि० । तारैव स्वार्थे क । “तारका ज्योतिषि” पा० अजादि० टाप् न अत इत्त्वम् । तारका । ५नेत्रकनीनिकायां स्त्री । ६चक्षुषि न० स्त्री० मेदि० । “तस्मिन् विप्रकृताः काले तारकेण दिवौकसः” कुमा० । “अभिभाव्यतरिकम-हर्दृहमद्युतिविम्बमस्तमितभानु नभः” माघः “कुमार-स्तुतिषु तारकोद्धरणम्” काद० । न दग्ड्रानां नेत्रो-त्पाटनमिति ध्वन्यर्थः । “पतनं तारकाणाम्” सुश्रु० “तनुप्रकाशेन विचेयतारका” रघुः । “तारकावर्णमिव धर्म्मविनाशपिशुनम्” “कापि विहृत्य दिवावसाने लोहिततारका” काद० । “त्वयधिकदशयतिर्नतौ रौ भवेतां ररौ तारका,” वृत्तरत्नाकरोक्ते अष्टादशाक्षरपा-दके ७छन्दोभेदे च । [तत्कथा शिवपु० दृश्या ।

तारकजित् पु० तारकं दैत्यं जयति जि-क्विप् । कार्त्तिकेये

तारकाक्ष पु० तारकासुरस्य ताराक्षापरपर्य्याये पुत्रभेदे “निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः । ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव !” इत्युपक्रमे “का-ञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः । राजतं कम-लाक्षस्य विद्युन्मालिन आयसम्” भा० क० ३३ अ० । २कुमारानुचरभेदे “महाजठरपादाङ्गास्तारकाक्षाश्च भारत !” भा० म० ४६ अ० ।

तारकब्रह्म न० कर्म्म० । रामस्य (ओं रामाय नमः) षडक्षरे मन्त्रे । “षडक्षरं महामन्त्रं तारकब्रह्म-उच्यते । रामाय नम इत्येतत् प्रणवादि षडक्षरम्” इति अन्योऽपि मन्त्रः पद्मपुरा० उक्तो यथा । “मुमूर्षो-र्मणिकर्ण्यान्तु अर्द्धोदकनिवासिनः । अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम् । ओं श्रीरामरामेत्येत-न्मन्त्रं तारकमुच्यते । अतस्त्वं जानकीनाथ । परं ब्रह्म विनिश्चितम्” ।

तारकादि संज्ञातार्थे इतच्प्रत्ययनिमित्ते पा० गण सू० उक्ते शब्दगणे स च गणो यथा

“तारका, पुष्प, कर्णक, मञ्जरी, ऋजीष, क्षण, सूत्र मूत्र, निष्क्रमण, पुरीष, उच्चार, प्रचार, विचार, कुड्मल, कण्टक, मुसल, मुकुल, कुसुम, कुतूहल, स्तवक, किसलय, पल्लव, खण्ड, वेग, निद्रा, मुद्रा, बुभुक्षा, धेनुष्या, पिपासा, श्रद्धा, अभ्र, पुलक, अङ्गारक, वर्णक, द्रोह, दोह, सुख, दुःख, उत्कण्ठा, भर, व्याधि, वर्मन्, व्रण, गौरव, शास्त्र, तरङ्ग, तिलक, चन्द्रक, अन्धकार, गर्व, मुकुर, हर्ष, उत्कर्ष, रण, कुवलय, गर्ध, क्षुध्, सीमन्त, ज्वर, गर, रोग, रोमाञ्च, पण्डा, कज्जल, तृष्, कोरक, कल्लोल, स्थपुट, फल, कञ्चुक, शृङ्गार, अङ्कुर, शैवाल, बकुल, श्वभ्र, आराल, कलङ्क, कर्दम, कन्दल, मूर्च्छा, अङ्गार, हस्तक, प्रतिविम्ब, विघ्न, तन्त्र, प्रत्यय, दीक्षा, गर्ज, (गर्भादप्राणिनि”) “तदस्य

संजातं तारकादिभ्य इतच्" पा० इतच् तारकित अस्य आकृतिगणत्वात् अन्येऽपि शब्दा यथाप्रयोगमत्रावधेयाः।

**तारकायण** पु० विश्वामित्रपुत्रभेदे "औदुम्बरा ह्यविज्ञाता-स्तारकायणचञ्चुलाः" हरिवं० २७ अ०। विश्वामित्र-पुत्रकथने। [तयोऽप्यत्र।

**तारकारि** पु० ६त०। कार्त्तिकेये हेमच०। तारकशत्रुप्रभृ-

**तारकित** न० तारकाः संजाता अस्य तार० इतच्। नक्षत्रयुक्ते आकाशे "सितनिशाइर्षदि स्फुटनिष्पतत्कणग-णाधिकतारकिताम्बरः" नैष०।

**तारकिणी** स्त्री तारकाः सन्त्यत्र इनि ङीप्। १नक्षत्रयुक्तायां रात्रौ राजनि० २तारकायुक्ते त्रि० स्त्रियां ङीप्।

**मारकोपनिषद्** स्त्री तारयति ज्ञानदानेन तारि-ण्वुल्। तारिका उपनिषत्। उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**तारक्षिति** पु० तारा उच्चा क्षितिर्यत्र। देशभेदे स च देशः वृ० स० १४ अ० प्रतीच्यामुक्तः "अपरस्यां मणिमान्" इत्युपक्रमे "पञ्चनदरमठपारावततारक्षितिजृङ्गवैश्यकनक-शकाः" कर्म०। २उच्चभूमौ स्त्री।

**तारण** पु० तारयत्यनेन ल्युट्। १भेलके रत्ना०। कर्त्तरि ल्यु। २तारयितरि त्रि० ३विष्णौ पु०। "अमोघस्तारणस्तारः" विष्णुस०। ४भावे ल्युट्। ५तारणकरणे ६उद्धारणे च न० "तत्र चोत्पद्यते जन्तुर्भवतां तारणाय वै" भा० अ० १२अ०। भावे युच्। तारणा ७तरणप्रापणे स्त्री "तारणा पारणं चैव तद्व्रतं सर्वकामिकम्" हरिवं०१४० अ०। षष्टिवर्षमध्ये अष्टादशे वर्षभेदे। "अति-वृष्टिश्च जायेत धान्यस्याथ प्रपीडनम्। शस्यं भवति सामान्यं तारणे सुरवन्दिते।" ज्यो० त०। "तारणं तदनु भूरिवारिदं शस्यवृद्धिमुदितञ्च पार्थिवम्" वृ० सं० ८अ०

**तारणि(णी)** स्त्री तार्य्यतेऽनया तृ-णिच्-अणि। १नौकायां हारा० वा ङीप्। ङीबन्तः २काश्यपपत्नीभेदे याजोप-याजयोर्ब्रह्मर्ष्योर्मातरि तस्या अपत्यम् ढक्। तारणेय तदपत्ये। "तत्रैव च महाभागः सोऽपश्यत् संशितव्रतौ। याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ। संहिता-ध्ययने युक्तौ गोत्रतश्चापि काश्यपौ। तारणेयौ युक्त-रूपौ ब्राह्मणावृषिसत्तमौ" भा० आ० १६७ अ०।

**तारतण्डुल** पु० तारः शुक्लमौक्तिकमिव शुभ्रस्तण्डुलोऽस्य। धवलयवनाले राजनि०।

**तारतम्य** न० तरतमयोर्भावः ष्यञ्। १न्यूनाधिकत्वे "निर्धनं निधनमेतयोर्द्वयोस्तारतम्यविधिमुक्तचेतसाम्। बोधनाय विधिना विनिर्म्मिता रेफ एव जयवैजयन्तिका" इत्युद्भटः। "अहो तारतम्यं नराणाम्" महाना० तरतमशब्दे उदा०।

**तारतार** न० तारयतीति तारं तत्प्रकारः प्रकारे द्वित्वम्। सां० त० उक्ते गौणतृतीयसिद्धिभेदे तारशब्ददर्शिते "ऊहः शब्दोऽध्ययनम्" इत्यादिवाक्ये "ऊहस्तर्कः आगमावि-रोधिन्यायेनागमार्थपरीक्षणम् संशयपूर्वपक्षनिराकरणे-नोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः। सा तृतीया सिद्धिस्तारतारमुच्यते" त० कौ०।

**तारटी** स्त्री तरटीव स्वार्थे अण् ङीप्। तरटीवृक्षे राजनि० तारटीति पाठान्तरं तत्रार्थे। [राजनि०।

**तारपुष्प** पु० तारं रजतमिव पुष्पमस्य। कुन्दवृक्षे।

**तारमाक्षिक** न० तारं रूप्यमिव माक्षिकम् उपधातुभेदः। रजततुल्ये उपधातुभेदे। "तारमाक्षिकमन्यत्तु तद्भवे-द्रजतोपमम्। किञ्चिद्रजतसाहित्यात् तारमाक्षिकमी-रितम्। अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः। न केवलं रूप्यगुणावर्त्तन्ते तारमाक्षिके। द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः। स्यात् तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम्। चाक्षुष्यं बस्तिरुक्कुष्ठ-पाण्डुमेहविषोदरम्। अर्शः शोथं क्षयं कण्डूं त्रि-दोषमपि नाशयेत्। मन्दानलत्वं बलहानिमुग्रां विष्ट-म्भितां नेत्रगदान् सकुष्ठान्। तथैव मालां व्रणपूर्विकाञ्च करोत्यशुद्धं रजताख्यमाक्षिकम्"। शोधनन्तु। "कर्कोटी मेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम्। भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम्। विमला तारमाक्षिकम्। मार-णन्तु "कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत्। तैलेन वाऽजमूत्रेण म्रियते तारमाक्षिकम्" भावप्र०।

**तारल** पु० तरल एव अण्। १तरले २विटे च शब्दार्थचि०।

**तारवायु** पु० कर्म०। अत्युच्चशब्दयुक्ते पवने।

**तारविमला** स्त्री तारो रजतमिव विमला। तारमाक्षिके उपधातुभेदे शब्दार्थचि०।

**तारशुद्धिकर** न० तारस्य रजतस्य शुद्धिं धात्वन्तरयोगात् जातमलशुद्धिं करोति कृ-ट। सीसके तद्ध्मानाद्धि रजतस्य मलशुद्धिर्लोकसिद्धा राजनि०।

**तारसार** पु० उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**नारहार** पु० तारनिर्म्मितो हारः। १स्थूलमुक्ताहारे "संव-र्त्तितोरःस्थलतारहारः" रघुः।

**तारा** स्त्री तारयति संसारार्णवात् भक्तान् तृ-णिच्-अच्। १दशमहाविद्यान्तर्गते द्वितीयमहाविद्याभेदे। २नक्षत्रे च

तत्र नक्षत्रादीनां लिङ्गभेदा यथा "हस्ता स्वाती श्रवणा च क्लीवे मृगशिरो नपुंसि स्यात् । पुंसि पुनर्वसुपुष्यौ मूलं त्वस्तो स्त्रियः शेषाः" अधिकमुक्तमग्रे ४००पृ० दृश्यम् । "काली तारा महाविद्या षोड़शी भुवनेश्वरी" इत्यादि तन्त्रसा० "तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी । उग्रापत्तारिणी यस्मादुग्रतारा ततः स्मृता" तन्त्रसा० तन्नामनिरुक्तिः । ३बुद्धदेवताभेदे ४वृहस्पतिभार्य्यायाम् मेदि० । ५सुषेणवानरकन्यायां बालिभार्य्यायाञ्च ६चित्राख्यामगन्धद्रव्ये ७मुक्तायाञ्च राजनि० । "वृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीम् । जहार तरसा सर्वानवमत्याङ्गिरःसुतान् । स (चन्द्रः) याच्यमानो देवैश्च तथा देवर्षिभिः सह । नैव व्यसर्जयत् तारां तस्मायाङ्गिरसे तदा" "ददावङ्गिरसे तारां स्वयमेव पितामहः । तामन्तःप्रसवां दृष्ट्वा तारां प्राह वृहस्पतिः । मदीयायां न ते योनौ गर्भो धार्य्यः कथञ्चन । अयोनावुत्सृजत्तं वै कुमारं दस्युहन्तमम् । ईषीकास्तम्बमासाद्य ज्वलन्तमिव पावकम् । जातमात्रः स भगवान् देवानामक्षिपद्वपुः । ततः संशयमापन्नास्तारामकथयन् सुरोत्तमाः । सत्यं ब्रूहि सुतः कस्य सोमस्याथ वृहस्पतेः । ह्रीयमाणा यदा देवान्नाह सा साध्वसाधु वा । तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः । तं निवार्य्य ततो ब्रह्मा तारां पप्रच्छ संशयम् । यदत्र तथ्यं तद् ब्रूहि तारे ! कस्य सुतो ह्ययम् । सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं शनैः । सोमस्येति महात्मानं कुमारं दस्युहन्तमम्" हरिवं० २५ अ० । "सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये । औत्पातिके च विविधे सर्वतः परिनिष्ठिता । यदेषा साध्विति ब्रूयात् कार्य्यं तन्मुक्तसंशयम् । न हि तारामतं किञ्चिदन्यथा परिवर्त्तते" रामा० कि० २२ अ० । सा च पश्चात् बालिनो मरणानन्तरं सुग्रीवभार्य्या "तारया सहितः कामी सक्तः कपिकुलेश्वरः" ३१ अ० "अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" तत्र सम्ज्ञायां "तारावलीविकरणैर्व्यदधत् त्रियामाः" माघः कनीनिकायां "स्तिमितनयनताराः कामयन्तीन्दुबिम्बाः" माघः ।

ताराच अश्विन्यादयः । ज्यो० त० ताः तद्विशेषादिकञ्चोक्तं यथा

"अश्विनी भरणी चैव कृत्तिका रोहिणी तथा । मृगशीर्षं तथा चार्द्रा पुनर्वसुश्च पुष्यकौ । अश्लेषा च मघा पूर्वफल्गुन्युत्तरफल्गुनी । हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका । ज्येष्ठा मूलं तथाषाढ़े पूर्वोत्तरपदादिके । श्रवणा च धनिष्ठा च शतभिषाख्यभाद्रिका । उत्तरादिभाद्रपदा रेवती भानि च क्रमात्" । "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः । योन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः । शक्रो निरृतिस्तोयं विश्वविरञ्ची हरिर्वसुर्वरुणः । अजपादोऽहिर्बुध्नः पूषा चेतीश्वरा भानाम्" विशाखायाः शक्राग्न्योर्मिलितदैवतत्वम् अभिजितोऽभिमत्वेन अष्टाविंशतिरिति तत्र वक्ष्यते इति नक्षत्राधिपाः "उग्राः पूर्वमघान्तका ध्रुवगणश्चोत्तराणि स्वभूर्वासादित्यहरित्रयं चरगणः पुष्याश्विहस्ता लघुः । चित्रा नित्यमगान्त्यभं मृदुगणश्चैषोऽहिरुद्रेन्द्रयुक् । मिश्रोऽग्निः सविशाखभः शुभकराः स्वे स्वे गणाः" "शशाङ्कतारयोः शुद्धिर्विचार्य्या सर्वकर्म्मसु । ग्रहाणामपि सर्वेषां तच्छुद्धौ फलदातृता" । श्रीपतिसमुच्चये "ताराचन्द्रबले प्राप्ते दोषाश्चान्ये भवन्ति ये । ते सर्वे विलयं यान्ति सिंहं दृष्ट्वा गजा इव । जन्मसम्पत् विपत्क्षेमं प्रत्यरिः साधकोवधः । मित्रं परममित्रञ्च जन्मभाच्च पुनःपुनः । सर्वमङ्गलकार्य्येषु त्रिषु जन्मसु कारयेत् । विवाहश्राद्धभैषज्ययात्राक्षौरादि वर्जयेत् । यात्रायां पथि बन्धनं कृषिविधौ सर्वस्य नाशो भवेत् । भे क्ष्वे मरणं तथा सुनियतं दाहोऽब्दहारम्भणे । षौ रोगसमागमो बहुविधः श्राद्धेऽर्थनाशस्तथा चारे बुद्धिविनाशनं युधि भयं प्राप्नोत्ययं जन्मभे । पापाख्या तु त्रिविधा पञ्चचतुर्दशविंशतिश्चयुता । सिद्धिफला हानिकरी विनाशसंज्ञा क्रमात् कथिता" । "जन्माद्यं कर्म्म ततोऽपि दशमं सांघातिकं षोड़शकम् । समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् । आद्यात्तु पञ्चविंशम् मानसमेवं नरः षड्भः स्यात् । नवनक्षत्रोऽवनिपतिः स्वजातिदेशाभिषेकर्क्षैः" । तात्पर्यन्तु । "पूर्वोक्तं मानवमयजानां राज्ञान्तु पौष्णेन सहैकादशानि । सपौष्णमित्रं पितृदैवतञ्च प्रजापतेर्भञ्च कुलीवकानाम् । आदित्यहस्ताभिजिदश्विभानि तान्यन्त्यजातेः प्रभविष्णुतायाम्" । (देशभं देशनामर्क्षम्) । नाडीनक्षत्राणि । "देहादेहार्थहानिः स्याज्जन्मर्क्षे उपतापिते । कर्म्मर्क्षे कर्म्मणां हानिः पीड़ा मनसि मानसे । स्वर्क्षेन्द्रियवस्तूनां हानिः सांघातिके तथा । संतप्ते सामुदयिके

मित्रभृत्यार्थसंचयः। वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम्। साङ्घातिकफलम्। "जातिभे कुलनाशः स्यादुवन्धनस्वाभिषेकभे। देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम्। यस्मिन्राजाभिषिक्तोभवति तदाभिषेचनिकभम्" अ इ उ ए कृत्तिका श्रो यदि सु रोहिण्यादिदेशभम् (चक्रशब्दे १२४८पृ०शतपदचक्रे दृश्यम्)। उग्रादिगणादिकार्य्यभेदः सु० चि० उक्तो यथा

"उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम्। तत्र स्थिरं बीजगेहशान्त्यारामादिसिद्धये। स्वात्यादित्ये श्रुतेस्त्रीणि चन्द्रश्चापि चरं चलम्। तस्मिन् गजादिकारोहो वाटिकागमनादिकम्। पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा। तस्मिन् घाताग्निशाठ्यानि विषशस्त्रादिसिद्ध्यति। विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतम्। तत्राग्निकार्य्यमिश्रं च वृषोत्सर्गादिसिद्धये। हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा। तस्मिन् पण्यरतिज्ञानं भूषाशिल्पकलादिकम्। मृगान्त्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा। तत्र गीताम्बरं क्रीड़ा मित्रकार्य्यविभूषणम्। मूलेन्द्राद्रार्हिभं सौरिस्तीक्ष्णं दारुणसंज्ञकम्। तत्राभिचारघातोग्रभेदाः पशुदमादिकम्। मूलाहिमिश्रोग्रमधोमुखं भवेदूर्द्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम्। तिर्य्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विनानीडशतत्रयमेषु"।

**ताराकूट** न० दम्पत्योर्विवाहशुभाशुभज्ञापके कूटभेदे उपयमशब्दे १२४८ पृ० दृश्यम्। "वर्णो वश्यस्तथा तारा योनिश्च ग्रहमैत्रकम्। गणमैत्रं भकूटञ्च नाडी चेते गुणाधिकाः" मुहू०चि०। [भेदे तारकाशब्दे दृश्यम्।

**ताराक्ष** पु० तारकाक्षापरपर्य्याये तारकासुरस्य पुत्रे दैत्य-

**ताराचक्र** न०तन्त्रोक्ते दीक्षणीयमन्त्रशुभाशुभज्ञानार्थे चक्रभेदे तत्स्वरूपादि चक्रशब्दे २८०६पृ०नक्षत्रचक्रे दृश्यम्।

**ताराचमन** न० तारायाः पूजाद्यङ्गमाचमनम् शा० त०। तारादेवीपूजाद्यङ्गे आचमनभेदे तच्च भैरवतन्त्रे उक्तं यथा "ताराबीजैस्त्रिभिः पीत्वा मायया क्षालयेत् करम्। कूर्च्चं च्योर्षो तु हिरन्महज्ज फट्कारैः क्षालयेत् करम्। वाक्यं नासे दृशौ श्रोत्रे नाभिवक्षःशिरोभुजान्। वैरोचनादिभिः स्पृष्ठा सर्व्वपापैः प्रमुच्यते। आचम्य भैरवो भूत्वा तत्परात्तां प्रपश्यति"। ताराबीजैरिति। ब्यपतारकजटानीलसरस्वतीभेदैः। वैरोचनादयस्तु। वैरोचन, शङ्ख, पाण्डुर, पद्मनाभ वामक, वामक, पाण्डव, तारकाऽमिताङ्ग, यमान्तक, विघ्नान्तक, नरा-

न्तकाः, सप्तदशीमिश्रयादिनमोऽन्तकाः" कृष्णानन्दतन्त्रसा०।

**ताराधिप** पु०६त०। १चन्द्रे २शिवे ३वृहस्पतौ ४वालिवानरे ५सुग्रीवे च। "ततार ताराधिपखण्डधारी" कुमा०। "ताराधिपे त्रिनि लग्नगतेऽस्त वास्मिन्" ज्यो०त०। तारापतितारानाथादयोऽप्यत्र। "कठोरताराधिपलाञ्छनच्छविः" माघः। ६नक्षत्राधिपेषु अश्विनीकुमारादिषु ताराशब्दे दृश्यम्।

**तारापथ** पु० ताराणां पन्थाः कच् समा०। आकाशे हला०

**तारापीड़** पु० ताराणामापीड़ः भूषणमिव। चन्द्रे त्रिका०।

**ताराप्रमाण** न० अश्विन्यादिनक्षत्राणां स्वरूपाभेदकसंख्याविशेषे स च बृ० स० ९८ अ० सप्रयोजनमुक्तो यथा

"शिखिगुणरसेन्द्रियानलशशिविषयगुणर्तुपञ्चवसुपक्षाः। विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः। भूतशतपक्षवसवो द्वात्रिंशच्चेति तारकामानम्। क्रमशोऽश्विन्यादीनां कालस्ताराप्रमाणेन। नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत्। दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः"।

**ताराभूषा** स्त्री तारा भूषा यस्याः। रात्रौ राजनि०।

**ताराभ्र** पु० तारो निर्मलः जलशून्यः अभ्रो मेघ इव शुभ्रत्वात्। कर्पूरे राजनि०।

**तारामण्डल** न० ताराणां मौक्तिकानां मण्डलं यत्र। १देवरमण्डपभेदे शब्दरत्ना०। ६त०। २नक्षत्रमण्डले च।

**तारामृग** पु० तारारूपः मृगः मृगशिरः। मृगशिरोनक्षत्रे "अन्वधावन् मृगं रामो रुद्रस्तारामृगं यथा" भा०व०२७७ अ० "तारारूपं मृगम् तारामृगं, प्रजापतिः स्वां दुहितरं मृगो भूत्वा जगाम तस्य रुद्रः शिरोऽच्छिनत् तदेव मृगशिरो नक्षत्रम्" नीलक०। "एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः। उभावेतौ मृगो दिव्यौ तारामृगमहीमृगौ" रामा० अर० ४३।२।अ०।

**तारारि** पु० ६त०। विटमाक्षिके उपधातुभेदे हेमच०।

**तारावती** स्त्री ककुत्स्थराजभार्य्यायां मनोन्मथिन्यां जातायां दुर्गावतारभूतायां कन्यायां शिवावतारचन्द्रशेखरपत्न्याम्। तत्कथा कालिकापु० ४७ अ० यथा।

"काकुत्स्थो भार्य्यया सार्द्धमत्यन्तमुदितोऽभवत्। ककुजेनाथ हारेण भूषिता सा ककुत्स्थजा। बद्धे मन्दिरे तस्य यथैवात्र सुरापगा। तेनैव हारचिह्नेन तस्यास्ताराऽस्तीति वै, नामाकरोत् पिता काले यथोक्ते नयनम्!"। "पतिं पूर्ववरं प्राप्ती राजस्तारावती सती। स्वयं सा पार्वती देवी पतिं च चन्द्रशेखरम्। वैवाहि-

केन विधिना स राजा चन्द्रशेखरः। तारावतीं सदा भार्य्यां ककुत्स्थस्य पतेः सुताम्। संस्कृत्य स्थापयामास देवेभ्यो वैदिकैर्मखः"

**ताराषोढ़ा** स्त्री ६त०। तारापूराङ्गे षोढ़ान्यासभेदे तन्त्रसारे ताराक्र० दृश्यम्। "इति षोढ़ा च कथिता तारायाः सर्वसिद्धिदा" तन्त्रसा०। [ताड़िकाशब्दे दृश्यम्।

**तारिका** स्त्री ताड़िका डस्य रः। तालरसजाते मद्यभेदे।

**तारिन्** त्रि० तारयति तॄ–णिच्–णिनि। १तारके। स्त्रियां ङीप्। सा च दशसु महाविद्यासु २द्वितीयविद्यायाम् तद्भेदाः तन्त्रसारे उक्ता यथा "तारा चोग्रा महोग्रा च वज्रा काली सरस्वती। कामेश्वरी च चामुण्डा इत्यष्टौ तारिणी मताः। अथ भेदान् प्रवक्ष्यामि तारिण्याः सर्वसिद्धिदान्। येषां विज्ञानमात्रेण जीवन्मुक्तो हि साधकः" इत्युपक्रमे तासामभिधानम्। ३बुद्धदेवताभेदे त्रिका०।

**तारुक्ष्य** पु० तरुक्षस्यर्षेरपत्यं गर्गा० यञ्। तरुक्षर्षेरपत्ये। स्त्रियां लोहिता० ष्फ। तारुक्ष्यायणी। यूनि तु तारुक्ष्यायण फक्। यूनि तदपत्ये स च गोत्रप्रवरान्तर्गतः। [स्त्रियां ङीप्।

**तारुण** पुंस्त्री तरुणस्यापत्यम् उत्सा० अञ्। तरुणस्यापत्ये

**तारुण्य** न० तरुणस्य भावः ष्यञ्। यौवने अमरः। "अ-राम्भा गाढ़तारुण्याः समस्तरतकोविदाः" सा० द०। "ततः स राजा तारुण्यादौरसेन बलेन च" भा० श्रा० १२५ अ०।

**तारेय** पु० ताराया अपत्यम् ढक्। अङ्गदे १वालिपुत्रे। "करिष्यत्येष तारेयस्तेजस्वी तरुणोऽङ्गदः" रामा० कि० २२सर्गः। २बृहस्पतिभार्य्यायास्तारायाश्चन्द्रजे पुत्रे बुधे च।

**तार्कव** त्रि० तर्कविकारः कोपधत्वात् अण्। तर्कविकारे सि० कौ०। [२तर्कशास्त्राभिज्ञे च।

**तार्किक** त्रि० तर्कं वेत्ति तच्छास्त्रमधीते वा ठञ्। १तर्कवेत्तरि

**तार्क्ष** पु० तृक्ष एव स्वार्थे अण्। कश्यपे ऋषौ। "प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान्। पश्यतां सर्वलोकानां तार्क्षपुत्रः सुधामिव" भाग०। २ पातालगरुड़लतायां स्त्री राजनि० गौरा० ङीष्।

**तार्क्ष्य** पु० तृक्षस्य गोत्रापत्यं गर्गा० एकोत्थस्य तृक्षेति पाठान्तरात् यञ्। १तृक्षस्य गोत्रापत्ये स्त्रियां लोहि० ष्फ। तार्क्ष्यायणी। २गरुड़ाग्रजे अरुणे ३गरुड़े ४अश्वे ५सर्पे पुंस्त्री० ६रसाञ्जने च मेदि०। ७शालवृक्षे इत्यर्थे च शब्दर० ८अश्वकर्णवृक्षे १०स्यन्दने हेमच०। ११पर्वतभेदे १२विहङ्गमात्रे। "अयमुत्तरात् संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ" यजु० १५।१८। "तीक्ष्णेऽस्त्वरीषे क्षिपति पक्षौ तार्क्ष्यः" वेददी० पृषो०। तत्र गरुड़े "आरुह्य तार्क्ष्यं नभसीव भूतले" माघः "भवन्ति निर्विषाः सर्पाः यथा तार्क्ष्यस्य दर्शनात्" पञ्चत०। "तक्षेण तार्क्ष्यात् किल कालियेन" रघुः। "दशराजमुपयुज्य सर्वं तरति किल्बिषं तार्क्ष्यदर्शनमुपपद्यते" सुश्रुतः। तार्क्ष्यस्येव दर्शनं दूरात् दर्शनमित्यर्थः। सर्पे "त्रिपदाः शिखिनस्तार्क्ष्याश्चलद्दंष्ट्राः विषाग्निनः" भा० भी० ९ अ०। [शब्दार्थचि०।

**तार्क्ष्यज** न० तार्क्ष्ये पर्वते जायते जन–ड। रसाञ्जने

**तार्क्ष्यध्वज** पु० तार्क्ष्यो ध्वजोऽस्य। गरुड़ध्वजे विष्णौ हेमच० तार्क्ष्यकेतनादयोऽप्यत्र।

**तार्क्ष्यनायक** पु० ६त०। गरुड़े राजनि० तार्क्ष्यनाथादयोऽप्यत्र

**तार्क्ष्यप्रसव** पु० तार्क्ष्यः शैलः प्रसवोऽस्य। अश्वकर्णवृक्षे राजनि०

**तार्क्ष्यशैल** न० तार्क्ष्यशैले भवम् अण्। रसाञ्जने राजनि० "सिन्दूरकं चक्रमर्दस्य बीजमिक्षुरकं शेखरं तार्क्ष्यशैलम्" । "लौहं चूर्णं मागधी तार्क्ष्यशैलं तस्याः कार्य्याः कृष्णवर्णास्तिलाश्च" सुश्रुतः।

**तार्क्ष्यसामन्** न० सामभेदे लाट्या० ११।६।१८।

**तार्क्ष्यायण** पुंस्त्री० तृक्षस्य ऋषेरपत्यं युवा गर्गा० एकोत्थस्य तृक्षेति पाठान्तरात् यञ् यूनि फक्। अनातील्युक्तेरापत्यस्य यस्य लोपो न। तृक्षर्षेर्यून्यपत्ये। [शब्दरत्ना०।

**तार्क्ष्यी** स्त्री तार्क्ष्यस्य खगस्य प्रिया अण्। वनलताभेदे

**तार्ण** त्रि० तृणस्येदं शिवा० अण्। १तृणसम्बन्धिनि २तृणजन्ये वह्नौ पु०। "तार्णतार्णोभयं नास्तीत्यत्र तार्णत्वमतार्णत्वञ्च वह्नित्वव्याप्यो जातिभेदः इति नव्य नैयायिकाः। तृणात् तद्विक्रयात् स्थानादागतः आयस्थानत्वात् शुण्डिका० अण्। ३तृणविक्रयस्य पार्श्वस्थानजे करे त्रि०।

**तार्णक** त्रि० तृणानि सन्त्यस्मिन् तृण् बुक् च तार्णकीयास्तस्मिन् भवः विल्वका० छमात्रस्य लुक्। तृणयुक्तदेशभवे।

**तार्णकर्ण** पुंस्त्री० तृणकर्णस्यापत्यं शिवा० अण्। तृणकर्णस्यर्षेरपत्ये। [नामकर्षेर्गोत्रापत्ये।

**तार्णायन** पुंस्त्री तृणस्यर्षेर्गोत्रापत्यम् नडा० फक्। तृण-

**तार्त्तीय** त्रि० तृतीय एव स्वार्थे अण्। तृतीये "प्रथमस्य तृतरसाङ्गुलात्तीयं तृतीयं सवनम्" आश्व० श्रौ० ३।१।४

**तार्त्तीयीक** त्रि० तृतीय एव तृतीय+स्वार्थे ईकक्। तृतीये "तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः" मालतीमाधवम्।

वरः १६ । विन्दुद्वयं गुरुश्चैव भवेद्यत्र स दर्पणः १७ । रतिलीले विधातव्यं लघुद्वन्द्वं गुरुद्वयम् १८ । आदौ षोडश गुरवो द्वात्रिंशल्लघवस्ततः । चतुःषष्टिर्द्रुता यत्र सोऽयं सिंहपतिर्मतः १९। श्रीरङ्गसंज्ञके ताले सगणाल्लः प्लुतौ मतौ२० । सिंहविक्रमताले तु मगणो भगणाः सगौ २१। प्लुतो लश्च द्रुतश्चैव ताले दीपकनामनि २२ ताले सारङ्गिकायोद्दे लद्वयं चचतुष्टयम् २३। लचतुष्कं विरामान्तं गजलीले प्रकीर्त्तितम्२४। चच्चत्पुटस्तु चत्वार्यो विरामान्तो द्रुतौ लघुः २५। द्रुतद्वन्द्वं भवेत्ताले कुडुक्काख्ये लघुद्वयम्२६। भवेच्च विजयानन्दे लतयश्च लघुत्रयम्२७। वीरविक्रमताले तु द्रुतौ लगौ ततः प्लुतः २८। टेङ्किका रगणेन स्यादेतेनैव हतास्वरे २९। भगणो न प्लुतौ स्यातां रङ्गाभरणनामके ३०। श्रीकीर्त्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम् ३१। चतुर्द्रुता लघू द्वौ तु द्रुतो गो वनमालिनि३२। चतुर्थताभिधे ताले यगणानन्तरं प्लुतः। ३३। मध प्लुतो लगौ विन्दुद्वयं गो लः प्लुतस्तथा। लघुः प्लुतो द्रुतश्चैको लघुद्वयमथापि च। निःशब्दं च चतुष्कन्तु ताले स्यात् सिंहनन्दने ३४। गो लघुगौ लघुः प्लुतस्ताले मल्लीवरे मतः ३५। गो द्रुतौ गौ प्लुतद्वन्द्वं चन्द्रबिम्बे प्रकीर्त्तितम् ३६। द्रुतद्वन्द्वं लघुश्चैकस्ताले स्यात्तु द्वितीयके ३७। तकारश्च यकारश्च जयमङ्गल-नामनि ३८। चत्वारो गुरवो विन्दवश्चत्वारश्च प्लुता अपि। विन्दवो दश षट् चात्र ताले गान्धर्वसंज्ञके ३९। मकरन्दे द्रुतद्वन्द्वं लघुद्वन्द्वमथो गुरुः ४०। गुरुर्लघुः प्लुतश्चैव त्रिभङ्गिः परिकीर्त्तिता ४१। गुरुद्वयं लघुद्वन्द्वं रतिताले प्रकीर्त्तितम्४२। वसन्तताले चत्वारो मगणो लगश्च तथा४३। अनन्तकण्ठे गुरुश्चैको विरामान्तस्तु लद्वयम् ४४। गप्लुतौ लौ द्रुतौ लश्च प्लुतो मार्तिनामनि४५। कविशेखरे प्लुतः शून्यं मगौ लश्च ततो लघुः४६। लचतुष्कं विना शब्दं यत्र घोषः स उच्यते ४७। हरवल्लभताले च प्लुतो लो गौ च लद्वयम्४८। भगणः प्लुतौ मणौ गणौ प्लुतौ लघुश्च भैरवे४९। गतप्रत्यागते ताले लो गौ गौ गौ प्रकीर्त्तितौ५०। चतुर्लघु मल्लताले विरामान्तं द्रुतद्वयम्५१। लगौ गौ गो मगौ गश्च लद्वयं लद्वयं पुनः। मचतुष्कं विना शब्दं ताले भैरवमस्तके५२। सरस्वतीकण्ठाभरणे गौ लघुश्च द्रुतद्वयम् ५३। एक एव प्लुतो यत्र क्रीडातालः स उच्यते ५४। द्रुतद्वयं विरामान्तं ताले निःसारुके मतम् ५५। लत्रयं सविरामान्तं गौ पुनः लत्रय-तथा। प्लुतौ गः लयुगं गश्च यत्र उल्लावली तु सा५६। लगौ विन्दुयुगं गौ लौ रत्नाकरे प्रकीर्त्तितः ५७। लद्वयं सविरामान्तं गुरुः प्लुतद्वयं लघुः। यत्र ताले स विज्ञेयो भरतानन्दसंज्ञकः ५८। आदिताले लघुश्चैक इत्याह भरतो मुनिः ५९। भगणश्च प्लुतान्तःसंयुक्ते एकतालके ६०। एकाधिकशते ताले लक्षणं स्यात्तथा इमे"। अथ प्लुतादिमात्राभेदेन तालधारणम्। "ताले निष्पात-हस्तः प्लुतमनुघटयेद्धातमेकं सशब्दं तत्पश्चात् द्वौ च पातौ निनदविरहितौ दर्शयेद्गुर्वतोऽधः। शुन्यत्वात् पञ्चतालाविति जगति पुनः सत्पविद्वौ सनन्दा विद्वं पाततयं तत् त्रिफलतनुवहिर्वेद्धेद्दुर्वकारम। एको पातः स-शब्दो द्विकल इह गुरौ शब्दहीनस्तथान्यः सोऽप्यूर्ध्वं याति वीलावलयवलयितोत्तानहस्ताङ्गुलीभिः। किञ्चो-र्द्धैकैकमात्रा प्रकटयिति लघौ पात एको निनादी पातो मात्रार्द्धभाजि द्रुतवपुषि लघोरर्द्धनादेन पातः"। संगी० दा० १स्तवकः।

"आदावष्टतया पक्षो मत्स्य चन्द्रचतुर्दशः। दशावतारवत्सा-दिग्लवनाट्यं ततः परम्।"

अष्टतालभेदाः। "आडः१ दोजः२ ज्योतिः३ चन्द्रशेखर४ गञ्जनं५ पञ्चतालः६ रूपकं७ समतालः८।"

तत्र रुद्रतालस्य भेदाः। वीरविक्रमः१। विषमसमुद्रः२ भरणं३ वीरदमकः४मयङ्कः५ कन्दर्पः६ डाँपपाहिजः७ प्लुवचरणं८ हयकोवीट९ गजेन्द्रगुरुः१० कुटका११।"

अथ ब्रह्मतालभेदाः "ब्रह्मा१ विरामब्रह्म२ षट्कला३ ब्रह्ममाला४"

अथेन्द्रतालभेदाः। "देवधारः१ देवधाती२मदनदोला३ गुरु-गन्धर्वः४ पञ्चाली५ इन्द्रमायः६।"

अथ चतुर्दशतालभेदाः। "चित्रतालः१चन्द्रमाला२ देवमाला३ अर्द्धज्योतिः४ अर्णधारः५ अभाटः६ धराधारा७ वस-नपाक८ काककला९ वीरपञ्चा१० तालकली११ कर्मधारिका१२ भाषा१३ अर्द्धमाला१४।"

क्रमेणैषां लक्षणादि तत्रापि अष्टतालभेदस्य लक्षणानि यथा

"एकतालस्ततः शून्यं युगलं तालिका परे। षड्गीते प्रथमः सार आडतालः प्रकीर्त्तितः१। एकतालश्च शून्यश्च क्रमेणापि त्रिधा भवेत्। शेषशून्यं कलाभेदे दोजाख्यश्च भवेत् पृथक् २। प्रथमं युगलं तालं एक एकस्तथा परे। कलाभेदे नामस्यैवं ज्योतिश्च परिकीर्त्तितम् ३।" चन्द्रश्चन्द्रस्तथा शून्यं तथा चन्द्र-स्तथा परे। षट् तालानि भवन्त्येवं चन्द्रशेखर-

भाषितः ४। एकतालो भवेत् च्छेदः क्रमेणापि चतुष्टयम् । शेषे शून्यं गजानन्द सर्वतो मुनिभाषितम् ५ । प्रथमं युगलञ्चैव तत्परं तालमेककम् । शेषे गुरुं तथा शून्यं पञ्चतालं प्रकीर्त्तितम् ६ । युगलं प्रथमं तालं तत्परञ्चैक-शून्यकम् । शेषे च युगलं तालं रूपकं परिकीर्त्तितम् ७। एकतालं तथा शून्यं क्रमेण द्विविधं भवेत् । शेषे युगलतालञ्च समतालं भवेत् परम् ८।"

रुद्रतालभेदलक्षणादि "एकतालं तथा शून्यं क्रमेण त्रिविधं भवेत् । तत्परं युगलं ताल रुद्रेव वीरविक्रमः १। गुरुतालं तथा शून्यं तत्परं ह्ययतालकम् । शेषे च युगलं तालं चतुर्विषमं स्मृतम् २ । गुरुतालञ्च शून्यञ्च एकतालञ्च तत्परे । शेषैकत्र त्रिशून्यञ्च विषमं चरणं भवेत् ३ । एकतालं तथा शून्यं क्रमेणापि त्रिधा भवेत् । युगलं युगलं पश्चात् स वीरदमकः स्मृतः ४ । प्रथममेकतालञ्च तत्परं शून्यमेककम् । शेषैकत्र त्रितालञ्च लघुशङ्खस्य गतिर्यथा ५ । समतालं यथा दृष्टं तथा कन्दर्पसंज्ञितम् । समताले भवेत् शून्यं कन्दर्पे नास्ति, तत्पुनः ६ । पञ्चतालात् परं शून्यं ओंकारपादिरूपसमम् । चतुर्हूस्त भवेत् तत्तं संप्रामञ्च यथा मतिः ७। एकतालं तथा शून्यं क्रमेणापि द्विधा भवेत् । शेषैकत्र त्रितालञ्च प्रुवचरणभाषितम् ८ । एकतालं एकशून्य-मित्थं वञ्च भवेत् क्रमात् । विरामे एकतालञ्च नागभेदे दयकोषिका ९। युगलं युगलं पश्चात् तदन्ते चैकतालकम् । शेषे च गुरु शून्यञ्च गजेन्द्रगुरुभाषितम् १० गुरुशून्यं विरामे च एकतालं भवेत् क्रमे । कुटना-ख्यानकं घोरं सङ्गीतपरिनिष्ठितम् ११ ।"

ब्रह्मतालभेदलक्षणानि । "युगञ्च तत्तं प्रथमैकतालं किञ्चिद्विरामे पुनरेकतालकम् । ब्रह्माख्यतालञ्च सुगीत-मध्ये यथा कपोती हि करोति शब्दम् १ । गुरु-तालं भवेद्दत्तं एकतालञ्च तत्परे । शेषे द्वितीयशून्ये च विरामब्रह्मतालकम् २। प्रथमञ्चैकतालञ्च गुरुशून्यं तथा परे । शेषैकत्र त्रितालेति षट्कला खलु कथ्यते ३। आदौ गुरुं तथा गुरुं त्रितालञ्च तथा परे । चम्र-माला भवत्येषा ब्रह्मतालान्तरे शुभे४।"

इन्द्रतालभेदलक्षणानि "अविरामं त्रितालञ्च एकशून्यन्तथा-परे । शेषे तत्तं त्रितालञ्च देवधार इतीर्य्यते१। द्वितीय-शून्यं विरामे भवति तत्तथ त्रितालानि । शेषेण द्विशून्य-मित्येवं देवमाली २ । प्रथममेव गुरुतालं तत्पश्चादेव शून्यविरामे । शेषे त्रितयतालं भवतीति मदन दोलेति । गुरुतालं समारभ्य पञ्चतालं भवेत्तथा । चतुर्हस्त तथा तत्तं गुरु गन्धर्व ईरितः ४ । श्रावणस्य यथा धारा तथा तालो भवेत्पुनः । पञ्चतालान्तराणीति पञ्चाणीति प्रकीर्त्तिता ५ सविरामं चतुस्तालं त्रितालं शून्यमन्ततः । मेघारम्भो यथा भेका रुवन्ते इन्द्रभा-षितः ६ ।"

चतुर्दशतालभेदलक्षणानि "एकतालञ्च शून्यञ्च क्रमेण त्रितयं ततः। शेषे चतुष्टयं तत्तं चित्रताल इतीर्य्यते१ । एकचन्द्रस्तथा गुरुं तालं प्रत्येकतत्त्वयम् । शेषे त्रीणि च शून्यानि चन्द्रमाला भवेत्परा २ । प्रथमं षट्कतालञ्च चतुर्हूस्तु भवेत् क्रमात् । शेषे गुरुं तथा शून्यं देवमाला च प्रोच्यते३। चन्द्रशून्यं त्रितालञ्च विरामेण क्रमेण तु । चतुर्हूस्तु भवत्येवमष्टज्योतिरिति स्थितिः ४। एकैक-तालान्तरगुरुतालात् शून्यत्रयं तत्परमेकतालम् । कलाभिदा शून्यभिदा समाख्या च स्वर्गधाराख्यनवीन-तालः ५। गुरुशून्यं विरामेण देवतालमिति क्रमात् । समाष्टाख्योऽन्तरे शून्यमिति सर्वत्र भाषितम् ६। यथान्तु दे राशिनि श्रीभवानं तथा शुभंकरतानभानम् । गुरुं चतुष्कं क्रमतश्च तालं शेषे त्रितालञ्च चराच-राख्या ७ । एकतालञ्च शून्यञ्च क्रमेणापि चतुष्टयम् । क्रमात्तालत्रयञ्चैव वसन्तवागुदाहृता ८ । सविरामं द्वयं तालं गुरुतालं तथा परे । शेषैकत्र त्रितालञ्च भवेद् का-ककवेति सा ९ । त्रितालञ्च भवेद् तत्तं तत्परं त्वेकता-लकम् । शेषेऽपि च त्रितालञ्चेत् कोरवल्ला प्रचक्ष्यते१०। गुरुं गुरुं तथा गुरुं तालन्त्वेकं भवेत् क्रमात् । शेषे शून्यं कलाभेदे तालकुरीति भवेत् पृथक् ११ । सवि-रामं द्वयं तालं गुरुशून्यञ्च तत्परम् । शेषोर्द्धन्तु त्रिता-लञ्च कर्णधारा प्रकीर्त्तिता १२। चन्द्रशून्यं विरामेण द्वयं तालं भवेत् क्रमात् । चतुर्हूस्तु भवेद् तत्तं भाषाख्यं तालकुसमम् १३। चतुर्हूस्तु त्रितालञ्च द्वयं तालं विरा-मकम् । इत्यष्टमाला विज्ञेया सङ्गीता भुवि सर्वतः"१४ सङ्गीतदामोदरे ४स्तबकम्" ।

तालच्छेदम् उत्सा० पञ्च । "पानर्ष द्राक्षणासुकं चाणुरं तालसैन्धवम्" प्रा० वि० पुरुषोत्तः ११ अद्यभेदे न०

तालक न० चु० तल—घञ् संज्ञायां क स्वार्थ कः । हरिताले राजनि० २द्वारकपाटरोधनयन्त्रे ( ताला ) हेमच० । ३तूवरिकायां(अरहर)शब्दर०। स्वार्थे क ।४ताले इत्यादौ

**ताल(लि)कट** पु० देशभेदे स च देशः बृ० स० १४ अ० कूर्मविभागे दक्षिणस्यामुक्तः। अथ दक्षिणेनेत्युपक्रमे "का-कालिनरीरिकीर्णताल(लि)कटाः"।

**तालकन्द** न० तालस्येव कन्दमस्य। तालमूल्याम् "कसेरु कोविदारञ्च तालकन्दं तथाविधम्" प्रा० त० वायुपु०। "तालकन्दं तालमूलीति प्रसिद्धम्" रघु०।

**तालकाभ** पु० तालकस्येवाभा यस्य। १हरितवर्णे हेम० २तद्वति त्रि०।

**तालकी** स्त्री तालकस्येयम् अण् ङीप्। तालजमद्यभेदे(ताड़ी)

**तालकेतु** पु० तालकाख्यचिह्नितः केतुरस्य। भीष्मे। "तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत" भा० उ० १३६ अ०।

**तालक्षीर** पु०तालजातं क्षीरमिव शुभ्रत्वात्। (तालेर चिनि) शर्कराभेदे राजनि०। स्वार्थे क। तालक्षीरक। तत्रार्थे।

**तालगर्भ** पु० ६त०। (तालेर मेति) तालमस्तकि। "अथ पितृवनगात्रवत्तुङ्गदन्तैः करिवरशम्बिरदये सतालगर्भैः" बृ० स० ५० अ०।

**तालङ्क** पु० ताड़ङ्क+डस्य लः। ताड़ङ्के भूषणे शब्दार्थचि०।

**तालचर** पु० १देशभेदे २तद्देशवासिषु ३तन्नृपेषु ब० व०। "अश्मकास्तालचराश्चैव कुन्तला रेणुपास्तथा" भा० उ० १३८ अ०।

**तालजङ्घ** पु० ताल इव जङ्घा यस्य। १देशभेदे २तद्देशवासिषु ३तन्नृपेषु च ब०व०। "स हैहयान् वशताद्यै तालजङ्घांश्च भारत!" भा० व० १०६ अ०। "हैहयानामुदावर्तो नीपानां जनमेजय!। वज्रवस्तालजङ्घानां कथामा-सुतो वसुः" भा० उ० ७१ अ०। "तालजङ्घं महा-बलमौर्वेणैकेन नाशितम्" भा० अनु० १५२ अ०। ४राक्ष-भेदे "निर्मांसास्तालजङ्घाश्च व्यादितास्याः भयङ्कराः" इत्युपक्रमे "एते पञ्चाग्नि सततं रक्षन्तु मम सर्वतः" हरिवं० १६८ अ०। "कण्ठपृष्ठग्रीवाजङ्घस्य" पा० अन्त्या-युदात्तता। [तालप्रलम्बे शब्दार्थचि०।

**तालजटा** स्त्री तालस्य जटेव। तालवृक्षस्य जटाकारे पदार्थे

**तालध्वज** पु० तालः ध्वजोऽस्य। बलदेवे "शरस्तम्बा-त्कटे जातं नगं तालध्वजो बली" भा० म० २८ अ०। "नातिदूरं ततो गत्वा नगं तालध्वजो बली" ५५ अ०। "अस्ति तालध्वजा नाम नगरी त्रिदशोपमेति" पद्मपु० क्रियायोगसारोक्ते २पुरीभेदे स्त्री।

**तालनवमी** स्त्री तालोपहारा नवमी शा० त०। भाद्र-शुक्लनवम्यां "मासि भाद्रपदे या स्याच्छुक्ला नवमी बहुलेतरा। तस्यां संपूज्य वै दुर्गामश्वमेधफलं लभेत्"। संवत्सरकौ-मुतगरुड़पुराणवचनम् इयमेव तालनवमी ख्याता

**तालपत्त्र** न० तालस्य पत्त्रमिव। १कर्णभूषणभेदे ताड़ङ्के। अमरः। ६त०। २तालस्य पत्त्रे च। "क्वचित् विभ्रमयेव उन्मत्तालपत्त्रया" काद०।

**तालपत्त्रिका** स्त्री तालस्य पत्त्रमिव पत्त्रमस्याः ङीप् संज्ञायां कन् ह्रस्वः। तालमूलीवृक्षे राजनि०।

**तालपत्त्री** स्त्री तालस्य पत्त्रमिव पत्त्रमस्याः ङीप्। मूषिकपर्ण्याम् राजनि०। "अपामार्गोऽश्वगन्धा च तालपत्त्री सुवर्चला" सुश्रु०

**तालपर्णी** न०स्त्री० ताल इव खड्गमुष्टिरिव पर्णमस्य। १मुरानामद्रव्ये शब्दच०। स्त्रीत्वपक्षे पाककर्णेति ङीप्। सा च २मधुरिकायां जटाधरः।

**तालपुष्पक** न० तालःखड्गमुष्टिरिव पुष्पमस्य कप्। १प्रपौ-ण्डरीके शब्दर०। ६त०। २तालवृक्षकुसुमे च।

**तालप्रलम्ब** न० ताले वृक्षे प्रलम्बते प्र+लम्ब–अच्। ताल-वृक्षस्य जटायाम् राजनि०। तथा "तालप्रलम्बस्य भक्ष्य-मतश्चापहम्" राजनि०। [बलदेवे त्रिका०।

**तालभृत्** पु० तालं ध्वजरूपेण बिभर्त्ति भृ–क्विप् ६त०।

**तालमर्द्दल** पु०तालस्य तालार्थं मर्द्दल इव। १वाद्यभेदे हारा०

**तालमूली** स्त्री०तालस्य मूलमिव मूलमस्याः ङीप्। मुषल्याम्। स्वार्थे क। तालमूलिका २दीर्घकन्दायाम्। मुषल्याम्। "तालमूली तु विद्वद्भिर्मुषलीति निगद्यते। मुषली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः। तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा" "कौशोड्रपालभा-स्थीनि वदंष्ट्रातालमूलिका। अजमोदा कदम्बस्य मूलं नागरमेव च" सुश्रु०।

**तालयन्त्र** न० सुश्रुतोक्ते शल्योद्धारणार्थे यन्त्रभेदे। "तालयन्त्रे द्वादशाङ्गुले मत्स्यतालवदेकताल-द्वितालके कर्णनासानाड़ीशल्यानामाहरणार्थम्" सुश्रु०।

**तालरेचनक** पु०तालेन रेचयति णिच् रिच–ण्वुल् स्वार्थे क। नटे शब्दर०। तालवेचनकेति तत्र पाठान्तरम् तत्रार्थे।

**ताललक्षण** पु० तालो लक्षणं ध्वजोऽस्य। बलरामे हेमच०

**तालवन** न० ६त०। वृन्दावनस्थे तालप्रचुरे वनभेदे "गो-वर्द्धनस्योत्तरतो यमुनातीरमाश्रितम्। ददर्शाथ ततो वीरो रम्यं तालवनं महत्" हरिवं०७०अ०। २तालानां वने च। "सुपक्वतालवनानीव स चकार रथव्रजान्" भा० भी० ११७ अ०।

**तालवृन्त** न० ताले करतले वृन्तं बन्धनमस्य, तालस्येव वृन्त-

कार्य्याखिलभूषणानि कार्य्याणि कार्य्याणि महेशतिथ्याम्। द्वितीयायां तृतीयायां पञ्चम्यां सप्तमीतिथौ। उक्तानि यानि सिध्यन्ति दशम्यां तानि सर्वदा। प्रतोषणाद्याऽखिलधर्म्मकृत्यं शुभोत्सवाद्याऽखिलवास्तुकर्म्म। संग्रामयोग्याखिलवास्तुकर्म्म विश्वे तिथौ सिध्यति शिल्पकर्म्म। पृथिव्यां यानि कर्म्माणि चरपुष्टिः शुभानि च। चरस्थिराणि द्वादश्यां यात्रां नवगृहं विना। विवाहगौरीभुजगमान्मथकार्द्दिनेषु च | उक्तानि तानि सिध्यन्ति त्रयोदश्यां विशेषतः। यज्ञक्रियापौष्टिकमङ्गलानि संग्रामयोग्याखिलवास्तुकर्म्म। उद्वाहशिल्पाऽखिलभूषणाद्यं कार्य्यं प्रतिष्ठा खलु पौर्णमास्याम्। सदैव दर्शे पितृकर्म्म मुक्ता नान्यद्विधेयं शुभपौष्टिकाद्यम्। मठैः कृतं तत्र शुभोत्सवाद्यं विनाशमायात्यचिरादशेषं तत्" पी०धा० वशिष्ठवचनम्।

**तिथिक्षय** पु० तिथीनां तिथ्युपलक्षितचन्द्रकलानां क्षयः क्षयारम्भो यस्मिन्। दर्शे अमावास्यायाम् शब्दार्थकल्प०। हेम०। तिथीनां नाशे अवमे अवमशब्दे ४२१ पृ० दृश्यम् दिनक्षयादयोऽप्यत्र। "कौर्मे पाद्मेऽपि "द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः" वशिष्ठः "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"। साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्म्मपरम्। "अधिमासे दिनपाते धनुषि रवौ भानुलङ्घिते चापि। चक्रिणि सुप्ते कुर्य्यान्नो माङ्गल्यं विवाहञ्च" इति भीमपराक्रमात् दिनपाते दिनक्षये रघु०। तिथिक्षयानयनञ्च सू० सि० उक्तं यथा

"सावनाहानि चान्द्रेभ्यो द्युभ्यः प्रोज्झ्य तिथिक्षयाः" सू० सि०। "चान्द्रेभ्यो द्युभ्यो वक्ष्यमाणचान्द्रदिवसेभ्यः सकाशादित्यर्थः। तिथिषु चान्द्रदिनेषु सावनदिनानामवशेषतुल्यः क्षयो न्यूनत्वम्। अतः तिथिशब्देन सावनो दिवसस्तस्य चान्द्रदिवसात् क्षय इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्" रङ्गना०। युगे तत्संख्या सू० सि० उक्ता यथा युग इत्युपक्रमे "तिथिक्षया यमार्थाश्विद्व्यष्टव्योमशराश्विनः" २५०८२२५२ एतन्मिता इत्यर्थः।

**तिथिपति** पु० तिथिविशेषाणां पतयः। तिथीनामधिपतौ स च सू० सि० उक्तो यथा

"तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः। शिवो दुर्गान्तको विश्वे हरिः कामः शिवः शशी" सू० सि० एतन्मूलं पीयूषधारायां धृतवशिष्ठवचनं यथा

"वह्निर्विधाताद्रिसुता गणेशः सर्पो विशाखोऽदितिजो महेशः। दुर्गा यमो विश्वहरिश्च कामः शर्वो निशेशश्च पुराणदृष्टाः इति व्यापिन इति शेषः"।

तिथिपतयश्च वृ० सं० ९९ अ० अन्यथोक्ता यथा "कमलजविधातृहरियमशशाङ्कषड्वक्त्रशक्रवसुभुजगाः। धर्म्मेशसवितृमन्मथकलयो विश्वे च तिथिपतयः। पितरोऽमावास्यायां संज्ञासदृशाश्च तैः क्रियाः कार्य्याः। नन्दा भद्रा जया रिक्ता पूर्णा च तास्त्रिविधाः। यत्र कार्य्यं नक्षत्रे तद्दैवत्यासु तिथिषु तत्कार्य्यम्"। वशिष्ठवराहवचनाभ्यामुक्तदेवानां तत्तिथिषु पूजेति न विरोधः।

**तिथिप्रणी** पु० तिथिं प्रणयति प्र+नी—क्विप्। चन्द्रे त्रिका०

**तिथियुग्म** न० तिथ्योस्तिथिविशेषयोर्युग्मम्। द्वितीयादितिथिद्वयस्य योगरूपे युग्मे तानि च सप्त युग्मानि निगमे उक्तानि यथा "युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा। प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्। एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति"। युग्मं द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षट् षष्ठी। मुनिः सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी। अत्र युग्माग्न्यादिषु सप्तसु युग्मेषु पूर्वतिथिरुत्तरविद्धा ग्राह्या उत्तरा तु पूर्वविद्धेत्युक्तं भवति। वेधश्चात्र त्रिमुहूर्त्तयोरेव तदुक्तं कालमा० "अत्र तिथीनां वेधः पैठीनसिना दर्शितः। "पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्। त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः" इति पूर्वेद्युरुदयानन्तरममावास्या त्रिमुहूर्त्ता चेत् सा प्रतिपदं विध्यति। परेद्युरस्तमयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सापि पूर्वां प्रतिपदं विध्यति त्रिमुहूर्त्तव्याप्तिः स्कान्दपुराणे दर्शिता। "यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः। सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्ता च या भवेदिति"। शिवरहस्यसौरपुराणयोरपि "या प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात् त्रिमुहूर्त्तिका। धर्म्मकृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः" इति। वृद्धवशिष्ठोऽपि "यस्यां तिथावस्तमियात् सूर्य्यस्तु त्रिमुहूर्त्तकैः। यागदानजपादिभ्यस्तामेवोपकनेत्तिथिमिति"। एवं पैठीनस्यादिवाक्ये त्रिमुहूर्त्तत्वेनैव वेधस्थितेः वक्ष्यमाणयोगमात्रेणैव वेधोक्तिः साहसमात्रम्। वेधकतिथेस्त्रिमुहूर्त्तत्वेऽपि विद्धतिथेर्मुहूर्त्ता-

टिव्यापित्वेऽपि ग्राह्यता कालमाधवीये निर्णीता यथा । "देवलः "यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिष्विति" । व्यासोऽपि "उदयन्नेव सविता यां तिथिं प्रतिपद्यते । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मस्विति" । भविष्योत्तरपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्र्यर्थे चाऽपराह्णिकीति" पद्मपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत् । उदये सा तिथिस्तत्र विपरीता तु पैतृके" इति स्कन्दपुराणेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इति विष्णुधर्म्मोत्तरेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनीति" बौधायनोऽपि "आदित्योदयवेलायां याल्पापि च तिथिर्भवेत् । पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति" नन्वस्त्वेवं तथाप्युदयानुगा तथाप्युत्तरविहायास्तिथेः क्षणे कियत्परिमाणमुदये अपेक्षणीयमिति विवेचनीयम् । तत्र बौधायनेनाल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति तथा व्यासवाक्येऽपि प्रतिभाति "उदयन्नेवे-त्यभिधानात् । भविष्योत्तरपुराणादिवचनेषु घटिकामात्रं प्रतीयते । वचनान्तरे तु विष्णुधर्मोत्तरबौधायनप्रोक्ते घटिकाचतुष्टयं भासते । तथा च पठ्यते "उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति" । अस्यार्थः । भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं दैवतम् । तस्मिंश्चास्तमिते ततः पूर्वकालीनमह्नो मुहूर्त्तत्रयं पितृदैवत्यम् । अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या । अत्रोच्यते । पौर्वाह्णिकी इति वचनेन दैवे पूर्वाह्णव्याप्त्यभिधानात् । पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वादुदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्रहीतव्या । यत्तु दक्षेणोक्तम् । त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनीति" । तत्र त्रिमुहूर्त्तव्याप्तेर्बाधकं प्रत्युतोपोद्बलकमेव । तथा हि प्रतिषेधः सर्वत्र प्रसक्तिपूर्वकः प्रसक्तिश्चात्र यथोक्तरीत्या पौर्वाह्णिकवाक्यात् त्रिमुहूर्त्तविधायिपैठीनसिवाक्याद्वा भवति । तत्र प्रसक्तं त्रिमुहूर्त्तत्वं क्षयतिथौ बाधका-भावात्तथैव व्यवतिष्ठते । तिथिक्षये त्वधिकव्याप्तिविधित्सया प्रतिषिध्यते । अनन्तरं चतुर्थमुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या । तिथिसाम्यवृद्धिवृद्ध्योरपि मुहूर्त्तत्रयमेव मुख्यम् । मुहूर्त्तद्वयं त्वनुकल्पः । अतएव स्पर्शयितुं द्विमुहूर्त्तापीत्यपिशब्दः पठ्यते ।" अत्राप्येक मुहूर्त्तव्याप्तिनिकृष्टेत्यर्थसिद्धम्

"द्वितीयादियुग्मानां पूज्यता नियमादिषु" व्यासः । अत्र प्रतिप्रसवः । "भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" । "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति॰ त॰ ।

**तिथिसन्धि** पु॰ तिथ्योः सन्धिः । तिथ्योः पूर्वापरयोः सन्धौ तत्स्थानानयनं सि॰ शि॰ यथा "गणितमुविकलाभ्यचन्द्रभुक्त्योरिन्दुभान्वोर्गतिविवरकलाभिर्भूय एताभिरेव । पृथगथ गतियुत्या नाडिका सन्धिराप्तास्तिथिकरणयोगानां फलं तत्र मिश्रम्" ।

एवं शशिबिम्बकलाभ्यो या घटिका उत्पद्यन्ते ता अपि तिथिकरणयोगानां सन्धिघटिकाः स्युः । सन्धौ मिश्रफलमित्यर्थः । अत्र सन्धिरुभयतोऽपि बिम्बस्य स्थितत्वात् । उपपत्तिरत्यन्त सुगमा" । प्रमिता॰

**तिथ्यर्द्ध** न॰ ६त॰ । करणे । करणशब्दे १६८॰ पृ॰ दृश्यम् ।

**तिनाशक** पु॰ तिनिश+पृषो॰ । तिनिशवृक्षे शब्दरत्ना॰ ।

**तिनिश** पु॰ अतिशयेन नेशति अति+निश–क पृषो॰ अतेरकारलोपः । (सादन) ख्याते वृक्षे अमरः । "तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित् । तुवरः श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत्" भावप्र॰ । [२दैत्यभेदे पु॰ हेमच॰ ।

**तिन्तिड** पु॰ तिन्तिडी+पृषो॰ । ३दकाम्ले (तेँतुल) चिञ्चः

**तिन्तिड़ी** स्त्री तिन्तिडीक+पृषो॰ । (तेँतुल) वृक्षभेदे राजनि॰ स्वार्थे क । तिन्तिडिका तत्रार्थे शब्दरत्ना॰ । "अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च । अम्ला च विचिका चिञ्चा तिन्तिड़ीका च तिन्तिड़ी । अम्लिकाऽम्ला गुरुर्वातहरी पित्तकफास्रकृत् । पक्वा तु दीपनी रूक्षा सरोष्णा कफवातनुत्" भावप्र॰ । "अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढम् । शर्करा मरिचोन्मिश्रं लवङ्गेन्दुसुवासितम् । अम्लिकाफलसंभूतं पानकं वातनाशनम् । पित्तश्लेष्मकरं किञ्चित् रुच्यं वह्निबोधकम्" भावप्र॰ । [अमरः ।

**तिन्तिड़ीक** पु॰ तिम–ईक अनीका॰ नि॰ । (तेँतुल)वृक्षभेदे

**तिन्तिडीद्यूत** न० तिन्तिड्या तद्वीजेन द्यूतम्। तिन्तिडी-बीजेन क्रीड़ने (काँइबोजेरखेला) त्रिका०।

**तिन्तिड़ि(लि)का** स्त्री तिन्तिडोः+स्वार्थे क ह्रस्वः वा डस्य लः। (तेँतुल) तिन्तिड्याम् शब्दमा०। काभावे तिन्ति-डीत्यप्यत्र।

**तिन्दिश** पु० ढिण्डिशशब्दे (ढाँड़श) राजनि०।

**तिन्दु** पु० तिल–कु–मृगय्वादि० नि०। (तेँदु)१ख्याते वृक्षे संज्ञायां कन्। तिन्दुक (गाव)इति ख्याते २वृक्षे पुंस्त्री शब्दरत्ना०। स्त्रीत्वे गौ०ङीष्। ३कर्षमाने वैद्यकपरिभाषा पुंन०। "स्वादाम्लं तिन्दुकं ग्राहि वातलं शीतलं लघु। पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु। तत्सारं तु भवेत् हृद्यं वर्ण्यं पित्तरोगजित्। विषतिन्दुकमप्येवं विशेषात् ग्राहि शीतलम्" राजनि०।

**तिन्दुकि** स्त्री तिन्दुकी+पृषो० ह्रस्वः। तिन्दुके वृक्षे शब्दर०

**तिन्दुकिनी** स्त्री तिन्दुकस्तदाकारः फलेऽस्त्यस्या इनि ङीप्। आवर्त्तक्याम् राजनि० ८२८ इत्यत्र।

**तिन्दुल** पु०तिन्दुक+पृषो० कस्य लः। तिन्दुकवृक्षे शब्दर०

**तिप** रक्षणे भ्वा० आत्म० सक०सेट्। तेपते अतेपिष्ट अतिप्त। तितेपे। ऋदित् अतितेपत्-त। [तितेम।

**तिम** आर्द्रीभावे भ्वा० पर० अक० सेट्। तेमति अतेमीत्।

**तिम** आर्द्रीकरणे दिवा०पर० सक० सेट्। तिम्यति अतेमीत्। तितेम। "वानरान् तिम्यतोऽवलोक्य" हितो० "ति-मिताश्चाभवन् सर्वे तत्र ते हरियूथपाः" रामा० सुन्द० १ स०। "अद्यैव तिमितोदकाः" रामा० अर० ५४स०। तेमनम्।

**तिमि** पु० तिम–इन्–तम–इन्–इत्व वा। १समुद्रे त्रिका०। तद्गते २मत्स्यभेदे पुंस्त्री० स्त्रियां वा ङीप्। "अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः" भरत-धृतवाक्यम्। "अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः। तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः" शब्दार्थचि०धृतरामा० वाक्यम्। "अमी शिरोभिस्तिमयः सरन्ध्रैरूर्द्ध्वं वितन्वन्ति जलप्रवाहान्" रघुः।"अत्र नानाविधाकारास्तिमयोनैकरूपिणः" भा० उ० ६८ अ०। शब्दकल्पद्रुमेऽस्य स्त्रीत्वोक्तिः प्रामादिकी अमी तिमय इति नैकरूपिण इति पुंस्त्वेव प्रयो-गात् कृदिकारान्तत्वात् वा स्त्रियां ङीप्। २तज्जाति-स्त्रियां स्त्री भेदः।

**तिमिकोष** पु० तिमेः कोष इव। समुद्रे त्रिका०।

**तिमिङ्गिल** पु० गिरति–गॄ–मूलवि० क रस्य लः "गिलेऽगि-लस्य" पा०मुम्। महामत्स्यभेदे। तिमिशब्दे उदा०दृश्यम्। "तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः" भा०व० १८६ अ०।

**तिमिङ्गिलगिल** पु० तिमिङ्गिलं गिरति गॄ–मूल० क रस्य लः अगिलस्येति पर्युदासात् न मुम्। अतिवृहन्मत्स्यभेदे तिमिशब्दे उदा०।

**तिमिङ्गिलाशन** पु०तिमिङ्गिलो मत्स्यः अश्यते यत्र अश–आधारे ल्युट्। दक्षिणस्थे देशभेदे "बलदेवपट्टनं दण्ड-कावनतिमिङ्गिलाशनाभद्राः" वृ०स० १४अ० कूर्मविभागे दक्षिणस्थदेशोक्तौ। सोऽभिजनोऽस्य तस्य राजा वा अण्। तस्य बहुषु लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०। एकवचने तु तैमिङ्गिलाशन इति भेदः।

**तिमिज** न० तिमितो जायते जन–ड ५त०। मुक्ताभेदे "तिमिजं मत्स्याक्षिनिभं वृहत्पवित्रं बहुगुणञ्च" वृ०स० ८१ अ०। मुक्ताभेदकथने।

**तिमित** त्रि० तिम–कर्त्तरि क्त। १निश्चले, अरणौ। २क्लिन्ने (भिजे) अमरः। "हृद इव तिमितागाधस्तिमि-तजलोऽमत्स्यसङ्घर्करः" रामा० अयो० ८१ स०।

**तिमिर** पुंन०तिम–किरच् अर्द्धर्चा०। १अन्धकारे २नेत्ररोग-भेदे च। "तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः। रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतःपरम्" माधवः अक्षिपटलशब्दे ४१४० दृश्यम्। "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः"। "पतिते घनतिमिरसुषिः" माघः।

**तिमिरनुद्** पु० तिमिरं नुदति खण्डयति नुद–क्विप् ६त०। सूर्य्ये "तिमिरनुदो मण्डलं यदि स केहः" वृ०स०५अ०। तिमिरभिदादयोऽप्यत्र। २अन्धकारनाशके त्रि०।

**तिमिररिपु** पु० ६त०। १सूर्य्ये हेमा०। तिमिरारिप्रभृत-योऽप्यत्र "तिमिरारिस्तमोहन्ति प्रातःस्तवनभीरवः। वयं काका वयं काका इति जल्पन्ति वायसाः" उद्भटः। २अन्धकारनाशके त्रि०।

**तिमिरि** पु० तिमीति शब्दं वाचकत्वेन राति रा–बा० कि। तिमिमत्स्ये राजनि०।

**तिमिष** पु०तिम–इषक्।१शाखककर्क्याम्, त्रिका० २माटाक्ये च शब्दार्थचि०। [स्त्रियाम्।

**तिरश्ची** स्त्री तिर्य्यक् जातिः स्त्री ङीप्। पशुपक्षिणां

**तिरश्चीन** त्रि० तिर्य्यगेव स्वार्थे ख। तिर्य्यग्भूते। "गतं तिरश्चीनमनूरुसारथेः" माघः "तिरश्चीनो विततो

रश्मिरेषामधः" ऋ० १०।१२९।५। २वक्रे च "ईक्षमाणः पादेन तिरश्चीनेन चक्षुषा" भाग० ७।८।३।

**तिरस्** अव्य० तॄ—असुन् स्वरादि। १अन्तर्द्धाने २तिर्य्यगर्थे च अमरः। ३तिरस्कारे चोरस्वामी। अस्य कृञि वा उप० स०। तिरस्कृत्य तिरः कृत्वेति "तिरस्कृत्योच्चरेत् काष्ठेत्यादि मनुः" "तिरस्क्रियन्ते कृमितन्तुजालैः" माघः। तिरस्करोति। णिच्—सलोपः। तिरयति आच्छादयतीत्यर्थः। "मुरारिरुत्खाम्बुजद्युतिरयं तिरयन्नपि वेदनाम्" जयदेवः।

**तिरस्कर** त्रि० तिरःकरोति कृ—ट। आच्छादके। स्त्रियां ङीप्। "अहो बत स्वर्यशसस्तिरस्करी कुरुस्थली पुण्ययशस्करी भुवः" भाग० १।१०।२८।

**तिरस्करिणी** स्त्री तिरः करोति कृ—णिनि संज्ञापूर्वकविधेरनित्यत्वात् इन्नभावः ङीप्। (परदा) (कानात)। पटभवे आच्छादकपदार्थे अमरः। "तिरस्करिण्यो जलदा भवन्ति" कुमा०। २आच्छादकमात्रे त्रि० "सोऽयमाख्यात तद्देश तिरस्करिणमन्तरा" रामा० अयो० १६ स०।

**तिरस्कार** पु० तिरस्+कृ—भावे घञ्। १अनादरे हला०। कर्त्तरि अण्। २अवज्ञाकारके त्रि०। "लोकस्तिरस्कार इवात्तमन्युः" किराता०।

**तिरस्कारिन्** त्रि० तिरः करोति कृ—णिनि हृत०। १आच्छादके (कानात) २पटभेदे स्त्री ङीप्। ३अवज्ञाकारके त्रि०

**तिरस्कृत** त्रि० तिरस्+कृ—कर्म्मणि क्त। १अवज्ञाते अनादृते २आच्छादिते च अमरः "अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्" काव्यप्र०। ४तन्त्रसारोक्ते मन्त्रभेदे पु० "यस्य मध्ये दकारोऽस्ति कवचं मूर्द्धनि द्विधा। अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदीर्य्यते"।

**तिरस्क्रिया** स्त्री तिरस्+कृ—भावे श। १अनादरे २तिरस्कारे अमरः ३आच्छादने च "अप्रकटीकृतशक्तिः शक्तोऽपि जनात्तिरस्क्रियां लभते" पञ्चत०। "द्विषद्विषः प्रत्युत सा तिरस्क्रिया" माघ०। [तिरस्कृति अप्यत्र (स्त्री)]।

**तिरस्य** धा० तिरस्+कण्ड्वा० यक् अन्तर्द्धाने सक० सेट्।

**तिरिट** पु० तॄ—बा० इटक्। इक्षुपर्णी शब्दमा०।

**तिरिम** पु० तॄ—बा० इमक्। शालिभेदे राजनि०।

**तिरिय** पु० तॄ—बा० इयक्। शालिभेदे राजनि०।

**तिरीट** न० तॄ—ईटक्। लोध्रवृक्षे उज्ज्वलद०।

**तिरीटक** पु० तिरीट+संज्ञायां कन्। लोध्रे अमरः।

**तिरोधान** न० तिरस्+धा—भावे ल्युट्। १अन्तर्द्धाने भावे अङ्। तिरोधाप्यत्र स्त्री।

**तिरोभाव** पु० तिरस्+भू—भावे घञ्। १गुप्तभावे २अन्तर्द्धाने।

**तिरोहित** त्रि० तिरस्+धा—क्त। १अन्तर्हिते गुप्ते २आच्छादिते च "अतिरोहितमभ्यत्" तत्त्वकौ० "एष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद" ऐत०ब्रा० "न चासारं न च न्यूनं न दूरे न तिरोहितम्" मनुः

**तिर्य्यक्पातिन्** त्रि० तिर्य्यक् पतति पत—णिनि। वक्रप्रसारिते कुटिलहस्तौ शब्दार्थचि०।

**तिर्य्यक्प्रमाण** न० कर्म्म०। विस्तारप्रमाणे।

**तिर्य्यक्स्रोतस्** पु० तिर्य्यक् स्रोतो आहारसञ्चारो यस्य। पशुपक्ष्यादौ तेषामशितान्नस्य तिर्य्यक्तया उदरे सञ्चारात् तथात्वम्। तद्भेदा भाग०। ३।१०।२१

"तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः। अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः। गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्र सत्तम!। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः! शृणु पञ्चनखान् पशून्। श्वा सृगालो वृको व्याघ्रो मार्ज्जारः शशशल्लकौ। सिंहः कपिर्गजः कूर्म्मो गोधा च मकरादयः। कङ्कगृध्रवकश्येनभासभल्लूकबर्हिणः। हंससारसचक्राह्वकाकोलूकादयः खगाः।"

"तिर्य्यक्स्रोतसां सर्गमाह तिरश्चामिति। स चाष्टाविंशतिभेदः। तिरश्चां लक्षणम् अविदः श्वस्तनादिज्ञानशून्याः। भूरितमसः आहारादिमात्रनिष्ठाः। घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्ति हृदि अवेदिनः दीर्घानुसन्धानशून्याः। तथा च श्रुतिः "अथेतरेषां पशूनाम् अशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकाविति"। अष्टाविंशतिभेदानाह गवादय उष्ट्रान्ताः द्विशफाः द्विखुरा नव खरादयः चमर्य्यन्ता एकशफाः षट्। श्वादयो गोधान्ताः पञ्चनखा द्वादश। एवमेते भूचराः सप्तविंशतिः, मकरादयो जलचराः कङ्कादयश्च खगाः। अभूचरत्वेनैकीकृत्य स्वगृहीताः। तदेवमष्टाविंशतिभेदान् वदन्ति। तेषु कृष्णरुरुगौराः मृगविशेषाः अन्येषामपि तिर्य्यक्प्राणिनामेतेष्वेव यथायथमन्तर्भावः।"

**तिर्य्यग्योनि** स्त्री तिरश्चां योनिः पशुपक्ष्यादिजातौ "स लिङ्गिनां हरत्येनस्तिर्य्यग्योनौ च जायते" मनुः।

"सवध्यां स्त्रियं प्राहुस्तिर्य्यग्योनिगतामपि" ति० त० ।

**तिल** गतौ भ्वा०पर०सक०सेट् । तेलति अतेलीत् । तितेल ।

**तिल** स्नेहे तु० पर० अक० अनिट् । तिलति अतेलीत् । तितेल ।

**तिल** स्नेहे चुरा० उभ० अक० सेट् । तेलयति ते अतीतिलत् त ।

**तिल** पु० तिल–क । स्वनामख्याते शस्यभेदे । भावप्र०तद्गुणाद्युक्तं यथा "तिलः कृष्णः सितो रक्तः सवर्ण्णोऽल्पतिलः स्मृतः । तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः । विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत् । बल्यः केश्यो हिमस्पर्शस्त्वच्यस्तन्योव्रणे हितः । दन्त्योऽल्पमूत्रकृद्ग्राही वातघ्नोऽग्निमतिप्रदः । कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः स्मृतः । अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः" ।

तिलप्रतिग्रहनिषेधमाह ब्रह्मपुराणम् "ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुतस्तथा । अव्ययमपि मातङ्गतिलांश्चैव वर्ज्जयेत्" तिलदाने फलमाह विष्णुः । "तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्" । महाभारते "कल्यमुत्थाय यो विप्रः स्नातः शुक्लेन वाससा । तिलपात्रं प्रयच्छन् वै सर्वपापैः प्रमुच्यते" । श० त० स्मृतिः "प्रेतमुद्दिश्य यो दद्यात् हेमगर्भांस्तिलान् नृप ! । यावन्तस्ते तिलाः स्वर्गे तावत्कालं स मोदते" । सप्तम्यादिवर्ज्जं तिलैः सदा स्नानं कर्त्तव्यमाह मार्कण्डेयः "सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः । श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः । सप्तमीं नवमीं चैव पर्वकालञ्च वर्ज्जयेत्" अक्षतिथौ तिलनिम्नाद्याः षड्व्यापाराः कार्य्याः यथाह ति० त० "तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः । तिलभुक् तिलवापी च षट्तिली नावसीदति" कालविशेषे तिलतर्पणनिषेधः गङ्गादौ च सर्वदा निषिद्धदिनेऽपि तिलतर्पणकार्य्यता च तर्पणशब्दे ३२५८ पृ० उक्ता । रात्रौ तिलसंबद्धवस्तुमात्रस्याभक्ष्यता "सर्वञ्च तिलसंबद्धं नाद्यादस्तमिते रवौ" काशी० "तिलाश्चम्पकसंश्लेषात् प्राप्नुवन्त्यधिवासताम्" कामन्दकी० "विक्रीणाति तिलैस्तिलान्" पञ्चत० । २तिलतुल्ये स्वल्पप्रमाणे च "तिलं तिलं समादाय रत्नानां यद्विनिर्म्मिता । तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः" भा० आ० ७६८६ श्लो० । ३तिलाकारे देहस्थे (तिल) ख्याते तिलकालके च "देवगुरुप्रसादेन जिह्वाग्रे मे सरस्वती । तेनाहं नृप ! जानामि भानुमत्यास्तिलं यथा" कालिदासः ।

तिलस्य विकारः अण् । तैल तिलनिर्यासे तिलस्नेहे तिलसद्भवस्तुजाते स्नेहे च "अदृष्टं सार्षपं तैलं यत्तैलं पुष्पवासितम् । अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः" तिथित० । पर्वणि तन्निषेधमाह "स्त्रीतैलमांससंभोगी-विण्मूत्रनरकं व्रजेत्" ति०त० एवमन्यदिनेऽपि तैलनिषेधः स्मृतौ दृश्यः ।

**तिलक** न० तिल–क्वुन् तिल+स्वार्थे स्वल्पे वा कन् वा । १क्लोमनि २कृष्णसौवर्चले अमरः ३सौवर्चले मेदि० । ४तिलवृक्षे, पु० राजनि० । ५अश्वभेदे, पुंस्त्री० मेदि० । ६रोगभेदे, अमरः ७मरुवके च हेमच० । स्वनामख्याते नासादौ धार्य्ये चन्दनादिविशेषके पुंन० । तस्य धारणप्रकारो यथा "द्वादशाङ्गे ललाटादौ तिलकं हरिमन्दिरम् । स्नानान्ते वैष्णवः कुर्य्यात् प्रत्येकं कृष्णनामभिः । नासे वक्षसि नेत्रान्ते गण्डे ऽंसे यज्ञ-चिह्नितम् । तथैव दक्षिणे कुर्य्याद्रेखकाङ्कितं मुने ! । ललाटे केशवं विद्यात् कण्ठे श्रीपुरुषोत्तमम् । वामबाहौ वासुदेवं सव्ये दामोदरन्तथा । नाभौ नारायणञ्चैव माधवं हृदये तथा । गोविन्दं दक्षिणे पार्श्वे वामे चैव त्रिविक्रमम् । विष्णुं सव्ये कर्णमूले दक्षिणे मधुसूदनम् । शिरोमध्ये हृषीकेशं पद्मनाभञ्च पृष्ठतः । हरेर्द्वादशनामानि पठित्वा तिलकानि तु । यः कुर्य्याद्वैष्णवो नित्यं स प्रणम्भक्तिमाप्नुयात् । ये कण्ठलग्नतुलसीभव-काष्ठमाला ये द्वादशाङ्गहरिनामकृतोर्द्ध्वपुण्ड्राः । ये कृष्णभक्तिसुहृदा धृतशङ्खचक्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति । तिलकन्तूर्द्ध्वपुण्ड्राख्यं मध्यच्छिद्रं हि नारद ! । यदि कुर्य्याल्ललाटे तद्विज्ञेयं हरिमन्दिरम् । नासाया-मूलमाश्रित्य शिरोमध्यगतं मुने ! । हरिपादाकृतं नासामूलमारभ्य यत्नतः । हरिमन्दिरवत् सर्वं तद्राधावल्लभीयकम् । श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम् । यौगलं तत्तु विज्ञेयं यदि मध्यसरङ्गितम् । यद्वर्द्ध्वपुण्ड्रं तिलकं शोभनं तन्मनोहरम् । तन्मध्ये पीतरेखञ्च श्रीमद्रामानुजं विदुः । श्रीरामोपासना यस्य तिलकं तूर्द्ध्व-पुण्ड्रकम् । भ्रुवोर्मध्ये सविन्दु स्यादद्यदि विप्र ! मनोहरम् । हरेः सर्व्वावताराणां मत्स्यादीनां विशेषतः । उपासकानां तिलकं केवलं हरिमन्दिरम् । ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियाणां तथैव च । वैश्यानान्तु तथा विप्र ! शूद्रादेर्गण्डकाकृति । अच्छिद्रमूर्द्ध्वपुण्ड्रन्तु ये कुर्वन्ति नराधमाः । तेषां ललाटे सततं

शुभः पाठो न संशयः । इहा भावे द्विजातीनामच्छिद्रमूर्द्ध्वपुण्ड्रकम् । कार्ष्णिः कृष्णपद्धतिं कृत्वा वक्ष्ये पाञ्चरात्रेन्दुसम् । ललाटदक्षिणे ब्रह्मा वामभागे महेश्वरः । मध्ये विष्णुर्विजानीयात् तस्मात् मध्यं न लेपयेत् । वर्त्तुलं तिर्य्यगच्छिद्रं ह्रस्वं दीर्घं ततं नतम् । पञ्चलक्षणसंयुक्तं तिलकं यन्निरर्थकम् । खनित्रवटिकाकुम्भनिर्गूढगुडकाकृति । त्रिपुण्ड्रमर्द्धचन्द्रञ्च तिलकं यन्निरर्थकम् । प्रमाणमूर्द्ध्वपुण्ड्रस्य दीर्घं स्यात् करिवर्द्धनम् । नासाग्रमूलमारभ्य ब्रह्मरन्ध्रगतं यदि । शूद्रस्यैकाङ्गुलं प्रोक्तमायतं द्व्यङ्गुलं विधि । क्षत्रिये त्र्यङ्गुलं तद्वद्ब्राह्मणे चतुरङ्गुलम् । नासिकायास्त्रिभागैको भागोमानेन यो भवेत् । भ्रुवोर्मध्यादधः स्थानं मूलमाहुर्मनीषिणः । ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । कुर्य्यात् ऊर्द्ध्वपुण्ड्रं तद्वैष्णवो हरिमन्दिरम् । वैष्णवा विप्रा भूपाश्चेत् वैश्यशूद्रान्त्यजातयः । ऊर्द्ध्वपुण्ड्रं बिभृयुरेव हरिमन्दिरम् । नरोवाप्यथ वा नारी यदि कृष्णपदं लभेत् । सततस्तुलसीमाला धार्य्या हरिमन्दिरम् । मध्यच्छिद्रं न कुर्य्यात् यत्तिलकं यदि वैष्णवः । श्वपदं तच्चितालक्ष्यं भवेन्नारद! नान्यथा । दण्डाकारं द्विरेखं यत्तिलकं मूलशोभनम् । मध्यच्छिद्रन्तु तत्प्राहुरूर्द्ध्वपुण्ड्रं मनोहरम् । अम्भोजपत्रकलिकाकारं तिलकमुत्तमम् । मध्यच्छिद्रं युग्मरेखमूर्द्ध्वपुण्ड्रं प्रकीर्त्तितम् । तीर्थस्य यज्ञकाष्ठस्य विल्वोमलयसम्भवम् । अश्वत्थतुलसीमूलमृत्तिका गोष्पदस्य च । जाह्नवी सनुमहानिम्बतुलसीकाष्ठमेव च । कस्तूरीकुङ्कुमं फल्गुसिन्दूरं रक्तचन्दनम् । गोरोचना गन्धकाष्ठं जलं चागुरु गोमयम् । धात्रीमूलस्य मृद्गन्धो हरिद्रा गोष्पदस्य च । स्नानान्ते सर्ववर्णानामाश्रमाणान्तथैव च । एतानि तिलकान्याहुः सन्ध्यादिसर्वकर्मसु" । "गङ्गामृत्तुलसीमूलमृत्तिकापत्रयोद्भवम् । राधाचरणसंलग्नं रजोमृद्गोष्पदस्य च । याऽश्वत्थमूलमृद्गोपीचन्दनं तीर्थमृत्तिका । कुङ्कुमं तुलसीकाष्ठं वैष्णवाङ्घ्रिमृत्तिका । गोरोचना च कस्तूरी हरिद्रागुरुचन्दनम् । वल्मीकमृत्तिकागन्धः पद्मकं हरिचन्दनम् । गन्धकाष्ठं महानिम्बो यमुनातीरमृत्तिका । गुरुपादरजो वारिवैष्णवाङ्घ्रिरजो जले । कृत्वा प्रतिदिनं स्नानमेतैर्गन्धमृदादिभिः । चारु यत्तिलकं प्राहुः तन्नाम्ना वैष्णवैर्ध्रुवम् । काम्यं नैमित्तिकं नित्यं यत् किञ्चित् कर्म नारद! । वर्णाश्रमाणां तन्नास्ति स्नानान्ते तिलकं विना । कर्म वर्णाश्रमाणां स्यात् दैवं पैत्रं न तत्फलम् । स्नानं सन्ध्यां पञ्च यज्ञान् पैत्रं होमादिकर्म यः । विना तिलकदर्भाभ्यां कुर्य्यात्तन्निष्फलं भवेत्" । इति ब्रह्मोत्तरखण्डम् "वीक्ष्यादर्शे जले वापि यो विदध्यात् प्रयत्नतः । ऊर्द्ध्वपुण्ड्रं महाभागः स याति परमाङ्गतिम्" पाद्मे पातालखण्डे "शिवागमे दीक्षितैस्तु धार्य्यं तिर्य्यक् त्रिपुण्ड्रकम् । विष्ण्वागमे दीक्षितस्तु ऊर्द्ध्वपुण्ड्रं विधारयेत्" । इति नागोजीभट्टधृतस्मृतसंहिता । पद्मपुराणे उत्तरखण्डे "ललाटे केशवं ध्यायेन्नारायण मथोदरे । वक्षःस्थले माधवन्तु गोविन्दं कण्ठकूपके । विष्णुञ्च दक्षिणे कुक्षौ वामे च मधुसूदनम् । त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके । श्रीधरं वामबाहौ तु हृषीकेशन्तु कन्धरे । पृष्ठे तु पद्मनाभञ्च कट्यां दामोदरं न्यसेत् । तत्प्रक्षालनतोयन्तु वासुदेवेति मूर्द्धनि" । किन्तु "ऊर्द्ध्वपुण्ड्रं ललाटे तु सर्वेषां प्रथमं स्मृतम् । ललाटादिक्रमेणैव धारणन्तु विधीयते" इति "एवं न्यासं समाचार्य्य सम्प्रदायानुसारतः । न्यसेत् किरीटमन्त्रञ्च मूर्द्ध्नि सर्वार्थसिद्धये" अथ किरीटमन्त्रः "ओम् श्रीकिरीटकेयूरहारमकरकुण्डलचक्रशङ्खगदापद्महस्तपीताम्बरधरश्रीवत्साङ्कितवक्षःस्थलश्रीभूमिसहितस्वात्मज्योतिर्दीप्तिकराय सहस्रादित्यतेजसे नमो नमः" हरिभक्तिविलासे ४विलासः । ऊर्द्ध्वपुण्ड्रशब्दे अधिकं द्रष्टव्यम् । ६ध्रुवकभेदे यथा "षड्विंशतिवर्णाङ्घ्रिस्तिलको ध्रुवको भवेत् । कटकपुटे नाले रसे वीरे चाद्भुतेऽपि वा" सङ्गीतदा० । "मुखे मधुश्रीस्तिलकं प्रकाश्य" कुमा० । तिलक इव उत्तरपदस्थः १०श्रेष्ठे "श्रियं त्रिलोकी तिलकः स एव" । "लोध्रचूर्णतिलकाकृतिः" माघः । स्वार्थे क । ११तिलकचो राजनि० । "न तिलकस्तिलकः प्रमदामिव" रघुः ।

**तिलकट** न० तिलस्य रजः कटच् । तिलरजसि ।

**तिलकल्क** पु० तिलस्य कल्कः । १पिण्याके (खलि) भावप्र० "कषायेण प्लुतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढामौषधयुतां वर्त्तिं प्रणिदध्यात्" "तिलकल्कः समधुको घृताक्तो व्रणरोपणः" सुश्रु० ।

**तिलका** स्त्री तिलं तिलपुष्पमिव कायति कै—क । हारभेदे जटा० "सगणद्वितयं भवतीह यदा रसवर्णपदा तिलकेति तदा" उक्तलक्षणके द्वादशाक्षरपादके२छन्दोभेदे च ।

**तिलकालक** पु० तिल इव कालकः कृष्णः । १देहस्थे २तिला·

कारे चिह्ने, २रोगभेदे च अमरः "कृष्णानि तिलमात्राणि नीरुजानि समानि च । वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान्" सुश्रु॰ ।

**तिलकाश्रय** पु॰ ६त॰ । ललाटे शब्दार्थक॰ ।

**तिलकिट्ट** न॰ ६त॰ । तिलपिण्याके "तिलकिट्टं तु रूक्षं स्यात् ग्लपनं दृष्टिदोषकृत् । विष्टम्भकारणं तच्च भिषग्भिः परिकीर्त्तितम्" भावप्र॰ ।

**तिलकिन्** त्रि॰ तिलक+अस्त्यर्थे इनि । तिलकधारिणि "शिखी तिलकी कर्म्म कुर्य्यात्" कात्यायनतिनिबन्धे कल्पद्रुमश्रुतिः ।

**तिलचित्रपत्रक** पु॰ तिलस्येव चित्रं पत्रमस्य कप् । तैलकन्दे वृक्षभेदे राजनि॰ ।

**तिलचूर्ण** न॰ ६त॰ । चूर्णीकृततिले (तिलकुटा) १खाद्यभेदे । २तिलकल्के च राजनि॰ ।

**तिलतण्डुलक** पु॰ तिलस्य तण्डुल इव कायति कै—क । १आलिङ्गने शब्दमा॰आलिङ्गनस्य तिलतण्डुलवत् संश्लेषयुक्तत्वात् तथात्वम् । ६त॰ । २तिलस्य तण्डुले निस्तुषतिले पु॰ (साजातिल) ।

**तिलतेजा** स्त्री तिल इव तेजयति चुरा॰ तिज—अच् । लताभेदे "कफजे तिलतेजाह्वा दन्तीस्वर्जिकचित्रकाः" सुश्रु॰

**तिलन्तुद** त्रि॰तिलं तुदति तुद—खश् मुम् । तैलिके तिलपीड़के । [दशीभेदे व्रतशब्दे दृश्यम् ।

**तिलद्वादशी** स्त्री तिलभोजनादिनियमयुक्ता द्वादशी । द्वा-

**तिलधेनु** स्त्री॰ तिलनिर्म्मिता धेनुः शा॰त॰ । विधानेन दानार्थं तिलकृतायां धेनौ । तद्विधानं यथा ।

"विधानं तिलधेनोस्त्वं ब्रूहि शीघ्रं द्विजोत्तम ! । मुनिः प्राह विधानं यत् तच्छृणुष्व नराधिप ! । षोड़शाढ़ककैर्धेनुश्चतुर्भिर्वत्सको भवेत् । इक्षुदण्डमयाः पादादन्ताः पुष्पमया शुभाः । नासा गन्धमयी तस्या जिह्वा गुड़मयी तथा । स्थितां कृष्णाजिने धेनुं वस्त्रोभिर्वेष्टितां शुभाम् । छत्रेण वासितां कृत्वा पञ्चरत्नसमन्विताम् । सर्वौषधिसमायुक्तां मन्त्रपूतान्तु दापयेत् । अन्नं मे जायतां सद्यः पानं सर्व्वरसास्तथा । कामं सम्पादयाशाकं तिलधेनुरुपार्ज्जिताम् । गृह्णामि त्वां देवि ! भक्त्या कुटुम्बार्थे विशेषतः । कुटुम्बकामं कुरुतां तिलधेनो ! नमोऽस्तु ते । एवंविधां नरो दत्त्वा तिलधेनुं नृपोत्तम ! । सर्वकामसमाप्तिं च कुरुते नात्र संशयः" प॰पु॰ स्व॰ख॰ ।

**तिलपर्ण** पु॰ तिलस्येव पर्णमस्य । १श्रीवेष्टे द्रवे राजनि॰ । २चन्दने न॰ राजनि॰ । ६त॰ । तिलवृक्षस्य पत्रे न॰ ।

**तिलपर्णी** स्त्री तिलस्येव पर्णान्यस्याः ङीप् । १रक्तचन्दने । अमरः २नदीभेदे स्त्री शब्दार्थचि॰ । तिलपर्णीनदी आकारत्वेनास्त्यस्याः अच् गौरा॰ ङीप् । २शिह्लके गन्धद्रव्यभेदे स्त्री हेमच॰ । स्वार्थे क । तिलपर्णिका रक्तचन्दने हेमच॰ ।

**तिलपिञ्ज** पु॰ पु॰ निष्फलस्तिलः तिल+पिञ्ज । निष्फलतिले "यथोरर्जुनकाण्डस्य यवस्य ते पलाल्या तिलस्य तिलपिञ्ज्या" अथ॰ २।८।३ ।

**तिलपुष्पक** पु॰तिलस्येव पुष्पमस्य कप् । विभीतकवृक्षे पारस्करमे॰ । त॰ । ६त॰ । २तिलस्य पुष्पे च तत्सादृश्यात् ३नासिकायाम् तन्त्रसा॰ ।

"पद्मं दृष्टा तथा बिम्बं खञ्जनं शिखरन्तथा । चामरं रविबिम्बञ्च तिलपुष्पं सरोरुहम् । सिन्दूरं वीक्ष्य जप्त्वा च शतशः शुद्धभावतः । "पद्मं मुखं बिम्बमधरं खञ्जनञ्चक्षुः शिखरं मस्तकं चामरं केशं रविबिम्बं सिन्दूरं तिलपुष्पं नासिकां सरोरुहम् नाभिं त्रिशूलं त्रिवलीम्" । तन्त्रसारः ।

**तिलपेज** पु॰निष्फलस्तिलः तिल+पेज । निस्फले तिले चम॰ ।

**तिलभार** पु॰ देशभेदे "तिलभाराः समीराश्च मधुमत्ताः सुकन्दकाः । भा॰ भी॰ ९२ अ॰ ।

**तिलमय** त्रि॰तिलस्य विकारः तिल+असंज्ञायां मयट् । तिलविकारे संज्ञायां तु अण् । तैलमित्येव ।

**तिलमयूर** पुंस्त्री॰ तिलपुष्पचिह्नितः मयूरः शा॰ त॰ । (तिलेमयूर) मयूरभेदे त्रिका॰ स्त्रियां जातित्वात् ङीष् ।

**तिलरस** पु॰ ६त॰ । तिलतैले ।

**तिलशस्** अव्य॰ तिलं तिलं तत्परिमितं करोतीति मानार्थत्वात् वीप्सायां कारकार्थे शस् । तिलं तिलं कृत्वेत्येवमाद्यर्थे । "तिलशस्तद्रथं चक्रे साश्वध्वजपताकिनम्" हरिवं॰ १८६ अ॰ ।

**तिलशैल** पु॰ दानार्थे कल्पिते दशसु अचलेषु अचलभेदे । तिलाचलादयोऽप्यत्र । तिलाचलश्च द्विविधः तिलमयप्रधानमेरुः, धान्यशैलस्य पश्चात् कल्पितः तिलमयविष्कम्भगिरिश्च । तत्र मेरुरूपतिलशैलदानविधिर्यथा

"प्रथमो धान्यशैलः स्याद् द्वितीयो लवणाचलः । गुड़ाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः । पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः । सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः । राजतो नवमस्तद्वद्दशमः शर्कराचलः । वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः । अयने विषुवे पुण्ये

व्यतीपाते दिनक्षये। शुक्लपक्षे तृतीयायामुपरागे शशिक्षये। विवाहोत्सवयज्ञेषु द्वादश्यामथ वा पुनः। शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः। धान्यशैलादयोयेऽपि देयाः मास्म विजानता” इत्युपक्रमे।
“अतःपरं प्रवक्ष्यामि तिलशैलं विधानतः। यत्प्रदानान्नरोयाति विष्णुलोकं सनातनम्। उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिः स्मृतः। त्रिभिः कनिष्ठो विप्रेन्द्र! तिलशैलः प्रकीर्त्तितः। पूर्ववच्चापरान् सर्वान् विष्कम्भानभितोगिरीन्। दानमन्त्रान् प्रवक्ष्यामि यथावन्मुनिपुङ्गव!। यस्मात् मधुवधे विष्णोर्देहस्वेदसमुद्भवाः। तिलाः कुशाश्च माषाश्च तस्माच्छन्नो भवत्विह। हव्ये कव्ये च यस्माच्च तिला एवाभिरक्षणम्। भवादुद्धर शैलेन्द्र! तिलाचल! नमोऽस्तु ते”। इत्यामन्त्र्य च यो दद्यात् तिलाचलमनुत्तमम्। स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम्। दीर्घायुष्यं समाप्नोति पुत्रपौत्रैश्च मोदते। पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत्” मत्स्यपु० ८३अ०। विष्णुधर्मोक्ततिलाचलस्तु यथा।“पञ्चाशत्तिलाचलमनेककनकविपुलसौवर्णपिप्पलहिरण्मयहंसयुक्तम्। आकारयेद्रजतपुष्पवनेन तद्वज्जान्वितं दर्शितोदसरस्तथाग्रे” मत्०पु० ८२ अ०।

**तिलस्नेह** पु० इत०। तैले शब्दार्थक०। [राजनि०।

**तिलाङ्कितदल** पु० तिलेनाङ्कितं दलमस्य। तैलकन्दे

**तिलान्न** न०तिलमिश्रितमन्नं शा०त०। तिलमिश्रितेऽन्ने कृशरे हेम०। [जीरके शब्दार्थचि०।

**तिलापत्या** स्त्री तिलस्येव क्षुद्रः अपत्यं बीजमस्याः। कृष्ण-

**तिलित्स** पु० तैलनं तिलिर्गतिस्तं त्सरति छद्मना गच्छति त्सर—ड। अजगरे सर्पभेदे अमरः स्त्रियां जातित्वात् ङीष्

**तिलोत्तमा** स्त्री अप्सरोभेदे “तिलोत्तमा नाम पुरा ब्रह्मणो योषिदुत्तमा। तिलं तिलं समुद्धृत्य रत्नानां निर्मिता शुभा” भा०अनु० १४१अ०। तस्यास्तथानामकरणं यथा “तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः” भा० आ० २११ अ०।

**तिलोदक** न० तिलमिश्रितमुदकम् शा० त०। तिलमिश्रिते उदके “तेषां दत्त्वा तु हस्तेषु सपवित्रं तिलोदकम्” मनुः “बलिं भिक्षां तथाऽर्घ्यञ्च पितृणाञ्च तिलोदकम्” भा० अनु० १२६ अ०। “आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः” वायुपु०।

**तिलौदन** पुंन० तिलमिश्रितः ओदनः। कृशरे हारा०।

“दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा” शत०ब्रा० १४।८।४।१६। “तिलमिश्रमोदनं कृशरमित्यर्थः” भा०।

**तिल्पिञ्ज** पु० तिल+पिञ्ज—वेदे डिच्च। वन्ध्यतिले “दूर्वाकां जरतीमिव तिल्पिञ्जं दण्डनं नडम्” अथ० १२।२।५४।

**तिल्य** न०तिलानां भवनं क्षेत्रम् यत्। १तिलभवनयोग्ये क्षेत्रे तिलाय हितं यत्। २तिलहिते त्रि०।

**तिल्ल** गतौ भ्वा०पर०सक०सेट्। तिल्लति अतिल्लीत्। तितिल्ल।

**तिल्व** पु० तिल—वन् “उल्वादयश्चेति” उणा० नि०। १लोध्रे अमरः २श्वेतलोध्रे सुभूतिः ३रक्तलोध्रे क्षीरस्वामी स्वार्थे क। तत्रार्थे राजनि०। “अपामार्गत्यतिल्वकहरिद्रुस्नुर्जविभीतकपापनामभ्यश्च” कात्या०श्रौ०२१।३।२० “तिल्वकः तिरिषः” कर्कः।

**तिल्विल** त्रि०तिल—इलच् वा०कुतिलुः स्निग्धा इलाभूमिर्यस्मिन्। देवयजने स्थाने “भद्रे क्षेत्रे निर्मिता तिल्विले वा” ऋ०५।६२।७ “हे च तिष्ठ निर्मिता तिल्विलायामिरावती मध्ये पोषस्य तिष्ठन्तीम्” अथ० स्त० २।८८। “तिल्विलायस्थपथो विभातीर्यूयं पात स्वस्तिभिः सदा नः” ऋ० ७।७८।५।“तिल्विलाऽर्थ्यं तिलुरिला भूमिर्यस्य तत् कुरुत” भा०।

**तिष्ठद्गु** अव्य०तिष्ठन्त्यो गावो यस्मिन् काले तिष्ठद्गुप्रभृतित्वात् नि० अव्ययीभावः। दोहनकाले “आ तिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम्” भट्टिः।

**तिष्ठद्गुप्रभृति** न० अव्ययीभावे निपातनार्थशब्दसमूहे स च गणः पा० गणसू० उक्तो यथा
“तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम्। संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम्। दुःषमम् निःषमम् अपसमम् आयतीसमम् प्रौढम् पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् अपरदक्षिणम् सम्प्रति असम्प्रति इच्प्रत्ययः समासान्तः”।

**तिष्ठद्धोम** स्त्री तिष्ठता होमो यत्र। यजतिरूपे यागभेदे “यजतिजुहोतीनां को विशेषः” कात्या०श्रौ० १।२।५ “यजतीनां यागानां जुहोतीनां होमानां च परस्परं को विशेषः को भेद इति प्रश्नः। तत्र यजतीनां विशेषमाह” कर्कः “तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतयः”६। उच्यन्त इति शेषः।“तिष्ठता

होमो येषु ते तिष्ठहोमाः वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः तथा आज्यावलः पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते" कर्कः ।

तिष्य पु० तुषन्त्यस्मिन् तुष–क्यप् नि०। १पुष्यनक्षत्रे। तिष–दीप्तौ वा यत्नाद्यादि०नि०। २कलियुगे न०। तिष्ये नक्षत्रे जातः अण् तस्य लुक्। ३तत्रनक्षत्रजाते त्रि०। तिष्ये नक्षत्रयुक्ता पौर्णमास्याम् अण्। ४पौषमासे शब्दरत्ना०। स्वार्थे क। पौषमासे शब्दा०। तत्र पुष्यनक्षत्रे।
"यदा सूर्यश्च चन्द्रश्च तथा तिष्यबृहस्पती। एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम्"। भा० व० १९० ८९ श्लो० कलियुगे "सर्वस्मिन्स्तिष्ये ऽथ संप्राप्ते युगे कलिपुरस्कृते। एकपादस्थितो धर्मो यत्र तिष्ये भविष्यति" भा० शा०२४२अ०। "सत्यसम्प्रदायप्रवनाय तिष्ये शिष्यैश्चतुर्भिः सह योऽवतीर्णः तस्मै नमस्तत्त्वसुधार्णवाय श्रीगोविन्दराजार्यगुरुं नमोऽस्तु। "तपस्तप्यते न वा तिष्ये तिष्ये योगः न साध्यते। न वा व्रतं न वा दानं तिष्ये मोक्षसाधनं कृतः" काशीख०२९अ०१२।आम्लक्यां स्त्री०। [शब्दर०।

तिष्यपुष्पा स्त्री० तिष्ये माङ्गल्यं पुष्पं यस्याः। आमलक्याम्

तिष्यफला स्त्री तिष्यं माङ्गल्यं फलमस्याः। आमलक्याम् अमरः। "शिवमामलके लक्ष्मीः" इत्युक्तेस्तत्फलस्य मङ्गलहेतुत्वात् तथात्वम्। [स्त्रियाम् शब्दरत्ना०।

तिष्या स्त्री तिष्यं मङ्गलं हेतुत्वेनास्त्यस्या अच्। आमलकी।

तिसृधन्व न० तिसृभिरिषुभिर्युतं धन्व धनुः वेदे अच् समासान्तः अविभक्तावपि वेदे तिस्रादेशः। तिसृभिरिषुभिर्युक्ते धनुषि "तिसृधन्वं दक्षिणां ददाति" शत० ब्रा० ११।१।५।१०। "च तिसृधन्वमपादायापच्छाम" १४।१।१।७। [४चक्राङ्गे च शंखसारः।

तिहन् पु०तुह–अर्दने कनिन् नि०। १व्याधौ २व्रीहौ ३धनुषि

तीक गतौ भ्वा० पर० सक० सेट्। तीकते अतीकिष्ट तितीके अदित् अतितीकत् त। शब्दकोषे आपनार्थ तीक्नोति मानिदिकी पा०गणपाठे तस्य गत्यर्थतयैवोक्तिः।

तीक्ष्ण न०तिज–क्स्न दीर्घश्च। १खरे अर्थे २विषे ३लोहभेदे (इस्पात)४युद्धे अमरः ५मरणे ६जले ७श्रौत्रे इति धारस्व०। ८सामुद्रलवणे ९कन्तके मेदि० १०चव्यके राजनि०। ११मरके हेमच०। १२तीक्ष्णतायुक्ते त्रि० "तीक्ष्णश्चैव मृदुश्च स्यात् कार्यं वीक्ष्य महीपतिः" मनुः।"तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत्" माघः "ऋज्वीं चोभयतस्तीक्ष्णाम्" मनुः। "प्रतिभार्या हीरके कटाक्षे दुर्गायां गदे शशके रविवारे" इति कविकल्पलतायां तीक्ष्णलक्षणम्।
१३यवक्षारे पु० मेदि०। १४श्वेतकुशे १५कुन्दुरुके राजनि०। नक्षत्रविशेषगणे न० यथा "मूलार्द्राहिविभमूलाख्य मन्त्राचत्तीक्ष्णदारुणे"ज्योतिषम्।१६आत्मत्यागिनि त्रि० मेदि०।१७निरालसे उद्युक्ते त्रि० धरणी० १८योगिनि पु० अजयपालः। [राजनि०।

तीक्ष्णक पु० तीक्ष्ण+संज्ञायां कन्। १गौरसर्षपे, २मुष्कके च

तीक्ष्णकण्टक पु० तीक्ष्णः कण्टकोऽस्य। १धुस्तूरे २बर्बुरे, ३इङ्गुदीवृक्षे, ४वंशे च जटाध०।५कन्थारीवृक्षे स्त्री टाप्। राजनि०। ६तीक्ष्णकण्टकयुक्ते त्रि०। कर्म०। ७तीक्ष्णे कण्टके पुं न०।

तीक्ष्णकन्द पु० तीक्ष्णः कन्दो मूलमस्य। पलाण्डौ राजनि०

तीक्ष्णकर्मन् त्रि० तीक्ष्णं कर्मास्य। १तीव्रकार्यकरे आयःशूलिके त्रिका०। कर्म०। २तीव्रे कर्मणि न०।

तीक्ष्णकल्क पु० तीक्ष्णः कल्कोऽस्य। तुम्बुरुवृक्षे राजनि०।

तीक्ष्णकान्ता स्त्री नि०कर्म०। तारादेव्याम् उग्रतारायाम्।
"पीठे दिक्करवासिन्या द्वितया वसते शिवा। तीक्ष्णकान्ताह्वया लेका योगतारा प्रकीर्तिता"। "पुरा कलितकान्ताख्या या शोभालम्बविलक्षणा। तस्मात् सततं रूपं तीक्ष्णकान्ताह्वयं मम!। लम्बा लम्बोदरी या तु वा खाडेकजटा शिवा। तेन रूपेण तां देवीं सततं परिपूजयेत्" कालि०पु० ८२ अ०।

तीक्ष्णगन्ध पु० तीक्ष्णः गन्धोऽस्य। १शोभाञ्जनवृक्षे जटा०। वा कप्। स्वार्थे राजनि०। २रक्ततुलस्याम् शब्दा० कुन्दरुनामगन्धद्रव्ये अमरः।

तीक्ष्णगन्धा स्त्री तीक्ष्णः गन्धोऽस्याः। १वचायां, २राजिकायाम्, ३कन्थार्यां, राजनि०। ४जीवन्त्याम् शब्दच०। ६श्वेतवचायां मेदि० ७क्षुद्रचञ्चावाम्,रत्नमा०। [रत्नमा०।

तीक्ष्णतण्डुला स्त्री० तीक्ष्णास्तण्डुला यस्याः। पिप्पल्याम्

तीक्ष्णतैल न० तीक्ष्णस्य लोहस्य तैलम्। १स्नुहीक्षीरे, २सर्जरसे, ३मद्ये च शब्दरत्ना०।

तीक्ष्णदंष्ट्र पुं स्त्री तीक्ष्णा दंष्ट्रास्य।१व्याघ्रे राजनि० स्त्रियां ङीष् कर्म०। तीक्ष्णायां दंष्ट्रायाम् स्त्री। "सुतीक्ष्णदंष्ट्राः बलवान् सुभाः" ह० व० ६७ अ०।

तीक्ष्णधार पु० तीक्ष्णा धारास्य। १खड्गे "असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपालो नमोऽस्तु ते। इत्यष्टौ तव नामानि" खड्गपूजा-

मन्त्रः । ३तीक्ष्णधारायुक्तमात्रे त्रि० । "नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः । तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ्नवनीतं हृदयं तीक्ष्णधारमिति" भा० आदि० ३ अ० ।

**तीक्ष्णपत्र** पु० तीक्ष्णानि पत्राण्यस्य । १तम्बुरुवृक्षे राजनि० । २तीक्ष्णपत्रयुक्ते त्रि० कर्म० । ३तीक्ष्णे पत्रे न० ।

**तीक्ष्णपुष्प** न० तीक्ष्णं पुष्पमस्य । १लवङ्गे । २केतक्यां स्त्री टाप् । राजनि० । ३तिक्ष्णपुष्पयुक्ते त्रि० । कर्म० । ४तिक्ष्णेपत्रे न० ।

**तीक्ष्णफल** पु० तीक्ष्णं फलमस्य । १तम्बुरुवृक्षे राजनि० । २तिक्ष्णफलयुक्ते त्रि० कर्म० । ३तिक्ष्णे फले न० ।

**तीक्ष्णमूल** पु० तीक्ष्णं मूलमस्य । १शोभाञ्जने २कुलञ्जने च राजनि० । ३तिक्ष्णमूलके त्रि० । कर्म० । ४तिक्ष्णे मूले न० ।

**तीक्ष्णरश्मि** पु० तीक्ष्णा रश्मयोऽस्य । तिग्मांशौ सूर्य्ये "शरत्प्रज्वलितं तेजस्तीक्ष्णरश्मिर्विशोधयन्" हरिवं० ७२० अ० । २तिक्ष्णरश्मियुक्ते त्रि० । कर्म० । ३तिक्ष्णे रश्मौ पु० ।

**तीक्ष्णरस** पु० तीक्ष्णो रसोऽस्य । १यवक्षारे रत्नमा० । २तिक्ष्णरसयुक्ते त्रि० । कर्म० । ३तिक्ष्णे रसे पु० ।

**तीक्ष्णलौह** न० त्रि० कर्म० । (इस्पात) लौहभेदे ।

**तीक्ष्णशूक** पु० तीक्ष्णः शूकोऽस्य यस्य । १यवे । २खरशूकयुक्ते त्रि० । कर्म० । ३खरे शूके पु० न० ।

**तीक्ष्णसारा** स्त्री तीक्ष्णः कठिनः सारोऽस्याः । १शिंशपायाम् (शिशु) राजनि० । २तिक्ष्णसारयुक्ते त्रि० कर्म० । ३खरे सारे पुंन० ।

**तीक्ष्णा** स्त्री तीक्ष्ण+टाप् । १वचायां २सर्पकङ्कालिकायाम् रत्नमा० ३कपिकच्छ्वां ४महाज्योतिष्मत्याम् ५अत्यम्लपर्ण्याम् जटा० । ६तारादेव्याम् च । उग्रतारोपक्रमे "हे भगवत्खे बजटे विघ्नघ्ने पदमन्ततः । विकटदंष्ट्रे भीमाक्षि तत्प्रकारा प्रमोदयात् । एषा तु तीक्ष्णा गायत्री पीठदेव्याः प्रकीर्त्तिता" । "पानेषु मदिरा शस्ता नरो बलिषु पार्थिव ! । मोदको नारिकेलस्य मांसं छागलमेव च । नैवेद्येषु प्रियकरास्तीक्ष्णायाः परिकीर्त्तिताः ॥ कालिकापु० ८२ अ० ।

**तीक्ष्णायस** न० त्रि० कर्म० अच् समा० । लौहभेदे (इस्पात) राजनि० । [तितीम ।

**तीम** क्लेदने दिवा० पर० अक० सेट् । तीम्यति अतीमीत् ।

**तीर** पारगतौ कर्मसमाप्तौ च अद० चुरा० उभ० अक० सेट् । तीरयति ते अतितीरत् त ।

**तीर** न० तीर–अच् । नद्यादेः १कूले । २सीसके पु० अमरः । ४वाणे पु० त्रिका० । ५त्रपुणि पु० मेदि० ।

"यावद्धस्तमितं यावत् गर्भतस्तीरमुच्यते । भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम् । तावद्गर्भं विजानीयात् तदन्यत्तीरमुच्यते" प्रा० त० धृतं ६गङ्गाकूलभेदे न० "गङ्गातीरतरङ्गशीकरजलैः स्नात्वा हरो नार्चितः" का० द० । "कमुन्नतीरां सुनिरिन्द्रविद्यैः" रघुः । "अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि" मनुः ।

**तीरग्रह** पु० देशभेदे "तीरग्रहाः शूरसेनाः ईजकाः कन्यकाः गुहाः" भा० भी० ९ अ० जनपदोक्तौ ।

**तीरभुक्ति** पु० (त्रिहुत) देशभेदे त्रिका० ।

**तीरु** पु० तॄ–बा० रु । शिवे "नमस्ते ऽभीरुहराय तीरुभीरुहराय च" हरिवं० २७८ अ० । शिवस्तुतौ ।

**तीर्ण** त्रि० तॄ–क्त । १ उत्तीर्णे, २अभिभूते, ३प्लाव्ते च । "तीर्णो हि तदा भवति" श्रुतिः "तीर्णाः पूर्णाः कति न सरितो लङ्घिताः के न शैलाः आक्रान्ता या कति वनभुवः क्रूरसत्त्वारघोराः पापैरेतैः किमिव दुरितं कारितो नास्मि कष्टं यद्दृष्टास्ते धनमदमषीम्लानवक्त्रा दुरीशाः" ।

**तीर्णपदी** स्त्री तरतेः कर्त्तरि क्तः तीर्णः पादो मूलमस्याः अन्त्यलोपः कुम्भपद्या० ङीप् पद्भावः तालमूल्याम् शब्दच० ।

**तीर्णा** स्त्री प्रतिष्ठाख्यछन्दोविशेषे यथा "दक्षिन् हत्ते कर्षः कर्षः वेदैर्वर्णैः सा स्यात् तीर्णा" अस्याः कन्येत्यपि संज्ञा । "स्त्री चेत् कन्येति" लक्षणात् ।

**तीर्थ** न० तॄ–थक् । १शास्त्रे २यज्ञे ३क्षेत्रे ४उपाये ५नारीरजसि ६अवतारे ७ऋषिजुष्टजले ८पात्रे ९उपाध्याये १०मन्त्रिणि च मेदि० ॥ ११योनौ १२दर्शने १३घट्टे हेमच० । १४विप्रे १५आगमे १६निदाने १७वह्नौ च शब्दरत्ना० । तीर्थं त्रिविधम् जङ्गमं मानसं२ स्थावरं३ च । तथा हि "ब्राह्मणा जङ्गमं तीर्थं निर्मलं सार्वकामिकम् । येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनाजनाः । मानसं तथा च । शृणु तीर्थानि गदतो मानसानि ममानघे ! । येषु सम्यक् नरः स्नात्वा प्रयाति परमां गतिम् । सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदयातीर्थं सर्वत्रार्जवमेव च । दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थञ्च प्रियवादिता । ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा । एतत्ते कथितं देवि ! मानसं तीर्थलक्षणम् ।

भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु । यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः । तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः । प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा । परिग्रहात् मुनीनाञ्च तीर्थानां पुण्यता स्मृता । तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः । उभयेष्वपि यः स्नाति स याति परमां गतिम् ॥” तीर्थभेदा ब्रह्मपुराणे उक्ता यथा

मुनय ऊचुः । “पृथिव्यां यानि तीर्थानि वनान्यायतनानि च । वक्तुमर्हसि धर्म्मज्ञ ! श्रोतुं नो वर्त्तते मनः । लोमहर्षण उवाच । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । मनो विशुद्धं पुरुषस्य तीर्थं वाचायमश्चेन्द्रियनिग्रहस्तपः । एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति । चित्तमन्तर्गतं दुष्टं तीर्थस्नानं न शुध्यति । शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि । न तीर्थानि न दानानि न व्रतानि न चाश्रमाः । दुष्टाशयं दम्भरुचिं पुनन्ति व्युषितेन्द्रियम् । इन्द्रियाणि वशे कृत्वा यत्र तत्र वसेन्नरः । तत्र तत्र कुरुक्षेत्रं प्रयागं पुष्करं तथा । तस्माच्छृणुध्वं वक्ष्यामि तीर्थान्यायतनानि च । संक्षेपेण मुनिश्रेष्ठाः । पृथिव्यां यानि कानि च । विस्तरेण न शक्यन्ते वक्तुं वर्षशतैरपि । प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च । प्रयागञ्च प्रवक्ष्यामि धर्म्मारण्यं द्विजोत्तमाः ! । धेनुका चम्पकारण्यं सैन्धवारण्यमेव च । गया प्रयागं श्रीतीर्थं दिव्यं कनखलन्तथा । भृगुतुङ्गं हिरण्याक्षं भीमारण्यं कुशस्थली । लोहार्गलं सकेदारं मन्दरारण्यमेव च । महालयं कुरुक्षेत्रं सर्व्वपापहरन्तथा । रूपतीर्थं शूकरञ्च चक्रतीर्थं महाफलम् । योगतीर्थं सोमतीर्थं तीर्थं शाखोटकं तथा । तीर्थं कोकामुखं पुण्यं बदरीशैलमेव च । सोमतीर्थं तुङ्गकूटं तीर्थं स्कन्दाश्रमन्तथा । सूर्य्यप्रभं रामतीर्थं सप्तसामुद्रकं तथा । धर्म्मोद्भवं कोटितीर्थं तीर्थञ्चाघप्रणाशनम् । गङ्गाद्वारं पञ्चकूटं मध्यकेशवमेव च । चक्रप्रभं मतङ्गञ्च कुशदण्डञ्च विश्रुतम् । दंष्ट्राकुण्डं विष्णुतीर्थं सर्व्वकामिकमेव च । तीर्थं मत्स्यतिलञ्चैव बदरीसुप्रभं तथा । ब्रह्मकुण्डं वह्निकुण्डं तीर्थं सत्यपदन्तथा । चतुःस्रोतश्चतुःशृङ्गं शैलं द्वादशधारकम् । मानसं स्थूलशृङ्गञ्च स्थूलदण्डं तथोर्व्वशी । लोकपाली मनवकं सोमाद्रिशैलमेव च । सदाप्रभं मेरुकुण्डं तीर्थं सोमाभिषेचनम् । महाशोभं कोरवकं पञ्चधारं त्रिधारकम् । सप्तधारैकतीर्थञ्च तीर्थञ्चामरकण्टकम् । शालग्रामं चक्रतीर्थं कोटिद्रुममनुत्तमम् । बिल्वप्रभं देवह्रदं तीर्थं विष्णुप्रभन्तथा । शङ्खप्रभं देवकुण्डं तीर्थं वज्रायुधं तथा । अग्निप्रभं सपुन्नागं देवप्रभमनुत्तमम् । विद्याधरं सगन्धर्वं श्रीतीर्थं ब्रह्मणा कृतम् । तीर्थञ्च लोकपालाख्यं पुण्यं पिण्डारकं तथा । वस्त्रापदं दारुवनं छायारोहणमेव च । वटापदं भद्रवटं कौशाम्बी च दिवाकरा । द्वीपं सारस्वतं चैव विजयं कामदन्तथा । सारवं गोप्रतारञ्च गाचरं वटमूलकम् । स्नानकुण्डं प्रयागञ्च गुह्यं विष्णुपदन्तथा । कन्याश्रमं विष्णुपदं जम्बुमार्गं तथोत्तमम् । गभस्तितीर्थञ्च तथा ययातिपतनं शुचि । कोटितीर्थं भद्रवटं महाकालवनं तथा । नर्म्मदातीर्थपरमं तीर्थं वर्षं तथार्बुदम् । पिङ्गुतीर्थं सावशिष्टं तीर्थञ्च प्रियसङ्गमम् । तीर्थं दौर्वासिकं नाम तथा पिञ्जरकं शुभम् । ऋषितीर्थं ब्रह्मकुण्डं वसुतीर्थं कुमारिका । शक्रतीर्थं पापनदं रेणुकातीर्थमेव च । पैतामहञ्च विमलं रुद्रपादं तथोत्तरम् । मणिमन्तञ्च कामाख्यं कृष्णतीर्थं कुमारिणम् । यजनं याजनञ्चैव तथैव ब्रह्मवालकम् । पुष्पाभ्यासं पुण्डरीकं मणिपूरं तथोत्तरम् । दीर्घसत्रं हंसपदं तीर्थञ्चानशनन्तथा । गङ्गोद्भेदं शिवोद्भेदं नर्म्मदोद्भेदमेव च । वज्रकोटि शङ्कुनावं तीर्थं शक्रावतारितम् । समन्तपञ्चकं तीर्थं ब्रह्मतीर्थं सुदर्शनम् । सततं पृथिवीतीर्थं पारिप्लवपृथूदकौ । दशाश्वमेधिकं तीर्थं सर्पिर्दं विषयान्तिकम् । कोटितीर्थं पञ्चनदं वाराहं यक्षिणीह्रदम् । पुण्डरीकं सोमतीर्थं मुञ्जवटं तथोत्तमम् । बदरीवनमासीनं रत्नमूलकमेव च । लोकद्वारं पञ्चतीर्थं कपिलातीर्थमेव च । सूर्य्यतीर्थं शङ्खिनी च धराभवनमेव च । तीर्थं च यक्षराजस्य ब्रह्मावर्त्तं सुतीर्थकम् । कामेश्वरं मातृतीर्थं तीर्थं शीतवनं तथा । स्नानलोमापनञ्चैव मांसभयनकं तथा । दशाश्वमेधं केदारं ब्रह्मोदुम्बरमेव च । सप्तर्षिकुण्डञ्च तथा तीर्थं देव्याः सुजम्बुकम् । इडास्पदं कोटिकूटं किन्नरं किञ्जपं तथा । कारण्डवञ्च विन्ध्यञ्च त्रिपिष्टपमथापरम् । पाणिखातं मिश्रकञ्च मधुवटमनोजवौ । कौशिकी देवतीर्थञ्च तीर्थञ्च ऋणमोचनम् । दिव्यञ्च नृत्यमूलाख्यं तीर्थं विष्णुपदन्तथा ।

श्रीकुण्डं शालितीर्थञ्च नैमिषेयञ्च विश्रुतम् । ब्रह्मस्थानं सोमतीर्थं कन्यातीर्थं मनोहरम् । ब्रह्मतीर्थं मनस्तीर्थं तीर्थञ्चैवावनन्तथा । सौगन्धिकवनञ्चैव मणितीर्थं सरस्वती । ईशानतीर्थं प्रवरं पावनं पाञ्चयज्ञिकम् । त्रिशूलधारा माहेन्द्रं देवस्थानं कृतालयम् । शाकम्भरी देवतीर्थं सुवर्णाख्यं कालिकं ह्रदम् । क्षीरेश्वरं विरूपाक्षं भृगुतीर्थं कुशोद्भवम् । ब्रह्मतीर्थं ब्रह्मयोनिं नीलपर्वतमेव च । कुब्जाम्रकं भद्रवटं वशिष्ठपदमेव च । भृगावर्त्तं तथा नेकं मादवं कपिलञ्च यत् । स्वर्गद्वारं प्रजाद्वारं कालिकाश्रममेव च । रुद्रावर्त्तं सुगन्धाख्यं कपिलावनमेव च । भद्रकर्णह्रदञ्चैव शङ्कुकर्णह्रदं तथा । सप्तसारस्वतञ्चैव तीर्थमौशनसं तथा । कपालमोचनञ्चैव नरकञ्चैव काम्यकम् । तत्र चातुर्द्रिकञ्चैव शतिकञ्च सहस्रिकम् । रेणुकं पञ्चवटकं विमोचनमथौजसम् । विश्वेश्वरं वामनकं कदं नारायणाश्रमम् । गङ्गाह्रदं वटञ्चैव बदरीपाचनन्तथा । ऐन्द्रमार्गमेकरात्रं क्षीरिकावासमेव च । सोमतीर्थं दारवञ्च श्रुततीर्थञ्च भो द्विजाः ! । कन्याश्रमं सन्निहितं कोटितीर्थञ्च पुष्पदी । कोटितीर्थस्थलीञ्चैव भद्रकालीह्रदन्तथा । अरुन्धतीवनञ्चैव ब्रह्मावर्त्तमथोत्तमम् । अश्ववेदी कुब्जवनं यमुनाप्रभवं तथा । वीरप्रमोक्षं सिन्धूत्थं ऋषीकुल्या सकृत्तिका । उर्वशीसङ्क्रमञ्चैव मायाविद्योद्भवन्तथा । महाश्रमो वैतसिकारूपं सुन्दरिकाश्रमम् । ब्रह्मतीर्थन्तु नैचाखं गङ्गोद्भेदं सरस्वती । बदरोदं तथा चान्द्रं शक्रतीर्थं सवालुकम् । तीर्थञ्चैवापिशाख्यं नीलकण्ठह्रदन्तथा । स्वर्गद्वारं विष्णुशिला तीर्थकोटिस्तथैव च । पिशाचमोचनञ्चैव सुभद्राह्रदमेव च । कुण्डं विमलदं तस्यां तीर्थं चण्डेश्वरस्य च । ज्येष्ठस्थानह्रदञ्चैव हरिकेशवनं तथा । अजामुखवनञ्चैव घण्टाकर्णह्रदन्तथा । पुण्डरीकह्रदञ्चैव वापीकर्कोटकन्तथा । कुण्डं धर्मरिकावाच श्यामाख्यं चन्द्रपुष्करम् । ब्रह्मावर्त्तञ्च कुण्डञ्च विनायकह्रदन्तथा । कूपं शिवभवञ्चैव पुण्यं ब्रह्मसरस्तथा । रुद्रावासं तथा तीर्थं नागतीर्थं सुलोचनम् । स्कन्दतीर्थं महातीर्थं श्येना चैव महानदी । दिव्यं ब्रह्मसरः पुण्यं गयाशीर्षवटं वटम् । दक्षिणञ्चोत्तरञ्चैव गोपयं रूपशालिकम् । कपिह्रदं गृध्रकूटं सावित्रीह्रदमेव च । प्रभासनं शीतवनं योनिद्वारञ्च धेनुकम् । रम्यकं कौशिकाख्यञ्च मतङ्गह्रदमेव च । पितृकूपं रुद्रतीर्थं शक्रतीर्थं सुधाविलम् । ब्रह्मस्थानं सप्तकुण्डं मणिरत्नह्रदन्तथा । हरवस्ताश्रमञ्चैव हरस्याह्रदमेव च । तीर्थं जनककूपाख्यं वैद्यं विनशनन्तथा । ब्राह्मं विनायतीर्थञ्च धारा माहेश्वरी तथा । देवपुष्करिणी रम्या पर्य्यङ्करूपमेव च । जातिसरं वामनकं वटेश्वरह्रदन्तथा । कौशाम्बं भरतञ्चैव तीर्थं श्वेतालिका तथा । विश्वेश्वरं कल्पगतं कन्याशाकुनमेव च । वाराहकं कोटितीर्थं कुमारं सर्वतीर्थकम् । वीराश्रमं ब्रह्मसरो वीरवीरा च तापिनी । कुमारधारा श्रीधारा गौरीशिखरमेव च । कुम्भकर्णपदञ्चैव कौशिकीह्रदमेव च । धर्मतीर्थं कामतीर्थं तीर्थञ्चोद्दालकं तथा । दक्षा विमाक्षिनी तीर्थं तीर्थञ्चैव नरेभिका । सन्ध्यातीर्थं कारतोयं कपिला लोहितार्णवम् । शोणोद्भवं वंशगुल्मभवं कामतीर्थकम् । पुष्पतीर्थह्रदं तीर्थं तीर्थं बदरिकाश्रमम् । रामतीर्थं पितृवनं विरजातीर्थमेव च । मार्कण्डेयवनञ्चैव कृष्णतीर्थं तथा वटम् । भृगुं यक्षं प्रवरमिन्द्रद्युम्नसरश्च यत् । सामुद्रं चमाहेन्द्रं श्रीतीर्थं श्रीवनन्तथा । इषुतीर्थं वृषभञ्च कावेरीतीर्थमेव च । कन्यातीर्थञ्च गोतीर्थं गोमतीस्नानमेव च । संवर्त्तस्थापिनी स्नानं सप्तगोदावरीह्रदम् । बदरीह्रदमन्यच्च ब्रह्महत्याविवर्त्तनम् । जातिह्रदं वेदह्रदं कुशप्रवणमेव च । सर्वदेवव्रतञ्चैव कन्याश्रमह्रदन्तथा । तथान्यत् वा शिखिस्नानं सप्तर्षीणां तथा परम् । तथान्यच्च महर्षीणामवस्थितह्रदन्तथा । तीर्थेष्वेतेषु विधिवत् सम्यक् श्रद्धासमन्वितः । स्नानं करोति यो मर्त्त्यः सर्वपापैः प्रमुच्यते । अभ्यर्च्य देवतास्तत्र स्थित्वा च रजनीत्रयम् । पृथक् पृथक् फलं तेषु प्रतितीर्थं च भो द्विजाः ! । प्राप्नोति अश्वमेधस्य फलं प्राप्नोत्यसंशयम् । य इदं शृणुयान्नित्यं तीर्थमाहात्म्यमुत्तमम् । पठेच्च श्रावयेद्वापि सर्वपापैः प्रमुच्यते" ।

पद्मपुराणे श्राद्धे प्रशस्ततीर्थानि उक्तानि यथा

भीष्म उवाच । "कस्मिन् वासरभागे तु श्राद्धं श्राद्धी समाचरेत् । तीर्थेषु केषु वै श्राद्धं कृतं बहुफलं भवेत् । पुलस्त्य उवाच । तीर्थन्तु पुष्करं नाम पुण्यं चोत्तमं स्मृतम् । सर्वेषां द्विजमुख्यानां मनोरथस्थितं तथा । यत्र दत्तं कृतं सर्वमनन्तं हरिरब्रवीत् ।

पितॄणां वल्लभं नित्यमृषीणां परमं प्रियम्। नन्दयु- र्खलिता तद्वत्तीर्थं मायापुरी तथा। शुभं मित्रपदं तद्वत्ततः केदारमुत्तमम्। गङ्गासागरमित्याहुः सर्व- तीर्थमयं शुभम्। तीर्थं ब्रह्मसरस्तद्वत् शतद्रुः सलिला- ह्रदः। तीर्थन्तु नैमिषञ्चैव सर्वतीर्थफलप्रदम्। गङ्गोद्भे- दस्तु गोमत्यां यत्रोद्भूतः सनातनः। तथा यज्ञवराहस्तु देवदेवस्य शूलभृत्। यत्र तत् काञ्चनद्वारमष्टादशभुजो- हरः। नेमिस्तु धर्म्मचक्रस्य शीर्णो यत्राभवत् पुरा। तदेतन्नैमिषारण्यं सर्वतीर्थनिषेवितम्। देवदेवस्य तत्रापि वराहस्य च दर्शनम्। यः प्रयाति स पूतात्मा नारायणपुरं व्रजेत्। कोकामुखं परं तीर्थं ब्रह्मणोऽव्यक्त- जन्मनः। पुष्करारण्यसंस्थोऽसौ यत्र देवः पितामहः। विरिञ्चिदर्शनं श्रेष्ठं त्वपवर्गफलप्रदम्। कृतं तेन महापुण्यं सर्वपापनिषूदनम्। यत्रास्ते नरसिंहस्तु स्वयमेव जनार्द्दनः। तीर्थमिक्षुमती नाम पितॄणां वल्लभा सदा। तृप्यन्ति पितरो नित्यं गङ्गायमुनसङ्गमे। कुरुक्षेत्रं महापुण्यं यत्र मार्गोऽपि लभ्यते। अद्यापि पितृतीर्थं तत् सर्वकामफलप्रदम्। नीलकण्ठमिति ख्यातं पितृतीर्थं नराधिप!। तथा भद्रसरः पुण्यं सरोमानसमेव च। मन्दाकिनी तथाच्छोदो विपा- शाथ सरस्वती। पूर्वमित्रपदं तद्वद्वैद्यनाथं महाफलम्। गोदावरी तथा पुण्या तथा कालञ्जरं शुभम्। वंशोद्- भेदं हरोद्भेदं गङ्गोद्भेदं महाफलम्। भद्रेश्वरं वि- ष्णुपदं नर्म्मदाद्वारमेव च। गयापिण्डप्रदानेन समा- न्याहुर्महर्षयः। एतानि पितृतीर्थानि सर्वपापहराणि च। स्मरणादपि लोकानां किमु श्राद्धप्रदायिनाम्। ओङ्कारं पितृतीर्थन्तु कावेरी कपिलोदकम्। कुरुक्षे- त्राच्छतगुणम् तस्मिन् स्नानादिकम्भवेत्। शुक्रतीर्थन्तु विख्यातं तीर्थं सोमेश्वरं स्मृतम्। सर्वव्याधिहरं पुण्यं फलं कोटिशताधिकम्। श्राद्धे दाने तथा होमे स्वाध्याये जपसन्निधौ। कायावरोहणं नाम देवदेवस्य शूलिनः। अवतारं रोचयाणो ब्राह्मणापणे शुभे। जातं तत् सुमहापुण्यं तथा चर्म्मण्वती नदी। नदी च वरणा तद्वत्तीर्थं हौतायनं परम्। भैरवं भृगुतुङ्गञ्च गौरी- तीर्थमनुत्तमम्। तीर्थं वैनायकं नाम वस्त्रेश्वरमनुत्तमम्। तथा पापहरं नाम पुण्या वेत्रवती नदी। मूलतापी पयोष्णी च पयोष्णीसङ्गमस्तथा। महाबोधी पदेनापि नामतीर्थमवन्तिका। तथा वेण्वा नदी पुण्या महामा- ल्लस्तथैव च। महावह्नो महाविष्णो दशार्णा च महा- नदी। शतरुद्रामता चापि तथा पितृपदं परम्। पुनः- पाराहिकं तद्वन्नदौ द्वौ शोणघर्घरौ। कालिका च नदी पुण्यं पितरा च नदी तथा। एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः। श्राद्धमेतेषु यद्दत्तं तदनन्तफलं स्मृतम्। शतोद्वाटनदीधारा शतक्षीरनदी तथा। द्वारका कृष्णतीर्थञ्च तथार्बुद सरस्वती। नदी मणिमती नाम तथा च गिरिकर्णिका। धूतपापं तथा तीर्थं समुद्रे दक्षिणे तथा। गोकर्णं गजकर्णञ्च तथा च पुरुषोत्तमः। श्रीशैलं शाकतीर्थञ्च नारसिंहमतः परम्। महेन्द्रश्च तथा पुण्यः पुण्या चापि महानदी। एतेष्वपि सदा श्राद्धमनन्तफलमश्नुते। दर्शनादपि पुण्यानि सद्यः पापहराणि च। तुङ्गभद्रा नदी पुण्या तथा भीम नदी सरित्। भीमेश्वरं कृष्णवेणा कावेरी कञ्जुरा नदी। नदी गोदावरी पुण्या त्रिसन्ध्या तीर्थमुत्तमम्। तीर्थं त्रैयम्बकं नाम सर्वतीर्थनमस्कृतम्। यत्रास्ते भग- वान् भीमः स्वयमेव त्रिलोचनः। श्राद्धमेतेषु तीर्थेषु दत्तं शतगुणं भवेत्। स्मरणादपि पापानि नश्यन्ति शतधा नृप!। श्रीपर्णी च नदी पुण्या व्यासतीर्थमनु- त्तमम्। तथा मत्स्यनदीधारा शिवधारा तथैव च। भवतीर्थञ्च विख्यातं पुण्यतीर्थञ्च शाश्वतम्। पुण्यं रामे- श्वरं तद्वदेलापुरमनुत्तमम्। अङ्गारकञ्च विख्यात- मामर्दर्शमनायुधम्। तीर्थं घृतेश्वरं तद्वत्तथा कोकाहलं परम्। गोवर्द्धनं हरिश्चन्द्रं पुरुचन्द्रं पृथूदकम्। सह- स्राक्षं हिरण्याक्षं तथा च कदली नदी। नामाधि- पापि च तथा तथा सौमित्रसङ्गमम्। इन्द्रनीलं महानादं तथा च प्रियमेलकम्। एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि च। एतेषु सर्वदेवानां सान्निध्यं दृश्यते यतः। दानमेतेषु सर्वेषु भवेत् कोटिशताधिकम्। बाहुदा च नदी पुण्या तथा सिद्धवनं शुभम्। तीर्थं पाशुपतञ्चैव नदी पर्पटिका तथा। श्राद्धमेतेषु सर्वेषु दत्तं कोटिशताधिकम्। तथैव पञ्चतीर्थञ्च त्रिपुरं खाण्डवं नदी। धुता [illegible]। काम- दम्नस्य सत्तीर्थं वेदायतनमुत्तमम्। प्रतीकस्याभवा सिद्धा यदा गोदावरी नदी। तीर्थं तद्व्यक्तव्याना- मप्सरोगणसंयुतम्। श्राद्धादिदानकार्य्यञ्च तद्वत् कोटि शताधिकम्। तथा सहस्रलिङ्गञ्च राघवेश्वरमुत्तमम्। सैन्द्रफला नदी पुण्या यत्र दुःखाहतः पुरम्। निमेष

प्रवृत्तिमिव तपसा स्वर्गभाग्भवात् । तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत् । पुष्करं नाम वै तीर्थं प्राभासं तथैव च । सोमपातश्च विख्यातो यत्र वैश्वानरालयः । तीर्थं सारस्वतं नाम स्वामितीर्थं तथैव च । मलन्दरा नदी पुण्या कौशिकी चन्द्रिका तथा । विदर्भा चाथ वेगा च पयोष्णी प्राङ्मुखी परा । कावेरी चोत्तरगा च तथा जालन्धरो गिरिः । एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते । लोहदण्डं तथा दण्डं चित्रकूटन्तथैव च । दिव्यं सर्व्वत्र गङ्गायास्तथा नदीतटं शुभम् । कुब्जाम्रश्च तथा तीर्थमुर्व्वशीपुलिनं तथा । संसारमोचनं तीर्थं तथैव ऋणमोचनम् । एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते । अट्टहासं तथा तीर्थं गौतमेश्वरमेव च । तथा वशिष्ठतीर्थञ्च भारतञ्च ततः परम् । ब्रह्मावर्त्तं कुशावर्त्तं हंसतीर्थं तथैव च । पिण्डारकञ्च विख्यातं शङ्खोद्धारं तथैव च । घण्टेश्वरं बिल्वकञ्च नीलपर्व्वतमेव च । तथा च बदरीतीर्थं रामतीर्थन्तथैव च । जयन्तं विजयञ्चैव शुक्रतीर्थं तथैव च । एतेषु श्राद्धदातारः प्रयान्ति परमं पदम् । तीर्थं मातृगृहं नाम करवीरपुरं तथा । सप्तगोदावरीतीर्थं सर्व्वतीर्थेश्वरेश्वरम् । तत्र श्राद्धं प्रदातव्यमनन्तफलमिच्छुभिः । कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् । च्यवनस्याश्रमं पुण्यं नदी पुण्या पुनःपुना । यत्र गाथा विचरति ब्रह्मणा परिकीर्त्तिता । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् । एषा गाथा विचरति तीर्थेष्वायतनेषु च । सर्व्वे मनुष्या राजेन्द्र ! कीर्त्तयन्तः समागताः । अस्माकं कुले कश्चिद्गयां यास्यति मत्सुतः । प्रीणयिष्यति ताञ्छ्रुत्वा वयं पूर्व्वं तथा ह्यवरान् । नानागमानामप्येवं श्रुतिरेषा चिरन्तनी । गङ्गायास्त्वाश्विनपक्षं गत्वा चेत् पश्यति मत्सुतः । तिलैः सप्ताष्टभिर्वापि दास्यते च जलाञ्जलिम् । धारयन् नियते चापि पिण्डदानं करिष्यति । प्रथमं पुष्करारण्यं नैमिषन्तदनन्तरम् । धर्म्मारण्यं ततः प्राप्य श्राद्धं भक्त्या प्रदास्यति । गयायां धर्म्मपृष्ठे वा सरसि ब्रह्मणस्तथा । गयाशीर्षवटे चैव पितॄणां दत्तमक्षयम् । प्रेतं कृत्वा चरो यस्तु श्मशानं परिसर्पति । नरकस्थान् पितॄंस्तस्य स्वर्गं नयति सत्वरः ॥ कुले तस्य न राजेन्द्र ! प्रेतो भवति कश्चन । प्रेतत्वमोक्षभावश्च पिण्डदानाद्गच्छति । गयायां पिण्डदानस्य नान्यत्रानं विशिष्यते । एकेन पिण्डदानेन तृप्तास्ते मोक्षगामिनः । श्राद्धप्रदानं प्रवरं वदन्ति वस्त्रप्रदानञ्च तथा मुनीन्द्राः । तोयञ्च तीर्थेषु नरैः प्रदत्तं तदर्थहेतं प्रवरं प्रदिष्टम् । सर्व्ववहा पुण्यशिरा महाफला महानदी । ये तु पश्यन्ति तां गत्वा मानसे दक्षिणोत्तरे । प्रत्यक्षहितश्रेयोभ्यः प्राप्तं तैर्जन्मनः फलम् । यद्वद्दिष्यति वै मर्त्त्यस्तत् प्राप्नोत्यसंशयम् । एष उद्देशतः प्रोक्तस्तीर्थानां संग्रहो मया । वागीशोऽपि न शक्नोति विस्तरात् किमु मानुषाः" पुराणसर्व्वस्वे ।

श्राद्धे तीर्थभेदस्य माहात्म्यं विष्णुसंहितायामुक्तं यथा

"अथ पुष्करेषु श्राद्धम् जप्यहोमतपांसि च । पुष्करे स्नानमात्रतः सर्व्वपापेभ्यः पूतो भवति । एवमेव गयाशीर्षे अक्षयवटे अमरकण्टकपर्व्वते वराहपर्व्वते यत्र क्वचन नर्म्मदातीरे गङ्गायां विशेषतः, कुशावर्त्ते बिल्वके नीलपर्व्वते कनखले कुब्जाम्रे भृगुतुङ्गे केदारे महालये नड़न्तिकायां सुगन्धायां शाकम्भर्य्यां फल्गुतीर्थे महागङ्गायां त्रिशालिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः । गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे । सततं नैमिषारण्ये वाराणस्यां विशेषतः। अगस्त्याश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योतिषायाश्च सङ्गमे । श्रीपर्व्वते कालोदके उत्तरमानसे वड़वायां मतङ्गवाप्यां सप्तर्षौ विष्णुपदे स्वर्णमार्गपदे गोदावर्य्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायाम् इरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे औशनसे । एवमादिष्वन्येषु तीर्थेषु सरित्सु सर्व्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु पर्व्वतेषु निकुञ्जेषु वनेषूपवनेषु गोमयेनोपलिप्तेषु मनोज्ञेषु"

तीर्थागमने दोषो यथा "अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च । अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते" प्रा० त० । तीर्थगमने फलं यथा

"अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत् फलमाप्नोति तीर्थाभिगमनेन यत् । तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः । कृतपापो विशुध्येत किं पुनः शुद्धकर्म्मकृत् । तिर्य्यग्योनिं न वै गच्छेत् कुदेशे न च जायते । न दुःखी स्यात् स्वर्गभाक् च मोक्षोपायञ्च विन्दति" ब्रह्मवै०पु० ।

तीर्थस्य फलभागिनो यथा "यस्य हस्तौ च पादौ

च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित् । अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते । अदाम्भिको निरारम्भो लघ्वाहारो जितेन्द्रियः । विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते । अक्रोधनोऽमलमतिः सत्यवादी दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते । अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः । हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः । इति काशीखण्डम् । प्रा०त० । तीर्थप्रतिग्रहे दोषो यथा।

"तीर्थे न प्रतिगृह्णीयात् संक्रान्त्यादिषु च तथा । स्वकार्य्ये पितृकार्य्येऽपि देवताभ्यर्च्चनेऽपि वा । निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते" । "तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे । वाराणस्यां बदर्य्याञ्च गङ्गासागरसङ्गमे । पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले । हरिद्वारे च केदारे सोमे बदरपावने । सरस्वतीनदीतीरे पुण्ये वृन्दावने वने । गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये । एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः । स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च" इति ब्रह्मवै०प्र०ख० । अन्यच्च "तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन् । स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु" । तथा "यस्य पादौ च हस्तौ च मनश्चैव सुसंयुतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । नृणां पापकृतां तीर्थे भवेत् पापस्य संक्षयः । यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम्" । हस्तसंयमोऽत्र निन्दितप्रतिग्रहादिनिवृत्तिः । पादसंयमस्तु अगम्यदेशादिगमननिवृत्तिः । मनःसंयमः कामक्रोधादिनिवृत्तिः, विद्या तत्तत्तीर्थफलबोधकवाक्यवेदाद्यधिगमरूपा । तपः आमिषादिनिवृत्तिः । कीर्त्तिः धर्मार्थतीर्थगमने धार्म्मिकत्वादिना प्रसिद्धिः । फलं सम्यगिति शेषः । एतच्च हस्तसंयमनादितीर्थयात्राङ्गं महाभारते तीर्थयात्रोपक्रमाभिधानात् तीर्थस्नानादिमात्रे तु, प्रसङ्गेन यात्राप्रकरणमन्तरेणैव स तीर्थफलमश्नुते इति सामान्याभिधानात् । इति कल्पतरुः । अतएव पैठीनसिः "षोडशांशं स लभते यः परार्थेन गच्छति । अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति" । परार्थेन वेतनादिना, प्रसङ्गेन उद्देश्यान्तरप्रसङ्गेन । "तथा प्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत् । मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः" ।

तीर्थयात्राविधानं यथा "यो यः कश्चित्तीर्थयात्रान्तु गच्छेत् । सुसंयतः स च पूर्वं गृहे स्वे । कृतोपवासः शुचिरप्रमत्तः संपूजयेद्भक्तिनम्रो गणेशम् । देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् प्रीणयन् वित्तमात्रा प्रयत्नात् । प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च । एवं कुर्वतस्तस्य तीर्थे यदुक्तं फलं तत् स्यान्नात्र सन्देह एव" इति ब्रह्मपुराणम् । एतदधिकारे प्रा०त० ।

"सुसंयतः पूर्वदिने कृतैकभक्तादिनियमः । तदुत्तरदिने कृतोपवासस्तदुत्तरदिने गणेशं ग्रहानिष्टदेवतांश्च संपूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयेत् । ततः शुभलग्ने यात्रां कुर्य्यात् तीर्थयात्रान्तु गच्छेदित्युपक्रमादुपवासदिने मुण्डनमपि । "प्रयागे तीर्थयात्रायां पितृमातृवियोगतः । कचानां वपनं कार्य्यं न वृथा विकचो भवेत्" इति विष्णुपुराणवचनात् । प्रवेशेऽपि तीर्थयात्रायामिति वक्तव्यम् । "गच्छन् देशान्तरं यस्तु श्राद्धं कुर्य्यात्तु सर्पिषा । यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः" इति भविष्यपुराणादिति गङ्गावाक्यावली । वस्तुतस्तु तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेशे इत्येव वक्तव्यम् । यात्राप्रत्यागमनोत्तरस्वगृहप्रवेशयोर्भेदात् प्रत्यागमनोत्तरश्राद्धस्य प्रत्यागतश्चापीति प्रागुक्तत्वात् अत्र-मात्र घृताद्युपस्कृतं कूर्म्मपुराणवचनम् "तीर्थयात्राप्रारम्भे तीर्थात् प्रत्यागमेऽपि च । वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितम्" । ततश्च प्रवेशे चेति चकारेण श्राद्धमात्रं समुच्चितम् । न तु तस्य यात्रार्थत्वमपीति । एवं देवान् पितॄनित्यभिधानात् तत्पूजनमेव पुनः कार्य्यं नतूपवासादिकमपि अन्यथा देवानित्यादिकं व्यर्थं स्यात् । मत्स्यपुराणम् "तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः । सदा न हस्तेनैकेन स्थले श्राद्धं विधीयते" । अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्वं नियम्यते । तथा हि "अन्तरुदके आचान्तो अन्तरेव शुद्धो भवति । तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत् सर्व्वत्र शुद्धो भवति" इति पैठीनसिसूत्रेण जलैकचरणतावचनेन उभयत्र कर्म्मार्हत्वात् तर्पणकाले तीर्थे जलैकचरणत्वं प्रतीयते । अन्यत्र त्वनियमः । तद्यथा जले च तर्पणविरुद्धमिति । स्मृ इति सत्योपवचनम् । देवीपुराणे । "अकालेऽप्यथ वा काले तीर्थश्राद्धं तथा नरैः । प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं

पितृतर्पणम्। पिण्डदानं ततः प्रोक्तं पितृणां चातिदुर्लभम्। विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत्। श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम्। श्वध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतञ्च यत्"। श्राद्धोदककालः। अकालाश्च इति न रात्र्यादाविति पर्युदस्तप्रतिप्रसवः। तथात्वे तद्बाधापत्तेः। किन्तु पर्युदस्तेतराप्रशस्तकालपरम्। "तत् चाऽश्मशानमापन्न तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" इत्यलङ्कारात्। काल इति प्रथमापराह्णादिकालपरम्। अत्र मुखेः प्राप्त्युत्तरविहितप्रथमदिन एव श्राद्धं तेन पूर्वदिने रात्रावेवाद्यावागमनेऽपि परदिने श्राद्धविरहम्। तथा च हलायुधधृतम् "गत्वैव तीर्थं कर्त्तव्यं श्राद्धं तत्प्राप्तिहेतुकम्। पूर्वाह्णेऽथवा प्रातर्द्देशे स्यात् पूर्वदक्षिणे"। पूर्वाह्णे सङ्गवे पूर्वदक्षिणे अग्निकोणे। पिण्डदानमिति श्राद्धाभावे केवलपिण्डदानमिति न पौनरुक्त्यम्। तीर्थे पिण्डप्रतिपत्तिमाह मत्स्यपुराणम् "पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा। तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः"।

वायुपु० "उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः। विधाय कर्पटीवेशं कृत्वा ग्रामं प्रदक्षिणम्। ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्" इत्युक्तं गयाभिमुखप्रस्थानादन्यत्रापि तथा। अन्यत् पक्वान्नदानश्राद्धादिपद्धतौ ज्ञेयम्।

कूर्मपुराणम् "ऐश्वर्य्यलोभमोहाद्वा गच्छेद्यानेन यो नरः। निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत्" इति मत्स्यपुराणम् "संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि। मुण्डनञ्चोपवासञ्च तदा यत्नेन कारयेत्" इति गङ्गावाक्याव०। तीर्थप्राप्त्यनन्तरविधानं यथा।

"न परीक्ष्यो द्विजस्तीर्थे अन्नार्थी भोज्य एव हि। सक्तुभिः पिण्डदानञ्च चरुणा पायसेन च। कर्त्तव्यमृषिभिर्दिष्टं पिण्याकेन गुडेन च। श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम्। अकालेऽप्यथवा काले तीर्थश्राद्धन्तु तर्पणम्। अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत्। यद्दिने तीर्थप्राप्तिः स्यात्ततोऽह्नः पूर्ववासरे। उपवासश्च कर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत्। तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा। शिरोगतानि पापानि यान्ति मुण्डनतो यतः। तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत्। स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु" इति काशीखण्डम्। "मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा गयां गङ्गां विशालां विरजां तथा" इति स्कान्दम् "स्नापयेत् शिवलिङ्गादीन् यात्री तीर्थे नरोत्तमः। अन्यथापहरन्त्येते यात्रातीर्थभवं फलम्" इति स्कान्दम् "मातरं पितरं जायां भ्रातरं सुहृदं गुरुम्। यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः" इति प्रा०त०मार्क०पु०।

कलौ तीर्थानां पृथिव्यां स्थितिकालो यथा "सरस्वती पुण्यक्षेत्रमाजगाम च भारतम्। गङ्गाशापेन कलया स्वयं तस्थौ हरेः पदे। पश्चाद्भगीरथेनानीता मर्त्ये भागीरथी शुभा। समाजगाम कलया वाणी शापेन नारद!। पद्माजगाम कलया सा च पद्मावती नदी। भारतं भारतीशापात् स्वयं तस्थौ हरेः पदे। कलेः पञ्चसहस्राणि वर्षाणि स्थित्वा च भारते। जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम्। यानि सर्वाणि तीर्थानि काशीं वृन्दावनं विना। यास्यन्ति ताभिः सार्द्धञ्च वैकुण्ठमाज्ञया हरेः"।

"यानादिना गमनदोषो यथा "वृषयानं" हरते याने नरकं तत्र पादुके। नरकं तैलमांसाभ्यां वर्षं हरति मैथुने" इति कर्मलोचनम्।

तत्र उपाये शङ्के च "कृततीर्थः पयसामिवाशयः" किरा०। आप्ते तीर्थकरः। पाद्मे। "ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः। विद्यया विद्यां यः प्राह तानि तीर्थानि षण्मम" विद्यावाक्यम्। १ चात्वालोत्करयोरन्तराले देशे "दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा" कात्या०श्रौ० ५।५।११। "तीर्थेन चात्वालोत्करान्तरेण प्रवेश्य वेदिचात्वालयोरन्तरालेन पूर्वेणोत्तरवेदिं दक्षिणेनाग्नेः पुरस्तादाहृत्य अथवा तीर्थेन प्रवेशनानन्तरमुत्तरां वेदिमपरेण चानीय वेद्योरन्तरालेन दक्षिणस्याग्नेः पुरस्तादानीय जुहोति" "तेनान्तरेण प्रतिपद्यन्ते चात्वालं चैतद्वै देवानां तीर्थम्" षड्विं०ब्रा०। कराङ्गुलिमध्ये ब्राह्मादितीर्थं यथाह मनुः "ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन। अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः" [illegible]मते। "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" छा०उ० "तीर्थं शास्त्रानुज्ञाविषयः" भाष्यम्। १८ मन्त्राद्यष्टादशसु। "कश्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च। त्रिभिस्त्रिभिर-

तावन्तो निर्वाणमृच्छति । आकाशात्तारकं लिङ्गं ज्योतीरूपमिहागतम् । ज्ञानवाप्याः पुरोभागे तल्लिङ्गं तारकेश्वरम् । तारकज्ञानमभ्येति तल्लिङ्गस्य समर्चनात् । ज्ञानवाप्यां नरः स्नात्वा तारकेशं विलोक्य च । कृतसन्ध्यादिनियमः परितर्प्य पितामहान् । धृतमौनव्रतो धीमान् यावल्लिङ्गविलोकनम् । मुच्यते सर्वपापेभ्यः पुण्यं प्राप्नोति शाश्वतम् । प्रान्ते च तारकं ज्ञानं यस्मात् ज्ञानादिमुच्यते । किरातश्च किरातेश इह चाविर्बभूव ह । किरातरूपी भगवान् यत्र देवोऽभवत् पुरा । तत्किरातेश्वरं लिङ्गं भारभूतेश्वरादनु । नमस्कृत्वा नरो जातु न मातुरुदरेशयः । गङ्गापूर्व्वाः समागच्छन्नरकेश्वरसंज्ञकम् । पौषस्यचाण्डवात् पश्चात् पूजितं सर्वदुःखहृत् । पुण्यं अजप्रियं लिङ्गं जललिङ्गस्थलादपि । आयातं तत्र गङ्गाया जलमध्ये व्यवस्थितम् । तत्प्रासादोऽद्भुततरो मध्येगङ्गं निरीक्ष्यते । सर्वधातुमयः श्रेष्ठः सर्वरत्नमयः शुभः । अद्यापि दृश्यते कैश्चित् पुण्यसम्भारगौरवात् । श्रेष्ठं लिङ्गमिहायातं तीर्थात्कोटीश्वरादपि । कोटिलिङ्गार्चनपुण्यं तल्लिङ्गस्य निरीक्षणात् । श्रेष्ठं श्रेष्ठेश्वरात्मस्थात् श्रेष्ठसिद्धिप्रदायकम् । नकुलाख्यात् समुद्भूतं लिङ्गमालानकेश्वरम् । नलेश्वरपुरोभागे पूजितं सर्वसिद्धिदम् । आगत्य विरजस्तीर्थाद्देवदेवस्त्रिलोचनः । लिङ्गे त्वमादिसंसिद्धे शाश्वतस्थे त्रिपिष्टपे । पुण्ये पिलिप्पिले तीर्थे सर्वेषां तारकप्रदे । आविरासीत् स्वयं देव ओङ्कारेऽमरकण्टकात् । तदाद्यं तारकज्ञानं यदा गङ्गा न चागता । तदैवाविरभूत् काशी लोकोपकारणाय वै । तदोङ्कृति महल्लिङ्गं स्वयमाविरभूत्ततः । महिमानं न तस्यान्यः परिवेत्ति विभो कृते । एतान्यायतनानीश ! आनिनाय महान्ति च । शेषयित्वांशमात्रञ्च तस्मिन् काले गिरौ गिरौ । इहायातानि पुण्यानि सर्वभावेन नान्यथा । प्रासादाः सर्वतः श्रेष्ठा रम्या अभ्रंलिहा विभो ! । बहुधातुमयाश्चित्राः सर्वरत्नमहोज्ज्वलाः । येषां कलशमात्रस्य दर्शनान्मुक्तिराप्यते । श्रुत्वा च नामचैतेषां लिङ्गानां सुरसत्तम ! अपि जन्मसहस्रोत्थाः क्षीयन्ते पापराशयः । इदानीं को निदेशोऽत्र मयानुष्ठेय ईशितः ! । प्रसादीक्रियतां सोऽपि सिद्धो मन्तव्य एव हि । श्रीस्कन्द उवाच । श्रुत्वेति नन्दिनो वाक्यं देवदेवेश्वरो हरः । तदा प्रसाद्य शैलादिमिदं प्रोवाच कुम्भज ! । श्रीदेवदेव उवाच । साधु कृतं त्वया नन्दिन् ! सदानन्दविधायक ! । विधेहि मे निदेशं च त्वमद्यापारवाधुना । यत्र कोऽत्रस्तु चामुण्डायायाल निवसन्ति हि । सदैव ताभिः सहिताः भूतवेतालभैरवैः । ताः पुरीरक्षणार्थाय सर्वा हननशस्त्रायुधाः । प्रतिदुर्गं दुर्गरूपाः परितः परिवारय । श्रीस्कन्द उवाच । नन्दिनं स निदेशापि महाज्ञा सहितो महः । ययौ त्रैपिष्टपं कालं शङ्खिनीजपुरोहतम् । विशादतनवोऽप्यथौ मूर्द्ध्न्याज्ञां विधाय च । आहूय सर्वास्ता दुर्गाः प्रतिदुर्गं न्यवेशयत् । निशम्याध्यायमेतञ्च पुण्यायतनगर्भितम् । नरः स्वर्गापवर्गौ च प्राप्नुयात् श्रद्धया क्रमात् । श्रुत्वाष्टषष्टिमेतां वै महायतनसंभवाम् । न जातु प्रविशेन्मर्त्यो जनन्या जठरीदरीम्"। [प्रशंसनीयत्वात् । वैदे चेमच० ।

**तीर्थवाक** पु० तीर्थस्येव वाको वचनमस्य उत्ताङ्कस्थिता

**तीर्थशौच** न० तीर्थस्य घट्टस्य शौचं परिष्कारः । घट्टादिपरिष्कारे । "सेतुबन्धरता ये च तीर्थशौचरताश्च ये । तडागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात्" । आदित्यपु० तीर्थशौचं घट्टपरिष्कारः" रघु० ।

**तीर्थसेनि** स्त्री कुमारानुचरमातृभेदे ।"माधवी शुभवक्त्रा च तीर्थसेनिश्च भारत !" भा० शल्य० ४७ अ० ।

**तीर्थसेविन्** पुंस्त्री० तीर्थं जलप्रान्तं सेवते मत्स्याहारार्थं सेव–णिनि ।१वके राजनि०स्त्रियां ङीप् ।२तीर्थसेवके त्रि०।

**तीर्थ्य** पु० तीर्थे भवः यत् । रुद्रभेदे । "नमस्तीर्थ्याय च कुल्याय च" यजु० १६।४२ । समानतीर्थे वसति यत् । सतीर्थ्य एकगुरुके अमरः । [तितीव ।

**तीव** स्थौल्ये भ्वा० पर० सक० सेट् । तीवति अतीवीत् ।

**तीवर** पु० तृ–ष्वरजन्तः नि०।१समुद्रे, २व्याधे, ३वर्णसङ्करजातिभेदे(तेओर)पुंस्त्री० जातित्वात् ङीष् ।

**तीव्र** न० तीव–रक् तिज–वन् दीर्घः जस्य वो वा । १अतिशये २तद्वति त्रि० अमरः । ३तीक्ष्णे ४लौहभेदे (इस्पात) ५तीरे ६त्रपुणि च उणा० ७लौहमले राजनि० । ८कटुकायां ९कटौ १०नितान्ते च त्रि० उणा० । ११शिवे पु०शब्दर०। "विलङ्घिताधोरणतीव्रयत्नाः" रघुः । "तीव्रोत्थितास्तावदसह्यरंहसः" "तीव्रं महाव्रतमिवात्र चरन्ति वप्राः" माघः । वैराग्यस्य उपायस्य च तीव्रत्वं पात० सू० भाष्ये विवरणे च दर्शितं यथा "ते खलु नव योगिनो मृदुमध्याधिमात्रोपाया भवन्ति । तद्यथा, मृदूपायो मध्योपायोऽधिमात्रोपाय इति । तत्र मृदूपायोऽपि त्रिविधः मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग

इति । तथा मध्योपायस्याधिमात्रोपाय इति, तत्राधिमात्रोपायानाम्” भा० “तीव्रसंवेगानामासन्नतमः” पात०सू०। “समाधिलाभः समाधिफलञ्च भवतीति” भाष्यम् ननु श्रद्धादयश्चेद्योगोपायास्तर्हि सर्वेषामविशेषेण समाधितत्फले स्यातां दृश्यते तु कस्यचित्सिद्धिः कस्यचिदसिद्धिः कस्यचिच्चिरेण सिद्धिः कस्यचिच्चिरतरेण सिद्धिः कस्यचित्क्षिप्रमित्यत आह, “ते खलु नवयोगिनः” इति । उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद्येषां ते तथोक्ताः संवेगो वैराग्यं तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनादृष्टवशादेवेति तेषु यादृशां क्षेपीयसी सिद्धिस्तान् दर्शयति सूत्रेण, “तीव्रसंवेगानामासन्नतमः इति सूत्रम्” विव०।

तीव्रकण्ठ पु० तीव्रः कण्ठो यस्मात् ५ ब० । सेवनेन कण्ठपीड़के १शूरणे (ओल)राजनि० तस्य सेवने हि कण्ठोद्वेजिता लोकप्रसिद्धा ।

तीव्रकन्द पु० तीव्रः कन्दोऽस्य । शूरणे राजनि० ।

तीव्रगन्धा स्त्री तीव्रो गन्धो यस्याः । यवान्यां राजनि० । २तीव्रगन्धयुक्ते त्रि० । कर्म० । ३तीव्रे गन्धे पु० ।

तीव्रज्वाला स्त्री तीव्रं यथा तथा ज्वालयति उद्दीपयति देहिनम् ज्वल–णिच्–अच् । १धातक्याम् राजनि० । तत्स्पर्शने हि गात्रे प्रबलस्य तीव्रस्पर्शस्यैवेति तस्यास्तथात्वम् २तीव्रज्वालायुक्ते त्रि० । कर्म० । ३तीव्रायां ज्वालायां स्त्री ।

तीव्रदारु न० कर्म० । १तीव्रे दारुणि । तस्य विकारः रजता० अञ् । तैव्रदारव तद्विकारे त्रि० स्त्रियां ङीप् ।

तीव्रबन्ध पु० तीव्रो बन्धो यस्मात् । तामसगुणे “दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता” गीतायां तामसराजसयोरासुरसम्पदोर्बन्धहेतुत्वोक्तेस्तथात्वम् ।

तीव्रवेदना स्त्री कर्म० । घोरायां यातनायाम्, अमरः ।

तीव्रसंवेग पु० कर्म०। तीव्रवैराग्ये तीव्रशब्दे दृश्यम् ।

तीव्रा स्त्री तीव्र+टाप् ।१गण्डदूर्वायां २कटुरोहिण्यां ३राजिकायां (राइसरिषा) मेदि० । ४नदीभेदे शब्दर० । ५महाज्योतिष्मत्यां ६तरदीक्ष्णे ७तुलस्याम् राजनि० । ८तीव्रवेगयुक्तस्त्रीमात्रे च ।

तीव्रानन्द तीव्र आनन्दोऽस्य । शिवे शिवसहस्रनाम ।

तु स्तौ (स्तवो भा०)अक० हिंसायां पूर्त्तौ च सक०अदा०पर०अनिट् । तौति तवीति । अतौषीत् । अत्र “नाभ्यस्तस्याचि पिति सार्वधातुके” ७।३।८७। “उतः सार्वधातुके इत्यस्यानुवृत्तिसम्भवेऽपि “तुरुस्तुशम्यमः सार्वधातुके” ७।३।९५ पा०सूत्रे “पुनः सार्वधातुकपदग्रहणमपिदर्थमिति” सि०कौ०। तेन “उतो वृद्धिर्लुकि हलि” ७।३।८९पा०सूत्रात् हलीत्यस्य “ब्रुवः ईट्” ७।३।९३पा०सूत्रात् “ईटः यङो वा” सू०योगस्य चानुवृत्तिः न पितीत्यस्य तेन तवीतः तुतः तवीथः तुथः। अपि तु न । तुवन्ति । मुग्धबोधकृन्मते तौत्यस्यानुवृत्तिवत् पितीत्यस्यानुवृत्तिरिति बभाण” तेन तत्रोते तुत इत्येव इति भेदः। तताव । वेदे तुजादि० अभ्यासदीर्घः।“स तूताव नैनमश्नोत्यंहतिरग्ने ।” ऋ० १।९४।२ “यस्या तूतोदिन्द्रो नातुभिष्टुत्” ऋ०२।२०।५। तु इत्याकृतिगणः कचित् बहुलं छन्दसि विकरणस्य लुः । अडागमाभावश्च”भा० ।

तु अव्य० तुद–मितद्रु०डु । १पादपूरणार्थे निरर्थके ।“निरर्थकं तु हीत्यादि पूरणैकप्रयोजनम्” चन्द्रालोकः । २भेदे ३अवधारणे अमरः। ४समुच्चये ५पक्षान्तरे ६नियोगे ७प्रशंसायां ८विनिग्रहे शब्दर०तत्र पक्षान्तरे“आचारेण तु संयुक्तः संपूर्णफलभाक् भवेत्”मनुः। समुच्चये “उद्धृत्य वं समावस्य चरमाणं तु कामतः । स्नात्वा तु विप्रो दिव्याप्सः प्राणायामेन शुध्यति” मनुः । पूजायामेतद्योगे “तुपश्य पश्यताहैः पूजायाम्”पा०तिङन्तं न निहन्यते”आदह स्वधाम तु पुनर्गर्भत्व मेरिरे” सि० कौ० धृता श्रुतिः ।

तुकाक्षीरी स्त्री तुगाक्षीरी+पृषो० । वंशरोचनायाम् हेम० ।

तुक्ष त्रि० तक्ष–बा० कृष । तोषयुक्ते मतः पक्षा० चतुरर्थ्यां फक् । तौक्षायण तत्सन्निकृष्टदेशादौ त्रि० ।

तुखा(षा)र पु०विन्ध्यपर्वतस्थे जातिभेदे ।“ये चान्ये विन्ध्यनिलयास्तुखा(षा)रास्तुम्बराश्च ये। अथवा ब्रह्मवर्चस्य । विदितान् देवसद्मनान्” हरिवं० ५ अ० ।

तुगा स्त्री तुज–बा० क किच् । वंशरोचनायां राजनि० ।

तुगाक्षीरी स्त्री तुगेव क्षीरी । वंशरोचनायाम् राजनि० ।

तुग्र न० तुज–रक् न्यङ्क्वा० कुत्वम् तः । अश्विनीकुमारयोः मित्रे राजर्षिभेदे ।“तुग्रोह भुज्युमश्विनोदमेघे रयिं न कश्चिन् ममृवां अवाहाः” ऋ०१।११६।२ । अत्रेयमाख्यायिका। “तुग्रो नामाश्विनोः प्रियः कश्चिद्राजर्षिः । स च द्वीपान्तरवर्त्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत् । सा च नौर्मध्ये समुद्रमतिदूरं गता वायुवशेन भिन्नाभूत् । तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव” भा० । “ता भुज्युं विभिरद्भ्यः समुद्रात् तुग्रस्य सूनुमूहथूरजोभिः” ऋ०१।११७।१४। “ता तौ अश्विनौ तुग्रं

तुङ्गभद्र पु० तुङ्गोऽपि भद्रः । १मदोत्कटकरिणि हस्तिपके २नदीभेदे स्त्री मेदि० । "शर्करावर्त्ता तुङ्गभद्रा कृष्णवेण्ये-त्यादि" भाग० ५।१९।१८ श्लो० भारतस्थनदीकथने । "तुङ्गभद्राजलं स्वादु स्निग्धं शीतं तथा गुरु । कफकृत् पित्तहरं प्रायः पात्रं मेधाकरं मतम्" राजनि० तज्जलगुणा उक्ताः ।

तुङ्गवीज न० तुङ्गस्य शिवस्य वीजम् । १पारदे । "तुङ्गवीज-समायुक्तं गोक्षयन्तं प्रसाधयेत्" रु०यामि० "तुङ्गो महादेव-स्तस्य वीजं वीर्य्यं पारद इत्यर्थः" रङ्गना० ।

तुङ्गवेणा स्त्री नदीभेदे "तुङ्गवेणा कृष्णवेणा कपिला शोण एव च" भा०व० २२१ अ० । "विमर्द्दीं पिङ्गलां वेणां तुङ्गवेणां महानदीम्" भा० भी० ९अ० ।

तुङ्गरस पु० तुङ्गः श्रेष्ठो रसोऽस्य । गन्धद्रव्यभेदे "काला-गुरुविमिश्रेण तथा तुङ्गरसेन च" भा० आ० १२७ अ० ।

तुङ्गशेखर पु०तुङ्गमुच्चशेखरमस्य ।१पर्वते शब्दमा०।२उच्चशेख-रयुक्ते त्रि० ।कर्म० ।३उच्चे शेखरे न० ।

तुङ्गा स्त्री तुङ्ग+टाप् ।१वंशरोचनायां २शम्याम् राजनि० ।

तुङ्गिन् त्रि० तुङ्गं मेषादिकं स्थानमाश्रयत्वेनास्त्यस्य इनि । उच्चस्थिते ग्रहे २महाज्योतिष्मत्यां स्त्री ङीप् राजनि० । ३प्रधानस्थानस्थे त्रि० । [२रात्रौ शब्दार्थचि० ।

तुङ्गी स्त्री तुङ्ग+गौरा०ङीष् ।१हरिद्रायां २वर्वरायां मेदि०।

तुङ्गीनास पु०तुङ्गी हरिद्रेव पीता नासाऽस्य । १कीटभेदे । "तुङ्गीनासो विचिलकस्तालको वाहकस्तथा । कोष्ठा-गारी क्रिमिकरो यश्च मण्डलपुच्छकः । तुङ्गनाभः सर्ष-पिकोऽवल्गुली शम्बुकस्तथा । अग्निकीटश्च घोराः स्यु-र्द्वादश प्राणनाशनाः" सुश्रु० ।

तुङ्गीपति पु०तुङ्ग्याः रात्रेः पतिः। निशापतौ चन्द्रे त्रिका०

तुङ्गीश पु० कर्म० । १शिवे २कृष्णे ३सूर्य्ये च शब्दर० तेषां प्रधानस्थानस्थित्वा तथात्वम् ।६त०।रात्रीशे ४चन्द्रे ।

तुच् पु० त्यच–क्विप् वा० संप्रसा०तुज–क्विप् वा पृषो० जस्य चः । १अपत्ये निघण्टुः । "तुचे तनाय तत्सु" ऋ० ८।१८।१८ । "तुचे पुत्राय" भा० । "तुचे तु नो भवन्तु" ८।२७।१४। "तोकमिति पिण्डदानादिकमिति तुच पुनः नष्टे" भा० । पृषो० जस्य चः इति भेदः। हेमचन्द्रे तु आन्ततयाऽयं पठितः वेदे तु सर्वत्र चान्तत्वेनैव प्रयोगः ।

तुच्छ न० तुद–बाहु० क्विप् तुदा व्यथया छ्यति छो–क । १तुषाकौ (तुष) २हीने,उणा०। ३शून्ये अमरः ४अल्पे हेमच०। ५शून्ये च त्रि०।"किमेतैराशमस्तुच्छैः सह देहेन नश्वरैः । अनर्थैरर्थसङ्काशैर्नित्यानन्दमहोदधेः" भाग०७।७। ४८।८गौणोक्ते ६तुच्छप्राये भाग०।७मन्दे कदर्य्ये च त्रि०

तुच्छद्रु पु० कर्म० । एरण्डवृक्षे शब्दच० ।

तुच्छधान्यक न० कर्म० । (भुषी) पुलाके अमरः ।

तुच्छ्य न०तुच्छ–वेदे स्वार्थे इवार्थे वा यत् ।१तुच्छशब्दार्थे२तुच्छ-कल्पे च "तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् । तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्" ऋ०१०।१२९।३ वाक्यमर्थः । ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म ? जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् का-रकं च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वलक्षणकारणत्वसम्भवात् । अथैतद्दोषपरि जिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते कथं नास्य जन्म ? अत आह । तमसा गूढमग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत्तमसा-गूढम् । यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् आत्मतत्त्वस्यावरकत्वात् मायापरपर्य्यायं भावरूपा-ज्ञानमत्र तम इत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । तत्कालात्तमसो नामरूपाभ्यां यदाऽविर्भवनं तदेव तस्य जन्मोच्यते । एतेन कारणावस्थायामसदेव कार्य्यमुत्पद्यत इत्यसदादि-नोऽसत्कार्य्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः । ननु-कारणे तमसि तज्जगदात्मकं कार्य्यं विद्यते चेत् कथं नासीद्रज इत्यादि निषेधः । तत्राह तम आसीदिति । तमोभावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मनाम् । यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः । नन्वावरकत्वादावरकं तमः कर्तृ आवार्य्यत्वा-ज्जगत् कर्म । कथं तयोः कर्मकर्त्रोस्तादात्म्यम् । तत्राह अप्रकेतमिति । अप्रकेतमप्रज्ञायमानम् । अय-मर्थः । यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको न विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम् । अतएव मनुना वर्ण्यते "आसीदिदं तमोभूतमप्रज्ञातम-लक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति । कुतो वा न प्रज्ञायते तत्राह सलिलम् । षल–गतौ । औणादिक इलच् । इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन संगतमविभागापन्नम् आसीत् । अस्तेर्लङि तिपि बहुलं छन्दसीतीडभावे हल्ङ्याब्भ्य इति

तिलोपे तिष्यनक्ष्मे: पा० इति पर्य्युदासाद्दकाराभावः। यद्वा सलिलमिति लुप्तोपमम्। सलिलमिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाऽविभागापन्नं जगन्न शक्यं विज्ञातुमित्यर्थः। ननु विविधविचित्र० रूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः। तथा तमोऽपि क्षीरवहुलवदित्ये-वोच्यते। तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसम्भव इत्यत आह तुच्छ्येनेति। आसमन्ताद्भवतीत्याभु तुच्छ्येन। छन्दसो मकारोपजनः। तुच्छ्येन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्" भाष्यम्।

**तुज** दीप्तौ चुरा० उभ० अक० सेट् इदित्। तुञ्जयति-ते अतुतुञ्जत्। तुञ्जयते।

**तुज** प्रापणे हिंसायाञ्च भ्वा० पर० सक० बले अक० सेट् इदित्। तुञ्जति अतुञ्जीत्। तुतुञ्ज तुतुञ्जतुः। "तुञ्जे तुञ्जेय उत्तरे स्तोमाः" ऋ०१।७।७। इमामृचमधिकृत्य "तुञ्जतेर्दानकर्म्मणः तुञ्जे तुञ्जे दाने दाने" इति ६।१७ निरुक्तोक्तेः। दाने च।

**तुज** हिंसायां भ्वा० पर० सक० सेट्। तोजति अतोजीत्। तुतोज। वेदे तुजादि० अभ्यासस्य दीर्घः। तूतुजानः। प्रेरणे च "आ यां तोके तनये तूतुजानाः" ऋ०७।६७।६। "मावत्तोके तनये तूतुजाना" ७।८४।५। "तूतुजानाःप्रेर्य्यमाणाः" भा०। "अस्मा इदु प्रभया तूतुजानः" निरु०६।२० धृता ऋक्।

**तुञ्ज** पु० तुजि-बले अच्। वज्रे निघण्टुः।

**तुट** कलहे तुद० कुटा० पर० अक० सेट्। तुटति अतुटीत् तुतोट। [च" हरिवं० २७७ अ०।

**तुटितुट** पु० शिवे। "नमस्तुण्डाय तुण्डाय नमस्तुटितुटाय

**तुटम** पुंस्त्री० तुट-बा०अम। उन्दुरौ त्रिका०।

**तुड** भेदे तु० कुटा०पर०सक० सेट्। तुडति अतुडीत् तुतोड।

**तुड** निष्पीड़ने भ्वा० आ० सक० सेट् इदित्। तुण्डते अतुण्डिष्ट। तुतुण्डे। तुण्ड्यते।

**तुड** हिंसाकरणे भ्वा० पर० सक० सेट्। तोडति अतोडीत् ऋदित्। अतुतोडत्-त।

**तुडि** स्त्री तुड-इन् कित्। तोड़ने।

**तुड्ड** अनादरे भ्वा० पर० सक० सेट्। तुड्डति अतुड्डीत्। अयं डोपध इत्यन्ये तन्मते क्विपि तुट्-डोपधत्वे तुड् इति भेदः।

**तुण** कुटिलीकरणे तु० पर० सक० सेट्। तुणति अतोणीत्। तुतोण।

**तु(तू)णि** पु० तुण+सङ्कोचे इण् वा० दीर्घः। १कुणिरोगे अमरटीकायां क्षीरस्वामी २नन्दिवृक्षे राजनि०। "तूणीवृक्षः कटुः पाके कषायो मधुरो लघुः। तिक्तो ग्राही हिमो हृद्यो व्रणकुष्ठास्रपित्तहृत्" भावप्र०।

**तूणिक** पु० तूणि-स्वार्थे क। नन्दिवृक्षे राजनि०।

**तुण्ड** न० तुडि-तोड़ने अच्। १मुखे अमरः। "अयस्तुण्डैरनुर्बलैः" हरिवं० २४५ अ०। "स तेन पतगेन्द्रेण पक्षतुण्डहतस्तदा" भा० आ० ३२ अ०। "दीर्घनस्या दीर्घहन्वो दीर्घतुण्डाश्च भारत!" भा० श० ४७। २शिवे पु०तुटितुटशब्दे दृश्यम्। ३राक्षसभेदे। "तुण्डेन च नलस्तत्र पटुशः पनसेन च" भा० व० २८४ अ०।

**तुण्ड(ण्डि)केरी** स्त्री प्रशस्तं तुण्डं(ण्डिः) कन् तद्-ईरयति ईर्त्ते वा ईर-अण् १कार्पास्याम् तस्याः फलमुखविदारे हि विस्तीर्णस्थलहेतुकार्पासोत्पत्तिः। २बिम्बिकायाम् (तेलाकुचा) तस्याः फलेन हि मुखाग्रोऽष्ठसादृश्यदानात् तथात्वम्। स्वार्थे क ह्रस्वः। तुण्ड(ण्डि)केरिकाप्यत्र अमरः। संज्ञायां कन्। बिम्बिकायां राजनि०।

**तुण्डदेव** पु० तुण्डरूपो देवः तुण्डेन दीव्यति दिव-अच् वा। नृपभेदे तस्य विषयो देशः ऐषुका० भक्तल्। तुण्डदेवभक्त तदीये विषये देशे पु०।

**तुण्डि** पु० तुण्ड-इन्। १मुखे, २चञ्चौ च। ३बिम्बिकायां, ४वन्दायां, उणा०। ५नाभौ स्त्री शब्दरत्ना० वा ङीप्। स्वार्थे कन् उक्तार्थेषु। ६तुन्दौ माधवः तुण्डिभशब्दे दृश्यम्।

**तुण्डिका** स्त्री तुण्डम् तदवयवाधरसादृश्यमस्त्यस्याः ठन्। १बिम्बिकायां तत्फलस्यास्यावयवाधरसादृश्यात्तथात्वम्। स्वार्थे क। नाभौ शब्दरत्ना०।

**तुण्डि(ण्ड)केशी** स्त्री तुण्डे (ण्डौ) मुखे कायति कै-क तुण्डि(ण्ड)कः ओष्ठः तत्र ईष्टे तत्तुल्यशोभाधारणात् ईश-अच् गौरा०ङीष्। बिम्बिकायाम(तेलाकुचा)। शब्दच०।

**तुण्डिभ(ल)** त्रि० तुण्डि+भ सिध्मा० लच् वा। १तुन्दिले (भुं ड़)युक्ते। अमरः। "तुन्दि(ण्डि) यज्ञिवटेभिः" पा०सू०। मूर्द्धन्योपधोऽयमिति माधवः। स्वार्थे २मुखरे उणादि०।

**तुण्डेल** पु० गर्भोपद्रावके असुरभेदे। "उपेषन्तमुदुम्बलं तुण्डेलमुत शालुडम्" अथ० ८।६।१७।

**तुतात** पु॰ मीमांसकभेदे । तेन प्रोक्तं ठक् । तौतातिक तत्-प्रोक्तमीमांसादर्शने । तन्मतञ्च दिङ्मात्रम् अर्हच्छब्दे ३८२ पृ॰ दर्शितम् । "नैवाम्नायि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" सा॰ द॰ ।

**तुतुर्वणि** पु॰ तूर्णोर्वनिर्भजनमस्य वेदे पृषो॰ । १तूर्णभजने । "यज्ञायज्ञावः समानां तुतुर्वणिः" ऋ॰ ११२६।१ "तुतुर्वणिः त्वरमाणः संभजमानः" भा॰ । [ त्यज्-त ।

**तुत्थ** स्तुतौ चाद॰ चु॰ उभ॰ सक॰ सेट् । तुत्थयति ते अतुतु-

**तुत्थ** पु॰ तुद-थक । १अग्नौ उणा॰ । २अग्नौ संक्षिप्तसा॰ । (तुँते) ३अञ्जनभेदे न॰ । ४नील्याम्, ५सूक्ष्मैलायाञ्च स्त्री हेमच॰ । स्वार्थे क । तत्रार्थे । रसनाञ्जनस्य गुणादिकं भावप्र॰ उक्तं यथा

"तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्मात् वक्ष्यमाणगुणञ्च तत् । तुत्थकं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकृच्छ्रकण्डूघ्नं खर्परञ्चापि तद्गुणम्" भावप्र॰ अस्य शोधनम् "विष्ठायां मर्दयेत्तुत्थं मार्जारककपोतयोः । दशांशं टङ्कणं दत्त्वा पचेत् लघुपुटे ततः । पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये" भावप्र॰ "काशीसं रोचनां तुत्थं हरितालं मनःशिलाम्" सुश्रुतः । [ २मयूरकण्ठे च राजनि॰ ।

**तुत्थाञ्जन** न॰ कर्म॰ । १अञ्जनभेदे (तुँते) । तद्वर्णत्वात्

**तुथ** पु॰ तु-थक तुद-वधे थक् पृषो॰ वा । १हननकर्त्तरि "तुथोऽसि जनधायो नमोऽसि" ताण्ड्यब्रा॰ १।४।२ "तुद्यतेर्वधकर्म्मणः तुथः रक्षःप्रभृतीनां हन्ता" भा॰ । २ब्रह्मणि । "तुथोऽसि विश्ववेदाः" यजु॰ ५।३१ ।

"हे ब्राह्मण त्वमित्थं त्वं तुथो विश्ववेदाश्चासि । ब्रह्म वै तुथः" इति श्रुतेः । ब्रह्मरूपोऽसि । विश्वं वेत्ति विश्ववेदाः सर्वज्ञः । यद्वा तुथशब्देन देवान् प्रति दक्षिणानां विभागकर्त्ता पुरुष उच्यते तदाह तित्तिरिः "तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीति" । "ब्रह्मा वै तुथः" शत॰ ब्रा॰ ४।३।४।१६ । श्रुतेः । ३दक्षिणाविभाजके ब्रह्मरूपे ऋत्विग्भेदे ।

"तुथो वै विश्ववेदा विभजतीति ब्रह्मा वै तुथस्तदेना ब्रह्मणा विभजति । ब्रह्मा वै दक्षिणीयं चादक्षिणीयं च वेद तुथो ह्यस्यैता दक्षिणीयायैव दत्त्वा भजति नादक्षिणीयाय" । "रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु" । यजु॰ ७।४५ "किं च तुथो ब्रह्मरूपः प्रजापतिर्वो युष्मान् विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु "ब्रह्म वै तुथ इति श्रुतेः" वेददी॰ ।

**तुद** व्यथने तुदा॰ उभ॰ सक॰ अनिट् । तुदति ते अतौत्सीत् । अतुत्त तुतोद तुतुदे "तुतुदे गदयाश्वचारीन्" । "अतौत्सीत् गदयाक्रन्दम्" भट्टिः । "इषुभिरिव मानसं कामिनां तुदति कुसुमचापः" ऋतु॰ । "यथा तुदति मर्म्माणि" भा॰ उ॰ २५३० ।

**तुदादि** पु॰ शप्रत्ययनिमित्ते धातुसमुदाये स च गणः कविकल्पद्रुमे धातुक्रमेण पठितः । "तुदादिभ्यः शः" पा॰ ।

आ+सम्यग्व्यथने । "प्रतोदेनातुदन् भृशम्" मनुः । "धनुःकोट्यातुद्य कर्णेन वीरम्" भा॰ द्रो॰ १ अ॰ ।

निस्+निष्पीडने । "सूचिभिरिव निस्तुद्यते दश्यत इव पिपीलिकाभिः" । [द्य तदपत्ये पुंस्त्री॰ ।

**तुद** त्रि॰ तुद-क । व्यथके । तस्यापत्यं शुभ्रा॰ ढक् । तौ-

**तुन्द** न॰ तुदि अर्दने अच् तुदा॰ मि॰ । उदरे अमरः ।

**तुन्दकूपी** स्त्री तुन्दस्य कूपः कूपी तुन्दस्य कूपीव । १नाभौ त्रिका॰ । स्वार्थे क । २तुन्दकूपिकाप्यत्र हेमच॰ ।

**तुन्दपरिमृज** पु॰ तुन्दं परिमार्ष्टि परि+मृज-क हृत॰ । १अलसे २मन्दे । अच । तुन्दपरिमार्जोऽप्यत्र रमानाथः ।

**तुन्दमृज** त्रि॰ तुन्दमुदरं मार्ष्टि मृज-क । १अलसे २मन्दे च हेमच॰ ।

**तुन्दादि** पु॰ "तुन्दादिभ्य इलच्" पा॰ मत्वर्थे इलचप्रत्ययनिमित्ते शब्दगणे स च गणः । पा॰ग॰सू॰ उक्तो यथा "तुन्द उदर पिचण्ड यवब्रीहि (स्वाङ्गाद्विवृद्धौ) विवृद्धौ कर्णौ यस्य सः कर्णिलः" । स्वार्थे इनिठनौ मतुप् च । "तुन्दिलः तुन्दी तुन्दिकः तुन्दवान्" सि॰ कौ॰ ।

**तुन्दिक(ल)(भ)** त्रि॰ तुन्दं विद्यतेऽस्य ठन् । तुन्दि+भ तुन्द+इलच् वा । तुन्दियुक्ते (भुँडि) युक्ते ।

**तुन्दिकर** पु॰ तुन्दं करोति कृ-अच् । (भुँड़ि) युक्ते तुन्दिले त्रिका॰ । [स्त्रियां ङीप् ।

**तुन्दिन्** त्रि॰ तुन्दोऽस्त्यस्य इनि । तुन्दयुक्ते (भुँडि)युक्ते

**तुन्दिलफला** स्त्री तुन्दिलं बृहत्फलमस्याः । त्रपुष्याम् (शशा) राजनि॰ ।

**तुन्न** पु॰ तुद-क्त । १नन्दिवृक्षे (तुँद) अमरः । २व्यथिते ३छिन्ने च त्रि॰ । स्वार्थे क । अत्रैवार्थे ।

**तुन्नवाय** पु॰ तुन्नं छिन्नं वयति वे-अण् । १सौचिके २सूच्याजीविनि (दरजी) अमरः । "शैलूषतुन्नवायाश्च कृतघ्नस्यान्नमेव च" मनुना तदन्नभक्षणं निषिद्धम् ।

**तुन्नसेवनी** स्त्री तुन्नं छिन्नं सीव्यतेऽनया सिव–करणे ल्युट् ङीप्। सूचीभेदे "प्रवेश्य तुन्नसेवन्या सूक्ष्मौ सीव्येत् ततः परम्" सुश्रुतः। [तुतुम्पतुः तुतुम्पिथ।

**तुन्प** बधे भ्वा० सक०पर० सेट्। तुम्पति अतुम्पीत्। तुतुम्प

**तुन्प** बधे सक० क्लेशे अक० तु० पर० सेट्। तुपति-तुम्पति अतु(पी)म्पीत्। तुतु(प)म्प तुतु(प)म्पतुः तुतुपिथ तुतुम्पिथ

**तुन्फ** बधे भ्वा० पर० सक० सेट्। तुम्फति अतुम्फीत्। तुतुम्फ तुतुफ(म्फ)तुः। तुतुम्फिथ।

**तुन्फ** बधे सक० क्लेशे अक० तुदा० पर० सेट्। तुफति तुम्फति अतु(तु)म्फीत्। तुतु(तु)म्फ तुतुफ(म्फ)तुः तुतुफिथ तुतुम्फिथ।

**तुप** बधे भ्वा० पर० सक०सेट्। तोपति अतोपीत्। तुतोप।

**तुप** बधे सक० क्लेशे अक०तुदा० कुटादि०पर० सेट्। तुपति अतोपीत्। तुतोप। प्रस्तुप० सत्। प्रस्तुम्पति।

**तुफ** अर्द्दने चुरा० उभ० सक० सेट् इदित्। तुम्फयति ते अतुतुम्फत्-त। तुम्फ्यते। [अतोफीत्। तुतोफ।

**तुफ** बधे सक० क्लेशे अक० तु० कुटा० पर० सेट्। तुफति

**तुफ** बधे भ्वा० पर०सक०सेट्। तोफति अतोफीत्। तुतोफ।

**तुब** अर्द्दने वा चुरा० उभ० सक० पक्षे भ्वा० पर० सेट् इदित्। तुम्बयति-ते तुम्बति अतुतुम्बत्-त अतुम्बीत्। [इदित्। अतुभत् अतोभिष्ट। तुतुभे।

**तुभ** हिंसे भ्वा० आत्म० लृदित् उभ० सक० सेट्। तोभते।

**तुभ** हिंसायां दिवा० क्र्या० च पर० सक० सेट्। तुभ्यति तुभ्नाति अतोभीत्। तुतोभ "शङ्कुर्नो कर्णिनातुभ्याद्-दुष्टोऽस्तु महोदरम्" "अवान् विभीषणोऽतुभ्नात्" भट्टिः।

**तुम** प्रेरणे आह्वनने च तुम्बशब्दे माधवः। सक० भ्वा० पर० सेट्। तोमति अतोमीत् तुतोम तुम्बः। तोमरः।

**तुमुर** न० तुमुल+लस्य रः। तुमुले अमरटीका।

**तुमुल** पुंन० नौ० तु–मुलम्। १परस्परसंघातेन सङ्कुले युद्धे २कलिद्रुमे मेदि० ३व्याकुलयुद्धे न० त्रिका०। "अभूच्च युद्धं तुमुलं जयैषिणोः" रघुः ४सङ्कुलमात्रे त्रि०। "उभयोरपि पार्श्ववर्त्तिनां तुमुलेनार्त्तरवेण वेजिताः" रघुः

**तुम्ब** पु० स्त्री०तुम्बति रुचिं तुबि–अर्द्दने अच्। १अलाबुवाम् भरतः। २कुतुम्बलायाम्, राजनि०। ३आमलक्यां, ४गवि च स्त्री। स्वार्थे क तत्रार्थे शब्दरत्ना०। स्त्रीगव्यां वन्ध्यायां स्त्री त्रिका०। टाप्।

**तुम्बर** न०तुम्बं तटाकारं राति–रा आदाने क। (तानपूरा) १वाद्यभेदे तुम्बरचक्रम्। २तुम्बुरुगन्धर्वे च।

**तुम्बरचक्र** न० नरपतिजयचर्य्योक्ते चक्रभेदे चक्रशब्दे २८०४ पृ० दृश्यम्।

**तुम्बरु** पु० गन्धर्वभेदे। "सुप्रिया चातिबाहुश्च विख्यातौ च हाहाहूहूः। तुम्बरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः" भा० आ० ६५ अ०।

**तुम्ब(व)वन** न० देशभेदे स च देशः वृ० सं० दक्षिणस्यामुक्तः "अथ दक्षिणेन लङ्कोज्ज्वपकमे तुम्ब(व)वनकार्मणेयक याम्योदधितापसाश्रमा ऋषिकाः" १४ अ०।

**तुम्बि(म्बी)** स्त्री तुबि–इन्। १अलाब्वां (लाउ) शब्दरत्ना० वा ङीप् तत्रार्थे अमरः। "तुम्बी गोमांसतुल्या स्यात्" ति० त० नवम्यां तद्भक्षणनिषेधः। स्वार्थे क। तुम्बिका तत्रार्थे कटुतुम्ब्याञ्च राजनि०।

**तुम्बिनी** तुबि–णिनि ङीप्। कटुतुम्ब्यां राजनि०।

**तुम्बिपुष्प** न० तुम्ब्या इव पुष्पमस्याः। कताम्बुजे हारा० ६त०। अलाबूपुष्पे च।

**तुम्बुक** न० तुबि उक। अलाबूफले हड्डचन्द्रः।

**तुम्बुर** पु० विन्ध्यपर्वतस्थे जातिभेदे। "ये चान्ये विन्ध्यनिलयास्तु(षा)खारास्तुम्बुरास्तथा" हरिवं०५अ०। [मेदि०।

**तुम्बुरी** स्त्री तुबि+वा०उर गौरा०ङीप्। १धन्यां २धन्याके च

**तुम्बुरु** पु० १गन्धर्वभेदे जटा०। २अर्हदुपासकभेदे हेम०। "गन्धर्वैः सहितः श्रीमान् प्रागायत च तुम्बुरुः" भा० आ० १२३अ०। ३वृक्षभेदे। "तुम्बुरुः सौरभः सौरीवनजः सानुजोऽन्धकः। तुम्बरु प्रथितं तिक्तं कटु पाकेऽपि तत् कटु। रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च। वातश्लेष्मक्रिमिकुष्ठशिरोरुक्शूलताङ्कमीन्। कुष्ठशूला रुचिश्वासप्लीहकृच्छ्राणि नाशयेत्" भावप्र०।

**तुम्र** त्रि०तुम–प्रेरणे आह्वनने च रक्। १प्रेरके २हिंसके च "सत्राहणं दाधृषिं तुम्रमिन्द्रम्" ऋ० ४।१७।८। "तुम्रं प्रेरकम्" भा० "आगत्या तुम्रो वृषभो मरुत्वान्" ऋ० २।५०।१। तुम्रः आह्वाता तुमिराह्वननार्थः" भा०।

**तुर** त्वरणे जुहो० पर० अक० सेट्। तुतोर्त्ति अतोरीत्। तुतोर। वैदिकोऽयम् धातुः "अपामिवेदूर्मयस्तर्तुराणाः" ऋ०८।८६।३। तात्स्थ्ये चानश्। अभ्यासस्यातोऽत्वं च "सहिष्ठं तुरतस्तुरस्य" ऋ०६।१८।४। "अर्को वा यत्तुरते" तै० स०२।२।१२।४। वेदे गणव्यत्ययः पदव्यत्ययश्च। अस्मात् तुरादित्वमपि। तुरयति। "तुरयन्न जिग्यः" ऋ०४।२८।७

**तुर** त्रि० तुर–क। वेगवति। "प्र तव्यसो नम उक्तिं तुरस्याहम्" ऋ० ५।४३।८ "नहि त्वा शूरो न तुरो न 

णु र्न" ऋ०६।२१।५ । गत्यर्थे भावे क वा ।२वेगे तुरगः ।

**तुरग** पुंस्त्री० तुरेण वेगेन गच्छति गम–ड । घोटके अमरः स्त्रियां जातित्वात् ङीष् । "तुरगगताकुलस्य परमेकतुरङ्गजन्मनः" । "उल्लङ्घ्य गन्तुं तुरगास्तदोषुः" माघः २चित्ते मेदिनिः। सुखबोधे तुरां वेगं गच्छतीति वाक्यम् ।

**तुरगगन्धा** स्त्री तुरगस्येव गन्धोऽस्याः। अश्वगन्धायां राजनि० ६त० । अश्वस्य गन्धे पु० । तुरङ्गगन्धादयोऽप्यत्र रत्नमा० ।

**तुरगदानव** ६० तुरगाकारो दानवः शा०त० । केशिदानवे । "वलाकी स च हि दुष्टात्मा केशी तुरगदानवः" "क्षतं तुरगदैत्येन सर्वान् गोपान् जिघांसता" हरिवं० ८१अ० ।

**तुरगब्रह्मचर्य्य** न० तुरगस्येव ब्रह्मचर्यम् । स्त्रिया अलाभे तत्त्यागरूपे व्रतभेदे त्रिका०।[संगीतदा० उक्ते तालभेदे ।

**तुरगलीलक** पु० "द्रुतं द्वन्द्वं विरामान्तं लघुस्तुरगलीलके"

**तुरगातु** त्रि० तुरेण गातुः गम–बेदे पा० डातु । १त्वरया गमनकारके ।२त्वरागमने च "अनच्छये तुरगातु जीवमेजद्ध्रुवम्" ऋ० १।१६४।३० । "तुरगातु सव्यापाराय गमनम्" भा० ।

**तुरगानन** पु०तुरगस्याननमिवाननमस्य । १किन्नरभेदे तुरङ्गवदने । देशभेदे स च देशः वृ० सं० १४ अ० उत्तरस्यामुक्तः । "उत्तरतः कैलासः" इत्युपक्रमे "त्रिगर्त्ततुरगाननाश्वमुखाः" ।

**तुरंगिन्** त्रि० तुरगो वाहनत्वेनास्त्यस्य इनि । अश्वारोहिणि सैन्ये भव०। तुरङ्गिन् प्रभृतयोऽप्यत्र "तुरङ्गिभिर्यत्ननिरुद्धवेगाः" माघः ।

**तुरगी** स्त्री तुरगस्येव गन्धोऽस्त्यस्या अच् गौरा०ङीष् । १अश्वगन्धायाम् मेदि० । तुरग+जातौ ङीष् ।२तुरगजातिस्त्रियाञ्च ।

**तुरङ्ग** पुंस्त्री० तुरेण गच्छति गम–ख मुम् वा डिच्च ।१घोटके स्त्रियां जातित्वात् ङीष् । २चित्ते न० शब्दरत्ना० । "नियोज्य तं होमतुरङ्गरक्षणे" रघुः। तुरगशब्दे उदा० ।

**तुरङ्गक** पु० तुरङ्ग इव कायति कै–क । १हस्तिघोषाख्ये रत्नमाला० । स्वार्थे क ।२घोटके । [महिषभ्यां राजनि० ।

**तुरङ्गद्विषणी** स्त्री तुरङ्गोद्विष्यतेऽनया बा० ल्युट्–ङीप् ।

**तुरङ्गप्रिय** पु० ६त० । यवे राजनि० ।

**तुरङ्गम** पुंस्त्री०तरं गच्छति गम–खच् मुम् । १घोटके अमरः स्त्रियां जातित्वात् ङीष् । "कश्चिद्धि मां प्रीतमते तुरङ्गमात्" रघुः ।"रसातलं संक्रमिते तुरङ्गमे" रघुः ।

**तुरङ्गवक्त्र** पु० तुरङ्गस्येव वक्त्रमस्य । अश्वाकारमुखे किन्नरे जटाधरः तुरङ्गवदनादयोऽप्यत्र अमरहेमचन्द्रौ ।

**तुरङ्गारि** पु० ६त० शिवनेऽश्वनाशके १करवीरे हले० जाता तद्वृद्धे महिषे २महिषे च रत्नमा०। [खतायाम् राजनि०।

**तुरङ्गिका** स्त्री तुरङ्गः तदाकारोऽस्त्यस्याः ठन् । देवदालीलतायाम् ।

**तुरङ्गी** स्त्री तुरङ्गस्येव गन्धोऽस्त्यस्याः अच् गौरा०ङीष् ।१अश्वगन्धायां रत्नमा० तुरङ्ग+जातौ ङीष् ।२घोटकजातिस्त्रियाञ्च । [ षी(ग्बो)त् ।

**तुरण** त्वरायां कण्ड्वा० पर० अक० सेट् । तुरण्यति अतुरण्यीत् ।

**तुरण** न० जु० तुर–बा० भावे क्यु । क्षिप्रगमने "तुरेतस्तुरणे तुरण्युः" ऋ०१।१२१.५ । "तुरणे क्षिप्रगमने" भा० ।

**तुरण्य** पु०तरण्य–कण्ड्वा०भावे घञ् ।०त्वरायाम् ।"उपस्तुरण्यसत्" ऋ० ४।४०।२। "तुरण्यसद्वत्वरया सीदतीति" भा०

**तुरण्यु** त्रि०कण्ड्वा०तुरण्य–उन् । त्वरायुक्ते ।"तम्यं शुक्रासं स्तुरयस्तुरण्यवः"ऋ०१।१२४.५।"तुरण्यवः त्वरायुक्ताः"भा०

**तुरम्** अव्य० अद० जु० तुर–बा० अमु । त्वरायाम् । "तुरं यतीषु तुरयन् त्रिषाः" ऋ० ४।२८।७ ।

**तुरस्** न० अद० जुहो० तुर–असुन् । त्वरायाम् । "आयवस्तुरस्येये" १०।८६।८ ।

**तुरायण** न० तुर–क तस्यायनं "पूर्वपदात् संज्ञायाम्" पा० णत्वम् । १यज्ञभेदे सि०कौ० ।२अवक्रे अमरः त्वरितस्य हि गमनमसङ्कुचङ्गवतीति तस्य तथात्वम् । ३यज्ञभेदे "तुरायणं वैशाखशुक्लपञ्चम्याम्" "चैत्रस्य वा" कात्या० २४।८।१।२ । "तुरायणं सवनाम" कर्कः तद्विधानं तत्रैव उत्तरतो द्रष्टव्यम् । अत उर्द्धमिष्ट्ययनानि" आ० श्री० २।१३।१। उपक्रमे । "सांवत्सरिकाणि" २ष०। "इष्ट्ययनानि संवत्सरेण संवत्सरैर्वा व्याख्यानि" नारा०। तुरायणम् ४सू० तद्विहितं इष्टिभिरयनं "तुरायणं हि व्रतमध्यच्छसत्रक्रमनोऽकरणं निंयतोऽवदान्"भा० वातु०१०२ अ० । तुरायणं यज्ञभेदमावर्त्तयति ठञ् । तौरायणिक तद्यज्ञकारके ।

**तुरासाह्** पु० तुरं त्वरितं साहयति अभिभवति चु० साहेः किप् पूर्वपददीर्घः । १इन्द्रे अमरः अस्य कृदादौ अपि षत्वं ढत्वे षत्वम् । तुराषाट्–अकादौ तु न षत्वं तुरासाहमित्यादि "तुराषाहं पुरोधाय धाम स्वायम्भुवं ययुः" कुमा०। "कालेनारिवधात् भीतः तुराषाडिव शार्ङ्गिणम्"रघुः"तुराषाट् विश्वमूर्त्ते हरायज !"हरिवं० २५८ अ० । इन्द्रसुतौ ।

**तुरि(री)** स्त्री तुर–इन् "इगुपधात् कित्" उणा० कित् वा ङीप् । तन्तुवायस्य काष्ठादिनिर्म्मिते वयनसाधने (माकु) द्रव्ये "तन्तुवटपातुरीतुरीति" नैष० तुरीतन्तुसंयोगः जग-दीशः रस्वरायुक्तमाले । "स्त्या स्वपतीव तुर्य्ये" ऋ० १०।१०६। "तुर्य्ये स्वरमाचारौ संभवस्य जनताये" भा० ।

**तुरीप** त्रि० तूर्णमाप्नोति व्याप्नोति तूर्ण+आप–क पृषो० । तूर्णं व्यापके । "तुष्टा तुष्टा तुरीपोऽद्भुत इन्द्राग्नी पुष्टिवर्द्धनी" यजु० २१।२० । तुरीपः तूर्णमाप्नोति तुरीपः" वेददी० । "तवस्तुरीपमद्भुतम्" ३।१४२।१ "तुरीपं तूर्णं व्यापि" भा० मुद्रितपुस्तके तुरीयमिति पाठः मुद्रादोषात् भाष्य-व्याख्यादर्शनात् तुरीपपाठस्यैवोचितत्वात् ।[चतुरीयोव् ।

**तुरीय** गतौ भ्वा०पर०सेट् गतिकर्म्मसु निघण्टुः । तुरीयति

**तुरीय** त्रि० तुरीय–अच् चतुर्णां पूरणः चतुर्+छ आद्य-लोपश्च । १गतियुक्ते २चतुर्णां पूरणे च । ३तारके । "ततस्तुरीयमथ पोषयिष्णुः" ऋ०२।४।८। "तुरीयं तार-कम्" भा० । "गुहा त्रीणि निहितानेङ्गयन्ति" "तुरीयं वाचो मनुष्या वदन्ति" ऋ०१।१६४।४५ । अस्यार्थः भाष्ये बहुधा मतभेदेन दर्शितः किन्तु वैखरीरूपा वाक् चतु-र्थीति निष्कृष्टार्थः तथा हि

"परा पश्यन्ती मध्यमा वैखरीति चत्वारि । एकैव नादा-त्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते । नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्ती-त्युच्यते योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते मध्ये हृदयाख्ये उदीयमानत्वात् मध्यमायाः । अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्या-पारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते एवं चत्वारि वाचः पदानि परिमितानि । मनीषिणो मनसः स्वा-मिनः स्वाधीनमनस्का ब्राह्मणा वाचोऽस्य शब्दब्रह्मणो-ऽधिगन्तारो योगिनः पदानि चत्वारि पदानि विदुः । जानन्ति । तेषु मध्ये त्रीणि परादीनि गुहानिहितानि हृदयान्तर्वर्त्तित्वात् । तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति । ४सर्वाधारभूतेऽनुपहितचैतन्ये परब्रह्मणि "वनतज्जलतदवच्छिन्नाकाशयोर्जलाशयजलतद्गत-प्रतिबिम्बाकाशयोश्चाधारानुपहिताकाशवदनयोरज्ञान-तदुपहितचैतन्ययोराधारभूतं यदनुपहितचैतन्यं तत् तुरीयमित्युच्यते" वेदान्तसा० । आधारश्चासौ अनुपहितश्चासौ आकाशश्च स तथा तद्वदिति यावत् । यद्यप्याकाशस्य वनाश्रयत्वं जलाश्रयत्वं वा नास्ति तदनारम्भकत्वात्

तथाप्याकाशमन्तरेण तयोः स्थित्यनुपपत्तेस्तदाधारत्ववचन-मिति द्रष्टव्यम् । अस्य चैतन्यस्य तुरीयत्वं विश्वतैजस-प्राज्ञापेक्षया द्रष्टव्यम् । "शिवमद्वैतं तुरीयं मन्यन्ते" वेदान्तसारधृता श्रुतिः

"तुरीयो यज्ञो यत्र हव्यमिति"। यजु०१७। ५७ तुरीयः चतुर्थः "आदौ यजुर्जपः ततो होता ऋचां पठनम् ब्रह्मणोऽप्रतिरथजपः एवं च तुरीयो होमः तथा च श्रुतिः "अध्वर्युः पुरस्ताद्यजूंषि जपति होता पश्चा-दृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष एव तुरीयो यज्ञ" इति वेददी० । "तुरीयः ब्रह्महत्यायाः क्षत्रियस्य बधे स्मृतः" मनुः स्वार्थे क । तत्रार्थे । "भगिन्यश्च निजादंशात् दत्त्वांशन्तु तुरीयकम्" याज्ञ० ।

**तुरीयवर्ण** पु० कर्म्म० । शूद्रे हला० ।

**तुरुष्क** पु० तुर–उसिक् स्वार्थे क इत्युणादिरिति मत्वम् । १गन्धद्रव्यभेदे (शिलारस) अमरः । २म्लेच्छजातिभेदे मेदि० ३पारस्यभाषाभेदे च हेमच० ४श्रीवासद्रव्ये विश्वः ।

**तुर्फरी** त्रि० तृफ–हिंसायाम् वा० अरि । हन्तरि । "सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका" ऋ० १०।१०६।६ "तृफ तृम्फ हिंसायाम् । अस्मात् हन्तस्य तुर्फरीतारावित्यस्य पृषोदरादित्वाद्वर्णविकारः । यद्वास्मा-द्धुभाङ्कृञादौणादिकोऽरीतुप्रत्ययः । उक्तं चास्य नि० १३।५। "द्विविधा सृणिर्भवति भर्त्ता च हन्ता च तथा श्विनौ चापि भर्त्तारौ जर्भरी भर्त्तारावित्यर्थस्तुर्फरीतू हन्तारावित्यादि । जर्भरिशब्दे ३०६२ पृ० दृश्यम् ।

**तुर्फरीतु** त्रि० तृफ–वा० अरीतु पृषो० । हन्तरि तुर्फरीशब्दे दृश्यम् ।

**तुर्य्य** त्रि० चतुर्+पूरणे यत् च भागस्य लोपः । चतुर्थे । "एक एवेश्वरस्तुर्य्यः भगवान् स्वाश्रयः परः" भाग०६।५।१२ । "तुर्य्यशब्दस्य वा एकदेशिसमासः तुर्य्यं भिक्षायाः तुर्य्य-भिक्षा पक्षे षष्ठीसमासः भिक्षातुर्य्यम् ।

**तुर्य्यगोल** पु० सि० । "दलीकृतं चक्रमुशन्ति चापं कोदण्ड-खण्डं खलु तुर्य्यगोलम्" सि०उक्ते कालज्ञानार्थे यन्त्रभेदे

**तुर्य्यवाह्** पु० तुर्य्यं चतुर्थं वर्षं वहति वह–ण्वि । चतु-र्वर्षे पशौ । "तुर्य्यवाट् वयोऽनुष्टुप्छन्दः" यजु०१४।१८ "तुर्य्यवाट् तुर्य्यं चतुर्थं वर्षं वहतीति पशुः चतुष्टुप् छन्दो भूत्वोत्क्रान्तं तुर्य्यवाहं पशुं प्रजापतिर्वयसाऽ-पश्यत् । तुर्य्यवाहं वयसाप्नोदनुष्टुप्भूत्वा तुर्य्यवाह उत्क्रान्तमिति" शत० ब्रा० ८।२।४।१५ श्रुतेः" वेददी० ।

दर्शनं नर्मदायास्तु गङ्गास्नानं तथैव च । तुलसीवनसंसर्गं सममेतत्त्रयं स्मृतम् । रोपणात् पालनात् सेकाद्दर्शनात् स्पर्शनान्नृणाम् । तुलसी दहते पापं वाङ्मनःकायसञ्चितम् । तुलसीमञ्जरीभिर्यः कुर्य्याद्धरिहरार्च्चनम् । न स गर्भगृहं याति मुक्तिभागी भवेन्नरः । पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । वासुदेवादयो देवा वसन्ति तुलसीदले । तुलसीमञ्जरीयुक्तो यस्तु प्राणान् विमुञ्चति । यमोऽपि वीक्षितुं शक्तो युक्तं पापशतैरपि" पाद्मोत्तरख० । "यत्रैकस्तुलसीवृक्षस्तिष्ठति द्विजसत्तम ! । तत्रैव त्रिदशाः सर्वे ब्रह्मविष्णुशिवादयः । केशवः पत्रमध्येषु पत्राग्रेषु प्रजापतिः । पत्रवृन्ते शिवस्तिष्ठेत् तुलस्याः सर्वदैव हि । लक्ष्मीः सरस्वती चैव गायत्री चण्डिका तथा । शची चान्या देवपत्न्यस्तत्पुष्पेषु वसन्ति वै । इन्द्रोऽग्निः शमनश्चैव नैरृतो वरुणस्तथा । पवनश्च कुबेरश्च तच्छाखायां वसन्त्यमी । आदित्यादिग्रहाः सर्वे विश्वे देवाश्च सर्वदा । वसवो मनवश्चैव तथा देवर्षयोऽखिलाः । विद्याधराश्च गन्धर्वाः सिद्धाश्चाप्सरसस्तथा । तुलसीपत्रमाश्रित्य सर्वदा निवसन्ति वै । छिन्दन्ति लवमात्राणि तुलसीमूलजानि वै । तद्दृष्ट्वा ब्रह्महत्याश्चिनोति [illegible] । ग्रीष्मकाले द्विजश्रेष्ठ ! सुगन्धैः शीतलैर्जलैः । तुलसीसेचनं कृत्वा नरो निर्वाणमाप्नुयात् । चन्द्रातपं वा छत्रं वा तुलस्यै यस्तु यच्छति । विशेषतः निदाघेषु स मुक्तः सर्वपातकैः । वैशाखेऽप्यतधाराभिरद्भिर्यस्तुलसीं जनः । सेचयेत् सोऽश्वमेधस्य फलं प्राप्नोति निश्चयः । कदाचित्तुलसीं दुग्धैः सेचयेद्यो नरोत्तमः । तस्य वेश्मनि विप्रर्षे ! लक्ष्मीर्भवति निश्चला । गोमयैस्तुलसीमूले यः कुर्य्यादनुलेपनम् । सम्मार्ज्जनञ्च कुरुते तस्य पुण्यफलं महत् । रजांसि तस्य यावन्ति दूरीभूतानि जैमिने ! । तावत्कल्पसहस्राणि मोदते ब्रह्मणा सह । यद्धर्मकर्म्म कुरुते मनुजः पृथिव्यां नारायणप्रियतमां तुलसीं विना च । तत्सर्वमेव विफलं भवति द्विजेन्द्र ! प्रत्तेऽपि न हि तुष्यति देवदेवः । यस्य स्यात्तुलसीपत्रं मुखे शिरसि कर्णयोः । मृत्युकाले द्विजश्रेष्ठ ! तस्य स्वामी न भास्करिः" पाद्मे क्रियायोगसारः । "स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः तुलसीपत्रतोये च योऽभिषेकं समाचरेत् । गवामयुतदानेन यत्फलं लभते नरः । तुलसीपत्रदानेन तत्फलं कार्त्तिके सति ! । तुलसीतोयकणिकां मृत्युकाले च यो लभेत् । रत्नयानं समारुह्य वैकुण्ठं स प्रयाति च । त्रिकालं तुलसीपत्रं शुष्कं पर्युषितं सति ! । श्राद्धे व्रते वा दाने वा प्रतिष्ठायां सुरार्च्चने । भूगतं तोयपतितं यद्दत्तं विष्णवे सति ! । शुद्धन्तु तुलसीपत्रं क्षालनादन्यकर्म्मणि" पार्वतीं प्रति शिववाक्यम् । तुलसीचयननिषेधकालो यथा । "पूर्णिमायाममायाञ्च द्वादश्यां रविसंक्रमे । तैलाभ्यङ्गे चास्नाते न मध्याह्ने निशि सन्ध्ययोः । आशौचेऽशुचिकाले च रात्रिवासान्वितेऽपि वा । तुलसीं ये च चिन्वन्ति ते छिन्दन्ति हरेः शिरः" । हरिभ० । तुलसीस्पर्शनेन मिथ्याप्रतिज्ञायां मिथ्याशपथे च दोषो यथा । "तुलसीं स्वकरे कृत्वा स्वीकारं यो न रक्षति । स याति कालसूत्रञ्च यावच्चन्द्रदिवाकरौ । करोति मिथ्याशपथं तुलस्या यो हि मानवः । स याति कुम्भीपाकञ्च यावदिन्द्राश्चतुर्दश" ब्रह्मवैवर्त्ते प्रकृतिखण्डम् । तुलसीपत्रचयने मन्त्रो यथा । "मातस्तुलसि ! गोविन्दहृदयानन्दकारिणि ! । नारायणस्य पूजार्थं चिनोमि त्वां नमोऽस्तु ते । कुसुमैः पारिजाताद्यैः सुगन्धैरपि केशवः । त्वया विना नैव तृप्तिं चिनोमि त्वामतः शुभे ! । त्वया विना महाभागे ! समस्तं कर्म निष्फलम् । अतस्तुलसि ! देवि ! त्वां चिनोमि वरदा भव । चयनोद्भवदुःखं यद्देवि ! ते हृदि वर्त्तते । तत् क्षमस्व जगन्मातस्तुलसि ! त्वां नमाम्यहम् । कृताञ्जलिरिमान् मन्त्रान् पठित्वा वैष्णवो जनः । करतालत्रयं दत्त्वा चिनुयात्तुलसीदलम् । शनैः शनैस्तथाकारैश्चीयते तुलसीदलम् । यथा न कम्पते शाखा तुलस्या द्विजसत्तम ! । पत्राणां चयने विप्र ! भग्नशाखा यथा भवेत् । तथा हृदि व्यथा विष्णोर्दीयते तुलसीपतेः" । पाद्मे क्रियायोगसारः ।

तुलसीकाष्ठमालामाहात्म्यं यथा । "तुलसीकाष्ठनिर्माणमालां गृह्णाति यो नरः । पदेपदेऽश्वमेधानां लभते निश्चितं फलम्" ब्रह्मवैवर्त्ते प्रकृ० । "सात्वतैस्तुलसीकाष्ठमाला कुम्भसमुद्भवा । धार्य्या नित्यं प्रयत्नेन स्वेतद्भक्तस्य लक्षणम्" । हरिभक्तस्य तुलसीकुम्भकाष्ठसमुद्भवा । चिह्नार्थमात्मनो माला पुरा कृष्णेन दर्शिता" पाद्मोत्तरखण्डम् "काष्ठमालाधरं विप्रं यतिनं यानरोहिणम् । शूद्रास्यां विधवां दृष्ट्वा सचेलं जलमाविशेत्" इति वचनस्य साकरत्वे तुलसीकाष्ठेतरकाष्ठविषयत्वमिति वैष्णवाः । शाक्तास्तु विप्रेतरपरत्वं पाद्मोत्तरखण्डवाक्यस्य वर्णयन्ति । तन्न च "तुलसीपत्रजातेन

मालेन मम भूषितः। विप्र ! त्वं न च तत्काष्ठमालां गलगतां कुरु” इति वाक्यमालोच्य तथा व्यवस्थापयन्ति। अन्ये तु विष्णुदीक्षाविहीनविप्रस्य तत्काष्ठमालाधारण-निषेधः। विधिस्तु वैष्णवस्येति वर्णयन्ति। गणेशपूजने तुलसीनिषेधो यथा तुलसीं प्रति गणेशवाक्यम्“पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे !। कलांशेन महा-भागे ! स्वयं नारायणप्रिया। प्रिया त्वं सर्वदेवानां कृष्णस्य च विशेषतः। पूजा विघ्नहृदा नृणां मम त्याज्या च सर्वदा” ब्रह्मवैवर्त्ते गणेशखण्डम्। “अक्षतैर्नार्चयेद्विष्णुं न तुलस्या विनायकम्। न दूर्वया यजेद्दुर्गां मुसुरेण न भास्करम्” राघवभट्टधृतम्।

तुलसीग्रहणविधिः वायुपुराणे। “अस्नात्वा तुलसीं छित्त्वा यः पूजां कुरुते नरः। सोऽपराधी भवेत् सत्यं तत् सर्वं निष्फलं भवेत्”। तच्चयने मन्त्रान्तरं स्कान्दे “तुलस्यमृतजन्मासि सदा त्वं केशवप्रिया। केशवार्थं चिनोमि त्वां वरदा भव शोभने”। “त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिम्। तथा कुरु पवित्राङ्गि ! कलौ मलविनाशिनि”। नारदे च। “मोक्षैकहेतो ! धरणीप्रशस्ते ! विष्णोः समस्तस्य गुरोः प्रियेति। आराधनार्थं वरमञ्जरीकं लुनामि पत्रं तुलसि ! क्षमस्व। इत्युक्त्वा तुलसीं नत्वा चित्त्वा दक्षिणपाणिना। पत्राण्येकैकशोऽन्यस्मैव सद्भावे मञ्जरीरपि। तच्छाखात्यागश्च स्कान्दे। “मन्त्रेणानेन यः कुर्य्यात् गृहीत्वा तुलसीदलम्। पूजनं वासुदेवस्य लक्ष-कोटिफलं लभेत्”। किञ्च “शालग्रामशिलार्थं प्रत्यहं तुलसीक्षितौ। तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः”। इति। संक्रान्त्यादौ निषिद्धेऽपि तुलस्यवचयः स्मृतौ। परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते” हरिभ० तुलस्यवचयनिषेधकालः। विष्णुधर्म्मोत्तरे “नोच्छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः क्वचित्”। गारुडे “भानुवारं विना दूर्वां तुलसीं द्वादशीं विना। जीवितस्याविनाशाय न विचिन्वीत धर्म्मवित्”। पाद्मे च श्रीकृष्णसत्यभामासंवादीयकार्त्तिकमाहात्म्ये “द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके। लुनाति स नरो गच्छेन्निरयानतिगर्हितान्”। अतएवोक्तम्। “देवार्थे तुलसीच्छेदो होमार्थे समिधान्तथा। इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च”। “एवं कृत्वा महा-पूजामङ्गोपाङ्गादिकं प्रभोः। क्रमाद् यथा सम्प्रदायं तत्तत् स्थानेषु पूजयेत्”। हरिभक्तिविलासे ७विलासे। तुलसीविवाहप्रतिष्ठाविधिः “श्रीवशिष्ठ उवाच। विवाहं सम्प्रवक्ष्यामि तुलस्यास्तु यथाविधि। यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा”। “आरामे वा वने वापि तुलसीं सन्दधेऽपि वा। वर्षत्रयेण पूर्णेन ततो यजनमारभेत्। सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा। अथ वा कार्त्तिके मासि भीष्मपञ्चदिनेषु च। वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः। मण्डपं कारयेत्तत्र कुण्डवेदी तथा पुनः। शान्तिकञ्च प्रकर्त्तव्यं मातृणां स्थापनं तथा। मातृश्राद्धादिकं सर्वं विवाहवत् समाचरेत्। ब्राह्मणांश्च शुचिः स्नातान् वेदवेदाङ्ग-पारगान्। ब्रह्मा चाचार्य्यकश्चैव चत्वारश्च तथर्त्विजः। वैष्णवेन विधानेन सर्वमीदृशं यजेत्। मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम्। षड्वर्षं पुरः कृत्वा मातृणां यजनं तथा। कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम्। कृत्वारोप्य च तुलसीं लग्ने त्वस्तमिते रवौ। वासःशतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत्। तदा कन्येति मन्त्रेण कङ्कणं पाणिपल्लवे। कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते। ततः कुण्डे समागत्य आचार्य्यः सह तैर्द्विजैः। आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः। विवाहकर्म्मवत् सर्वं वैष्णवं देशिकोत्तमैः। कर्त्तव्यश्च ततो होमोविशेषादिविधिपूर्वकम्”। “यजमानः सपत्नीको गृह्ये गोत्रबान्धवाः। प्रदक्षिणाश्च कर्त्तव्याश्चत्वारो विष्णुना सह। तुलस्याः पाणिपद्मे वेदिकायां निभावयेत्। शतरुद्रं जपेत् सूक्तं पावमानीं विशेषतः। तथैव शान्तिकाध्यायम्। नवसूक्तीं तथैव च। जीवसूक्तं पुनर्जप्त्वा तथा वैष्णवसंहिताम्। शङ्खभेरिनिर्घोषैर्गीतवाद्यैश्च निस्वनैः। गायन्ति मङ्गलान्यार्य्यो माङ्गल्यं विधिमाचरेत्। दद्यात् पुष्पाञ्जलिं पश्चादभिषेकविधिं ततः। ब्रह्मणे शयनं दद्यादाचार्य्यं परिधाप्य च। गां घटञ्च तथा शय्यामाचार्य्याय प्रदापयेत्। ऋत्विग्भ्यो दापयेद्द् यथाशक्त्येषां दद्याच्च दक्षिणाम्। एवं प्रतिष्ठिता देवी विष्णुना च समर्चिता आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति। रोपयेत्तुलसीं यस्तु सेचयेच्च प्रयत्नतः। प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः। स मोक्षं लभते जन्तुर्विष्णुलोकं तथा क्षयम्। प्राप्नोति विपुलान् भोगान् विष्णुना सह

मोदते" हरिभक्तिविलासे । "तुलसी प्राणमात्रेण यदा भवति सुन्दरी" तन्त्रसा० । [कण् । वर्व्वर्य्यां (बाबुइ) रत्नमा०

**तुलसीद्वेषा** स्त्री तुलस्यौ द्वेष्टि तद्गन्धत्वात् स्वद्वेते द्विष–

**तुला** स्त्री तुल–भिदा० अङ् । १सादृश्ये २माने च स्वर्णादीनां ३दारुवस्त्वनार्थपीठिकायां ४प्रवानुमाने ५भाण्डे च मेदि० । राशिचक्रस्य द्वादशधा विभक्तस्य ६सप्तमे राशौ स च ३६० अंशात्मकराशिचक्रस्य १८१ अंशावधि २१० पर्य्यन्तः चित्राशेषार्द्धस्वातिविशाखान्तिमपादत्रयात्मकः । तस्याधिष्ठाता तुलाधरः पुरुषः । तस्य योगतारादिकम् नक्षत्रशब्दे उत्तमवयश्शब्दे च विशेष उक्तः । "तौलीना कथितस्तुलाघटधरः" ज्ञातकपद्धतिः । "पूर्व्वापरविलग्नदेहयोगतः सन्धवत् क्षितिपरोऽस्य कन्नः । सत्यप्रजापसृतमभूद् उपस्तुता सुमीय्यौं द्विपदः समानः" ज्ञातकपद्धत्युक्तलक्षणः । ७दिव्यतिवादिनो लौकिकप्रमाणाभावे दिव्यपरीक्षया अर्थनिर्णये कर्त्तव्ये घटापरनामके ८परीक्षाभेदे । सा च परीक्षा दिव्यशब्दोक्तप्रकारविधिपूर्व्वकं सर्व्वं कृत्वा कर्त्तव्या । तद्विधिश्च वीरमित्रोदये दर्शितो यथा

पितामहः "विशाखाश्रवणे शुभौ घटशालान्तु कारयेत् । तत्रस्थो नोपहन्येत वाभिवाताश्रयादिभिः । सपाटवोलसंयुक्तां परिचारकरक्षिताम् । पानीयादि धर्म्मायुक्तानसूर्य्यां कारयेन्नृपः" इति । बीजानि यवव्रीह्यादीनि । घटायोनि काष्ठानि, नारद आह "खादिरं कारयेत्तत्र निर्व्रणं शुष्कवर्जितम् । शांशपन्तदभावे वा सालं वा कोटरैर्विना । "अर्जुनन्तिन्दुकौ वाल्मीकियो रक्तचन्दनम् । एवंविधानि काष्ठानि घटार्थं परिकल्पयेत्, । अर्जुनशिलवः शार्ङ्गिकशिखो रक्तचन्दनम्" इति । माधवीये पाठः । शांशपमिति शिंशपावृक्षसम्बन्धि । "देविकाशिंशपेति" पाणिनिसूत्रेणादिकारस्याकारः । एवंविधानीत्यन्यस्याप्योदुम्बरादेर्यज्ञियस्य काष्ठस्य ग्रहणम्" । अतएव पितामहः "छित्त्वा तु यज्ञियं काष्ठं यूपवन्मन्त्रपूर्व्वकम् । प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः । मन्त्रः सौम्यो वानस्पत्यः छेदने जप्य एव चेति" । यूपवन्मन्त्रपूर्व्वकमित्यनेन ओँ ओषधे त्रायस्वैनमित्यादिच्छेदनमन्त्रप्रयोगादिकमुक्तम् । वानस्पत्यः "वनस्पते शतवल्शोविरोहेति" मन्त्रः । छेदने कृते इति शेषः । वानस्पत्यच्छेदनानन्तरं प्रयोगे यूपवदित्यतिदेशा-त्प्राप्तेऽपि पुनर्विधानम् औपदेशिकस्य सोमदैवत्यस्यातिदेशिकस्य तस्य बाधनिवृत्त्यर्थम् । जप्य एव चेति चशब्दस्य वानस्पत्येत्यनेनान्वयात् तस्य च मन्त्रद्वयद्योतकत्वात्तत्समुच्चय इति केचित् सौम्यवानस्पत्ययोरेकार्थत्वात् । "तुल्यार्थास्तु विकल्पेरन्नित्यनेन" वाक्येन ब्रीहियवादिवत्" इत्यपरे । पितामहः "प्राक्शिरो निश्चलः कार्य्यः शुचौ देशे घटः सदा । इन्द्रस्थाने सभायां वा धर्म्मस्थाने चतुष्पथे" इति । घटनिर्माणप्रकारन्तत्प्रमाणञ्चाह पितामहः, "चतुर्हस्ता तुला कार्य्या पादौ कार्य्यौ तथाविधौ । अन्तरन्तु तयोर्हस्तौ भवेदध्यर्द्धमेव चेति" । पादौ तुलाधारकाष्ठनामकाष्ठाधारकाष्ठौ स्तम्भौ तथाविधौ चतुर्हस्तौ । अन्तरं मध्यम् । अध्यर्द्धं सार्द्धहस्तद्वयम् । अवकाशस्य प्रमाणस्यादकाष्ठमध्यप्रमाणाभिधानेनैव सूचितमिति न पृथगुपन्यस्तम् । अन्तरालप्रमाणपर्य्यालोचनया ततः किञ्चिदधिकमवकाशं कर्त्तव्यम् । पादस्तम्भयोर्मस्तकप्रदेशाद्यथा वह्निर्न निःसरति तथा अवकाशः कार्य्य इति स्मृतिचन्द्रिकायाम् । अत्र निखातभागपरित्यागेन पादस्तम्भयोश्चतुर्हस्तत्वाभिधानं ज्ञेयम् । अतएव पितामहः "हस्तद्वयं निखेयन्तु प्रोक्तं स्तम्भकयोर्द्वयोः । षड्हस्तन्तु तयोः प्रोक्तं प्रमाणं परिमाणतः" इति स्तम्भकौ पादस्तम्भौ । हस्तप्रमाणन्दर्शितं कालिकापुराणे "यवानामष्टभिरेकमङ्गुलमभिर्भवेत् । अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः" । इति स्मृत्यन्तरेऽपि "तिर्य्यग्यवोदराण्यष्टावूर्द्ध्वा वा ब्रीहयस्त्रयः । प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः" । नारदातिवचने "चतुर्विंशत्यङ्गुलाख्यं हस्तन्तत्त्वविदो विदुः । यवानामष्टभिः कृत्वं मानाङ्गुलमितीरितमिति" । हस्तो वितस्तिद्वितयं चतुर्विंशत्यङ्गुलो हस्त इत्यर्थः । यवानां अवतलाङ्गुलानामित्यर्थः । "यवानामष्टकैरिति" स्मरणात् । तुलाया विशेषान्तरमाह पितामहः "चतुरस्रा तुला कार्य्या दृढा ऋज्वी तथैव च । कटकानि च देयानि त्रिषु स्थानेषु यत्नतः" इति । कटकानि लोहमयानि वलयानि । त्रिषु स्थानेषु अन्तयोर्मध्ये । कटकग्रहणं लोहकीलादीनामुपयुक्तानामुपलक्षणम् । नारदोऽपि "ऋज्वी घटतुला कार्य्या खादिरी तैन्दुकी तथा । चतुरस्रा त्रिभिः स्थानैर्घटककर्कटकादिभिरिति" । धटो घटमध्यम् । कर्कटकौ अन्त्यौ । पादस्तम्भादीनां स्थूलता तु विशेषानभिधानात् यावति

स्योत्थे द्वादशाङ्गुलायति तावत्येव कार्य्या । शिक्याधारा-
दिविशेषो ज्ञेयः । पादस्तम्भादुदग्दक्षिणसंस्थानौ स्तम्भौ
तुला प्राग्धारा कार्य्या । "पश्चिमे तोलयेत्कर्त्तृन् अन्य-
स्मिन् मृत्तिकां शुभामिति" पितामहवचनात् । पूर्व-
पश्चिमसंस्थानौ स्तम्भावुदग्धारा वा कार्य्या । "धारयेदुत्तरे
पार्श्वे पुरुषं दक्षिणे शिलामिति" नारदवचनात् ।
घटाङ्गत्वेन तोरणादिकं कार्य्यमित्याह पितामहः
"तोरणे तु तथा कार्य्ये पार्श्वयोरुभयोरपि । घटादुच्चतरे
स्यातान्नित्यन्दशभिरङ्गुलैः । अवलम्बौ तु कर्त्तव्यौ तोर-
णाभ्यामधोमुखौ । मृन्मयौ सूत्रसम्बद्धौ घटमस्तक-
चुम्बिनाविति" । घटारोहणमाह नारदः "शिक्यद्वयं
समासज्य घटकर्कटयोर्दृढम् । एकशिक्ये तु पुरुषमन्यत्र
तोलयेच्छिलाम्" । "धारयेदुत्तरे पार्श्वे पुरुषन्दक्षिणे
शिलाम् । पिटकं पूरयेत्तस्मिन्निष्टकापांशुलोष्टकैरिति" ।
इष्टकाभिर्ग्रावभिः पांशुभिर्लोष्टैर्वेत्यर्थः । भस्मराशि-
भिरपि पिटकं पूरयेत् । "भस्मराशिमथापि वेति" स्मृत्य-
न्तरवचनात् । पितामहोऽपि "शिक्यद्वयं समासज्य
पार्श्वयोरुभयोरपि । प्राङ्मुखान् कल्पयेद्दर्भांस्तत्र विप्रः
समाहितः । पश्चिमे तोलयेत्कर्त्तृन् अन्यस्मिन् मृत्तिकां
शुभाम् । इष्टकाभस्मपाषाणकपालास्थिविवर्जितामिति" ।
अत्र इष्टकापाषाणयोर्वर्ज्जनोक्तिः समुच्चयनिराकर-
णार्था न तु विकल्पनिराकरणार्था पूर्वोदाहृतनारद-
वचने तयोरपि विधानात् । "एतेन मृत्तिकापाषाणादीनां
कल्प्य तोलनकर्मत्वमिति मतमपास्तम् । मृत्तिकाशिलेष्ट-
कादीनामेकार्थत्वात् "एकार्थास्तु विकल्पेरन्निति" न्यायेन
विकल्प इति मिताक्षरायाम् । विष्णुरपि "एकस्मिन्
पुरुषमारोपयेत् द्वितीये प्रतिमानं शिलादीति" ।
समतानिरीक्षणार्थं राज्ञा तद्विदो नियोक्तव्याः । तथा
च पितामहः "परीक्षका नियोक्तव्यास्तुलामान-
विशारदाः । वणिजो हेमकाराश्च कांस्यकारास्तथैव-
चेति" । नियुक्ताश्च निरीक्षेरन्नित्याह नारदः । "सुव-
र्णकारा वणिजः कुशलाः कांस्यकारकाः । तान्तुलाम-
न्वीक्षेरन् तुलाधारणकोविदाः इति" । निरीक्षणं प्रत्याह
पितामहः "कार्य्यः परीक्षकैर्नित्यमवलम्बात् समो
घटः । उदकञ्च प्रदातव्यं घटस्योपरि पण्डितैः ।
यस्मिन् न प्लवते तोयं स विज्ञेयः समो घट" इति ।
अवलम्बनः तोरणयोर्लम्बमानौ यौ मृत्तोयावलम्बौ
तयोः समः । नारदोऽपि "प्रथमारोहणे प्राज्ञ"

प्रमाणकृत्पुरुषैः सह । तुलाशिरोभ्यान्तुल्यं तु तोरणस्थ-
सलक्षणमिति" । तोलनानन्तरं कर्त्तव्यम्पितामह
आह "तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु ।
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम्" । तत आवा-
हयेद्देवान् विधिनानेन मन्त्रवित् । वादित्रतूर्य्यनिर्घोषै-
र्गन्धमाल्यानुलेपनैः । प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्-
विवेकस्ततो वदेत्" इति । विवादानुरूपं प्रश्नम्पृच्छ-
तीति प्राट् तद्विवेचयतीति विवेकः प्राट् चासौ विवेकश्च
प्राड्विवेकः । ततोऽभियुक्तं तोलयित्वाऽवतार्य्य
धर्म्मावाहनादारभ्याभियुक्तैरपि पत्रबन्धनान्तं साधा-
रणविधिं कुर्य्यात् । घटपताकाध्वजादिविशेषान्नारद
आह "रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्च्चयेत् घटं पूर्वं ततः शिष्टांस्तु पूजयेदिति" । शिष्टा
नवशिष्टानिन्द्रादीन् । पत्रबन्धनानन्तरं मन्त्रयेत् प्राड्-
विवेक इत्याह पितामहः "घटमामन्त्रयेच्चैव विधिनानेन
शास्त्रवित्" । विधिना मन्त्रेण शास्त्रवित्प्राड्विवेकः ।
मन्त्रश्च तेनैव दर्शितः" "त्वं घट ! ब्रह्मणा सृष्टः परी-
क्षार्थं दुरात्मनाम् । धकारो धर्म्ममूर्त्तिस्त्वं टकारात्
कुटिलं नरम् । धृतो धारयसे यस्मात् घटस्तेनाभिधी-
यसे । त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।
त्वमेव देव ! जानीषे न विदुर्यानि मानवाः । व्यवहा-
राभिशस्तोऽयं मानुषः शुद्धिमिच्छतीति" । शोध्यस्या-
भिमन्त्रणमाह याज्ञवल्क्यः "तुलाधारणविद्वद्भि-
रभियुक्तस्तुलाश्रितः । प्रतिमानसमीभूतो रेखां कृत्वा-
ऽवतारितः । त्वन्तुले ! सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि ! संशयान्मां विमोचय । यद्यस्मि
पापकृन्मातः ! ततो मां त्वमधो नय । शुद्धश्चेद्गमयो-
र्द्ध्वं मां तुलामित्यभिमन्त्रयेदिति" । तुलाश्रितः तुला-
मारूढः । प्रतिमानसमीभूतः प्रतिमानेन मृदादिना
समीकृतः । रेखां कृत्वावतारणे कालचिह्नं कृत्वा
अभिमन्त्रणमेवावतारणानन्तरं कार्य्यम् अवतारित इति
तदर्शनात्ततः प्राड्विवेकः तुलाधारकं शपथैर्नियम्य
शिरोगतपत्रकं पुनर्घटमारोपयेत् । अतएव नारदः
"शपथैः परिकल्प्यैव पुनरारोपयेन्नरम् । निर्वाते इद्धि-
रहिते शिरस्यारोप्य पत्रकमिति" । शपथैः शपथैः परि-
कल्प्य नियम्य । ते च विष्णुना दर्शिताः । "ब्रह्मघ्नो
ये स्मृता लोका ये लोकाः कूटसाक्षिणः । तुलाधारस्य
ते लोकास्तुलां धारयतो मृषेति" पुनरारोहणकालेऽभि-

मन्त्रमाह नारदः "त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च। त्वमेव देवि ! जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वयि। तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि। देवासुरमनुष्याणां सत्ये त्वमभिचिन्त्यसे। सत्याख्योऽसि भगवन् ! शुभाशुभविभावने। आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति"। मन्त्रोच्चारणानन्तरकर्त्तव्यं पितामह आह "ज्योतिर्विद्ब्राह्मणश्रेष्ठः कुर्य्यात्कालपरीक्षणम्। विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः। साक्षिणो ब्राह्मणाः श्रेष्ठाः यथादृष्टार्थवादिनः। ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु। शंसन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदा" इति।

कानि पुनर्जयपराजयचिह्नानीत्यपेक्षायामाह नारदः "तुलितो यदि वर्द्धेत विशुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेन्नरः" इति वर्द्धेत उपरि गच्छेत्। हीयमानः अधो गच्छेत्। यत्पुनरुक्तं पितामहेन "तुलितो यदि वर्द्धेत शुद्धो भवति धर्मतः। हीयमानो न शुद्धः स्यादेकेषान्तु समोऽशुचिः। अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते" इति। अल्पत्वं व्यभिचारे परालिङ्गनादिना" चौर्ये तद्देशगमनादिना तत्र एकेषामिति पूजार्थं न तु समते समस्य शुचित्वद्योतनार्थम् अल्पपापिनोऽप्यशुचित्वात्। तेन हीयमानसमयोर्न कश्चिद्विशेषः। दण्डप्रायश्चित्ते पापविशेषलघोदीर्घानुसारित्वात्। यत्तु कैश्चिदेकेषां तु समोऽशुचिरिति वचनम्। "अल्पपापः समो ज्ञेयः" इति वचनं साम्ये संशयपरमेवेत्युक्तन्तत् क्लिष्टकल्पनया वाक्यानार्थक्यमेवेत्युपेक्षणीयम्। यत्तूक्तम्, बृहस्पतिना "घटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात्। तत्समस्तु पुनस्तोल्यो वर्द्धितो विजयी भवेदिति" अयमर्थः पुनर्देवतावाहनाद्यखिलं सर्वं कर्म विधायोत्तोलनीय इति समस्याशुचित्वनिश्चयो न प्रथमतोलनपर्य्याये कार्य्यः। किन्तु पुनस्तोल्यमानस्य समत्वे यदि भवति तदा अशुद्धिरवधारणीयेत्यर्थः इति स्मृतिचन्द्रिकायाम्। यत्तु कैश्चित्तत्रैव प्रयोगे तोलनमुक्तं तन्मन्दं प्रधानावृत्तावङ्गावृत्तिरिति न्यायेन तोलनस्य फलसम्बन्धेन प्रधानत्वात् तदावृत्तौ देवतावाहनाद्यङ्गानामप्यावृत्तेरौचित्यात्। शिक्यादिच्छेदेऽपि पुनः समीकृत्य तोलनीय इत्याह कात्यायनः "शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा। शुद्धेस्तु संशये चैनं परीक्षेत पुनर्नरमिति" शुद्धिसंशयकारीण्याह नारदः "तुलाशिरोभ्यामुद्भ्रान्तं विचलं व्यस्तलक्षणम्। यदा वायुप्रणुन्नं वा तदा नैकतरं वदेत्" इति। अयमर्थः। यदा तुलान्तौ तिर्य्यक्चलितौ यदा च समतासाधनार्थन्यस्तं चिह्नमपैति यदा च वायुना प्रेरिता तुला ऊर्द्धमधश्च कम्पते तदा जयं पराजयं च न वदेदिति। व्यासोऽपि "कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः" इति। कक्षं शिक्यतलं कर्कटौ तुलोपान्तस्थौ शिक्याधारावीषद्वक्रौ कर्कटशृङ्गसन्निभौ लौहकीलकौ। अक्षः पादस्तम्भयोरुपरिनिहितस्तुलाधारपट्ट इति मिताक्षरा। दाढर्य्यप्रयोजकः कीलक इति हलायुधः। यत्तु बृहस्पतिवचनम् "कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमाप्नुयादिति" तदाऽऽकस्मिककक्षच्छेदादिविषयम्। कात्यायनवचनन्तु हन्यमानकारणकशिक्यच्छेदादिविषयमिति विज्ञानेश्वराचार्य्यादयः" वीरमि०। तुलापुरुषाकृतुला तु हेमाद्रौ दा० खण्डे द्रष्टव्या। तद्गत तत्त्वाद्यानादिपद्धतौ च विस्तरेण द्रष्टव्या।

उत्तोलने मिता०। "तुलाः स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः" इत्यमरोक्तेः पलशतमाने तुला। तत्र शब्दे "तुला यदा रोहति दन्तवाससा," कुमा० "कामदानवमस्तया तुलाम्" रघुः। तुलोपमार्थयोगे षष्ठ्येव साधु न तु तृतीया "अतुलोपमाभ्याम्" पा० तृतीयाविधाने तयोः पर्युदासात् तृतीयाप्रयोगस्तु सदृशार्थकशब्दाध्याहारेण तद्योगे इति भट्टि०। तुलाराशौ। "कन्यार्के च तुलार्के च पितृणां श्राद्धमिष्यते" स्मृतिः "तुलायां लोकवा सह" ति०त०। "वक्रभवस्तुलया" ज्यो०त०। तोलनदण्डात्मके माने "अथ स दक्षिणादूरोरुत्कृत्य मांसपेशीं तुलया धारयन् गुरुतर एव कपोत आसीत्" भा०व०१९६ अ०। "तुलामानं प्रतीमानं सर्वञ्च स्यात् सुलक्षितम्। षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्" मनुः "तुलामानं सुवर्णादीनां परिच्छेदार्थं यत् क्रियते प्रतीमानं प्रस्थद्रोणादि तत्सर्वं सुनिरूपितं यथा स्यात् षट्सु षट्सु मासेषु गतेषु पुनस्तत्सर्वं मध्यपुरुषैर्नृपतिः परीक्षयेत्" कुल्लू० "आढ्यां तुलया बीजतोलने भाविसस्यहानिवृद्धिज्ञापनम् उ० ख० २६ अ० उक्तं तत्र अधिवासनादितुलानिर्माणप्रकारस्तत्रैवोक्तो यथा

शान्त्यध्यायोक्तयुक्ताः । विमानदक्षाः पटवोऽनुकूला ये चार्त्विजः देशप्रभवा द्विजेन्द्राः । गुरुश्च वेदान्तविदार्य्यवंशसम्भवः शीलकुलाभिरूपः । पुराणशास्त्राभिरतोऽतिदक्षः प्रसन्नगम्भीरस्वरसत्त्वोपेतः । सिताम्बरः कुण्डलहेमसूत्रकेयूरकण्ठाभरणाभिरामः । पूर्व्वेण ऋग्वेदविदावथाग्र्यौ यजुर्विदौ दक्षिणतश्च यत्तौ । स्नातौ द्विजौ सामविदौ तु पश्चादाथर्व्वणावुत्तरतश्च कार्य्यौ । विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम् । ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात् । जप्यानि सूक्तानि तथैव चैषामनुक्रमेणाथ यथास्वरूपम् । होमावसाने कृततूर्य्यनादो गुरुर्गृहीत्वा बलिपुष्पधूपम् । आवाहयेल्लोकपतीन् क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः । एह्येहि सर्व्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ! । संवीज्यमानोऽप्सरसाङ्गणेन रक्षाध्वरन्नो भगवन्नमस्ते (इन्द्रस्य)। एह्येहि सर्व्वामरहव्यवाह ! मुनिप्रवीरैरभितोऽभिजुष्ट ! । तेजस्विना लोकगणेन सार्द्धं ममाध्वरं रक्ष कवे ! नमस्ते" (वह्नेः) । एह्येहि वैवस्वत ! धर्म्मराज ! सर्व्वामरैरर्च्चितदिव्यमूर्त्ते ! । शुभाशुभानन्दशुचामधीश ! शिवाय नः पाहि मखं नमस्ते" (यमस्य) । एह्येहि रक्षोगणनायकस्त्वं सर्व्वैस्तु वेतालपिशाचसङ्घैः । ममाध्वरं पाहि शुभाधिनाथ ! लोकेश्वरस्त्वं भगवन्नमस्ते (नैर्ऋतस्य) । एह्येहि यादोगणवारिधीनां गणेन पर्ज्जन्यमहाप्सरोभिः । विद्याधरेन्द्रामरगीयमान ! पाहि त्वमस्मान् भगवन्नमस्ते (वरुणस्य)। एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसङ्घैः । प्राणाधिपः कालकवेः सहायः गृहाण पूजां भगवन्नमस्ते (वायोः) । एह्येहि यज्ञेश्वर ! यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् । सर्व्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते (सोमस्य) । एह्येहि विश्वेश्वर ! नस्त्रिशूलकपालखट्वाङ्गधरेण सार्द्धम् । लोकेश ! यज्ञेश्वर ! यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते (ईशस्य)। एह्येहि पातालधराधरेन्द्र ! नागाङ्गनाकिन्नरगीयमान ! । यक्षोरगेन्द्रामरलोकसङ्घैरनन्त ! रक्षाध्वरमस्मदीयम्" । (अनन्तस्य) एह्येहि विश्वाधिपते ! मुनीन्द्र लोकेन सार्द्धं पितृदेवताभिः । सर्व्वस्य धातास्यमितप्रभाव ! विशाध्वरन्नो भगवन्नमस्ते (ब्रह्मणः)। त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्व्वन्तु तानि मे । देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च । सर्व्वे ममाध्वरे रक्षां प्रकुर्व्वन्तु मुदान्विताः । इत्यावाह्य सुरान् दद्यादृत्विग्भ्यो हेमभूषणम् । कुण्डलानि च हैमानि सूत्राणि कटकानि च । तद्वदङ्गुलीयपवित्राणि वासांसि शयनानि च । द्विगुणं गुरवे दद्याद्भूषणाच्छादनानि च । जपेयुः शान्तिकाध्यायं जापकाः सर्व्वतोदिशम् । उपोषितास्तु ते सर्व्वे कृत्वैवमधिवासनम् । प्रातरन्ते च मध्ये च कुर्य्याद्ब्राह्मणवाचनम् । ततो मङ्गलशब्देन स्नापितो वेदपुङ्गवैः । त्रिःप्रदक्षिणमावर्त्त्य गृहीतकुसुमाञ्जलिः । शुक्लमाल्याम्बरो भूत्वा तां तुलामभिमन्त्रयेत् । नमस्ते सर्व्वदेवानां शक्तिस्त्वं सत्यमास्थिता । साक्षिभूता जगद्धात्री निर्म्मिता विश्वयोनिना । एकतः सर्व्वसत्यानि तथानृतशतानि च । धर्म्माधर्म्मकृतां मध्ये स्थापितासि जगद्धिते ! । त्वं तुले ! सर्व्वभूतानां प्रमाणमिह कीर्त्तिता । मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते । योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः । स एकोऽधिष्ठितो देवि ! त्वयि तस्मान्नमोनमः । नमोनमस्ते गोविन्द ! तुलापुरुषसंज्ञक ! । त्वं हरे ! तारयस्वास्मानस्मात्संसारकर्द्दमात् । पुण्यकालं समासाद्य कृत्वैवमधिवासनम् । पुनः प्रदक्षिणं कृत्वा तुलामारोहयेद्बुधः । सखड्गचर्म्मकवचः सर्व्वाभरणभूषितः । धर्म्मराजमथादाय हैमं सूर्य्येण संयुतम् । कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम् । ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः । समादभ्यधिकं यावत् काञ्चनं चातिनिर्म्मलम् । पुष्टिकामस्तु कुर्व्वीत भूमिसंस्थं नरेश्वरः । क्षणमात्रं ततः स्थित्वा पुनरेवमुदीरयेत् । नमस्ते सर्व्वभूतानां साक्षिभूते ! सनातनि ! । पितामहेन देवि ! त्वं निर्म्मिता परमेष्ठिना । त्वया धृतं जगत्सर्व्वं सहस्थावरजङ्गमम् । सर्व्वभूतात्मभूतस्थे ! नमस्ते विश्वधारिणि ! । ततोऽवतीर्य्य गुरवे पूर्व्वमर्द्धं निवेदयेत् । ऋत्विग्भ्योऽपरमर्द्धन्तु दद्यादुदकपूर्व्वकम् । गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत् । प्राप्य तेषामनुज्ञां तु तथान्येभ्योऽपि दापयेत् । दीनानाथविशिष्टादीन् पूजयेद्ब्राह्मणैः सह । न चिरं धारयेद्गेहे सुवर्णं प्रोक्षितं बुधः । तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् । शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति मानवः । अनेन विधिना यस्तु तुलापुरुषमाचरेत् । प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् । विमानेनार्कवर्णेन किङ्किणीजाल-

१२। "तुविष्मान् हविष्मान् बलवान् वा" भा०। "अभिसद्-विष्मान् चर्षणिभ्यः" ३।५५।१। "तुविष्मान् प्रभावान् बलवान् वा" भा०। बलेन प्रज्ञया च इद्धेः पूर्ववत् सम्प्रसारणात् बलप्रज्ञयोस्तथात्वम्।

**तुवीरवत्** त्रि० तुवी बलवर्धीनीरः ततो मतुप् मस्य वः। बहुस्तोत्रयुक्ते। "रया कविस्तुवीरवान्" ऋ० १०।१६३।४। "तुवीरवान् बहुस्तोत्रयुक्तो भवति। मत्वर्थीयप्रत्ययाद्भुतिः। यद्वा तुविशब्दस्य रो मत्वर्थीयः। बाहुल्ययुक्तदेवैः सहितो भवति" भा०।

**तुश** वधे भ्वा० आ० सक० सेट्। तोशते अतोशिष्ट तुतुशे। "इन्दुरिन्द्राय तोशते नितोशते" ऋ०८।१०८।२२ "इन्दुः सोम इन्द्रायेन्द्रार्थं तोशते" तोशते हन्यते अभिषूयते। नितोशते नितरामभिषूयते। तोशतिर्वधकर्मा" भा० कर्मकर्त्तरि तङ्। यगभावश्छान्दसः। "बलात्वं पुरहुतं एको हन्त्राणि तोशसे"। ऋ०८।१६।११। तोशसे हिनस्सि" भा०।

**तुष** तोषे आनन्दभेदे दि० प० कृदित् अक० सेट्। तुष्यति अतुषत्। तुतोष। ओदित् वर्त्तमाने क्तः तुष्टः। तुष्टिः। तोषः "तुष्य द्रौपदि! मा क्रुध" भा० व० ११०६ श्लो० "तुष्यन्ति च रमन्ति च" भा० आनु० १२७६ श्लो० "तुतोष पश्यन् वितृणान्तराजाः" भट्टिः।

**तुष** पु० तुष–क। १बिभीतकवृक्षे (बयड़ा) २धान्यत्वचि धान्यावरणाते द्रव्ये च अमरः। "श्रीहीन् निष्कासति विनोसवतण्डुलान् को नाम ओसुषकोपहितान् हितार्थी" प्रबो० च०। "तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः" हितो०। "सतुषं धान्यमुच्यते" आ०त०।

**तुषग्रह** पु० तुषैव गृह्यते ग्रह–कर्म्मणि अप्। वह्नौ त्रिका०

**तुषज** त्रि० तुषे जायते जन–ड। तुषजाते वह्न्यादौ। अग्नि "दीर्घकालतुषवह्नि जे" मा० आयुःदाततो।

**तुषधान्य** न० तुषावृतं धान्यं शा०त०। तुषावृते वतुषे धान्ये। "तुषधान्यतोषणमन्त्राभिचारवेतालकर्म्मज्ञाः"। "परभ्रमकरणाभिरतास्तुषधान्यं सर्वमित्यत्र"।ह०व०१५अ०।

**तुषसार** पु०तुषं सरति अनुसरति सृ–अण्। वह्नौ शब्दमा०

**तुषानल** पु० तुषस्यानलः। तुषजाते अग्नौ। तुषाग्न्यादयोऽप्यत्र।

**तुषाम्बु** न० तुषोदकशब्दार्थे "तुषाम्बु दीपनं पाचकं कृमिरोगनदापहम्। तीक्ष्णोष्णं पाचनं पित्तरक्तकफ शूलकृत्" भावप्र०।

**तुषार** पु० तोषयति तुष–बाहुलकात् आरन् किच्च। १देशभेदे। (तुखार) शब्दे दृश्यम् तत्र तुखारा इत्यत्र तुषारा इति पाठान्तरम्। २हिमकणभेदे नीहारे हेमच०। ३शीतलस्पर्शे अमरः ४तद्वति त्रि०।

"सर्पा हि तस्याव न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा" नैष० "प्रपतत् तुषारो हेमन्तकालः" ऋतुस० ५कर्पूरभेदे राजनि०। "अनलसुषाराञ्जनपर्वताविव" "अपनवारितुषारक्षतलग्नाः" माघः। "स्वच्छाम खतुषारशीकरः" रघुः। "पदं तुषारस्रुतिधौतरक्तम्" कुमा०। "ततुतुषारतुषारजलश्रुतम्" किरा०।

**तुषारकर** पु० तुषारो हिमः करोऽस्य। १हिमकरे चन्द्रे तुषारकिरणादयोऽप्यत्र। "वनया तुषारकिरणस्य पुरः" माघः। २कर्पूरे च।

**तुषारगिरि** पु० ६त०। १हिमालये "तुषारगिरिकूटाभं सिताभ्रशिखरोपमम्" भा० अनु० १४ अ०। तुषाराचलादयोऽप्यत्र।

**तुषित** पु० तुष–बा० कितच् तुष–इतच् किच्च ततः तारका० इतच् वा। १गणदेवताभेदे ते च द्वादश। विष्णु मन्वन्तरभेदे भिन्ननामानः यथा "चाक्षुषस्यान्तरे पूर्वमासन् ये तुषिताः सुराः। वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः" हरिवं० ३अ०। तथा च आदित्यरूपा द्वादश१२ "प्राणापानावुदानश्च समानो व्यान एव च। चक्षुः श्रोत्रं रसो घ्राणः स्पर्शो बुद्धिर्मनस्तथा। द्वादशैते तु तुषिताः देवाः स्वारोचिषेऽन्तरे" वारसन्दरीभूतवाक्योक्ता द्वादश१२ "तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः। इध्मः कविर्विभुः स्वाह्नः सुदेवो रोचनो द्विषट्१२। तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे" मन्त्रार्थचि० धृत-वाक्योक्ता द्वादश इति भट्टलिङ्गम्। ते च द्वादशेति यथान्ते ते एकैकमन्वन्तरापेक्षया द्वादशेति वर्णयन्ति। बहुतुषिमानेन षट्त्रिंशदिति विवेकः। तदभिप्रायेणैव "षट्त्रिंशत्तुषिता मताः" इत्युक्तम्। २विष्णौ पु०। "तुषित! मङ्गलात् तुषितादि" भा०आ०१४अ०। विष्णुस्तुतौ।

**तुषोत्थ** न० तुषादुत्तिष्ठति उद्+स्था–क ५त०। १तुषोदके राजनि०।

**तुषोदक** न० तुषनिर्मितमुदकं शा० त०। १काञ्जिकभेदे हारा०। तत्करणप्रकारो भावप्र० उक्तो यथा "तुषोदकं यवैरामैः सतुषैः सकलीकृतैः। अन्यैरपि धान्यैः सन्धानमसितम्"। तुषाम्बुशब्दे तद्गुणादि दृश्यम्।

**तुष्ट** त्रि० तुष–कर्त्तरि क्त। १सन्तोषयुक्ते। “तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत्” पुरा०। २विष्णौ पु० “परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः” विष्णुस० “परानन्दैकरूपत्वात्तुष्टः” भा०। तस्यानन्दरूपत्वेऽपि आनन्दाश्रयत्वं कल्पितम् अतएव विवरणे “आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते” इत्युक्तम्। न्यायमते तु दुःखाभावस्यैवानन्दरूपत्वात् तस्य तदाश्रयत्वमस्त्येवेति भेदः।

**तुष्टि** स्त्री तुष–भावे क्तिन्। १तोषे २भोगेष्वेतावतालमिति बुद्धौ ३अधिगतार्थादन्यत्र तृष्णक्षयबुद्धौ “तुष्टिर्नु रक्तार्थस्य कृतार्थोऽस्मीति या मतिः” इत्युक्ते ४बुद्धिभेदे सा च नवविधा इति सांख्याचार्याः यथोक्तं सा० का० त० कौ० च।

“तुष्टिर्नवधेत्युक्तं ताः परिगणयति। “आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः। बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः” का०।

“प्रकृतिव्यतिरिक्त आत्मास्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय असदुपदेशतुष्टो यो न प्रयतते तस्य चतस्र आध्यात्मिकास्तुष्टयो भवन्ति प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः, कास्ता इत्यत आह प्रकृत्युपादानकालभाग्याख्याः प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्र प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशः (विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः तञ्च प्रकृतिरेव करोतीति कृतं ते ध्यानाभ्यासेन, तस्मादेवमेवास्स्वेति)। सेयमुपदेष्टव्यस्य शिष्यस्य प्रकृतौ तुष्टिः प्रकृत्याख्या तुष्टिः अम्भ इत्युच्यते। “या च प्रकृतिविवेकख्यातिर्न सा प्रकृतिमात्राद्भवति मा भूत्सर्वस्य सर्वदा तन्मात्रस्य सर्वान् प्रत्यविशेषात् प्रव्रज्यायास्तु सा भवति तस्मात्प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन्नित्युपदेशे या तुष्टिः सोपादानाख्या सलिलमुच्यते। ‘या तु प्रव्रज्यापि न सद्यो निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तप्ततया तवेत्युपदेशे सा तुष्टिः सा कालाख्या मेघ उच्यते। “या तु न कालात् नाप्युपादानाद्विवेकख्यातिरपि तु भाग्यादेव अतएव मदालसापत्यानि अतिबालानि मातुरुपदेशमात्रादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः तत्र भाग्यमेव हेतुर्नान्यदित्युपदेशे या तुष्टिः सा भाग्याख्या तुष्टिरुच्यते। बाह्या दर्शयति बाह्यास्तुष्टयो विषयोपरमात् पञ्च, याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मत्वमभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः आत्मज्ञानाभावेऽनात्मानमधिकृत्य प्रवृत्तेरिति। ताश्च वैराग्ये सति सम्भवन्ति तुष्टय इति वैराग्यहेतुपञ्चविधत्वाद्वैराग्याण्यपि पञ्च, तत्पञ्चकत्वात् तुष्टयः पञ्चेति, उपरम्यतेऽनेनेत्युपरमो वैराग्यं विषयादुपरमो विषयोपरमः। विषया भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च। तथा च अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मान उपरमाः पञ्च भवन्ति। तथा हि सेवादयो धनोपार्जनोपायास्ते च सेवकादीन् दुःखा कुर्वन्ति। इत्याद्युरीश्वरद्वाःस्थदण्डोद्दतदुर्वाक्यजन्यां वेदनां भावयन् प्राज्ञः कः सेवासु प्रवर्त्तते। एवमन्येऽप्यर्जनोपाया दुःखा इति विषयोपरमे या तुष्टिः सैषा पारमुच्यते। तथार्जितं धनं राजचौरागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद्दुःखमिति भावयतो विषयोपरमे या तुष्टिः द्वितीया सुपारमुच्यते। तथा महताऽऽयासेनार्जितं धनं भुज्यमानं क्षीयते इति तत्क्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया पारपारमुच्यते। एवं शब्दादिभोगाभ्यासाद्वर्द्धन्ते कामास्ते च विषयाप्राप्तौ कामिनं दुःखयन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी अनुत्तमाम्भ उच्यते। एवं नानुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी उत्तमाम्भ उच्यते। एवमाध्यात्मिकीभिश्चतसृभिर्बाह्याभिश्च पञ्चभिर्नव तुष्टयोऽभिमताः”। साङ्ख्यकृता अन्यथा तुष्टिभेदा दर्शिता यथा “तुष्टिर्नवधा” सा० सू० “आध्यात्मिक्यादिभेदान्नवधा तुष्टिः” भा०। “इदं सूत्रं कारिकया व्याख्यातम्। आध्यात्मिक्य इत्यादि कारिकार्थः। आत्मानं तुष्टिमतः सङ्घातमधिकृत्य वर्त्तन्ते इत्याध्यात्मिक्यस्तुष्टयश्चतस्रः। तत्र प्रकृत्याख्या तुष्टिर्यथा। साक्षात्कारपर्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव तं च प्रकृतिरेव करोत्यहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषः। इयं तुष्टिरम्भ इत्युच्यते। ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते। ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिर्मेघ इत्युच्यते। ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा भाग्याख्या तुष्टिरित्युच्यत इति चतस्र आध्यात्मिक्यः।

बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जनरक्षणक्षयभोगहिंसादिदोषनिमित्तकोपरमाज्जायन्ते । ताश्च तुष्टयो यथाक्रमं पारं सुपारं पारापारमनुत्तमाम्भ उत्तमाम्भ इति परिभाषिता इति । कश्चित् त्विमां कारिकामन्यथा व्याख्यातवान् । तद्यथा विवेकख्यातिकारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्यानाभ्यासेनेत्येवं हृष्ट्वा या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या । प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्यानादिनेति या तुष्टिः सोपादानाख्या । कृतमद्यापि कालेनैव मोक्षो भविष्यत्यलमुद्वेगेनेति या तुष्टिः सा कालाख्या । भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरेवं कृतकें या तुष्टिः सा भाग्याख्येत्यादिरर्थं इति तन्न । तद्व्याख्यातुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभावनौचित्यादिति" ।

तुष–कर्त्तरि क्तिच् । ५गौर्य्यादिषु षोडशसु मातृषु मध्ये मातृभेदे । कुलदेवताशब्दे २१२० पृ० दृश्यम् । ६अनन्तदेवपत्न्याञ्च । "अनन्तपत्नी तुष्टिश्च पूजिता वन्दिताऽभवत् । यया विना न सन्तुष्टाः सर्वे लोकाश्च सर्वतः" देवीभा० । "या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता" देवीमाहा० । "आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" मनुः ।

तुष्टिमत् त्रि० तुष्टिरस्त्यस्य मतुप् । तोषयुक्ते । स्त्रियां ङीप् । २उग्रसेनात्मजे कंसभ्रातरि पु० "कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा । राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानुग्रसेनजाः" भाग० ९।२४।१४ ।

तुष्टु पु० तुष–बा० तुन् । कर्णस्थमणौ शब्दच० ।

तुष्य पु० तुष–कर्त्तरि क्यप् । १महादेवे तुटितुटशब्दे दृश्यम्

तुस ध्वनौ भ्वा० पर० सक० सेट् । तोसति अतोसीत् । तुतोस ।

तुस पु० तुष+पृषो० । तुषे धान्यत्वचि रमानाथः ।

तुस्त न० तुस–क्त वा० इडभावः । १रेणौ अमरे तुस्तोत्तम तुस्तोति पाठं मत्वा सारसुन्दर्य्यां व्याख्यातम् ।

तुह अर्द्दने वधे भ्वा० पर० सक० सेट् । तोहति । इरित् अतुहत् अतोहीत् । तुतोह ।

तुह(हा)र पु० तुह–बा० करन् कारन् वा । कुमारपारिषद्भेदे । "तुहरश्च तुहारश्च चित्रदेवश्च वीर्य्यवान्" भा० श० ४६ अ० । कुमारपारिषदोक्तौ ।

तुहिन न० तुह्यतेऽनेन तुह–इनन् कित्त्वञ्च । १हिमे अमरः २चन्द्रतेजसि उज्ज्वल० "तुषारलक्ष्मैस्तुहिनैः पतद्भिः" ऋतुस० "सान्द्रस्तुहिनान्तरितः" प्रबोधच० ।

तुहिनकर पु० तुहिनं करोत्यस्य । १चन्द्रे तुहिनांशुप्रभृतयोऽप्यत्र ।२कर्पूरे च ।

तुहिनांशुतैल न० ६त० । कर्पूरतैले राजनि० ।

तुहिनाचल पु० ६त० । हिमालये तुहिनाद्रिप्रभृतयोऽप्यत्र ।

तुहुण्ड पु० दनुवंश्ये दानवभेदे । "अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः । एकपादेकचक्रश्च विरूपाक्षमहोदरौ । निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा । शरभः शलभश्चैव सूर्य्यचन्द्रमसौ तथा । एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः" भा० आ० ६५ अ० । २धृतराष्ट्रपुत्रभेदे "नन्दको बाहुशाली च तुहुण्डो विकटस्तथा" १८६ अ० ।

तूड अनादरे भ्वा० पर० सक० सेट् । तूडति अतूडीत् । तुतूड । ऋदित् । णिच् अतुतूडत् त ।

तूण सङ्कोचे अद० चुरा० उभ० सक० सेट् । तूणयति ते । अतुतूणत् त ।

तूण सङ्कोचे चु० उभ०सक०सेट् । तूणयति ते अतुतूणत् त ।

तूण पूरणे चु० आ० सक० सेट् । तूणयते, अतुतूणत त ।

तूण पु० तूण्यते पूर्य्यते बाणैः तूण–पूरणे कर्म्मणि घञ् । इषुधौ बाणाधारे अमरः ।

तूणक न० "तूणकं भवेदिदं रजौ रजौ ततश्च रः" वृ० र० टीकोक्ते पञ्चदशाक्षरपादके छन्दोभेदे ।

तूणधार पु० तूणं धारयति धारि–अण् उप० स० । तूणधारिणि धानुष्के । अस्य नियुक्तत्वात् "अणि नियुक्ते" पा० न आद्युदात्तत्वम् । किन्तु तत्पुरुषस्वरः ।

तूणव पु० तूणस्येवाकारोऽस्त्यस्य अर्श० अच् तूणं तदाकारं वाति वा–क वा । तूणाकारे वाद्यभेदे । "सैषा वाग् वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायाम्" तै० स० ६।१।४।१ । "वीणावादं क्रोशाय तूणवध्ममवरस्पराय" यजु० ३०।१९ । "तूणवं वाद्यभेदं धमति तथाभूतम्" वेददी० । "वीणावादं पाणिघ्नं तूणवध्मं तानृत्तायानन्दाय" यजु० ३०।२० ।

तूणवत् त्रि० तूण+अस्त्यर्थे मतुप् मस्य वः । १तूणयुक्ते धानुष्के "सायुधा बद्धनिस्त्रिंशास्तूणवन्तः संमार्गणाः" भा० व० ८अ० । ठन् । तूणिक इनि तूणिन् तत्रार्थे त्रि० स्त्रियां ङीप् । तूणिनी । नन्दिवृक्षे पु० राजनि० ।

**तूणी** स्त्री तूणति पूर्य्यते शरैः तूण–पूरणे घञ् गौरा० ङीप् । १इषुधौ २तूणे ३नीलक्यां शब्दार्थचि० । ४तूणे स्त्री टाप् शब्दार्थचि० ।

**तूणीक** पु० तूणीव कायति कै–क । नन्दिवृक्षे राजनि० ।

**तूणीर** पु० तूण्यते पूर्य्यते शरैः तूण–पूरणे बा० ईरन् । १तूणे इषुधौ अमरः ।

**तूतक** न० तुत्थ+पृषो० । तुत्थे (तुँतिया) शब्दच० ।

**तूतुजान** पु० तुजि–बधे कानच् तुजा० अभ्यासदीर्घः बा० नलोपः । १क्षिप्रे निघण्टुः ।२वेगं गच्छे च तुजधातौ दृश्यम् ।

**तूतुजि** स्त्री तुजि–बधे दाने वा कि द्वित्वे तुजा० अभ्यासदीर्घः नलोपः । १क्षिप्रे निघण्टुः २दातरि च । "अद्मोऽन तूतुजिं पितुं तुजिरमिनत्" ऋ० ७।२८।१ । "तूतुजिर्दाता" भा० ।

**तूतुज्यमानास** पु०तुजि–बधे कर्मणि शानच् द्वित्वम् अभ्यासदीर्घः बा० नलोपः तथाभूतः असति दीप्यते अस–दीप्तौ अच् कर्म्म० । क्षिप्रे निघण्टुः ।

**तूतुम** त्रि० तुज–अच् द्वित्वे अभ्यासदीर्घः पृषो० । १तूर्णे साधयः "त्वया तूतुमा क्षये" ऋ० १०।१०।५ । "एता चिदा त्वया तूतुमा क्षये" ऋ०।०।१०।६। "तूतुमा तूर्णानि" भा० ।

**तूद** पु० तुद–पचाद्यर्थे कर्म्मणि क पृषो०।१तूतवृक्षे राजनि०। अश्वत्थाकारे (पार्श्वपिप्पल) ख्याते वृक्षे भावप्र० "तूदं पक्वं गुरु शीतं हिमं पित्तानिलापहम् । तदेवामं गुरु-मुरं संशोधि रक्तपित्तकृत्" ।

**तूदी** स्त्री देशभेदे । तूदी अभिजनोऽस्य ढक् । तौदेय पित्रा-दिक्रमेण तूदीदेशवासिनि त्रि० ।

**तूपर** पु० शृङ्गहीने १पशौ । स्त्रियां टाप् । तस्य शृङ्ग-हीनत्वकारणं यथा

"तावामन्येव वाऽनुपश्यामसा एवेमौ द्वादशौ मासौ संवत्सरमापयामेति तासां द्वादशसु मासु शृङ्गाणि प्रावर्त्तन्त ताः सर्वमन्नाद्यमाप्नुवंस्ता एतास्तूपरास्ताः ताः सर्वान् द्वादशमासः प्रेरते सर्वं हिता अन्नाद्यमाप्नुवन्" ताण्ड्य०ब्रा०४।१।२। "तपस्वो वैवस्वतप्रद्योतनार्थः,तासां-गवां मध्ये काश्चिदनुवन् किमिच्छामहे, यौ द्वादशौ द्वाद-शसंख्यापूरकावेव शिष्टावेकादशद्वादशौ मासौ इमौ आ-वामस्या एवं अनुतावेवं अनुजायं प्रारब्धं संवत्सरसाध्यं सत्रमापयामेति व्यवसितावेति तमित्यस्य अवस्थितेन समस्यः, तासां गवां जातानि शृङ्गाणि द्वादशसु मासु मासेषु पूर्णेषु प्रावर्त्तन्त प्रापतन् दशभिर्मासैः शृङ्गप्राप्ति-ककामफले सिद्धेऽपि इतरयसहका यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनः पतनमित्यभिप्रायः, तथा चैतरेयकम् "अथ समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्त्तन्तेति" । एतास्तूपरा इति ताः पतितशृङ्गाः गावः सर्वन्तु भवनन्नाद्यमद-नीयमन्नं प्राप्नुवन् ता गावस्तूपराः शृङ्गहीनाः दृश्यन्ते तस्मात्ताः सर्वान् द्वादश मासौ मासान् प्रेरते प्रगच्छन्ति ईर गतौ शीतवातातपेषु सर्वदा पुष्टाङ्गा एव सञ्चायर्यं गच्छन्ति शृङ्गिणो महिषादयस्तु तथा भवन्ति, तस्मा-दित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्वमन्नाद्य-माप्नुवन् तस्मात् सर्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरे-यकम् "ऊर्जमसम्भवत तस्मादु ताः सर्वभूतान्तरहन्तिरं-न्तीति" भा० । "प्राजापत्यांश्च सप्तदश सप्रातूपरान् पशून्" कात्या० श्रौ० १४।२।११ "अजस्तूपरो गोमृगस्ते प्राजापत्याः"यजु० ।२४।१ ।

**तूवर** पुंस्त्री० सौ० तु+क्विप् तूः वृ–हनौ अच् कर्म्म० । तूपर+पृषो० पक्ष बो वो ।१तूपरे कालेऽजातशृङ्गे पशौ २कालेऽजातश्मश्रुके पुरुषे ३अव्यक्तपुरुषव्यञ्जके च "जाह तूवरकं क्षिप्रं कर्णस्य बलमाददत्" भा० द्रो० १११अ० "तत्र तूवरकं नाम बलाधिनवविख्यातम्" भा० व० ११८ अ० । ४कषाये रसे पु० ५तद्वति त्रि० । ६आढक्यां ७सौराष्ट्रमृत्तिकायां स्त्री गौरा० ङीष् ।

**तूय** न० तोय+पृषो० । १जले निघण्टुः । तू–भावे सम्प० क्विप् तां याति या–क वा । २क्षिप्रे न० "देव करिभिर्यासि तूयम्" ऋ० ३।४३।२ "तूयं क्षिप्रम्" भा० । ३क्षिप्रगतियुक्ते त्रि०।"अद्रियो ते यन्त्रिण इन्द्र ! तूयान्" ऋ० १०।२८।२ । "तूयानविलम्बितान्" भा० ।

**तूर** हिंसे, सक० वेगे अक० दिवा० आत्म० सेट् । तूर्य्यते अतूरिष्ट । तुतूरे ।

**तूर्** त्रि० तुर–कर्त्तरि क्विप् ।१वेगयुक्ते । भावे सम्प० क्विप् । २वेगे स्त्री "पूर्भिर्मध्येन विच्छिताभिरङ्ग्यतूर्भिः" भा० २। ७।२८। "अहम्यतूर्भिः अवस्थवेगाभिः" श्रीधरः ।

**तूर** न०तूर्य्यते ताड्यते मुखमारुतेन तुर–वधार्थे कर्मणि क । १वाद्यभेदे (सानाइ) हेमच० । २तारतान्ने पटहादौ शब्दार्थचि० । [ भूखुरे भावप्र० ।

**तूरी** स्त्री तूरं तदाकारोऽस्त्यस्याः अच् गौरा० ङीष् ।

**तूर्ण** न० त्वर–संभ्रमे भावे क्त पक्षे इडभावः ऊठ् तस्य नः। १शीघ्रे कर्त्तरि क्त। २त्वरायुक्ते त्रि०अमरः। "अभ्यागतोऽभ्यागततूर्णतर्णकान्" माघः। "तूर्णमानीयतां तूर्णं पूर्णचन्द्रनिभानने !"। "पर्णानि स्वर्णवर्णानि सीदन्त्याकर्णलोचने !" उद्भटः।

**तूर्णाश** न० तूर्णमश्नुते अश–अच्। १उदके। "प्रतिश्रुताया वो इन्दतूर्णाशं न गिरेरधि" ऋ० ८।३२।२। "तूर्णाशमुदकं भवति तूर्णमश्नुते" निरु० भा०।

**तूर्णि** पु० त्वर–नि नि० ऊठ्। १मनसि उज्ज्वलदत्तः यद्यप्यत्र सूत्रे यकारतोऽग्निः नकारस्थाने वकारभ्रमात्। भावे–नि। २त्वरायां हेमच०। ३लोके संक्षिप्तसारे उणा०। ४क्षिप्रे निघण्टुः। ५तद्वति त्रि०। "प्र वतत्कोता सरिता तूर्णर्णैः" ऋ० १।५।२।५। "तूर्णर्णैः त्वरितगमनाः" भा० "विगाहं तूर्णिं तविषीभिरावृतम्" ऋ० १।१।५। "तूर्णिं क्षिप्रगामिनम्" भा०।

**तूर्त** न० त्वर–क्त ऊठ् वेदे न तस्य नः। १क्षिप्रे "यद् क्षिप्रं तत्तूर्त्तमथ यत् क्षिप्रात् क्षेपीयस्तत्प्रतूर्त्तम्" शत० ब्रा० ६।१।२।२।

**तूर्य्य** न० तूर्य्यते ताड्यते तूर–यत्। वाद्यभेदे "होमावसाने ततूर्यनादः" मत्पु० तुलापुरुषदानविधौ "तत्र श्रुत्वा पुनः क्षिप्तितूर्यघोषैः प्रहर्षितः" भट्टः। एततूपरत्व मानस्य गिरिमद्या० न यत्वम् तूर्य्यमानम् "ततूर्य्य० मेनां रूपयाम्बभूवुः" कुमा०।

**तूर्य्यखण्ड** पु० ६त०। वाद्यभेदे वमहवाद्ये कारा०।

**तूर्व** न० तुर्व वध– रेफे पूर्वाचो दीर्घः। १क्षिप्रे तूर्वे "तूर्वयाणो गूर्त्तवचस्तमः" ऋ० १०।६१।२। "तूर्वयाणस्तूर्वगमनः" भा०। "रक्षो अग्निमग्रणं तूर्वयाणम्" ऋ० १।१७४।२। [ऋ० ८।४२।१।

**तूर्वि** न० तुर्व–इन् दीर्घः। १क्षिप्रे "वाहधानाय तूर्वये"

**तूल** पूरणे चुरा० उभ० सक० सेट्। तूलयते अतूतुलत।

**तूल** इयत्तापरिच्छेदे निष्कासने भ्वा० पर० सक० सेट्। तूलति अतूलीत्। ततूल।

**तूल** न० तूलयति पूरयति तूल्यते वा तूल–अच्। १सर्वव्यापके आकाशे मेदि० २अश्वत्थाकारे तूदे वृक्षे भावप्र० तूदशब्दे दृश्यम्। कार्पासादिबीजजाते(तूला)। स्यूते पदार्थे। "वर्णं दहति मन्दाब्धस्तूलराशिमिवानलः" प्रा० त०। अव्ययीभावेऽस्य "कूलतीरतूलेत्यादिना" पा०आद्युदात्तता उपतूलम्। तूलशब्दे परे दैविकादिशब्दस्य स्त्री– तदुत्तरपदे वृद्धिः। दैविकतूलं तदुपधीकात् तूलम्। "वस्त्रं तूलगर्भं च तूलिकाम् उपवीतिकां मञ्जिष्ठादूपवासांसि तथा तूलवतीं पटीम्। अर्णमयानि वासांसि यतिभ्योऽपि प्रदापयेत्" काशी० ४ अ०।

**तूलक** न० तूल–स्वार्थे क। तूले हेमच०।

**तूलकार्मुक** न० तूलस्य स्फोटनार्थं कार्मुकम्। तूलस्फोटनार्थे धनुषि (धुनधरा) तूलचापादयोऽप्यत्र शब्दच०।

**तूलनालि(ली)** स्त्री० तूलनिर्म्मिता नाली। पिञ्जिकायाम् (पाइज) स्वार्थे क। अत्रार्थे स्त्री त्रिका०।

**तूलपिचु** पु० पिच–मर्द्दने कुन् तूलप्रधानः पिचुः। तूलवृक्षे (तुकारगाछ) भरतः। [राजनि०]

**तूलवृक्ष** पु० तूलसाधनं वृक्षः शाक०त०। शाल्मलिवृक्षे।

**तूलशर्करा** स्त्री तूलस्य शर्करेव। कार्पासबीजे रत्ना०।

**तूलसेचन** न० ६त०। तूलसञ्चकर्त्तने (काटनाफाटा) शब्द– पा० तूलसेचनेति चमध्यपाठः प्रमादिकः।

**तूलि(ली)** स्त्री तूल–इन् वा ङीप्। चित्रसाधने स्वनाम– ख्याते पदार्थे चि० कौ०।

**तूलिका** स्त्री तूली स्वार्थे क। १शील्यां २वर्त्तौ च शब्दर०। तूलीशब्दार्थे ३शेषकूर्चिकायां ४वीरणादिशलाकायाम्। ५आवर्त्तितस्वर्णादेर्वाधारपात्रभेदे(मूचि)। तूल अस्त्यस्य ठन् कापि अत इत्वम्। ६(तोषक) शय्याभेदे तूलशब्दे उदा०। "उन्मीलितं तूलिकयेव चित्रम्" कुमा०। "तूलिका कथिता शेषकूर्चिका तूलशय्ययोः" विश्वः। तूलपूरितशय्या च तूलशय्येत्यर्थः।

**तूलिनी** स्त्री तूलोऽस्त्यस्या इनि ङीप्। शाल्मलीवृक्षे भावप्र०। २तन्माष्काकन्दे राजनि०। ३तूलयुक्ते त्रि० स्त्रियां ङीप् तूलिफला। [रत्नमा०]

**तूलिफला** स्त्री तूलि तूलवत् फलं यस्याः। १शाल्मलीवृक्षे

**तूवर** पु० सौ०तु–वा० वरच् दीर्घश्च। १तूपरशब्दार्थे २कषाये रसे अमरः। ३तद्वति त्रि० अमरः।

**तूवरिका** स्त्री सौ० तु–वा० वरच् दीर्घः संज्ञायां कन् कापि अत इत्वम्। १आढक्याम् (अड़रहर) २सौराष्ट्रमृत्तिकायाञ्च भरतः। [कायाञ्च (फिटकिरि) भरतः।

**तूवरी** स्त्री तूवर+गौरा०ङीष्। १आढक्याम् २सौराष्ट्रमृत्ति–

**तूष** तुष्टौ भ्वा० पर०सक०सेट्। तूषति अतूषीत्। ततूष।

**तूष्णींशील:** त्रि० तूष्णीं शीलं यस्य। १मौनावलम्बिनि।

**तूष्णीक** त्रि० तूष्णीं मौनं यस्य मौनेऽर्थे कन् मलोपश्च। मौनावलम्बिनि अमरः।

**तूष्णीकाम्** अव्य० तूष्णीम्+अकच्प्रकरणे "तूष्णीमः काम् वक्तव्यः" वार्त्ति० काम् मित्त्वादन्त्यादचः परः। तूष्णीं शब्दार्थे। "तूष्णीकामास्ते" सि०कौ०।

**तूष्णीगङ्ग** अव्य० तूष्णीं गङ्गा यत्र "अन्यपदार्थे च संज्ञायाम्" पा० बहुव्रीह्यर्थे अव्ययी०। १देशभेदे। "अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्। तूष्णीगङ्गे च कौन्तेय! सामात्यः समुपस्पृश" भा०व० १२५अ०। तूष्णीगङ्गे इत्यत्र सप्तम्या वा न अम्।

**तूष्णीम्** अव्य०तूष बा०नीम् स्वरादि। १मौने(चुपकरा) अमरः। "यत्किञ्चित् दश वर्षाणि सन्निधौ प्रेक्षते धनी। भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति" मनुः "परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः" भा०शा०१०२अ०। तूष्णींशब्दे उपपदे "तूष्णीमि भुवः" क्त्वाणमुलौ तूष्णींभूय तूष्णीं भावम्। "तूष्णींभूय भयादासाञ्चक्रिरे नगपस्थिताः" भट्टिः। क्त्वा च इति पा० समासाभावे तूष्णीं भूत्वा।

**तूष्णीम्भाव** पु० तूष्णीम्+भू-घञ्। तूष्णीम्भवने मौनावलम्बने "अनिमिषनयननिरीक्षणे तूष्णींभावादयस्तत्र" सा० द० "तूष्णींभावेऽपि विज्ञेयं न चेद्भवति कारणम्" भा० शा०१०२अ०।

**तूस्त** न० तुस-बा० तन् दीर्घश्च। १रेणौ। २जटायाञ्च मेदि० ३पापे ४खण्डे च शब्दच०।

वि+तूस्त-णिच्। तूस्तस्य हनने। वितूस्तयति तूस्तं केशं इत्यादौ अङ्गीभूताः केशा इत्यन्ये पापमित्यपरे सि०कौ०।

**तृंहण** न०तृहि-भावे ल्युट्। हिंसने। [श तत्र पाठः तत्रार्थे।

**तृक्वन्** पु०स्तेने निघण्टुः त्रिकेत्यत्र पाठान्तरम् तक्वा त्रिकेति

**तृक्ष** गतौ भ्वा० पर०सक० सेट्। तृक्षति अतृक्षीत् ततृक्ष।

**तृक्ष** पु० तृक्ष-अच्। काश्यपे ऋषौ तस्यापत्यं गर्गा० यञ्। तार्क्ष्यं गरुडे अरुणे विहगमात्रे च तार्क्ष्यशब्दे दृश्यम्

**तृक्षाक** पु०तृक्ष-आकन्। ऋषिभेदे ततोऽपत्ये शिवा० अण्। तार्क्षाक तदपत्ये।

**तृक्षि** पु० तृक्ष-इन्। त्रसदस्योः पुत्रे ऋषिभेदे। "येभिस्तृक्षिं वृषणा त्रासदस्यवम्" ऋ० ८।२२।७। "त्रासदस्यवं त्रसदस्योः पुत्रं तृक्षिमेतन्नामकम्" भा०।

**तृक्ष्ण** न० तृक्ष-क्न पृषो०। जातीफले।

**तृ(त्र्य)च** न० तिसृणामृचां समाहारः तिस्र ऋचो यत्र वा अच्समा० वा सम्प्रसारणम्। १समानदेवताकानां समानच्छन्दस्कानामृचां त्रये २तद्युक्ते अनुवाकसूक्तादौ त्रि०। "मधुवाता तृचं जपेत्" हेमाद्रिश्राद्धकल्पः। "यात्रोपभोरिति तृचैर्वषड्दयालवत्" कात्या० श्रौ० १७।१।८। छन्दःपरत्वे न० "गायत्रं तृचं दश त्रयीषु विद्यते" निरु० ३।४०। ना संप्रसारणाभावे त्र्यचमप्यत्र।

**तृण** अदने तना० उभ० सक० सेट्। तृणोति तर्णोति तृणुते तर्णुते। अतर्णीत् अतर्णिष्ट। उदित् तर्णित्वा-तृष्ट्वा।

**तृण** न० तृह-नक् लोपश्च। १घासादौ, खडे (खड़)। अमरः। "तृणेन वात्येव तयाऽनुगम्यते" नैष०। "बहुवेश्च तृणं नरः" माघः। तृणस्यायं शिवा० अण्। तार्ण तृणजन्ये वह्नौ पु० "तार्णातार्णोभयं भाक्तीति" जगदीशः। तृणसम्बन्धिमात्रे त्रि०। घोषादि० उत्तरपदस्थे तृणशब्दे पूर्वपदमाद्युदात्तम्। ग्रामतृणमित्यादि। समूहार्थे पाशा० य। तृण्या तृणसमूहे स्त्री तत्र भवः। उत्करा० मत्वर्थे छ नडा० कुक् च। तृणकीय तृणभवे त्रि०।

अल्पं तृणं कन्। तृणक अल्पतृणे "क्रोधोऽप्येतावता तृणकेनापि राजन्!" भा०आ०८१अ०। स्वार्थे क। तत्रार्थे।

**तृणकर्ण** पु० तृणमिव कर्णोऽस्य। ऋषिभेदे ततः शिवा० अपत्यादौ अण्। तार्णकर्ण तद्गोत्रापत्ये। यस्का० बहुषु अणो लुक्। तृणकर्णास्तद्गोत्रापत्येषु ब० व०।

**तृणकाण्ड** न० तृणानां समूहः दूर्वा० काण्डच्। तृणसमूहे

**तृणकुङ्कुम** न० तृणजातं कुङ्कुमम्। सुगन्धद्रव्यभेदे राजनि०। "तृणकुङ्कुमं कटूष्णं कफपित्तविनाशनम्। वातशोफपामकण्डूकुष्ठामदोषनाशनम्। परमं भास्करं तत्तु भिषग्भिः परिकीर्त्तितम्" राजनि० तद्गुणा उक्ताः।

**तृणकुटी** स्त्री तृणाच्छादिता कुटी शा०त०। तृणाच्छादिते गृहे त्रिका०। तृणकुटीरादयोऽप्यत्र (कुड़ेघर)।

**तृणकूर्म्म** पु० तृणमयः कूर्म्मः। तुम्ब्यां शब्दमा०।

**तृणकेतु** पु०तृणेषु केतुरिव श्रेष्ठत्वात् उच्चत्वाद्वा। १वंशवृक्षे, २तालवृक्षे, तृणद्रुमतृणध्वजावप्यत्र। राजनि०। स्वार्थे क। तत्रार्थे।

**तृणगण्ड** पु० तृणमिव गण्डोऽस्य। श्विङ्कटे (उच्चिङ्गड़ा) कीटभेदे मेदि०। [२तृणजलौकायाञ्च।

**तृणगोधा** स्त्री तृणमिव गोधा। १गोधाकृकलासे मेदि०

**तृणगौर** न० तृणमिव गौरं पीतम्। तृणकुङ्कुमे राजनि०।

**तृणग्रन्थि** स्त्री तृणमिव ग्रन्थिरस्य। स्वर्णजीवन्त्याम् राज०

**तृणग्राहिन्** पु० तृणं गृह्णाति ग्रह-णिनि ६त०। नीलमणौ राजनि०।

**तृणचर** पु॰ तृणेषु चरति चर–अच् । १गोमेदमणौ २तृणचारिमात्रे त्रि॰ ।

**तृणजम्भन्** त्रि॰ तृणं जम्भो भक्ष्यमस्य तृणमिव जम्भोदन्तोऽस्य “जम्भा सुहरित तृणदो मेभ्यः” पा॰ कृतसमासान्तः नि॰। तृणभक्षके तृणतुल्यदन्तयुक्ते च । शब्दकल्पद्रुमे श्वदन्तोक्तिः प्रामादिकी पा॰ सू॰ मालतयैव निपातनात् ।

**तृणजलायुका** स्त्री॰ तृणाकारा तृणजाता वा जलायूका जलौकाभेदे । “तद्यथा तृणजलायूका तृणस्यान्तं गत्वात्मानमुपसंहरत्येवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वात्मानमुपसंहरति” शत॰ ब्रा॰ १४।७।२।४। तृणजलूकादयोऽप्यत्र स्त्री “यथा तृणजलूकेयं नापयात्यपयाति च” भाग॰ ४।२९।७६।

**तृणजलौकान्याय** तृणजलौकायाः यथा अपरदेशसंयोगानन्तरं पूर्वदेशवियोगस्तथा जीवस्यापरदेहसंयोगेन पूर्वदेहपरित्यागरूपे न्याये । स च नैयायिकानां तृणजलूकाशब्दे दर्शितस्तुत्या कल्पितः । तदेतन्मतं शा॰भा॰ प्यागङ्का तन्मूलश्रुतेरन्यार्थत्वं प्रदर्श्य दूषयित्वा छा॰ उ॰ पञ्चाग्निविद्युक्तोक्तेः अन्यविध एव संसरणप्रकार उक्तः। यथा “नन्वन्या श्रुतिः तृणजलौकावत् पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति । इति । तद्यथा तृणजलायूकेति, (तृणजलायूकाशब्दे दर्शिता) तत्राप्युपपरिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं तृणजलूकयोपमीयत इत्यविरोधः । एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः कल्पनाः” इत्युपक्रमे ‘ताः सर्वा एवानादर्तव्याः श्रुतिविरोधात्” । “नन्वेतद्देहं त्यक्त्वाऽद्भिः सहगतस्य पश्चाद्देहान्तरप्राप्तिरित्ययुक्तम् । यथा तृणजलायूका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवो देहान्तरं गृहीत्वा पूर्वदेहं त्यजतीति श्रुतिविरोधादिति शङ्कते नन्वेति । इहैव कर्मोपस्थापितदेहं देहोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजतीति श्रुत्यर्थः । अतो न विरोधः, इति समाधत्ते, तत्रापीति भावनायां दीर्घभावो भाविदेहविषयत्वम् । घटाकाशवदुपहितो जीवः सूक्ष्मोपाधिगत्या लोकान्तरं गच्छतीति पञ्चाग्निश्रुत्युक्तः प्रकारस्तद्विरोधादन्याः कल्पनाः अनादर्तव्या इत्यन्वयः” रत्नप्र॰ ।

**तृणजाति** स्त्री तृणमेव जातिः । उलपादौ (खड़) ।

**तृणज्योतिस्** न॰ तृणेषु मध्ये ज्योतिः ज्योतिष्मतः । रात्रौ प्रकाशवत्यां ज्योतिष्मत्यां लतायाम् शब्दार्थचि॰ ।

**तृणता** स्त्री तृणमिव तायते ताय–क्विप् । १धनुषि तृणस्य भावः तल् । २तृणत्वे च मेदि॰ ।

**तृणद्रुम** पु॰ तृणमिव द्रुमः असारत्वात् । १नारिकेले, २ताले, ३गुवाके, ४ताल्यां, ५केतक्यां, ६खर्जूरे, ७हिन्ताले, ८खर्जूर्य्याञ्च । “फलवृक्षे गमेते च हिन्तालसहितास्त्रयः (तालनारिकेलगुवाकाः)खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः” अमरः ।

**तृणधान्य** न॰ तृणमिव धान्यं अकृष्टोत्पन्नत्वात् शाक॰ त॰। –१नीवारे, अमरः २श्यामाकादौ च ।

**तृणध्वज** पु॰तृणेषु ध्वज इव ।१तालवृक्षे २वंशवृक्षे च अमरः

**तृणनिम्ब** पु॰ तृणाकारः निम्बः । नेपालनिम्बे किराततिक्ते (चिरता) राजनि॰ ।

**तृणप** पु॰ तृणं पाति –पा क । गन्धर्वभेदे । “युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा” भा॰ आ॰ १२३अ॰। गन्धर्वोक्तौ ।

**तृणपञ्चमूल** न॰ तृणरूपाणां पञ्चानां मूलम् । कशेरुशररादर्भकाशेक्षुकृते पञ्चमूले वैद्यकम् । [राजनि॰ ।

**तृणपत्रिका** स्त्री तृणस्येव पत्रमस्याः ठन् । इक्षुदर्भायां

**तृणपत्री** स्त्री तृणमिव पत्रमस्याः गौरा॰ ङीष् । गुण्ड्रास्निग्ध्यां राजनि॰ ।

**तृणपदी** स्त्री तृणस्येव पादोऽस्याः अन्त्यलोपः कुम्भप॰ ङीषि पद्भावः । तृणतुल्यमूलयुक्तायां लतायाम् ।

**तृणपीड** न॰ तृणस्येव पीड़ा यत्र । युद्धभेदे “तृणपीडं यथाकालं पूर्ववोर्मं प्रचण्डितम् । एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्” भा॰ स॰ २२अ॰ ।

**तृणपुष्प** न॰ तृणजातं पुष्पम् । तृणकुङ्कुमे १गन्धद्रव्यभेदे राजनि॰। तृणमिव पुष्पमस्याः ङीष् । २सिन्दूरपुष्प्योदृक्षे स्त्री राजनि॰ [स्वार्थे क। तृणपुष्पिकाऽप्यत्र स्त्री मेदि॰।

**तृणपुली** स्त्री तृणनिर्मिता पुली । कटायां (माँच) हारा॰

**तृणमणि** पु॰ तृणग्राहको मणिः शा॰ त॰ । तृणग्राहिणि मणिभेदे हारा॰ ।

**तृणमत्कुण** पु॰ प्रतिभुवि (जामिन्) त्रिका॰ ।

**तृणमय** त्रि॰ तृणस्य विकारः शरा॰ मयट् । तृणविकारे “कुर्यात् तृणमयं चापं शबीत सृगयायिकाम्” भा॰ आ॰ १४५ अ॰ । स्त्रियां ङीप् । [तालवृक्षे अमरः ।

**तृणराज** पु॰ तृणेषु राजते राज–अच् ह॰त॰ टच् समा॰वा ।

**तृणवल्लजा** स्त्री तृणरूपा वल्वजा । वल्वजायां राजनि॰ ।

**तृणविन्दु** ऋषिभेदे “जयद्रथेन पापेन सह कृष्णा क्रोधिता

वने । जातेषु त्वनयाद्येव तृणबिन्दोराश्रमम्” भा० व० ६२अ० ।“तृणबिन्दुप्रसादाच्च धौम्यस्य च महात्मनः” भा० वि० १२ अ० । “द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया” भा० व० २६२ अ० । “चरतः किल दुश्चरं तपः तृणबिन्दोः परिशङ्कितः पुरा” रघुः ।

**तृणबिन्दुसरस्** न० ६त० । तृणबिन्दोः ऋषेः सरोरूपे तीर्थे तत्स्थानं भारते उक्तं यथा “भरभूमेः शिरः ख्यातं तृणबिन्दुसरः प्रति” भा० द० २५७ अ० ।

**तृणबीज** न० ६त० । श्यामाके धान्ये रत्नमा० ।

**तृणशीत** न० तृणेषु शीतम् । १कत्तृणे गन्धतृणे रत्नमा० । २जलपिप्पल्यां स्त्री राजनि० ।

**तृणशून्य** न० १तृणमिव शून्यं फलरहितम् । केतकीपुष्पे २मल्लिकायाञ्च मेदि० तयोः फलरहितत्वात्तथात्वम् । तृणेन शून्यम् । ३तृणरहिते त्रि० ।

**तृणशूली** स्त्री तृणं शूलमिव नोद्धार्यं यस्याः गौरा० ङीष् । लतामेदे । “तृणशालतृणशूल्याश्च विष्णुधारस्य वानि च” (पुष्पाणि) सुश्रु० ।

**तृणशोषक** पुंस्त्री तृणमपि शोषयति शुष–णिच्–ण्वुल् उप० स० । राजिमत्सर्पभेदे । अहिशब्दे ५८१ पृष्ठे दृश्यम्

**तृणशौण्डिका** स्त्री तृणेषु शौण्डिका । मधुकेतकीवृक्षे । पारस्करभिषट्टुः । [हारा० ।

**तृणषट्पद** पु० तृणमिव षट्पदः । (बोलता) वरोले

**तृणसारा** स्त्री तृणस्येव सारोऽस्याः । १कदल्याम् हारा० । तस्याः सर्वथाऽसारत्वात्तथात्वम् ।

**तृणसिंह** पु० तृणे–सिंह इव । कुठारे शब्दार्थक० ।

**तृणसोमाङ्गिरस्** पु०दक्षिणदिक्स्थिते धर्मराजस्य ऋत्विग्भेदे “उन्मुचुः प्रमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान् । दृढव्योऽर्द्धबाहुश्च तृणसोमाङ्गिरास्तथा । मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् । धर्मराजर्त्विजः सप्त दक्षिणां दिशमाश्रिताः” भा० अनु० १५० अ० ।

**तृणस्कन्द** तृणमिव स्कन्दति स्कन्द–अच् । तृणवत्कुलनस्वभावे “तृणस्कन्दस्य तु स्त्रियाः” अष्ट० ४।१७०।१ ।

**तृणहर्म्य** पुंन० तृणमयमपि हर्म्यः । तृणमये हर्म्ये हारा०

**तृणाङ्घ्रिप** पु०तृणमङ्घ्रिपोऽङ्घ्रिपः । अन्यानतृणे राजनि० ।

**तृणाग्नि** पु० तृणजातोऽग्निः शा० त० । तार्णे वह्नौ त्रिका० । “ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति” मनुः ।

**तृणाञ्जन** पु० तृणमिवाञ्जनः । कृकलासे त्रिका० ।

**तृणाटवी** स्त्री तृणप्रचुराटवी । तृणमये वने हेम० ।

**तृणाढ्य** न० तृणेषु आढ्यम् । पर्वतजाते तृणे राजनि० ।

**तृणादि** पु० चातुरर्थ्यां सप्रत्ययनिमित्ते शब्दगणे स च गणः पा० ग० सू० उक्तो यथा

“तृण, नड, मूल, वन, पर्ण वर्ण, वराण, बिल, पुल, फल, अर्जुन, अर्ण, सुवर्ण, बल, चरण, बुस,” ।

**तृणाम्ल** न० तृणेषु अम्लम् । तृणजलवणे राजनि० ।

**तृणारणिन्याय** पु० तृणस्यारणेश्च वह्निजनने यथा परस्परनिरपेक्षतया कारणत्वमेवं स्वातन्त्र्येण कारणताख्यापके न्यायभेदे ।

**तृणावर्त्त** पु०तृणमावर्त्तयति भ्रमयति आ+वृत–णिच्–अण् । १वात्यारूपे वातसमूहे(घूर्णी)२तद्रूपत्वात्तदाख्ये असुरभेदे पु०

**तृणासृज्** न०तृणेषु असृगिव रक्तत्वात् । तृणकुङ्कुमे राजनि०

**तृणेक्षु** पु० तृणमिक्षुरिव मधुररसत्वात् । दक्षजायां राजनि०

**तृणेन्द्र** पु० तृणमिन्द्र इव । तृणराजे ताले वृक्षे । “कश्यप इति ख्यातो भविष्यति धराधरः । त्रिपिराजस्य देवस्य वातकाश्यपयोः सुतः । भ्राजस्तृणेन्द्रो देवश्च भविष्यति दयान्वितः” भा० आनु० १४७ अ० ।

**तृणोत्तम** पु० तृणेषु उत्तमः । ८उदूखले तृणे राजनि० ।

**तृणोद्भव** पु० तृणेषूद्भवति उद्+भू–अच् । १नीवारे धान्यभेदे राजनि० । २तृणजाते वह्नौ च ३तज्जातमात्रे त्रि० ।

**तृणोल्का** स्त्री तृणजाता उल्का । तृणजायामुल्कायाम् “न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया” हितो० “तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः” भा० उ० ३४ अ० । (चर) । हेमच० ।

**तृणौकस्** न० तृणनिर्मितमोकः । तृणनिर्मिते गृहे (खडेर

**तृणौषध** न० तृणात्मकमौषधम् । एलवालुकाख्ये गन्धद्रव्ये शब्दच० ।

**तृण्या** स्त्री तृणानां समूहः पाशा० य । तृणसमूहे ।

**तृतीय** त्रि०त्रयाणां पूरणः त्रि+तीयत् सम्प्रसारणञ्च । त्रयाणां पूरणे । “प्रागुदक्तं प्रथमं कुर्य्यात् पितुरुक्तं तदनन्तरम् । तृतीयं धनदस्य तु मध्यदक्षिणतः परम्” “आद्यः प्रथमतः पिण्डं निर्वपेत् प्रतिवासुतः । द्वितीयन्तु पितुस्तस्मात्तृतीयं तत्पितुः पितुः” मनुः ।

**तृतीयक** पु० तृतीयेऽह्नि भवः रोगः कन् । तृतीयाहभवे ज्वरभेदे स च “दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः” इत्युक्तलक्षणः । “वाताधिकत्वात् प्रवदन्ति तज्ज्ञास्तृतीयकस्यापि चतुर्थकस्य” सुश्रुतः ।

**तृतीयप्रकृति** स्त्री तृतीया प्रकृतिः प्रकारः । क्लीबस्त्रा०

पेक्षया तृतीये प्रकारे नपुंसके अमरः । तत्र तृतीयाप्रकृतिरिति व्यस्तं पदं समस्तत्वे तृतीयप्रकृतिरित्येव स्यात् व्यस्तपाठं दृष्ट्वा शब्दकल्पद्रुमे तृतीयाप्रकृतिशब्दकल्पनं प्रामादिकम् ।

**तृतीययुगपर्य्याय** पु० तृतीयस्य युगस्य द्वापररूपस्य पर्य्यायः परिवर्त्तो यत्र काले । द्वापरयुगस्य परिवर्त्ताधारे कलिसन्ध्यारूपे काले "द्वापरे समनुप्राप्ते तृतीययुगपर्य्यये" भाग० १।४।१५ श्लो० । इतः परं किं भविष्यतीति द्वापरे सन्देहे जाते इत्यर्थः तेन न विरोधः ।

**तृतीयसवन** न० सूयते सोमोऽस्मिन् कर्म्म० । बालवने सवनत्रयोपेताग्निष्टोमादेः तृतीये सवने । तद्विधानादि ताण्ड्यब्रा० १।६।१७ भाष्ये उक्तं यथा "तृतीयसवनारम्भमादित्यग्रहमाचरेत् । आर्भवेण स्तुवीत च पवमानैः प्रचरन्ति च । सावित्रवैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा । पात्नीवतग्रहादूर्द्ध्वं यज्ञायज्ञीयसंस्तवः । अग्निमारुतशस्त्रं स्यात् प्रचरेद्धारियोजनम् । समाप्ते सवने पश्चात् कुर्य्यादवभृथं ततः । कुर्य्यादुदयनीयेष्टिमनूबन्ध्यां यजेत गाम् । देविकाभिर्हविर्भिश्च उदवसानीयामपि यजूंष्यत्र । उपोष्य वेदिमाग्नेयमिष्टाग्निष्टोमसंस्थितिः" "प्रातः सवने मन्द्रैः कर्म्माणि" कात्या० श्रौ० ८।६।१८ "प्रातः सवने यान्युच्चैः कर्म्माणि प्रैषोच्चारणादीनि तान्यपि प्रथमस्वरेणैव कार्य्याणि "मन्द्रं प्रातः सवने चरन्तीति" शाखान्तरात् । अतश्चाग्नीदग्नीन्विहरेत्यादयः प्रैषा आश्रावणादयश्च प्रथमस्वरेणैव प्रयोक्तव्याः" कर्कः । "मध्यमेन माध्यन्दिने" १९सू० "माध्यन्दिने सवने यानि कर्म्माणि नीचैर्यानि चोच्चैस्तान्युभयान्यपि मध्यमेन स्वरेण कार्य्याणि शाखान्तरे तथा श्रवणात्" कर्कः । "उत्तमेन तृतीयसवने" २०सू० "तृतीयसवने यानि नीचैर्य्याणि च मध्यमेन स्वरेण प्राप्नुवन्ति तानि सर्व्वाण्युत्तमेन तृतीयेनैव स्वरेण कार्य्याणि तथैव शाखान्तरे श्रुतत्वात्" कर्कः ।

**तृतीया** स्त्री० तृतीय+टाप् । १चन्द्रमण्डलस्य तृतीयकलाक्रियायां २तदुपलक्षिते कालभेदे च तत्र कृत्यादिकालव्यवस्थादि तिथिशब्दे ३२८९ पृ० दर्शितम् । जन्मनक्षत्रापेक्षया ३तृतीयद्वादशैकविंशात्मकनक्षत्ररूपविपत्तारायाम् ।

**तृतीयाकृत** त्रि० तृतीय+डाच्+कृ–क्त । १त्रिगुणं कृष्टे क्षेत्रादौ ।

**तृतीयाश्रम** पुंन० कर्म्म० । वानप्रस्थाश्रमे । "उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात् परम् । वलीपलितसंयुक्तस्तृतीयन्तु समाश्रयेत्" संवर्त्तस० ।

**तृतीयिन्** त्रि० तृतीय+अस्त्यर्थे इनि । तृतीयभागार्हे । "सर्व्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" मनुः । दक्षिणागोधनविभागे ।

**तृत्सु** त्रि० तृद–बा० सुक् । हिंसके । "गव्या तृत्सुभ्यो अजगन्युधा नृन्" ऋ० ७।१८।७ । "तृत्सुभ्यो हिंसकेभ्य" । भा० २राजर्षिभेदे "अानवस्य तृत्सवे गयम्" ऋ० ७।१८।१३ । तृत्सुं राजर्षिभेदम्" भा० । [प्रतर्द्दनः ।

**तृद** हिंसायां भ्वा० प०सक० सेट् । तर्द्दति अतर्दीत् ततर्द्द ।

**तृद** अनादरे रु० उभ० सक० सेट् । तृणत्ति तृन्ते । इरित् अतर्दीत् अतृदत् अतर्द्दिष्ट । उदित् तर्द्दित्वा तृत्त्वा । "भूतिं तृणद्मि यथायथम्" भट्टिः "कृतस्य स्रोतो बधिरा ततर्द्द" ऋ० ४।२३।८ "ततर्द्द तरसा विष्णुर्बाणैः शतुवबाह्र्नः" हरिवं० १२४ अ० । "सेहे कपीरथाश्चांश्च रिपोस्ततर्द्द शाखिना" "अतर्दीन्नैव शूलेन कुम्भकर्णः प्लवङ्गमान्" भट्टिः ।

**तृदिल** त्रि० तृद–बा० किलच् १भेदके २भिन्ने च । "तृदिला अतृदिलासः" ऋ० १०।९४।११ । "तृदिला भेदकाः अतृदिला अभिन्नाः" भा० ।

**तृन्प(म्प)** प्रीणने तु० पर० सक० सेट् । तृपति तृम्पति अतृम्पीत् अतृपीत् । ततृम्प ततर्प ।

**तृन्फ(म्फ)** प्रीणने तु० प० सक० सेट् । तृफति तृम्फति अतृम्फीत् अतृफीत् ततृम्फ ततृफ ।

**तृन्ह** हिंसे तु० प० सक० सेट् क्त्वा वेट् । तृंहति तृंहीत् अतृंहत् । ततृंह ततृंहतुः ततृंहुः ।

**तृप** प्रीणने स्वा० पर० सक० सेट् । तृप्नोति अतर्पीत् । ततर्प ।

**तृप** सन्दीपने प्रीणने च वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त । अतर्पीत् । ततर्प तर्पयाञ्चकार ।

**तृप** प्रीणने दि० पर० सक० वेट् इरित् । तृप्यति अतर्पीत् अताप्सीत्-अत्राप्सीत्-अतृपत् । ततर्प ।

**तृप** प्रीणने तु० पर० सक० सेट् । तृपति अतर्पीत् । "तृपत्सोम पाहि" ऋ० २।११।१५ ।

**तृपत** पु० तृप । चन्द्रे उणादि० । [संक्षिप्तसा० ]

**तृपाला** स्त्री तृप–कालन् । १लतायाम् २उषा० ।

**तृपल** न० तृप–कलच् । १उपले प्रस्तरे । "अपां तक्षस्तृपल-

भर्मा" ऋ०।१०।८८।५। तृपलप्रभर्मा धावादिभिः क्षिप्रप्रहारी" भा०। २त्रिफलायाञ्च।

तृप्त त्रि० तृप–क्त। १तृप्तियुक्ते। "नित्यं तृप्ता महेन्द्रस्य देवाश्चास्य धर्मतः" भा०व०५८अ०। "स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः। पितरः पादशौचेन सिद्धान्नेन गृही यतिः" पु०।

तृप्ति त्रि० तृप–क्तिन्। भोजनादिना आकाङ्क्षितानिवृत्तौ "वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी" मनुः। "तस्यालमेषा क्षुधितस्य तृप्त्यै" रघुः।

तृप्तिमत् त्रि०तृप्ता०अस्त्यर्थे इनि तृप्तमनेन इष्टादि० इनि वा। १तृप्तियुक्ते स्त्रियां ङीप्। २उदके निघण्टुः।

तृप्नु त्रि० तृप–क्नु। तृप्तिशीले।

तृप्र पु०तृप–रक्। १पुरोडाशे उज्ज्वलद०। २तर्पके त्रि० "न यं युक्तो न दुराधीर्न तृप्राः" ऋ० ८।२।५ "तृप्रास्तर्पकाः" भा० ३दुःखे न० ततः अर्शआद्यच्। तृप्रास्तु तदर्हने। "तृप्रं दुःखमिति माधवः" सि०कौ०। ४घृते न० उणादि०।

तृफ प्रीणने तुदा० पर० सक० सेट्। तृफति अतर्फीत्। ततर्फ। तृफतेरपि शश् इत्युज्ज्वलदत्तः। दुर्गादासस्तु अयं तृफादित्वभ्रान्त्या तृम्फतीत्युदाजहार। तन्निन्त्यं धा० तृफादिमध्ये तृफधातोरनुत्कीर्तनात् उज्ज्वलदत्तेन तृफते रिति निर्देशाच्च। तृफादयस्तु सि०कौ०१५६२ आदौ दृश्याः। तृम्फादिशब्दे दृश्यः।

तृफला स्त्री तृफ–कलच्। त्रिफलायाम् उज्ज्वलद०।

तृफू स्त्री तृफ–कू। कर्णजातौ उणादि०।

तृम्फादि "तृम्फ तृम्फ तृम्फ दृम्फ ऋम्फ गुम्फ उम्फ शुम्फ" पा० धातुपाठोक्ते धातुगणभेदे।

तृष तृष्णायां दिवा०पर०सक०सेट्। तृष्यति इरित् अतृषत् अतर्षीत्। ततर्ष। "तृषित्वेवामिमं आशु पिबन्तं सरितां पयः"। "समूर्च्छुर्दैवमूरत्तं ततृषुश्चोभये भटाः" "रत्नमत्योऽलिषुः क्षुधाः ततार्षुः कपयोऽतृषन्" भट्टिः।

तृष्(षा) स्त्री तृष–सम्प०क्विप् वा टाप्। १आकाङ्क्षायां २पिपासायां ३कामकन्यायाञ्च मेदि०। ४लाङ्गलीवृक्षे शब्दच० "लोभो जनयते तृषां तृषार्त्तो दुःखमाप्नोति" हितोप०। "तृषा हि मे सुमहती त्वां दृष्ट्वा तृट्समन्वितम्" भा० आश्व०५५ अ०। "न हन्ति मण्डूककुलं तृषाकुलः" ऋतु०।

तृषाभू स्त्री ६त०। तृष्णाधारे क्लोमनि शब्दच०तृष्णाशब्दे चरकवाक्ये क्लोम्नस्तृष्णाजनकत्वं दृश्यम्। [(भीरी)स्त्री शब्दच०

तृषाह न० तृषां हन्ति हन–ड। १जले २मधुरिकायां

तृषित त्रि०तृषा जाताऽस्य तार०इतच्। १तृष्णान्विते हेमच० "तृषिताञ्चाहवे भोक्तुं स्वमांसानि वै भवान्" हरिवं० ८१अ०। [शब्दच०।

तृषितोत्तरा स्त्री तृषित उत्तरः यस्याः। अशनपर्ण्याम्

तृषु न० तृ–रुर–वा कुक् पृषो०। १क्षिप्रे निघण्टुः। २तद्वति त्रि० स्त्रियाम् उदन्तगुणवाचकत्वात् ङीप्। "तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि" ऋ० ४।४।१। "तृष्वि क्षिप्रनाम भरतेर्वा त्वरतेर्वा निरु०" भा०। "तृषु यदन्ना तृष्वणा" ऋ० ४।७।११।

तृष्ट त्रि० तृष–क्त नेट् वा० ह्रस्वभावः। १दाहजनके "तृष्टमेतत् कटुकमेतत्" ऋ० १०।८५।३४। "तृष्टं दाहजनकम्" भा०।

तृष्टामा स्त्री तृष्टं दाहममति गमयति अम णिच्–अच् १नद्याम् "तृष्टामया प्रथमं यातवे" ऋ०१०।७५।६। "तृष्टामया नद्या" भा०।

तृष्णज् त्रि० तृष नजिङ्। १लुब्धे अमरः। "असिञ्चन्नुत्सं गोतमाय तृष्णजे" ऋ० १।८५।११।

तृष्णा स्त्री०तृष न किच्च। १पिपासायां, २लोभे, ३अप्राप्ताभिलाषे च अमरः ४रोगभेदे। तन्निदानादि भावप्र० उक्तं यथा

"भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्द्ध्वं चितं पित्तविवर्द्धनैश्च। पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत् पिपासाम्। स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः। तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च। भुक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशस्तु"। नराणां चितं सस्थान एव सञ्चितं पित्तं सवातं पित्तविवर्द्धनैः कट्वम्लोष्णादिभिः कुपितम्। भयश्रमाभ्यां बलसंक्षयाद्वा उपघातादेव वातः कुपितः। तद्द्वयं ऊर्द्ध्वं प्रसरत् तालुप्रपन्नं सत् पिपासां जनयेत्। न केवलं तालुन्येव दूषिते तृष्णा भवति किन्तु जलवाहिस्रोतःस्वपि। अत आह। स्रोतःस्वित्यादि। नन्वत्र बहुवचनमयुक्तम्। यतो जलवहे द्वे स्रोतसी सुश्रुतेनोक्ते। उच्यते। तयोरेवानेकप्रतानयोगाद् दोषः। अपांवाहिषु स्रोतःस्विति जिह्वादेरप्युपलक्षणम्। यत आह चरकः। "रसवाहिनीश्च धमनीर्जिह्वाहृदयगलतालुक्लोम्नश्च। संशोष्यात्र नृणां देहे कुरुतस्तृष्णामतिबलौ पित्तानिलाविति"। षड्विधामाह तिस्र इत्यादि। तृष्णायाः सामान्यं लक्षणमाह।

"सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति। मुहुः काङ्क्षति तोयन्तु तं तृष्णार्द्दितमादिशेत्। वातजायालक्षणमाह। क्षामास्यता मारुतसम्भवायां तोदस्तदा शङ्खशिरःसु चापि। स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति"। शङ्खशिरःसु शङ्खयोः शिरसि च। स्रोतो निरोधः। पित्तजामाह "मूर्च्छान्नविद्वेषविलापदाहरक्तेक्षणत्वं प्रततश्च शोषः। शीताभिनन्दो मुखतिक्तता च पित्तात्मिकायां परिधूपनञ्च"। विलापः प्रलापः प्रततश्च शोषः अविरतश्च शोषः। शीताभिनन्दः शीतेच्छा। परिधूपनं कण्ठाद्धूमनिर्गम इव। कफजामाह। "वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेन्नरस्य। निद्रागुरुत्वं मधुरास्यता च तयार्द्दितः शुष्यति चातिमात्रम्"। अग्नौ जठराग्नौ। कफसंवृते स्वकारणकुपितेन कफेनोपरिष्टादाच्छादिते। वाष्पावरोधात् अग्नेरूष्मावरोधात्। अवरुद्धानलोष्मणाम्बुवहस्रोतःशोषणात् बलासेन कफेन नरस्य तृष्णा भवेत्। तया तृष्णया अर्द्दितः पीड़ितः शुष्यति कृशो भवति। क्षतजामाह। "क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु"। क्षतस्य शस्त्रादिक्षतयुक्तस्य। रुक् पीड़ा। क्षयजामाह। "रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु। पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः। रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग् व्यवस्येत्"। रसक्षयलक्षणानि सुश्रुतेनोक्तानि "रसक्षये हृत्पीड़ा कम्पः शोषः शून्यता तृष्णा चेति"। व्यवस्येत् जानीयात्। आमजामाह। "त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री"। भुक्तोद्भवामाह। "स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति"। लवणञ्चेति चकारात् कटु च। उपसर्गजामाह "क्षीणस्वरः प्रताम्यं दीनाननहृदयशुष्कगलतालुः। भवति खलु सोपसर्गात् तृष्णा सा शोषिणी कष्टा"। शोषिणी धातुशोषिणी। उपसर्गानाह। "ज्वरमोहं क्षयः श्वासो वाधिर्य्यं कास एव च। बहिर्निर्गतजिह्वत्वं सप्तैते तदुपद्रवाः"। तद्युक्तायां अरिष्टमप्याह "ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहिनाम्। सर्वास्त्वतिप्रसक्तारोग कृशानां वमिप्रसक्तानाम्। घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः"। आदिशब्दादतीसारादीनां ग्रहणम्। अतिप्रसक्ताः निरन्तराः। घोरोपद्रवयुक्ताः अतीव मुखशोषादियुताः।

तृष्णाशब्दस्य वरत्रीशब्देन द्वन्द्वे उभयपदे प्रकृतिस्वरः।

**तृष्णाक्षय** पु० तृष्णायाः क्षयो यत्र। १शान्तिगुणे हेमच०। ६त०। २पिपासानाशे च।

**तृष्णारि** पु० ६त०। १पर्पटे राजनि०। २तृष्णानाशके च।

**तृष्णालु** त्रि० तृष्णा+अस्त्यर्थे आलु। तृष्णायुक्ते। "तृष्णालुर्भवति पूतनाभ्दृहीतः" सुश्रु०।

**तृष्य** त्रि०तृष–ऋदुपधत्वात् क्यप्। १लोभ्ये २एषणीये। भावे क्यप्। ३लोभे न०। तृष्यमस्त्यस्य मतुपि वेदे दीर्घः। तृष्यावत्। तृष्णायुक्ते। "अध्यवर्त्तित् तृष्यावतः प्राष्ट्रष्यागतायाम्" ऋ०७।१०३।३। तृष्यावतस्तृष्णावतः" भा०।

**तृह** हिंसे तु० पर० सक०वेट्। तृहति अतर्हीत् अतृक्षत्।

**तृह** हिंसे वा चु० उ० पक्षे रुधा० पर० सक० वेट्। तर्हयति ते तृणेढि अततर्हत् त अतीतृहत् त अतर्हीत् अतृक्षत्। "तृणेढु रामः सह लक्ष्मणेन" भट्टिः।

**तॄ** तरणे प्लवने अभिभवे च भ्वा० प० सक० सेट्। तरति अतारीत्। ततार। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" "तरति शोकमात्मवित्" श्रुतिः शत०ब्रा०१४।७।१।२२ "ततार ताराधिपखण्डधारी" कुमा० "क्रमेण तस्मिन्नथ तीर्थदृक्पथे" नैष०। तेरतुः। तरीरिता तरि(री)ष्यति। तीर्य्यात्। तरीतुं तरितुं तीर्त्वा तीर्य्यते। तारयति तितीर्षति। "तितीर्षुर्दुस्तरं मोहात्" रघुः। "तास्तु ततुं प्रयच्छामीत्यत्रार्षः इड्भावः।

अति+अतिक्रम्य गमने। "स्वर्गानतितरन्ति ते" हितो०। "न यस्य कश्चातितितर्त्ति मायाम्" भाग०८।५।३०। यङ्लुक्रूपम्।

वि+अति+विशेषेण अतिक्रमे। "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति" गीता। [नीम्" भा० द्रो० २८०।

अभि+उल्लङ्घने। "कथं नाभ्यतरामस्तां पाण्डवानामनीकि-

अव+अवगमने। "अथोरुदेशादवतार्य्य पादम्" कुमा०। अवतारः। "अवतरतः सिद्धिपथं शब्दस्य मनोरथस्य वा" मालविकाग्नि०।

उद्+उत्थाने अक०। "सपल्वलोत्तीर्णवराहयूथम्" रघुः। उल्लङ्घने सक०। "उदतारीदुदन्वन्तम्" "उदतारिषुरम्भोधिम्" भट्टिः। [१५५६६ श्लो०।

निस्+निःशेषेण तरणे। "कथन्नु निस्तरेयाशात्" भा०व०

वि+दाने। "तड़िल्लेखालक्ष्मीर्वितरति पताकावलिरियम्" "ज्योत्स्ना शङ्कामिह वितरति" किरा०।

सम्+सम्यक् तरणे (साँतार देओया)।

**ते** अव्य॰ तन–बा॰ डे । १त्वयेत्यर्थे त्रिका॰ । २गौर्य्यां तेनशब्दे दृश्यम् ।

**तेगा** स्त्री तिज–पुंसि च अस्य गः । अप्रसिद्धदेवताभेदे । "शादं दद्भिरवकां दन्तमूलैर्मृदं वर्स्वैस्तेगां दंष्ट्राभ्याम्" यजु॰ २५।१। "तेगां देवतां शादादयोऽप्रसिद्धा देवाः आदित्यादयः प्रसिद्धाः देवाः" वेददीपः । [अतेजीत् । तितेज ।

**तेज** निशाने पालने च भ्वा॰ पर॰ सक॰ सेट् । तेजति

**तेजःफल** न॰ तेजसे फलमस्य तेजः फलति–फल अच् वा । (तेजबल) वृक्षभेदे "तेजःफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनो मतः । वातश्लेष्मादिविघ्नश्च वाकरवाकरः स्मृत इति" भावप्र॰ ।

**तेजन** पु॰ तेजयति भस्मयत्यग्निं वा तिज–णिच्–ल्यु । १वंशे २मुञ्जे च अमरः संज्ञायां कन् । ३शराभिधे तृणे, करणे ल्युट् । क्लीब् । ४मूर्वायां, ५ज्योतिष्मत्याञ्च स्त्री ङीप् । राजनि॰ । ६भस्मे अमरः ।

**तेजपत्र** न॰ तेजयति तिज–णिच्–अच् तेजं पत्रमस्य । (तेजपात) ख्याते वृक्षभेदे । "तेजपत्रं वराङ्गं स्यात् त्वचं चोचं तथोत्कटम् । त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम् । पित्तलं कफवातघ्नं कण्ठ्यमामविनाशनम् । हृद्बस्तिरोगवातार्शःकृमिपीनसशुक्रहृत्" भावप्र॰ ।

**तेजल** पु॰ तिज–करणे कलच् । कपिञ्जलपक्षिणि राजनि॰ ।

**तेजस्** न॰ तिज–भावे करणादौ असुन् । १दीप्तौ २प्रभावे ३पराक्रमे ४रेतसि च मेदि॰ । ५देहजकान्तौ ६नवनीते ७वह्नौ च हेमच॰ । ८सुवर्णे ९मज्जनि १०पित्ते च राजनि॰ । सा॰ द॰ उक्ते सात्त्विके अधिक्षेपापमानादेरसहनरूपे ११नायकगुणभेदे यथा

"शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी । ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः" इत्युद्दिश्य "अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्" सा॰ द॰ लक्षितम् । १२सारे "रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खल्वोजस्तदेव बलमित्युच्यते" सुश्रु॰ १३प्रागल्भ्ये १४पराभिभवसामर्थ्ये । १५परैरनभिभाव्यत्वे । १६अप्रतिहताज्ञत्वे । १७चैतन्यात्मके ज्योतिषि । १८स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वे । १९सत्त्वगुणजाते लिङ्गदेहे । २०हयवेगे ।

"तेजोनाम दर्पपराभवासहत्वगुणविकारः प्रकाशकोऽन्तःसारविशेषः । यथाह भोजराजः "तेजोनिसर्गजं तस्य वाजिनां स्फुरणं रजः । क्रोधश्च इति घेयाश्वयोऽपि सहजा गुणाः" । तच्च द्विविधम् । सततोत्थितं भयोत्थितञ्चेति । यथाह स एव "धाराश्च योषितानाञ्च निसर्गात् प्रेरणं विना । अवच्छिन्नमिवाभाति तत् तेजः सततोत्थितम् । कशापादादिघातैर्यत् शाश्वसात् स्फुरितन्तु तदिति" । शब्दस्पर्शतन्मात्र सहितात् रूपतन्मात्राडुत्पन्ने शब्दस्पर्शरूपगुणे २१तृतीये महाभूते । यथा "तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते । अधिभूतं ततो रूपं सूर्य्यस्तत्राधिदैवतम्" भा॰ आश्व॰ उष्णस्पर्शवत्तेजः । "तद्द्विविधम् । नित्यमनित्यञ्च । नित्यं परमाणुरूपम् । अनित्यं कार्य्यरूपम् । पुनस्त्रिविधम् । शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्त्ति विषयश्चतुर्विधः; भौमदिव्यौदर्य्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरौदर्य्यम् । आकरजं सुवर्णादि" तर्कसंग्रहः "स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् । नैमित्तिकं द्रवत्वन्तु नित्यतादि च पूर्ववत् । इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः" इति भाषाप॰ ।

उपचारात् २२तेजस्विनि च । "नैषि तेजस्विनोच्छिष्ट आचमेत कदाचन" "अग्निं गां ब्राह्मणं चैव" भा॰ आनु॰ ५॰१७ श्लो॰ । स्वपरप्रकाशकं तेजः अन्धकारविरोधि तच्चायञ्च शुक्लभास्वररूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । तेजसो गुणादिकमग्निशब्दे ४८ पृ॰ दृश्यम् । "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः" माघः । भुक्ततेजसः कार्य्यञ्च छा॰ उ॰ दर्शितं "तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् । "अन्नमयं हि सोम्य ! मन आपोमयः प्राणस्तेजोमयी वागिति च" तेजोभूतस्य वाक्कार्य्यमपां कारणञ्च । यथोक्तं "अद्भिः सोम्य ! शुङ्गेन तेजोमूलमन्विच्छ" छा॰ श्रुतिः २३रजोगुणे तैजसशब्दे दृश्यम् तेजसा निर्वृत्तः अण् तेजोजन्ये त्रि॰ । तेजस्+अस्त्यर्थे विनि । तेजस्विन् मतुप् मस्य वः तेजस्वत् । तेजोविशिष्टे त्रि॰ स्त्रियां सर्वत्र ङीप् । तेजसी तेजस्विनी तेजस्वती । २४ वीर्य्ये च । [द्रव्ये स्त्रियां ङीप् ।

**तेजस्कर** त्रि॰ तेजः करोति कृ–हेत्वादौ ट । तेजोहेतौ

**तेजस्य** त्रि॰ तेजसि साधु यत् । तेजःसाधने "यावापिन्द्रावरुणा सहस्या रजस्या तेजस्या तनूः" तै॰ सं॰ २।३।१३।१ ।

**तेजस्वत्** त्रि॰ तेजस्+अस्त्यर्थे मतुप् मस्य वः । तेजोयुक्ते

"तेजस्वदस्तु सुखम्" तैत्ति० १।७,७।१। स्त्रियां ङीप् सा च २गजपिप्पल्यां शब्दरत्ना० ३चविकायां रत्नमाला ४महाज्योतिष्मत्यां राजनि०। अत्र संज्ञात्वेन सान्तत्वात् मस्य पदत्वाभावे तेजोवतीत्यपि तत्रार्थे।

**तेजस्विन्** त्रि० तेजस्+अस्त्यर्थे विनि। तेजोयुक्ते "तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते" माघः। स्त्रियां ङीप्। सा च २ज्योतिष्मतीलतायां शब्दर०। ३महाज्योतिष्मतीलतायाम् राजनि०। "तेजोस्विनी कफश्वासकासाऽऽस्यामयवातहृत्। पाचन्युष्णा कटुस्तिक्तारुचिवह्निप्रदीपनी" भावप्र०।

**तेजित** त्रि० तिज–णिच्–क्त। शाणिते तीक्ष्णीकृते अमरः

**तेजिष्ठ** त्रि० तेजस्विन्+अतिशये इष्ठन् विनेर्लुकि टिलोपः। अतिशयेन तेजस्विनि। "तेजिष्ठया तिग्मस्य वर्तनी" ऋ०१।५३।८।

**तेजीयस्** त्रि० तेजस्विन्+अतिशये ईयसुन् विनेर्लुकि टिलोपः। अतितेजस्विनि। "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा" भाग० १०।३३।२९। स्त्रियां ङीप्।

**तेजेयु** पु०रौद्राश्वनृपस्य पुत्रभेदे। "रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः" इत्युपक्रमे। "तेजेयुर्बलवान् धीमान् सत्येयुरिन्द्रविक्रमः" भा० आ० ९४ अ०।

**तेजोनाथ** तीर्थभेदे शिवपु० दृश्यम्। [रत्नमा०।

**तेजोमन्थ** पु०तेजो मथ्नाति मन्थ-अण्। गणिकारिकायाम्।

**तेजोमय** त्रि० तेजस्+प्रचुरार्थे विकारे वा मयट्। १तेजःप्रचुरे २तेजोविकारे ३ज्योतिर्मये च। स्त्रियां ङीप्। "तेजोमयी वाक्" इति छा०उ० श्रुतिः। "तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः" मनुः।

**तेजोमात्रा** स्त्री तेजसां सत्त्वगुणानां मात्रांऽशः। इन्द्रियेषु भूतानां सात्त्विकांशेभ्य एव तेषामुत्पत्तिः सांख्यसिद्धा।

**तेजोमूर्त्ति** पु० तेजस्तेजस्वती मूर्त्तिर्यस्य। १सूर्य्ये २तेजआत्मके ३तेजःप्रचुरे च, त्रि०। "स गच्छति परं स्थानं तेजोमूर्त्तिः पथर्जुना" मनुः।

**तेजोरूप** न० तेजः सर्वप्रकाशकं चैतन्यं रूपं स्वरूपं यस्य। ज्योतीरूपे प्रकाशात्मके ब्रह्मणि "अशरीरं शिवपरवदिन्द्रियवदतीन्द्रियम्। यदसाक्षि सर्वसाक्षि तेजोरूपं नमाम्यहम्" ब्रह्मवै० पु०। इत०। २तेजसो रूपे च वह्निशब्दे तद्रूपं दर्शितम्।

**तेजोवत्** त्रि०तेजस्+अस्त्यर्थे मतुप् मस्य वः वा०न पदत्वम्। तेजोयुक्ते स्त्रियां ङीप्। सा च (तेजस्वत्)शब्दोक्तार्थेषु।

"तेजोवता लोकगणेन सार्द्धम्" मत्स्यपु०।अग्न्यावाहनमन्त्रः

**तेजोविन्दु** पु०उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।[राजनि०।

**तेजोवृक्ष** पु० तेजोयुक्तः वृक्षः शा० त०। क्षुद्राग्निमन्थवृक्षे

**तेजोवृत्त** न० तेजसः वीर्य्यस्यानुरूपं वृत्तम्। वीर्य्यानुरूपचरिते। "इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्" मनुः।

**तेजोह्वा** स्त्री तेजः ह्वयते स्पर्द्धते ह्वे–क। तेजस्विन्यां लतायाम् भावप्र०। "कम्पिल्लकं सविन्दूरं तेजोह्वा तत्यकारये" सुश्रु०। [२। "तेदनीं देवता प्रीणामि" वेददी०।

**तेदनी** स्त्री देवताभेदे "तेदनीमधरकण्ठेनापः" यजु० २५।

**तेन** अ०तद्+वा०एन ।१तद्रूहेनेत्यर्थे भरतः। ते इति न इति शब्दौ यत्र। २गानाङ्गभेदे पु०। "तेनेति शब्दस्तेनः स्यान्मङ्गलानां प्रदर्शकः। तेशब्देनोच्यते गौरी नशब्देनोच्यते हरः। तेन माङ्गलिकत्वायं शब्दस्तेन इति स्मृतः" सङ्गी० दा०।

**तेप** क्षमे, च्युतौ च भ्वा० आ० अक० सेट्। तेपते अतेपिष्ट। तितेपे। ऋदित्। अतितेपत् त।

**तेम** पु० तिम–घञ्। आर्द्रीभावे। अमरः।

**तेमन** न०तिम–ल्युट्।१आर्द्रीकरणे। कर्मणि ल्युट्।२व्यञ्जने। अमरः। आधारे ल्युट् ङीप्। ३चुल्लीभेदे हेमच०।

**तेलु** पु०नृपभेदे ततः राजन्या०विषये देशे वुञ्। तैलवक तेलुनृपविषये देशे। [तितेवे। ऋदित् अतितेवत् त।

**तेव** क्रीडने भ्वा० आ० अक० सेट्। तेवते अतेविष्ट।

**तेवन** न०तेव–भावे ल्युट्। १क्रीडायाम्। आधारे ल्युट्। २केलिकानने हेमच०।

**तेक** पु०तिक्कं व्याख्यानः ग्रन्थः अञ्। तिक्कं व्याख्याने ग्रन्थे

**तैजस** न० तेजसो विकारः अण्।१घृते, २धातुद्रव्यमात्रे च। साङ्ख्योक्ते ३रजोगुणोत्पन्ने त्रि०। "वैकारः सात्त्विको नाम तैजसः राजसः स्मृतः। भूतादिस्तामसश्चोऽपि पृथक् तत्त्वान्यथासृजत्" पदार्थादर्शधृतवाक्यम्।

"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" सा०का०। "ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्य्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यत आह तैजसादुभयं तैजसात् राजसादुभयं गणद्वयं भवति। यद्यपि रजसो न कार्य्यान्तरमस्ति तथापि सत्त्वतमसी स्वयं क्रियासमर्थे अपि न स्वस्वकार्य्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्य्यं कुरुत इति तदुभयस्मिन्नपि कार्य्ये सत्त्वतमसोः

क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इतित०कौ०। तिज निशाने इत्यस्मादसुन् तेन तेजसा ततः तैजसः रजसश्च सत्वतमसोः स्वस्वतेजकार्यं प्रवर्त्तकत्वरूपतेजस्करणगुणयोगात् तेजःपदाभिधेयता इति तदाशयः "तैजसादिन्द्रियाण्याहुः" सा०त०। सत्त्वगुणस्य प्रकाशकत्वात् "तैजसमन्तःकरणमिति" वेदान्तप०। ४तीर्थभेदे न०। "तैजसं नाम तत्तीर्थं यत्र तीर्थेश्वराणां पतिः। अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ।" भा०श०४७ अ० एतदग्रवच्छ्रुपहितं चैतन्यं तैजसो भवति। तैजसव्यान्तःकरणोपहितत्वात्" वेदान्तसारोक्ते ५चैतन्यभेदे पु०।

**तैजसावर्त्तनी** स्त्री तैजसं धातुद्रव्यमावर्त्त्यतेऽत्र आ+वृत णिच्-आधारे ल्युट् ङीप्। मूषायाम् (मुची) अमरः

**तैतल** पु० ऋषिभेदे ततः तिका० अपत्ये फिञ्। तैतलायनि तदपत्ये पुंस्त्री।

**तैतिक्ष** त्रि०तितिक्षा शीलमस्य छत्रादि० ण। तितिक्षाशीले।

**तैतिक्ष्य** पुंस्त्री० तितिक्षस्य ऋषिभेदस्य गोत्रापत्यं गर्गा० यञ्। तितिक्षर्षिगोत्रापत्ये तस्य छात्राः कण्वा० अणि यञो लोपः। तैतिक्षाः तैतिक्ष्यस्य छात्रेषु ब०व०।

**तैतिर** पुंस्त्री० तैत्तिर इषो०। (तितिर) खगे राजनि०। स्त्रियां ङीष्।

**तैतिल** पु० १गण्डकपशौ। २ववादितस्तदर्थं करणे न० मेदि०। ३देवे च। "भक्तिस्तवेन दानेनावाधितधरणीतलतैतिलगणः" दशकु०। तैतिलयवदस्य कद्रूयवदेन समासे पूर्वपदप्रकृतिस्वरः।

**तैतिलिन्** पु० गोत्रप्रवर्त्तकर्षिगणस्य प्रवरभेदे।

**तैत्तिर** न० तित्तिरीणां समूहः अण्। तित्तिरखगसमूहे। तित्तिर+स्वार्थे अण्। (तितिर) खगभेदे पुंस्त्री राजनि०। गण्डकपशौ च मेदि०।

**तैत्तिरि** पु० कुकुरवंश्यनृपभेदे। "कुकुरस्य सुतो वृष्णुर्वृष्णोऽस्तु तनयस्तथा। "कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत्"। हरिव० ३८अ०। २ऋषिभेदे। आद्यः कठस्तैत्तिरिश्च वैशम्पायनपूर्वजः" भा० शा० ३३८ अ०। ३कृष्णयजुःप्रवर्त्तके ऋषिभेदे।

**तैत्तिरीय** पु०ब०व०तित्तिरिणा प्रोक्तमधीयते छण्। १तित्तिरिप्रोक्तशाखाध्येतृषु स्वार्थे क। तैत्तिरीयकास्तत्रार्थे। यजुःशाखाभेदे। तन्नामनिरुक्तिः यथा। "देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम्। ततो गतोऽथ मुनयोददृशुस्तान् यजुर्गणान्। यजूंषि तित्तिराभूत्वा तल्लोलुपतया ददुः। तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः" भाग० १२।

**तैन्तिडीक** त्रि० तिन्तीडिकेन संस्कृतम् कोपधत्वात् अण्। तिन्तिडीकसंस्कृतव्यञ्जनादौ। तस्य विकारः कोपधत्वात् अण्। २तिन्तिडीकविकारे च।

**तैमिर** तिमिरमेव अण्। नेत्ररोगभेदे "ईषं कृष्णाभिरक्तान्यकाचात् नीलीरोगं तैमिरात्रलेन" सुश्रु०। तैमिरो रोगोऽस्त्यस्य ठन् तैमिरिकः। तिमिररोगक्ते। "न वामयेत्तैमिरिकोर्द्ध्ववातगुल्मोदरप्लीहकृमिश्रमार्त्तान्" सुश्रु०। "तैमिरिका इवादूरदर्शिनम्" काद०।

**तैर** न० तीरे भवः अण्। कूलजे राजनि०।

**तैरणी** स्त्री तीरे नमति नम-वा०ड ततः स्वार्थे अण् गौरा० ङीष्। कुनीच्यां रामदे क्षुपभेदे। [तिर्यग्जातिसम्बन्धिनि

**तैरश्च** त्रि०तिरश्चामिदम् तिर्यच् अण्+भत्वात् तिरश्चादेशः।

**तैर्थ** त्रि० तीर्थे दीयते कार्यं वा व्युष्टा० अण्। १तीर्थे देये २तीर्थकार्ये च तीर्थात् आयस्थानादागतः शुण्डिका० अण्। तीर्थरूपायस्थानादागते द्रव्यादौ च।

**तैर्थक** त्रि० तीर्थे देशे भवः धूमा० वुञ्। तीर्थदेशभवे।

**तैर्थिक** त्रि० तीर्थं सिद्धान्तनिश्चयं नित्यमर्हति वेदा० ठञ्। १तीर्थसिद्धान्ताभिज्ञे शास्त्रकरे कपिलकणादादौ तीर्थं वेत्ति ठञ् वा।२सिद्धाभिज्ञे। तीर्थे भवः ठञ्।३तीर्थभवे। "तैर्थिकाभुञ्जते यस्तु भक्तिनागरू" भा०अ०८५ श्लो०।

**तैर्थ्य** त्रि० तीर्थ+चतुरर्थ्यां० सङ्का० ण्य। तीर्थसमीपादौ।

**तैर्य्यगयनिक** त्रि० तिरश्चामयनं सत्रभेदः तदेव ठञ्। सत्रभेदे। "अष्टादशभिर्ज्योतिरादित्यः संवत्सर एव तैर्य्यगयनिको भवति। आदित्यः खलु ग्रहदेवदा यष्-मासानुदङ्ङेति नव चाङ्गानि तथा दक्षिणा" श्रुतिः।

**तैर्य्यग्योन** त्रि० तिर्यग्योनेरिदम्+अण्। तिर्यग्योनीनां पश्वादीनां सम्बन्धिनि सर्गभेदे।
"अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति। मानुष्यश्चैकविधः समासतो भौतिकः सर्गः" सा० का० तैर्य्यग्योनश्च पञ्चधा भवति पशुमृगपक्षिसरीसृपस्थावरात्मकः" त० कौ०। तत्र भवः अण्। तद्योनिभवे। "भिन्नत्वमता मन्त्रं तैर्य्यग्योनास्तथैव च" मनुः।

**तैल** न०तिलस्य तत्सदृशस्य वा विकारः अञ्। तिलसर्षपादिजनिते स्नेहद्रव्यभेदे। तत्तल्लक्षणादिकं भावप्र० उक्तं यथा "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम्। तत्तु वातघ्नं सर्वं विशेषात्तिलसम्भवम्। अथ तिलतैलगुणाः

"तिलतैलं गुरु स्थैर्य्यबलवर्णकरं सरम्। वृष्यं विकाशि विशदं मधुरं रसपाकयोः। सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम्। वीर्य्योष्णं हिमं स्पर्शे वृंहणं रक्तपित्तकृत्। लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम्। दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहहृत्। श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम्। त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा। छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्छिटे। भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते। तथाभिहतनिर्भुग्ने मृगव्याघ्रादिविक्षते। वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे। सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते"। ननु वृंहण लेखनयोः कथं सामानाधिकरण्यमित्यत आह। "स्वास्थ्याटिदृष्टः पवनः स्रोतः सङ्कोचयेद्यदा। रसोऽसम्यग्वहन् कार्श्यं कुर्याद्रक्तादावर्द्धयन्। तेषु प्रवेष्टुं सरता सौक्ष्म्य स्निग्धत्वमार्दवैः। तैलं चर्मं रसं नेतुं क्षमाणां तेन वृंहणम्। व्यवायि सूक्ष्मतीक्ष्णोष्ण सरत्वैर्मेदसः क्षयम्। शनैः प्रकुरुते तैलं तेन लेखनमीरितम्। द्रुतं पुरीषं बध्नाति स्खलितं तत्प्रवर्त्तयेत्। ग्राहकं सारकञ्चापि तेन तैलमुदीरितम्। वत्सरादात्परं पक्वं हीनवीर्य्यं प्रजायते। तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम्"। सर्षपतैलगुणाः। "दीपनं सार्षपं तैलं कटुपाकरसं लघु। लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तासृदूषकम्। कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम्। कण्डूकुष्ठकृमिश्वित्रकोठदुष्टकृमिप्रणुत्"।

राजिकातैलगुणाः "तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत्"। राजिकयोः (कृष्णराई) (श्वेतराई) द्वयोः। तुवरी(तोरी)तैलगुणाः "तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित्। वह्निकृत्क्रिमिकुष्ठकण्डूकोठकृमिप्रणुत्। मेदोदोषापहञ्चापि व्रणशोथहरं परम्"। अतसीतैलगुणाः "अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत्। कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु। मलकृद्रसतः स्वादु ग्राहि त्वग्दोषहृद्घनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्यं वातशान्तये। वररोः तैलगुणाः "कुसुम्भतैलमम्लं स्वादुष्णं गुरुविदाहि च। चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम्। खस (खाखस) बीजतैलस्य गुणाः। "तैलं तु खसबीजानां बल्यं वृष्यं गुरु स्मृतम्। वातकृत्कफकृच्छीतं स्वादुपाकरसं च तत्"। एरण्डतैलगुणाः "एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु। वृष्यं त्वच्यं वयःस्थापि मेधाकान्तिबलप्रदम्। कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम्। विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम्। विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत्। हन्ति वातोदरानाहगुल्माष्ठीलाकटीग्रहान्। वातशोणितविड्बन्धब्रध्नशोथामविद्रधीन्। आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एव निहन्तायमेरण्डस्नेहकेशरी"। राजतैलगुणाः "तैलं सर्जरसोद्भूतं विस्फोटव्रणनाशनम्। कुष्ठपामक्रिमिहरं वातश्लेष्मामयापहम्"। सर्वतैलगुणाः "तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम्। अतःशेषस्य तैलस्य गुणास्तद्योनिवत्"। "प्रातः स्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा। मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत्" कर्मलोचन०। "हतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः" तिथ्या० त०। वारविशेषे तैलग्रहणफलं यथा।

"अर्के मूलं दहति हृदयं कीर्तिलाभश्च सोमे भौमे मृत्युर्भवति नियतं चन्द्रजे पुत्रलाभः। अर्थग्लानिर्भवति च गुरौ भार्गवे शोकयुक्तस्तैलाभ्यङ्गात्तनयमरणं सूर्य्यजे दीर्घमायुः" ज्यो०त०। "एतादृग्गुणं तैलं मर्द्दयेत्तु खादयेत्" वैद्यक०। कल्ये अण्। तैलक खल्लतैले न०।

**तैलकन्द** पु० तिलस्यायम् अण् तैलः तिलसम्बन्धी कन्द इव कन्दोऽस्य। तिलचित्रपत्रके कन्दभेदे "तैलकन्दः कटूष्णश्च लौहद्रावकरो मतः। वातापस्मारविषशोफनाशकरश्च सः। रसस्य बन्धकारी च देहसिद्धिकरस्तथा" राजनि०।

**तैलकल्कज** पु० तैलात् तिलसम्बन्धिनः कल्कात् जायते जन–ड। तिलकल्कजाते (तैलेर काट) तैलकिट्टे राजनि०।

**तैलकार** पु० तैलं करोति कृ–अण् (तेली) (कलु) इति प्रसिद्धे वर्णसङ्करे जातिके तैलिनि। स च कोटकस्त्रीगर्भे कुम्भकाराज्जातः सङ्कीर्णजातिभेदः ब्रह्मवै० ब्रह्मख०।

**तैलकिट्ट** न० 6त०। तैलमले (काट) इति ख्याते।

**तैलकीट** पु० कीटभेदे राजनि०।

**तैलक्य** न० तिलकस्य भावादौ पुरोहि० यक्। तिलकभावे।

**तैलङ्ग** पु० "श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः। तैलङ्गदेशो देवेशि! युक्ते 1देशे। 2तद्वास्ये जने ब०व०। शक्तिरत्ना०

**तलचोरिका** स्त्री तैलं चोरयति चुर–ण्वुल् पृषो०। तैलपायिकायाम् (तेलापोका)। पृषो०। तैलचौरिकाप्यत्र।

**तैलद्रोणी** तैलपूर्णा द्रोणी शा०त०। "कण्ठपर्य्यन्तमज्जनार्थं"

ओवहरणं यदुकूलिकायाश्चैनाथिवस्य च यदा यक-टोऽपहस्तः” भाग० २।७।२८ ।

**तोक** पु० तक स पृषो० अत ओत्वम् । १हरिद्रवर्णे अपक-यवे अमरः । २हरिद्वर्णे हेमच०। ३कर्यमले न० हेम० । ४भेके पु० शब्दच० । ५नवप्रकाण्डे यवे यवाङ्कुरे न० । “प्रावश्चोयस्य तोक्मानि” यजु० १६।१२। “तोक्मानि नव-प्ररूढ़यवाः” वेददी० । “पत्रपुष्पफलच्छायामूलवल्कलदा-रुभिः । गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते भाग०१०।२२।२५“तोक्माः पल्लवाद्यङ्कुराः”श्रीधरः तेन हृतदर्थेऽपि च ।

**तोक्मन्** न० तक–मनिन् पृषो० अत ओत्वम् । १नवविरूढ़यवे २अपत्ये च० निघण्टुः । “भेषजं तोक्मभिः” यजु० २१। ३० । “तोक्मभिर्लाजैर्महःस्वलः” यजु० २१।४२।

**तोटक** न० द्वादशाक्षरपादके छन्दोभेदे । “इह तोटकमम्बु-धिसैः प्रथितम्”छ०र० । [कृदित् । णिच् अतुतोडत् त ।

**तोड** अनादरे भ्वा० पर० सक० सेट् । तोडति अतोडीत् ।

**तोड़ल** न० तन्त्रभेदे ।

**तोतस्** अव्य० तु–बा० तसि । १कतले २त्वयीत्यर्थे च । “मा वयं रायस्पोषेणवियौष्म तोतो रायः”यजु०४।२२। तोतः शब्दः कलत्रवाची अव्ययम् । तोत: कलत्रे रायो धनानि पशवो वा यदृच्छया तिष्ठन्तु । यद्वाऽव्ययानामने-कार्थत्वात्तोतः शब्दो युष्मत्पर्य्यायः । तोतः त्वयि रायः सन्तु” वेददी० ।

**तोड़न** न० तुड–भावे ल्युट् । १भेदने २दारणे ३हिंसने च ।

**तोड़ी(री)** स्त्री तुड़–अच् गौरा० ङीष् वा डस्य रः । ख्या-नामख्याते तैलसाधने धान्यभेदे । [अमरः ।

**तोत्र** न०तुद्यतेऽनेन तुद–करणे ष्ट्रन् । गवादिताड़ने दण्डे

**तोद** पु० तुद–भावे घञ् । व्यथायां रत्नमाला । “हीनदग्धे तोदकण्डूजाड्यानि व्याधिवृद्धिश्च” सुश्रु० । “दंशे तोद-कण्डूप्रादुर्भावैर्जानीयात्”सुश्रु०। कर्त्तरि अच् । २व्यथके त्रि० ।“तोदो यातस्य हर्य्योरीशानः” ऋ० ४।१६।११ । “तोदस्तोदकः” भा० ।

**तोदन** न०तुद्यतेऽनेन करणे ल्युट् ।१तुदके सुखे अमर०। भावे ल्युट् । २व्यथायाम् मेदि०। कर्त्तरि ल्यु ।३व्यथके त्रि०।“क-षायं मधुरं रूक्षं तोदनं कफवातजित्”सुश्रु०।४चोरिकाभेदे पु०। “चीरवृक्षफलखाम्लवराजादनतोदनतिन्दुकवकुलधन्व-नाश्मन्तकाश्वकर्णफल्गुपरूषकमाङ्गल्यखीपुष्करवर्त्ति बिल्व-बिम्बीप्रभृतीनि । फलान्येतानि शीतानि कफपित्तहराणि च । सधारकाणि रूक्षाणि कषायमधुराणि च” सुश्रु० ।

**तोदपर्णी** स्त्री तोदं तोदकं पर्णमस्याः गौरा० ङीष् । कुत्-सिते धान्यभेदे ।

“कोरदूषकश्यामाकनीवारशान्तनुतुवरकोद्दालकप्रियङ्गुम-धूलिकानान्दीमुखकुरुविन्दगवेधुकवरुकतोदपर्णी मकुन्द-कवेणुयवप्रभृतयः कुधान्यविशेषाः” सुश्रु० ।

**तोमर** पुंन० तु–विच् तौर्मतो म्रियतेऽनेन मृ–करणे अप् । १हस्तक्षेप्ये शस्त्रभेदे दण्डाकारेऽस्त्रभेदे (शावँश) अमरः । तोमरलक्षणं हेमा०प०लक्षणसमुच्चये उक्तं यथा । औशनसधनुर्वेदे । “शुक्रो भगवानुवाच जमदग्निं प्रति वत्स ! निबोध यथाप्रश्नमुच्यमानम् तत्र दण्डान्वितं सर्वलौहं वेति तोमरं द्विविधं भवति। तत्र तोमरं सदण्डं बह्वायतं भवेत् तोमरं सर्वायसं तच्चार्थे प्रयोजयेत् । तत्र निकृष्टमध्यमोत्तमं भूयस्त्रिविधं प्रमा-णतो भवति तत्र चतुर्हस्तप्रमाणं निकृष्टं सार्द्धचतुर्हस्तं मध्यमं पञ्चहस्तप्रमाणं तूत्तमं भवति । तथा कलनायां चाद्यं द्वितीयं तृतीयं चेति त्रिधा द्व्यङ्गुलमध्ये द्व्यङ्गुल-कलितमेकं स्यान्मध्यात्पूर्वं त्र्यङ्गुलकलितं द्वितीयं स्यात् । मध्यात्पूर्वं षडङ्गुलकलितस्थानकलनया तृतीयं स्यात् । सार्द्धमेकं निकृष्टं, तयोर्मध्यमं षड़ुत्तमं कलनायास्तथा तोमरास्यस्य परिणाहः परः षडङ्गुलो भवति सार्द्धप-ञ्चाङ्गुलो मध्यमः पञ्चाङ्गुलः कनिष्ठ इति । तयाणां देशानां त्रयः छन्दाः । आद्यास्तथा आवन्त्यो मागधो दाक्षि-णात्यश्चेति । तत्रावन्त्यतोमरं तक्षकसंस्थानं भवति मागधं तोमरं योनिसंस्थानं भवति दाक्षिणात्यं तोमरं हस्तं भवति । तेषां लक्षणानि तद्देशाच्छन्दतः इति इत्यादि । २नवाक्षरपादके छन्दोभेदे “प्रथमं सकं विनिधाय जगणद्वयञ्च निधाय । कुरु तोमरं सुखकारि फणिराज-वक्त्रविहारि” तल्लक्षणम् । [शराभ्यासाद्दिवि ।

**तोमरग्रह** पु० तोमरं गृह्णाति ग्रह–अच् न षष्ठ् । तो-

**तोमरधर** पु० तोमरमस्त्रं धरति धृ-अच्। वह्नौ शब्दार्थच०

**तोमरिका** स्त्री तोमर+संज्ञायां कन् । आढक्याम् शब्दर०

**तोय** न० सौ०तु–विच् तवे पूर्त्यै याति या क । १जले २पूर्वा-षाढ़ानक्षत्रे च । “अथ त्वा मेघैस्ततः एव तोयम्”माघः। “अस्तोयैः शुध्यते शोध्यं नदीवेगेन शुध्यति” मनुः । पूर्वाषाढ़ानक्षत्रस्य जलदैवतत्वात् तथात्वम् । ३लग्ना-वधिचतुर्थस्थाने च ज्यो० त० । तत्र जलस्य चिन्त-नीयत्वात् तथात्वम् ।

**तोयकर्मन्** न० तोयेन कर्म्म । तर्पणे "तोयकर्मणि चारब्धे राज्ञामुदकदानिके" भा०आ०१अ० ।

**तोयकाम** पु० तोयं कामयते कम-अण् । १जलवेतसे जटाधरः । २जलाभिलाषुके त्रि० ।

**तोयकुम्भ** पु० तोयस्य कुम्भ इव । शैवाले पारस्करनिघण्टुः ।

**तोयकृच्छ्र** न० जलमात्रपानरूपे मासव्याप्ये व्रतभेदे ।

"यदा तु बिल्वानि फलानि प्रत्येकं कथितानि मासम्पीयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते । यथाह मार्कण्डेयः "फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः । श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा । मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् । पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते । मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" इति ।"इति पर्णकृच्छ्रभेदादयविधम्" मिता० ।

**तोयडिम्ब** पु० तोयस्य डिम्ब इव । १मेघोपले करकायां हारा० ।

**तोयद** पु० तोयं ददाति दा+क । १मेघे, २मुस्तके च । ३घृते न० मेदि० । ४विधिना जलदातरि त्रि० । "तोयदस्तृप्तिमाप्नोति"पुरा० । तद्दानमाहात्म्यं भा० शा० दानधर्म्मे यथा

"अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत । प्राणदानाद्धि परमं न दानमिह विद्यते । अन्नं वापि प्रभवति पानीयात् कुरुसत्तम ! । नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते । अन्नौषध्यो महाराज ! वीरुधश्च जलोद्भवाः । यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते ! । तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित् । तच्च दद्यान्नरो नित्यं यदीच्छेद् भूतिमात्मनः । धन्यं यशस्यमायुष्यं जलदानमिहोच्यते । शत्रूंश्चाप्यधि कौन्तेय ! सदा तिष्ठति तोयदः । सर्वकामानवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम् । प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते । तोयदो मनुजव्याघ्र ! स्वर्गं गत्वा महाद्युते ! । अक्षयान् समवाप्नोति लोकानित्यब्रवीन् मनुरिति" ।

**तोयधर** पु० तोयं धरति धृ-अच् । १मेघे मेदि० २मुस्तके च "नीला इवातपात्यये तोयं तोयधरा घनाः" रामा० रा० ८१ अ० ।

**तोयधार** पु० तोयानां धारा यत्र । १मेघे २मुस्तके च । धारि-भावे अच् । तोयस्य धारः वर्षणम् । ३जलवर्षणे पुंन "कनकतोयधारेण ववर्ष कनकाम्बुभिः" हरिवं० ११२अ० । हत० । ४जलधारायां स्त्री ।"शरान् व्यसृजतां शीघ्रं तोयधारा घना इव" भा०वि० २२अ० । "गिरिः प्रस्रवण इव तोयधारा" रामा० आ० ३५ स० ।

**तोयधि** पु० तोयानि धीयन्तेऽत्र धा-कि उप०स० । १समुद्रे जलधिप्रभृतयोऽप्यत्र । २चतुःसंख्यायाञ्च ।"समन्तान्मध्यात् तु तुल्योभागेषु तोयधेः" सू० सि० ।

**तोयधिप्रिय** न० तोयधिं प्रीणाति प्री-क ।१लवङ्गे शब्दच० ।

**तोयनिधि** पु० तोयं निधीयतेऽस्मिन् नि+धा-कि उप०स० । १समुद्रे २चतुःसंख्यायाञ्च । "पूर्वापरौ तोयनिधी वगाह्य" कुमा० ।

**तोयनीवी** स्त्री तोयं समुद्रोदकं नीवीव यस्याः स्वार्थे न कप् । १पृथिव्यां "तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्यथाभुवे"भाग० १।१५।३८ लोके तु कप् तोयनीविका तत्रार्थे । [वाङ्गल्यास् अमरः ।

**तोयपिप्पली** स्त्री तोये पिप्पलीव । (काँचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री तोयेन बहुजलदानेन पुष्पाण्यस्याः । १पाटलावृक्षे शब्दमाला ।

**तोयप्रसादन** पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-ल्यु । १कतके (निर्म्मलि) । कवपरत्वे न० रत्नमाला "तोयप्रसादकाम्बुप्रसादकादयोऽप्यत्र "फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्" मनुः ।

**तोयफला** स्त्री तोयप्रधानं फलं यस्याः ।१इर्वारौ कर्कटीभेदे राजनि० । [२मुस्तके च ।

**तोयमुच्** पु० तोयं मुञ्चति मुच-क्विप् हत० । १जलमुचि मेघे

**तोययन्त्र** न० सू० सि० उक्ते कालज्ञानार्थे घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८१ पृ० दृश्यम् । (फोयारा) इति ख्याते २जलयन्त्रभेदे च ।

**तोयराज्** पु०तोयेषु राजते राज-क्विप् । १समुद्रे "यदीच्छेत् सागरः किञ्चिदुत्पाद्य मिह तोयराट्" हरिवं०२२६अ० ।२वरुणे च

**तोयराशि** पु० तोयानां राशिरिव । १समुद्रे । हत० । २जलसमूहे च "तोयराशिसमवापि तच्यां संवर्द्धयति" काद० । [रत्नमा० । स्वार्थे क । तोयवल्लिकाप्यत्र ।

**तोयवल्ली** स्त्री तोयसञ्चिते स्थाने वल्ली । १कारवेल्ले (उच्छे)

**तोयशुक्तिका** स्त्री तोयजाता शुक्तिका शा०त० । जलशुक्तिकायां राजनि० ।

**तोयशूक** पु० तोयस्य शूक इव । शैवाले पार० नि० ।

**तोयसूचक** पुंस्त्री० तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल् । १भेके शब्दार्थक० । स्त्रियां जातित्वात् ङीष् । २जलवर्षणसूचके योगभेदे त्रि० । जलयत्नशब्दे ३०६५ पृ० दृश्यम् ।

**तोयविम्ब** न० तोयोत्थितं विम्बम् अर्द्धडिम्बाकारं वस्तु । जलविम्बे जलोपरिभासमाने अर्द्धगोलाकारे पदार्थे । अयं शब्दः तोयवल्लीशब्दात् परं पाठ्यः ।

**तोयात्मन्** पु० तोयमात्मा स्वरूपं यस्य तत्प्रकृतित्वात् । १परमेश्वरे । "यस्य केशेषु जीमूताः । नद्यः सर्वाङ्गसन्धिषु कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः" विष्णुस्तुतिः ।

**तोयाधार** पु० ६त० । १जलाशये । जलाशयोत्सर्गशब्दे ३०७५ पृ० तद्भेदादि दृश्यम् । "तोयाधारपथाश्च वल्कलशिखा-निष्यन्दरेखाङ्किताः" शकु० ।

**तोयाधिवासिनी** स्त्री तोयं तोयार्द्रं देशमधिवसति अधि+वस-णिनि ङीप् । पाटलावृक्षे रत्नमाला ।

**तोयेश** पु० ६त० । १वरुणे तदधिदेवताके २शतभिषानक्षत्रे च । तोयं जलमधिदेवोऽस्य । ३पूर्वाषाढ़ानक्षत्रे न० ।

**तोरण** पुंन० । तुर-युच आधारे ल्युट् तोलयत्यनेन तुल-उन्माने करणे-ल्युट् लस्य रो वा । बहिः स्थिते १द्वारे । "अथोन्मुकैस्तोरणमङ्गभङ्गेति" "गणो नृपाणामथ तोरणाद्बहिः" माघः । "भासोज्ज्वलत्काञ्चनतोरणानाम्" कुमा० । तत्र द्वाराग्रे निखातस्तम्भोपरिनिबद्धो धनुराकारः (फटक्) इति ख्यातः पदार्थः । यागादौ मण्डपाद्बहिर्द्वाररूपस्य तोरणस्य काष्ठविशेषप्रमाणादिकं मण्डपशब्दे दृश्यं मत्स्यतत्त्वादावादिपत्तौ विस्तरो दृश्यः । २कन्धरायां न० हारा० ।

**तोरश्रवस्** पु० अङ्गिरोमुनौ ।

**तोल** पुंन० । चु० तुल-कर्मणि अच् । अशीतिरक्तिकामाने १कर्षे । "एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् । इतोऽधिकं नरः कृत्वा प्रायश्चित्तीयते ध्रुवम्" आगमः । स्वार्थे क । तत्रार्थे "पलं तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकत्रितयं ज्ञेयम्" तिथित० ।

**तोल्य** त्रि० तुल+उन्माने कर्मणि-यत् । १तोलनीये । भावे यत् । २तोलने न० । "जीवानां वयसां मौल्ये तोल्ये वर्णस्य हेमनि" लीला० ।

**तोश** पु० तुश-वधे भावे घञ् । १हिंसायाम् । कर्त्तरि अच् । २हिंसके "त्वे राय इन्द्र ! तोशतमाः" ऋ०१।१६९।५। "तोशतिर्वधकर्मा नितोशयति निबर्हयतीति तस्यामस्य पाठात् तोशतमाः नाशयितृतमाः" भा० । "तोशा वृत्रहणा हुवे" ऋ० ३।१२।४ । "तोशा बाधकौ" भा० । [भा० उ० २९ अ० ।

अधिस्नाने अच् ।

**तोष** पु० तुष-भावे घञ् । सन्तोषे । "तोषपरो हि लाभः"

**तोषण** न० तुष-भावे ल्युट् । १सन्तोषे । तुष-णिच् भावे ल्युट् । २सन्तोषोत्पादने । "एतावदेव पुरुषैः कार्यं हृदयतोषणम्" भा०स०१६अ० । कर्त्तरि ल्यु । ३सन्तोषजनके त्रि० "पश्यतु हृदयतोषणान्" भा० उ० ८३ अ० । करणे ल्युट् । ४तोषसाधने स्त्रियां ङीप् तोषणी ।

**तोषल** न० तोषं लुनाति लू-बा० ड । अस्त्रभेदे १मुषलेऽस्त्रे "कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली" हरिवं०८७अ० ।

**तौक्षिक** पु० धनूराशौ दीपिका कौर्प्यशब्दे २२०८पृ० दृश्यम् ।

**तौतातिक** न० तुतातभट्टेन निर्वृत्तम् ठञ् । तुतातभट्टकृतशास्त्रे "नैवाश्रावि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" प्रबोधच० ।

**तौतिक** न० १शुक्तायां २मुक्तौ च राजनि० ।

**तौदी** स्त्री विषनाशके ओषधिभेदे घृतकुमार्य्याम् । "तौदी नामासि कन्या घृताची वा असि" अथ० १९।४।४२।

**तौम्बरविन्** पु० ब०व० । तुम्बुरुणा कलाप्यन्तेवासिना प्रोक्तमधीयते इनि । कलाप्यन्तेवासिना तुम्बुरुणा प्रोक्तशाखाध्येतृषु ।

**तौर** न० यागभेदे । "संवत्सरमप्ररहत्तौरेण यजेत" आश्व० श्रौ० १०।२०।१ । "दार्षद्वततौरयोश्च तानि" १०।१८।१० । तत्रैव ।

**तौरयान** न० तूर्णं यानमस्य पृषो० । तूर्णगमनयुक्ते । "स तौरयान उपयाहि यज्ञम्" निरुक्ते ५।२५। श्रुतिः तौरयानः तूर्णयानः "तौरयान इत्यपि" निगमो भवति"

**तौरश्रवस** न० तोरश्रवसाऽङ्गिरसा दृष्टं साम अण् । सामभेदे "तौरश्रवसे माध्यन्दिने पवमाने तदापनश्रुतेः" कात्या० श्रौ० २५।१४।१४ । "तौरश्रवसे सामनी" कर्कः ।

**तौर्य्य** न० तूर्ये मुरजादौ वाद्ये भवम् अण् । मुरजादिध्वनौ ।

**तौर्य्यत्रिक** न० त्रयः परिमाणमस्य कन् तौर्य्योपलक्षितत्रिकम् । नृत्यगीतवाद्येषु अमरः । "वनेऽपि तौर्य्यत्रिकमारराध तम्" नैषधम् । "तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः" मनुः ।

**तौल** न० तुलैव तुला+स्वार्थे अण् स्वार्थिका अपि प्रत्ययाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इत्युक्तेः देवतादिवत् क्लीवता । मानभेदे १तुलायाम् २उन्मानदण्डे ३तुलाराशौ च ज्यो० ।

**तौलिक** पु० तूल्या जीवति तूली+ठक् । चित्रकरे शब्दमाला ।

**तौलिकिक** पु० तूलिकया जीवति ठक् । चित्रकरे हेमच० ।

**तौलिन्** पु० तुलैव तौलं तत् विद्यतेऽस्य इनि । तुलाराशौ "तौलिनि चित्रान्त्यार्द्धे स्वातिः पादत्रयं विशाखायाः" ज्यो०सं० १०३अ०। अस्य क्लीवत्वमपि "यस्मे तौलि च्युतायनेऽलिधनुषी याम्ये तगो नैर्ऋते" ज्यो०रायनिलग्ननिर्णयः ।

**तौल्य** त्रि० तुलया परिच्छिन्नम् ष्यञ् । तुलया परिच्छिन्ने सिद्धा० । तुल्यमेव स्वार्थेऽण् । २तुल्ये न० ।

**तौल्वलि** पु० तुल्वलस्यापत्यम् इञ् । तुल्वलार्थेरपत्ये "सर्वेभ्य एव निगृह्णीयादिति तौल्वलिः क्रियागुणत्वात्" आश्व० श्रौ० २।६।१७ "अमत्यमितरेषां तौल्वलिः कृतार्थत्वात्" ५।६।२४ । ततः इञन्तत्वात् यूनि फक् तौल्वल्यादित्वात् युवप्रत्ययस्य न लुक् । तौल्वलायन—यूनि तदपत्ये ।

**तौल्वल्यादि** पु० "न तौल्वलिभ्यः" पा० सूत्रोक्ते युवप्रत्ययस्य लुकि पर्युदस्ते शब्दगणे स च गणः पा०ग०सू० उक्तो यथा

"तौल्वलि, धारणि, पारणि, रावणि, दैलीपि, दैवति, वार्कलि, नैवकि, दैवमति, दैवयज्ञि, चाफट्टकि, वैल्वकि, वैहि, आनुराहति, पौष्करसादि, आनुरोहति, आनुति, प्रादोहनि, नैमिश्रि, प्राडाहति, वाङ्कवकि, वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्करेणुपालि, वैकर्णि, वैरकि, वैहति ।

**तौवरक** त्रि० तुवर्या इदम् अण् स्वार्थे क । तुवरीसम्बन्धिनि १स्नेहादौ "स्नेहे भल्लातकस्नेहात् स्नेहा-त्तौवरकात्तथा" सुश्रुतः । स्वार्थे अण् । ततः स्वार्थे क । २तुवरके । "आयुष्करं तौवरकं कषायं कटुपाकिकम् । उष्णं क्रमिज्वरानाहमेहावर्त्तविनाशनम्" सुश्रुतः ।

**तौविलिका** स्त्री ओषधिभेदे । तौविलिके ! उवेलयायावेलय ऐलयीत्" अथ० ६।१६।२ ।

**तौषायण** त्रि० तुषस्यादूरदेशादि पक्षा० चतुरर्थ्यां फक् । तुषस्यादूरदेशादौ ।

**तौषार** त्रि० तुषारस्येदमण् । तुषारसम्बन्धिनि जले राजनि० "तत्रान्तरिक्षं धारं कारं तौषारं हैममिति" आन्तरिक्षजलविभागे सुश्रुतः । भावप्र० तल्लक्षणादि उक्तं यथा "अपि नद्याः समुद्रान्ते वह्निरापस्तद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तु ताः स्मृताः । अप्यभ्याः प्राणिनां प्रायो भूतवाच्यात्तु ता हिताः । तुषाराम्बु-हिमं रुक्षं वाताजनमपित्तकम् । कफोरुस्तम्भकण्ठाग्निमेदोगलगण्डादिरोगनुत्" । नदीमारभ्य समुद्रपर्य्यन्तं वह्निरासां तद्भवा वह्निभवाः धूमावयवनिर्मुक्ताः धूमांशरहिता आपः तौषाराख्या इत्यर्थः ।

**त्मन्** पु० आत्मन्+आलोपः । आत्मनि "त्मनभूर्ण न विश्वध चरध्यै" ऋ० १।६३।८ । त्मनमात्मानम् । "आडोऽप्यत्रापि छन्दसि दृश्यते" पा० इत्यात्मन आकारलोपः संज्ञापूर्वकस्य विधेरनित्यत्वादुपधादीर्घा भावः" भा० । "त्मने तोकाय तनयाय मृड" ऋ० १।११४।६ । "उप त्मन्या वनस्पते" ऋ० १।१८८।१०। 'त्मन्या आत्मना" भा० । तृतीयास्थाने या । "अश्वो हितेन त्मन्या" यजु० २८।१०। "वनस्पतिरवसृष्टो न पाशैः त्मन्या" २०।४५ ।

**त्यक्त** त्रि० त्यज—कर्मणि क्त । कृतत्यागे उत्सृष्टे समुज्झिते अमरः "अदृष्टार्थंत्यक्तद्रव्यस्वीकारः प्रतिग्रहः" शूलपाणिः त्यजधातौ उदा०।२त्यक्तसुद्यते च "मदर्थे त्यक्तजीविताः" गीता "इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः, रामा० कि० ५४ अ० ।

**त्यज** हानौ दाने च भ्वा० सक० पर० अनिट् । त्यजति अत्याक्षीत् तत्याज । त्यक्तव्यं त्याज्यम् त्यागः त्यक्तं त्यक्ता त्यागी । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" चाणक्यः "योऽत्याक्षीत् संयुगं भयात्" भा० द्रो० ८५ अ० "तं तत्याजाजहितं पुत्रम्" रामा० २।३६अ० । "नैव नीतिविवर्येण कदाचित् त्यज्यते" पञ्चत०। (त्यराः) "मदर्थे त्यक्तजीविताः" गीता "प्रतिरोद्धा गुरोर्वैव त्यक्ताग्निर्वाहुर्दिवसया" मनुः "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" मनुः "त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपः कर्म न त्याज्यमिति चापरे" गीता "ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः" मनुः "चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु" इ०स०६०अ० । वेदे तु णि०। चणि तित्याज "यस्तित्याज सचि विदं सखायम्" ऋ०१०।७१।६। त्यागश्च स्वत्वध्वंसाहकुलव्यापारः न ममेदमित्याकारः। स च मूर्त्तद्रव्याणामेव भवति अमूर्त्त-जीवनादेर्वियोजनरूपः । उपसर्गपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तत्यागे इति भेदः ।

**त्यजस्** पु ०त्यज—भावेऽसुन् । १त्यागे "इन्द्रस्य न त्यजसा वि ह्रुणाति" ऋ०१।१६६।१२।"त्यजसा त्यागेन" भा०कर्त्तरि—असुन् ।२त्यागकर्त्तरि त्रि०।"पिप्रारयातेषदि ! त्यजः" ऋ०

१०।१४४।६। त्यजो दुःखस्य वर्जयितृ भा० “न तं तिग्मं चन त्यजो न” ऋ०८।४७।७। करणे असुन्। ३क्रोधे च क्रोधात् प्रयुज्यमानमायुधं मुच्यते इति तस्य तथात्वम्।

**त्यद्** त्रि० त्यज–“त्यजितनियजिभ्यो डित्” उ० अदि डिच्च।१प्रसिद्धे। अस्य सर्वनामतया त्यदादिकार्य्यम्, स्यः त्यौ त्ये त्यस्मै त्यस्मात् त्येषां त्यस्मिन्। स्त्रियां स्या त्ये त्याः। क्लीबे त्यद् त्ये त्यानीति भेदः। २सर्वदा परोक्षाभिधानार्हे वस्तुनि।

“द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च। तदेतन्मूर्तं यदन्यद्वायोश्चान्तरीक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत् सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः। अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम्” बृ० उ०। “ते एते द्वे वाव वाशब्दोऽवधारणार्थः। द्वे एवेत्यर्थः। ब्रह्मणो परमात्मनो रूपे रूप्यते याभ्यामरूपं परमब्रह्माविद्याध्यारोपणाभ्यां के ते द्वे। मूर्त्तञ्च एव मूर्तमेव च। तथा अमूर्त्तञ्च एवामूर्तमेव चेत्यर्थः। अन्तर्नीतस्वात्मविशेषणे मूर्त्तामूर्त्ते द्वे एवेत्यवधार्य्यते। कानि पुनस्तानि विशेषणानि मूर्त्तामूर्तयोरित्युच्यन्ते। मर्त्यं मरणधर्म्यमृतञ्च तद्विपरीतम्। स्थितं परिच्छिन्नं गतिपूर्वकं यत् स्थास्नु। यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतम्। सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्। त्यच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम्। अथामूर्तमथाधुनाऽमूर्तमुच्यते। वायुश्चान्तरिक्षञ्च यत्परिशेषितं भूतद्वयं एतदमृतममूर्तत्वादस्थितमतोऽविरुध्यमानं केनचिदमृतममरणधर्म्म तद्यत् स्थितविपरीतं व्याप्यपरिच्छिन्नं यस्मादेतदन्येभ्योऽप्रविच्यमानविशेषमतस्त्यत्त्यदिति परोक्षाभिधानार्हमेव पूर्ववत्। तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्तस्यैव रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते। यः स एषः अमूर्तस्य भूतद्वयस्य रसः पूर्ववत् सारिष्ठः, एतत्पुरुषसारञ्चामूर्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात् तस्मात्तादर्थ्यात्तत् सारं भूतद्वयम्। त्यस्य ह्येष रसो यस्माद्यो मण्डलस्थः पुरुषो मण्डलवच्च दृश्यमानस्य भूतद्वयस्य च साधर्म्यम्। तस्मादुक्तं प्रसिद्धवद्धेतूपादानं त्यस्य ह्येष रस इति” भा० भाष्यम् “सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्” वेणी०। अव्ययीभावे शरदा० अच् समासान्तः। उपत्यदम्।

**त्यदादि** पु० पा० गणसूत्रोक्ते शब्दसमूहे। स च गणः “त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम्” “त्यदादीनामः” पा० अत्र अत्त्वविधौ द्विपर्य्यन्तस्यैव ग्रहणमिति भाष्यकारेष्टिः।

**त्याग** पु० त्यज–भावे घञ्। उत्सर्गे मूर्तद्रव्यस्य स्वत्वध्वंसानुकूलव्यापारे न ममेदमित्याकारे। “न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति” “उन्मत्तं पतितं क्लीवमवीरं पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्तनम्” मनुः अमूर्तद्रव्यस्य २वियोगमात्रे च। त्यागश्च सात्त्विकादिभेदात् त्रिविधः। यथाह गीता “नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः। दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्। कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन!। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः”। विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च पुनरपि सात्त्विकस्त्यागः त्रिविधः तथा हि फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः। स च सात्त्विकत्वादेयः। सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः। स च दुःखबुद्ध्या कृतो राजसः विपर्य्यासेन कृतस्तामसः इति भेदः। द्विविधोऽपि हेयो भवति। फलाभिसन्धेः कर्मणश्च त्यागात् तृतीयः। स च कर्मानधिकारिकर्त्तृको नैर्गुण्यरूपः। सोऽपि साधनफलभेदेन द्विविधः। तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यं वेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते। जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य अत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते। “त्यागप्रपञ्चरूपस्य चिदात्मत्वावलोकनात्। त्यागो

हि महतां पूज्यः सद्यो मोक्षमयो यतः। त्यागेन युक्ता दिवमुत्पतन्ति त्यागेन हीना नरकं व्रजन्ति। न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति” शब्दार्थचि० धृतवाक्यम्।

**त्यागिन्** त्रि० त्यज–घिनुन्। १ दातरि, २शूरे, ३वर्जनशीले, ४कर्मफलत्यागिनि च “न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः। न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते” गीता “आत्मनस्त्यागिनां चैव निवर्त्तेतोदकक्रिया” मनुः।

**त्यागिमन्** त्रि० त्यागेन निर्वृत्तं त्याग+इमन्। त्यागेन निर्वृत्ते।

**त्याज्य** त्रि० त्यज+ण्यत् कुत्वाभावः। १वर्ज्जनीये “तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः” प्रा० त०। २दातुं योग्ये च।“त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता” रघुः। “सा त्वत्याज्यान्यतो गर्भं त्याज्या भवति पापिनी। महापातकदुष्टा च पतिगर्भविनाशिनी” व्यासस०।

**त्रक** गतौ भ्वा० आत्म०सक०सेट्। त्रकते अत्रकिष्ट। तत्रके।

**त्रख** गतौ भ्वा० पर० सक० सेट् भाष्यपाठः। त्रखति अत्रखीत् अत्राखीत्। तत्राख। [अत्रङ्खीत्। तत्रङ्ख।

**त्रङ्ख** गतौ भ्वा० पर० सक० सेट् इदित् भाष्यपाठः। त्रङ्खति

**त्रग** गतौ भ्वा० पर०सक० सेट् इदित्। त्रङ्गति अत्रङ्गीत्। तत्रङ्ग। अयं दिवा० भाष्यपाठः। त्रङ्ग्यति।

**त्रङ्ग** पुंस्त्री० त्रगि–अच्। पुरभेदे हरिश्चन्द्रपुरे सौभे त्रङ्गे प्रतिमार्गके त्रिका०।

**त्रद** चेष्टायां भ्वा० पर० अक० सेट् इदित्। त्रन्दति अत्रन्दीत्। तत्रन्द।

**त्रप** लज्जायां भ्वा०आ० अक० वेट्। त्रपते अत्रपिष्ट अत्रप्त त्रेपे। णिच् वा घ०। त्रपयति त्रापयति। षित् त्रपा। “कान्तया कान्तसंयोगे किमकारि नवोढ़या। अत्रापि च क्रिया प्रश्नोत्तरा गुप्ता न बुध्यते” विदग्धमुख०। “अपत्राभिधायामपि किमपि चेतस्त्रपयति” शान्तिश०। अप–कन्यतो लज्जायाम् “तस्मादुच्चैरपत्रपे” भट्टिः।“लज्जा सापत्रपान्यतः” अमरः।

**त्रपा** स्त्री त्रप–भावे अङ्। १लज्जायाम् अमरः। कर्त्तरि अच्। २लज्जके त्रि०। ३कुलटायां स्त्री मेदि०। ४कुले ५कीर्त्तौ च शब्दच०।

**त्रपाक** पुंस्त्री० त्रप–आक। म्लेच्छजातिभेदे उणादि०।

**त्रपारण्डा** स्त्री त्रपायां रण्डा। लज्जाहीनायां वेश्यायां जटा० शब्दर०। वस्तुतः त्रपारण्डेति नामद्वयं मेदिनौ त्रपाशब्दस्य वेश्यार्थकत्वोक्तेः रण्डाशब्दस्य च तदर्थप्रसिद्धेस्तत्समानार्थकत्वौचित्यात्।

**त्रपिष्ठ** त्रि० अतिशयेन तृप्रः अतिशायने इष्ठन् प्रियादि० त्रपादेशः। तृप्रतरे। [स्त्रियां ङीप्।

**त्रपीयस्** त्रि० अतिशयेन तृप्रः ईयसुन् त्रपादेशः। तृप्रतमे

**त्रपु** न० अग्निं दृष्ट्वा त्रपते लज्जते इव त्रप–उन्। १सीसके २रङ्गे च मेदि० तस्य विकारः अण् “त्रपुजतुनोः षुक् च” पा० षुक् च। त्रापुष तद्विकारे त्रि०। “ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च” मनुः। “सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु। ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम्” भा०उ० २८ अ०। [लताभेदे।

**त्रपुकर्कटी** स्त्री त्रपु इव शुभ्रा कर्कटी। (ससा) इति ख्याते

**त्रपुटी** स्त्री त्रप–बा०-उटन् गौरा० ङीष्। सूक्ष्मैलायाम्। रत्नमाला।

**त्रपुल** न० त्रप–बा० उल। रङ्गे हिरूपकोषः।

**त्रपुष(स)**न० त्रपुषाः(सा:)फलम् अण् फले तस्य लुप्। त्रपुषी(सी)फले। “त्रपुषं(सं) लघु नीलञ्च नवं तट्‌कमदापहं जित्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्। तत्पक्वमुष्णं स्यात् पित्तलं कफवातनुत्। तद्‌बीजमूलं शीतं रूक्षं पित्तास्रकृच्छ्रजित्” भावप्र०।

**त्रपु(ष)स** न०त्रप-बा०उस(ष)। १रङ्गे हिरूपकोषः। गौरा० ङीष् २माहेन्द्रवारुण्यां कर्कटीभेदे (ससा) लताभेदे। सा च शीतपीच्छा कांस्यवर्णा बहुफला तन्द्रिरूपफला कण्टकफला सुधावासा च।

**त्रप्सा** स्त्री घनीभूतदध्यादौ। “कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी। त्रप्सया कर्षणैः क्षिप्ता वान्तैर्वा दुष्टतां व्रजेत्। नखदण्डतनूजत्वक्‌तुषपांशुरजोमलैः। भस्मपङ्कशवैर्वापि प्रच्छन्ना मलिना भवेत्” “त्रप्सा घनीभूतदध्यादि” शु०त०।

**त्रप्स्र** न० घनेतरदधनि अमरटीकायां विद्याविनोदः।

**त्रय** न०स्त्री त्रयाणामवयवम् अयच्। त्रितये १त्रित्वसंख्यायाम् “वेदत्रयं निरदुहत् भूर्भुवः स्वरितीति च” मनुः। स्त्रीत्वपक्षे ङीप्। “व्याघोतिष्ट सभावेद्यामसौ नरशिखित्रयी” माघः त्रयोऽवयवा अस्य अयच्। २त्रित्वसंख्यान्विते त्रि० स्त्रियां ङीप्। “प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्म-

शुद्धिमभीप्सताः" मनुः ङीपन्तः "ऋग्यजुःसामरूपे २वेदत्रये त्रित्वसंख्यान्वितेषु ऋगादिवेदेषु अमरः "एतद्विद्वन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम्" "त्रैविद्येभ्यस्त्रयीं विद्याद्दण्डनीतिञ्च शाश्वतीम्" मनुः। "ब्रह्मास्य प्रथमो रूपत्रयमेतत् त्रयीमयम्। सर्गादावृङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः। रुद्रः साममयोऽन्ताय तस्मात् तस्याशुचिर्ध्वनिः" मनुः। ४पुरन्ध्र्यां ५सुमतौ स्त्री विश्वः ६सोमराजीवृक्षे स्त्री शब्दच०। ७भवान्याम् दुर्गायाम्। यथा "ऋग्यजुःसामभागेन साङ्गवेदगतापि या। त्रयीति पठ्यते लोके दृष्टादृष्टार्थसाधिनीति" देवीपु०।

त्रयःपञ्चाशत् स्त्री त्र्यधिका पञ्चाशत् निपातनात् त्रय आदेशः। (निपातन)१त्र्यधिकपञ्चाशत्संख्यायां २तत्संख्यान्विते च सङ्ख्येयेऽप्येकत्वम्। एवं त्रयोदशत्रयोविंशतित्रयस्त्रिंशत् त्रयश्चत्वारिंशत् प्रभृतयः त्र्यधिकदशादिसंख्यायां तत्संख्ये ये च। इयांस्तु भेदः अशीतिभिन्ने चत्वारिंशदादौ वा त्रय आदेशः। तेन पक्षे त्रिचत्वारिंशादित्यादि तत्रार्थे अशीतौ नेति त्र्यशीतिः।

त्रययाय्य पु० त्रयं जन्मत्रयं याति या—बा० आय्य। जन्मत्रयप्राप्ते "स्तुतं त्रययाय्यः" ऋ० ६।२।७। "त्रययाय्यो जन्मत्रयं प्राप्तः। जन्मत्रयं-कथ्यते। मातुरग्रेऽधिजननात् द्वितीयं मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रयं स्मृतमिति" तादृशः शुन इति" भा०।

त्रयस्त्रिंश त्रि० त्रयस्त्रिंशत्+पूरणे डट्। त्र्यधिकत्रिंशत्संख्यापूरणे स्त्रियां ङीप्।

त्रयस्त्रिंशत्पति पु० त्रयस्त्रिंशतो देवानां पतिः। १इन्द्रे हेमच०। २प्रजापतौ च तयोः त्र्यधिकत्रिंशतो देवानां पतित्वात् तथात्वम्। देवानां त्रयस्त्रिंशत्त्वं च

"अष्टौ वसवः एकादश रुद्रा द्वादशादित्या इमे एव द्यावापृथिवी त्रयस्त्रिंश्यौ त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिम्" शत० ब्रा० ४।५।६।२। "कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति" शत० ब्रा० ११।६।३।५। त्र अन्यथोक्ता अश्विनौ पक्षे निर्द्दोरशब्दव्याख्यानात् इन्द्रप्रजापतिपरत्वम् तयोः द्वयोः मध्ये चैकत्वेन पतित्वात्तथात्वमिति बोध्यम्। "आदित्यांश्च वसूंश्चैव रुद्रांश्चैवाश्विनावपि" रामा० १।२०। अन्यथा संख्योक्ता।

त्रयस्त्रिंशस्तोम पु० त्रयस्त्रिंशत स्तोमा यत्र पृषो०। यज्ञभेदे। "त्रयस्त्रिंशस्तोमेन शोणः सात्रासाहः पाञ्चालो राजा। तदेतद्गाथयाऽभिगीतम् "सात्रासाहे यजमाने अश्वमेधेन तौर्वशाः। उदीरते त्रयस्त्रिंशाः षट् सहस्राणि वर्मिणाम्" शत० ब्रा० १३।५।४।१६।

त्रयस्त्रिंशिन् न० त्रयस्त्रिंशत् स्तवः सन्त्यस्मिन् इनि डिच्च। त्रयस्त्रिंशद्भिरृग्भिर्गीयमाने सामभेदे। "त्रयस्त्रिंशि नाम साम माध्यन्दिने पवमाने भवति" तैत्ति० १।२।२।४

त्रयीतनु पु० त्रयी वेदा एव तनुरस्य। १सूर्य्ये शब्दा०। "सर्वद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्य्यमात्मानं यजन्ते" भाग० ५।२०।७। तस्य त्रयीमयत्वोक्तात्तथात्वम्।

त्रयीधर्म्म पु० त्रय्या वेदत्रयेण विधीयमानो धर्म्मः शाक०। वैदिके धर्म्मे ज्योतिष्टोमादौ अमरः।

त्रयीमय पु० त्रय्यात्मकः मयट्। १सूर्य्ये त्रयीतनुशब्दे उदा० २तदीयधर्म्मात्मके त्रि०। "एवं मुहूर्त्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्त्तते पुरीषु" भाग० ५।२१।१७। "त्रयीमयं रूपमिदञ्च सौकरम्" इत्युक्ते वाराहे ३रूपे न० तद्रूपविहृतिस्तत्रैव "स्रुक्तुण्ड आसीत् स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः जिह्वाप्रवर्ग्यस्तव शीर्षकं क्रतोः सत्यावसथ्यं चितयोऽसवो हि ते। सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव! धातवः। सत्राणि सर्वाणि शरीरसन्धयस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः। नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने" भाग० ३।१३।४०। ४परमेश्वरे च पु०। "स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्म्ममयस्तपोमयः" भाग० २।४।१९।

त्रयीमुख पु० त्रयी मुखेऽस्य। विप्रे हेमच०।

त्रयोदशन् त्रि० त्रयश्च दश च, त्र्यधिका वा दश शाक० त्रय आदेशः। १त्र्यधिकदशसंख्यायां २तत्संख्यान्विते च। "क्वचित् द्वादश मासाः संवत्सरः क्वचित् त्रयोदश मासाः" स्मृति म० त०। ततः पूरणे डट्। त्रयोदश तत्पूरणे त्रि० "अष्टमे अष्टमे कुर्वीत त्रयोदशदिनात् परम्" ज्यो० स्त्रियां ङीप्। सा च चन्द्रस्य त्रयोदशकलाक्रियात्मके तिथिभेदे सा च कामतिथिः तत्रैव तस्योत्पत्तेः। "त्रयोदशी पञ्चदशी च माघे" इत्यादिवचने "शतभेन समायुक्ता मधौ कृष्णा त्रयोदशी" वारुणीवचने च ति० त०।

त्र्यारुण पु० शान्त्याद्वंश्ये त्रिधर्म्मणः सुते नृपभेदे "राज

"त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" सू॰ सि॰ ।

**त्रिंशक** त्रि॰ त्रिंशता क्रीतः वुन् डिच । त्रिंशत्संख्यान्वित-द्रव्येण क्रीते वस्तुनि ।

**त्रिंशत्** स्त्री॰ त्रयोदशतः परिमाणमस्य नि॰ । १त्रिदशकसंख्यायां २तत्संख्यान्विते च । तत्र संख्येये "निमेषा दश चाष्टौ च काष्ठाः त्रिंशत्तु ताः कलाः । त्रिंशत् कला मुहूर्तः स्यादहोरात्रन्तु तावतः" "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" मनुः "संख्यायां "तस्त्रिंशता भवेन्मासः" सू॰ सि॰ ।

**त्रिंशत्क** त्रि॰ त्रिंशत्परिमाणमस्य कन् । १त्रिंशत्परिमाणे अवयवे कन् । २तत्संख्यायाम् "अमावास्याः पृथक् तेषां त्रिंशत्कं परिचक्षते" कामन्द॰ ।

**त्रिंशति** स्त्री त्रिंशत्+पृषो॰ । १त्रिंशत्संख्यायां २तत्संख्येये च । "पञ्चकं सप्तकं ज्येष्ठं त्रिंशत्यान्तु मनीषिभिः" काम॰

**त्रिंशत्तम** त्रि॰ त्रिंशतः पूरणः तमप् । १त्रिंशत्संख्यापूरणे स्त्रियां ङीप् । "ततस्त्रिंशत्तमे ज्ञह्ने पङ्क्तिश्चतिष्ठन्" शत॰ब्रा॰ १०।४।२।२१ ।

**त्रिंशत्पत्र** न॰ त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्पमस्य । १कुमुदे शब्दमाला ।

**त्रिंशांश** पु॰ त्रिंशतस्त्रिंशत्पूरणोऽंशः । राशेस्त्रिंशत्पूरणे भागे घटिकात्मके भागे षड्वर्गान्तर्गतानां राशिभेदे तेषामंशविशेषाणामधिपतयः ज्यो॰ उक्ता यथा

"पञ्च पञ्चाष्टसप्ताक्षा विषमे त्रिंशदंशकाः । माहेयशनिजीवज्ञशुक्राणां व्युत्क्रमात् समे" । विषमराशौ कुजशनिगुरुबुधशुक्राणां पञ्च पञ्चाष्टसप्तपञ्चमितास्त्रिंशांशकाः क्रमात् ज्ञेयाः । समे राशौ व्युत्क्रमात् तेषां विपर्ययेण त्रिंशांशा ज्ञेयाः । यथा मेषो विषमराशिः तत्र प्रथमावधिपञ्चांशा भौमस्य । षष्ठांशमारभ्य दशमांशपर्य्यन्तं पञ्चांशाः शनेः । एकादशांशमारभ्याष्टादशांशपर्य्यन्तमष्टांशा गुरोः । ऊनविंशांशमारभ्य पञ्चविंशांशपर्य्यन्तं सप्तांशा बुधस्य । ततः षड्विंशांशमारभ्य त्रिंशांशपर्य्यन्तं पञ्चांशाः शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः । मिथुनसिंहतुलाधनुःकुम्भेष्वप्येवम् । समराशौ व्युत्क्रमाद्यथा । वृषे प्रथमांशमारभ्य पञ्चांशा भृगोः । ततो द्वादशांशपर्य्यन्तं सप्तांशा बुधस्य, ततो विंशांशपर्य्यन्तमष्टावंशा गुरोः । ततः पञ्चविंशांशपर्य्यन्तं पञ्चांशाः कुजस्य त्रिंशांशाः । एवं कर्ककन्यावृश्चिकमकरमीनेष्वपि बोध्याः । त्रिंशदंशका इत्यत्र हस्तौ त्रिभागवत् पूरणार्थता

**त्रिंशिन्** त्रि॰ त्रिंशत् प्रमाणमस्य इनि डिच । त्रिंशत्प्रमाणे स्त्रियां ङीप् ।

**त्रिक** न॰ त्रयाणां संघः कन् । १त्रित्वसंख्यायाम् २पृष्ठवंशाधोभागे, ३कटिभागे, ४त्रिफलायाम् (हरितक्यामलकीवयस्याफलत्रये) ५त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये) । वातादिषु त्रिषु मिलितेषु त्रिषु कायति कै-क । ६गोक्षुरे पु॰ अमरः । ७त्रिपथसंस्थाने हेम॰ । ८त्रिमदे "गुडूचीसारसंयुक्तात् त्रिकत्रयसमन्वयात् । वातरक्तं निहन्त्याशु सर्वरोगहरस्त्वयः" सुश्रुतः । त्रिकत्रयं त्रिकटु-त्रिमदम् त्रिफलम् चेति त्रयमित्यर्थः । "युगं सहस्रकारविवर्त्तितत्रिकः" माघः । "अपोढ़पार्श्वैरपवर्त्तितत्रिका" किरा॰ । "त्रिफला तु फलत्रिकम्" "कश्चिद्विवृत्तत्रिकभिन्नहारः" रघुः । "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा" हरिका॰ । तृतीयेण रूपेण पादपं यस्य कन् पूरणप्रत्ययस्य वा लुक् । ९तृतीयके त्रि॰ । त्रयः अधिकाः यस्मिन् लाभो वृद्धिर्वा यत्र शतादौ १०त्र्यधिकलाभादियुक्ते शतादौ । "द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् । मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्वशः" मनुः । (शतकरा तिनटाका सुद) "स्कन्धस्य ऊर्ध्व पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं स्मृतम्" इत्युक्ते ११सन्धिभेदे न॰ ।

**त्रिककुद्** पु॰ त्रीणि ककुदतुल्यानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः समा॰ । त्रिकूटाख्ये पर्वतभेदे अमरः । पर्वत एवास्य अन्त्यलोपः नान्यत्र । तत्र त्रिककुद तद्युक्ते त्रि॰ । २विष्णावपि पु॰ वा अन्त्यलोपः । "तथैवाहं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत् तेन विख्यातः शरीरस्य प्रमापणात्" भा॰ शा॰ ३४४ अ॰ । ३दशरात्रसाध्ये यज्ञभेदेऽपि वा अन्त्यलोपः । "त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत् पञ्चदशः ककुदेकविंशः ककुत्त्रयस्त्रिंशो य एवं विद्वान् दशरात्रेण यजते त्रिककुद एव समानानाम्" तै॰स॰७।२।५।२ । "चतुष्टोमात् षष्ठा त्रिककुदः शस्तम् अथ महात्रिककुदश्च, छन्दोमत्रिककुदश्च" शा॰ श्रौ॰ १६।२६।१४ । "यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्याशीत्तं गिरिं त्रिककुदमकरोत्" शत॰ ब्रा॰ ३।१।३।१२ । "वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता" अथ॰४।६।८।

**त्रिककुभ्** पु॰ त्रेधा कं पीतमुदकं स्कुभ्नाति स्कुम्भ क्विप् छान्दसः सलोपः । १उदाने वायौ "उदानो वै त्रिककुप्छन्दः" शत॰ब्रा॰८।५।२।४। २नवरात्रसाध्ये यज्ञ-

**त्रिकालदर्शिन्** पु० त्रिकालं तद्वृत्तिवस्तु पश्यति दृश–णिनि । १ऋषौ हारा० । २त्रिकालज्ञे त्रि० "मध्यं स्थितेऽपि काले त्रिकालदर्शी कर्त्ता भवति" वृ० सं० २१ अ० ।

**त्रिकूट** पु० त्रीणि कूटानि शृङ्गाण्यस्य । सप्तसमुद्रमध्यस्थे लङ्काधारे पर्वतभेदे अमरः । "तैरद्रेस्तैगरिकाल-त्रिकूटशिखरोपमा" माघः "स सागरमनाधृष्यमतिक्रम्य महाबलः । त्रिकूटस्य तटे लङ्कां स्थितः स्वस्थो ददर्श ह" रामा० सु० २अ० । स आकरत्वेनास्त्यस्य अच् । २तद्वति सामुद्रलवणे न० । ३सुमेरुसुते क्षीरोदसमुद्रतीरस्थे पर्वते च तत्कथा वामनपु० "सर्वरत्नमयः श्रीमान् त्रिकूटो नाम पर्वतः । सुतः पर्वतराजस्य सुमेरोर्भास्कर द्युतेः । क्षीरोदजलवीच्याभो धौतामलशिलातलः । उत्थितः सागरं भित्त्वा देवर्षिगणसेवितः" इत्युपक्रमे "तस्यैकं काञ्चनं शृङ्गं सेवते यद्दिवाकरः । नानापुष्पसमायुक्तं नानागन्धाधिवासितम् । द्वितीयं राजतं शृङ्गं सेवते यन्निशाकरः । पाण्डुराम्बुदसंकाशं तुषारचयसन्निभम् । वज्रेन्द्रनीलवैदूर्यतेजोभिर्भासयन् दिशः । तृतीयं ब्रह्मसदनं प्रकृष्टं शृङ्गसत्तमम् । न तत् कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः । नातप्ततपसो लोका ये च पापकृतो जनाः । तस्य सानुमतः पृष्ठे सरः काञ्चनपङ्कजम् । कारण्डवसमाकीर्णं राजहंसोपशोभितम् । गजोऽञ्जनसंकाशो मदाच्चलितलोचनः । तृषितः पातुकामोऽसाववतीर्णश्च तज्जलम् । संलीनः पङ्कजवने यूथमध्यगतश्चरन् । गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्त्तिना । गजेन्द्रो जगन्नाथो लोकाधारतपोधन ! । ग्राहग्रस्तं गजेन्द्रं तं तञ्च ग्राहं जलाशयात् । उज्जहाराप्रमेयात्मा तरसा मधुसूदनः । स्थलस्थं दारयामास ग्राहं चक्रेण माधवः । मोक्षयामास नागेन्द्रं पाशेभ्यः शरणागतम्" ।

**त्रिकूटलवण** न० त्रिकूटं सामुद्रमिव लवणम् । द्रोणीलवणे राजनि० ।

**त्रिकूटवत्** पु० त्रीणि कूटानि सन्त्यस्य मतुप् मस्य वः । १त्रिकूटपर्वते । "हिमवान् पारियात्रश्च विन्ध्यश्च त्रिकूटवान्" भा० आश्वमेधिकप० श्रेष्ठपर्वतकथने" ४३ अ० ।

**त्रिकूटा** स्त्री भैरवीभेदे तन्त्रसा० ।

**त्रिकूर्चक** न० सुश्रुतोक्ते शस्त्रभेदे अर्द्धधारशब्दे ३७१ पृ० दृश्यम् । "विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्राणाञ्च त्रिकूर्चकेन विस्रावयेत्" सुश्रु० ।

**त्रिकोण** त्रि० त्रयः कोणा यस्य । त्रिकोटियुक्ते १पदार्थे "विन्दुत्रिकोणवसुकोणदशारयुग्मम्" तन्त्रोक्ते श्रीचक्रोक्ते । ज्योतिषोक्ते लग्नात् २नवमपञ्चमस्थाने न० । "त्रिकोणं नवपञ्चमम्" दीपि० । "त्रिकोणगान् गुरुश्चैव पश्यन् पूर्णफलप्रदः" ज्यो० त० । ३योनौ शब्दरत्ना० । ४त्रिभुजे क्षेत्रभेदे न० । क्षेत्रशब्दे २३६१ पृ० समत्रिकोणविषमत्रिकोणादिस्वरूपादिकमुक्तम् । ५कामरूपपीठभेदे "करतोयां समारभ्य यावद्दिक्करवासिनीम् । शतयोजनविस्तारं त्रिकोणं सर्वसिद्धिदम्" कामाख्यातन्त्रम् । त्रिकोणपदार्थाश्च कतिचित् कविकल्पलतायां संचिन्त्य दर्शिताः । "हलहरनेत्रकामाख्यावह्निमण्डलैकारवज्रशृङ्गाटशकटयोनिरूपाः" ।

**त्रिकोणफल** न० त्रिकोणं फलमस्य । १शृङ्गाटके भावप्र० । ६त० । त्रिभुजक्षेत्रफले "लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवति" लीला० । [काचारयवक्षारटङ्कणक्षारेषु ।

**त्रिक्षार** न० त्रयाणां क्षाराणां समाहारः । सर्जि-

**त्रिखुर** पु० त्रीणि खुराणीवाग्राण्यस्य । कोकिलाक्षवृक्षे रत्ना० ।

**त्रिख** न० त्रिधा खमाकाशोऽवकाशः यत्र । त्रपुणि शब्दच० ।

**त्रिखट्व** न० त्रयाणां खट्वानां समाहारः । खट्वान्ते । ततः वा ङीप् । तत्रार्थे स्त्री अमरः ।

**त्रिखर्व** पु० सामवेदशाखाभेदाध्यायिनि "तामेतान्त्रिखर्वा उपासते तस्मात्ते खर्वभागा न स्त्रीयन्ते" ताण्ड्यब्रा० २।८।३। "तामेतां दशसप्ताख्यां विष्टुतिं त्रिखर्वाः शाखिन उपासते प्रयुञ्जते" भाष्यम् ।

**त्रिगङ्ग** अव्य० त्रिस्रो गङ्गा नद्यो यत्र सङ्ख्याद्यर्थे "नदीभिश्च" पा० अव्ययी० । १तीर्थभेदे । "सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् । सुधां चैव लभेत् भोक्तुं यो नरो जायते पुनः" भा० अनु० २५ अ० ।

**त्रिगण** त्रि० ६त० । १त्रिवर्गे अमरटीकायां नीलकण्ठः "न बाधतेऽस्य त्रिगणः परस्परम्" किरा० ।

**त्रिगन्धक** न० त्रयाणां गन्धकद्रव्याणां समाहारः । १त्रिजातके त्रि० नैघण्टुपारस्करः । त्रिसुगन्धिकमप्यत्र । त्रिजातकशब्दे दृश्यम् ।

**त्रिगम्भीर** पु० त्रिभिर्गम्भीरः । स्वरेण सत्त्वनाभिभ्यां त्रिगम्भीरः "त्रिपुः शुभः" काशी० ११ अ० उक्ते शुभलक्षणयुक्ते "त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः" इत्युपक्रमे "नाभिः स्वरः सत्त्वमिति प्रदिष्टं गम्भीरमेतत्त्रितयं नराणाम्" वृ० सं० ६८ अ० ।

त्रिषष्टितम त्रयःषष्टितम तत्संख्यापूरणे त्रि० । स्त्रियां ङीप् । पूरणे डट् । त्रिषष्ट त्रयःषष्ट त्रिषष्टिपूरणे त्रि० । स्त्रियां ङीप् ।

**त्रिषु(सु)पर्ण** पु० त्रयः सुपर्णाख्यास्तदाख्याभ्यस्ता यत्र । १ऋग्वेदभागभेदे त्रिसौपर्णशब्दे दृश्यं २तद्व्रते च तद्योगात् ३तद्व्रतधारिणि पुरुषे "त्रिणाचिकेतः पञ्चाग्निस्त्रिसु(षु)पर्णः षडङ्गवित्" मनुः । वा कप् । तत्रार्थे "वेदार्थवित् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः" याज्ञ०।

**त्रिष्टुभ्** स्त्री त्रिषु स्थानेषु स्तुभ्यते स्तुभ–क्विप् षत्वम् । एकादशाक्षरपादके वर्णवृत्ते छन्दोभेदे "गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च । त्रिष्टुप् च जगती चैव" वृ० र० । प्रस्तारे तस्याः २०४८ भेदाः । "एकादशाक्षरा वै त्रिष्टुप् गायत्री क्षत्रं त्रिष्टुप्" शत०ब्रा०१।३।५।५। "तथैव माध्यन्दिनं सवनमतन्वत" इत्युपक्रमे "एकादशाक्षरा त्रिष्टुभ् तस्मादाहुस्त्रैष्टुभं माध्यन्दिनं सवनमिति" शत०ब्रा० ४।२।२।८ । २तच्छन्दोऽभिमानिदेवतायाञ्च । "इन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्" यजु० ९।३० । "इन्द्रो देवः एकादशाक्षरेण छन्दसा त्रिष्टुभं त्रिष्टुप् छन्दोऽभिमानिनीं देवतामुदजयत्" वेददीपः । प्रसङ्गात् छन्दोऽभिमानिदेवताः सर्वानुक्रमणिकायां ४ ख० उक्ताः प्रदर्श्यन्ते । "अथातश्छन्दोदेवता गायत्र्या अग्निरुष्णिहः सविताऽनुष्टुभः सोमो बृहत्या बृहस्पतिः, पङ्क्तेर्वरुणस्त्रिष्टुभ इन्द्रो जगत्या विश्वे देवा विराजो मित्रः, स्वराजो वरुणोऽतिच्छन्दसः प्रजापतिर्विच्छन्दसो वायुर्द्विपदायाः पुरुष एकपदाया ब्रह्मा । सर्वा ऋचः आग्नेय्यः सर्वाणि यजूंषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च । स्वाहाकारस्याग्निर्वषट्कारस्य विश्वे देवाः । कर्मारम्भे मन्त्राणां देवता वेदितव्याः संन्यस्य मनसि देवतां ततो हविर्दीयते देवतामविज्ञाय यो जुहोति देवतास्तस्य हविर्न जुषन्ते । स्वाध्यायमपि योऽधीते मन्त्रदैवतज्ञः सोऽमुष्मिन् लोके देवैरपीज्यते । तस्माच्च देवता वेद्या मन्त्रे मन्त्रे प्रयत्नतः । मन्त्राणां देवताज्ञानान्मन्त्रार्थमधिगच्छति" । सर्वब्रह्मात्मनः कायात् तस्या उत्पत्तिः भाग०३।१२।२९ श्लो० उक्ता यथा "तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः । त्रिष्टुम्मांसात् स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः । मज्जातः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत्"।

**त्रिष्टोम** पु० त्रयः स्तोमा यत्र षत्वम् । चतुष्टतियज्ञस्य उभयतः कर्त्तव्ये यज्ञभेदे । "चतुष्टतिः" कात्या०श्रौ०१५।८।२४ सू० "तदुभयतः एके त्रिष्टोमज्योतिष्टोमौ" २५ सू०। "एके तं चतुष्टतिमुभयतः त्रिष्टोमज्योतिष्टोमौ कुर्वन्ति" सं० व्या० ।

**त्रिष्ठ** पु० त्रिषु चक्रेषु तिष्ठति स्था–क अम्बाम्बेत्यादिना षत्वम् । चक्रत्रयस्थिते रथे । "त्रिष्ठं वां सूरे दुहिता रुहद्रथम्" ऋ० १।३४।५ । "त्रिष्ठं चक्रत्रयेऽवस्थितं रथम्" भा० ।

**त्रिष्ठिन्** त्रि० त्रिषु विद्यादानयज्ञेषु तिष्ठति स्था–बा० इनि सुषामा० षत्वम् । विद्यादिशीलयुक्ते । "उरुव्रजनि कुले-भ्यस्त्रिष्ठिनम्" यजु० १०।१४। "त्रिषु विद्यादिषु स्थितं शीलवन्तम्" वेददी० ।

**त्रिस्** अव्य० त्रि+वारे सुच् । त्रिवारे "येन त्रिःसप्तकृत्वो नृपव-हुवसामांसस्त्रिश्चपङ्केति" प्रबोधच०। "अनेन विधिना श्राद्धं त्रिरब्दस्य हि निर्वपेत्" मनुः । "त्रिरर्पयेदघमर्षणम्" स्मृतिः ।

**त्रिसन्धि** स्त्री त्रयः सन्धयोऽन्तरकाला विकाशेऽस्याः । (फागनिया) १पुष्पभेदे राजनि० । सा त्रिविधा सिताऽसिता रक्ता च । सा०हि० । २पूर्वापरमध्यसन्धौ न० ।

**त्रिसन्ध्य** न० समाहारद्वि० । प्राह्णपराह्णमध्याह्नरूपे सन्ध्यात्रये । "सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन !" भा० व० ८२ अ० । "करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः" माघः । "त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः । न तत्र युग्मादरणमन्यत्र हरिवासरात्" ति०त० वराहः । पुष्पे (फागनिया) राजनि०।

**त्रिसन्ध्यकुसुमा** स्त्री त्रिसन्ध्यं कुसुमं यस्याः । त्रिसन्धि-

**त्रिसप्तति** स्त्री एकव०त्र्यधिका सप्ततिः शा०त०त्रयश्च सप्ततिश्च द्वन्द्व०वा । १त्र्यधिकसप्ततिसंख्यायां २तत्संख्येये च पक्षे वा त्रयआदेशे त्रयःसप्तति तत्रार्थे । तत्र त० पूर्वप्रकृतिस्वरः त्रय आदेशे अन्तोदात्त इति भेदः । ततः पूरणे तमप् । त्रिसप्ततितम त्रयःसप्ततितम तत्पूरणे त्रि०स्त्रियां ङीप् । पूरणे डट् । त्रिसप्तत तत्रार्थे त्रि० स्त्रियां ङीप् । "भीमसेनं त्रिसप्तत्या नकुलं सप्तभिः शरैः" भा०श०२१अ० । त्रिसप्तत्या युतं शतादि ड । त्रिसप्तत तद्युते शतादौ त्रि०।

**त्रिसप्तन्** त्रि० ब०व०त्रिगुणिताः सप्त । १एकविंशतिसंख्यायाम् २तत्संख्येये च । "विद्धा चैनं त्रिसप्तभिः" भा०श०१२अ०। "त्रिसप्तकृत्वः पृथिवीं योजिगाय भृगूत्तमः" हरिवं०३०४अ०।

**त्रिसम** न॰ त्रयः समा यत्र। समहरीतकीनागरगुड़रूपे पदार्थे राजनि॰। समा॰ द्वि॰। २वर्षत्रये न॰।

**त्रिसर** पु॰ कृसर+पृषो॰। कृसरे हेमच॰।

**त्रिसरक** न॰ त्रिवारं सरकम्, त्रयाणां सरकाणां शीधुपानानां समाहारः पात्रा॰न ङीप् वा। त्रिवारे मधुपाने "प्रीतिमं त्रिसरकेण गतानाम्" माघः।

**त्रिसर्ग** पु॰ त्रयाणां सत्त्वरजस्तमसां सर्गः। सत्त्वरजस्तमसां सर्गे। "यत्र त्रिसर्गो मृषा" भा॰ १।१।१।

**त्रिसामन्** पु॰ त्रीणि सामानि स्तुतिसाधनानि यस्य। १परमेश्वरे। "त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्" विष्णु सं॰। "त्रीणि वेदव्रतसामाख्यानि तैस्त्रिसामभिः स्तुतस्त्रिसामा" भा॰ वेदव्रतसामानि च। "अधिपताद जित ! पताद सुरपताद" इत्येवमादीनि त्रीणि सामानि।२महेन्द्राद्रेः स्रवन्त्यां नद्याम् स्त्री डाप् शब्दार्थचि॰। "ऋषिकुल्या त्रिसामा कौशिकी इत्यादि" भाग॰ ५।१९।१८। भारतवर्षमहानद्युक्तौ।

**त्रिसाहस्र** त्रि॰ त्रीणि सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः। त्रिभिः सहस्रैः १परिमिते। स्त्रियां ङीप्। "त्रिसाहस्र्युत्तमा" कात्या॰ श्रौ॰ १७।७२१। "उत्तमा चितिः त्रिसाहस्री लोकम्पृणानां भवति" कर्कः।

**त्रिसिता** स्त्री त्रिगुणिता सिता श॰ त॰। त्रिशर्करात्मशब्दार्थे राजनि॰। [सीतया क्रष्टक्षेत्रे अमरः।

**त्रिसीत्य** न॰ त्रिवारं सीतया कर्षितम् यत्। त्रिःकृष्टः।

**त्रिसुगन्धि** न॰ त्रयाणां सुगन्धिद्रव्याणां समाहारः। "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्" इत्युक्ते तुल्यभागे एलादित्रिके राजनि॰। "पिबेद्रसं पुष्पफलोद्भवं वा सितामधूकत्रिसुगन्धियुक्तम्" सुश्रुतः।

**त्रिसुवर्चक** पु॰ आङ्गिरसे च्यवनरूपे वह्नौ "अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्चकः" भा॰ व॰ २१९ अ॰।

**त्रिसौपर्ण** न॰त्रिः सुपर्णेन ऋषिणा कृतमण् इत्यौ त्रिशब्दस्य सुलर्थता उत्तरपदवृद्धिः। सुपर्णर्षिणा चरिते व्रतभेदे।

"सुपर्णो नाम तमृषिः प्राप्तवान् पुरुषोत्तमात्। तपसा वै सुतप्तेन दमेन नियमेन च। त्रिः परिक्रान्तवानेतत् सुपर्णो धर्ममुत्तमम्। यस्मात्तस्माद्व्रतं ह्येतत् त्रिसौपर्णमिहोच्यते। ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम्। सुपर्णाच्चाप्यधिगतो धर्म एष सनातनः। वायुना द्विपदां श्रेष्ठः कथितो जगदायुषा। वायोः सकाशात् प्राप्तश्च ऋषिभिर्विघसाशिभिः। ततो महोदधिश्चैव प्राप्तवान् धर्ममुत्तमम्। ततः स्थितो ततो भूयो नारायणसमाश्रितः" भा॰ शा॰ ३५॰ अ॰। सुपर्णा एव स्वार्थे अण् त्रयः सौपर्णा यत्र। ऋग्वेदे १०। ११४। ३। ४। ५। मन्त्रत्रिके। ते च मन्त्राः "चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते। तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्"। ४ "एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे। तं पाकेन मनसा पश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम्"।४"सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति। छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश"।५ सुपर्णपदघटिते मन्त्रे विहितं अण् उत्तरपदवृद्धिः।२परमेश्वरनामभेदे "त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम्"भा॰शा॰२८६अ॰। "त्रिसौपर्णे विहितं नाम त्रिसौपर्णमिति तदर्थः" श्रीधरः। त्रिसौवर्णेति पाठः लिपिकरप्रमादात्।

**त्रिस्कन्ध** न॰ त्रयः स्कन्धा इवावयवा यस्य। ज्योतिःशास्त्रे बृ॰ सं॰ १ अ॰ तस्य स्कन्धत्रयञ्च यथा "ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् तत्कार्त्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता। स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः"। तेन तन्त्रहोराङ्गनिर्णयात्मकास्त्रयः स्कन्धाः।

**त्रिस्तन** न॰ त्रयःस्तना दोह्या यत्र। तादृशाध्ये यज्ञे प्रथमायाश्चपर्कादि दोहनियमरूपे १व्रतभेदे "त्रिस्तनं प्रथमायां दोहयति" कात्या॰ श्रौ॰ ८।२।१ त्रयःस्तना यस्याः ङीप्। स्तनत्रययुक्ते २राक्षसीभेदे स्त्री "त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनाम्" भा॰ व॰ २७९ अ॰।

**त्रिस्तावा** स्त्री त्रिगुणिता तावती वेदिः। "द्विस्तावा त्रिस्तावा वेदिः" पा॰ अच् समा॰ टिलोपः समासश्च निपात्यते। प्रकृतौ यावती वेदिः ततस्त्रिगुणेऽश्वमेधाद्यङ्गे वेदिभेदे। वेदिमिह्ने तु त्रिस्तावती रज्जुः" इत्येव सि॰ कौ॰।

**त्रिस्थली** स्त्री त्रयाणां गयाकाशीप्रयागरूपस्थलानां समाहारद्वि॰। काशीगयाप्रयागरूपस्थलत्रिके। तदधिकृत्यैव त्रिस्थलीसेतुनामा ग्रन्थः भट्टनारायणेन कृतः।

**त्रिस्थान** त्रि॰ त्रीणि स्थानान्यस्य। १स्वर्गमर्त्यपातालव्यापिनि परमेश्वरे २जाग्रदाद्यवस्थात्रयसाक्षिणि जीवे च।

**त्रिस्रोतस्** स्त्री त्रिषु लोकेषु स्रोतो यस्याः। गङ्गायाम् "त्रिस्रोतसः कान्तिमतीत्य तस्थौ" कुमा०।"कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः" रघुः।

**त्रिस्रोतसी** स्त्री त्रीणि स्रोतांसि सन्त्यस्याम् अच् गौरा० ङीष्। स्रोतस्त्रययुक्ते नदीभेदे "तथा नद्यश्चत्वारः। नदी भागीरथी च या" इत्युपक्रमे "जयन्ती गोमती चैव सन्ध्या त्रिस्रोतसी तथा" भा० स० ८अ०। वरुणसभास्थतीर्थभूतनद्यादिकथने।

**त्रिस्पृशा** स्त्री त्रीणि चान्द्रदिनानि एकस्मिन् सावने दिने स्पृशति स्पृश–क। एकादशीभेदे "यदा पूर्वदिने दशमी परदिने चैकादशी तस्मात् ततो द्वादशी रात्रिशेषे त्रयोदशी सा चैकादशी त्रिस्पृशा" रघु० "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारयेत्" एका० त० धृत वचनम्। "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्रिस्पृशा नाम सा ज्ञेया ब्रह्महत्यां व्यपोहति" संवर्त्तवचनम्। अस्याः महाद्वादशीषु वासरत्रयस्पर्शिन्या द्वादश्यास्तु द्वादशीमध्ये इत्यन्यम्।

**त्रिस्नान** न० त्रिषु कालेषु स्नानमत्र। त्रिकालस्नानाङ्गे व्रतभेदे। तच्च वानप्रस्थाङ्गं प्रायश्चित्ताङ्गञ्च। तत्राद्यं कामन्दकीनीतिशास्त्रे उक्तं यथा "वनवासः पयोमूलनीवारफलवृत्तिता। प्रतिग्रहनिवृत्तिश्च त्रिस्नानं व्रतचारिता। देवातिथीनां पूजा च धर्मोऽयं वनवासिनः" द्वितीयस्तु त्रिषवणशब्दे दर्शितम्। [स्नेते अमरः

**त्रिहल्य** न० त्रिः हलेन कृष्टं यत्। त्रिवारं हलेन कृष्टे

**त्रिहायण** त्रि० त्रयो हायना वयोऽस्य णत्वम्। त्रिवर्षे गवादौ "अथ संस्कारयं कृत्वा स्नापयित्वा त्रिहायणान्" भा० व० २३१ अ०। स्त्रियान्तु ङीप्। "त्रिहायणी त्रिवर्षा गौः" अमरः। "वत्सतरीस्त्रिहायण्योऽभिप्रेताः पञ्चवर्णा राजीवपृष्ठ्यो नवनीतपृष्ठ्योऽरुणाः पिशङ्ग्यः सारङ्ग्यः" कात्या० श्रौ० २२।८।१२ ।२द्रौपद्यां ब्रह्मवै० "कृते युगे वेदवती त्रेतायां जनकात्मजा। द्वापरे द्रौपदी छाया तेन कृष्णा त्रिहायणी" जन्मखण्डम्।

**त्रीषु** त्रि० त्रय इषवः परिमाणमस्य कन् तस्य लुक्। १इषुत्रयमिते स्थाने। त्रयः इषवो यत्र कप्। २बाणत्रययुक्ते धनुषि न०। "त्रीषुकं धनुर्दक्षिणा" कात्या० श्रौ० २५।४।४७।अस्यां त्रिहविष्कायामिष्टौ त्रिभिरिषुभिर्युतं धनुर्दक्षिणेत्यर्थः" कं० व्याख्या।

**त्रीष्टक** पु० तिस्रः ऋगादिरूपा इष्टका यस्य। अग्निभेदे "स एष त्रीष्टको ऽग्निः। ऋगेका यजुरेका सामैका तद्यां कां चानश्चोपदधाति ऋक्त एव तस्या आयतनमथ यां यजुषा पुरुष एव तस्या आयतनमथ यां साम्ना पुष्करपर्णमेव तस्या आयतनमेवं त्रीष्टकम्" शत० ब्रा० १०।५।२।२१।

**त्रुट** छेदने वा दिवा० पक्षे तुदा० कु० पर० सक० सेट्। त्रुट्यति त्रुटति अत्रु(त्रो)टीत्। तुत्रोट। छेदनात् अवयवविश्लेषभाव मात्रम् "यावन्मे दन्ता न त्रुट्यन्ति" हितो० "त्रुटित पयोधरतटे हारं पुनर्योजय" सा० द०। "त्रुटित इव मुक्तामणिसरः" उत्तर०।

वि+विश्लेषीकरणे सक०। "कण्टकैरेना वित्रुटेयुः" कात्या० श्रौ० २२।३।२२। "वित्रुटेयुः विलुञ्चेयुः" क० व्याख्या।

**त्रुट** छेदने चुरा० आ० सक० सेट्। त्रोटयते अतुत्रुटत।

**त्रुटि(टी)** स्त्री कुटा० त्रुट–इन् वा ङीप्। १सूक्ष्मैलायां २अल्पे ३संशये ४कालभेदे च अमरः स च "योऽक्ष्णोर्निमेषस्य खराम१०भागः स तत्परस्तच्छतभाग उक्ता। त्रुटिर्निमेषैर्धृति१८भिश्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता" सि० शि० उक्तः तत्परस्य शतभागकालरूपः। "क्षणद्वयात्मकः कालस्त्रुटिरिति' भरतः तन्मूल्यं सत्यम्। तदपेक्षया क्षणस्य भाग० अधिककालतोक्तेः तस्यामूर्त्तत्वात् क्षणस्य मूर्त्तत्वाच्च तथा हि "प्राणादिः कथितो मूर्त्तस्त्रुट्याद्योऽमूर्त्तसंज्ञकः" सू० सि० "त्रुटिराद्या यस्य तादृशः कालः एकप्राणान्तर्गतत्रुटितत्परादिकोऽमूर्त्तसंज्ञकः व्यवहारायोग्यत्वेनास्यामूर्त्तत्वम्। भाग० ३।११।५० ६। अन्यथा मानमुक्तं यथा "अणू द्वौ परमाणुः स्यात् त्रसरेणुस्त्रयः स्मृतः। ज्वालार्करश्म्यवगतः खमेवानुपतन्नगात्। त्रसरेणुत्रयं भुङ्क्ते यः कालः सः त्रुटिः स्मृता। शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः। निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः"। "भरतः बह पर्जन्याः कलात्रुटिलवक्षणाः" हरिवं०१६८अ०। "शुक्लस्य बहुलस्य च कला काष्ठा त्रुटिस्तथा" भा० आ० २५ अ०। "प्राणत्रुटित्रवयवाद्यकालस्य चेतस च वेत्ता" ह०सं०२अ०। २कुमारानुचरमातृभेदे "केशयन्ती त्रुटिर्नाम क्रोशना तु तड़ित्प्रभा" भा० श०४७० मातृगणोक्तौ। भावे इन्। ३अवयवादिहीनतायाम्।

**त्रुटिवीज** पु० त्रुटिरल्पं वीजमस्य। कचौ मूलभेदे शब्दमा०।

**त्रुटिशस्** अव्य० त्रुटि+वीप्सार्थे शस्। त्रुटिस्त्रुटिरित्यार्थे। "त्रुटिशोऽवयवशापि गण्यते कालनिश्चयः" भा० उ० ११८ अ०।

**त्रुन्प(म्प)** वधे भ्वा०पर०सक० सेट्। त्रुम्पति अत्रुम्पीत्। नोपधत्वे क्विपि त्रुप् त्रुपौ नोपधत्वे त्रुन् त्रुम्पौ इति भेदः।

**त्रुन्फ(म्फ)** वधे भ्वा० पर० सक० सेट्। त्रुम्फति अत्रुम्फीत्। नोपधत्वे क्विपि त्रुप् त्रुफौ नोपधत्वे त्रुन् त्रुम्फौ इति भेदः। [(फी)त्। त्रलोप (फ)

**त्रुप(फ)** वधे भ्वा० पर० सक० सेट्। त्रोप(फ)ति अत्रोपी-

**त्रेता** स्त्री त्रित्वमिता पृषो०। दक्षिणाग्निगार्हपत्याहवनीयात्मके समुदिते १अग्नित्रये, सत्ययुगानन्तरवर्त्तिनि युगभेदे, २द्यूतक्रीडासाधनस्याक्षस्य यस्मिन् पार्श्वे त्रयोऽङ्कास्तस्य पार्श्वस्य उत्तानतया ३पतने, द्यूतविशेषे वराटकानां मध्ये त्रयाणामुत्तानतया ४पतने च "त्रेतया हृतसर्वस्वः" इति मृच्छकटिका। अयगब्दे २२४९०पृष्ठम्

"त्रेतायुगमानस्य दिव्यमानेन ३००० वर्षाः आदौ सन्ध्या ३००। अन्ते सन्ध्यांशः ३०० मिलिताः ३६००। वर्षाः मानुषमानेन ३६० गुणिता १२९६००० वर्षाः। यथाह मनुः "चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः। इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च"। सि० शि० "खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः। क्रमेण सूर्य्यवत्सरैः कृतादयो युगाङ्घ्रयः। ससन्ध्यकाहतदंशकैर्निजाङ्कै१२भागसम्मितैः। युताश्च तद्युता युगं रदाश्वयोऽयुताहताः"। खखाभ्रदन्तसागरैः ४३२०००अङ्कैस्त्रिभिर्गुणितैस्तन्मिता वर्षा त्रेतामानं तत्रापि त्रेतादौ सन्ध्यामानं १०८००० त्रेतामानं १०८०००० वर्षाः। त्रेतान्ते सन्ध्यांशमानम् १०८०००। मिलित्वा १२९६००० वर्षाः त्रेतामानम्। स्पष्टमुक्तं ब्रह्मवै० प्र० ख० "द्विषट्लक्षपरिमितं षण्णवतिसहस्रकम्। त्रेतायुगं परिमितं कालविद्भिः प्रकीर्त्तितम्"।

"दण्डनीत्यां यदा राजा त्रीनंशाननुवर्त्तते। चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्त्तते। अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्त्तते। कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा"। "राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च। युगस्य च चतुर्थस्य राजा भवति कारणम्। कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते। त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते" भा०शा०६९अ०। तद्धर्माश्च "त्रेतायुगे समायाते धर्मः पादोनतां गतः। सत्यक्लेशान्विता लोकाः केचित्, केचिद्दयाश्रयाः। विष्णुध्यानरता लोका यज्ञदानपरायणाः। वर्णाश्रमाचाररताः सुखिनः स्वस्थचेतसः। क्षत्रा भूमिसृजः शूद्राः सर्वे ब्राह्मणसेविनः। ब्राह्मणाश्च महात्मानो वेदवेदाङ्गपारगाः। प्रतिग्रहनिवृत्ताश्च सत्यसन्धा जितेन्द्रियाः। तपोव्रतपरा नित्यं दातारो विष्णुसेविनः। कालवर्षी तडित्वांश्च स्त्रियः सर्वाः पतिव्रताः। वसुन्धरा च शस्याढ्या पुत्राश्च पितृसेविनः" इति पाद्मे क्रियायोगसारोक्ताः।

"अत्राहाद्या भगवती जीवानां निष्कृतिं यथा। कृते व्यतीते त्रेतायां दृष्ट्वा धर्मव्यतिक्रमम्। वेदोक्तकर्मभिर्मर्त्त्या न शक्ताः स्वेष्टसाधने। बहुक्लेशकरं कर्म वैदिकं भूरिसाधनम्। कर्त्तुं न योग्यामनुजाश्चिन्ताव्याकुलमानसाः। त्यक्तुं कर्त्तुं न चार्हन्ति यदा कातरचेतसः। वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि भूतले। तदा त्वं प्रकटीकृत्य तपःस्वाध्यायदुर्बलान्। लोकानतारयः पापात् दुःखशोकभयप्रदात्। त्वां विना कोऽस्ति जीवानां घोरसंसारसागरे। भर्त्ता पाता समुद्धर्त्ता पितृवत् प्रियकृत् प्रभुः" इति श्रीमहानिर्वाणतन्त्रे जीवोद्धारणहेतवे सदाशिवं प्रति जगन्मातुः वाक्यम्। तस्मिन् युगे पुरुषायुषकालश्च त्रिशतवर्षो मनुनोक्तो यथा "चतुष्पात् सकलो धर्मः सत्यञ्चैव कृते युगे। नाधर्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते। इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः। चौरिकानृतमायाभिर्धर्मश्चापैति पादशः। अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः। कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः। वेदोक्तमायुर्मर्त्त्यानामाशिषश्चैव कर्मणाम्। फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम्"।

पुराणान्तरे अयुतवर्षात्मकाल उक्तः अतएव "दशवर्षसहस्राणि रामो राज्यमकारयत्" इत्यादि सङ्गच्छते। तपसा आयुःकालाधिक्यमिति न मनूक्तिविरोधः इति तु न्याय्यम्।

"धर्मार्थौ हि यथा त्रेता वह्निस्त्रेता तथैव च। तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः" भा० आनु० ९० अ०। अग्नित्रयस्य त्रेतानामनिरुक्तिर्यथा "त्रिधा प्रणीतो ज्वलनो मुनिभिर्वेदपारगैः। अतस्त्रेतात्वमा०

र्हति चग्ज् । ऋगादिवेदसम्बन्धिहौत्राध्वर्य्यवौद्गात्रार्हे ज्योतिष्टोमादौ काम्यकर्म्मणि ।

**त्रैधातवी** स्त्री उदवसानीयाख्ये इष्टिभेदे “तस्य योनिरायत्व आव । तमसु पराक्रम्य संलुप्याचिनत् वैषेष्टिरभवत् तद्यदेतस्त्रिधाशत्रौ त्रिधातुरिवैषाविद्यायेत तस्मात्त्रैधातवी नाम” शत० ब्रा० ५।५।५।६। “सर्वो ह्येषोऽपि दर्विहोमाख्यो राजसूयेन यजते देवसूष्टो वा एषेष्टिर्यत्त्रैधातवी” ११। “त्रैधातव्युदवसानीयाखायेव बस्त्रु:” शत० ब्रा० १२।६।२।१७। “त्रैधातव्युदवसानीया सर्वत्र” कात्या० श्रौ० १२।४।८।

**त्रैधातवीय** न० त्रिधातवी+गहा० छ। इष्टिभेदाङ्गकर्म्मभेदे “सर्वो वा एष यज्ञो यत्त्रैधातवीयम्” तैत्ति०सं०२।४।११।२।

**त्रैधातुक** त्रि० त्रिभिः धातुभिः चर्परौप्यताम्रैः निर्वृत्तः ठञ्। स्वर्णादिधातुत्रयनिष्पाद्ये।

**त्रैनिष्किक** त्रि० त्रिभिः निष्कैः क्रीतम् ठक्। त्रिनिष्कक्रीते। तस्य वा लुक्। त्रिनिष्क अप्यत्र।

**त्रैपारायणिक** त्रि० त्रिः पारायणमावर्त्तयति ठञ्। त्रिवारं वेदपारायणकारके।

**त्रैपुर** पु० त्रिपुर+स्वार्थे अण्। १त्रिपुरदेशे हेमच०। त्रिपुरोऽभिजनोऽस्य तस्य राजा वा अण्। २पित्रादिक्रमेण तद्वासिनि ३त्रिपुराधीशे च बहुषु अणो लुक्। “मेकलैस्त्रैपुरैश्चैव चिच्छलैश्च समन्वितः” भा० भी० ८८ अ०। आर्षत्वात् बहुषु अणो न लुक्। त्रिपुरं पुरत्रयमस्त्यस्य अण्। त्रिपुरस्वामिषु ४असुरभेदेषु त्रिपुरशब्दे दृश्यम्। “येनोद्गतास्त्रैपुरा मायिनो वै दग्धाघोरेण चितयान्ता शरेण” हरिवं० १११ अ०।

**त्रैपुरुष** त्रि० त्रीन् पुरुषान् व्याप्नोति अण् स्वार्थे पूर्वपदवृद्धिः। त्रिपुरुषव्यापके। “ब्राह्मणानिन्दिता राजन्! कुल्यस्त्रैपुरुषं कुलम्” भा० अनु० ८० अ०। लोके तु उत्तरपदवृद्धिः त्रिपौरुष इत्येव।

**त्रैफल** न० त्रिफलानां तदाद्यद्रव्याणामिदम् अण्। चक्रदत्तोक्ते घृतभेदे। यथा “त्रिफलां त्र्यूषणं द्राक्षां मधुकं कटुरोहिणीम्। प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं नागकेशरम्। नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम्। कार्षिकं पयसा तुल्यं त्रिगुणं त्रिफलारसम्। घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम्। तिमिरं दोषमाश्रावं कामलां काचमर्बुदम्। वीसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च। खालित्यं पलितञ्चैव केशानां पतनन्तथा। विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति। अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः। तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा। न चैतस्मात् परं किञ्चिदृषिभिः काश्यपादिभिः। दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम्”।

**त्रैबलि** पु० ऋषिभेदे “दामोष्णीषस्त्रैबलिश्च पर्णादो वरजानुकः। मौञ्जायनो वायुभक्षः पाराशर्य्यश्च सारिकः” भा० स० ४ अ०।

**त्रैमातुर** पु० तिसृणां मातॄणामपत्यम् अण् मातुरुत्। तिसृणां कौशल्याकैकयीसुमित्राणां चरुभागभक्षणेन तदीयांशपायसभोजनेन जनिते लक्ष्मणे “त्रैमातुरः कृतसमिताक्षयक्षः” भट्टिः। “स हि सुमित्रया, सांशपिण्डद्वयप्रदानात्ताभ्याम् जनितः” जयम०। तत्कथा रामायणे दर्शिता यथा “पायसं प्रतिगृह्योचाः पुत्रीयं त्विदमात्मनः। कौशल्यायै नरपतिः पायसार्द्धं ददौ तदा। अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिपः। कैकेय्यै चावशिष्टार्द्धं ददौ पुत्रार्थकारणात्। प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम्। अनुचिन्त्य सुमित्रायै पुनरेव महामतिः। एवन्तासां ददौ राजा भार्य्याणां पायसं पृथक्। तास्त्वेव पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः। सम्मानं मेनिरे सर्वाः प्रहर्षोदितचेतसः। ततस्तु ताः प्राश्य तदुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक्। हुताशनादित्यसमानतेजसोऽचिरेण गर्भान् प्रतिपेदिरे तदा” आ० १६ स०।

**त्रैमासिक** त्रि० त्रिमासं तृतीयमासं भूतः भावतया प्राप्तः “तमधीष्टो भृतो भावी” पा० ठञ् इत्तौ त्रिमासस्य पूरणार्थत्वेन संख्यावाचकत्वाभावात् न द्विगुत्वं तेन “द्विगोर्लुगनपत्ये” पा० न लुक्। स्वसत्तया अतीततृतीयमासव्यापके त्रिमासवयस्के “तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः” भाग० २।७।२८। २त्रिमासभवे च।

**त्रैमास्य** न० त्रिमास+स्वार्थे ष्यञ्। त्रिमासे “अर्द्धमासमासत्रैमास्यषाण्मास्ये चेके” का० श्रौ० २०।१।६।

**त्रैयम्बक** त्रि० त्रियम्बको देवता अस्य। “त्र्यम्बकदेवताके १पशुभेदे। “शुक्लास्त्रैयम्बकाः” यजु० २४।१८। “विंशे यूपे त्रियम्बकदेवताकाः शुक्लाः” वेददी०। २होमभेदे पु० “त्रैयम्बकान् यक्ष्यामि” इत्युपक्रमे कात्या० श्रौ० २। १०।१०। “निर्वपति रौद्रानित्यादिना ते होमाः दर्शिताः

रुद्रदेवताके ३ धनुर्विद्याभेदे च। "वेदं षडङ्गं वेदाङ्गं सर्वविद्याश्च मानवीम्। त्रैयम्बकमथेष्वस्त्रमस्त्राणि विविधानि च" भा० द्रो० १७ अ०। ४रुद्रदेवताके यज्ञादौ त्रि० "निशायां त्रैत्विकं चेदनैषं त्रैयम्बकं बलिम्" भा० द्रो० ७८ अ०।

**त्रैयाहावक** त्रि० त्र्याहावे देशभेदे भवः धूमा० वुञ्। "न य्वाभ्यां पदान्ताभ्यां पूर्वं ताभ्यामैच्" पा० इति निषेधात् ऐच्। त्र्याहावदेशभवे।

**त्रैराशिक** त्रि० त्रीन् राशीन् अधिकृत्य प्रवृत्तम् ठञ्। लीलावत्युक्ते राशित्रयाधिकारेण अनुपातरूपे गणितभेदे तत्प्रकारश्च क्रमव्यस्तभेदसहितो लीला० उक्तो यथा "त्रैराशिके करणसूत्रं वृत्तम्। प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तः फलमन्यजाति। मध्ये, तदिच्छाहतमाद्यहृत् स्यादिच्छाफलं व्यस्तविधिर्विलोमे। उदाहरणम्। कुङ्कुमस्य सदलं पलद्वयं निष्कसप्तमलवैस्त्रिभिर्यदि। प्राप्यते सपदि मे वणिग्वर! ब्रूहि निष्कनवकेन तत्कियत्। न्यासः ३/७ | ५/२ | ९/१ | लब्धानि कुङ्कुमपलानि। ५२। कर्षौ। २।
अपि च प्रकटकर्पूरपलत्रिषष्ट्या चेल्लभ्यते निष्कचतुष्कयुक्तम्। शतं तदा द्वादशभिः सपादैः पलैः किमाचक्ष्व सखे! विचिन्त्य। न्यासः ६३/१ १०४/१ ४९/४। इच्छागुणितमन्त्यकम्। ५०९६/४। छेदभक्तम्। १२७४। आद्येन। ६३। लब्धा निष्काः। २०। शेषम्। १४। षोडशगुणितम्। २२४। आद्येन भक्तं जा-ताद्रम्माः। ३। पणाः। ८। काकिण्यः। २। वराटकाः। ११। भागाश्च १/९। पुनश्च।
द्रम्मद्वयेन साष्टांशा शालितण्डुलखारिका। लभ्या चेत्-पणसप्तत्या तत्किं सपदि कथ्यताम्। अत्र प्रमाणेच्छयोः सजातीयकरणार्थं द्रम्मद्वयस्य पणीकृतस्य न्यासः ३२/१ | ९/८ | ७०/१ | लब्धे खार्यौ। २। द्रोणाः। ७। आढकाः। १। प्रस्थौ। २। इति क्रमत्रैराशिकम्। अथ व्यस्तं त्रैराशिकम्। इच्छावृद्धौ फले ह्रासो ह्रासे वृद्धिश्च जायते। व्यस्तं त्रैराशिकं तत्र ज्ञेयं गणितकोविदैः। यत्र इच्छावृद्धौ फले ह्रासः ह्रासे वा फले वृद्धिस्तत्र व्यस्तं त्रैराशिकं स्यात्। तद्यथा। जीवानां वयसो मौल्ये तौल्ये वर्णस्य हैमनि। भागहारे च राशीनां व्यस्तं त्रैराशिकं भवेत्। जीववयोमूल्ये उदाहरणम्। प्राप्नोति चेत् षोडशवत्सरा स्त्री द्वात्रिंशतं विंशतिवत्सरा किम्। द्विधूर्वहो निष्कचतुष्कमुक्षा प्राप्नोति धूःषट्कवहस्तदा किम्। न्यासः। १६ ।३२।२०। लब्धं २५/३/५। द्वितीयन्यासः। २। ४। ६। लब्धं १/१/३। वर्णगुणसुवर्णतौल्ये उदाहरणम्। दशवर्णं सुवर्णं चेद्गद्याणकमवाप्यते। निष्केण तिथिवर्णन्तु तदा वद कियन्मितम्। न्यासः १०।१। १५। लब्धं २/२/३। राशिभागहरणे उदाहरणम्। सप्ताढकेन मानेन राशौ सस्यस्य मापिते। यदि मानशतं जातं तदा पञ्चाढकेन किम्। न्यासः ७।१००। ५। लब्धम् १४०।"
"अस्ति त्रैराशिकं बीजं पाटी च विमला मतिः। किमज्ञातं सुबुद्धीनामतो मन्दार्थमुच्यते" लीला०।

**त्रैरूप्य** न० त्रिरूपस्य भावः ष्यञ्। त्रिधारूपे "स्यात् तत् तेन त्रैरूप्यम्" सि० कौ०।

**त्रैलिङ्ग** न० त्रीणि सत्त्वरजस्तमांसि पुंस्त्रीक्लीवरूपाणि वा लिङ्गान्यस्य, तस्येदम् वा अण्। त्रिलिङ्गप्रधानकार्ये। "पुमांश्चैवाऽपुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम्। न चा-ऽपुमान् पुमांश्चैव त्रैलिङ्ग्येत्यभिधीयते" भा०शा०३०७अ०।

**त्रैलोक्य** न० त्रिलोक्येव स्वार्थे ष्यञ्। स्वर्गमर्त्यपाताललोके। "तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम्" मनुः। "त्रैलोक्ये यानि रत्नानि भाग्यतं भान्ति ते गृहे" देवीमा०। "प्रकृतिं चकमे तस्मिन् त्रैलोक्यप्रभवोऽपि यत्" रघुः। पार्थे तु क्वचित् स्वार्थे अण्। त्रैलोक तत्रार्थे। "तत् प्रेक्ष्य तादृशं रूपं त्रैलोकेनापि दुर्जयम्" भा०शा० २८२ अ०।

**त्रैलोक्यमोहन** न० त्रैलोक्यं मोहयति मुह-णिच्-ल्यु। तन्त्रोक्ते ताराकवचभेदे। "तारापूजा श्रुता नाथ! विद्याश्च सकलास्ततः। साम्प्रतं श्रोतुमिच्छामि कवचं मन्त्र-विग्रहम्। त्रैलोक्यमोहनं नाम सर्वापद्विनिवारकम्। पुरैव सूचितं नाथ! कृपया मे प्रकाशय" भैरव उवाच "देवदानवविद्याध्रयक्षपूजिते! प्राणवल्लभे!। त्रैलोक्यमो-हनं नाम कवचं शृणु यतां परम्"। इत्युपक्रम्य दर्शितम्।

**त्रैलोक्यविजया** स्त्री त्रैलोक्यं विजयते सेवने स्वाधीनं करोति वि+जि-अच्। भङ्गायाम् (भाङ) शब्दच०।

**त्रैवण** त्रि० त्रिवणस्य वनत्रयस्येदम् शिवा० अण्। त्रिवणसन्निधि घोऽस्यास्तीति उत्करा०छ। त्रैवणीय तद्युक्ते त्रि०।

**त्रैवणि** स्त्री त्रिवणस्य ऋषेरपत्यम् इञ्। त्रिवणस्यर्षेर-पत्ये। "त्रैवणेस्त्रैवणिः" शत० ब्रा० १४।५।५।२१।

**त्रैवर्गिक** त्रि० त्रिवर्गाय हितं वा० ठञ्। १धर्मार्थकाम-

साधने कर्म्मादौ । "संस्थां विज्ञाय संन्यस्य कर्म्म त्रैव-र्गिकञ्च यत्" भाग० २।४।५। स्त्रियां ङीप् । "सिद्धि-स्त्रैवर्गिकी यतः" भाग० ३।१४।१५ । त्रिवर्गे प्रसृतः ठञ् ।२त्रिवर्गरते ।"त्रैवर्गिकास्ते पुरुषा विमुखा हरि-मेधसः" भाग० ३।३२।१४ ।

**त्रैवर्ग्य** त्रि० त्रिवर्गे साधुः ष्यञ् । त्रिवर्गसाधने धनादौ "त्रैवर्ग्यार्थो यतो नित्यं कृतान्तभयसंयुतः" भाग० ४।२।१२२ ।

**त्रैवर्णिक** त्रि० त्रिषु वर्णेषु विहितः ठञ् । १ब्राह्मणा-दित्रयरूपद्विजातिधर्म्मे । स्वार्थे ठञ् । २द्विजातौ च "त्रैवर्णिकानामराजकेषु राष्ट्रेषु परराष्ट्रपरचक्रागमना-दिजनिते क्षोभसङ्करादौ प्राप्ते" कुल्लू० ।"त्रैवर्णिकाना-मधिकारः" कर्कः ।

**त्रैवर्षिक** त्रि० त्रिवर्षे भविष्यति ठञ् ।"वर्षस्याभविष्यति" पा०नोत्तरपदवृद्धिः । त्रिवर्षे भविष्यति वस्तुनि"त्रैवर्षिकं तापयितं तस्य सोऽस्य संवत्सरः" आश्व० श्रौ० १२।५। १२ । अभविष्यति तु त्रैवार्षिक इत्येव ।

**त्रैवार्षिक** त्रि० त्रिवर्षं भूतो भवति वा ठञ् अभविष्य-त्त्वात् उत्तरपदवृद्धिः । १त्रिवर्षभूते २तत्र भवति वा । "यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये" मनुः । "त्रैवार्षिकाधिकान्नोयः स तु सोमं पिबेत् द्विजः" याज्ञ०।

**त्रैविक्रम** त्रिविक्रमस्येदम् अण् । १त्रिविक्रमसम्बन्धिनि । "त्रैविक्रमं पादमिवेन्द्रयनुः" रघुः २त्रिविक्रमावतारे च । "वर्द्धस्व महाबाहो ! पुरा त्रैविक्रमे यथा" हरिवं० ५६ अ० ।

**त्रैविद्य** पु० तिस्रो विद्याः समाहृताः ऋग्यजुःसामरूपा-स्त्रिविद्यं तदधीते वेद वा अण् । १वेदत्रयाभिज्ञे । "त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्म्मपाठकः । त्रयश्चाश्र-मिणः पूर्वे परिषत् स्याद्दशावरा" व्यव० त० नारदः । "चत्वारो वेदधर्म्मज्ञाः पर्षद् त्रैविद्यमेव वा" "राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु । त्रैविद्यं वृत्ति-मद्ब्रूयात् स्वधर्मः पाल्यतामिति" याज्ञ० । तिसृणां विद्यानां समाहारः त्रिविद्यं स्वार्थे अण् । २तिसृषु विद्यासु, "धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम्" भाग०६।२।२४ । ताश्च तिस्रो नानारूपाः"ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति" मा०स्मृ० "स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" मनुः "कर्मकाणां त्रयिर्वृत्तिः पयां विपश्चिज्जोविनाम् । नाथोऽस्माकं परा वृत्तिरेत-त्त्रैविद्यमुच्यते" हरिवं० ७३अ० "त्रयोऽग्नयस्त्रयो वेदा-स्त्रैविद्यं कौस्तुभो मणिः" हरिवं० १६८ अ० "त्रयो लोकास्त्रयो वेदास्त्रैविद्यं पावकत्रयम्" मार्कण्डेयपु० ।

**त्रैवि(पि)ष्टप** पु० त्रिविष्टपे वसति अण् । देवे गन्धर्वादिच० । "त्रैविष्टपानामपि दूरदर्शनम्" भाग० ११।७ ।

**त्रैविष्टपेय** पु० त्रिविष्टपे वसति बा० ढक् । देवे "गन्धर्व-सिद्धासुरयक्षचारणत्रैपिष्टपेयादिषु नानुविन्दत" भाग० ८।८।१२ ।

**त्रैवृष्ण** पु० त्रिवृष्णस्यापत्यं बा० अण् । राजभेदे "त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर ! त्र्यरुणश्चिकेत" ऋ०५। २७।१ ।

**त्रैवेदिक** त्रि० त्रिषु वेदेषु तदध्ययनार्थं विहितः ठक् । वेद-त्रयाध्ययनार्थे व्रतादौ । "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्" मनुः । [शब्दे दृश्यम् ।

**त्रैशङ्कव** पु० त्रिशङ्कोरपत्यम् अण् । हरिश्चन्द्रे त्रिशङ्कु-

**त्रैशोक** न० त्रिशोकेन ऋषिणा दृष्टं साम ।"विश्वा पृतना," इत्यादिकायामृचि गेये ब्रह्मस्तोत्रके सामभेदे ।

**त्रैसानु** पु० तुर्वसुवंश्ये गोभानुसुते नृपभेदे "गोभानोस्तु सुतो राजा त्रैसानुरपराजितः । करन्धमस्तु त्रैसानो-र्मरुत्तस्तस्य चात्मजः" हरिवं०३२ अ० ।

**त्रैस्वर्य्य** न० त्रिस्वर+चतुर्व० स्वार्थे ष्यञ् । उदात्तानुदात्त-स्वरितरूपस्वरत्रिके । तत्र यत्र यः स्वरः तत् उदात्ता-नुदात्तशब्दयोरुक्तं स्वरितशब्दे वक्ष्यते च तस्याप-वादः एकश्रुतिशब्दे १४८४पृ० उक्तः ।

**त्रैहायण** त्रि०त्रिहायणस्येदम् हायनान्तत्वात् अण् । १त्रि-वर्षसम्बन्धिनि । स्त्रियां ङाप् । भावे अण् ।२तद्भावे न०।

**त्रोटक** त्रि० त्रोटयति चु० त्रुट–ण्वुल् । १छेदके ।"सप्ता-ष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् । त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्" सा० द० उक्ते २दृश्यकाव्यभेदे प्रत्यङ्कं सविदूषकत्वात् अत्र रोऽस्माङ्गीति बोध्यम् । तत्र सप्ताङ्कं स्तम्भितरम्भम् । पञ्चाङ्कं विक्रमोर्वशी ।

**त्रोटि(टी)** स्त्री चु० त्रुट–इ वा ङीप् । १कट्फले, २चञ्च्वाम्, ( पक्षिर ठोंट ) ३पक्षिभेदे ४मत्स्यभेदे च मेदिनि० । [खगे शब्दच० स्त्रियां जातित्वात् ङीष् ।

**त्रोटिहस्त** पुंस्त्री त्रोटिर्हस्त इव पक्षसाधनं यस्य ।

**त्रोतल** न० १त्रोडक्तन्त्रे (त्रोतला) २स्खलद्वाक्ये त्रि० ।

**त्रोत्र** न० त्रायतेऽनेन त्रै– त्र । प्राजने तोदने गवादेः

प्रेरणसाधने १दण्डभेदे (पाचनी) अमरः। २अस्त्रे सि॰ कौ॰। ३वाद्यपरिक्रियायाम् ४व्याधिभेदे च संक्षिप्तसा॰।

**त्रौक** गतौ चुरा॰ प्या॰ सक॰ सेट्। त्रौकयते अदित् अतत्रौकत।

**त्र्यंश** पु॰ तृतीयोऽंशः। १तृतीये अंशे। "सर्वस्मिन् विधुपापयुक्ततनुभावर्क्षे निशान्तोर्ध्वटीत्र्यंशं वै क्रूरवाचकं सम्यकृतः पूर्वं दिनानां त्रयम्" सङ्ग॰। २त्रिगुणितेंऽशे च "त्र्यंशं दायाद् हरेद्विप्रो द्वावंशौ क्षत्रियासुतः" मनुः।

**त्र्यक्ष** पु॰ त्रीण्यक्षीणि यस्य स॰ समा॰। त्रिनेत्रे शिवे सिद्धा॰ "त्र्यक्षपत्न्या समादिष्टः षडस्यः षण्मुखः पतिः" हरिवं॰ १७३ अ॰। २नेत्रत्रययुक्तमात्रे त्रि॰। "चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः। रासभारावसदृशं रुराव च ननाद च" भा॰ स॰ ४२ अ॰। स्त्रियां ङीप्। "त्र्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम्" भा॰ व॰ २८८ अ॰। राक्षसीभेदोक्तौ। आर्षे क्वचित् न च समा॰। त्र्यक्षि शिवे। "त्र्यक्षे पूज्यो दन्तभिदे वामनाव शिवाय च" भा॰ आनु॰ ८ अ॰ शिवस्तुतौ।

**त्र्यक्षर** पु॰ त्रीणि अकारोकारमकाररूपाणि अक्षराणि यत्र। १प्रणवे "आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता। स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित्" मनुः। त्रीण्यक्षराणि वर्णा यत्र। मध्यमानामके २छन्दोभेदे न॰। "विष्णुस्त्र्यक्षरेण (छन्दसा) त्रींल्लोकानुदजयत्" यजु॰ ६।३१। "विष्णुस्त्र्यक्षरेणाक्षरत्रयात्मकेन छन्दसा त्रीन् भूरादीन् लोकान् उदजयत्" वेददी॰। त्रिवर्णात्मके तन्त्रोक्ते ३मन्त्रभेदे तन्त्रसारे भूरिप्रयोगः। ४विद्यायां स्त्री गौरा॰ ङीप्। ५वर्णत्रययुक्तमात्रे त्रि॰। "तदेतत् त्र्यक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतं सत्येन परिगृहीतं सत्यभूयमेव भवति नैवंविद्वांसमनृतं हिनस्ति" शत॰ ब्रा॰ १४।८।४।२। ६घटके सिद्धा॰। [२दैवज्ञे पु॰ हेमच॰।

**त्र्यङ्क(ङ्क)ट** न॰। १शिक्यभेदे २शौताञ्जने च मेदि॰।

**त्र्यङ्ग** न॰ त्रीणि अङ्गान्यस्य। सौविष्टकृते हविषि "मध्यं जुहां द्वेधा कृत्वाऽवद्यत्यथेम त्र्यङ्गेषु" शत॰ ब्रा॰ ३।८।३।१८। "त्र्यङ्गस्य दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्गाय्ये श्रोणेरथ हिरण्यशकलावदधाति" १९। त्र्यङ्गाय हितं यत् त्र्यङ्ग्य तत्साधनद्रव्ये।

**त्र्यङ्गुल** त्रि॰ तिस्रोऽङ्गुल्यः प्रमाणमस्य तद्धितार्थद्वि॰ इत्यच् तस्य लुकि अच् समा॰। १अङ्गुलित्रयमिते "त्र्यङ्गुलं त्र्यङ्गुलं वा तस्योतिक्रान्तं भूपस्य" कात्या॰ श्रौ॰ ६। २१।२०। २तथाभूतखातान्विते च स्त्रियां टाप् सा च सोमयागस्य वेदिः। "तं खनन्त इवान्वीयुस्तं त्र्यङ्गुलेऽन्वविन्दं स्तस्मात् त्र्यङ्गुला वेदिः स्यात्तद् हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याध्वरस्य वेदिं चक्रे" शत॰ ब्रा॰ १।२।५।९। "पाञ्चिः सोमयागस्यापि वेदिं त्र्यङ्गुलखातामेव मेने" भा॰

**त्र्यञ्जन** न॰ समा॰ द्वि॰। कालाञ्जनरसाञ्जनपुष्पाञ्जनरूपे मिलिते अञ्जनत्रये राजनि॰।

**त्र्यञ्जल(लि)** न॰ त्रयाणामञ्जलीनां समाहारः वा टच्स॰। १समाहृते अञ्जलित्रये "त्रिभिरञ्जलिभिः क्रीतः तद्धितार्थद्विगो न तद्धितलुकि न टच्। त्र्यञ्जलि इत्येवेति भेदः सि॰ कौ॰।

**त्र्यधिष्ठान** पु॰ त्रीणि मनोवाक्शरीराणि अधिष्ठानान्यस्य तिसृणां आप्यदादीनामधिष्ठानं वा हृत॰। १जीवे तत्पुरुषपक्षे न॰ "तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः" मनुः आप्यदाद्यस्य त्र्यवर्गाच्चेति कूटस्थे २चैतन्ये न॰।

**त्र्यध्वगा** स्त्री त्रिभिरध्वभिर्गच्छति गम—ड त॰। गङ्गायाम् त्रिका॰।

**त्र्यनीक** पु॰ त्रीणि उष्णवर्षशीताख्यानि अनीकानि मुखा अस्य। संवत्सराभिमानिदेवभेदे त्रिपात्स्यो इष्मो विश्वरूप उत त्र्युधा मुख्य प्रजावान्। त्र्यनीकः पत्यते मारिह्नावान्त्सरेतोधा इषभः शश्वतीनाम्" ऋ॰ ३।५६।३। "त्र्यनीकस्त्रिभिरुष्णवर्षशीताख्यैरनीकैर्मुखैरुपेतः" भा॰। २हस्त्यश्वरथाङ्गे सेनाभेदे स्त्री।

**त्र्यमृतयोग** पु॰ त्रयाणां तिथिवारनक्षत्राणाममृतत्वेयोगः। तिथिनक्षत्रवारभेदानां योगभेदे। स च योगः ज्यो॰उक्तो यथा "नन्दा भौमार्कवारे श्रवणशतभिषाद्रौन्त्यचित्राश्विमूलाश्चैभद्रा समेता, भयमिनि श्रयुते फलगुयुग्भाद्रयुग्मैः। सौम्यांशे वै जया स्यात् गुरुहरिभेन्द्राश्वियाम्याभिजिद्भिर्जीवे रिक्ता च विश्वादितिमघविशाखानुराधामसार्थैः। सौरे पूर्णा धनिष्ठाकरकमलयुक्ता यदि स्यात् योगं माङ्गल्यपूर्वं सततशुभकरं चास्मृताख्यं मुनीन्द्राः"।

**त्र्यम्बक** न॰ त्रीणि अम्बकानि नयनान्यस्य, त्रयाणां लोकानां अम्बकः पितेति वा, त्रीन् वेदान् अम्बते शब्दायते वा अबि—शब्दे कोऽत्रोपधः कर्मण्यण् संज्ञायामिति कः त्रिषु लोकेषु कालेषु वा अम्बा

शब्दो वेदत्रयो यस्येति वा, अम्बनम् अम्बः शब्दः। त्रयोऽकारोकारमकाराः अम्बाः शब्दाः प्रतिपादकाः वाचका वा यस्येति वा, त्रीणि पृथिव्यन्तरीक्षद्युलोकाख्यानि अम्बकानि स्थानानि यस्येति वा। १शिवे अमरः "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्" यजु० ३।६० "अद्धोलतस्त्र्यम्बकवीक्षणेन" महेश्वरस्त्र्यम्बक एव नापरः" रघुः। २दुर्गायां स्त्री "सोमसूर्य्यानलाश्रितत्वात् त्र्यम्बका सा स्मृता बुधैः" देवीपुरा०।

**त्र्यम्बकसख** पु० ६त० टच् समा०। कुवेरे अमरः कुवेरशब्दे तस्य तथात्वम् दृश्यम्। [क्यादिकं दृश्यम्।

**त्र्यरुण** पु० त्रिधन्वपुत्रे राजर्षिभेदे त्रैवृष्णशब्दे दृश्यं वा-

**त्र्यरुषि** त्रि० त्रीणि अरुषीणि रोचमानानि शुभ्राणि ककुत्पृष्ठपार्श्वस्थानानि यस्य। रोचमानशुभ्रपृष्ठादित्रययुक्ते गवादौ। "त्र्यरुषीणां दश गवां सहस्रा" ऋ० ८।४६।२२।

**त्र्यवि** पु० षण्मासात्मकः कालः अविः त्रिकोऽवयोऽस्य। अष्टादशमासवयस्के पशौ। "त्र्यविर्वयस्त्रिष्टुप्छन्दः" यजु० १४।१०। त्रीन् लोकान् अवति अव—रक्षणादिषु इन्। वेददी०। "तस्थौ त्र्यविं रेरिहाणा" ऋ० १।५५।१४। "त्र्यविं सार्द्धसंवत्सरवयस्को वत्सस्त्र्यविरुच्यते तत्प्रमाणमादित्यम् त्रीन् लोकानवति स्वतेजसा व्याप्नोतीति वा" भा० उक्तेः २त्रैलोक्यव्यापके च।

**त्र्यब्द** न० समा०द्वि०पात्रा०। १वर्षत्रये "त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम्" मनुः। त्रयोऽब्दावयोमानं यस्य तद्धितार्थद्विगुः आर्हीयठञ् अध्यर्द्धेत्यादि पा० तस्य लुक्। २त्रिवर्षवयस्के त्रि०।

**त्र्यशीति** स्त्री त्र्यधिकाऽशीतिः शाक० त० त्रयश्च अशीतिश्च समा० द्व० वा। (तिरासी) १त्र्यधिकाशीतिसंख्यायां २तत्संख्येये च। ततः पूरणे डट्। त्र्यशीत तत्पूरणे त्रि०। स्त्रियां ङीप् तमप्। त्र्यशीतितम तत्पूरणे त्रि०। त्र्यशीत्या युतं शतादि ड। त्र्यशीत तद्युतशतादौ।

**त्र्यष्टक** न० सुश्रुतोक्ते जलनिक्षेपणस्थानभेदे। पञ्च निक्षेपणानि भवन्ति। तद्यथा फलकं त्र्यष्टकं मञ्जरवय उदकमञ्चिका शिक्यश्चेति" सुश्रु०।

**त्र्यष्टन्** त्रि० त्रिगुणिताः अष्ट। १चतुर्विंशतिसंख्यायां २तत्संख्येये च। "त्र्यष्टवर्षोऽष्टवर्षीयां धर्मे सीदति सत्वरः" मनुः।

**त्र्यस्र** न० तिस्रः अस्रयः कोणा यस्य षच् समा०। १त्रिकोणे राजनि०। "प्रथमत्र्यस्रे द्वितीयत्र्यस्रे इत्यादि" काशीपूजापद्धतिः।

**त्र्यह** पु० त्रयाणामह्नां समाहारः टच् समाहारद्विगुत्वात् नाह्नादेशः। "अह्नाहाः पुंसि" पा० पुंस्त्वम्। दिनत्रये। उत्तरपदद्विगौ तु अह्नादेशः त्र्यह्नप्रिय इत्यादि। "त्र्यहं न कीर्त्तयेत् ब्रह्म राज्ञो राहोश्च सूतके" "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः" मनुः।

**त्र्यहस्पर्श** पु० त्र्यहं चान्द्रदिनत्रयं स्पृशति स्पृश—अण्। १तिथित्रयस्पर्शिन्येकसावनदिने त्र्यहस्पर्शिनि २दिनक्षये च

**त्र्यहस्पृश** पु० "एकं दिनं यत्र तिथित्रयं च स्पृशेत्तमाहुर्हनयोऽवमाख्यम्। एका तिथिस्त्रीणि दिनानि यत्र स्पृशेत्तदाहुर्द्विदिनस्पृशन्तु" इत्युक्ते सावनदिनत्रयस्पर्शिनि एकस्मिन् तिथौ "त्र्यहस्पृशं नाम यदेतदुक्तं तत्र प्रयत्नः कृतिभिर्विधेयः। विवाहयात्राशुभपुष्टिकर्मः सर्वं न कार्य्यं त्रिदिनस्पृशे तु" ज्यो० त०। क्विन्। त्र्यहस्पृश् क्विन्नन्तत्वात् झलि पदान्ते च कुः। तत्रार्थे "तिथिवारत्रये चैका त्र्यहस्पृक् समुदाहृता"। "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्र्यहस्पृक् तदहो रात्रमुपोष्या सा सदा तिथिः" स्मृतिः। [क्रतुभेदे।

**त्र्यहीन** पु० त्रिभिरहोभिः निर्वृत्तः ख। त्रिदिनसाध्ये

**त्र्यहैहिक** त्रि० ईहा चेष्टा तस्यां भवं ठञ् ऐहिकम् धनादि त्र्यहपर्य्याप्तमैहिकं धनं यस्य। दिनत्रयनिर्वाहोचितधनशालिनि। "त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा" मनुः।

**त्र्याख्यायण** पु० त्र्यखस्य युवाऽपत्यम् फञ् ऐक्कारिनश्चे "द्व्याख्यायण त्र्याख्यायणेति निर्देशात् "न य्वाभ्यां पदान्ताभ्यां पूर्वौ ताभ्यामैच्" पा० सूत्रोक्तं कार्य्यं न। त्र्यखस्य शिशुपालवधरादेर्यूल्यपत्ये। तस्य विषयो देशः ऐषुका० भक्तल्। त्र्याख्यायणभक्त तदीये विषये।

**त्र्यायुष** न० त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारः वेदे अच् समा०। बाल्याद्यायुस्त्रये। "त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्" यजु० ३।६२।

**त्र्यार्षेय** पु० त्रयः आर्षेयाः अवयः यत्र। त्रिप्रवरे १गोत्रभेदे आर्षेयशब्दे दृश्यम्। ऋषेरयम् ढक् आर्षेयः ऋषिधर्मः त्रयः आर्षेया धर्मायेषाम्। २अन्धबधिरमूकेषु तेषां हि यथा ऋषिधर्मवत्त्वं तथा समर्थितं तत्पत्नीभिर्व्याम् यथा "एतत्त्र्यायमूनक एव तिर्य्यक्पङ्क्त्यार्षेयदेवतानां यागेषु नाधिकार इति प्रवादः। त्र्यार्षेयास्त्रय ऋषि-

धर्मा अन्धत्वबधिरत्वमूकत्वानि येषां ते कर्णीनां हि परद्रव्यदर्शनेन तत्र रागोत्पत्तिसम्भावनया चक्षुर्निमीलनेनान्धत्वं, परनिन्दाश्रवणशङ्कया श्रोत्रनिग्रहेण बधिरत्वं मिथ्याकथनशङ्कया वाक्संयमनान्मौक्यम्” । अन्धादीनां कर्म्मानधिकारे हेतुश्च “मनुष्याणां वा आरम्भसामर्थ्यात्” “अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम्” कात्या॰ श्रौ॰ १।१।५। सूत्राभ्यां निरूपितः यत्र कर्कव्याख्या “अङ्गहीनाश्रोत्रियषण्ढशूद्रान् वर्जयित्वा मनुष्याणामधिकारः कर्म्मसु भवति । मनुष्या अपि ये अङ्गहीना अङ्गेन चक्षुरादिना हीना अन्धपङ्गुमूकबधिरादयः अश्रोत्रिया अनधीतवेदाः षण्ढा नपुंसकाः शूद्राश्च नैतेषामधिकार इत्यर्थः । आरम्भसामर्थ्यादित्यत्राप्यनुवर्त्तते न चैतेऽङ्गहीनादयो यथाश्रुतं कर्मारब्धुं कर्त्तुं शक्नुवन्ति तद्यथा न ह्यन्ध आज्यावेक्षणं कर्त्तुं शक्नोति मूकश्च मन्त्रोच्चारणम्, पङ्गुश्च विष्णुक्रमम् । बधिरश्च प्रैषश्रवणम् अनधीतवेदोऽश्रोत्रिय इत्युच्यते स च किमपि मन्त्रसाध्यं कर्त्तुं न शक्नोति षण्ढो नपुंसकः तस्याप्यनधीतवेदत्वादद्रव्यत्वादशुचित्वाच्च नाधिकारः शूद्रस्य चानधीतवेदत्वादनधिकारः। आज्यावेक्षणादिभिश्च विना कर्मणो वैगुण्यं भवत्येव । ननूक्तम् अशक्याङ्गरहितकर्मानुष्ठानादधिकारो भविष्यतीति । अत्रोच्यते । भवेदेवं यदि आज्यमवेक्षेत इत्यादीन्यङ्गवाक्यानि स्वातन्त्र्येण पुरुषैः सम्बध्येरन् प्रधानवाक्यशेषत्वात्तेषाम्, तदङ्गयुक्तेन प्रधानवाक्येन तदङ्गयुक्तः क्रतुः पुरुषैः सम्बध्यमानोऽसमर्थान् परित्यज्य समर्थान् प्रतिजायते तेनान्धस्य क्रतुरेवाविहितो न त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम् । न च प्रधानवाक्यविरोधः सर्वाधिकाराविश्चयात् विशेषाभावाद्धि सर्वाधिकारः स्यात् अस्ति च विशेषः आरम्भसामर्थ्यम् अतः समर्थानामेवाधिकारः । यत्तु प्रधानवाक्यविरोधो यावज्जीवं यजेतेत्यादौ तत्र यथाशक्तिप्रयोगादपि फलं भवति तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम् । ननु आरम्भसामर्थ्यादित्यनेनैव अन्धादीनामिवान्धादीनामप्यधिकाराभावसिद्धेः किमर्थं पुनरङ्गहीनादिवर्जमित्युक्तम् उच्यते नियमार्थम् एतेषामेवानधिकारो न निर्धनस्य तस्य चाधिकारो भवत्येव न त्वारम्भसामर्थ्याभावादनधिकारः अतो निर्धनोऽपि क्रत्वर्थं धनमर्जनादिना सम्पाद्याग्नयस्यं यजेतेति । एवमन्धादिरपि यद्यौषधिशस्त्रादिनान्धत्वादिकं स्फोटयितुं शक्नोति तस्याप्यधिकारो भवत्येव पूर्वमनङ्गहीनत्वावस्थायामाहिताग्निश्चेत् पश्चाद्रोगादिनाङ्गवैकल्ये जाते काम्येष्वधिकारो न भवति नित्येषु तु यथाशक्ति कुर्वन्नधिक्रियत एव अङ्गवैकल्ये सति अग्न्याधेयं न भवत्येव” त्रीणि आर्षेयाणि यस्य । त्रिगोत्रोत्पन्ने गाधवः । अत्रेदमभिधीयते तच्चयोभिन्यास् त्र्यार्षेयशब्दस्यान्यादिपरत्वकल्पनं स्वभाषाविरुद्धम् । तथाहि “अङ्गहीनश्च तद्धर्मा” ६।१।४१। जै॰ सू॰। “अग्निहोत्रादिषु एवाङ्गहीनं प्रति सन्देहः किम् असावधिक्रियते, उत न इति । तत्राप्यधिकरणातिदेशः । असमर्थः इति कृत्वा पूर्वः पक्षः शक्तेर्विद्यमानत्वात् उत्तरः । तदिदम् अभिधीयते अङ्गहीनश्च तद्धर्मा । किंधर्मा अद्रव्यधर्मा” शब॰भा॰ । “उत्पत्तौ नित्यसंयोगात्” जै॰६।१।४२. “यस्य तु अप्रतिसमाधेयमङ्गवैकल्यं तं प्रति विचारः किं अधिक्रियते न, इति पूर्वाधिकरणेन अधिक्रियते इति प्राप्ते ब्रूमः न अधिक्रियते इति । कुतः ? शक्त्यभावात् न असौ केनचित् अपि प्रकारेण शक्नोति यष्टुम्, तस्मात् तस्य अधिकारो न गम्यते । ननु यत् शक्नोति तत्र अधिक्रियते इति चक्षुर्विकलो विना आज्यावेक्षणेन, विना विष्णुक्रमैः पङ्गुः,विना प्रैषादिश्रवणेन च बधिरः, एतान् पदार्थान् प्रति चक्षुर्विकलादीनामनधिकारः इति यदि हि तं प्रति निर्दिश्येत ततो विकलोऽप्यधिक्रियते क्रतुम् प्रति । एषाम् उपदेशः प्रकरणाविशेषात् पुरुषस्य च आख्यातेन अनभिधानात् इति उक्तमेतत् । “विधिर्वा संयोगान्तरात् (२।४।११) इत्यत्र । तेन विना विगुणं कर्म प्रयुक्तमपि न फलं साधयेत् । तस्मात् तस्य अनधिकारः”भा॰। “अत्रार्षेयस्य स न स्यात्”जै॰६।१।४३ “दर्शपूर्णमासयोः श्रूयते, “आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते पञ्चाति वृणीते इति । तत्र सन्देहः किम् अत्र्यार्षेयस्य अधिकारः उत न इति किं प्राप्तम् । अत्र्यार्षेयोऽप्यधिक्रियते”इति कुतः आर्षेयं वृणीते इति सामान्यवचनम् तस्मात् एकं परिचष्टे द्वौ वा तत्र दर्शयति एकं वृणीते इति तथा प्रतिषेधति न चतुरो वृणीते इति । न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते । तस्मात् अत्र्यार्षेयोऽप्यधिक्रियेत ।

एवं प्राप्ते ब्रूमः यो न त्र्यार्षेयः स न अधिक्रियते ।

कुतः ? त्रीन् वृणीते इति विशेषवचनात् विधिश्च अ-प्राप्तत्वात्। ननु एकं वृणीते इत्यपि विशेषवचनमस्ति। न इत्युच्यते, विधायिकाया विभक्तेरभावात्। ननु स्तुत्या विधास्यन्ते यथा, त्रीन् वृणीत इति। उच्यते त्र्यार्षाणामेव स्तुतिः वा नित्यं विधास्यति। एकं वृणीते इत्यनयुक्तवादोऽयं त्र्यार्षाणामेव, तत्रापि नित्यमेव श्रूयते विधानम्। एवम् एकवाक्येन विधानं भविष्यति इति। न चतुरो वृणीते न पञ्चातिवृणीते इति नित्यानुवादो भविष्यति। तस्मात् त्र्यार्षेयस्य अधिकारो नान्यस्य इति" श्रौ०भा०। न्यायमालायां माधवस्तु "ऋषि-गोत्रप्रवर्त्तकः कश्यपभरद्वाजादिस्तस्य सम्बन्धि आर्षेयस्तं वृणीते उच्चारयति कश्यपगोत्रोऽहं भरद्वाजगोत्रोऽह-मिति एवम् उपमन्युवसिष्ठगोत्रोऽहमिति द्विगोत्रोच्चार-णम्। आङ्गिरसबार्हस्पत्यभरद्वाजगोत्रोऽहमिति त्रि-गोत्रोच्चारणम्"। एवञ्च स्वप्रभाष्यादिग्रन्थेषु त्र्या-र्षेयशब्दस्य अन्यार्थपरत्वात् जात्यन्धादेः सत्रान्तरेण अनधिकारस्य प्रतिपादनात् त्र्यार्षेयशब्दस्य न अन्धादि-परत्वमिति सुधीभिर्भाव्यम्।

**त्र्याशिर्** त्रिधः दधिसक्तुपयोरूपा आशिरः अभिश्रयण-साधनभूता यस्य। सोमे इन्द्रभेदे। "यस्य ना परणाः शतमूर्धन्वन्त्युत्ताः। आग्नेयस्य दानाः सोमा इव त्र्याशिरः" ऋ०५।२७।५।

**त्र्याहण** पुंस्त्री त्रिभिः चक्षुपादैराहन्ति आ+हन-अण् पूर्वपदात् संज्ञात्वात् णत्वम्। विष्किरे पक्षिभेदे। "चको-रकपिञ्जलमयूरक्रकरोपचक्रकुक्कुटवारलावतित्तिरि-कुररवाकुकंकवलहंसत्र्याहणादिविष्किरादयः शीत-मधुराः कषायादोषशमनाय" सुश्रुतः।

**त्र्याहाव** पु० देशभेदे तत्र भवः वुञ्। त्रैयाहावक तत्रार्थे।

**त्र्याहिक** त्रि० त्र्यहे भवः ठञ्। आर्षत्वात् त्र्याहावयेति निर्देशाद्वा व्याख्यां पूर्वं न ऐच्। त्र्यहभवे ज्वरादौ। "ऐकाहिको द्व्याहिकश्च त्र्याहिकचातुर्थिकेत्यादि अप-राजितास्तोत्रं। त्र्यहपर्याप्तं धनं अण् त्र्याहम् तद-स्त्यस्ति ठन्। त्र्यहपर्याप्तधनयुक्ते त्रि०। "कुशूलकुम्भी-धान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा" याज्ञ०। लोके तु व्याख्यां पूर्ववैलेव त्रैयाहिक इत्येव त्र्यहभवे वस्तुनि।

**त्र्युदय** न० त्रिषु सवनेषु उदयो गतिरस्य। सोमाख्ये द्रव्ये। "त्र्युदयं देवहितं यथा वः" ऋ० ४।३७।३।

**त्र्युधन्** पु० त्रिभिः स्वस्तरद्रोमन्तौ त्रिभिरूधोऽस्य अनडु-त्सस्य। स्वस्तादित्रयोधोयुक्ते वत्सरहये दृषभे। "उत त्र्युधा दृषभ प्रजावान्" ऋ० ३।५६।३।

**त्र्य(त्र्या)यण** न० त्रयाणामयनानां समाहारः पृषो० वा दीर्घः। मिलितशुक्लौपित्र्यवीर्यपरिचलिते अमरः भर-तस्तु दीर्घमध्यं पपाठ।

**त्र्यूच** न० तिसृणामृचां समाहारः अच् समा०। ऋकत्रये। "उदितृचा वा पावमान्या तृचेनाद्वैवतेन वा" "अथ तृचं जपेदृचम्" मनुः। पक्षे संप्रसारणे तृच-मप्यत्र।

**त्रेणी** स्त्री तीणि एतान्यस्य सि०कौ० त्रिषु स्थानेषु एतः कर्बुरो यस्याः ब०व०माधवः। "वर्णादनुदात्तात्" पा० ङीप् तस्य नश्च णत्वम्। त्रिषु स्थानेषु कर्बुरायां स्त्रियाम्। "तत्रैणी भवति भवति लोहः क्षुरः सा वा त्रेणी भवती वा लघ्वे विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमन्निर्हि ब्रह्मणो हित इव ह्यग्निस्तस्माल्लोहः क्षुरो भवति" शत० ब्रा० २।६।४।५। "त्र्येणीति त्रिषु स्थानेषु एतः श्वेतः वर्णो यस्याः सा त्रेणी" भा०। "अथास्य सूत्रेन शलाटुग्लपिन्त्र्येण्या त्रयस्त्रिंशत्" आश्वा० गृ० १।१४।४। त्रीण्येतानि यस्याः सेयं त्र्येणी शलली। एतः शुक्ल इत्यर्थः" नारा०

**त्व** त्रि० तन–विच् अनस्य वः। १भिन्ने अन्यार्थे सर्वनामकार्यं सर्वनामगणे त्वत्वसमसिमेति पठित्वा "त्वत्वेति द्वावप्यदन्तौ अन्यपर्यायौ एक उदात्तोऽपरो-ऽनुदात्त इत्येके। एकस्मान्न इत्यपरे" सि० कौ० उक्तेः तान्तत्वमपि तत्र क्विपि तुकि रूपमिति विवेकः। "ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः" ऋ० १०।७१।११ त्वशब्दः सर्वनामसु पठितः एकशब्दपर्यायः भा०उक्तेः २एक-शब्दार्थे माधवः। "प्रजायै त्वस्यै यदशिव इन्द्र!" ऋ० १०।५४।१। "त्वस्यै एकस्यै प्रजायै" भा०। "उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्। उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः" ऋ० १०।७१।४। "त्वशब्द एकवाची। एकः। उत-शब्दोऽप्यर्थे। पश्यन्नपि मनसा पर्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभावाच्च पश्यति। त्व एकः शृण्वन्नपि एनां वाचं न शृणोति अवबोधफलाभावात्। इत्यनेनार्थे नाविद्वानभिहितः। तृतीयपादेन विद्व-

वेदार्थमाह । त्वचा एकया अपि तन्वमाकीर्यं शरीरं वि सस्रे, स्वयं वाग्विविधं गमयति" भा० । अस्या एव ऋचामर्थव्याख्याने ऋग्वेदोपद्घाते माधवः त्वपदस्य अन्यार्थतामभिप्रेत्याह, यथा"तः अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसाराहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति" अत उभयार्थता "विश्वं शृण्वन्तीमभिरूपां विराजं पश्यन्ति त्वे न त्वे पश्यन्त्येनाम्"अथ० ८।९।९ ।सर्वनामत्वात् जसः शीभावः

**त्वक्काण्डु र** पु०त्वचः काण्डु राति रा–क । व्रणे हारा० ।

**त्वक्चीरा** स्त्री त्वचः वंशत्वचः चीरमस्याः आकरत्वेन अच् ।१वंशरोचनायां ।२तदर्थे गौरा० ङीप् राजनि०। "सिताजगन्धा त्वक्चीरी विदारी सितता समा" सुश्रु०

**त्वक्छद** पु० त्वगेव छदोऽस्य । चीरीपत्रके (चीरकञ्चुकी) प्रसिद्धे वृक्षे रत्नमा० ।

**त्वक्तरङ्ग** पु०त्वचस्तरङ्ग इव । वलि पदार्थे पार०निघण्टुः।

**त्वक्पञ्चक** न० त्वचां पञ्चकम् । "न्यग्रोधोडुम्बराश्वत्थ-शिरीषप्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्-पञ्चकं मतम्" इत्युक्ते न्यग्रोधादित्वक्के । केचित्तु शिरीषस्थाने वेतसं परे पारिशम् वदन्तीति भेदः "त्वक्-पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् । विस्फोटा-ग्निमान्द्यजित् तिक्तं कषायं लघु लेखनम्" भावप्र० ।

**त्वक्पत्र** न० त्वगिव पत्रमस्य । १गुडत्वचि ( दारचिनि ) २तेजपत्रे च अमरभरतौ । "चन्दनागुरुसख्यानि त्वक्-पत्राणां वनानि च" भा० शा०१७०अ० । ३हिङ्गुपत्र्याम् स्त्री गौरा० ङीप् अमरः ।

**त्वक्पाक** पु० त्वचः पाको यत्र । मूकदोषनिमित्ता दश पाटो च व्याधयो जायन्ते" इत्युपक्रमे "त्वक्पाकः शोणितार्बुदम्" इत्यादिना च तान् विभज्य"पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान्" सुश्रुतोक्ते मूकदोषनिमित्ते व्याधिभेदे ।

**त्वक्पारुष्य** न० त्वचः पारुष्यं कठोरता । त्वचः काठिन्ये "तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्मात् रोमहर्षः"सुश्रुतः।

**त्वक्पुष्प** न० त्वचः पुष्पमिव । १रोमाञ्चे त्रिका० २किलासे (छुली) ख्याते हेमच० । त्वचि पुष्पं यस्याः गौरा० ङीप् । ३किलासे स्त्री जटा० स्वार्थे क । त्वक्पुष्पिका त्रिलासे त्रिका० ।

**त्वक्ष** तनूकरणे भ्वा०पर०सक० सेट त्वक्षति अत्वक्षीत् ।"त्वष्टा त्वर्णमञ्जते इति नैरुक्ताश्चिन्वेषी स्यात् त्वक्षतेर्वा स्यात्" निरुक्ते ८।१२ उक्तत्वात् तथा आहुरस्मीति गम्यते । "प्रत्वक्षाणो अतिविश्वा सहांसि"ऋ०१०।४४।१ । "प्रत्व-"क्षाणः प्रकर्षेण तनूकर्वन्"भा० ।

**त्वक्षस्** न० त्वक्ष्यतेऽनेन त्वक्ष–करणे असुन् । बले निघण्टुः। "सम्रविका त्वक्षसा हन्मो दिवम्" ऋ० १।१००।१५ । "त्वक्षसा बलेन" भा० ।

**त्वक्षीयस्** त्रि०अतिशयेन त्वक्षिता ईयसुन् तृचो लोपः। दीप्ते "महत्वान् त्वक्षीयसा वयसा नाधमानम्" ऋ० २।३३।५। "त्वक्षीयसा दीप्तेन" भा० ।

**त्वक्सार** पु० त्वचि सारोऽस्य । १वंशे अमरः । त्वगेव सारो-ऽस्य । २गुडत्वचि (दारचिनि) ख्याते पदार्थे शब्दच०। ३शोणकवृक्षे ४रक्तप्रधानवंशे (तल्लावाँश) राजनि० । "त्वक्साररन्ध्रपरिपूरणलब्धगीतिः" माघः । "चण्डा-लात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान्"मनुः ।"त्रि-न्नूनां शल्यभीरूणां शस्त्राभावे च योजयेत् । त्वक्-सारादिचतुर्वर्गं छेद्ये भेद्ये च बुद्धिमान्" सुश्रु० । त्वक्सारः उत्पत्तिस्थानत्वेनास्त्यस्याः अच् । ५वंशरोच-नायां स्त्री राजनि०। [ङीप्। क्षुद्रचञ्चु वृक्षे राजनि० ।

**त्वक्सारभेदिनी** स्त्री त्वचः सारं भिनत्ति भिद्–णिनि

**त्वक्सुगन्ध** पु० त्वचि फलत्वचि सुगन्धोऽस्य । नारङ्गे (नेबु) भेदे भावप्र० । २एलवालुकाख्यगन्धद्रव्ये स्त्री शब्दार्थचि० । [त्वचि शब्दार्थचि०।

**त्वक्स्वादी** स्त्री त्वचि स्वाद्वी । (दारचिनि) ख्याते गुड-

**त्वग** गतौ भ्वा० सक० पर० सेट् ईदित् । त्वङ्गति अत्वङ्गीत् तत्वङ्ग ।

**त्वगङ्कुर** पु० त्वचः अङ्कुर इव । रोमाञ्चे हारा० ।

**त्वगाक्षीरी** स्त्री त्वचः आक्षीरं सत्क्षीरं यस्याः गौरा० ङीप् । वंशरोचनायाम् जटा०।

**त्वगन्ध** पु० त्वचि फलत्वचि गन्धोऽस्य । नागरङ्गे राजनि०

**त्वग्ज** न० त्वचो जायते जन–ड । १रोमणि २रुधिरे च राजनि० ।

**त्वग्दोष** पु० त्वचं दूषयति दुष–णिच्–अण् । कोठरोगे राजनि०"कचग् पाण्डुरोगघ्न त्वग्दोषमविपाचितम्" सुश्रु०।"प्रियः प्रजानामपि स त्वग्दोषेण प्रदूषितः"भा० उ०१४८अ०। ततः अस्त्यर्थे इनि तद्युक्ते त्रि० ।"देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः!" भा०उ० १४८अ० ।

**त्वग्दोषापहा** स्त्री त्वग्दोषमपहन्ति अप+हन–ड । याकु-च्याम् राजनि० ।

**त्वग्दोषारि** पु० ६त०। हस्तिकन्दे राजनि० त्वग्दोषान्तो-ऽप्यत्र। [ अत्वचीत्। तत्वाच। त्वक्।

**त्वच** संवरणे तु० पर० सक० सेट्। त्वचति अत्वाचीत्

**त्वच्(चा)** स्त्री त्वच्यते संव्रियते देहोऽनया त्वचति सं-वृणोति वा देहम् त्वच–क्विप्। १गुड़त्वचि (दारचिनि) २वल्कले ३चर्मणि च मेदि०। ४स्पर्शग्राहके बाह्येन्द्रियभेदे वा च देहव्यापिनी त्वचिस्थिता स्पर्श-वायोः स्पर्शांशेनोत्पन्ना वाताधिष्ठातृदेवताका" वेदा० सा० दृश्यम्। तत्र "उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कार-णम्। द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम्" भाषा० चर्मन् शब्दे २६०१ पृ० दृश्यम्।

चर्मणि "त्वचं समेध्यां परिधाय रौरवीम्" रघुः "आरूढ्वि त्वच निर्भिद्य प्राग्भुजङ्गनिर्मोकवत्" भट्टिः। "त्वगुत्तरासङ्गवतीमधीतिनीम्" कुमा०। वल्कले "भुजङ्गत्वचः कुञ्जरबिन्दुशोणाः" कुमा०। गुड़त्वचि "त्वमेलापत्रकैस्तुल्यैः त्रिसुगन्धि त्रिजातकम्" राजनि०। हलन्तत्वात् वा टाप्। तत्रार्थे शब्दरत्ना० त्वचापत्रम्। "सुकृत्वच इवोरगः" भा० शा० २५०अ०। "श्रीवत्साङ्कोऽरविन्दाक्ष ऊर्ध्वरोमा महत्त्वचः" हरिवं० १७६ अ०।

**त्वच** न० त्वच–अच्। वल्कले "त्वचवेष्टितमस्थिपञ्जरम्" उज्ज्वलद०। गुड़त्वचम् इत्यादि। प्रशस्ता त्वगस्त्यस्य अच्। २तत्पत्रे न०। "त्वचं लघूष्णं कटुकं स्वादु तिक्तकं रूक्षकम्। पित्तलं कफवातघ्नं कण्ड्वामार्दवनाशनम्। हृद्बस्तिरोगवातार्शःकृमिपीनसशुक्रहृदिति"। [त्वचयति।

**त्वच** त्वचं करोति सत्यापाशेत्यादि० पा० स्वार्थे–णिच् नामधातुः।

**त्वचस्** न० त्वच–असुन्। त्वचि। त्वचसि हितम् यत्। त्व-गिन्द्रियहिते "यच्छं त्वचस्यं ते वयम्" अथ० २।२२।७।

**त्वचापत्र** न० त्वचा त्वक् पत्रमिवास्य। (दारचिनि) त्वक्-पत्रशब्दार्थेऽपि०।

**त्वचिष्ठ** त्रि० अतिशयेन त्वग्वान् इष्ठन् मतुपो लुकि न पदान्तकार्यम्। अतिशयत्वग्युक्ते। ईयसुन् त्वचीयस् तत्रार्थे त्रि० स्त्रियां ङीप्।

**त्वचिसार** पु० त्वचि सारोऽस्य हलन्तत्वात् न सप्तम्या न लुक्। वंशे अमरः। [ आयाम् ङारा०।

**त्वचिसुगन्धा** स्त्री त्वचि सुगन्धोऽस्याः अलुक् समा०। क्षुद्रे-

**त्वच्य** त्रि० त्वचि हितं यत् भत्वात् न पदान्तकार्यम्। त्वचि-हिते। "त्वच्यं द्रव्यं मधुरविपाकम्" सुश्रु०।

**त्वत्** त्रि० तन–क्विप् धनो वः तुक् च। अन्यार्थे सर्वनामा-यम्। त्वच्छब्दे दृश्यम्। सर्वनामत्वात् टेरकच् त्वकत्। इति बोध्यम्। [काशादित्वाद्यर्थे "त्वत्तः सर्वं प्रवर्तते"।

**त्वत्तस्** अव्य० एकार्थयुष्मदः तसिल् त्वदादेशः। त्वत्तः

**त्वदीय** त्रि० तव इदम् त्यदादित्वेन वृद्धत्वात् छ त्वदादेशः। एकवचनार्थयुष्मदर्थसम्बन्धिनि। "पितुस्त्वदीयस्य मया-ऽपहारितः" रघुः।

**त्वञ्च** गतौ भ्वा० पर० सक० सेट्। त्वञ्चति अत्वञ्चीत्। तत्वञ्च। उदित्। त्वञ्चित्वा त्वक्त्वा। त्वक्तः

**त्वञ्च** सङ्कोचे रुधा० पर० सक० वेट्। त्वनक्ति अत्वा-ङ्क्षीत् मतान्तरे उदित्। क्त्वा वेट्। अन्यत्र सेट्। त्वक्तः।

**त्वद्विध** त्रि० त्वमेव विधा प्रकारो यस्य। त्वत्सदृशे।

**त्वम्पदलक्ष्यार्थ** पु० त्वमिति पदस्य लक्ष्योऽर्थः। अज्ञानादि-व्यष्ट्युपाध्युपहिताधारभूते अनुपहितप्रत्यगानन्दरूपे तुरीयचैतन्ये। [जीवस्तु त्वम्पदाभिधः" वेदान्तप्र०।

**त्वम्पदवाच्य** त्रि० ६त०। त्वम्पदाभिधे। "देहादिभिः परिच्छिन्नो

**त्वम्पदवाच्यार्थ** त्रि० त्वम्शब्दार्थे अज्ञानादिव्यष्टिः एतदुपहि-तात्मप्रत्यादिविशिष्टं चैतन्यम् एतदनुपहितचैतन्यञ्च। एतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानः त्वम्पदवा-च्यार्थो भवति" वेदान्तसा०।

**त्वम्पदाभिध** पु० त्वम्पदमभिधा यस्य। त्वम्पदवाच्ये जीवे "आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः। अन्तः-करणसम्भिन्नबोधः स त्वम्पदाभिधः" इत्युक्तेः।

**त्वयता** स्त्री त्वया दत्तम् पृषो०। त्वया दत्ते इत्यर्थे "मन इन्द्र! त्वयताया इषे" ऋ० ७।२०।२०। "त्वयतायै इषे त्वया दत्तायै इषे अन्नाय" भा० अन्नाय अन्नं भोक्तुमित्यर्थः।

**त्वर** वेगे भ्वा० आत्म० अक० सेट्। त्वरते अत्वरिष्ट। घटा०। णिच्–त्वरयति। षित् त्वरा। ञीत् त्वरितो-ऽस्ति। "गच्छावः सहितौ तत्र समाधि त्वरते मनः" रामा० आर० ७८ स०। "यस्य मा त्वरते बुद्धिः" भा० स० १५५श्लो०। "दूता हि त्वरयन्ति माम्" रामा० बा०। "अतत्वरन् तान् योद्धुम्" भट्टिः।

**त्वरा** स्त्री त्वर–अङ्।।वेगे, २अभीष्टलाभार्थं विलम्बासहने च "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया" रत्नावली।

**त्वरायण** त्रि० त्वरा अयनमस्य णत्वम्। त्वरायुक्ते अमरः

**त्वरायस्** त्वरणे कण्ड्वा० आकृतिगणः पर० अक० सेट्। त्वरायस्यति।

**त्वरि** स्त्री त्वर–वेगे भावे इन्। त्वरायां हेमचन्द्रकोषः।

**त्वरित** न० त्वर–क्त। १शीघ्रे। २तद्वति त्रि०। "पयोऽभिसस्रुस्त्वरितं चमूचराः" माघः "त्वरितगतिश्च जयुवतिः" छन्दोम०। ३देवीभेदे स्त्री "अथाभिधास्ये त्वरितां त्वरितं फलदायिनीम्" इत्युपक्रमे तन्त्रसा० तन्मन्त्रादिकमुक्तं दृश्यम्।

**त्वरितक** पु० त्वरितं कायति प्रकाशते जायते कै–क। व्रीहिभेदे ( तोरी ) तण्डव्रीहीत्याद्युपक्रमे "त्वरितककुक्कुटाण्डकेत्यादि" सुश्रु०।

**त्वरितगति** स्त्री "त्वरितगतिश्च नजनगैः" वृ० र० उक्ते दशाक्षरपादके वर्णवृत्तभेदे। [ यधरि अमरः।

**त्वरितोदित** न० त्वरितमुदितम्। शीघ्रोच्चारिते निरुक्ते

**त्वलग** पु० जलग+पृषो०। जलसर्पे पारस्करगृ०।

**त्वष्ट** त्रि० त्वक्ष–तनूकरणे क्त। तनूकृते तष्टशब्दार्थे अमरः

**त्वष्टि** पु० "मत्स्याघातो निषादानां त्वष्टिस्त्वायोगवस्य च" मनूक्ते सङ्कीर्णजातिभेदे।

**त्वष्टीमती** स्त्री त्वष्टा तदनुग्रहोऽस्त्यस्याः मतुप् पृषो०। त्वष्टुरनुग्रहोपेतायां स्त्रियाम् "स्त्रीपुरुषमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा तथा च अन्नत्र-पव्यानग्र० श्रूयते "यावन्तो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावन्तो वै तत् प्रजायते" तादृशस्य त्वष्टुरनुग्रहोपेता" भा०।

**त्वष्टृ** पु० त्वक्ष–तृच्। "एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते" भा० आ० ६५ अ० उक्ते। द्वादशादित्यमध्ये १आदित्यभेदे। "निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशत् विभोः। चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत्" भाग०२।६।१४श्लो०। उक्तेरस्य नेत्रोपकारकतया नेत्राधिष्ठातृत्वम्। २देवशिल्पिभेदे अमरः "विश्वकर्मा च त्वष्टा च चक्राते ह्यायुधं महत्" हरिवं० २१९ अ०। "आह्वये विश्वकर्माणमहं त्वष्टारमेव च" रामा० बा० ९१ स०। "त्वष्टा तथैवोर्ज्जितविश्वकर्मा" हरिवं० २४२ अ० इत्यादिषु तयोर्भेदेन निर्देशात् न पर्य्यायता। ३ तद्देवताके चित्रानक्षत्रे। ४ सूत्रधारे तक्षके वर्णसङ्करभेदे च। ५तनूकर्त्तरि त्रि० स्त्रियां ङीप्। ६पशुमनुष्यादीनां गर्भान्तःस्थरेतोरूपविकारकारके देवभेदे त्वष्टीमतीशब्दे दृश्यम्।

**त्वष्टृमत्** त्रि० त्वष्टृ+अस्त्यर्थे मतुप्। वीर्य्याधिष्ठातृदेवभेदयुक्ते "त्वष्टृमन्तस्त्वा सपेम" यजु०२७।२०। "त्वष्टा रेतसामधिष्ठाता तद्युक्ताः। मैथुनार्थोपसर्गे वीर्य्याधिष्ठातापेक्षितोऽत एतद्युताः" वेददी०।

**त्वाम्कामा** स्त्री त्वां कामयते कम–णिङ् अण् वेदे द्वितीयायाः न लुक्। त्वामभिलषन्त्याम्। "अग्ने! त्वांकामया गिरा" ऋ० ८।११।७। लोके तु त्वत्काम इत्येव।

**त्वायु** त्रि० त्वामात्मन इच्छति क्यच् युष्मदस्मदादेशे क्याच्छन्दसि" पा० उ। आत्मनः त्वां मन्यमाने। "सुता इमे त्वायवः" ऋ० १।२।४।

**त्वावत्** त्रि० तवेव दर्शनमस्य युष्मद्+वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्ये उपसंख्यानम्" उक्तेः सादृश्ये वतुप् त्वादेशः "आ सर्वनाम्नः" पा० आ। त्वत्सदृशे "आ च त्वावान् त्मनाप्तः" ऋ० १।३०।१४।

**त्वावसु** पु० त्वं वसुव्यापकोऽस्य त्वादेशः वेदे पृषो० वा। त्वया व्याप्ते। लोके तु त्वद्वसुः इत्येव।

**त्वाष्टी** स्त्री दुर्गायाम्। "त्वष्टा सृतो धातवस्य तष्टीनिपातने। सृजत्येषा प्रजास्तुष्टी त्वाष्टी तेन प्रकीर्त्तिता" देवीपु० ४५ अ०।

**त्वाष्ट्र** त्रि० त्वष्टा देवता अस्य अण्। त्वष्टृदेवताके १आज्यादौ २चित्रानक्षत्रे स्त्री। त्वष्टुः आदित्यभेदस्य अपत्यम् अण्। ३विश्वरूपे ४वृत्रासुरे च। "त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणः त्रीणि शीर्षपरावर्क्" ऋ०१०।८।९। "विवस्वानर्य्यमा पूषा त्वष्टाथ सविता तथा" इत्युपक्रमे विवस्वदादीनां वंशमभिधाय। "त्वष्टुर्दैत्यात्मजा भार्य्या रोचना नाम कन्यका। सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्य्यवान्। तं वव्रिरे सुरगणाः स्वस्रीयं द्विषतामपि" भाग०६।६अ० ४४श्लो० इति विश्वरूपोत्पत्तिकथा। वृत्रासुरोत्पत्तिकथा च "हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे। इन्द्रशत्रो! विवर्द्धस्व मा चिरं जहि विद्विषम्" इत्युपक्रमे तदुत्पत्तिप्रपञ्चम् "येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्त्तिना। स वै वृत्र इति प्रोक्तः पापः परमदारुणः" भाग० ६।९ अ०दृश्या। त्वष्टुः कन्यापत्यम् अण् ङीप्। संज्ञानामनि ४सूर्य्यपत्न्यां स्त्री शब्दरत्ना०। छायाशब्दे २९८५ पृ० दृश्यम्। ५कुट्टरणे त्रिका०। ६सामभेदे। "इन्द्रो वृत्राद्बिभ्यद्वा मारविषत् तं त्वाष्ट्रेऽसृजन् जगन्यामेति तमेतैः सामभिरजनयन्" पञ्चभोब्रा०।

**त्विष** दीप्तौ भ्वा० उभ० सक० अनिट्। त्विषति ते। अत्विक्षत् अत्विक्षत। तित्वेष तित्विषे। त्विक्षीष्ट। "ओजसा दस्य तित्विषे" ऋ० ८।६।५। "दमयन्त्या इव जाति

त्विष्यन्त यत्" ऋ० ५।५४।१२। "अग्निरिव मन्यो ! त्विषितः सहस्व" ऋ० १०।८४।२।

**त्विष(षा)** स्त्री त्विष–सम्प०भावे क्विप्। दीप्तौ। "निशीथदीपाः सहसा हतत्विषः" रघुः। "रुचिधाम्नि भर्त्तरि परलोकमभ्युपगते विविशुः। ज्वलनं त्विषः कथमिवेतरथा" "वयस्त्विषामित्यवधारितं पुरः" माघः। हलन्तत्वात् वा टाप्। तत्रार्थे शब्दरत्ना०।

**त्विषामीश** पु० ६त०। अलुक् समा०। १सूर्य्ये हेमच० २अर्कवृक्षे च। [ वृक्षे च।

**त्विषाम्पति** पु० ६त० अलुक् स०। १सूर्य्ये अमरः २अर्क-

**त्विषि** पु० त्विष–इन्। किरणे हेमच०।

**त्विषित** त्रि० त्विष् जाताऽस्य तार० इतच्। ज्वलिते। "अग्निरिव मन्यो त्विषितः" ऋ० १०।८४।२।

**त्वेषथ** त्रि० त्विष–अथच्। दीप्ते। "सूरस्येव त्वेषथा दीवते वयः" ऋ० १।१४३।८। [त्रवः" ऋ० १।६११।१

**त्वेषस्** त्रि० त्विष–असुन्। दीप्ते "अस्मेदु त्वेषसस्करन्त चि-

**त्वै** अव्य० त्वच–बा० डै। १विशेषे, २वितर्के च शब्दार्थचि०।

**त्वोत** त्रि० त्वया ऊतः वेदे नि०। त्वया रक्षिते इत्यर्थे। "त्वोतासो न्यर्वता" ऋ० १।८।२। लोके तु त्वदूत इत्येव

**त्सर** छद्मगतौ भ्वा० पर० सक० सेट्। त्सरति अत्सारीत्। "यस्मा सपत्नी त्सरति यस्मा दिप्सति जाग्रतीम्" अथ० ८।६।८। "यो हैनं पाप्मा मायया त्सरति न हैनं सोऽभिभवति" शत० ब्रा० ११।१।६।१२।

**त्सरु** पु० त्सर–उन्। खड्गमुष्टौ। "मा नो वधेन रपसा विदत् त्सरुः" ऋ०७।५०।१। "खड्गं च कनकत्सरुम्" भा० व० ११२७ श्लो०। "गृहीतखड्गचर्माणस्ततो भूयः प्रहारिणः। त्सरुमार्गान् यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु" भा० आ० ५२३४श्लो०।

**त्सारुक** त्रि० त्सरौ तद्युद्धे निपुणः आकर्षा० कन् ततः स्वार्थे अण्। असियुद्धनिपुणे। "तथाऽतिपुरुषानन्यान् त्सारुकौ यमजावुभौ" भा० आ० १३२अ०।

**त्वरद्दृश्** पु० त्वरत् जैववर्षत्रयं संस्पृशति स्पृश क्विन् जैववर्षत्रययुक्ते सुप्तसंवत्सरे सौरवर्षभेदे। "एकस्मिन् रविवर्षे सौरवर्षद्वयावसानं चेत्। त्वरद्दृशमेवमेनं विलुप्तवत्सरं प्राहुः" यशोधरजतन्त्रम्। "गुरुवर्षयुग्मवैत्समा गदिता सा तत् सुप्तसंचिता" ज्योतिर्विदाभरणम्।

इति वाचस्पत्ये तकारादिशब्दार्थसङ्कलनम्।

## थ

थकारः तवर्गीयद्वितीयवर्णो व्यञ्जनवर्णविशेषः अस्योच्चारणस्थानम् दन्तमूलं तदुच्चारणे दन्तमूलेन सह जिह्वाग्रस्पर्शः आभ्यन्तरप्रयत्नः, अतएवास्य स्पर्शवर्णता। बाह्यप्रयत्नास्तु विवारश्वासाघोषा महाप्राणश्च। अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा

"थस्थिवासी महाग्रन्थिर्ग्रन्थिग्राहो भयानकः। शिली चिरस्थिरो दन्ती सद्गामी चिलोच्चयः। कृष्णो वृद्धिर्विकर्णी च दक्षिणाधिपोऽमरः। वरदा भोगदा केशो वामजङ्घाऽङ्कशोऽनलः। लोलजिह्वो पृथुर्ग्रहः यरश्चन्द्रो विदारकः"। मातृकान्यासे अस्य वामजङ्घायां न्यासः। अस्याधिष्ठातृदेवीध्यानस्वरूपं यथा "नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम्। पीतवस्त्रपरीधानां सदा सिद्धिप्रदायिनीम्। एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत्। पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा। तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" अस्य स्वरूपं यथा "थकारं चञ्चलापाङ्गि ! कुण्डली मोक्षरूपिणी। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" कामधेनुतन्त्रम्। काव्यादौ अस्य प्राक्प्रयोगे दुःखं फलम् "थस्तु दुःखम्" वृ० र० टीका त्रो०।

**थ** पु० थुड–घर्थे बा ड। १पर्वते २भयत्रायके त्रि० ३मङ्गले ४भये ५रक्षणे न० मेदि०। [पाहि !" कामधेनुत०।

**थकार** पु० थ+स्वरूपे कार। थस्वरूपे वर्णे "थकारं चञ्चला-

**थर्व्व** चरणे भ्वा० पर० सक० सेट्। थर्वति अथर्वीत्। थर्व "अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः" निरुक्तधृता श्रुतिः "अथर्वाणोऽथर्वन्तस्थर्वतिश्चरतिकर्मा तत्प्रतिषेधः" निरु० ११।१८। लोकेऽपि गतिशून्ये (अथर्व इति) प्रसिद्धिः।

**थुड** संवृतौ तु० कु० पर० सक० सेट्। थुडति अथुडीत्। तुथोड। [करणे शब्दभेदे।

**थुत्कार** पु० थुत् इत्यव्यक्तशब्दस्य कारः। निष्ठीवनत्यागानु-

**थुथूकृ** थुथु इत्यव्यक्त शब्दात् निष्ठीवनत्यागानुकरणशब्दात् च्वि–कृञोऽनुप्रयोगः। थुथूकरोति। "थुथूकृत्य यमक्ष्रिरध्वगजनैः" छन्दोऽकर्णामृतम्।

**थुथूकृत्** स्त्री थुथु इत्यव्यक्तशब्दं करोत्यस्याम् कृ–बा० आधारे क्विप्। ष्ठीवाकायां पारस्करनिघ०।

चक्रे चक्रिणमच्युतम्। महाक्रतुपदेष्टारं यज्ञपूरुषमेव च। तत्रर्त्विजोऽभवन् सर्वे ऋषयो ब्रह्मवादिनः। प्रावर्त्तत तत्र स दक्षस्य च महाध्वरः। दूरादेव निकायाश्च तस्मिन् दक्षमहाध्वरे। धनीश्वरात्ततो वेधा व्याजं कृत्वा स्वर्गं ययौ। दधीचिरथ संवीक्ष्य सर्वांस्त्रैलोक्यवासिनः। दक्षयज्ञे समेयातान् सतीश्वरविवर्जितान्। प्राप्तसम्मानसम्भारान् वाचोऽसक्तु तिपूर्वकम्” इत्युपक्रमे तत्र दधीचिना सह दक्षस्य उक्तिप्रत्युक्ती यथा

“तं विदन्ति वशिष्ठाद्यास्तवार्त्विज्यं भजन्ति ये। एको रुद्रो न द्वितीयः संविदानाश्रपीति हि। प्रावर्त्तन्तर्षयोऽन्येऽपि गौरवात्तव च क्रतौ। यदि मे ब्राह्मणस्यैकं शृणोषि वचनं हितम्। तदा क्रतुफलाधीशं विश्वेशं तं समाह्वय। विना तेन क्रतुरसौ क्रतोऽप्यक्रत एव हि। सति तस्मिन् महादेवे विश्वकर्मैकसाक्षिणि। तवापि चैषां सर्वेषां फलिष्यति मनोरथः। यथा जड़ानि बीजानि न फलन्ति स्वयं तथा। जड़ानि सर्वकर्माणि न फलन्तीश्वरं विना। अर्थहीना यथा वाणी धर्महीना यथा तनूः। पतिहीना यथा नारी शिवहीना तथा क्रिया। गङ्गाहीना यथा देशाः पुत्रहीना यथा गृहाः दानहीना यथा सम्पत् शिवहीना तथा क्रिया। मन्त्रहीनं यथा राज्यं श्रुतिहीना यथा द्विजाः। योषाहीनं यथा सौख्यं शिवहीना तथा क्रिया। दर्भहीना यथा सन्ध्या तिलहीनं तु तर्पणम्। हविर्हीनो यथा होमः शिवहीना तथा क्रिया। इत्थं दधीचिनाख्यातं जगाह वचनं न तत्। दक्षो दक्षोऽपि तत्रैव शम्भोर्मायाविमोहितः। प्रोवाच च स्वयं क्रुद्धः का चिन्ता तव मे क्रतोः। क्रतुसख्यानि सर्वाणि यानि कर्माणि सर्वशः। तानि सिध्यन्ति नियतं यथार्थकरणादिह। अयथार्थविधानेन सिध्येत् कर्माणि नेश्वरः। स्वकर्मसिद्धये वाच सर्व एव हि चेश्वरः। ईश्वरः कर्मणां साक्षी यत् त्वयापीति भाषितम्। तत्तथास्तु परं साक्षी मार्गं दद्याच्च कुत्रचित्। जड़ानि सर्वकर्माणि न फलन्तीश्वरं विना। यदुक्तं भवता तत्राप्यहो दृष्टान्तयाम्यहम्। जड़ान्यपि च बीजानि कालं संप्राप्य चात्मना। अङ्कुरयन्ति शाखाश्च पुष्प्यन्ति च फलन्ति च। विनाऽपीशं यथा कर्म स्वयं काले फलत्यहो। किमीश्वरेण तेनात्र महाऽमङ्गलमूर्त्तिना। दधीचिरुवाच। यथार्थकरणात् सिद्धमपि कार्यं कदाचन। ईश्वरप्रातिकूल्याच्च सिद्धमेवाशु नश्यति। ईश्वरेच्छावशात् कर्म कृतमप्यविधानतः। संसिध्येत्तदधीनाश्च कथं सर्व इहेश्वराः। सामान्यसाक्षिवन्नेशः सर्वेषां सर्वकर्मणाम्। साक्षी भवेदसन्दिग्धं फलस्य प्रतिभूरपि। भूजलादिस्वरूपेण विदध्यादङ्कुरोदयम्। यत् त्वयोक्तं विनापीशं काले कर्म फलेत् स्वयम्। स एव कालो भगवान् सर्वकर्त्ता महेशिता। अन्यच्च भवता प्रोक्तं यदेवं तथ्यमेव तत्। किमीश्वरेण तेनात्र महामङ्गलमूर्त्तिना। ये महान्तो भवन्त्यत्र ये च मङ्गलमूर्त्तयः। ईश्वराख्या च ये सन्ति किन्नैरत्र तवान्तिके। उत्तरादुत्तरश्चेति प्रत्युत्तरयति द्विजे। दधीचौ चुकुपेऽत्यन्तं दक्षो गर्वैं हतश्रिया। आदिदेश समीपस्थानालोक्य परितस्त्विति। ब्राह्मणाधमं चाशु परिदूरयताशु वै। अस्मात्दध्वरश्रेष्ठादनादिष्टात्मनाऽऽगतम्। इत्थं दधीचिराकर्ण्य प्रोवाच प्रहसन्निव। किं मां दूरयसे मूढ़! दूरीभूतो भवानपि। सर्वेभ्यो मङ्गलेभ्यश्च सर्वैरेभिः समं ध्रुवम्। अकाण्डे क्रोधजो दण्डस्तव मूर्ध्नि पतिष्यति। महेशितुस्त्रिजगतीपुरीशास्तुः प्रजापते!। इत्युक्त्वा निर्जगामाशु यज्ञवाटात् ततो द्विजः। तस्मिन्निर्यातिति निर्यातो दुर्वासाश्च्यवनो महान्। उत्तङ्क उपमन्युश्च महर्षीचोद्दालकावपि। माण्डव्यो वामदेवश्च गालवो गर्गगौतमौ। शिवतत्त्वविदोऽन्येऽपि दक्षयज्ञाद्विनिर्ययुः”। दक्षयज्ञादयोऽप्यत्र। दक्षाः कुशलाः क्रतवः संकल्पा येषाम्। २चक्षुरादीन्द्रियरूपेषु प्राणेषु “ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु” यजु०४।११। “ये देवा देवाः दीव्यन्ति द्योतन्ते इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः। “इमे वै प्राणाः वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति” शत० ब्रा० ३।२।२।१३ श्रुत्युक्ताः। किम्भूताः मनोजाताः दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पत्तौ तेषां प्रवर्त्तमानत्वात्। तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते अन्यमनस्कस्य रूपादिप्रतिभासाभावात्। यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः। तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः संकल्पाः येषां ते सङ्कल्पितार्थकारिण इत्यर्थः। ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानविघ्नपरिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः स्वाहा इदं क्षीरं हुतमस्तु” वेददी०।

दक्षक्रतुध्वंसिन् पु० दक्षक्रतुं ध्वंसयति ध्वन्स-णिच्-

ष्विनि । १महादेवे तदंशाविर्भूते २वीरभद्रे च तत्कथा क्रतुध्वंसिन् शब्दे २२८४ पृ० दृश्यम् ।

**दक्षजा** स्त्री दक्षात् जायते जन—ड । सतीरूपायां १दक्षकन्यायां महेशकलत्रे दुर्गायाम् २अश्विन्यादौ च । दक्षजातादयोऽप्यत्र ।

**दक्षजापति** पु० ६त० । १शिवे २चन्द्रे च हेमच० ।

**दक्षतनया** स्त्री ६त० । दक्षप्रजापतेर्दुहितरि १अश्विन्यादौ २दुर्गायाम् । ३वेदिरूपायां भूमौ च । "अदितिर्ह्यजनिष्ट दक्ष ! या दुहिता तव" ऋ० १०।७२।५ । दक्षस्य भूमिजत्वेऽपि तज्जनकत्वासम्भवमाशङ्क्य निरु० ११।११ । समाहितं यथा "अदितेर्दक्षो अजायत" "दक्षाद्वदितिः परीति"च तत्कथमुपपद्येत ? समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ वेतरेतरप्रकृती" । दृषो० दक्षतनाप्यत्र "दक्षस्य पितरं तना" ऋ०२।२७।६ "दक्षस्य दक्षप्रजापतेस्तना तनया" भा० ।

**दक्षपितृ** पु० दक्षः दक्षप्रजापतिः पिता उत्पादकोऽस्य स-भावान्वयिविधेर्नित्यत्वात् न कप् । दक्षप्रजापतिजातप्राणाभिमानिदेवे "ये देवा मनोजाता मनोयुजः सुदक्षाः दक्षपितारस्ते नः पान्तु" तैत्ति०१।२।३।१ दक्षपितार इत्यत्र गौणत्वात् वृद्धिः । चक्षुरादिप्राणाभिमानिनो ये देवाः सन्ति तेऽस्मान् पयःपानरूपव्रतानुष्ठायिनोऽन्तर्बहिश्च शुद्धि-सम्पादनेन पालयन्तु । कीदृशा देवाः । उत्पत्तिकाले मनसा सहोत्पन्नाः । व्यवहारकालेऽपि मनसा युज्यन्ते । अन्यमनस्कस्य चक्षुरादिभिः सन्निहितविषयाणामप्यनवगमात् । अति च मनःसाहाय्ये स्वस्वविषयेषु सुदक्षाः कुशलाः । दक्षः प्रजापतिरुत्पादको येषां ते दक्षपितारः" भा० । लोके तु कप् । दक्षपितृका अश्विन्यादिषु स्त्री । दक्षस्य वीर्यस्य पिता पालक ! । २वीर्योत्पादके दक्षयज्ञ-भेदे उदा० दृश्यम् ।

**दक्षविहिता** स्त्री १गीतिकाभेदे । "अपरान्तका पाणिका दक्षविहिता ब्रह्मगीतिका । गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम्" याज्ञ० । "अपरान्ताद्याश्चतस्रो गीतिकाः" मिता० । २दक्षकृते त्रि० ।

**दक्षस्** न० दक्ष—करणे असुन् । बले । "इमया दक्षसे महः" ऋ० २।२५।८।१ । "दक्षसे बलाय" भा० ।

**दक्षसावर्णि** पु० मनुभेदे नवमे मनौ । "नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः । धृष्टकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुता नृप । पारे मरीचिगर्भाद्या देवा इन्द्रः स्मृतः स्मृतः । द्युतिमत्प्रमुखाः सप्त भविष्यन्त्यृषयस्ततः । आयुष्मतोऽम्बुधारायामृषभो भगवान् किल । भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः" भाग० ८।१३।१८ । "८सावर्णि ९दक्षसावर्णि १०र्ब्रह्मसावर्णिकस्ततः । ११धर्मसावर्णिको १२रुद्रपुत्रो १३रौच्यश्च १४भौत्यकः" पुराणान्तरम् । हरिवंशे तु नवमस्य रोहितत्वमुक्तं यथा । "अथ नवमस्यैव वासिष्ठ आलयो हव्यवाहनः । पौलहः सत्य इत्येते मनवो रोहितेऽन्तरे । देवतानां गणास्तत्र त्रय एव नराधिप ! । दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः । मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः । पृथुश्रवा भूरिधामा ऋचीकोऽवृहतो गयः । प्रथमस्य तु सावर्णेर्नव पुत्रा महौजसः" ७ अ० । कल्पभेदादविरोधः ।

**दक्षसुत** पु० ६त० । १देवे शब्दार्थचि० । देवस्य दक्षसृष्टत्वात् नष्टपुत्रेण दक्षेण पुत्रिकाधर्मेण दत्तायामदितावुत्पन्नत्वेन तस्य पुत्रिकापुत्रत्वात् तत्सुतत्वम् यथाह हरिवं० २ अ० ।

"प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयम्भुवा । यथा ससर्ज भूतानि तथा शृणु महीपते ! । मनसा चैव भूतानि पूर्वमेवासृजत् प्रभुः । ऋषीन् देवान् सगन्धर्वानसुरान् सराक्षसान्" । २हर्यश्वादिषु तत्कथा "दक्षस्य पुत्रा हर्यश्वा विवर्द्धयिषवः प्रजाः । समागता महावीर्या नारदस्तानुवाच ह । बालिशा बत यूयं वै नास्या जानीथ वै भुवः । प्रमाणं स्रष्टुकामा वै प्रजाः प्राचेतसात्मजाः । अन्तरूर्द्धमधश्चैव कथं स्रक्ष्यथ वै प्रजाः । ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशः । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः । वैरण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः । विवर्द्धयिषवस्ते तु शबलाश्वाः प्रजास्तदा । पूर्वोक्तं वचनं तात ! नारदेनैव चोदिताः । अन्योन्यमूचुस्ते सर्वे सम्यगाह महामुनिः । भ्रातॄणां पदवीं याहि गन्तव्यं नात्र संशयः । ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः । एकाग्राः स्वस्थमनसो यथावदनुपूर्वशः । तेऽपि तेनैव मार्गेण प्रयाताः सर्वतो दिशम् । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः । नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽब्रवीद्वचः । नारदं नाशमेहीति गर्भवासं वसेति च । तदा प्रभृति वै भ्राता भ्रातुरन्वेषणे नृप ! । प्रयातो नश्यति क्षिप्रं तन्न कार्यं विपश्चिता । तांश्चैव नष्टान् विज्ञाय पुत्रान् दक्ष

प्रजापतिः । यदिं ततोऽसृजत कन्या वैरण्यामिति न श्रुतम्" ।

२अश्विन्यादौ च स्त्री "तमोऽपहं दक्षसुता इवाबभुः" रघुः ।

**दक्षाध्वरध्वंसक** दक्षस्याध्वरं ध्वंसयति ध्वन्स-णिच्-ण्वुल् । १शिवे २वीरभद्रे च दक्षाध्वरनाशकादयोऽप्यत्र ।

**दक्षाय्य** पु० दक्ष-आय्य । १गरुडे २गृध्रखगे च उणादिकोषः सि०कौ० । दक्ष-वृद्धौ अन्तर्भूतण्यर्थे ण्वुल् । ३वर्द्धके त्रि० "मित्रो दक्षाय्यो अर्य्यमेवासि सोम !" ऋ० १।९१।३। "दक्षाय्यः सर्वेषां वर्द्धकः" भा० ।

**दक्षिण** त्रि० दक्ष-इनन् । १परच्छन्दानुवर्त्तिनि पराभिप्रायानुवर्त्तिनि २सरले । ३दक्षभागस्थे च मेदि० । ४वामेतरे अपसव्ये देहभागभेदे (डाहिन) ख्याते भागे हेमच० । "एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः" सा० द० उक्ते ५नायकभेदे यथा "स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया,देवी प्रसाद्याद्य च । इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः" । वामेतरया नेत्र- ६दिशि विप्रकृष्टायां दक्षिणस्यां दिशि स्त्री ७तद्वर्त्तिनि त्रि० । ८यज्ञदानान्ते दाने ९प्रतिष्ठायां स्त्री यथा- "यज्ञान्तदक्षिणानामनिरुक्तिः" शत० ब्रा० २।२।२।२। "स एष यज्ञो हतो न ददक्षे । तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदस्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति" । दक्षिणाविशेषनिर्णयः हेमा० दा० यथा

भविष्यपुराणे "अदत्तदक्षिणं दानं व्रतञ्चैव नृपोत्तम ! । विफलं तद्विजानीयाद्भस्मनीव हुतं हविः" । षट्त्रिंशन्मतात् "श्रद्धायुक्तः शुचिर्दान्तो दानं दद्यात् सदक्षिणम् । अदक्षिणन्तु यद्दानं तत् सर्वं निष्फलं भवेत्" । मैत्रायणीयपरिशिष्टम् "दक्षिणाभावे फलानां भक्ष्याणां ददाति न त्वेवं यजेत्" । तथा शतपथश्रुतिः "तस्मान्नादक्षिणं हविः स्यादिति" । भविष्योत्तरे "काम्यं यद्दीयते किञ्चित्तत्समग्रं सुखावहम् । असमग्रन्तु दोषाय भवतीह परत्र च । तस्मात् दक्षिणाहीनं विधानविकलं न च । देयं दानं महाराज ! समग्रफलकाङ्क्षया । अन्यथा दीयमानं तदपकाराय केवलम् । फलस्वतस्वार्थहानिर्न च तत् फलदं भवेत्" ।

व्यासश्च भगवान् व्यासः "सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते ।" एतच्च, विशेषविहितगोवस्त्रादिदक्षिणकदानवर्जं सामान्यविहितदक्षिणेषु दानेषु व्यवतिष्ठते तत्रापि परा श्रेष्ठतमेति प्राशस्त्यं दर्शयति न त्वन्यां दक्षिणां निराचष्टे आनन्त्यार्थत्वाद्दक्षिणायाः सुवर्णस्य प्रकृष्टत्वात् सर्वदानेषु सुवर्णं दक्षिणेतिवचनार्थः, अन्यदपि पुरुषस्याहारोपयिकं तण्डुलादिकं दक्षिणार्थेन योज्यं यत्तु श्रूयते "अन्येषाञ्चैव दानानां सुवर्णं दक्षिणा स्मृता । सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते" इति तदेतत्कौतस्कुतं परित्यज्य श्रद्धातव्यम् । "सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च । नित्यश्राद्धं देवपूजा सर्वमेव सदक्षिणम्" । स्कन्दपुराणे । "देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत् । अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः" । तुलापुरुषादिदानानि अधिकृत्य लिङ्गपुराणे "दक्षिणा च शतस्यार्द्धं तदर्द्धं वः प्रदापयेत् । ऋत्विजाञ्चैव सर्वेषां दश निष्कान् प्रदापयेत्" । भविष्योत्तरे "श्रेयं निष्कशतं पार्थ ! दानेषु विधिरुत्तमः । मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः । मेरुप्रासादकल्पके तथान्येषु महत्स्वपि । एवं हस्ते तथा हेम्न धेनोः कृष्णाजिनस्य च । अशक्तस्यापि कॢप्तोऽयं पञ्चसौवर्णिको विधिः । अतोऽप्यल्पेन यो दद्यान्महादानं नराधमः । प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत्" । अथाभिषेकमुदाहृत्य लिङ्गपुराणे "अष्टषष्टिपलोन्मानं दद्यात् दक्षिणां गुरोः । होतृणाञ्चैव सर्वेषां त्रिंशत्पलमुदाहृतम् । अध्येतृणां तदर्द्धेन द्वारपानां तदर्द्धतः" । एतेनान्यत्रापि, गुरोरर्द्धम्, ऋत्विजां तदर्द्धं, जापकानां तदर्द्धं द्वारपालानां तदर्द्धमिति दक्षिणाविभागोऽवगन्तव्यः ।" अन्या अपि दक्षिणाः तत्र तत्रोक्ता वेदितव्याः । यज्ञभेदे दक्षिणाभेदः कात्या० श्रौ०सू० उक्तः कात्यायनशब्दे दर्शितप्रायः विशेषतोद्रष्टव्यः । सर्वत्र दक्षिणाया अदाने कालविलम्बभेदे । दोषा दक्षिणानामनिरुक्तिकृता उक्ता यथा ।

"कार्त्तिक्यां पूर्णिमायान्तु रासे राधामहोत्सवे । आविर्भूता दक्षिणांशात् कन्यास्य तेन दक्षिणा" । "यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च । कर्मिणां फलदाता चेत्येवं वेदविदो विदुः । कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम् । तत् कर्मफलमाप्नोति वेदैरुक्तमिदं मुने ! ।

कर्त्ता कर्मणि पूर्णे च तत्क्षणं यदि दक्षिणाम्। न दद्याद्ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथ वा। मुहूर्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम्। एकरात्रे व्यतीते तु भवेत् शतगुणा च सा। त्रिरात्रे तद्दशगुणा सप्ताहे द्विगुणा ततः। मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते। संवत्सरे व्यतीते तु सा त्रिकोटीगुणा भवेत्। कर्म तद्यजमानानां सर्वञ्च निष्फलं भवेत्। स च ब्रह्मस्वापहारी न कर्मार्होऽशुचिर्नरः। दरिद्रो व्याधियुक्तश्च तेन पापेन पातकी। तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम्। पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम्। एवं सुराश्च तत्पूजां तद्दत्ता-मग्निराहुतिम्। दाता न दीयते दानं ग्रहीता च न याचते। उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः। नार्पयेद्यजमानश्चेद्याचितृषु च दक्षिणाम्। भवेद्ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद्ध्रुवम्। वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः। ततो भवेत् स चाण्डालो व्याधि-युक्तो दरिद्रकः। पातयेत् पुरुषान् सप्त पूर्वांश्च सप्त-जन्मतः" ब्रह्मवैवर्त्ते प्रकृतिखण्डे। प्राशित्रप-दक्षिणाद्रव्यग्रहणे मन्त्रभेदेनाभिमन्त्रणम् अप्राशित्रद्रव्य-ग्रहणे तु अभिमर्षनमात्रम् यथाह आश्व० श्रौ० सू० ५।१३।१५। "क इदं कस्मा अदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा-प्रतिगृह्णामि कामैतत्ते इष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्वित्यतीतानुमन्त्रयेत् प्राशि"। सू० "वि-हारदेशमतीत्य नीतेषु दक्षिणाद्रव्येषु तन्मध्ये यत् प्राशि-द्रव्यं तदेतेनानुमन्त्रयेत" नारा०। "अभिमृशेदप्राशि" सू० "तन्मध्ये यदप्राशि तदभिमृशेत्" नारा०। सा च यज्ञपत्नी तथाह "दक्षिणा यज्ञपत्नी च दीक्षा सर्वत्र पूजिता। यया विनापि विश्वेषु सर्वं कर्म तु निष्फलम्" भाग० २८।२।२।२८। १० नायि-काभेदे स्त्री यथा "या गौरवं भयं प्रेम सद्भावं पूर्वनायके। न मुञ्चत्यन्यसक्तापि सा ज्ञेया दक्षिणा बुधैः" इति विष्णुपु० टीकायां स्वामी" ११विष्णौ पु०। "अक्रूरः पेशलो दक्षो दक्षिणः दक्षिणाम्बरः" विष्णु स०। अयं दिग्देशादिव्यवस्थायामेव सर्वनामता तेन दक्षिणे गा-यकाः अन्यत्र दक्षिणाः(कुशलाः)इत्येव। "दिशः सपत्नी भव दक्षिणस्याः" रघुः "दक्षिणीयमवगम्य पङ्क्तिगः पङ्क्तिपावनमथ द्विजव्रजम्। दक्षिणः क्षितिपति-र्व्यभाजयद्दक्षिणाः सदसि राजसूयकीः" माघः। अनृतादौ दक्षिणकर्णस्पर्शनं पराशरो विधत्ते। "क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते। पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्। ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्योऽनलस्तथा। ते सर्वे चापि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे"। १२आचारभेदे दक्षिणाचारशब्दे दृश्यम्। १३दक्षिणाग्नौ पु० "दक्षिणपश्चिमे दक्षिणम्" आश्व० गृ० ४।२।१।

**दक्षिणकालिका** स्त्री दक्षिणा कालिका। १शिवहृदये न्यस्त-दक्षिणपादायां कालिकायाम्।

**दक्षिणगोल** पु० कर्म०। विषुवरेखातो दक्षिणस्थिते तुलादिराशिषट्के यथाह सि० शि० "सौम्यगोलो भदलं यदाद्यं याम्योऽपरं सायनभागभानोः" दक्षिणायनशब्दे रङ्गनाथव्याख्या दृश्या।

**दक्षिणतस्** अव्य० दक्षिणा-तसिल् सर्वनाम्नोवृत्तिमात्रे पुंवद्भावः। १दक्षिणस्यां दिशि। २दक्षिणभागे च "पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्" मनुः।

**दक्षिणतस्कपर्द** त्रि० दक्षिणतः शिरसो दक्षिणभागे कप-र्दश्चूडा यस्य। दक्षिणभागचूडायुक्ते "श्वित्यञ्चो मा दक्षिणतस्कपर्दाः" ऋ० ७।३३।१। चूडाकर्षेपि दक्षिणतो वशिष्ठानामिति स्मर्य्यते" भा०। [दक्षिणस्यतीरे।

**दक्षिणतीर** न० कर्म० तीरस्य तारभावः। नद्यादे

**दक्षिणत्रा** स्त्री दक्षिण+वेदे नि० त्रा। दक्षिणभागादौ। "धिष्व वज्रं हस्त आ दक्षिणत्राभिः" ऋ० ६।२८।८।

**दक्षिणदिक्** स्त्री दक्षिणा दिक्। स्वापेक्षया मेरुतो वि-प्रकृष्टदिशि। तदधिपः भौमः यथाह

"सूर्यः सोमः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः" ज्यो०त०। तत्र बलिनौ ग्रहौ भास्करभूमिजौ यथाह तत्रैव "प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमि-जौ। प्रत्यक् सौरिरुदीच्यां तु सितेन्दू दिग्बलान्वितौ" तद्दिक्पतिः यमः "इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत्। कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्" इत्युक्तेः। तद्दिग्बलिनो राशयश्च अजवृषकर्कसिंहाः। "ऐन्द्रे मानुषराशयस्तु पशवो याम्ये सरीसृपाञ्जल-वारुण्यां बलयुक् तथैव बलिनः याम्योयजाद्योत्तरे" ज्यो० त० उक्तेः। तद्दिक्पतिराशयः वृषकन्यामकरराशयः यथाह ज्यो० त० "प्रागादिककुभां वृषा यथासंख्यं

प्रदक्षिणम् । मेषाद्याराशयो ज्ञेयाश्चिराहत्त्या परिभ्रमात्" ।। तद्दिङ्मुखनक्षत्राणि च मघादिसप्तकम् । "कृत्तिकाद्यास्तु पूर्वादौ सप्त सप्तोदिताः क्रमात्" ज्यो॰ त॰ उक्तेः । दक्षिणदिग्भागस्था देशाश्च कूर्मविभागशब्दे वृ॰सं॰ १४अ॰ उक्ताः "अथ दक्षिणेन लङ्का" इत्युपक्रमे दर्शिताः ।

**दक्षिणपश्चात्** अव्य॰ दक्षिणस्याः परायाश्च दिशः अन्तराला दिक् बहु॰ आति परस्य पश्चादेशः । प्रथमापञ्चमीसप्तम्यर्थवृत्तौ दक्षिणपश्चिमाशब्दार्थे नैरृतकोणे ।

**दक्षिणपश्चिमा** स्त्री दक्षिणस्याः पश्चिमाया दिशोऽन्तराला दिक् । "दिङ्नामान्यन्तराले" पा॰ बहु॰ पुंवत् । १नैरृते कोणे । "अगमुर्भरतशार्दूल ! दिशं दक्षिणपश्चिमाम्" भा॰ सहाभ॰ १अ॰ । २तद्देशवर्त्तिनि त्रि॰ "दक्षिणपश्चिमे दक्षिणम्" आश्व॰ गृ॰ १।२।१२ ।

**दक्षिणपूर्व्वा** स्त्री दक्षिणस्याः पूर्वस्या दिशोऽन्तराला दिक् बहु॰ पुंवत् । १अग्निकोणे २तद्दिग्भागस्थे त्रि॰ "दक्षिणपूर्वे उद्धृतान्न आहवनीयं निदधाति" आश्व॰गृ॰४।२।१

**दक्षिणमानस** न॰ गयास्थिते तीर्थभेदे "तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम् । दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतम्" वायुपु॰ गयामा॰ ।

**दक्षिणमार्ग** पु॰ १तन्त्रोक्ते आचारभेदे २पितृयाणे मार्गभेदे "निर्विण्णोऽहं दक्षिणमार्गेण गतागतलक्षणेन" मैत्र्युपनिषद् भाष्यम् । [ लवणाम्बुधौ ।

**दक्षिणसमुद्र** पु॰ कर्म॰ । दक्षिणदिक्स्थे समुद्रे

**दक्षिणस्थ** त्रि॰ दक्षिणे भागे तिष्ठति स्था—क उत॰ । १दक्षिणभागस्थिते २सारथौ पु॰ अमरः ।

**दक्षिणा** अ॰ दक्षिणा+प्रथमापञ्चमीसप्तम्यर्थे आच् । प्रथमाद्यर्थवृत्तिके दक्षिणाशब्दार्थे दक्षिणा वसति आगच्छति रमणीयं वा "अयं दक्षिणा विश्वकर्मा" यजु॰ २१।५५

**दक्षिणांसव्रणिन्** पु॰ दक्षिणांसे दक्षस्कन्धे व्रणोऽस्त्यस्य इनि । दक्षिणस्कन्धव्रणयुक्ते "पितृवनाभिगमनात् दक्षिणांसव्रणी भवेत् । तेनापि निष्कृतिः कार्या धान्यदानेन यत्नतः" पराशरः ।

**दक्षिणाग्नि** पु॰दक्षिणोऽग्निः । अन्वाहार्यपचनाख्ये यज्ञाग्नित्रयमध्येऽग्निभेदे । "अन्वाहार्यं दक्षिणाग्नावधिश्रयति" कात्या॰ श्रौ॰ २।५।२७ "होमं यजमानाचाहरतीत्यन्वाहार्यः । अन्वहरन्त्याहार्यकस्तं दक्षिणार्थं तण्डुलश्चरोदनं दक्षिणाग्नावधिश्रयति पञ्चर्त्विजो तृप्तियावता सम्भाव्यते तत्परिमाणं ततोऽधिकं वान्वाहार्यमोदनं कुर्यात्" कर्कः ।

"उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय विट्कुलादित्यतो वैश्यकुलस्य गृहाद्वा भ्रियमाणं वा प्रज्वाल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्" आश्व॰ श्रौ॰ २।२।१ "उत्सर्गो यजमानत्वे अग्निहोत्रहोमार्थं विहरेत् नाकालेषु । होमस्थलत्वेऽपि भवतीत्युक्तम्, एवं स्थिते विहरणसहितमग्निहोत्रहोमप्रयोगं वक्तुकाम उत्सर्गं इत्युक्तवान् । अत्रापराह्णशब्देन अह्नश्चतुर्थभागो गृह्यते । विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत् । चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहात्, गार्हपत्याद्वा । धार्यं चेत् प्रज्वलयेत् । काले काले यदि निर्मथ्यः तदा मन्थेत् । एते प्रकाराश्चात्रत्पक्षिवचाद्व्यवस्था । तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत् पात्रान्तरेण पृथक् कुर्यादित्यर्थः" नारा॰ । तस्य स्थापनञ्च नैरृतकोणे "दक्षिणपश्चिमे दक्षिणम्" आश्व॰ गृ॰ ४।११ । उक्तेः ।

**दक्षिणाग्र** पु॰ दक्षिणस्याममग्रमस्य । दक्षिणदिग्भागस्याग्रे कुशादौ "अथ यान्यमून्युदीचीनाग्राणि हवींषि भवन्ति दक्षिणाग्राणि तानि करोति पितृदेवत्यमेवैनत्तत्करोति" शत॰ ब्रा॰ १२।५।१।१२ । "उदगग्रान् दक्षिणाग्रान् करोतीति श्रुतेः" कात्या॰ श्रौ॰ ४।१०।१५ ।

**दक्षिणाचल** पु॰ दक्षिणस्थितोऽचलः । मलयपर्वते हेमच॰ दक्षिणपर्वतादयोऽप्यत्र ।

**दक्षिणाचार** पु॰ कर्म॰ १तन्त्रोक्ते आचारभेदे । "सर्वत्र निरतो भूत्वा पञ्चतत्त्वेन पूजयेत् । स एव दक्षिणाचारः शिवो भूत्वा शिवां यजेत्" आचारभेदतन्त्रम् । एषां तु तत्र भेदः तद्यस्ताने विजयारसः । "चतुर्भकाराः सन्त्येव पञ्चमो विजयारसः" इत्युक्तेः । दक्षिणा दक्षिणस्यां चारो गतिरस्य । २दक्षिणदिग्गतियायिनि त्रि॰ । "दक्षिणां दक्षिणाचारो दिशं येनाजयत् प्रभुः" भा॰ वि॰ ५अ॰ ।

**दक्षिणाज्योतिस्** पु॰ दक्षिणा दक्षिणस्यां ज्योतिरस्य । यज्ञोदने सामभेदे । "ओऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति" अथ॰ ६।५।२२।२२।२३।२५।६ । तद्व्याख्यानमुक्तम् ।

**दक्षिणात्** अव्य० दक्षिण+प्रथमापञ्चमीसप्तम्यर्थे आति । प्रथमाद्यर्थकतौ दक्षिणशब्दार्थे दक्षिणात् रमणीयम् आगच्छति वसति वा ।

**दक्षिणान्तिका** स्त्री "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इत्युपक्रमे "तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः" वृ० र० उक्तलक्षणे वैतालीयभेदे मात्रावृत्तभेदे । "समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीयमात्रातृतीयमात्राभ्यामेको गुरुश्चेत् शेषं वैतालीयवत् तदा दक्षिणान्तिका नाम छन्द इत्यर्थः ।

**दक्षिणापथ** पु० दक्षिणा (आजन्तः) पन्थाः अच् समा० । देशभेदे तद्देशवर्णनं भा० व० ६१ अ० यथा

"एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् । अवन्तीमृक्षवन्तञ्च समतिक्रम्य पर्वतम् । एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा । आश्रमाश्च महर्षीणां बहुमूलफलान्विताः । एष पन्था विदर्भाणामसौ गच्छति कोशलान् । अतः परञ्च देशोऽयं दक्षिणे दक्षिणापथः" । "दक्षिणापथजन्मानः सर्वे नरवरान्ध्रकाः । गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह" भा० शा० २०७ अ० । "युयुधे पाण्ड्यराजेन दिवसं कुरुनन्दनः । तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम्" भा० अ० १० अ० । "तथापरे जनपदा दक्षिणापथवासिनः । पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च । सेतुका मूषिकाश्चैव कुपथा वारवासिकाः । नवराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः । कारूषाश्च सहैषीकाः आटव्याः शवरास्तथा । पुलिन्दा विन्ध्यमूषिका वैदर्भा दण्डकैः सह । कुलीयाश्च सिरालाश्च रूपसास्तापसैः सह । तथा तैत्तिरिकाश्चैव सर्वे कारस्करास्तथा । नासिक्याद्याश्च ये चान्ये ये चैवान्तरनर्मदाः । भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा । कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह" मत्स्यपु० । २दक्षिणाश्रितमार्गमात्रे पु० । "कृष्णाजिनानि मुञ्चन्तः स्वयमेव दक्षिणापथं यान्ति" आश्व० श्रौ० ५।१२।१२ । दक्षिणापथोऽस्त्यस्य स्वामित्वेन आवासत्वेन सम्बन्धत्वेन वा ठन् । दक्षिणापथिक तद्देशनृपे तत्र वासिनि तत्सम्बद्धे च । "एते चान्ये च बहवो दाक्षिणापथिकाः नृपाः" हरिवं० ११० अ० ।

**दक्षिणापरा** स्त्री दक्षिणाया अपरायाश्च दिशोऽन्तराला दिक् । नैर्ऋतकोणे "दक्षिणपूर्वस्यां दिशि दक्षिणपरस्यां वा" आश्व०स्ट० ४।१।६ । २तत्संस्थिते त्रि० "पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानः" कात्या० श्रौ० ८।५।१८ । दक्षिणायां परः । ३यज्ञपूर्त्यर्थद्रव्यदानरूपदक्षिणा तत्परे त्रि० ।

**दक्षिणाप्रवण** त्रि० दक्षिणा (आजन्तः) दक्षिणस्यां प्रवणं निम्नम् । उत्तरापेक्षया दक्षिणतो निम्ने भूम्यादिदेशे "दक्षिणाप्रवणम्" कात्या० श्रौ० २२।३।६ । "दक्षिणाप्रवणं देवयजनं भवति" कर्कः "शुचिदेशं विविक्तं च गोमयेनोपलेपयेत् । दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत्" मनुः । "दक्षिणाप्लवनमप्यत्र परिस्रुते शुचौ देशे दक्षिणाप्लवने तथा" याज्ञ० श्राद्धदेशोक्तौ ।

**दक्षिणाप्रष्टि** पु० धुर्यापेक्षया प्रकृष्टं देशमश्नोति प्र+अश—क्तिच् पृषो० दक्षिणा दक्षिणभागे प्रष्टिः वाह्यः । धुर्यमध्ये दक्षिणस्थे धुर्यात् प्रकृष्टदेशस्थे वा अश्वभेदे "दक्षिणाप्रष्टिं अश्वो युक्त इति" कात्या० श्रौ० १४।३।८ । "रथे तृतीयमश्वं युनक्ति धुर्यापेक्षया प्रकृष्टं देशमश्नोतीति प्रष्टिवाही युग्यः" सं० व्या० । दक्षिणस्यां स इव इति विग्रहे २दक्षिणस्थे प्रष्टिवाहेऽश्वे च । "अथ दक्षिणा प्रष्टिं युनक्ति सव्यप्रष्टिं वा" शत० ब्रा० ५।१।४।८ । "प्रष्टिर्नाम पादत्रयोपेतो भोजनपात्राधाराधारः" (तेपाइ) भा० ।

**दक्षिणाबन्ध** पु० दक्षिणायां बन्धः अनुबन्धः । तत्त्वस्थादीनां दक्षिणानुबन्धभेदे यथा "दक्षिणाबन्धो नाम स्वकुलब्रह्मचारिभिक्षुवैखानसानां कामभोगोपहतचेतसामभिमानपूर्विका दक्षिणा प्रयच्छतां दक्षिणाबन्ध इत्युच्यते" तत्त्वसारः ।

**दक्षिणाभिमुख** त्रि० दक्षिणा दक्षिणस्यामभिमुखमस्य । दक्षिणदिङ्मुखे । "दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा" आह्नि० त० । दक्षिणामुखादयोऽप्यत्र । "आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः" । "उदकेनैव विधिना निर्वपेद् दक्षिणामुखः" मनुः । "अह्नि दिनविरामभुक्तो बहु भुङ्क्ते दक्षिणामुखः" महता प्रातीयविप्रश्च तथा भोजनं निषिद्धम् । दक्षिणा दक्षिणस्यां मुखम् । दक्षिणदिङ्मुखे तत्र न० । "आमावास्यं नवाश्राद्धं दक्षिणामुखभोजनम् । न जीवत्पितृकः कुर्यात् कृते च पितृहा भवेत्" ति० त० ।

**दक्षिणामूर्त्ति(क)** पु० दक्षिणा अनुकूला मूर्त्तिरस्य वा कप् संज्ञात्वात् न ह्रस्वः । शिवमूर्त्तिभेदे तद्ध्यानादिकं

यथा "प्रोद्यत्प्राज्यमहावटद्रुमतले योगासनस्थं प्रभुं प्रत्यक्तत्त्वनुभूतिभिः प्रतिदिशं प्रोद्दीप्यमात्राननम्। मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं ध्यायन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम्"। "नित्यशो दक्षिणामूर्त्तिं ध्यायेत् साधकसत्तमः। शास्त्रव्याख्यानसामर्थ्यं लभन्ते वत्सरान्तरे" तन्मन्त्रादिकं तन्त्रे दृश्यम्। ध्यानान्तरं ध्यानशब्दे दृश्यम्।

**दक्षिणायन** न० दक्षिणा दक्षिणस्यां दक्षिणे गोले वाऽयनं रवेः। रवेः स्वाधिष्ठितस्थानापेक्षया १दक्षिणदिग्गमने २दक्षिणगोलरूपतुलादिराशिषट्के गमने तदुपलक्षिते ऋतुत्रयात्मके ३कालभेदे च तत्राद्यार्थे "ऋतुत्रयस्याप्ययनं द्वे अयने वर्षसंज्ञिते। कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते" मल० त० विष्णुपु०। द्वितीयार्थे "दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्" मनुः। अयनशब्दे २५१ पृ० उत्तरायणशब्दे ११०४ पृ० गोलशब्दे च दक्षिणायनशब्दार्थस्योक्तप्रायत्वेऽपि दक्षिणायनव्यवस्थार्थमधिकमत्रोच्यते यद्यपि चन्द्रस्यापि स्वाधिष्ठितस्थानापेक्षया दक्षिणस्यां दक्षिणगोले च गतिः सम्भवति तथापि सूर्य्यस्यैव गतिभेदे तदुपलक्षितकाले च दक्षिणायनशब्दव्यवहारः। "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवं चैव संक्रान्तेः पुण्यकालता" सू० सि० अयनस्य सौरत्वोक्तेः "यान् मासान् दक्षिणा आदित्य एति यान् मासानुत्तरादित्य एति" वाजसनेयिनां पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः पाठात् "तस्मादादित्यः षण्मासान् दक्षिणेनैति षण्मासानुत्तरेणैतीति तैत्तिरीयश्रुतेश्चादित्यगत्युपजीव्यैवायनशब्दप्रवृत्तेश्च। तेनादित्यगतिनिष्पन्नत्वात्तस्य सौरत्वम्। उभयविधदक्षिणायनस्य विशेषविधिकस्य मनूक्तं रात्रित्वं तदभिधीयते। तत्र "मेषादौ देवभागस्थो देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्य्यस्तद्भागसञ्चरः" सू० सि०।

"जम्बुद्वीपस्थवस्तुद्वयमध्ये परिधिवृत्तं भूगोलमध्ये तत्र मध्यरेखाकाशे वृत्तं विषुवद्वृत्तं तत्र क्रान्तिवृत्तं षड्भान्तरेण स्थानद्वये लग्नं तच्चैतदुभयाधारं प्रवहवायुना विषुवत्समार्गे भ्रमति मेषस्थानात् कर्कादिस्थानं विषुवद्वृत्तावधि मत्स्यान्तर उत्तरतः। मकरादिस्थानं विषुवद्वृत्तावधि मत्स्यान्तरे दक्षिणतः। तत् स्वस्थाने प्रवहवायुना भ्रमति। एवं क्रान्तिवृत्तप्रदेशाः स्वस्वस्थाने प्रवहवायुना भ्रमन्ति। तत्र मेषादौ देवभागस्थः "जम्बुद्वीपं च तत्रापि देवासुरविभागकृदिति" पूर्वोक्तेः। तत्सम्बद्धा मेषादिकन्यान्ता राशय उत्तरगोलः। तत्रस्थः सूर्य्यो मेषादौ मेषादिप्रदेशे देवानां मेरोरुत्तराग्रवर्त्तिनां दर्शनं षण्मासानन्तरं प्रत्यक्षदर्शनं याति गच्छति प्राप्नोतीत्यर्थः विषुवद्वृत्तस्य तत्क्षितिजत्वात्। एवं दैत्यानां मेरोर्दक्षिणाग्रवर्त्तिनामित्यसुराणामित्युक्तेनैवोक्तम्। तद्भागसञ्चरो दैत्यभागे मकरादिदक्षिणविभागस्थास्तुलादिमीनान्ता राशयो दक्षिणगोलस्तत्र सञ्चरो गमनं यस्येत्येतादृशः सूर्य्यस्तुलादिप्रदेशे तुलारादर्शनानन्तरं प्रथमदर्शनं प्राप्नोतीत्यर्थः तेषामपि विषुवद्वृत्तक्षितिजत्वात्" रङ्गना०। "देवासुरा विषुवति क्षितिजस्थं दिवाकरम्। पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे" सू० सि०।

"विषुवति काले देवदैत्याः सूर्य्यं क्षितिजस्थं पश्यन्ति विषुवद्वृत्तस्य तयोः स्वस्थानाद्भूगोलमध्यस्थत्वेन क्षितिजत्वात्। एतेषां देवदैत्यानामन्योन्यं परस्परं ये वामसव्ये अपसव्यसव्ये ते क्रमेण दिनक्षपे दिवसरात्री भवतः। अयं भावः देवानां भूमेरुत्तरभागः स्वकीयत्वात् सव्यमतो दैत्यानामपसव्यं स्वकीयत्वाभावात्। एवं दैत्यानां भूमेर्दक्षिणभागः स्वकीयत्वात् सव्यं देवानां स्वकीयत्वाभावादपसव्यमतो दैत्यानां वामसव्यगावुत्तरदक्षिणगोलौ देवानां क्रमेण दिनरात्री। देवानां वामसव्यभागौ दक्षिणोत्तरगोलौ दैत्यानां दिनरात्री। अन्यथाऽन्योन्यं वामसव्ये इत्यनयोः सङ्गतार्थानुपपत्तेः। अतएव पूर्वं मेषादावित्याद्युक्तमिति" रङ्गना०। अथ पूर्वश्लोकोत्तरार्धस्य सन्दिग्धत्वशङ्कया दिनपूर्वापरार्धकथनच्छलेन तदर्थं श्लोकाभ्यां विशदयति।

"मेषादावुदितः सूर्य्यस्त्रीन् राशीनुदगुत्तरम्। सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम्। कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्धमेव सः। तुलादींस्त्रीन् मृगादींश्च तद्वदेव सुरद्विषाम्" सू० सि०।

"मेषादौ विषुवद्वृत्तस्थक्रान्तिवृत्तभागे देवभागस्थ उदितो दर्शनतां प्राप्तः सूर्य उत्तरं यथोत्तरं क्रमेणेति यावत् त्रीन् राशीनुदगुत्तरभागस्थान् मेषवृषमिथुनान् सञ्चरन्नतिक्रामन् मेरुस्थानां देवानां प्रागहर्मध्यं प्रथमं दिनखण्डं पूरयेत् पूर्णं करोतीत्यर्थः। मिथुनान्ते सूर्ये मेरुस्थानां मध्याह्नं स्यादिति फलितार्थः। कर्कादीन् त्रीन्

